# काव्यप्रकाशः

[सङ्केतः; सङ्केतः (रुय्यकः) ; बालचित्तानुरञ्जनी; काव्यादर्शः; विवेकः; दीपिका; दर्पणः; साहित्यचूडामणिः; सम्प्रदायप्रकाशिनी; मधुमती; विस्तारिका; सारबोधिनी; काव्यप्रदीप; काव्यप्रकाशखण्डनम्; आदर्शः; सुधासागरः; विवरणम् संस्कृत व्याख्या समलंकृता ]

## द्वितीयः खण्ड


डा० ज्योत्स्ना मोहन

श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृत विद्यापीठ,

नई दिल्ली-११००१६






नाग प्रकाशक

११ए०/यू०ए० जवाहर नगर, दिल्ली-७

# विषयानुक्रमणिका

## चतुर्थ उल्लासः

# अथ चतुर्थउल्लासः

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालंकाराणां स्वरूपमभिधानीयम् तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदान् आह ।

(सू० ३९) अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।

अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।। २४ ।।

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव, अविवक्षितं वाच्यं यत्र स 'ध्वनौ' इत्यनुवादात् ध्वनिरिति ज्ञेयः । तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम् । यथा

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।

आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ।। २३ ।।

अत्र वचनादि, उपदेशादिरूपतया परिणमति ।

क्वचिदनुपपद्यमानतया, अत्यन्तं तिरस्कृतम् । यथा

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।

विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ।। २४ ।।

एतद् अपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति ॥

## सङ्केतः

स्वरूपं अभिधानीयमिति। अभिधानीयं—वक्तव्यं इति प्रस्तुतम्। अन्ये तु—हितः योग्यः साधुः इत्येतेषां शब्दानां एकार्थत्वात्, अभिधानाय हितं—अभिधानीयं इति व्याचक्षते। काव्यभेदानिति। यथाक्रमं उल्लासत्रयेण उत्तममध्यमाधमान् आह इत्यर्थः।

अर्थान्तरे सङ्क्रमितमिति। सङ्क्रमितशब्दः यदा णिजन्तः तदा—अर्थान्तरे सहकारिसहितव्यञ्जनाव्यापारेण सङ्क्रान्तिं नीतं वाच्यं इति व्याख्येयम्। यदा पुनः इतच्प्रत्ययान्तः तदा—अर्थान्तरे सङ्क्रान्तं इति। व्याख्याद्वयं चेदं अग्रे 'क्वचिदर्थान्तरे परिणमितम्,' इति, 'क्वचिदर्थान्तरे परिणतम्' इति च पाठद्वयदर्शनात् कृतम्।

लक्षणामूलेति। लक्षणामूलं यत् गूढव्यङ्ग्यं तस्य प्राधान्ये। गूढेति अनुवाद्यतया विशेषणम्, न विधेयतया। प्राधान्योक्त्यैव गूढत्वस्य लब्धत्वात्। न ह्यगूढं प्रधानं स्यादिति। क्वचित्तु—'लक्षणामूलरूढव्यङ्ग्यप्राधान्ये' इति पाठः। तदा च एवं व्याख्येयम्—लक्षणैव मूलं ततो रूढं जातं यत व्यङ्ग्यं तस्य प्राधान्ये इति। अस्मिंश्च पाठे अयं गुणः—यत् लक्षणामूलरूढव्यङ्ग्यत्वस्य सामान्यलक्षणत्वेन उत्तममध्यमकाव्यभेदयोः प्राधान्याप्राधान्याभ्यां उपयुज्यमानत्वम्। तेन च व्यङ्ग्यस्य अप्राधान्येऽपि एतौ भेदौ भवतः। "सर्वत्र हि सामान्यलक्षणानुवादेन विशेषलक्षणं विधेयं'—इति न्यायात्, अत्र उत्तमकाव्यभेदप्रस्तावे लक्षणामूलगूढव्यङ्ग्येति सामान्यलक्षणमनूद्य प्राधान्ये इति विशेषलक्षणं कृतम्।

एवं विवक्षितवाच्यभेदेष्ववगन्तव्यम्।

त्वामस्मीति। वच्मि—आप्ततया उपदिशामि, न तु वचनमात्रं ब्रवीमि। मतिमादाय—सावधानीभूय। अत्र वचनरूपस्यार्थस्य साक्षात् गृह्यमाणत्वात् वच्मि इत्यस्य अनुपयुज्यमानत्वेन मुख्यार्थबाधः, तुल्ययोगहेतुजन्यत्वं योगः, बुद्धिपूर्वकत्वसत्यत्वाशेषकथनाकीर्तिभ्रंशाद्यं च प्रयोजनं ज्ञेयम्। अत्र वचनस्य उपदेशपरिणत्या स्वपरत्वेन अनुपात्तं वाच्यम्। तेन च अविवक्षितं, न पुनः अत्यन्ततिरस्कृतम्, उपदेशस्यापि वचनरूपत्वात्। वचनादि इत्यत्र आदिशब्दात् अस्मि इत्यादेः, उपदेशादि इत्यत्र आदिशब्दात् अत्याप्तत्वादेश्च स्वीकारः।

अत्र च विषयिणा वचनेन लक्ष्योपदेशरूपोऽर्थः स्वविषयः निगीर्णः इति साध्यवसाना। सम्बन्धान्तरनिमित्तत्वात् शुद्धा लक्षणेयम्। न ह्यत्र वचनोपदेशयोः लेशेनापि सादृश्यं पश्यामः, येन इमां गौणीं साध्यवसानां ब्रूमः। साध्यवसानात्वं च अस्याः लक्षणायाः अत्र वचनादि उपदेशरूपतया परिणमति इत्यक्षरापेक्षया व्याख्यातम्। यावता तु उपादानलक्षणाऽपि स्यात्। तथाहि—यत्र आरोपविषयं मनसि कृत्वा अत्यन्ताभेदप्रतिपत्तये ह्यारोप्यं निवेश्यते तत्र साध्यवसाना शुद्धा लक्षणा। यथा—'आयुरेवेदम्' इत्यत्र। यत्र तु आरोपविषयं प्रति मनोऽपि न धावति तत्र उपादानलक्षितलक्षणे। न ह्यत्र आरोपविषयं उपदेशादि मनसि कृत्वा अत्यन्ताभेदबुद्धये वचनादि विषयिरूपं प्रयुज्यते। तस्मात् वच्मि इत्यादि अनुपयुज्यमानं, स्वसिद्धये परस्य उपदेशादेः आक्षेपं करोतीति।

उपकृतमति। तत्रेत्युपकृते। अनुपकारिणं प्रति—'उपकृतम्, सुखितं आस्स्व'—इत्युक्तेः अनुपपद्यमानत्वेन मुख्यार्थबाधः। वैपरीत्यं च सम्बन्धः। ततः अनुपकृतत्वं दौर्जन्यादिकं दुःखितत्वेनावस्थानं च लक्ष्यते। गुप्तासभ्यार्थप्रतिपादनेन 'आशु म्रियस्व' इति व्यङ्ग्यम्। यदि वा—'उपकारिणां श्लाघ्यत्वं' इति व्यङ्ग्यम्। शुद्धा साध्यवसाना लक्षणेयम्। अत्र उपकृतत्वादेः वाच्यस्य अत्यन्ततिरस्कारः, अनुपकृतत्वादिना अर्थान्तरेण सर्वथा

अनन्वितत्वात् । तदयं भावः—यत्र अनुपयुज्यमानतया मुख्यार्थ बाधः, तत्र अर्थान्तरसङ्क्रमितवाच्यः भेदः । यत्र तु अनुपपद्यमानतया तत्र अत्यन्ततिरस्कृतावाच्यता इति ।

### सङ्केतः (रुय्यकः)

धर्मिणि प्रदर्शिते—यद्यपि च 'तददोषा' विति सामान्येन 'इदमुत्तम'—मित्यादिना च विशेषेण धर्मी प्रदर्शितस्तथापि यावदवान्तरप्रभेदा न प्रदर्श्यन्ते तावत् स न सम्यक् प्रदर्शितो भवतीति तन्मुखेन तत्प्रदर्शनं क्रियते । तदाह—अविवक्षितवाच्य इत्यादि । अविवक्षितं बाधितत्वात्, एवं विवक्षितमबाधित्वात् । अन्यपरं व्यंग्यतात्पर्येण व्यवस्थिम्, न तु प्रत्यावृत्य गुणीभूतव्यङ्ग्यन्यायेन वाच्योन्मुखम् । बाधितत्वञ्च क्वचिदनुपयुज्यमानत्वेनासामर्थ्याद् भवति, वैयर्थ्येनानन्वयबाधात् । पूर्वत्र वाच्यमर्थान्तरे संक्रमितं परिणमितम् । अत्र हि वाच्यस्यानुपपत्त्यभावादनुवृत्तधर्मिरूपतया लक्ष्यप्रतीतिवेलायां न परित्यागः, किन्तु तत्सहितस्य लक्ष्यस्य प्रतीतिः । तत्त्वादप्रच्युतो धर्मीति हि परिणामलक्षणम् । उत्तरत्र त्वनुपपद्यमानत्वाद्वाच्यस्यात्यन्तं तिरस्कारः । यस्मिंश्चार्थान्तरे वाच्यं परिणमितं तद् व्यंग्यभेदेन व्यपदिश्यते । धर्मरूपे लक्ष्ये व्यङ्ग्यस्य तदतिशयधर्मस्वभावत्वादित्युक्तम् ।

गूढव्यङ्ग्यप्राधान्य इति—एतदर्थमेव 'तच्च गूढमगूढञ्चेति पूर्वं प्रयोजनस्य (भेदेन) निर्देशः । त्वामस्मि वच्मीति । अत्र यं प्रतिवक्तुमारब्धं तं प्रति वक्तव्यवस्त्वेव कथनीयमिति वच्मीति व्यर्थत्वादनुपयुज्यमानम् । उपदेशादिरूपतयेति—उपदेशलक्ष्यत्वेऽपि असंविज्ञाननिबन्धनावाच्यग्राह्यत्वाद्यतिरिक्तातिशयत्वं व्यंग्यत्वम् । एवमुपकृतमित्यादावुपकारसौजन्यसुखितत्वादिभिर्यद्यपि वैपरीत्यादपकारदौर्जन्यदुःखितत्वादयो लक्ष्यन्ते तथापि तेषामेव सातिशयत्वप्रतिपादनाद् विशिष्टानामेव व्यंग्यत्वव्यवहारः । वक्त्रादि वैशिष्ट्यादयश्चेह यथा मुख्यार्थबाधकास्तथा प्रागुपपादितम् ।

### बालचित्तानुरञ्जनी

पूर्वं 'तददोषौ' इत्यादिना काव्यस्वरूपमुक्तम् । तत्र शब्दार्थौ प्रपञ्चितौ । अधुना दोषगुणादिनिरूपणमुचितम् । तत्परित्यज्य कथं काव्यभेदकथनमित्याशङ्क्याह यद्यपीति । धर्मिणि प्रकर्षेण साकल्येन प्रदर्शिते तद्धर्माणां दोषाणां हेयत्वं गुणालङ्काराणामुपादेयत्वं सुज्ञातमिति प्रथमतः काव्यभेदकथनमित्यर्थः ।

तत्र प्रथमस्य द्वैविध्यमाह अविवक्षितेति । अविवक्षितम् अनुपयुज्यमानत्वादनुपपद्यमानत्वाद्वा वक्तुरनभिप्रेतं वाच्यं यत्र एवं विधो यो ध्वनिरस्ति तत्र ध्वनौ वाच्यम् अर्थान्तरे सङ्क्रमितं परिणमितम्, अत्यन्तं तिरस्कृतं वा भवेत् । भ्रान्तादिवाक्यव्युदासाय विशेषणप्रक्षेपपूर्वम् । अविविक्षितपदं व्याचष्टे लक्षणेति । लक्षणामूलं यस्य तत्र तद्गूढं च तत्र तद्गूढव्यङ्ग्यरूप प्राधान्ये इति । विवक्षितान्यपरव्युदासाय लक्षणामूलेति । अगूढव्यङ्ग्यमध्यमकाव्यपरिहाराय गूढेति । यत्र इति । सामान्याभिधानाद्विशेष्यापरिज्ञानमाशङ्क्याह ध्वनाविति ।

अर्थान्तरसङ्क्रमितवाच्यस्योदाहरणमाह यथेति । अस्मीत्यहमर्थेऽव्ययम् । अस्मच्छब्दानुवादकश्चायं न तत्पर्याय इति युष्मत्पर्यायभवच्छब्दप्रयोगे मध्यमपुरुषानुपपत्तिवन्नोत्तमपुरुषानुपपत्तिः । अहं त्वां वच्मि । अत्र विद्वत्समूहो वर्तते । तस्मात् आत्मीयां मतिं दृढीकृत्यात्र तिष्ठेत्यन्वयः । अत्र वचनसामान्यस्य प्रत्यक्षेणैव गृह्यमाणत्वादनुपयुक्तो मुख्योऽर्थो वाच्यो वचनविशेषं लक्षयति । इति लक्षणामूलत्वं सामान्यविशेषभावश्च संबन्धः,

वक्तुर्विनयप्रकाशनम् आप्तत्वं वा व्यङ्ग्यम्। सर्वो हि स्वां मतिमादायैव तिष्ठतीत्यनुपयुक्तौ वाच्योऽर्थः प्रमाणपरिगृहीतां मतिं लक्षयति। सामान्यविशेषभावः संबन्धः। गृह्यतामिति न त्याज्येति। व्यङ्ग्यमर्थान्तरमस्येति। तत्त्वमाह अत्रेति।

द्वितीयमुदाहरति उपकृतमिति। (स्पष्टम्)

## काव्यादर्शः

'तददोषौ शब्दार्थौ' इत्युक्तं, तत्र 'साक्षात्संकेतितम्' इत्यादिना शब्दार्थयोर्निर्णयः कृत इत्याह—यद्यपीति। काव्यभेदानिति। अस्ति तावद्व्यङ्ग्यनिष्ठो व्यञ्जनव्यापारः, यतो भामहोद्भटोदयोऽप्यलंकारकारा व्यङ्ग्यमर्थं वाच्योपस्कारितयालंकारपक्षनिक्षिप्तं मन्यन्ते। तथा हि पर्यायोक्ताप्रस्तुतप्रशंसासमासोक्त्याक्षेपव्याजस्तुत्यु- पमेयोपमानन्वयादौ वस्तुमात्रं गम्यमानं वाच्यसंस्कारकत्वेन 'स्वसिद्धये पराक्षेपः, परार्थं स्वसमर्पणम्' इति यथायोगं द्विविधया भङ्ग्या प्रतिपादितं तैः। रुद्रटेनापि भावालंकारो द्विधैवोक्तः। पर्यायोक्तादौ वस्तु रूपकदीपकापह्नुतितुल्ययोगितादौ उपमाद्यलंकारो वाच्योपस्कारत्वेनोक्तः। रसवत्प्रेयस्विप्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। उत्प्रेक्षा च स्वयमेव प्रतीयमाना कथिता। तदित्थं वस्त्वलंकाररसादिरूपं त्रिविधमपि व्यङ्ग्यमभ्युपगतमेव केवलमलंकारकारित्वाद् वाच्यालंकारविशेषविषयत्वेनालंकारतयाख्यापितम्। गुणालंकाराणां चोद्भटादिभिः प्रायः साम्यमेव सूचितम्। संघटनाधर्मा गुणाः, शब्दार्थधर्मा अलंकारा इति विषयमात्रेण भेदप्रतिपादनात्। वामने- नापि सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलंकारत्वं ब्रुवता कश्चिद् ध्वनिभेदोऽलंकारतयैवोक्तः ; केवलं गुणविशिष्टपदरचनात्मिका 'रीतिरात्मा काव्यस्य' इत्युक्तम्। वक्रोक्तिजीवितकारेणापि सत्यपि त्रिविधे व्यङ्ग्ये व्यापाररूपा भणितिरेव कविसंरम्भगोचर इति अभिधाप्रकारविशेषा एवालंकारा इति व्यापारप्राधान्यं काव्यस्येति चोक्तवता उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृत एव, केवलं वैदग्ध्यभङ्गीभणितिस्वभावा वक्रोक्तिरेव प्राधान्यात् काव्यस्य जीवितं, न व्यङ्ग्यार्थः। भट्टनायकेन तु व्यञ्जनव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्येऽशत्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्। तत्राप्यभिधाभावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मैव भोगापरपर्यायो व्यापारो विश्रान्तिस्थानतयाङ्गीकृतः। ध्वनिकारस्तु अभिधालक्षणातात्पर्याख्यव्यापार त्रयोत्तीर्णस्य ध्वननद्योतनादिशब्दाभिधेयस्य व्यञ्जनव्यापारस्यावश्याभ्युपगम्यत्वाद् व्यङ्ग्यरूपस्य गुणालंकारोपस्क्रियमाणस्य विश्रान्तिस्थानतया प्राधान्यादात्मत्वं साधितवान्। एष एव च पक्षः सहृदयानामावर्जकः। यत् तु व्यक्तिविवेककारो वाच्यस्य व्यङ्ग्यप्रतिलिङ्गतया लिङ्गिनि ज्ञानमनुमानमिति व्यञ्जनस्यानुमानान्तर्भावमाख्यत् तद् वाच्यस्य व्यङ्ग्येन तादात्म्यतदुत्पन्नभावाद् अयुक्तम्। एवं व्यञ्जनाव्यापारस्य सर्वैरनपह्नुतत्वात् प्रकारान्तरस्य चाप्रतिष्ठानात्, तस्य च व्यङ्ग्यमुखेन स्वरूपप्रतिलम्भः, व्यङ्ग्यस्य च प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ काव्यभेदौ। तत्रोत्तमो ध्वनिस्तस्य लक्षणाभिधामूलत्वेन अविवक्षितवाच्यविवक्षितान्यपरवाच्याख्यौ द्वौ भेदौ। तत्र लक्षणामूलोऽविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विभेद इत्याह—अविवक्षितवाच्य इति। अविवक्षितवाच्यो यो ध्वनिभेदः, तत्र वाच्यं ध्वनौ भवेत्। वाच्यं ध्वनिः। ध्वनतीति कर्तृव्युत्पत्तेः, व्यञ्जकोऽर्थो ध्वनिरित्यर्थः। अर्थान्तरसंक्रिमतात्यन्ततिरस्कृतलक्षणेन वाच्यस्य व्यञ्जकस्य वैचित्र्येण व्यङ्ग्यस्यैव विशेषः। व्यञ्जकवैचित्र्याद्

वियुक्तं व्यङ्ग्यवैचित्र्यम् । संक्रमितमिति । णिचासहकारियुतेन व्यञ्जनव्यापारेणेति योगः । येन वाच्येनाविवक्षित-वाच्यो ध्वनिर्व्यपदिश्यते तद् वाच्यं द्विधेति संबन्धः । तत्रेति । प्रकारद्वये योऽर्थ उपपद्यमानोऽपि तावतैवानुपयोगाद् धर्मान्तरसंवलतयाऽन्यतामिव गतोऽपि लक्ष्यमाणः, स रूपान्तरपरिणतोऽर्थान्तरसंक्रमितवाच्यो, वाक्ये यथा—'त्वामस्मि' इति । अत्रानुपयोगात्मिका मुख्यार्थबाधास्ति-इति लक्षणामूलत्वम् । शुद्धस्य चार्थस्याविविवक्षिततत्वाद् अविवक्षितवाच्यत्वं, न च तिरस्कृतत्वं, धर्मिरूपेण तस्यापि तावत्यनुगमात् । अत एव परिणत इत्युक्तया व्यव-हृतं—वचनादीति । अनुपयुज्यमानार्थ उपदेशादि लक्षयत् व्यङ्ग्यं प्रयोजनरूपमन्यशब्दावाच्यं धर्मान्तरं व्यनक्ति । न ही वचनमात्रमेव, किं तु आप्ततयोपदेशं ते यच्छामीत्युपदेशे वाक्यार्थः परिणमितः । कचित्पुनरिति । अनुपपद्यमान उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव योऽर्थः स तिरस्कृतः । उपकृतमिति । इदं हि वाक्यमसंभव-त्स्वार्थमित्यविवक्षितवाच्यं सद् वैपरीत्यादनुपकारं लक्षयद् अपकारकृताप्राशस्त्यं ध्वनति । एवं यत्रार्थस्य अनुप-योगस्तत्रार्थान्तरसंक्रमितत्वं, यत्र तु अनुपपत्तिस्तत्रात्यन्ततिरस्कृतत्वम् ।

## विवेकः

शब्दार्थौ तावन्निर्णीतार्थौ, इदानीन्तु दोषादयः क्रमप्राप्तस्तद्गतस्थान (म)तिक्रम्य ध्वन्यादिविवेचनमित्यत आह यद्यपीति । 'तददोषा'विति मित्यादिना चॅ विशेषेण यद्यपि धर्मी प्रदर्शित एव, तथापि यावदवान्तरप्रभेदा न प्रदर्श्यन्ते तावत् स न सम्यक् प्रदर्शितो भवती'- (रु. सं. १४) त्यभिप्रेत्याहधर्मिणि प्रदर्शित इति । दोषगुणालङ्काराणां तत्त्वं ध्वन्येक [नि] रूपणीयमेव । तथाहि काव्यात्मनि रसे ये हेयास्ते दोषाः, समवायवृत्त्या ये तमुपादेयत्वेनाव-लम्बन्ते ते गुणाः, येऽङ्गद्वारेणोपकुर्वन्ति तेऽलङ्कारा इति यथायथं प्रतीयमानार्थव्यवस्थित एवायं मार्गः । तदिदमुक्तं हेयोपादेयता ज्ञायत इति । न च वाच्यम्, अलक्ष्यकममात्रं तर्हि विविच्यतामिति यस्मादभिधाव्यतिरिक्ता शब्दस्य वृत्तिरेव नास्ति, कुतः क्रमः, कुतस्तरां तदुपलक्षणमिति, अतोऽवश्यं क्रमाक्रमौ विभावादिभङ्ग्या प्रतिपाद्य स्थापनी-याविति सर्वमवदातम् । काव्यपदं तद्विशेषध्वन्यादिपरम् । भिद्यत इति भेदः प्रकारो, भिद्यतेऽनेनेति विशेषलक्षणञ्च विवक्षितम् ।

तत्रोद्देशक्रमेणध्वनेः प्राग्विवेचनम् । स हि द्विविधोऽभिधामूलो लक्षणामूलश्च । यद्यप्यभिधामूलः प्राग्विवेक्तुं युक्तस्तथापि प्रागुक्तानुसारेण लक्षणामूलामाह-अविवक्षितवाच्य इति । व्यञ्जकमुखेनायं ध्वनेर्विवेकः । तत्राद्ये शब्दस्य व्यञ्जकत्वमर्थस्य तु सहकाहिता, अज्ञातार्थस्य शब्दास्याव्यञ्जकत्वात् । एवं विवक्षितान्यपर-वाच्येऽर्थस्य व्यञ्जकत्वं शब्दस्य तु सहकारितेति । अविवक्षितत्वन्तु क्वचिदनुपयुज्यमानत्वेनासामर्थ्याद्भवति, असामर्थ्येनैवान्वयबाधात् । पूर्वत्र वाच्यमर्थान्तरे संक्रमितं परिणमितं संक्रमितमिति सूत्रे णिचा निर्देशा काक्वादि-सहकारिप्रयोजकतामाविष्कर्तुम् । अत्र हि वाच्यस्यानुपपत्त्यभावादनुवृत्ति (त्त) धर्मरूपतया लक्ष्यप्रतीतिवेलायां न परित्यागः, किन्तु तत्सहितस्य लक्ष्यस्य प्रतीतिः, अतएवात्र परिणामोक्तिः । तत्त्वादप्रच्युतस्य धर्मिणोऽवस्थाऽन्तर-गमनं हि परिणामः । उत्तरत्रानुपपद्यमानत्वाद्वाच्यस्याल्यन्तं तिरस्कारः । यस्मिंश्चार्थान्तरे वाच्यं परिणमितं तद्व्यङ्ग्य-भेदेन व्यपदिश्यते । धर्मरूपं (पे) लक्ष्यं (दर्य) व्यङ्ग्यस्य तदतिशयमात्रस्वभावत्वादित्युक्तं गूढ [व्यङ्ग्य] प्राधान्य इति । 'एतदर्थं' 'तच्च गूढगूढश्चे'ति पूर्वं प्रयोजनस्य भेदेन निर्देशः । (रु. सं. १४ पृ:) ध्वनावित्यनुवादात् स ध्वनिरिति

ज्ञेय इति। योजना। तत्र चेति—अवविक्षितवाच्ये ध्वनौ क्वचित् (क्वचिद) सकृदुपात्तमेव सामान्यपदं विशेषं लक्षयति। यथा—

**एमेअ जणो तिस्सा देइ कवोलोपमाइ ससिबिम्बं।**
**परमत्थविआरे उण चंदो चंदो विअ वराओ॥** (ध्व. आ. ३।१०) इत्यादि।

अत्र प्रथमचन्द्रपदस्य द्वितीयचन्द्रपदार्थेऽनुगमात् कलङ्कोपहतत्व-क्षयित्व-दिवाधूसरत्वादिविशिष्टलाभः (भे) प्रकृतपोषकृत्वमिति। अस्मीत्यस्मदर्थानुवादो निपातः। समवायः सभा। 'अत्र यं प्रति वक्तुमारब्धं तं प्रति वक्तव्यवस्त्येव कथनीयमिति वच्मीत्यर्थत्वादनुपयुज्यमानम्। उपदेशादिरूपतयेति—उपदेशस्य लक्ष्यत्वेऽसंविज्ञानपदनिबन्धनावश्यग्राह्यत्वाद्यतिरिक्तातिशयत्वं व्यङ्ग्यत्वम्। एवमुपकृतमित्यादावुपकार(कृत)सौजन्य (सुजनता)-सुखितत्वादिभिर्यद्यपि वैपरीत्यादपकारदौर्जन्यदुःखितत्वादयो लक्ष्यन्ते तथापि तेषामेव सातिशयत्वप्रतिपादनाद्विशिष्टानामेव व्यङ्ग्यत्वव्यवहारः। वक्त्रादिवैशिष्ट्यादयश्चेह यथा मुख्यार्थबाधकास्तथा( २१.२२का:) प्रागुपपदितम्' (रु. सं. १४ पृ:)।

## दीपिका

एवं व्यञ्जकाख्यामधिकां शब्दार्थयोः शक्तिमुपपाद्य तदुपयोगं ध्वनिगुणीभूतव्यङ्ग्यविभागपराभ्यां चतुर्थपञ्चमोल्लासाभ्यां सूत्रकृद्दर्शितवान्। तत्र केचित् शब्दार्थनिरूपणार्थमेव वृत्तिविवेकः कृतो न स्वातन्त्र्येण, ततश्च तदनन्तरमेव तद्धर्माणां दोषादीनां निर्णयः सुकरो भवतीति स एव कार्यः, ध्वन्यादिविभागस्तु पूर्वं पश्चाद्वा कार्य, इति प्रत्यवतिष्ठन्ते। तन्निराकुर्वन्नाह वृत्तिकृत्—यद्यपीतिनिर्णयविभागव्यवस्थायाम्। धर्मिणीति—न खलु शब्दार्थमात्रधर्मा दोषा एव निरूप्याः, किन्तु काव्याङ्गरूपतद्विशेषगताः। एते च रसाद्याश्रयेणैव व्यवतिष्ठन्त इति रसादिध्वनिगुणीभूतव्यङ्ग्ये तावन्निरूपणीये। तत्प्रसङ्गेन तत्सजातीयानां वस्तुध्वन्यादीनां कर्कटीकण्टकन्यायेन पूर्वं पश्चाच्चावेष्टनतया तन्निरूपणमिति भावः। हेयोपादेयतेति—दोषाणां हेयतयैव गुणालङ्कृतीनाञ्चोपादेयतयैवात्र निरूपणम्। हेयोपादेयताबीजञ्च काव्यविशेषपरिज्ञान एव सुज्ञानं भवतीत्यर्थः। काव्यपदमत्र तद्विशेषध्वन्यादिपरम्। तद्भेदाः स्वलक्षणलक्षिता विशेषाः। तत्र च लक्षणामूलव्यञ्जकतायाः प्राथमिकतया प्रथमं तन्मूलध्वनिविवेकः।

अविवक्षितेत्यादिना वाच्यविभागो ध्वनिविशेषलक्षणद्वयसूचनपरः, अन्यथा ध्वनित्वक्षतेः। अविवक्षितं बाधितस्वरूपं वाच्यं यत्रेति सामान्यलक्षणं सूचितम्।

अनुपयुज्यमानत्वस्वरूपमात्रेणार्थान्तरे विशेषरूपे परिणमितमिति संक्रमितमित्यस्य व्याख्यानं, तन्मयीकृतमित्यर्थः। णिचा काक्वादिसाहाय्यसूत्रणम्।

त्वामिति—समवायः समुदायः। तत्र साम्मुख्यादेव प्रतिपाद्ये नियते त्वामत्यस्य तावन्नोपयोगः। एवं वचनादेव कर्त्तरि ज्ञातेऽहमर्थस्यास्मीत्यस्य वच्मीत्यस्य च। आत्मीयामिति मतिमवलम्ब्यावस्थानस्यावश्यम्भावादेव सिद्धेः। तैश्चानुपयोगबाधितैरुपदेश्यत्वाप्तत्वोपदेशप्रमादावस्थितयस्तद्विशेषा लक्ष्यन्ते। तैश्च लक्षितैस्तदतिशयरूपा एवावश्यवाच्यहिताहितत्वालङ्घनीयाज्ञत्वादरग्राह्यत्वात्यन्तावहितताः प्राधान्येन व्यज्यन्ते। वच्मीत्यत्र

लक्षणायाः स्फुटतया तन्मुखतया निर्दिशति-अत्र वचनादिरिति। अनुपपद्यमानतयेति—सर्वथेति शेषः। अतएवात्यन्ततिरस्कृत, नतु तद्गन्धोऽप्युपपद्यत इत्यर्थः।

उपकृतमति—अत्र वक्त्रादिवैशिष्ट्यान्मुख्यार्थबाधः, लक्षणयाऽपकारद्यतिशयश्च गूढो व्यङ्ग्यः।

## दर्पणः

श्रीः। इह हि "तददोषौ" इति काव्यसामान्यलक्षणकारिकायाम् उद्दिष्टस्य काव्यरूपस्य धर्मिणो विशेषा उत्तमादयः शब्दार्थयोः स्वरूपं च निरूपितम्। तदिदानीं दोषादिनिरूपणे प्राप्तावसरे कथम् उत्तमादिकाव्यभेदप्रभेदप्रदर्शनमित्याक्षेपमनूद्य वृत्तिकृदाह यद्यपीति। प्रदर्शिते इति प्रकर्षेण अर्थात् भेदप्रभेदाभ्यां प्रदर्शिते ख्यापिते। हेयता दोषाणाम् उपादेयता गुणालङ्काराणाम्।

अयमर्थः। दोषाणां रसस्य कुतोऽपकर्षोत्कर्षज्ञानं सुकरं स्यादिति। काव्यभेदानिति। काव्यशब्देनात्र काव्यविशेषः उक्तरूपो ध्वन्यादि।

तस्य भेदाः अविवक्षितवाच्यादयो विशेषाः। अत एवाभिधामूलस्य प्रथमं विवेक्तुमुचित्वेऽपि पूर्वोक्तानुसारेण सूचीकटाहन्यायेन वा प्रथमं लक्षणामूलं लक्षयति अविवक्षितेति। लक्षणामूलत्वादेव वाच्यमभिधेयम्। अविवक्षितं बाधितस्वरूपं यत्र स एकोऽविवक्षितवाच्यो नाम ध्वनिः काव्यभेदः। स चार्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यश्चेति द्विविध इत्यर्थः। गूढेति। अगूढव्यङ्ग्यप्रयोजित गुणीभूतव्यङ्ग्यव्यवच्छेदः। अनुपयुज्यमानत्वम् अर्थात् स्वरूपमात्रेणार्थान्तरेषु विशेषरूपे सङ्क्रमितम् इत्यस्यार्थः परिणमितः। अत्र च णिचा काक्कादिसहायसूचकम्। परिणामश्च तत्त्वादपरिच्युतस्य धर्मिणोऽवस्थान्तरगमनम्।

अस्मि अहम्। समुदायः समवायः। अत्रेति। विदुषां समुदाय इत्यादि प्रतिपादनेनापि वक्तृप्रतिपादने सिद्धे वच्मीति पुनर्वचनं पौनरुक्त्यापातात् मुख्यार्थे बाधिते वचनरूपोपदेशार्थम् उपदेशश्च न वचनादन्यः। आदिपदात् प्रतिपाद्यस्य समुखीनत्वादेव नवे प्रतिपाद्यत्वे त्वामिति पुनर्वचनमन्यथा व्यावृत्ते सिद्धे त्वामिति पुनर्वचने अन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनापि अहमर्थे लब्धे अस्मीति पुनर्वचनमन्यव्यावृत्तिविशिष्टं मदर्थम्। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति। तेन वक्तुर्वचनस्यावश्यंग्राह्यत्वादिरूपोऽर्थः प्रतिपाद्यते।

अत्यन्ततिरस्कृतवाच्यं विवृणोति क्वचिदिति। उदाहरति उपकृतमित्यादि। अत्र ह्युपकार्युपकारैः सौजन्यसुखितत्वादिभिः प्रतिपादितैस्तद्विपरीतान्यप्रकृतत्वादीनि लक्ष्यन्ते। अपकारादयश्चोपकारादीनां च विशेषरूपाः किन्तु, ततोऽत्यन्ततिरस्कृता अर्था इत्यत्रात्यन्ततिरस्कृतवाच्यत्वम्।

## साहित्यचूडामणिः

**ब्रह्माण्डकेतकीषण्डे सहकारयुवा कविः।**
**तदुपघ्ना जयत्येका माधवीव सरस्वती॥**

उल्लासद्वयसौहार्द्रमुन्निद्रयति—यद्यपीति। व्याख्यातपूर्वमेतत्। अविवक्षितेति। वाकारः समुच्चये। यदाह—

**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्॥** (ध्व. २-१) इति।

लक्षणेति। लक्षणामूलत्वाभावे विवक्षितान्यपरवाच्यकत्वं यत्राभिधाव्यापारहेतुत्वम्। अगूढत्वे गुणीभूतव्यङ्ग्यता। प्राधान्याभावे रसवदाद्यलङ्कारतया गुणीभूतव्यङ्ग्यत्वं प्रसज्येत।

यत्रेति। बहुव्रीहिणा व्यङ्ग्यार्थप्राधान्यं ध्वन्यते। ननु ध्वनावितिसिद्धविभक्त्या सप्तम्या कथं निर्देशः अविहितपूर्वत्वात् तस्य, पूर्ववाक्ये विधिपूर्वकत्वनैयत्याच्चोत्तरवाक्यानुवादस्येत्यत्राह—ध्वनाविति। अनुवादेन विधिरनुमेयः अस्त्यविवक्षितवाच्यो नाम ध्वनिः। तत्र वाच्य द्विधेति। अनुपयुक्तिरनुपपत्तिश्चेति द्वैविध्यं वाच्यस्य। आद्यायामर्थान्तरसङ्क्रमणम् अन्यत्रात्यन्ततिरस्कारः योऽर्थ उपपद्यमानोऽपि तावतानुपयोगाद् धर्मान्तरसंवलनादन्यतामिवावलम्बमानः स्रक्सूत्रन्यायेनास्ते सोऽर्थान्तरपरिणमितः। यः पुनरनुपपद्यमान एवोपायतामात्रेण कस्यचिदर्थान्तरस्य प्रतीतिं विधाय पलायत इव सोऽत्यन्ततिरस्कृत इति विवेकः। संक्रमितमिति णिचा व्यञ्जनसहकारिवर्गस्यायं प्रभाव इत्युद्भाव्यते। एवं तिरस्कृतशब्देऽप्यूह्यम्। त्वामिति। अत्र त्वामहं वचमि भणामिति वक्तुर्वचनंपुनरुक्तिप्रायत्वादनुपयुक्तमिति मुख्यार्थभङ्गः। योग्यताविरहवदाकाङ्क्षाविरहोऽपि तद्भङ्गहेतु, अन्वयविघटनाविशेषात्। तस्मादनुपयुक्तावाकाङ्क्षावैकल्पम्, अनुपपत्तौ योग्यताव्यत्यासः। अतश्च वचनेनोपदेशो लक्ष्यते। सामान्यविशेषभावः सम्बन्धः, वचनविशेषत्वादुपदेशस्य प्रतिपाद्यस्य शिक्षादानं व्यङ्ग्यं फलम्। आदिग्रहणान्मत्यादानपरिग्रहः।

उपकृतमिति कस्यचिदपकारकर्तुरुक्तिः। तत्रेत्यपकारस्य वर्णनाविस्तारसंरम्भेण भणितिः। किमुच्यत इति धीरोदात्तत्वेन वक्तुराक्षेपालङ्कारच्छायया वक्तुमुपक्रान्तस्य निषेधः। वैपरीत्यनिमित्ता चेयं लक्षणा। यस्मादुपकारेणापकारः, सौजन्येन दौर्जन्यम्, ईदृशविधानेनानीदृशविधानं, सख्येन शात्रवं संवत्सरशतासिकया तदायुष्मत्तायाः क्षणमप्यनौचित्यं च लक्ष्यते। विरोधः सम्बन्धः। उपकर्तुरुदात्तप्रकृतित्वादपकर्तरि सपदि विपदौचित्यं व्यङ्ग्यम्।

### सम्प्रदायप्रकाशिनी

इत्थं द्वितीयतृतीयाभ्यां शब्दार्थनिर्णये कृतेऽपि दोषगुणादीनामनवसरः, शब्दार्थात्मनः काव्यस्वरूपस्य निश्शेषमनिरूपणादिति चतुर्थपञ्चमषष्ठेषु ध्वनिगुणीभूतव्यङ्ग्यचित्राख्याः काव्यभेदा निरूपणीया इत्याह वृत्तिकारः—यद्यपि शब्दार्थयोरित्यादिना। 'तददोषावि'ति सामान्यतः, 'इदमुत्तममि'त्यादिना च विशेषतो यद्यपि काव्यं दर्शितमेव, अथाप्युद्देशरूपत्वाद् दर्शनमात्रमेव तत्। अविवक्षितवाच्यत्वादिविशेषसाकल्यसध्रीचीनतालक्षणेन प्रकर्षेणेह दर्शनीयमित्यभिप्रेत्याह—प्रदर्शित इति। हेयोपादेयतेति। दोषरूपाणां धर्माणां हेयता, अन्येषामुपादेयतेति विभागः। प्रथममिति। दोषादिनिणपणादर्वाक्।

अविविक्षितवाच्यो य इति। लक्षणामूलध्वनौ वाच्येऽर्थे विवक्षाभावात् सोऽविवक्षितवाच्यः। तत्र वाच्यमेकदार्थान्तरे संक्रामति, अन्यदात्यन्तं तिरस्क्रियते। अत्रोक्तवाच्यवैचित्र्यादयं ध्वनिर्द्विविधः अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति।

तदेदद् व्याचष्टे—लक्षणामूलगूढेत्यादि। गूढग्रहणं ध्वनित्वप्रकाशनाय। अगूढत्वे गुणीभूतव्यङ्ग्यता वक्ष्यते। अविवक्षितं वाच्यं यत्रेत्यविवक्षितवाच्यपदस्य विग्रहः। ध्वनावित्यनुवादादिति। तत्रेति तच्छब्दपरामृष्टतया कृतोऽप्यनुवादो यद्वृत्तमपि ध्वनिविशेषणं गमयतीत्यर्थः। अविवक्षितवाच्याख्ये ध्वनौ इति यावत्। अनुपयुज्यमानत्वादिति। उपादानलक्षणायां हि वाच्यः कुन्तादिरर्थः प्रवेशनादिक्रियायामनुपयुज्यमानः सन्नर्थान्तरे परिणमति। सा ह्यजहत्स्वार्था। स्वार्थापरित्यागद्योतनायैव च परिणामोक्तिः। स्वरूपादप्रच्युतस्यैव हि धर्मिणोऽवस्थान्तरापत्तिः परिणामः। परिणमितमिति णिचा व्यापारस्य प्रयोजकत्वमासूचितम्। लक्षणाव्यापारो हि वाच्यमर्थान्तरे परिणमयति।

त्वामस्मीति। अस्मीति निपातोऽहमर्थे। असमासकरणाद्विदुषां प्राधान्यं विवक्ष्यते। प्रकृष्टविद्वत्समूहो यत इह वर्तते, अतो बुद्धिमेकाग्रीकृत्यात्रैव वर्तस्व। त्वामहमेतद् वच्मीत्यत्र वचनमात्रं नोपयुज्यते, प्रतिपाद्यस्यार्थस्य सर्वपुरुषार्थे साधनत्वावगमात्। अतो वचनमुपदेशरूपतया परिणमति।

तदेतदाह—अत्र वचनादीति। आदिशब्दात् वक्तृबोद्धव्यावुपदेशकोपदेश्यभावेन परिणमतः। अतोऽयमर्थान्तरसंक्रमितवाच्याख्यो ध्वनिभेदः। अथात्यन्ततिरस्कृतवाच्याख्यं विवेचयति—क्वचित् पुनरित्यादि। अनुपपद्य मानतयेति।

लक्षणलक्षणायां हि प्रवाहादेववर्वाच्यस्यानुपपत्तिरेव। अतस्तन्मूलस्यात्यन्ततिरस्कृतवाच्याख्यात्वम्।

उपकृतमिति। अत्र वक्तृबोद्धव्यपर्यालोचनया काकुप्रमाणप्रतीतिके वाक्ये कैतवोपचारान्मुख्यार्थो बाध्यते।

अत एवमर्थो भवतीत्याह-एतदपकारिणं प्रतीत्यादि। अतोऽयमत्यन्ततिरस्कृतवाच्य इति यावत्।

## मधुमती

**विष्णवे भक्तचित्ते वर्तिष्णवेऽसुरजिष्णवे।**

**सर्वलोकगणान्तर्भ्राजिष्णवे धृष्णवे नमः।**

ननु काव्यस्वरूपे तद्विशेषलक्षणे चोक्ते प्राप्तावसरतया दोषादीनां निरूपणं उचितम्। न तु पुनः काव्यभेदप्रदर्शनं इत्याह—यद्यपीति। धर्मिणि प्रदर्शिते इति। साकल्येनेति शेषः। पूर्वं धर्मिप्रदर्शनस्य एकदेशरूपत्वात् इति भावः।

यद्यपि च व्यक्त्यपेक्षया साकल्यप्रदर्शनं असम्भवि। तथापि अविवक्षितवाच्यत्वादिरूपोपाधीनां साकल्येन प्रदर्शनं इह विवक्षितमिति भावः। एतञ्च उपरिष्टात् आकरे एव स्फुटीभविष्यति। तत्र चतुर्थे—ध्वन्युपाधीनाम्, पञ्चमे—गुणीभूतव्यङ्ग्योपाधीनाम्, षष्ठे—चित्रोपाधीनां च अभिधानमिति द्रष्टव्यम्।

धर्मणामिति। यद्धर्मविशिष्टानां हेयता, यद्विशिष्टानां च उपादेयता इत्यर्थः। अत्र दोषविशिष्टानां हेयतेति तदभावविशिष्टानां उपादेयता। गुणालङ्कारयोस्तु स्वरूपत एव तथात्वमिति मन्तव्यम्। यथाश्रुते तु—दोषस्य काव्यधर्मत्वाभावात् असङ्गीतिरेव स्यात्। किञ्च रसादिध्वनिनिरूपणं विना दोषादि निरूपणमेव न स्यात्।

दोषगुणलङ्काराणां साक्षात् परम्परया वा रसाश्रितत्वात् । रसपदं च सर्वत्र व्यङ्ग्यमात्रपरं रस्यमानत्वगुणयोगात् इति अस्मत्पितृचरणाः । एवं च प्रथमं काव्यभेदान् इत्यत्र काव्यपदं उत्तमध्वनिकाव्यपरं, प्रकरणात् । यद्वा—सामान्यपरमेव । पूर्वता च दोषादिनिरूपणापेक्षया इति कृत्वा यथाश्रुतमेव सम्यक् ।

उक्तलक्षणाप्रकारेषु उपादान-लक्षणलक्षणयोः उपयोगं दर्शयति—अविवक्षितवाच्यः इति । यः अविवक्षितवाच्यः सः ध्वनिरिति ज्ञेयः । तत्र च अविवक्षितवाच्ये ध्वनौ वाच्यं, अर्थान्तरे सङ्क्रमितं, अत्यन्तं तिरस्कृतं वा भवेत् इत्यन्वयः ।

लक्षणामूलेति । अत्र विवक्षितान्यपरवाच्यध्वनिव्यवच्छेदाय लक्षणामूलेति विशेषणम् । गूढपदं च अगूढरूपगुणीभूतव्यङ्ग्यव्यवच्छेदाय । 'स्निग्धश्यामलेत्यादौ' अत्यन्ततिरस्कृतवाच्याभ्यां, 'राम' पदं अर्थान्तरे सङ्क्रमयद्भ्यां, वाच्य सिद्धिर्जनितेति वाच्यसिद्ध्यङ्गत्वात् तद्व्यवच्छेदाय प्राधान्ये सति इत्युक्तम् । एवं च यतः लक्षणामूलगूढव्यङ्ग्यप्रधानं अत एव अविवक्षितवाच्यमित्यर्थः । लक्षणापरतया व्याख्याने तु उत्तरप्रतीकवैयर्थ्यापातः । स इति । सः ध्वनिरिति ज्ञेयः इत्यन्वयः । तत्र हेत्वपेक्षायामाह—ध्वनावितीति । अयमभिसन्धिः—'तत्र ध्वनौ' इत्यनेन ध्वनित्वमनूद्य, तत्र अर्थान्तरसङ्क्रमितवाच्यत्वादि विधीयते । न चात्र ध्वनित्वविधानं श्रूयते, न च अविहितस्य अर्थवाच्यता सम्भवति, इत्यतः सः ध्वनिः इति ज्ञेयः इति आक्षिप्य योजितं इति ।

तत्र वाच्यमिति । अनुपयुज्यमानत्वात् इति ब्रुवता तात्पर्यानुपपत्तिः तद्विषयीभूतानुपपत्तिर्वा अर्थान्तरसङ्क्रमितध्वनिमूललक्षणाबीजमिति सूचितमिति द्रष्टव्यम् ।

त्वामस्मीति । अस्मि इति अस्मच्छब्दार्थानुवादकं अव्ययम् । अत एव वच्मि इति नोत्तमपुरुषानुपपत्तिः । समवायः—समूहः । अत्रेति विदुषां समवायः । इत्यादिनैव प्रकृतार्थलाभे वच्मि इत्यनुपयोगात् तात्पर्यानुपपत्तिः । धर्मधर्मिभावश्च संबन्धः । उपदेशत्वं लक्ष्यम् । तथा च 'त्वां उपदिशामि' इत्यर्थः । 'मद्वचनं च सर्व त्वया उपदेशत्वेन ज्ञातव्यम्' इति उपदेश्यत्वप्रतीतिश्च प्रयोजनम् । अत एव वाच्यस्य विपरिणामोऽपि सङ्गच्छते । सत्येव वचनरूपे धर्मिणि उपदेशत्वरूपधर्मान्तरपत्तेः सम्भवात् । आदिपदात् मतिमात्रस्य अनुपयोगिता प्रामाणिकमतित्वं लक्ष्यम् । सामान्यविशेषभावः सम्बन्धः । सकलवादिविजयः व्यङ्ग्यः ।

यत्तु—आदान क्रियायाः मूर्तमात्रसाध्यतया मतौ बाधात् प्राप्तिमात्रं लभ्यमिति अत्यन्ततिरस्कृतवाच्योदाहरणमिदम् । आदिपदग्राह्यं तु असकृदुच्चारणादि । यथा 'होन्ति कमलाई कमलाइँ' इत्यत्र द्वितीय कमलपदं सौरभादिशालिपरम्, इति द्रष्टव्यमिति—तत्र । अमूर्तायां मतौ आदानवत् प्राप्तेरपि बाधात् । प्राप्तिर्यदि बौद्धी विवक्षिता, तर्हि आदानमपि बौद्धमेवेति क्वमूर्तमतौ तद्बाधः ? इति । किञ्च—अत्रेत्युपक्रमात् आदिपदग्राह्यमपि एतत्पद्यनिविष्टमेव भवेदिति तदन्योदाहरणोपादनमपि एतत्सन्दर्भविरुद्धं मन्तव्यम् ।

इदं तु विचारमर्हति—'कुन्ताः प्रविशन्ति' इत्युपादानलक्षणा मूलव्यङ्ग्यं कान्तर्भवतु ? न तावत् अत्यन्ततिरस्कृतवाच्ये, स्वार्थापरित्यागात् । नापि अर्थान्तरसङ्क्रमितवाच्ये, परिणामरूपसङ्क्रमस्य अभावात् । न हि वच्मि इत्यत्र वचनरूपस्य धर्मिणः उपदेशत्वलक्षणरूपान्तरापत्तिवत्, अत्र कुन्तस्य धर्मिणः रूपान्तरापत्तिरस्ति । कुन्तत्वेनैव तत्प्रतीतेः । पुरुषस्य कुन्तवत्त्वे नैवोपस्थितावपि परिणामित्वाभावात् । परिणामिनश्च कुन्तस्य लक्ष्यपुरुषधर्मत्वात् । तथाच कथं वा लक्ष्यतावच्छेदकरूपेण अन्यत्रावधारिता लक्ष्योपस्थितिः वच्मि इत्यादौ परिहार्हा ?

इति । उच्यते—सतो रूपान्तरापत्तेरेव परिणामत्वात् । सत्त्वं च धर्मिसाधरणम् । एवं च धर्मिपरिणामो धर्म इव धर्मपरिणामोऽपि धर्म्यैव । तत्र आद्यः 'वच्मीत्यादौ, द्वितीयस्तु 'कुन्ताः प्रविशन्ती'त्यादौ । 'कथं वेत्यादिदूषणं च तदैव घटते, यदि तथा नियमः स्यात् । न चैवम् । किन्तु—प्रयोजनप्रतीत्यनुरोधेन लक्ष्योपस्थितिरिति, क्वचित् तथा, क्वचिदन्यथा च तदुपस्थितिः । कुन्तवृत्तिसंयोगाश्रयत्वेन कुन्तपुरुषोभयोपस्थितिः इति मते तु सर्वं समञ्जसमेव ।

क्वचिदिति । अनुपपद्यमानतया इत्यनेन मुख्यार्थबाधो मूलमिहेत्यनुजानाति । उपकृतमिति । अत्रविरोधित्वसम्बन्धेन अपकारो लक्ष्यते । अपकारिणि उपकरणबाधात् तदुपस्थितिः उपकृतत्वरूपेण, प्रयोजनप्रत्ययानुरोधात् । यद्वा—अपकारित्वेनैव' रूपेण तदुपस्थितिः । तत्पदप्रतिपाद्यत्वज्ञानानन्तरं तु तत्प्रतीतिः । एवं अन्यत्रापि बोद्धव्यम् । त्वया अपकारे कृतेऽपि मया प्रियमेवोच्यते इति आत्मप्रकर्षोऽत्र व्यज्यते । सुजनतया दुर्जनता, सखितया शत्रुता, सुखिताऽऽसनेन दुःखिताऽऽसनं च लक्ष्यते । सम्बन्धप्रयोजने तु पूर्ववत् ।'

## विस्तारिका

काव्यस्य शब्दार्थौ विशेष्यम्, दोषादयो विशेषणानि । तत्र विशेष्यनिरूपणानन्तरं विशेषणनिरूपणमुचितमिति तद्वारणायाह—यद्यपीति । अभिधानीयमभिधातुं योग्यम् । धर्माणां रसस्यापकर्षोत्कर्षस्वरूपाणाम्, अत एव तन्मुखेनैव व्यवतिष्ठमानानां तेषां रसधर्मिनिरूपणाधीनमेव निरूपणमिति रसध्वनिगुणीभूतव्यङ्ग्ये निरूपयितव्ये प्रसङ्गादन्येषामपि निरूपणमित्याह-धर्मिणीति । साक्षात्सम्बन्धेन रसे, व्यङ्ग्यव्यञ्जकभावेन च काव्ये । तेन काव्यप्रभेदप्रदर्शनं नार्थान्तरमिति । प्रदर्शिते सपरिकरं निरूपिते । हेयत्वं दोषणाम्, उपादेयत्वं गुणालङ्काराणाम् ।

प्रथमं रसादिनिरूपणात् प्राग् व्यङ्ग्यज्ञानस्य व्यञ्जनकज्ञानाधीनत्वात् काव्यभेदान् ध्वन्यादीन् आह—'तद् भेदनिरूपणमर्थवत्' इति । तत्र लक्षणामूलस्य व्यङ्ग्यस्य प्रागुक्तत्वादन्याविषयत्वाच्च प्रथमं तद्भेदमाह—अविवक्षितेत्यादि । अविवक्षितता वाच्यताऽवच्छेदकप्रकारेण, 'कुन्ताः प्रविशन्ति' इत्यादौ वाच्यस्यापि विवक्षणादर्थान्तरे शक्यताऽनवच्छेदके तात्पर्यविषयतावच्छेदके संक्रमितं विवक्षितान्वयनिर्वाहायानुप्रवेशितम् । तात्पर्यग्राहकस्य प्रयोजकत्वेन णिचः प्रयोगः । अत्यन्तमिति । सर्वथाऽनन्वयित्वात् तिरस्कारः । इमे उपादानलक्षणारूपे ।

यत्तु 'कदली कदली' इत्यादौ द्वितीयकदल्यादिपदे 'जडत्वादिलक्षणायामर्थान्तरेषु विशेषरूप इत्याहुः, तन्नः, कुन्तेत्यादावव्याप्त्यापत्तेः । कुन्तपुरुषयोः सामान्यविशेषभावविरहात् । जडत्वादिलक्षणयैव वोपपत्तौ शक्याननुप्रवेशाच्च ।

अविवक्षितवाच्यपदेन रूढ्यभावेऽपि योगेनैव लक्षणामूलध्वन्यभिधामूलाभिधानमित्याह—अविवक्षितं वाच्यं यत्रेति । अतिप्रसङ्गमाशङ्क्य सत्यन्तेन विशेषयति । निरूढलक्षणावति ध्वनेर्निरसनाय लक्षणामूलेति । तन्मूलं तदन्वयव्यतिरेकानुविधायि, निष्प्रयोजनाया निरूढायाव्यङ्ग्यानुपजीव्यत्वात् । गुणीभूतव्यङ्ग्यवारणाय गूढेति । गूढेत्वेनागूढव्युदासः । प्राधान्यमनङ्गत्वम् । तेनापराङ्गवाच्यसिद्ध्यङ्ग्ययोरस्फुटसन्दिग्धप्राधान्यतुल्यप्राधान्यासुन्दरेषु न लक्षणामूलता, तत्तद्व्यङ्ग्योद्देशेन तस्या अप्रवृत्तेः । काक्वाक्षिप्तेऽपि न लक्षणा, अन्वयानुपपत्तेर्विरहादिति ।

नन्वेवं विशेष्ये वैयर्थ्यम्, अव्यावर्तकत्वात्; मैवम्; अन्यथा लाक्षणिकसिंहपदे 'हरिः सिंहः' इत्यत्र सिंहकृष्णयोरभिधामूलरूपकध्वनावतिप्रसङ्गात्, तस्य च सिंहपदवाच्यत्वलक्षणान्वयव्यतिरेकानुविधायित्वम्, अन्यथा पौनरुक्त्येन वाक्यार्थाप्रतीतौ तदप्रतीतेः । न च विशेष्येण वारणम्, वाच्यतावच्छेदकेन सिंहत्वेनैवान्यस्य विवक्षितत्वात् । ननु कथमविवक्षिततेत्यत्र ध्वनौ तात्पर्यमित्याह—ध्वनावित्यनुवादादिति । अनुवादस्य पुरोवाद-तात्पर्यग्राहकत्वात् ।

विभागमाह—तत्रेति । अनुपयुज्यमानं वाच्यतावच्छेदकेन रूपान्तरेण तु स्यादेवेत्यत आह—परिणमि-तमिति । अवस्त्वन्तरं परिणामः । यथा फलस्य श्यामावस्थातः पाकः, तथा 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्तस्य कुन्तत्वादन्यस्तत्संयोगः ।

त्वामित्यादि । आत्मीयामित्यादि द्वितीयार्धेन लब्धे । तेन 'त्वामस्मि वच्मि' इत्यादेः प्रत्यक्षावगतौ विदुषामित्यादेश्चानुपयुज्यमानता । स्वमत्यवलम्बनस्यावश्यम्भावेनात्मीयामित्यादेश्च । स्थित्यवलम्बनस्य सिद्ध-त्वेन तदुपदेशस्याप्यनुपयुक्तता । तेन लक्षणा ।

तदाह—वचनादिति । वचनं क्रियात्वादुपदेश्यम्, अहमुपदेष्टा वच्मि उपदिशामिति । वचनादीनामुपदे-शादिरूपेण परिणतिः, अवश्यवाच्यहिताहितत्वालङ्घनीयाज्ञत्वादपरग्राह्यत्वादीनि तद्विशेषा व्यज्यन्ते । एवं विदुषा-मनन्यसाधारणज्ञानवतां समवायः परस्परापेक्षता । आशु विपक्षपक्षे दूषकत्वं सर्वग्राह्यैकपक्षत्वञ्च फलम् । आत्मीयां पराप्रतार्य्यामदुष्टपक्षोद्भावनं फलम्, स्थितिं सावधानां विपक्षछिद्रप्रेक्षित्वं फलमित्यूहनीयम् ।

'ननु त्वामस्मि'इत्यनयोरपि लक्षणायां कथं वचनादिः ? इत्यत्र नव्याः—'कुटादिरित्यत्रेव वचनस्यादिर्व-चनमादिर्यस्येति समासद्वयाश्रयणात् सर्वपरिग्रह इत्याहुः । सर्वनाम्नि लक्षणाविरहेण 'त्वाम्' इत्यादि परिहार इत्यन्ये, तन्न; युस्मदस्मदोः सम्बोध्यात्मकत्वस्वतन्त्रोच्चारयितत्वाभ्यां शक्तौ तदन्यरूपेण लक्षणाया दुर्निवारत्वात् । यत्त-दोरेव तथा नियमः, बुद्धिस्थताऽवच्छेदकेन घटत्वपटत्वादिनैव तयोः शक्तेः । 'वच्मि' इत्यत्र स्फुटमनुपयोग इति । तदादित्वमित्यपरे, तदप्यसत्; आदिपदस्य पूर्वाग्राहकत्वतादवस्थ्यात् । वस्तुतस्तु 'अनुपयुज्यमानतया वचनस्या-नभिधाने तत्कर्मकर्त्रोरनभिधानं दण्डापूपिकयेति तयोस्तन्मुखप्रेक्षित्वेन तदादितोक्तिः । अनुपयोक्तौ निराकाङ्क्षत्वं लक्षणाबीजम् । अनुपयुज्यमानत्वाच्छक्यतावच्छेदकेन तात्पर्यविषयतावच्छेदकेन चानन्वयित्वादित्यर्थः ।

तिरस्कारोऽन्वयाप्रतियोगित्वम् । उपकृतिमिति । तत उपकारात् ।

ननु कथमत्र लक्षणेत्यत आह-एतदिति । अपकारित्वं प्रकरणावसेयम् । वैपरीत्यं शक्यसम्बन्धः, भावा-भावरूपतयोपकारस्य तिरस्कारः, अपकारातिशयश्च व्यङ्ग्यः । अविवक्षितवाच्यस्यार्थान्तरसंङ्क्रमित-वाच्योऽन्त्यन्ततिरस्कृतवाच्यश्चेति द्वौ भेदौ ।

**सारबोधिनी**

यद्यपि शब्दार्थयोर्निर्णये कृतेऽदोषत्वादिधर्मातिरिक्ते आकाङ्क्षैव न भवतीति शङ्कोत्तराभ्यामाह यद्य-पीति । धर्मिणि निरूपिते इति । सामस्त्येनेति शेषः ।

ननु काव्यस्य लक्षणं ध्वन्यादिना विभागश्च कृतः। तथा 'तददोषौ' इत्यनेन प्राधान्येन धर्मितया शब्दार्थावुक्तौ, तयोरपि लक्षणादिकं कृतम्। किमपरमवशिष्यते येन सामस्त्येन धर्मी न प्रदर्शित इति यदर्थोऽयमारम्भ ? इति।

अयं भावः। अवान्तरभेदे निरूपयितव्ये तत्र नान्तरीयकतया रसनिरूपणमपि भविष्यति। तन्नि रूपणे च तदधीनदोषादीनां धर्माणां निरूपणमुपपद्य इति। तद्वक्ष्यति हि 'मुख्यार्थहतिर्दोषो रसस्यडश्च ? .मुख्य' इति 'ये रसस्याङ्गिनो धर्माः' इति च। तथा 'उपकुर्वन्ति तं सन्त' मित्यादि ॥ अत एव 'काव्यभेदान्' इत्यस्य ध्वन्यादिभेदान् इत्यर्थो बोध्यः। अन्यर्थो पूर्वमेव ध्वन्यादिरूपेण काव्यभेदाः प्रदर्शिताः। पुनः कथं तदारम्भः ? अतस्तन्निरूपणाय रसादिनिरूपणमपि प्रकृतमिति ध्येयम्।

तत्र लक्षणामूलव्यङ्ग्यस्य प्रागुक्तत्वादल्पविषयत्वाच्च प्रथमं तद्भेदमाह अविवक्षितेति। अविवक्षितत्वमतात्पर्यविषयत्वम्। तच्च वाच्यतावच्छेदकप्रकारेणेति बोध्यम्। अन्यथा "छत्रिणो यान्ती" त्यत्र वाच्यस्यापि विवक्षणात् तदसङ्ग्रहः स्यात्। तदपि मुख्यत इत्यवधेयम्। अन्यथा 'कुन्ताः प्रविशन्ति' इत्यादौ कुन्तस्यापि पुरुषावच्छेदकतया तात्पर्यविषयत्वमस्त्येव, परं तु न मुख्यतः। भोजनार्थं प्रवेशान्वये मुख्यतः पुरुषस्यैव तात्पर्यविषयत्वात्।

अर्थान्तरे सङ्क्रमितमिति। तत्त्वं च स्वार्थापरित्यागेनार्थान्तरपरशब्दकम्। अत्यन्तमिति। शक्यस्य सर्वथानन्वयित्वादन्वयाप्रतियोगिकत्वतिरस्कारः। इमे उपादानलक्षणलक्षणारूपे। इदमुपलक्षणम्, सारोपादेरत्यन्ततिरस्कृतवाच्य एवान्तर्भाव इति ध्येयम्।

यत्तु 'कदली कदली' इत्यादौ द्वितीयकदल्यादिपदे जडकदलीत्वलक्षणायाम्, अर्थान्तरे स्वविशेषरूपे सङ्क्रमितम् इत्याहुः। तन्न, कुन्तेत्यादवव्याप्त्यापत्तेः। कुन्तपुरुषयोः सामान्यविशेषभावविरहात्। जडत्वादिलक्षणयोपपत्तौ शक्याननुप्रवेशाच्च। अविवक्षितवाच्यपदेन रूढ्यभावेऽपि योगेनैव लक्षणामूलध्वन्यभिधानमित्याह अविवक्षितं वाच्यं यत्रेति। अतिप्रसङ्गमाशङ्क्य सत्यन्तेन विशेषयति लक्षणामूलेति। निरूढलक्षणावति लक्षणामूलध्वनेर्निरासाय लक्षणामूलेति। तस्या निष्प्रयोजनाया व्यङ्ग्यानुपजीव्यत्वात्।

केचित्तु, अभिधामूलेऽतिप्रसङ्गवारणाय लक्षणामूलेति, तन्न। यतस्तत्राविवक्षितवाच्यत्वमेव नास्तीति कथमतिव्याप्तिः।

गुणीभूतव्यङ्ग्यवारणाय गूढेत्यादि। गूढत्वेनागूढव्यवच्छेदः। प्राधान्यमनङ्गत्वम्। तेनापराङ्गवाच्यसिद्ध्यङ्गयोर्व्युदासः। अस्फुट-संदिग्ध-तुल्यप्राधान्य-असुन्दरेषु न लक्षणामूलता। तत्तद्व्यङ्ग्योद्देशेन तस्या अप्रवृत्तेः। काक्वाक्षिप्तेऽपि न लक्षणा अन्वयानुपपत्तेरभावात्।

नन्वेवं विशेष्यवैयर्थ्यम्, अव्यावर्त्तकत्वात्, मैवम्। अन्यथा लाक्षणिकसिंहपदवाच्यत्वलक्षणान्वययतिरेकानुविधायित्वमस्ति। अन्यथा पौनरुक्त्यापत्तेः, वाक्यार्थप्रतीतौ तदप्रतीतेः। न च विशेष्येणावरणं, सिंहान्वयस्य विवक्षितत्वात्।

ननु कथम् 'अविवक्षितवाच्येत्यत्र' ध्वनौ तात्पर्यमित्यत आह ध्वनावित्यनुवादादिति। अनुवादस्य पुरोवादतात्पर्यग्राहकत्वात्।

त्वामित्यादि। अस्मीत्यहमर्थे। आदाय गृहीत्वा। आङ्पूर्वस्य ददातेर्ग्रहणे भाषणेऽपि वृत्तेः। आत्मीयामित्यादि द्वितीयार्धेन लब्धेः त्वामस्मि वच्मीत्यादेः प्रत्यक्षावगतौ विदुषामित्यादेश्चानुपयुज्यमानता। स्वमत्यालम्बनस्यावश्यंभावित्वेनात्मीयामित्यादेश्च स्थित्यवलम्बनस्य सिद्धत्वात् तदुपदेशस्याप्यनुपयुक्तत्वम्। ततो लक्षणा, तदाह वचनादिरिति। लक्षणाबीजत्वनुपयुक्तौ निराकाङ्क्षत्वम् त्वमुपदेश्या अहमुपदेष्टा। वच्मि उपदिशामीति वचनादीनामुपदेशादिरूपेण परिणतिः। अवश्यवाच्यहिताहितत्वालङ्घनीयाज्ञत्वादरग्राह्यत्वानि व्यज्यन्ते। एवं विदुषाम् अनन्यसाधारणज्ञानवतामिति लक्ष्यम्। आशु विपक्षदूषकत्वं सर्वग्राह्यैकपक्षत्वं च फलम्। आत्मीयां पराप्रतार्यामिति लक्ष्यम्। अदुष्टपक्षोद्भावनं फलम्। स्थितिसावधानमिति लक्ष्यम् विपक्षछिद्रप्रेक्षित्वं च फलम् इत्याद्यूहनीयम्।

एतदिति। अत्रापकारातिशयो व्यङ्ग्य इति पार्यन्तिकव्यङ्ग्यस्तु पूर्वत्र वात्सल्यम्, परत्रासूया।

**काव्यप्रदीपः**

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ।**
**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्॥ १॥**

वाच्यः वाच्यजात्यादिधर्माणां धर्मी अविवक्षितो वाच्येन रूपेणान्वयबोधविषयतया अनपेक्षितो यत्र सः। तत्र यद्यप्यविवक्षितवाच्यमात्रस्य नायं विभागः, किन्तु तद्विशेषस्य ध्वनेः। नतु शब्दात्तथावगमः। तथापि यत्तदोरेकार्थपरामर्शकतया तत्र ध्वनाविति तच्छब्दार्थस्य ध्वन्यभेदे यच्छब्दार्थोऽपि ध्वनिरेव लभ्यते। अयं च ध्वनिभेदो लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सति संभवति। अविवक्षितत्वं च वाच्यस्यान्वयानुपपत्तेः। सा च वाच्यस्यानुपयुक्तत्वेन, उपयोगिनि रूपान्तरे तात्पर्याद्वा, स्वत एवान्वयायोग्यत्वाद्वा। अनुपयुक्तत्वमपि पुनरुक्तत्वात्, विशेषानाधायकत्वमात्राद्वा। तत्रोभयत्रापि वाच्यमर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके संक्रमितमाश्रयत्वेन परिणमितम्। वाच्योऽप्यर्थ रूपान्तरेण लक्ष्यत इत्यर्थः। द्वितीये तु वाच्यमत्यन्ततिरस्कृतं च केनापि रूपेणान्वयप्रविष्टम्। तत्रार्थान्तरसंक्रमितवाच्यं पुनरुक्तेर्यथा—

**'ताला जाअन्ति गुणा जाला ते सहिअएहिं घेप्पन्ति।**
**रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ॥**

अत्र द्वितीयकमलशब्दः सौरभादिगुणयुक्तत्वरूपे लक्ष्ये संक्रमितवाच्यः। विशेषानाधाकयत्वमात्राद्यथा—

**'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।**
**आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥'**

अत्र वच्मीत्यनुपयुक्तार्थम्। अनुपादानेऽपि वचनक्रियाप्रतीतेः। अत उपदेशत्वं लक्ष्यम्। तत्र वाच्यार्थः संक्रमितः। एवं त्वामस्मीतिपदे अप्यनुपयुक्तार्थे। संबोध्यतथैव युष्मदर्थस्य वचनकर्मतावगतेः। वच्मीत्युत्तमपुरुषेणैवास्मदर्थस्य तत्कर्तृकत्वप्रत्ययात्। अतस्ताभ्यां लक्ष्ययोरुपदेश्याप्तत्वयोस्तद्वाच्यौ संक्रमितौ। तथा आत्मी-

याया एव मते: सर्वैरास्थानादनुपयुक्तत्वेनात्मीयशब्देन प्रमाणपरिगृहीतत्वे लक्ष्यमाणे तद्वाच्यं संक्रमितम्। 'अस्मद्युत्तम:' इत्यत्रार्थग्रहणादस्मियोगे वच्मीत्युत्तमपुरुष:।

अत्यन्ततिरस्कृतं यथा—

**'उपकृतं बहु नाम किमुच्यते सुजनता प्रथिता भवता परम्।**
**विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम्॥'**

अत्रापकारिण्यन्वयायोग्यैरुपकृतादिपदैः स्वार्थविपरीतं लक्ष्यते। नच तत्र वाच्यस्य कथंचित्प्रदेश:। त्वयैवमपकारेऽपि क्रियमाणे मया प्रियमेवोच्यत इति स्वसाधुत्वं व्यङ्ग्यम्। तवोपकारापकारविवेको नास्तीति वा। अयं च प्रभेदो न केवलं विरोधिलक्षणया, किं त्वन्यत्रापि। यथा—

**'आधूतसस्वेदकरोत्पलायाः स्मितावगूढप्रतिकूलवाचः।**
**प्रियो विहायाधरमायताक्ष्याः पपौ चिराय प्रतिषेधमेव॥'**

अत्र पपावित्यनेन सोत्कण्ठं निरीक्षणं लक्ष्यम्। उत्कण्ठातिशयो व्यङ्ग्यः।

### काव्यप्रकाशखण्डनम्

अथ ध्वनिभेदानाह। तत्राऽदौ लक्षणामूलमाह—

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ।**
**अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम॥** (मू. का. २४)

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सति अविवक्षितं वाच्यं यत्र स ध्वनावित्यनुवादाद् ध्वनिरिति ज्ञेयः। अत्राविवक्षितं वाच्यतावच्छेदकप्रकारेणेति बोध्यम्। अन्यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र वाच्यस्यापि विवक्षणात् तदसंग्रहः स्यात्। अर्थान्तर इति। स्वार्थमपरित्यज्य अर्थान्तरपरशब्दकमित्यर्थः। अत्यन्तमिति। शक्यस्य सर्वथानन्वयित्वात्, अन्वयाप्रतियोगित्वं तिरस्कार इति। तदत्र लक्षणामूले अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाचौ द्वौ भेदौ ज्ञेयौ। तत्राद्यो यथा—

**त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति।**
**आत्मीयां मतिमादाय स्थितमत्र विधेहि तत्॥**

अत्र वाच्यस्यानुपयुज्यमानत्वात् लक्षणैवाश्रयणीया। तथा हि—त्वां उपदेश्यम्, अहमुपदेष्टा, वच्मि उपदिशामीत्यर्था लाक्षणिकः। तथा चावश्यवाच्यहिताहितत्वालङ्घनीयाज्ञत्वादरग्राह्यत्वानि व्यज्यन्ते। एवं विदुषां अनन्यसाधारणज्ञानवतां समवायः परस्परसापेक्षता आशुविपक्षदूषकत्वं सर्वग्राह्यैपक्षत्वं व्यङ्ग्यम्। आत्मीयां पराप्रतार्याम्, अदुष्टपक्षोद्भावनं फलम्, स्थितिं सावधानाम्, विपक्षच्छिद्रप्रेक्षकत्वं फलमित्यर्थान्तरसङ्क्रमितवाच्यत्वं स्वार्थं अपरित्यज्य परार्थावबोधकत्वं प्रथमो भेदः।

द्वितीयो यथा-'उपकृतं बहु तत्रे' त्यादिना। एतदपकारिणं प्रतिविपरीतलक्षणया कश्चन वक्ति। अत्र अपकारातिशयो व्यङ्ग्यः। अत्र वाच्यस्य सर्वथान्वये [प. ९.२] ऽप्रवेशादत्यन्ततिरस्कृतवाच्यता। अन्वयाप्रवेश एव तिरस्कारः।

## आदर्शः

'स्वरूपं' लक्षणम्। अभिधानीयमिति अभिधातुं योग्यमित्यर्थः, तददोषौ शब्दार्थावितिकारिकोक्तक्रमानुरोधा दिति भावः। प्रदर्शिते इति भेदप्रभेदरूपकर्षेण दर्शिते इत्यर्थः। सामान्यतस्तु 'इदमुत्तममतिशयिनी' त्यादिना दर्शितमेवेति बोध्यम्। ज्ञायत इति तत्तद्धर्म्मिनिष्ठत्वेन ज्ञायत इत्यर्थः, सामान्यधर्म्मिनिष्ठतया तु सामान्यकथनेनैव ज्ञातत्वादिति बोध्यम्।

अविवक्षितवाच्य इति ध्वनिस्तावदविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च भवति, तत्राविवक्षितवाच्यत्वं लक्षणामूलस्थल एव सम्भवति, अतो लक्षणामूलत्वध्वनित्वयोर्द्वयोरपि प्रदर्शनीयत्वात् तयोश्च कारिकायां पूर्व्वमनुक्तत्वेन 'अर्थबललभ्यं तद्वयं शब्द पूरणेन दर्शयन् व्याचष्टे—लक्षणामूलेति ध्वनिरिति ज्ञेय इति च। व्यङ्ग्यस्यागूढत्वे गुणीभूतव्यङ्ग्यत्वमेव न ध्वनित्वमतो ध्वनित्वबललभ्यमाह— गूढेति। तथात्व एव च व्यङ्ग्यस्य प्राधान्यमित्येतत्स्फोरणायाह—प्राधान्ये इति। व्याचष्टे—तत्र च वाच्यमिति। अनुपयुज्यमानत्वादिति वाच्यतावच्छेदकेन रूपेणेति शेषः। 'अर्थान्तरे' अवच्छेदकान्तरे, 'परिणमितं' धर्म्मितया भातम्, वाच्यो धर्म्मी अवच्छेदकान्तरेणैव ग्राह्य इत्यर्थः। उक्तषड्विधलक्षणासूपादानलक्षणायामेव एवं भवतीति बोध्यम्। अन्यपञ्चविधलक्षणासु तु रूपान्तरेणापि 'न वाच्यार्थान्वयबोध इत्युक्तम्' 'अत्यन्त वे'ति कारिकाञ्चलेन। त्वामस्मीति। अस्मीत्यहमित्यर्थे अव्ययम्। त्वामहं वच्मि उपदिशामि। समवायः सभा। तत् तस्मात्। अत्रेति, उच्यमानार्थमहिम्नैव वच्मीत्यस्य अर्थस्य लाभे वचनात् वचनज्ञापनमनुपयुक्तम् अतोऽत्र उपदिशामीत्येवार्थः। तथाच उपदेशत्वेन रूपेणैव वाच्यार्थस्य वचनस्योपस्थापकमिदमिति दर्शयति—अत्र वचमादिति। परप्रवर्त्तकं वचनं ह्युपदेशः। अनुपेक्षणीयत्वञ्च एतल्लक्षणामूलं गूढं व्यङ्ग्यं प्रयोजनम्। वचनादिरित्यादिपदाद् विद्वत्पदं निग्राहकविद्वत्परम्, परापमानदायित्वं तद्व्यङ्ग्यं गूढं प्रयोजनम्। मतिपदमपि प्रकृष्टमतिपरम्, परापमानतः स्वरक्षणं च तत्प्रयोजनं गूढव्यङ्ग्यम्। सर्व्वत्र शक्याभेद एव लक्ष्यार्थे शक्यसम्बन्धः। अत्यन्तं वेति व्याचष्टे—क्वचिदिति रूपान्तरेणापि वाच्यार्थस्यान्वयानुपपत्तेरित्यर्थः। लक्षणलक्षाणादिपञ्चक एव एवं भावो बोध्यः। उपकृतमिति। प्रमाणान्तरवगतापकारिणं प्रत्येव इयमुक्तिः। अत्र च तत्रेति समीचीनः पाठः, यत्रेति पाठे तु तत्रेति पूरणीयम्। परं सुखितञ्चेति द्वयं क्रियाविशेषणम्। विपरीतेति उपकृतपदस्य अपकृते सुजनतापदस्य दुर्ज्जनत्वे सुखितपदस्य च दुःखिते 'विपरीते लक्षणलक्षणयेत्यर्थः। वैपरीत्यमेव च शक्यलक्ष्ययोः सम्बन्धः। पूर्व्वद्वये बोद्धव्यपुरुषस्य अपकर्त्तुः कौटिल्यम्, तृतीये च दुःखितत्वस्य कौटिल्यफलत्वं व्यङ्ग्यम्। त्रिष्वेव लक्ष्यार्थस्यातिशयो व्यङ्ग्य इति तु दर्पणकृत्।

## सुधासागरः

यद्यपि काव्यलक्षणं विभागं च विधायलक्षणपदार्थेषु विवेचनीयेषु विशेष्यपदार्थौ शब्दार्थौ विचारितौ इदानीं विशेषणपदार्थानां दोषगुणालङ्काराणां निरूपणमुचितं न तु काव्यभेदस्य ध्वन्यादेर्भेदानाम्, तथापि ध्वन्यादेर्भेदेषु ज्ञातेषु दोषादीनां हेयोपादेयतयाऽवगमो भवति। तयोर्विशेषनिष्ठत्वात्। यथा श्रुतिकटुत्वं दोषः ध्वनिविशेषे

शृङ्गारादिध्वनौ हेयो रौद्रादिध्वनौ चित्रभेदे चाहेयः । एवं माधुर्यादिगुणः शृङ्गारादिध्वनावुपादेयः रौद्रादिध्वनौ त्वनुपादेय एव । अलङ्कारोऽपि यमकादी रसादिध्वनावनुपादेयः चित्रभेदं तूपादेय एव । तथा च दोषादिनिरूपणोपयोगिषु काव्यविशेषप्रभेदेषु निरूप्यमाणेषु प्रसङ्गादनुपयोगिनोऽपि निरूपणीया इत्युल्लासत्रयेण काव्यभेदत्रयभेदो निरूपणीयः । तत्र प्रथमो ध्वनिभेदः । तत्र तावत् ध्वनिर्द्विधा-अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च । 'तत्र यद्यप्यभिधायाः प्राथम्यात्तन्मूलको विवक्षितान्यपरवाच्य एव प्रथमं निरूपयितुमुचितस्तथापि लक्षणमूलव्यञ्जनायाः प्राङ्निरूपणात् पशूननक्तीत्यत्रेव प्रावृत्तिकं क्रममुपादाय सूचीकटाहन्यायेन वा प्रथममाद्यमुद्दिश्य विभजते [प्रदीपः] । तदेतदाह वृत्तिकारः—यद्यपि शब्दार्थयोरित्यादि । धर्मिणि प्रदर्शित इत्यत्र सामस्त्येनेति भावः । काव्यभेदानित्यत्र काव्यपदं ध्वनिकाव्यपरम् । अन्यथा काव्यप्रभेदानित्युक्तं स्यात् ।

वाच्यो वाच्यजात्यादिधर्माणां धर्मी । अविवक्षितो वाच्येन रूपेणान्वयबोधिवषयतयाऽनपेक्षितो यत्र सः । तत्र यद्यप्यविवक्षितमात्रस्य नाऽयं विभागः किन्तु तद्विशेषस्य ध्वनेः, नतु शब्दात्तथाऽवगमः, तथापि यत्तदोरेकार्थपरामर्शकतया तत्र ध्वनाविति तच्छब्दार्थस्य ध्वन्यभेदेन यच्छब्दार्थोऽपि ध्वनिरेव लभ्यते । अतएव जयपञ्चाननाः प्राहुः—अविवक्षितं वाच्यतावच्छेदकावच्छिन्नं, यत्र ध्वनिर्ज्ञेयः । तत्र ध्वनौ वाच्यमर्थान्तरे सङ्क्रमितमत्यन्ततिरस्कृतं च भवेदित्यन्वय इति ।

वस्तुस्त्वविवक्षितवाच्येत्यत्र ध्वनौ तात्पर्यं ध्वनावित्यनुवादादेव गम्यते, अनुवादस्य पुरोवादितात्पर्यग्राहकत्वात् ।

अयं च ध्वनिभेदो लक्षणामूलागूढव्यङ्ग्यप्राधान्ये सति सम्भवति । अविवक्षितत्वं वाच्यस्यान्वयानुपपत्तेः सा च वाच्यास्यानुपयुक्तत्वेन तदुपयोगिनि रूपान्तरे तात्पर्याद्वा स्वत एवान्वयायोग्यत्वाद्वा । अनुपयुक्तत्वमपि पुनरुक्तत्वाद्वाविशेषानाधयकत्वमात्राद्वा । तत्रोभयत्रापि वाच्यमर्थान्तरे उपयोगिनि लक्ष्यतावच्छेदके सङ्क्रमितम् आश्रयत्वेन परिणमितो वाच्योप्यर्थो रूपान्तरे लक्ष्यत इत्यर्थः ।

द्विताये तु वाच्यमत्यन्ततिरस्कृतम् न केनापि रूपेणाऽन्वयप्रविष्टम् । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—लक्षणमूल इत्यादि ।

तत्राऽर्थान्तरसङ्क्रमितवाच्यं पुनरुक्तेर्यथा प्रदीपकारैः उदाहृतम्—

**ताला जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति ।**
**रइकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइं ॥**

अत्र द्वितीयकमलशब्दः सौरभादिगुणयुक्तत्वरूपे लक्ष्ये सङ्क्रमितवाच्य इति । नचैतत् प्रदीपकारोक्तमेवेति शङ्क्यम् । सप्तमोल्लासे क्वचिद्दोषोऽपि गुण इत्युपक्रम्य वाग्देवतावतारैरेव कथितपदस्याऽर्थान्तरसङ्क्रमितवाच्ये गुणत्वेनोदाहरिष्यमाणत्वात् । अत्रापि किं नोदाहृतमिति चेत् एकोदाहरणेन प्रकरणभेदेऽपि अर्थान्तरसङ्क्रमितवाच्यमेव व्यवहरणीयमिति सूचनायेत्यवेहि । तथापीदमेव किं नोदाहृतमिति चेत् अन्यत्राप्युपयुक्तत्वेनाऽमुख्यत्वादित्यलं बहुना ।

यत्तु अत्र वैद्यनाथैः 'ताला जाअन्ति' इत्यादि व्याख्यायोक्तम्—काव्यप्रदीपगतमिदं पद्यमिति, तत्रामादिकम्, प्रकाशकारैरेवाऽग्रे लिखितत्वात्, प्रकृतग्रन्थाऽलिखितस्य व्याख्यानानौचित्याच्च, प्राकृते पद्यव्यवहाराभावाच्चेति सुधीभिर्ध्येयम् ।

विशेषानाधायकत्वमात्राद् यथा—अस्मीत्यहमर्थकमव्ययम् । यतोऽत्र विदुषां समवायस्तिष्ठति तत्कारणादात्मीयां मतिमास्थायाऽत्र स्थितिं विधेहीति वाक्यार्थस्य त्वामहं वच्मीत्युपदेशक्रियाकर्मत्वेत्वनाऽन्वयः ।

अत्र त्वामित्यनुपयुक्तार्थम्, सम्बोध्यतयैव युष्मदर्थस्य वचनकर्मताऽवगतेरित्युपदेशार्हत्वं लक्षयति । तत्र वाच्यार्थः सङ्क्रमितः । उपेदशार्हत्वेनाऽवश्योपदेश्यहिताहितत्वं व्यज्यते । एवमस्मीत्यनुपयुक्तार्थं वच्मीत्युत्तमपुरुषेणैवाऽस्मदर्थस्य तत्कर्तृकत्वप्रत्ययादित्याप्तत्वं लक्षयति । तत्र वाच्यार्थः सङ्क्रमितः । आप्तत्वेनाऽलङ्घनीयाज्ञत्वं व्यज्यते । वच्मीत्यनुपयुक्तार्थम्, अनुपादेऽपि वचनक्रियाप्रतीतेः । अत उपदेशत्वं लक्ष्यम् । तत्र वाच्यार्थः सङ्क्रमितः । उपदेशत्वेन वचनस्याऽऽदरणीयता व्यज्यते । विद्वदधिष्ठानेनैव सभात्वाद्विद्वत्पदमनुपयुक्तमसाधारणज्ञानवत्त्वं लक्षयति । तत्र वाच्यार्थः सङ्क्रमितः । तेनाऽऽशु परपराभवो व्यज्यते । विद्वांसस्तिष्ठन्तीत्यनेनैव समुदायप्रतीतौ समवायपदमेकवाक्यतापन्नसमुदायं लक्षयति । तत्र वाच्यार्थः सङ्क्रमितस्तेन परानभिभवनीयत्वं व्यज्यते ।

अतएवोक्तं श्रीवत्सलञ्छनभट्टाचार्य्यैः—प्रत्यक्षावगतौ विदुषामित्यादेश्चानुपयुज्यमानतेति । तथाऽऽत्मीयाया एव मतेः सर्वैरास्थानादनुपयुक्तत्वेनात्मीयशब्देन प्रमाणपरिगृहीतत्वे लक्ष्यमाणे तद्वाच्यं सङ्क्रमितम् । तेन परैरप्रतार्यत्वं व्यज्यते । स्थितिपदेन सावधानस्थितिर्लक्ष्यते । तत्र वाच्यं सङ्क्रमितम् । विपक्षच्छिद्रप्रेक्षित्वं व्यङ्ग्यम् । एवञ्च लक्षणामूलगूढव्यङ्ग्यप्राधान्यं द्रष्टव्यम् । तदेतत्सर्वमभिप्रेत्य वृत्तिकृत् आह—अत्र वचनाद्युपदेशादि इत्यादि ।

अत्यन्ततिरस्कृतम् शक्यस्य सर्वथाऽनन्वयित्वादन्वयाऽप्रतियोगित्वं तिरस्कारः । यथा—'उपकृतमि'—ति ।

द्रुतविलम्बितं वृत्तम् । 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् । अयमर्थः । त्वया यद्बहु उपकृतं तत्र तद्विषये किमुच्यते किं वाच्यम् । बहुत्वाद्वक्तुं न शक्यमित्यर्थः । भवता परं केवलं सुजनता प्रथिता प्रकटिता । तथा च सौजन्ययुक्त एवैतावानुपकारो न तु प्रत्युपकारलाभाद्युपाधिप्रयुक्त इति भावः । हे सखे ! ततः यस्मात्सुजनता प्रथिता तस्मादीदृशमेव सदा विदधत् कुर्वन्-शरदां वर्षाणां शतं व्याप्यसुखितं सुखयुक्तं यथा स्यात्तथाऽऽस्व तिष्ठेति मुख्योर्थः । स च प्रकरणादिनोपकारिभावे प्रबाधितो विपरीतं लक्षयति । तद्यथा उपकृतमपकृतम् । सुजनता दुर्जनता । सखे शत्रो । सुखितं दुःखितमिति । नचात्र वाच्यस्य कथञ्चित्प्रवेशः । त्वयैवमपकारेऽपि क्रियमाणे मयापि प्रियमेवोच्यत इति स्वसाधुत्वं व्यङ्ग्यम्, तवोपकाराऽपकारविवेको नास्तीति वा ।

## विवरणम्

**मन्थानमन्दरगिरिभ्रमणप्रयत्नाद् रत्नानि कानिचन केनचिदुद्धृतानि ।**
**नन्वस्मि साम्प्रतमपारपयोधिपूरगर्भावटस्थगित एष गणो मणीनाम् ॥ ७ ॥**

'तददोषौ शब्दार्थौ' इत्यादिकारिकायां प्राधान्येन निर्दिष्टयोः शब्दार्थयोर्निरूपणे वृत्ते, प्राप्तावसरतया विशेषणानि निरूपयितुमुचितानि। तत्र च दोषाभावनिरूपणं दोषनिरूपणेनैवार्थात् सिद्धं भवतीत्याशयेनाक्षिपति—यद्यपीत्यादि। तदर्थः प्रतिकूलत्वं वक्ष्यमाणेन प्रथमं काव्यभेदवचनेनान्वितं सदभिधानीयमित्यन्तवाक्यार्थो विशेषणतयाऽन्वेति। तेन दोषादीनामभिधातुमुचितं स्वरूपं प्रथमकाव्यभेदवचनपरिपन्थीति वाक्यार्थः।

शब्दार्थयोरित्यादि अवसरसङ्गतिलाभाय। निर्णये निरूपणे। कृत इत्यस्य वा सिद्ध इत्यर्थः। तेन पूर्वजिज्ञासानिवृत्तिर्लभ्यते। अभिधानीयम् अभिधातुमुचितमश्वयाभिधेयमिति यावत्। तेन स्वरूपंसत्प्रतिबन्धकजिज्ञासापगमोपलक्षितमवश्यवाच्यत्वमवसरशरीरमवगतं भवति। तथा च दोषादिष्ववसररूपा सङ्गतिर्विद्यते, न काव्यभेदेष्वित्यसङ्गतावेते कथं निरूप्यन्त इत्याक्षेपार्थः।

असङ्गतमपि सङ्गतार्थनिरूपणोपपादकं मध्येभिधीयत इत्याशयेन समाधत्ते—तथापीति। तदर्थोऽत्र पूर्ववाक्यार्थीभूतासङ्गत्यबाध्यत्वं वाक्यभेदवचनेऽन्वेति।

पूर्ववाक्यार्थासङ्गतानां निरूपणस्योपपादकतैव कथं काव्यभेदानामत आह—धर्मिणीति। रसस्वरूपध्वनिभेद इत्यर्थः। धर्मिणि काव्ये रसादिभेदैः सह प्रकर्षेण लक्षणादिना दर्शिते निरूपिते इति वाऽर्थः। धर्माणां दोषगुणालङ्काराणां हेयोपादेयता तत्प्रयोजकं लक्षणम्। तथा च रसमज्ञात्वा रसापकर्षकत्वं दोषस्य, रसे समवायवृत्या वर्तमानत्वादिगुणानामङ्गद्वारेण रसोत्कर्षकत्वमलङ्काराणां च 'लक्षणमज्ञेयमिति तदुपपादकतया रसो निरूपणीयस्तत्प्रसङ्गेनान्येषामपि काव्यभेदानां निरूपणम्, अतो नासङ्गतिरभिधाने बाधिका, सङ्गतिरिव सङ्गतिरूपोपादकत्वस्यापि पूर्वापरग्रन्थैकवाक्यताप्रयोजकत्वादिति भावः।

**श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥**

इत्युक्तदिशा शृङ्गारादिभेदमज्ञात्वा दोषादीनां हेयोपादेयभावो न ज्ञायत इत्यर्थ इत्यपि वदन्ति।

काव्यभेदानाहेति। (उल्लासत्रयेणोक्तकाव्यभेदानुयोगिध्वनिभेदानाहेत्यर्थः) 'स्थितिश्चित्रार्थशब्दयोः' इत्यन्तेन ग्रन्थेनेति शेषः।

काव्यं त्रिविधमिति प्रागेव विभक्तो ध्वनिरिदानीं विभज्यते—अविवक्षितेत्यादिसार्धकारिकया। तेन (ध्वनिर्द्विविधोऽविवक्षितवाच्यकध्वनिर्विवक्षितान्यपर-वाच्यकध्वनिश्चेति पर्यवस्यति। तत्राविवक्षितवाच्यक-) ध्वनिर्द्विविधः—अर्थान्तरसङ्क्रमितवाच्यकध्वनिरत्यन्ततिरस्कृतवाच्यकध्वनिश्चेति विभक्तविभाग-स्तत्रेत्यादिनोक्तः।

यद्यपि प्रथममभिधामूलको ध्वनिरेवाभिधातुमुचितः, अभिधायाः प्राथम्यात्। तथापि तिसृषु व्यञ्जनासु प्रथमलक्षणामूलैव यदृच्छया ग्रन्थकृता निरूपितेति 'पशूननक्ति', 'पशूनप्रोक्षेति' इत्यादावञ्जने यादृच्छिकः, प्राक्षणे तु प्रावृत्तिकः क्रम इत्यञ्जनक्रमेण प्रोक्षणमिति सिद्धान्तादिहापि प्रावृत्तिकक्रमेण प्रथमं लक्षणा-मूलध्वनिरभिहित इति ध्येयम्।

अविवक्षितं वाच्यं यत्र स इत्यविवक्षितवाच्य इति समासस्य योगार्थनिर्वचनम्। तावन्मात्रं च 'कलिङ्गो युध्यति' इत्यादावतिप्रसक्तमिति नेदं ध्वनिविभागवाक्यम्, न चाविवक्षितवाच्यपदस्य ध्वनिपदसामानाधिकरण्यं सम्भवति,विरुद्धविभक्त्यवरुद्धत्वादत आह—स इत्यादि। स अविवक्षितवाच्यः, ध्वनिरिति ध्वन्यभेदेन ज्ञेयः, प्रकृतवाक्येनार्थादिति शेषः। आर्थिकत्वमेव विवृणोति—तत्र ध्वनावित्यनुवादादिति। विभक्तविभागे तत्र ध्वनावित्यनूद्य वाच्याभेदो विधीयते। तत्र तच्छब्दो यच्छब्दोपात्तमेव परामृशति। यच्छब्दश्चाविवक्षितवाच्यपदसमानाधिकरण इत्यर्थाद् ध्वनितादात्म्यं प्रतीयते। आक्षिप्तध्वनितादात्म्योपरक्तेनाविवक्षितवाच्यत्वेनैव प्राथमिको विभागः। विभजनीयध्वनिलाभस्त्वपरस्तु स इत्युत्तरवाक्यात्, स इत्यनुषङ्गेणेतिनाऽर्थलभ्ये पृथक् प्रथमान्तध्वनिपदमपेक्ष्यते। अत एव—

**येभ्यो बिभ्यति दिङ्नागा येषां पानानि नन्दने।**
**येभ्यस्त्रस्यति शक्रोऽपि किं तैः कार्यं क्षपाचरैः॥**

इत्यत्र दिङ्नागभयापादानादौ क्षपाचरतादात्म्यं प्रतीयत इति सप्तमे वक्तव्यमिति भावः।

तत्र वाच्याविवक्षा प्रवृत्तिनिमित्तजात्यादिविशिष्टस्य धर्मिणः (प्रधानतया वाक्यार्थ) पदार्थतया वाक्यार्थबुद्ध्यविषयत्वम्, ध्वनित्वं तु गूढव्यङ्ग्यप्रधानककाव्यत्वम्, तदुभयमपि "श्वेतो धावति तन्वङ्गि! शीकरी शारदो घनः" इत्यादिविवक्षितान्यपरवाच्यकध्वनावतिव्याप्तमित्यतोऽविवक्षितवाच्यो ध्वनिरित्यनेनोपलक्षणीयं धर्मान्तरमाह—लक्षणामूलेति। अगूढमपि व्यङ्ग्यं 'जीवन्न सम्प्रति भवामि' इत्यादौ सम्पदपायादिस्वरूपं निर्वेदोपकारकतया प्रधानं सम्भवतीति तद्व्यावर्तनाय—गूढेत्युक्तम्। 'कचतस्त्रस्यति वदनम्' इत्यादौ कचवदनपदयोर्गौणलक्षणामूलकव्यङ्ग्येन राहुकचयोश्चन्द्रवदनयोश्च प्रतीपरूपकेण वाच्यस्त्रास उपक्रियत इति तद्वारणाय प्रधान्यं प्रवेशितम्। तच्च 'वाच्यार्थानुपकारकत्वम्। सतीत्यनेन पारमार्थिकलक्षणस्वरूपं योगार्थवैलक्षण्यं द्योत्यते।

अनुपयुज्यमानतयेति। अयं भावः—शक्तिजन्यवाक्यार्थबुद्ध्यभाव एव लक्षणाजन्यशाब्दबोधे कार्यसहभावेन जनकः। तत्रोपादानलक्षणायां शक्त्या वाक्यार्थबुद्धेरभावसम्पादनायानुपयुज्यमानताऽपेक्ष्यते। सा च क्वचिद् वाक्यार्थस्य मानान्तरात् सिद्धिः, तत्सामग्री वा। विद्यते च सा प्रकृते, चक्षुरुपस्थिते चैत्रे श्रोत्रोपस्थितस्य वचनस्योपनयबलादेव 'अस्मि वच्मि' इति वाक्यार्थसिद्धेः। अत एवापुष्टार्थतादोषः। क्वचित्तु निराकाङ्क्षता। सा च 'होन्ति कमलाँइ कमलाँइ' इत्यादौ। तत्र हि कमलपदार्थयोस्तादात्म्यान्वये निराकाङ्क्षत्वम्। क्वचित्तु लक्ष्यार्थतात्पर्यग्रहः, शक्यार्थमात्रे तात्पर्यव्यतिरेकग्रहो वा। स च 'कुन्ताः प्रविशन्ति' इत्यादौ। तत्र वाच्यमर्थान्तरे परिणतं विशेषणभूतं विशेष्यभूतं वा लक्षणयोपादीयते। तत्र 'कुन्ताः' इत्यादौ विशेषणभूतम्, 'काकेभ्यः' इत्यादौ विशेष्यभूतं वाच्यं प्रवृत्तिनिमित्तविशिष्टधर्मिस्वरूपमिति दिक्।

त्वामस्मीति। अस्मीत्यहमर्थको निपातः। अत्र वचनादिति वचनस्यादिभूतं वचनप्रभृतिकं चेत्यर्थः। तेन त्वच्छब्दस्य शिष्यो लक्ष्योऽनुकम्प्यत्वं द्योत्यम्। अस्मिशब्दस्य गुरुर्लक्ष्यो व्यङ्ग्यमनुग्राहकत्वम्। वचेरुपदेशो लक्ष्योऽलङ्घनीयत्वं द्योत्यम्। विद्वत्पदस्याप्तो लक्ष्योऽविप्रलम्भकत्वं द्योत्यमित्यादि प्रणिधेयम्।

क्वचिदिति। लक्षणलक्षणायामनुपपत्तिप्रयोज्या मुख्यार्थाप्रतिपत्तिर्लाक्षणिकार्थबोधे कारणम्। अतोऽत्यन्ततिरस्कृतं शाब्दबुद्ध्यविषय एवं वाच्यं प्रवृत्तिनिमित्तोपरक्तो धर्मीत्यर्थः।

उपकृतमित्यादि। उपकरोतेरपकारे, सुजनपदस्य दुर्जने, सखिपदस्य शत्रौ, सुखपदस्य दुःखे लक्षणा। सा च मुख्यार्थेन सह विरोधस्वरूपा। मुख्यार्थबाधे तु प्रमाणान्तरावगता वचनोद्देश्यस्यापकारिता मूलम्। यदाह— एतच्चेति। अत्रोपकरोतिनाऽपकारे लक्ष्ये, उपकारधर्मः परप्रीतिजनकत्वं व्यज्यते। एवं च सुजनपदस्य दुर्जने लक्षणया सुजनधर्मः प्रसादपात्रत्वम्, सखिपदस्य शत्रौ लक्ष्ये सखिसाधर्म्यमद्वेषविषयत्वादि वक्तरि व्यज्यते। तेन वाक्यवाच्यवैचित्र्यसहचारेण वाक्यार्थेन वक्तुरुदारता व्यज्यते। सा च "दानं सप्रियभाषणमौदार्यं शत्रुमित्रयोः समता" इत्यादिना लक्षिताऽन्यत्र।

यत्तु प्रदीपे—

**आधूतसस्वेदकरोत्पलायाः स्मितावगूढप्रतिकूलवाचः।**
**प्रियो विहायाधरमायताक्ष्याः पपौ चिराय प्रतिषेधमेव॥**

इत्युदाहृतम्, तत्र पिबतेस्तर्पकत्वलक्षणात्पानसाधर्म्याच्छ्रवणं लक्ष्यम्। तत्र चाभिधामूलव्यञ्जनयोपस्थापितं पानं तादात्म्येनाध्यवसीयते। अत एव विहायेत्यनेन पिबतेरर्थो व्यवच्छेद्यतया परामर्ष्टुं शक्यते। विजहातिर्हि शक्त्या विभागानुकूलं कर्म, भक्त्या तु समभिव्याहृतक्रियाव्यवच्छेदं प्रत्यययति। तथा चाधरमपीत्वा प्रतिषेधं पपावित्यन्वयबोधः। नह्यत्राभिधायको जहातिः। तेन च वाच्यवैचित्र्येणाधरकर्मकं पानं परिहृत्य निषेधवचनं शृण्वतः पुंसोऽधरपानोत्कण्ठापेक्षया प्रकृष्टा श्रवणोत्कण्ठाऽभिव्यज्यते। तदंश एव ध्वनित्वम्, न त्वभिधामूलव्यङ्ग्यांशे, तस्य गुणीभावात्। तदाह स एव—'उत्कण्ठाऽतिशयो व्यङ्ग्यः' इति

## (सू. ४०) विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।

अन्यपरं व्यङ्ग्यनिष्ठम् ॥ एष च

---

### सङ्केतः

विवक्षितमिति । अत्र अन्यपरत्वेनैव विवक्षणात्—विवक्षितं चेत् कथं अन्यपरम्? इति विरोधो नाशङ्क्यः । अपरस्तु सः । विवक्षितान्यपरवाच्यः ध्वनिः इत्यर्थः । न लक्ष्यते इति । शतपत्रपत्रसूचीभेदवत् ।

### काव्यादर्शः

अविवक्षितवाच्यं लक्षणामूले द्विभेदमुक्तवाभिधामूलं विवक्षितान्यपरवाच्यं ध्वनिभेदं द्विप्रकारमाह—विवक्षितं चेति । वाच्यमिति अभिधेयम् । स इति । विवक्षितान्यपरवाच्यो ध्वनिः । एष चेति । ध्वनिरलक्ष्यक्रमलक्ष्यक्रमव्यङ्ग्यतया द्विधेत्याह-कोऽपीति । न लक्षयितुं शक्यः क्रमो यस्य तादृशं व्यङ्ग्यं यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः । सोऽलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः । अलक्ष्यक्रमत्वाच्च लक्षणासमुन्मेषमात्रमप्यत्र नास्ति ।

### विवेकः

अथाभिधामूलमाह—विवक्षितञ्चेति । स इति ध्वनिरनुषज्यते विवक्षितत्वेन बाधितत्वात् । अन्यपरं व्यङ्ग्यतात्पर्येण विवक्षितं न तु प्रत्यावृत्य गुणीभूतव्यङ्ग्यन्यायेन वाच्योन्मुखमित्यर्थः ।

### दीपिका

विवक्षितमिति—अबाधितत्वेनेत्यर्थः । अन्यपरतयैव विवक्षितं, न तु गुणीभूतव्यङ्ग्यमाक्षिप्य विश्रान्तमित्यर्थः । अन्यपरमित्यस्य व्याख्यानं व्यङ्ग्यनिष्ठं सर्वात्मना तत्प्रवणमित्यर्थः ।

### दर्पणः

अभिधामूलमाह विवक्षितमित्यादि । अभिधामूलत्वादेवात्र वाच्यं विवक्षितमबाधितम्, अपरो विवक्षितवाच्यादन्यो व्यङ्ग्यनिष्ठः । व्यङ्ग्ये निष्ठा तात्पर्यं यस्य । एतेन गुणीभूतव्यङ्ग्यव्यवच्छेदः । एष विवक्षितान्यपरावाच्यो ध्वनिः ।

### साहित्यचूडामणिः

अभिधामूलान् भेदान् प्रदर्शयितुमाह—विवक्षितं चेति । चकारोऽप्यर्थे । विवक्षितत्वे सत्यन्यपरं व्यङ्ग्यनिष्ठं वाच्यं यत्र । व्यङ्ग्यतात्पर्यादेव वाच्यविवक्षा राजतात्पर्येण राजपुरुषसेवावत् । ननु 'विवक्षितं चान्यपरं चेति विरुद्धमिति' चेन्न । अन्यपरत्वेन विवक्षणात् को विरोधः । एतेन

'परस्परविरुद्धत्वाद् विवक्षातत्परत्वयोः' [व्य.वि.१] इति महिमोक्तमवद्यमपोद्यते ।

## सम्प्रदायप्रकाशिनी

इत्थं लक्षणामूलमविवक्षितवाच्याख्यं ध्वनिविशेषम् अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विधोपपाद्याभिधामूलस्य विवेचनं प्रस्तौति—विवक्षितं चान्येति । यत्राभिधामूले ध्वनौ वाच्यं बाधाभावाद् विवक्षितं व्यङ्ग्यार्थं प्रत्युपसर्जनं च, स त्वपरः । सोऽयमविवक्षितवाच्यादन्यः विवक्षितान्यपरवाच्य इति यावत् ।

## मधुमती

सम्प्रति विवक्षितवाच्यं लक्षयितुमाह—विवक्षितमिति । अत्रापि ध्वनिरिति शेषः । तेन सः अपरः ध्वनिरित्यर्थः । विवक्षा च बाधाभावः, न तु वक्तुमिच्छा, अविवक्षितवाच्येऽपि गतत्वात् । पदात् वाच्यं, वाच्यात् लक्ष्यमुपतिष्ठते इति तत्रापि विवक्षासत्त्वात् । एवं च प्रकृतवाच्यबाधाबाधौ विवक्षाऽविवक्षे इति द्रष्टव्यम् । अन्यपरं—व्यङ्ग्योपसर्जनम् । न तु अन्यतात्पर्यमित्यर्थः । शब्दशक्तिमूलधवनौ विवक्षितवाच्यविशेषे अव्याप्तेः । न हि तत्र अपरार्थेऽपि तात्पर्यम् । तथासति अभिधयैव उभयोपस्थितौ व्यञ्जनैव न स्यात् । अत एव वृत्तौ अन्यनिष्ठं इत्युक्तम् ।

## विस्तारिका

विवक्षित वाच्यध्वनिमाह—विवक्षितमित्यादि । वाच्यतावच्छेदकेन विवक्षितम् । तेनार्थान्तरसङ्क्रमितवाच्याद् व्यवच्छेदः । तत्र रूपान्तरेणैव वाच्यविवक्षणात् । वाच्यविवक्षायां न ध्वनित्वमित्याह-अन्यपरमिति । तद्विवृणोति—व्यङ्ग्यनिष्ठमिति । तदाक्षेपकत्वेन तत्र विश्रान्तमित्यर्थः ।

## सारबोधिनी

अभिधामूलध्वनिमाह विवक्षितमिति । अत्र वाच्यतावच्छेदकप्रकारेण विवक्षितं वाच्यमित्यर्थो विवक्षणीयस्तेनार्थान्तरसङ्क्रमितवाच्याद्व्यवच्छेदः । तत्र रूपान्तरेणैव वाच्यविवक्षणात् वाच्यविवक्षायां न ध्वनित्वमित्याह अन्यपरमिति । एतत् विवृणोति व्यङ्ग्यनिष्ठमिति । तदाक्षेपकत्वेन तत्र विश्रान्तमित्यर्थः ।

## काव्यप्रदीपः

द्वितीयं ध्वनिभेदं कारिकार्धाभ्यामुद्दिश्य विभजते—

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।**

ध्वनिरिति प्रकरणाल्लभ्यते । अन्यपरं व्यङ्ग्योपसर्जनीभूतम् । अयं भेदोऽभिधामूलगूढव्यङ्ग्यप्राधान्ये सति द्रष्टव्यः । एष तु—

## काव्यप्रकाशखण्डनम्

**अभिधामूलमाह–**

**विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः । (मू. का. २५, पू.)**

अन्यपरं व्यङ्ग्यनिष्ठम् । तदाक्षेपकत्वेन तत्र विश्रान्तमिति यावत् । एतस्य विवक्षितान्यपरवाच्यस्य द्वौ भेदौ—एकोऽसंलक्ष्यक्रमव्यङ्ग्यो द्वितीयः संलक्ष्यक्रमव्यङ्ग्यः । अत्र संलक्ष्येति न खलु विभावानुभावसंचारिण एव रसः, अपि तु रसस्तैः प्रत्याय्यत इति विभावादेर्व्यञ्जकस्य रसस्य व्यङ्ग्यस्यास्ति पौर्वापर्यक्रमः स न लक्ष्यत इत्यर्थः । आस्वादेन झटिति चित्ताकर्षणात् कालसौक्ष्म्याच्च । तत्र च

**आदर्शः**

बहुप्रभेदं विवक्षितान्यपरवाच्यध्वनिमाह—विवक्षितश्चेति । यत्र ध्वनौ । व्यङ्ग्यनिष्ठमिति व्यङ्ग्ये निष्ठा बुबोधयिषापर्य्याप्तिर्यस्येति विग्रहः ।

**सुधासागरः**

द्वितीयं ध्वनिभेदं कारिकार्द्धाभ्यामुद्दिश्य विभजने—'विवक्षितमि'ति ।

ध्वनिरिति प्रकरणाल्लभ्यते । अन्यपरं व्यङ्ग्योपसर्जनीभूतम् । तदेतदाह वृत्तिकारः—अन्यपरं व्यङ्ग्यनिष्ठम् इति । अयं भेदोऽभिधामूलगूढव्यङ्ग्यप्राधान्ये सति द्रष्टव्यः । अथैनं—एष च इति विभजते ।

**विवरणम्**

द्वितीयं ध्वनिप्रभेदमुद्दिश्य विभजते—'विवक्षितमिति । स ध्वनिरपर इति प्राथमिको विभागः । अपरोऽविवक्षितवाच्यकध्वनिभिन्नः । अपरः स इत्यनूद्य विवक्षितमित्यादि विधायकं वाक्यान्तरम् तत्र स इत्यस्य त्रेधाऽनुषज्य प्रवेशात्, लक्ष्ये तावदेकधा, लक्षणे द्वेधेति । तेनापरो' विवक्षितमन्यपरं वाच्यं यत्र स इति वाक्यशरीरम् । तुकारः पूर्वोक्तलक्षणव्यवच्छेदाय । तया चाविवक्षितवाच्यकध्वनिभिन्नध्वनिर्लक्ष्यः । तस्य विवक्षितमन्यपरं वाच्यं यत्र तथाविधो ध्वनिरिति लक्षणं पर्यवस्यति । तत्रापि प्रहेलिकावारणाय ध्वनिरिति । विवक्षितं प्रवृत्तिनिमित्तेन धर्मेण शाब्दबोधविषयः ।

ननु गुणीभूतेऽपि व्यङ्ग्ये तात्पर्यमस्तीति 'ग्रामतरुणम्' इत्यादावतिव्याप्तिः, अतो व्यङ्ग्यनिष्ठमिति व्यङ्ग्योपसर्जनमित्यर्थः । अभिधामूलं व्यङ्ग्यं तात्पर्यं विनापि प्रतीयते । अन्यथाऽभिधयैव तद्भानापत्तेः । 'अतस्तत्रातिव्याप्तिवारणाय व्यङ्ग्यनिष्ठमिति व्याख्यातमित्यपि वदन्ति ।

कोऽपीत्यादिको विभागो न ध्वनिसामान्यस्य, न चाविवक्षितवाच्यकध्वनेरित्यावेदयितुमव्यवहितोक्तमेतदा परामृश्य पूरयति—एष चेति । चस्त्वर्थः, अविवक्षितवाच्यकस्य ध्वनेरलक्ष्यक्रमरूपो भेदो नास्तीति ध्वनयति ।

यत्तु—'एषोऽपीत्यर्थः, तेनाविवक्षितवाच्यकस्य लक्षणामूलमपि व्यङ्ग्यमलक्ष्यक्रमम्' इति, तच्चिन्त्यम्, एवमेकपञ्चाशदधिकभेदसम्भवेऽग्रिमग्रन्थविरोधात्, लक्षणामूलव्यञ्जनाया व्यभिचारिविशिष्टवाक्यार्थगोचरं, बोधमादायैव विश्रामात्, तन्मूलकरसादिध्वनौ तस्य वाक्यार्थस्यैव व्यञ्जकत्वोपगमात् ।

## (सू. ४१) कोऽप्यलक्षक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २५ ॥

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसः । अपि तु रसस्तैः, इत्यस्ति क्रमः । स तु लाघवान्न लक्ष्यते ॥

---

### सङ्केतः

रसादिः अर्थः वाच्येन विभावाद्यर्थेन सममेव प्रतीयते इत्यर्थः । अलक्ष्यक्रमत्वप्रतिपादनाच्च न लक्षणा-गन्धोऽप्यत्रास्ति ।

### काव्यादर्शः

ननु, क्रमः कश्चिदस्त्येव, यतो न हि विभावानुभावव्यभिचारिणः स्वरूपेण रसाः, किं तु विभावादिप्रती-त्यविनाभाविनी रसादीनां प्रतीतिरिति, तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात् क्रमोऽवश्यंभावीत्याह—न खल्विति । तत्कथमलक्ष्यक्रमत्वमित्याह—स तु न लक्ष्यत इति । सन्नपि क्रम उत्पलदलसूचीवेधन्यायेन लाघवान्न प्रकाशते । एतदुक्तं भवति । संघटनाव्यङ्ग्य त्वाद् रसादीनां अनुपयुक्तेऽप्यर्थविज्ञाने उचितसंघटनाश्रवणसमये एव रसास्वादः ।

### विवेकः

एवञ्चेति (एष चेति) अभिधापृष्ठध्वननोद्दङ्केन क्रमव्यवस्थायां यद्यपि लक्षणामूलेऽपि क्रमोऽस्ति, तथापि तस्य लक्ष्यैकरूपत्वान्न प्रकारचिन्ता । अलक्ष्यक्रमं व्यङ्ग्यं यत्र समुदाये स तथा—एवं लक्ष्यक्रमोऽपि । बहुप्रपञ्चतया चालक्ष्यक्रमस्य प्रागुद्देशः । ननु वाक्यश्रवणानन्तरं विभावानुभावव्यभिचारिण एव प्रतीयन्ते न त्वन्यत, ते चाभिधेया इति क्व व्यङ्ग्यं क्व चाक्रम इत्यत आह—न खल्विति । यस्माद्विभावाद्यन्यतमस्तत्समुदायो वा रस इति ये मन्यन्ते ते भ्रान्ताः, रसादीनां विभावादिरूपवाच्यसामर्थ्याक्षिप्तत्वात् । तदेतदाह—अपि त्विति । एवञ्च विभावादिप्रतीत्यु-त्तरकालं रसादिप्रतीतिरिति विभावादिप्रतीतिः (तेः) कारणत्वेन रसादिप्रतीतेश्च कार्यत्वेन व्यवस्थापनात् क्रमोऽत्रावश्यम्भावीत्याह—इत्यस्ति क्रम इति । न चानुपलम्भमात्रेण व्यतिरिक्तावधारणं शक्यमित्यत आह—स त्विति । तीव्रसंवेगितया विभावादिप्रतीतेर्झटितिरसप्रकाशाद्विद्यमानोऽपि क्रमो न गृह्यते पद्मपत्रव्यतिभेदवत् पर-चित्तवृत्त्यनुमानवत्त्वात् (मानवत् ?) ।

### दीपिका

अलक्ष्यः क्रमः प्रतीतिपौर्वापर्य्य यत्र, तदलक्ष्यक्रमं तथाभूतं व्यङ्ग्यं यत्रेति विग्रहः । एवमुत्तरत्र ।

यद्यपि लक्षणामूलेऽप्यस्ति लक्ष्यक्रमव्यङ्ग्यता तथापि तस्य तद्व्यभिचार एवेति नोपन्यासः, तत्र च लक्ष्यपदार्थपर्यालोचनयैव लक्षणं लभ्यत इति न पृथङ् निर्देशः । न खल्विति-तन्मात्रस्य रसत्त्वे सहृदयासहृदयव्य-वस्थाविरहप्रसङ्गादितिभावः । तैराविष्क्रियत इति शेषः । ते च प्रतीयमाना एव रसमाविर्भावयन्ति, अन्यथाऽतिप्रस-

ङ्गादित्याह—इतीति—अतो हेतोरस्ति क्रमस्तत्प्रतीत्योः, स तु न लक्ष्यते। वस्तुसामान्येन (सामग्र्येण) प्रतीत्यन्तरालकालस्याम्बुजपत्रसहस्रव्यतिभेदवदति सूक्ष्मत्वादिति शेषः। अत्र च रसवति काव्ये वस्त्वलङ्कारव्यङ्ग्ययोरपि न प्रतीतिविलम्बो झटित्यास्वादपर्यन्तगमनात्। वस्तुतस्तु नीरसे प्रतीतिविलम्बात्तत्साजात्येन लक्ष्यक्रमव्यवहार इति बोद्धव्यम्।

## दर्पणः

कोऽपीति। असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविध इत्यर्थः। तैरित्यनन्तरं [योज्यः] व्यङ्क्त इति शेषः। इति हेतोः स क्रमः न लक्ष्यते। उत्पलशतपत्र व्यतिभेदवल्लाघवादिति शेषः। अत्र रसवति काव्ये झटित्यास्वादपर्यन्तगमनात् वस्त्वलङ्काररूपव्यङ्ग्ययोरपि प्रतीतिरत्र विलम्बिता।

## साहित्यचूडामणिः

एवं चेति। अयमलक्ष्यक्रमो लक्ष्यक्रमश्चेति प्रथमं द्विविधः।

यदाह—

**असंलक्ष्यक्रमद्योत्यः क्रमेण द्योतितः परः।**
**विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः॥** [ध्व. २.२] इति।

अत्र च पूरणाय क्रमपदव्युत्क्रमः।

ननु कस्मादलक्ष्यक्रम उच्यते न पुनरविद्यमानक्रम इत्यत्राह—अलक्ष्येति। न खलु कश्चिद् विपश्चिन्निश्चिनोति यद् विभावादीनां रसस्य च तादात्म्यं सम्बन्ध इति, किं तर्हि व्यङ्ग्यव्यञ्जकभाव इत्यस्ति क्रमः। रसस्तैरिति साधारण्येनोक्तिः उत्पत्त्यभिव्यक्त्यादिपक्षनिष्कर्षाभावात्।

स त्विति। उत्पलदलदशशतसूचीवेधवत्। यदाह—

**रसभावतदाभासभावशान्त्यादिक्रमः।**
**ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥** [ध्व. २.३] इति।

यः खल्वत्यन्तसहृदयो न भवति तस्यैव स्फुटसंवेद्यः क्रमः। यथा अत्यन्तशब्दवृत्तज्ञो यो न भवति तस्य पदार्थवाक्यार्थक्रमः। काष्ठाप्राप्तसहृदयभावस्य तु वाक्यवृत्तकुशलस्येव क्रमः संभवन्नपि चिरपरिचितानुमातुः स्मृतिक्रमवदसंवेद्यः। अत एव घटप्रदीपदृष्टान्तेन व्यङ्ग्यप्रतीतिकाले वाच्यप्रतीतिर्न विघटते केवलं चमत्कारावस्थायां व्यङ्ग्यप्राधान्यानुरोधादनुदिततयानुभूयते। उपकारिणो हि पूर्वभाविता, पश्चाद्भाविता चोपकार्यस्य। 'विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।' इति नीत्या पूर्वं वाचकस्य शब्दस्य प्रतीतिः, ततो वाच्यस्येत्युपायकक्ष्यायामौचित्यम्।

## सम्प्रदायप्रकाशिनी

अस्य द्वैविध्यं दर्शयति—कोऽप्यलक्ष्येति । अत्र व्यङ्ग्यवैचित्र्याद् भेदोदयः, **लक्षणामूले तु व्यञ्जकवैचित्र्यात्** । विवक्षितान्यपरवाच्ये ध्वनौ रसादिर्यदा व्यज्यते, तदा क्रमो न लक्ष्यते । यदा **वस्त्वलङ्कारौ, तदा लक्ष्यते** । अतोऽयमसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विरूपो बोद्धव्य इति यावत् ।

तत्र रसध्वनेरसंलक्ष्यक्रमव्यङ्ग्यत्वं दर्शयितुं प्रतीकमुपादत्ते—अलक्ष्येतीति । **न खलु विभावेति** । **विभा**-वानुभावव्यभिचारिणो विवेचयिष्यन्ते । विभावादयोऽभिव्यञ्जकाः । रसास्तु तदभिव्यङ्ग्यस्ततोऽन्य एव । **तथा** हि—

**शिथिलशिथिलं न्यस्य स्वैरं धनुश्शिखरे शिरो**
**नयनसलिलैः कुर्वन् मौर्वीलतामपरामिव ।**
**अहह विकलः श्रुत्वा श्रुत्वा घनस्तनितध्वनिं**
**किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति ॥**

इत्यादौ य इह सीताघनस्तनितादय आलम्बनोद्दीपनरूपा विभावाः, ये च शिथिलशिरोन्यासनयनसलिलवैकल्यनिरुद्देशध्यानगतिस्थितिवैह्वल्यादयोऽनुभावाः, ये च तदभिव्यञ्जिताश्चिन्तावेगदैन्यादयो व्यभिचारिणः, न खलु त एव रसः, अपि तु तदभिव्यङ्ग्यस्ततोऽन्य एव सर्वस्य सहृदयस्य स्वसंवादसाक्षिकः प्रतीतिविशेषः । तदेतदभिप्रेत्याह—इत्यस्ति क्रम इति । इतिर्हेतौ । व्यङ्ग्यव्यञ्जकभावस्य पौर्वापर्येणावस्थाननियमात् क्रमोऽस्त्येवेति भावः । ननु विभावाद्याकाररूषितामेव रसप्रतीति पानकरसन्यायेनास्वादयामः, न तु तत्र क्रममनुपश्याम इत्यत आह—स तु न लक्ष्यत इति । उक्तनयेन तावदस्त्येव क्रमः । व्युत्पन्नतमायाः प्रतिपत्तृप्रतीतेस्तीव्रसंवेगितया पद्मपत्रशतव्यतिभेदनयेन दुर्लक्ष इत्यर्थः । यदुक्तं ध्वनिकृता—

**तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।**
**बुद्धौ तत्त्वावभासिन्यां झटित्येवावभासते ॥**

इति ।

## मधुमती

एतद्विभजे—कोऽपीति । अत्र रसस्य प्राधान्यं आविष्कर्तुं प्रथमं असंलक्ष्यक्रमनिरूपणम् ।

यत्तु—असंलक्ष्यक्रमस्य लक्ष्यक्रमाभावरूपतया तन्निरूपणाधीननिरूपणत्वेन तस्य प्राङ् निर्देशः न युक्तः इति—तत् तुच्छम् । असंलक्ष्यक्रमत्वं हि न लक्ष्यक्रमत्वाभावः, अविवक्षितवाच्येऽपि गतत्वात् । किन्तु नीलपीतयोरिव परस्परविरहव्याप्यत्वम् । अतो नात्र प्रतियोग्यनुयोगिभावः । अत एव 'अनुस्वानाभसंलक्ष्यक्रमेत्यादि' वक्ष्यति । यथा घण्टाभिघातादनन्तरं अविच्छेदेनैव क्रमवन्तः ध्वनयः श्रूयन्ते, एवं शब्दोच्चारणानन्तरमपि अविच्छेदेनैव क्रमवन्तः वाच्यव्यङ्ग्यदयः प्रतीयन्ते । अत एव अवविक्षितवाच्ये नैतद्भेदद्वयम्, बाधितवाच्यविच्छेदात् इति द्रष्टव्यम् ।

ननु शब्दं श्रुत्वा अनन्तरं विभावादय एव प्रतीयन्ते, न त्वन्यत्। तथा च 'लक्ष्यक्रमः' इत्येव वक्तुमुचितम्, न तु 'अलक्ष्यक्रमः इति, अत आह—न खल्विति। न हि विभावादय एव प्रतीयन्ते, किन्तु तदुपकृतं अन्यदपि इति, लक्ष्यक्रमत्वं नोपपद्यत इति अलक्ष्यक्रमत्वमुक्तमिति भावः। उपकारश्च—उत्पत्तिः, प्रतीतिः, भुक्तिः, अभिव्यक्तिर्वा इत्यन्यदेतत्। अत एव अपि तु रसस्तैः इति साधारण्येनैवोक्तम्।

## विस्तारिका

तद्भेदाभिधानाय तमनुकर्षति—एष चेति। लक्षणास्थले तु वाच्यापेक्षया व्यङ्ग्यक्रमलक्षणनियमेन भेदान्तराभावन्नात्र तदनुवादः। कोऽप्येकः। अलक्ष्योऽज्ञेयः क्रमो यस्य, एवं व्यङ्ग्यो यत्र।

नन्वक्रम इत्युच्यतामित्यत आह—न खल्विति, एवेति। तन्मात्रस्य रसत्वे सहृदयासहृदयत्वव्यवस्था न स्यात्। अपि त्विति। अत्र हि वाक्यार्थीभूय स्फुरद्भिर्विभावादिभिरभिव्यक्तानां ज्ञानसुखस्वरूपाणां रत्यादिस्थायिभावानां विषयतां प्राप्ता विभावादयो रत्यादयो मिलिताः पानकरस इव समूहालम्बनात्मको रस इत्याह—तैरित्यादि। तैः सहेत्येर्थः। तेन प्रत्येकविभावादिज्ञानानन्तरमेव समूहालम्बनमित्याह—इतीति। कालस्य सूक्ष्मत्वादलक्षत्वम्, आस्वादेन झटिति चित्ताकर्षणादयोग्यस्य सूक्ष्मकालस्यानुपलब्धे नाभावसाधकत्वमित्यलक्ष्यक्रम इत्युक्तम्—न अक्रम इति।

केचित्तु—अभिव्यज्यत इत्यध्याहारेण तैरभिव्यज्यत इत्यन्वयमाहुः। किञ्च, वस्त्वलङ्कारयोरनुमानादिनावगमे क्रमलक्षणसम्भव इति योग्यता लक्ष्यक्रमत्वाभिधानम्। रसादौ तु पुनरनुमानासम्भवेन तद्योग्यतेत्यलक्ष्यक्रमत्वमिति। केचित्तु रसादौ वर्णादित आरभ्य विभावादिपर्यन्तं रसानुवेधनियमान्न क्रमलक्षणम्। वस्त्वलङ्कारयोस्तु रसव्यञ्जकापेक्षया व्यञ्जकस्यात्यन्तविजातीयत्वेन क्रमलक्षणमित्याहुः। साम्प्रदायिकास्तु रसवति काव्ये वस्त्वलङ्कारयोरपि क्रमो न लक्ष्यत एव, नीरसे तु प्रहेलिकादौ क्रमलक्षणात् तत्साजात्येन तथा व्यवहारः इत्याहुः। लक्षणामूले तु लक्ष्यफलप्रतीत्योव्यञ्जकव्यङ्ग्ययोः क्रमाव्यभिचारेण न तन्मूलकभेदगणना।

यत्तु मिश्रेणोक्तम्—तादात्म्यस्याभानमात्रस्य प्ररोहाभावात् केन सह क्रमविचारः स्यादिति, तदयुक्तम्; आभानमात्रत्वेऽपि क्रमस्य दुर्निवारत्वात्। लक्ष्यप्रतीत्यपेक्षया सुतरां तत्सम्भवाच्च।

ननु विषयालोकयोरिव सहप्रतीतावेव व्यङ्ग्यव्यञ्जकता, तत् कथं क्रम इति चेन्न; विभावादिज्ञानस्यैव व्यञ्जकत्वात्। सति विभावादौ तद्ज्ञाने रसानुद्बोधात्। एवं वस्त्वलङ्कारयोरपि प्रत्यक्षसहकारिण आलोकस्य स्वरूपसत एव हेतुत्वमिति न दोषः। अत एव 'स्वरूपं प्रकाशयन्नेव परावभासमानो व्यञ्जकः' इति ध्वनिकारोक्तमपि सङ्गच्छते।

## सारबोधिनी

तद्भेदानाह एष चेति। अलक्ष्यक्रमस्य प्राधान्यात् प्राङ्निर्देश इति बोध्यम्। कोऽपीति एक इत्यर्थः।

अलक्ष्योऽज्ञेयः क्रमो यस्य एवंभूतो व्यङ्ग्यो यत्र। नन्वक्रम इत्येवोच्यताम्, नत्वलक्ष्यक्रम इत्यत आह न खल्विति रसस्तैरिति। अभिव्यज्यत इत्यध्याहार्यम्। तथा च तैरित्यनेन हेतुत्वकथनात् व्यङ्ग्यव्यञ्जकयोः

पौर्वापर्यक्रमोऽस्ति । स तु न लक्ष्यते, कालसौक्ष्म्यात् । आस्वादेन झटिति चित्ताकर्षणादयोग्यस्य सूक्ष्मकालस्यानुपलब्धेर्नाभावसाधकत्वम् इत्यलक्ष्यक्रम इत्युक्तम् नाक्रम इति ।

### काव्यप्रदीपः

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २ ॥**

सूचीकटाहन्यायमाश्रित्यालक्ष्यक्रमव्यङ्ग्यस्य पूर्वमुद्देशः । तस्यैकत्वात् । द्वितीयस्य तु पञ्चदशभेदत्वात् । विभावादय एव न रसः, किन्तु रसस्तैर्निष्पद्यत इत्यस्ति विभावादिरसप्रतीत्योः क्रमः । स तु न लक्ष्यत इति क्रमस्यालक्ष्यत्वलक्ष्यत्वकृतं भेदद्वयमित्यर्थः ।

### आदर्शः

तस्य विभागं चिकीर्षुरादौ द्वैविध्यमाह—कोऽपीति । एष च इति तु तदुत्थापिका वृत्तिः । वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थबोध इति क्रमोऽलक्ष्योऽपरिचेयो यस्य तादृशं व्यङ्ग्यं यस्येति बहुव्रीहिद्वयेन कोऽपि ध्वनिस्तादृश इत्यर्थः । परः तदन्यस्तु लक्षणीयव्यङ्ग्यबोधक्रम इत्यर्थः । तत्राद्यो रसभावादिध्वनिर्वक्ष्यते, रसादेरत्यन्ताकर्षकत्वेन शीघ्रबोधाद् वाच्यबोधसमकालमेव व्यङ्ग्यबोध इति भ्रमोदयात् । ननु रत्यादिस्थायिभावानां कारणानि विभावाः कार्य्यविशेषाश्च सहकारिणो वक्ष्यन्ते, काव्ये च त एव वाच्या अपि व्यङ्ग्यरत्यादिबोधे भासमानतया प्रपाणकरसन्यायेन चर्व्यमाणा रसतामापद्यन्ते इति वक्ष्यते। तथाच ये विभावादयो वाच्यास्त एव व्यङ्ग्यरसशरीरमिति वाच्यविभावादि-व्यङ्ग्यरसयोर्भेदाभावाद् वाच्यव्यङ्ग्यबोधक्रम एव नास्तीति कुतोऽलक्ष्यत्वमिति भ्रान्तशङ्कां निरस्यन्नाह—न खल्विति । एवकारात् तन्मात्रस्य रसत्वव्यवच्छेदः, किन्तु तन्मात्रस्य वाच्यत्वं तद्विशिष्टस्य रत्यादेर्व्यङ्ग्यस्य रसत्वमित्याह—अपि तु रसस्तैरिति, शाब्दबोधविषयैस्तै रसो निष्पाद्यते ज्ञायते चेत्यर्थः । तथाच वाच्यविभावादेर्भेदो बोधक्रमश्चास्तीत्याह—इत्यस्ति क्रम इति । तदुक्तं दर्पणे—

**प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ।**
**ततः सम्बलितः सर्व्वो विभावादिः सचेतसाम् ।**
**प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥**

इति लाघवादिति शीघ्रोपस्थितिकत्वादित्यर्थः ।

### सुधासागरः

कोऽपीत्येक इत्यर्थः । 'अत्र सूचीकटाहन्यायमाश्रित्य लक्ष्यक्रमव्यङ्ग्यस्य पूर्वमुद्देशः तस्यैकत्वात् । द्वितीयस्य तु पञ्चदशभेदत्वात्' इति प्रदीपकाराः प्राहुः । तन्नाऽतिरमणीयम् । उभयोस्तुल्यकक्षतो खल्वयं न्यायः प्रवर्त्तते । अत्र तु भावाऽभावयोः पौर्वापर्यनियमाल्लक्ष्यक्रमस्यैव प्राङ्निरूपणं प्राप्नोतीति ।

वयन्तु प्रतीमः—सर्वमेव व्यङ्ग्यं यद्यपि सुखदं तथापि रसस्य निरतिशयानन्दत्वेन प्राधान्यमाविष्कर्त्तुमलक्ष्यक्रमस्य प्रागुपादानमिति । अलक्ष्योऽज्ञेयः क्रमो यस्य तथाभूतं व्यङ्ग्यं यत्र स तथोक्तः ।

नन्वक्रम इत्येवोच्यतां नत्वलक्ष्यक्रम इति शङ्कां निराकुर्वन् वृत्तिकृत् अलक्ष्येति प्रतीकमादायाह—न खलु इत्यादि रसस्तैः इत्यादि च। अयमाशयः अभिव्यज्यत इत्यध्याहार्यम्। तथाच तैः इत्यनेन हेतुत्वकथनात् व्यङ्ग्यव्यञ्जकयोः पौर्वापर्यक्रमोऽस्ति स तु न लक्ष्यते कालसौक्ष्म्यात्। आस्वादने झटिति चित्ताऽऽकर्षणादयोग्यस्य सूक्ष्मकालतयाऽनुपलब्धेर्नाभावसाधकत्वमित्यलक्ष्यक्रम इत्युक्तं नाक्रम इति। एतदेवाऽभिप्रेत्य प्रदीपकारैः उक्तम्—विभावादय एव न रसः किन्तु रस्तैर्निष्पद्यत इत्यस्ति विभावादिरसप्रतीत्यौः क्रमः स तु न लक्ष्यत इति क्रमस्याऽलक्ष्यत्वलक्ष्यत्वकृतं भेदद्वयमित्यर्थ इति।

## विवरणम्

कोऽपीति। एकपञ्चाशति ध्वनिभेदेषु पञ्चाशल्लक्ष्यक्रमा एक एवालक्ष्यक्रम इति सूचीकटाहन्यायेनादावलक्ष्यक्रमो निर्दिष्टः। क्रमस्तु वाच्यार्थप्रतीतिव्यङ्ग्यार्थप्रतीतिपरम्पराणां पौर्वापर्यमात्रम्।

नन्वालोककघटयोरिव व्यङ्ग्यव्यञ्जकयोर्युगपदेवावभासो न तु पौर्वापर्येणेत्यक्रम इत्येव वक्तुमुचितम्, न त्वलक्ष्यक्रम इत्यत आह—न खल्विति। यदि वाच्या विभावादय एव रसः, तदा श्रोत्रियादयोऽपि रसिकाः स्युरिति भावः।

रसस्तैरिति। तैः पूर्वप्रतीतैरभिव्यक्तः, तैः सहैव पश्चात् प्रतीयमानः स्थायिभावो रस इत्यर्थः।

इत्यस्ति क्रम इति। न केवलं वाच्यव्यङ्ग्यप्रतीत्योरेव, यावद् व्यङ्ग्यार्थपरम्पराणामप्यवान्तरक्रमो विद्यते। तथा हि—

**मथुरामुपयासि मद्गिरा विनिवेद्यो यदुवंशवर्धनः।**
**अधुनाऽप्यनपेतजीवितौ बत वृद्धौ पशुपालदम्पती॥**

अत्र मथुरामुपयासीत्यत्र सिद्धतया निर्दिष्टस्य मथुरोपयानकर्तुः सम्बोध्यस्य कर्तृतया साध्यत्वेनोपस्थिते निवेदनेऽन्वयः। मद्गिरेत्यत्रानूद्यानुवादवचनविधया हेतुहेतुमद्भावस्तृतीयार्थः। तेन मथुरोपयानकर्तृत्वत्कर्तृ-कस्य मद्गीरनुवादभूतस्य कर्तव्यविनिवेदनस्य कर्म यदुवंशवर्धन इति पूर्वार्धवाक्यार्थः। तद्घटकनिवेदने शाब्दबोधानुकूलवाक्यस्वरूपे श्रोत्रोपस्थितस्याध्याहृतेतिशब्दपरामृष्टस्य वा द्वितीयार्धवाक्यस्याभेदेनान्वयः।

अथवा 'दम्पती' इत्यादिद्वितीयान्तं तदुपात्तं कर्म कर्मत्वं वा विनिवेद्यतेरर्थेऽन्वेति। णिजर्थकर्मणि शाब्दबोधसमवायिनि कृत्यप्रत्यय इति यथाविधपशुपालदम्पतिविषयकस्य त्वत्कर्तव्यनिवेदनफलस्य शाब्दबोधस्य समवायी वासुदेव इति प्रथमतोऽभिधया बोध्यते वाक्यार्थः। स च वाक्यस्य वाच्यस्य च वैशिष्ट्यसहकारेण वस्त्वलङ्कारादि ध्वनयित्वाङ्गिकमनुभावं सात्त्विकं वाऽभिव्यनक्ति। तदव्यञ्जयित्वैव वा विचित्रवाक्यस्वरूपानुभावबलादेव व्यभिचारिणमवगमयति। महावाक्यार्थस्य व्यञ्जकतायामवान्तरवाक्यतदर्थपदार्थवैचित्र्यं सहकारि। तथा हि—मथुरामुपयासि न तूपयाहीति वाक्यवैचित्र्याद् यादृच्छिकं तव मथुरागमनम्, न पुनरस्मत्प्रेरणाप्रयुक्तमिति वस्तु। तेन नहि प्रभवामः सन्देशहरनरप्रेषणेन पूर्ववत् प्रगल्भितुमिति हेत्वलङ्कारः। तेन चाङ्गनिलय-दिग्विलोकनादिरभिनयशास्त्रे प्रसिद्ध आङ्गिकः, अथवा वेपथुप्रभृतिः सात्त्विकोऽनुभावः। तेन तदनपेक्षेण विचित्रवाक्येन वा पूर्ववत् प्रगल्भायमानमेनमनुचितवैयात्यं जनमवेत्य साम्प्रतमसूयेदसौ वत्स इति शङ्का ध्वननवृत्त्याऽवसीयते। एवं

यदि मथुरां गत्वा मथुरेशकंसवैरिणमवलोकयिष्यसि तदेति, गत्वा द्रष्टव्यस्त्वयाऽसावित्यन्तं वाऽनभिधाय, विनिवेद्य इत्यभिधानस्य वैचित्र्येण वाक्यार्थसहकारिणा घोष इव कियानपि तृणवरणावृतः प्रदेशो मथुरा, तत्र गतेनावश्यं दृश्यत एव तन्निवासी सर्वो जन इति वस्तु, तेन नगराणामट्ट-गोपुर-प्राकार-हट्ट-प्रतोली-चत्वरोपकार्याकक्षाविभागानामनभिज्ञानलक्षणं मौग्ध्यम्, अनेन ग्रामीणता, अथवा मथुरां गच्छसि चेत् चन्द्रचारुचाणूरवैरिवदनदर्शनायैवेति न मया त्वमेतद्दर्शनाय नियुक्त इति प्रथमतो वाच्येन हेत्वलङ्कारः, तेन नास्ति कस्यापि जीवलोकस्य गोविन्दवदनारविन्दविलोकनादन्यदाशास्यमिति तदकामयमानो नतरां मथुरामुपेयादिति वितर्कः, तेन चानारतानुध्यानवशात् तन्मयीभावलक्षणो लयो व्यज्यते।

मद्गिरेति, न त्वावयोर्गिरेति, तेन नायमायुष्मतो वियोगावधि स्पन्दितुमपि प्रभवति किमुत वक्तुमिति वस्तु, तेन यशोदापतेर्जरद्गोपस्य गद्गदस्तम्भबाह्यव्याधयोऽनुभावाः, तैश्च ग्लानिजडतादयो व्यभिचारिणः, नन्दस्य तावदनर्थोद्भावनेन तदनुकम्पयाऽपि व्रजमुपयतो वत्सस्य वदनमालोकयेयमित्यौत्सुक्यं यशोदायाः प्रतीयते।

विनिवेद्यो न तु पूर्ववदनुशासनीयः, यतो यदुवंशवर्धनो न त्वस्मद्गोत्रजः, युज्यते ह्युत्कृष्टजातिषु विनिवेदनमिति वस्तुना हेत्वलङ्कारः, तेंन हा कथं तेषु तेषु समयेषु न प्रभुवदसावुपचरित इति परिदेवनाद् विषादः, परापत्येऽपि मम तावत् तावती ममतावता नाद्यापि विरमतीति निर्वेदश्च, अनेन यदुवंश एव वर्धनीयो मम वंशश्च परित्यक्त इति मतिश्च व्यज्यते।

अधुनेत्यनेन विच्छिन्नप्रायपुनर्दर्शनप्रत्याशाकालः, अपिना पूर्वसमयाः समुच्चीयन्ते। तेन प्रथमक्रूरागमनस्य, गच्छामीति कृष्णकर्तृकापृच्छावचनस्य, प्रयाणस्य, दर्शनपथव्यतिक्रमस्य, मथुरातः सकृदप्यनागमनस्य, चिरमौदासीन्येन मथुरायामवस्थानस्य काले न जीवितमत्यजाव, न चेदानीं त्यजाव इति प्रतीयते।

तेन नाहमुपेत्य मथुरामखिलमाथुरीनयनकोणनिपीयमानलवणिमानमाननेन्दुमस्यावलोकयामीति वस्तु, तेन प्रियजीवितस्यात्मनो गोपनेन लज्जा, जीवितादपि प्रेयानसीति मम पूर्ववचनानि नूनमसौ मृषा मंस्यत इति वितर्कः।

अनपेतजीविताविति न पुनरत्यक्तजीविताविति, तेन प्रियजीवितयोरावयोर्मृषा प्रणयमानिनोरिदमसम्भाव्यमेव यदावाभ्यां त्याज्याः प्राणा इति, जीवितमिदमनुचितस्थानावस्थानदुस्थितमप्यावां न त्यजतीति वस्तु, तेन च धिगावामिति निर्वेदो ध्वन्यते।

(अथ चानपेतजीविताविति, न त्वनपेष्यज्जीविताविति। तेन प्रत्याशाविच्छेदमात्रादचिरादपेष्यति जीविते द्रुतमावां सम्भावनीयाविति वस्तु, तेन चौत्सुक्यं ध्वन्यते)। प्रक्रान्तं वाक्यमपरिसमाप्यैव मन्ये बतेति विश्रामपदेन मा स्म विस्मार्षीरंशतोऽपि पूर्वसौहृदमिति, दर्शयैकदा पुनरपि वदनारविन्दमिति, जीवय प्रयन्तौ पूर्वपितराविति, पश्य व्रजमित्यादीनि सन्देश्यानि, तथौदास्यमवलम्बमाने परवंश्ये न वाक्पथमवतरन्तीति वस्तु, तेन श्रमविषादग्लानयः प्रकाश्यन्ते।

वृद्धावित्यनेन मा स्म भूव तव पितरौ, वृद्धत्वादनुकम्पनीयौ तु भवाव इत्युपालम्भः, तेन चौत्सुक्यनिर्वेदौ व्यज्येते।

पशुपालेत्यनेन प्रेमोचितव्यवहारानभिज्ञानं वस्तु, तेन क्षमस्व पूर्वमावाभ्यां कृतानि तर्जनानीति प्रसादनम्, तेन च न त्वं मत्प्रैष्यः, किन्तु मत्प्रभुरिति मतिः प्रकाश्यते ।

दम्पती इति तयोरेकेनापि सभाजितेन द्वयमनुगृहीतं भवतीति नन्दानुग्रहार्थमागतस्य भगवतो वासुदेवस्यानुषङ्गिकमपि मम दर्शनं श्रेय इति वस्तु प्रकटयत्यौत्सुक्यम् ।

एवमवयववाक्यार्थपदार्थशक्त्योल्लासितैः शङ्का-मौग्ध्य-ग्रामीणता-वितर्क-लयग्लानिजडतौत्सुक्य-विषाद-निर्वेद-मति-लज्जा-श्रमैरसकृदवभासितैर्विशिष्टौ वाच्यौ पशुपालदम्पती विषयीकृत्य पूर्ववाक्यार्थः प्रतीयत इति साधारणीकरणव्यापारस्वरूपेण व्यङ्ग्यार्थोपरक्तवाच्यार्थलक्षणवाच्यवैचित्र्यप्रतीतिसहकृतेन प्राच्यवाच्यार्थेन पशुपालत्वगोपालबालत्वादिपरिहारेण साधारणधर्मेण यशोदादेवकीनन्दनौ प्रतिसन्धीयेते । (स चोद्विजमानत्व-प्रवासित्वादिलक्षणः । एवं वचनवेपथुप्रभृत्योऽनुभावा यशोदासम्बन्धपरिहारेण गद्गदप्रलापत्वकम्पत्वादिना शङ्कादयो व्यभिचारिणः परिहृतव्यक्तिविशेषसम्बन्धेन शङ्कात्वादिनाऽनुसन्धीयन्ते) ।

तत उद्विजमानजने प्रवासिनमालम्ब्य गद्गदवचनवेपथुवैवर्ण्याद्यनुभाविताः शङ्काग्लानिविषादौत्सुक्यादय इति विभावानुभावोपबृंहितभावास्वादः ।

ततः कामिनीजिज्ञासादेरसाधारणकामिनीधर्मान्यधर्मबुद्धिं प्रति विरोधितेव साधारणीकरणव्यापारस्याप्यसौ रसोपकारिसाधारणधर्मान्यवस्तुप्रतिभासप्रतिबन्धकताप्रकर्षः यद्वशेन सर्ववित्तिवेद्यः स्वाधिकरणकालोऽपि न भासते । अत एव पूर्वापरकालसम्बन्धलक्षणोऽत्र विद्यमानः क्रमोऽपि न भासते । सर्वानपि विभावानुभावव्यभिचारिणो भावं च गुणीकृत्य वत्सलरतिः स्वदते । स एव रस इत्युच्यत इत्यस्ति साधारणीकरणव्यापारलाभादनु व्यङ्ग्यव्यञ्जकक्रमः । स च न लक्ष्यते, भोजकेन साधारणीकरणव्यापारेण प्रतिबन्धात् । व्यापारलाभपर्यन्तस्तु लक्ष्यक्रमध्वनिरेवेति ध्येयम् । एवमलङ्कारपर्यन्तो व्यङ्ग्यो लक्ष्यक्रम एव, चमत्कारांशे त्वलक्ष्यक्रम एवेत्यग्रे व्यक्तम् ।

अत्र

(सू. ४२) रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥ २६ ॥

आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि । प्रधानतया यत्र स्थितो रसादिस्तत्रालंकार्यः, यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्यभिधाने, उदाहरिष्यन्ते ॥

---

### सङ्केतः

रसाद्यलङ्कारादिति । रसादीनां अलङ्कारः इति विग्रहे-रसालङ्कारो रसवत्, भावालङ्कारः प्रेयः, तदाभासालङ्कारः ऊर्जस्वि, भावशन्तिरलङ्कारः समाहितम् इत्यर्थः । परविश्रान्तिरूपतया रसस्य न शान्तिः इति भावस्यैव शान्तिरुक्ता । प्रधानतयेति । अङ्गितयेत्यर्थः । प्रधानतयेति असाधारणं विशेषलक्षणं काव्यभेदानां उत्तमत्वनिबन्धनम् । अतः सर्वोत्तमकाव्यभेदेषु प्रधानतया इत्यनुषञ्जनीयम् । भेदोपलक्षिताविवक्षितवाच्यसंलक्ष्यासंलक्ष्यक्रमत्वं तु मध्यमकाव्येष्वपि सम्भवात् सामान्यलक्षणम् । विशेषलक्षणं सामान्यलक्षणाव्यभिचारि स्यात् । सामान्यलक्षणं तु न विशेषलक्षणाव्यभिचारि इति ध्येयम् ।

### सङ्केतः (रुय्यकः)

रसभावेति । भावशान्त्यादिरिति । रसस्य त्वेकघननिरन्तरायप्रतीतिचर्वणीयत्वान्निरतिशयस्य शान्ताद्यतिशयाभावः । अत एव विरोधाङ्गाङ्गिभावौ रसस्यासम्भविनौ तत्स्थायिगतत्वेन कैश्चिद् व्यवस्थापितौ ।

अक्रम इति—रसादिरूपोऽसंलक्ष्यक्रमव्यंग्योऽर्थो ध्वनिव्यवहारप्रयोजकः । अत एव ध्वनिकृता 'ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थित' इत्युक्तम् ।

### बालचित्तानुरञ्जनी

रस इति । यत्र रसादिः प्राधान्येन विविक्षितः तत्रालङ्कार्यः । अतोऽयं रसवदाद्यलङ्कारात् भिन्न इत्यत्र कथनमुचितमित्यर्थः । 'भावशान्त्यादिः' इत्यत्रादिशब्दार्थमाचष्टे आदीति । अलङ्कार्यतया इत्येतद्व्याकरोति प्रधानतयेति । कीदृशीयमित्याकाङ्क्षायां 'शून्यं वासगृहम्' इत्यादौ प्रदर्शित इत्याह यथेति । रसाद्यलङ्कारः यत्र स्यात् तत्राह अन्यत्रेति । अन्यत्र मध्यमं काव्यमित्यर्थः । उदाहरिष्यन्त इति । 'अयं स रशनोत्कर्षीत्यादिना ।'

## काव्यादर्शः

तत्रेति । तयोर्मध्याद् रसादिरर्थोऽक्रमः । ध्वनेरक्रमो नाम भेदः । न विद्यते क्रमो यत्रालक्ष्यक्रमव्यङ्ग्य इत्यर्थः । रसादिरर्थो हि वाच्येनार्थेन विभावादिना सहेवावभासते ।

किं सर्वदैव रसादिरर्थो ध्वनेः प्रकारः ? नेत्याह—भिन्न इति । रसादेः प्राधान्येनालंकार्यत्वाद् अलंकारश्च तदुपस्कारकाः, अत एव रसादिरेव वाक्यार्थीभूतः काव्यजीवितम् । रसाद्यलंकारादिति । रसवदाद्यलंकाराद् भिन्नः पृथग्भूतो रसादिरङ्गिभावेन स्थितो व्यवस्थितः । रसो वक्ष्यमाणः । भावा रत्यादयो निर्वेदादयश्च त्रयस्त्रिंशद् व्यभिचारिणः, तदाभासा रसाभासभावाभासा अनौचित्यप्रवर्तिताः । रसस्य च परविश्रान्तिरूपत्वात् शान्तिर्न संभवतीति भावस्यैव शान्तिः प्रशाम्यदवस्था । स च रसादिरङ्गिभावेन स्थितो यस्मिन् काव्ये शब्दार्थालंकारैर्गुणैश्च रसादिनिष्ठैरेवोपक्रियते तत्र रसादिध्वनिरक्रम इत्याह—प्राधानतयेति । तस्माद् रसादिरर्थोऽङ्गित्वेन भासमानोऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकार इति स्थितम् । यथोदाहरिष्यते 'शून्यं वासगृहम्' इत्यादौ । यत्र तु वाक्यार्थस्य प्राधान्यमङ्गिभावो रसादिश्चाङ्गभूतोऽप्रधानः, तत्र गुणीभूतव्यङ्ग्ये रसवदाद्यलंकारस्य विषय इत्याह-अन्यत्र त्विति । यस्मिन् काव्ये रसादयोऽङ्गभूतावाक्यार्थीभूतश्चान्योऽर्थस्तत्र रसवदादयः । स एवालंकारशब्दवाच्यो योऽङ्गभूतो, न त्वन्य इति यावत् । तदुक्तम्—

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।**
**काव्ये तस्मिन्नलंकारो रसादीरिति मे मतिः ॥**

एवं च ध्वनेरुपादीनां रसवदादीनां चालंकाराणां विभक्तत्वं भवति । यद्यपि रसेनैव जीवति काव्यं, तथापि यदा कश्चिद् रत्यादिर्व्यभिचारी चोद्रिक्तावस्थां प्रतिपन्न एकघनचमत्कारातिशये प्रयोजको भवति तदा भावध्वनिः ।

## विवेकः

भावशान्त्यादिरिति । 'रसस्य त्वेकध्वनि (घन) निरन्तरायप्रतीतिचर्वणीयत्वान्निरतिशयस्य शान्त्याद्यतिशयाभावः । अतएव विरोधाङ्गाङ्गिभावो रसस्यासम्भविनौ तत्स्थायिभावो (भाव) गतत्वेन कैश्चिद्व्यवस्थापितौ' (रु. सं. १४) । मन्दावस्था भावा बहुलावस्था रसा इत्यादिना ग्रन्थकारोऽप्यग्रे वक्ष्यति (का. ३५) । 'अक्रम इति रसादिरूपोऽसंलक्ष्यक्रमो(म)व्यङ्ग्योऽर्थो ध्वनिव्यवहारप्रयोजकः । तथाच ध्वनिकृता 'ध्वनिरङ्ग (रात्मा)ङ्गिभावेन' भासमानो व्यवस्थितः' (ध्व. आ. २ ।३) इत्युक्तम् । (रु. सं. १४-१५) । ननु रसादिप्राधान्ये रसवदादयोऽलङ्कारा इति पूर्वाचार्याः (का. अ. सा. सं. ४ ।४५) तत् कथमलक्ष्यक्रमो ध्वनिरित्यत आह भिन्न इति । अत्र हेतुमाह—अलङ्कार्यतया स्थित इति । तदेतद्विवृणोति वृत्तिकारः प्रधानतयेति । रसवदादीनां तर्हि को विषय इत्यत आह—अन्यत्र त्विति रसादेरेव वाच्यत्वे । यदाह ध्वनिकारः—प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मति (ध्व. आ. २ ।५) रिति । गुणीभूतव्यङ्ग्याभिधाने गुणीभूतव्यङ्ग्यप्रपञ्चनावसरे ।

## दीपिका

तत्र (तत्रेति—) तयोर्मध्ये अलक्ष्यक्रमस्य रसादिरीदृशस्वरूपव्यवस्थाहेतु-रित्यर्थः। तथाभासेति—तत्पदेन रसभावयोरनुकर्षः। अक्रम इति—नञ् ईषदर्थेऽज्ञेयतापरम्। रसाद्यलङ्कारादिति—रसादिश्चासावलङ्कारश्चेति कर्मधारयः। अलङ्कार्यतया स्थित इति भिन्नत्वे हेतुः। आदिग्रहणाद्भावशाबल्यादिरिति। तत्रेति—प्रधानतया बाध्यताऽऽदिराहित्येनालङ्कार्यः। अलङ्कारादिकृतपरिपोषमात्रत्वेनालङ्कारव्यपदेशो योग्यः। न चैतद्वाङ्मात्ररित्याह-तथोदाहरिष्यत उदाहरणदर्शनेन विविक्तः करिष्यत इत्यर्थः। वाक्यार्थे रसाद्यन्तररूपे वस्तुमात्ररूपे वा। अङ्गभूतः शोभाविशेषकः। आदिरिति वाक्यार्थादिसङ्ग्रहः कार्यः। गुणीभूतव्यङ्ग्य इतितैरुपाधिभिर्ध्वनिव्यवहारनिरासः, नतु तत्सद्भावे ध्वनिव्यतिरेकनियमः, प्रधान भूतरसाद्यपेक्षयाऽसम्भाव्यत्वात्। रसवदिति—अलङ्कारस्यालङ्कारिपारतन्त्र्यध्वननया काव्यविशेषणपदेन तदभिधानम्। एवमुत्तरत्रापि भावस्यालङ्कारत्वेन प्रेयः प्रियतरं काव्यम्। [अत्र रसवति काव्ये वाच्यव्यङ्ग्ययोरपि न प्रतीतिविलम्बो, झटित्यास्वादपर्यन्तगमनात्; किन्तु नीरसप्रतीतिविलम्बात्तत्साजात्येन लक्ष्यक्रमव्यङ्ग्यव्यवहार इति बोध्यम्]। ऊर्जस्वि-रसाभास-भावाभासालङ्कृत्यनुप्राणितत्वेन चमत्कृतिविशेषाधानक्षममूर्जस्वि, भावप्रशमालङ्कृतिसाचिव्येन सम्यगाहितं भवति चमत्करणमनेनेति समाहितम्, आदिपदेन भावोदयनामालङ्कृतिपरिग्रहः। गुणीभूतव्यङ्ग्यं काव्यमभिधीयते विशेषलक्षणार्थमाबध्यतेऽत्रेति गुणीभूतव्यङ्ग्याभिधानः पञ्चमोल्लासः।

## दर्पणः

रसेति। प्रतीतिविलम्बात् तत्साजात्येन लक्ष्यस्य क्रमव्यवहारः, तादृशसंलक्ष्यक्रमासंलक्ष्यक्रमयोर्मध्ये प्रथमं व्यवस्थाहेतु रसादिरित्ति पिण्डार्थः। तदाभासेति रसाभासभावाभासौ। तच्छान्तिर्भावशान्तिः। प्रक्रम इति। दुरूहक्रमः। रसादिस्वरूपालङ्कारादलङ्कार्यतया अलङ्कारकृतपरिपोषकत्वेन। यथोदाहरिष्यते। उदाहरणदर्शनेन विविक्तः करिष्यते। वाक्यार्थे रसादिरूपे। वर्णनामात्ररूपे वा अङ्गभूतः शोभाविशेषाधायकः। रसस्याङ्गत्वे रसवदलङ्कारः। भावस्य प्रेयोऽलङ्कारः। एतयोराभासस्य ऊर्जस्वी। भावशान्तेः समाहितम्। 'समाहितादयः' इत्यादिशब्दात् भावोदयादयः। गुणीभूतव्यङ्ग्याभिधाने पञ्चमोल्लासे।

## साहित्यचूडामणिः

भूयो विभागमाह—तत्र चेति।

अक्रमः व्याख्यातात् प्रकारादसंलक्ष्यक्रमः। अत्र ध्वनिगुणीभूतव्यङ्ग्यसङ्करशङ्कानिरासार्थमाह—भिन्न इति। भेदमेवोल्लेखयति—अलंकार्यतयेति।

रसादेः कुत्रालङ्कार्यता अलंकारता च कुत्रेति विविनक्ति 'प्रधानतये-ति। उदाहरणपृष्ठपरीक्षणीयस्य प्रमेयस्य ग्रन्थशय्यापूरणार्थमाह—'यथोदाहरिष्यते' इति। अलंकारतापक्षमुपक्षिपति—'अन्यत्रेति'। यदाह—'प्रधानेऽन्यत्र वाक्यार्थ' इति। अलंकारो मान्यर्थेण [प्रतीतेः]। 'समाहितादय इत्यादि'-पदेन कविभिः कल्पयिष्यमाणमन्यदनुमन्यते। अलंकारा इति। भावादीनामलंकार्याणामिति शेषः। उदाहरिष्यन्ते। 'अपरस्याङ्गम्'[पञ्चमोल्लासारम्भे] इत्यत्र।

## सम्प्रदायप्रकाशिनी

तमिममसंलक्षयक्रमं प्रप(ञ्च ? ञ्च्य) त्वादादौ दर्शयितुमाह—रसभावेत्यादि । रसभावरसाभासभावाभासभावशान्त्यादिर्व्यङ्ग्योऽर्थोसंलक्ष्यक्रम इत्यर्थः । ननु रसादिप्राधान्ये रसवदादयोऽलङ्काराः पूर्वेषां मताः, तत् कथं ध्वनित्वादलङ्कार्यत्वमेषामुपपद्यत इत्यत आह—भिन्नो रसेत्यादि ।

तदेतद् व्याचष्टे—आदिग्रहणादित्यादि । ननु यथा भावस्योदयसन्ध्यादयोऽवस्थाविशेषाः पृथग् ध्वनयः, तथा रसस्यापि किं न स्युः । उच्यते । अखण्डनिरन्तरायप्रतीतिचर्वणैकघनस्य हि रसस्य सन्तोऽप्युदयसन्ध्यादयो न निरुक्तिमर्हन्ति । अतो न भाववदिह तथाविधभेदसम्भवः । एवं तर्हि ब्रह्मास्वादसहोदरत्वाद् रसस्य कथमाभासत्वोपपत्तिः । तिर्यगादिषु बाधदर्शनादिति ब्रूमः । अत उदयसन्धिशबलत्वानि भावगतत्वेनैव निरूपणमर्हन्ति । ननु कथमलङ्काराभिमतस्यालङ्कार्यत्वमुपपद्यत इत्यत आह—प्रधानतया यत्रेति । वाच्यार्थातिशायिता प्रधानता । उदाहरिष्यत इति । अक्रमध्वनिप्रस्ताव इति शेषः । यत्र त्वस्यालङ्कारता, तं विषयं दर्शयति—अन्यत्र त्विति । अङ्गभूत इति । वाच्योपस्कारित्वविवक्षायामङ्गभावः । रसवदित्यादि । अंगत्वेन विवक्षितो रसो रसवानलङ्कारः । भावः प्रेयान् । रसाभास ऊर्जस्वी । भावाभासः समाहितः । आदिग्रहणाद्भावोदयसन्धिशबलत्वानि । तान्यपि पृथगलङ्कारतया विवेचयिष्यन्ते । गुणीभूतव्यङ्ग्याभिधान इति । गुणीभूतव्यङ्ग्याभिधानावसर इत्यर्थः ।

अक्रमध्वनीन् यथोद्देशं लक्षयितुकामो रसध्वनिमादौ प्रस्तौति—तत्ररसेति । स्वरूपं लक्षणम् ।

## मधुमती

अलक्ष्यक्रमं विभजते—रसभावेति । अक्रमः—अलक्ष्यक्रमः । वस्तुतः क्रमसत्त्वात् । अत्र रसभावतदाभासशान्त्यादिः इत्येव वक्तव्ये मध्ये भावग्रहणं रसशान्त्यादिप्रतिषेधार्थम् । तच्च व्यभिचारिपरम् ।

तथाहि—रसस्य विभावादिजीवितावधित्वेन तदपगम एव शान्तिर्वक्तव्या । न च तदनुपकृतो व्यञ्जनया प्रतिपद्यते, नात्यव्यक्तः चमत्कुरुते इति, रसशान्तिः नोक्ता । रसोदयस्तु रसाभिव्यक्तिपर्यवसन्न एव, तस्य नित्यत्वात् । रससन्धिः रसशबलता वा न सम्भवत एव, रसानां विगलितवेद्यान्तरत्वात् । नापि स्थायिनः, विभावाद्यसंवलने रसतया तेषां अनभिव्यक्तेः, तत्संवलने च रसतापर्यवसानेन विगलितवेद्यान्तरत्वात् । ननु रसादयो रसवदलङ्काराः, ते च गुणीभूताभिधाने अभिधातुमर्हाः । न तु ध्वन्यभिधाने इत्यत आह—भिन्न इति । तथा च रसादीनां यत्र अपराङ्गता तत्र गुणीभूतव्यङ्ग्यत्वम्, अन्यत्र तु प्रधानतया ध्वनित्वम् इति उभयत्राभिधानं अविरुद्धमिति भावः ।

## विस्तारिका

स्वप्रकाशकत्वेन विभावादिज्ञानस्य स्वज्ञापकत्वादास्वादोद्बोधकत्वाच्च । रसभावेत्यादि । रसश्च भावश्च तयोराभासौ च भावस्य शान्त्यादयश्च । अक्रम इति । अनुदरेत्यादाविव नञ ईषदर्थता । 'अयं स रसना' इत्यादौ गुणीभूतव्यङ्ग्येऽतिप्रसङ्गवारणाय भिन्न इत्यादि । हेतुमाह—अलङ्कार्यतयेति । स्थितः स्थिरतामापन्नः । प्रत्युदाहरणे त्वालम्बनोच्छेदेन रतेरस्थैर्यात् ।

तदाह—प्रधानतया चित्तविश्रान्तिधामत्वेनालङ्कार्यः । सर्वावयवकृतचारुत्वभाजः । **भिन्नेत्यादि व्याचष्टे-अन्यत्र त्विति** । प्रधानेऽङ्गिनि, वाक्यार्थे वाक्योद्देश्ये रसाद्यन्तरे अङ्गमुत्कर्षकम्, अत एवोक्तम्—

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ॥**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥** इति ।

रसवदित्यलङ्कार्यरससम्बन्धान्मतुप् । यद्वा अङ्गरसस्य परिपोषाभावाद् रसतुल्यता । तुल्यार्थे वतिः । तेन—

**अलङ्कारो न रसवत् परस्याप्रतिभासनात् ।**
**स्वरूपानतिरिक्तस्य शब्दार्थासङ्गतेरपि ॥**

इति निरस्तम् । रसादय इत्यादिपदग्राह्यमाह—प्रेय इति । भावस्याङ्गत्वे इतरत् काव्यम्, आभासाङ्गत्वे चोर्जस्वि । भावप्रशमस्य तत्त्वे समाहितम् । लक्ष्यनिदर्शनाकाङ्क्षायामाह—ते चेति । गुणीभूताव्यङ्ग्यस्याभिधानं यत्र पञ्चमोल्लासे, तत्रैव तदौचित्यात् ।

## सारबोधिनी

भावशान्त्यादीति । अत्र भावशब्देन व्यभिचारिभाव एवोक्तमिति बोध्यम् । रत्याख्यभावस्य शान्त्यादेश्चर्वणीयत्वात् । अक्रम इति । अलक्ष्यक्रम इत्यर्थः । अयं स रशनोत्कर्षी इत्यादौ गुणीभूतव्यङ्ग्येऽतिप्रसङ्गवारणाय भिन्न इति । अत्र हेतुमाह अलङ्कार्यतयेति । स्थितः स्थिरतामापन्नः । तेनाङ्गतां बाध्यतां वा प्राप्तस्य न रसध्वनित्वम् । अन्यत्रत्विति । प्रधाने रसान्तरेऽङ्गिनि वाक्यार्थे वाक्योद्देश्येऽङ्गमुत्कर्षकम् । तदुक्तम्—

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥** ध्वन्यालोकः २.२७

रसवदिति । अलङ्कार्यरससंबन्धान्मतुप् । यद्वा, अङ्गरसस्य परिपोषाभावात् रसतुल्यता । तुल्यार्थे वतिः । रसादीति । आदिपदग्राह्यमाह प्रेय इत्यादि । भावस्याङ्गत्वे तत्प्रियतरं काव्यम् । आभासस्याङ्गत्वे ऊर्जस्वि । भावप्रशमस्याङ्गत्वे समाहितम् ।

## काव्यप्रदीपः

**रसभावतदाभासभावशान्त्यादिरक्रमः ।**
**भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥ ३ ॥**

अक्रमोऽलक्ष्यक्रमः । तच्छब्देन रसभावयोः परामर्शः । आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि । नन्वाभासवद्रसस्य शान्त्यादयः किं नोक्ताः । निरन्तरावयवस्यापरिच्छन्नस्य निरतिशयस्य वेद्यान्तरसंपर्कशून्यस्य तदभावात् । आभासत्वं तु तिर्यगाद्यधिकरणतया अविरुद्धम् । भिन्न इति । यत्र प्रधानं रसादिस्तत्र ध्वनिः, यत्र त्वप्रधानं तत्रालंकार इति भावः ।

## काव्यप्रकाशखण्डनम्

**रसभाव-तदाभासभावशान्त्यादिरक्रमः ।**
**भिन्नो रसाद्यलङ्कारालदलङ्कार्यतया स्थितः ॥** (सू. का. २६)

अक्रमः असंलक्ष्यक्रमव्यङ्ग्यः, आदिग्रहणाद् भावोदयभावसन्धिभावशबलत्वानि गृह्यन्ते । गुणीभूत-व्यङ्ग्येति व्याप्तिवारणाय भिन्नेति हेतुमाह—अलङ्कार्यतया स्थित इति प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यः । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत् प्रेयऊर्ज्जस्वित्समाहितादयोऽलङ्काराः । स्थिरः स्थिरतामापन्नः तेन अङ्गतां बाध्यतां वा प्राप्ते रसादौ न तथात्वमिति । रसवदितीवार्थे वतिः । अङ्गभूतस्य रसस्य परिपुष्ट्यभावाद् रसतुल्यत्वात् । प्रेय इति भावस्याङ्गत्वे समाहितमिति मन्तव्यम् ।

### आदर्शः

अलक्ष्यक्रमान् व्यङ्ग्यान् दर्शयति—तत्रेति । तदाभासेत्यत्र तत्पदेन रसभावयोर्द्वयोरपि परामर्शः । अक्रमः अलक्ष्यक्रमः । भिन्नो रसादीति पराङ्गत्वे सति रसादय एवालङ्कारा वक्ष्यन्ते, तादृशालङ्कारादि्भन्नः पराङ्गत्वेन अलङ्कार्य तया स्थितो यः स एव काव्यस्य ध्वनित्वनिर्व्वाहकोऽक्रम इत्यर्थः । पराङ्गभूतो 'रसादिस्तु अक्रमत्वेऽपि काव्यस्य गुणीभूतव्यङ्ग्यत्वनिर्व्वाहक एवेति भिन्न इत्यादिना तद्व्यवच्छेदः कृतः । आदिग्रहणादिति भावशान्त्या-दिरित्यादिग्रहणादित्यर्थः । भावोदयादिलक्षणं तदुदाहरणावसरे वक्ष्यते । अलङ्कार्य्यतयेत्यत्र अलङ्कारयोग्यतैव विवक्षितेत्याह—प्रधानतयेति । परानङ्गत्वमेव प्राधान्यं सैव चालङ्कारयोग्यतेति भावः । काव्यस्य तु सर्व्वत्र साल-ङ्कारत्वं वैचित्र्यमात्रसत्त्वादिति प्रागेव दर्शितम् । यथोदाहरिष्यत्त इति । शून्यं वासगृहमित्यादिकं तद् बोध्यम् । पराङ्गत्वे तु तस्य अलङ्कारत्वमेव नालङ्कार्य्यत्वमित्याह—अन्यत्र त्विति 'वाक्यार्थे" रसादिरूपे; रसस्याङ्गत्वे रसवान्, भावस्याङ्गत्वे प्रेयान् आभासस्याङ्गत्वे ऊर्जस्वी, भावशान्त्यादेरङ्गत्वे समाहितं नाम अलङ्कार इत्यर्थः । गुणीभूत-व्यङ्ग्याभिधान इति अपराङ्गाख्यगुणीभूतव्यङ्ग्यस्य अभिधाने कृते सतीत्यर्थः, एते च रसवदाद्यलङ्कारा इति तदुत्तरं वक्ष्यमाणत्वात् ।

### सुधासागरः

अलक्ष्यक्रमं विभजते—'तत्र रसभावे'-ति ।

अत्र रसभावतदाभासशान्त्यादिरिति वक्तव्ये भावग्रहणं रसाशान्त्यादिप्रतिषेधार्थं व्यभिचारिपरञ्च । तथाहि—रसस्य विभावादिजीविताऽवधित्वेन तदपगम एव शान्तिर्वक्तव्या । न च तदनुपकृतो व्यञ्जनया प्रतिपा-द्यते । न चाऽव्यक्तश्चमत्कुरुते इतिरसशान्तिर्नोक्ता । रसोदयस्तु रसाऽभिव्यक्तिपर्यवसन्न एव, तस्य नित्यत्वात् । रससन्धिशबलते अप्यसम्भवदुक्तिके, रसानां विगलितवेद्यान्तरत्वात् ।

नापि स्थायिनां विभावाद्यसंवलने रसः । तथा तेषामनभिव्यक्तेः । तत्संवलने रसतापर्यवसानेन विगलि-तवेद्यान्तरत्वात् । अतएवोक्तं सारबोधिनीकारैः—अत्र भावशब्देन व्यभिचारिभाव एवोक्त इति बोध्यम् । रत्या-ख्यभावस्य शान्त्यादेरचर्वणीयत्वादिति । व्याख्यातञ्चैतदभिप्रेत्य काव्यप्रदीपकारैः—आदिशब्दात् भावोदयभावसन्धि-भावशबलत्वानि । न चाऽऽभासवद्रसस्य शान्त्यादयः किं नोक्ताः । निरन्तरगृह्यमाणविभावा-

द्यवयवकस्य देशतः कालतश्चाऽपरिच्छिन्नस्य निरतिशयस्य वेद्यान्तरसम्पर्कशून्यस्य तदभावात्। **आभासत्वं तु** तिर्यगाद्यधिकरणतयाऽविरुद्धमिति। तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—आदिग्रहणाद्**भावोदयभावस-न्धिभावशबलत्वानीति।**

ननु रसादयो रसवदलङ्काराः, ते गुणीभूताभिधानेऽभिधातुमर्हा न तु ध्वन्यभिधान इत्यत आह—**भिन्न** इति। तथा च रसादीनां यत्राऽपराङ्गता तत्र गुणीभूतव्यङ्ग्यत्वमन्यत्र प्रधानतया ध्वनित्वमित्युभयत्राऽभिधानमवि-रुद्धमिति भावः। उक्तञ्च—

**प्रधानेऽन्यत्र वाक्यार्थे यत्राऽङ्गन्तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥** [ध्व. २.५] ॥ इति।

अतएव काव्यप्रदीपकारैर्व्याख्यातम् 'यत्र प्रधानं रसादिस्तत्र ध्वनिः, यत्र त्वप्रधानं तत्राऽलङ्कार इति भाव इति। तदेतदाह वृत्तिकारः—प्रधानतया यत्रेत्यादि।

## विवरणम्

रसेति। रसभावौ, तयोराभासौ, भावस्य शान्त्यादिश्चालक्ष्यक्रम इत्यर्थः। अक्रम इत्यत्रानुदरी कन्येत्या-दाविवाल्पार्थे नञ्। अलक्ष्यत्वमेवात्राल्पत्वम्।

नन्विदमेवालक्ष्यक्रमत्वं करुणाङ्गीभूतशृङ्गारादावपि विद्यत इत्यत आह—भिन्न इति। तथा चालक्ष्यक्र-मलक्षणेऽलङ्कारभेदोऽपि प्रवेशनीय इति भावः। तत्र भेदे हेतुमाह—अलङ्कार्यतयेति। कीदृगलङ्कार्य इत्याका-ङ्क्षायां वृत्तौ पूरयति—प्रधानतयेति। तत्र हेतुः—स्थित इति। अनुच्छिन्नालम्बनादिरित्यर्थः। तथा च यत्रोच्छिन्नालम्बनत्वेनाप्रधानम्, तेन चानलङ्कार्यः, ततश्चालङ्कारस्वरूपो रत्यादिः, तत्रालङ्कारभिन्नत्वाभावान्नातिव्या-प्तिरिति भावः।

यथेति। यदुदाहरिष्यते, तद् यथा, तथाऽलङ्कार्यो रत्यादिरित्यर्थः।

अलङ्कारभेदस्य विशेषणस्य व्यावर्तनीयं निर्दिशति—अन्यत्र त्विति। प्रधानेऽङ्गिनि, वाक्यार्थे वाक्यो-द्देश्ये, अङ्गमुत्कर्षकम्। रसवदिति। अलङ्कार्यरससम्बन्धान्मतुप्। अरसेऽपि रससाधर्म्यात् वतिर्वा। नह्युच्छिन्ना-लम्बनादिरसौ रसः, किन्तु रससदृश इति भावः।

रसादिरित्यत्रादिपदोपग्राह्यमाह—प्रेय इत्यादि। भावस्याङ्गत्वे प्रेयः, आभासस्याङ्गत्व ऊर्जस्वि भावशा-न्तेरङ्गत्वे समाहितम्। भावोदयादेरङ्गत्वेऽपि यद्यलङ्कारता, तदा तदादिपदोपग्राह्यम्। अलङ्कारा इति। यदाह ध्वनिकारः—

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः** ॥ इति ॥

गुणीभूतव्यङ्ग्येति तन्निरूपणोल्लासे।

केचित्तु—ननु भामहादयो रसमलङ्कारमाहुः, तत्कथमस्य ध्वनित्वमत आह—भिन्न इति । तत्र हेतुः—अलङ्कार्यतयेति । तथा च रसस्यालङ्कारत्वेऽलङ्कार्यान्तरापेक्षा स्यादिति भावः । प्रधानतयेति वृत्तेस्तु काव्यव्यापकतयेत्यर्थः । तेन रसादेरलंङ्कारत्वे सर्वत्रोपमादिः, तेन सह संसृष्टः सङ्कीर्णो वा स स्यादिति स्यादुपमादीनां विषयापहार इति लभ्यत इति व्याकुर्वन्ति ।

अत्रेदमवधेयम्—विभावादिजीवितावधेश्चर्वणाप्राणस्य रसस्य शान्त्युदयौ सम्भवन्तावपि कुतो नोक्तौ ? तयोः सम्भवतोरपि काव्ये न व्यञ्जनागम्यत्वम्, न चास्वाद्यत्वमिति चेत्, एवमपि—

**'एकन्तो' रुअइ पिआ अण्णन्तो समरतूरणिग्घोसो ।**
**पेम्मेण रणरसेण अ भडस्स दोलाइअं हिअअम् ॥**

इत्यत्र वीरशृङ्गारयोः सन्धिः ।

**एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः**
**पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभावालसम् ।**
**अन्यद् दूरविकृष्टचापमदनक्रोधानलोद्दीपितं**
**शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥**

इत्यत्र शान्तशृङ्गाररौद्राणां शबलता च न कथमुदाह्रियते । न च पेम्मेण इत्यादौ प्रेमोत्साहयोः, 'पार्वत्याः' इत्यादौ शृङ्गारस्य, 'अन्यद्' इत्यादौ क्रोधस्य, 'भिन्नरसम्' इत्यादौ रसस्य स्वशब्देनोपादानान्नात्र रसः स्वदते, किन्तु भावविभावभूतैस्तैर्भटविषया शम्भुविषया च रतिरेवेति वाच्यम्; एवमपि—

**एकन्तो रुअइ पिआ अण्णन्तो समरतूरणिग्घोसो ।**
**विज्भाइअं सबलिया भडस्स दिट्ठी पुरो जलइ ॥**

इत्यादौ प्रिययालम्बनेन, तद्रोदनेनोद्दीपनेन, तिर्यग्वलितनिर्वाणदृष्ट्यानुभावेन, चिन्तामोहविषादौत्सुक्यैर्व्यभिचारिभिश्च विप्रलम्भः, समरेणालम्बनेन, तूर्यघोषेणोद्दीपनेन, ज्वलन्त्या समरभूम्यभिमुखदृष्ट्याप्नुभावेन, गर्वासूयाऽमर्षौत्सुक्यादिभिर्व्यभिचारिभिश्च रणोत्साहो वीरश्च स्वदत इति कथं न सन्धिरनयोः, एवं शबलताऽपि सम्भवतीति । उच्यते, 'एकन्तो' इत्यादौ रत्युत्साहौ भावावेव, न तु रसौ । रसानुपकारिणः पदार्था यत्र नान्तरोपलभ्यन्ते, नापि तेनोपलम्भेन परिच्छिन्न इव प्रतिभाति स्थायी, न (च) स्थाय्युल्लासकाले तदनुपकारि वेद्यान्तरं स्फुरति, स रसः । न च प्रकृते तथा ।

॰यदाह प्रदीपः—'नन्वाभासवद् रसस्य शान्त्यादयः किं नोक्ता इति, न निरन्तरावयवस्यापरिच्छिन्नस्य निरतिशयस्य वेद्यान्तरसम्पर्कशून्यस्य तदभावात्' इति । तत्र निरवयवत्वापरिच्छिन्नत्वे शान्त्युदययोरभावे, निरतिशयत्वमितराङ्गतया सन्ध्याद्यभावे, वेद्यान्तरसम्पर्कशून्यत्वं तु स्वातन्त्र्येण सन्ध्याद्यभावे हेतुः ।

तत्र रसस्वरूपमाह

(सू. ४३) कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ २७ ॥

विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥ २८ ॥

उक्तं हि भरतेन 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति ।

---

### बालचित्तानुरञ्जनी

उत्तरसूत्रमवतारयति तत्रेति । रसभाव तदाभासादिमध्ये रत्यादेश्चित्तवृत्तिविशेषस्य चिरस्थायिनः भावस्य लोकव्यवहारे यानि कारणानीत्युच्यन्ते तानि अनुस्वानानुकृतिलक्षणेनाद्ये 'तददोषौ' इत्याद्युक्तलक्षणे काव्ये यदि स्युस्तर्हि कारणानि विभावाः, कार्याणि अनुभावाः, सहकारीणि व्यभिचारिण इत्युच्यन्ते । तैरभिव्यक्तः, स च तिष्ठत्यस्मिन् इति स्थायी रत्यादिको भावो रस इत्युक्तः । संमतिमाह उक्तं हीति ।

### काव्यादर्शः

कारणानीति । रत्यादेश्चित्तवृत्तिविशेषस्य स्थायिनो लोके यानि कारणकार्यसहकारिशब्दव्यपदेश्यानि, तान्येव नाट्ये काव्ये चेत् तदा विभावानुभाव व्यभिचारशब्दैर्व्यपदिश्यन्ते । तैश्च व्यक्तः समाजिनां वासनात्मतया स्थितः साधारण्येन चर्वणात्मकप्रतीतिगोचरः स्वसंवेदनसिद्धः स्थायी रत्यादिको भावो रसनाव्यापारविषयो रसः । एतदिति । मुनिसूत्रम् । विभावैरिति । विभाव्यन्ते विशिष्टतया जायन्ते वागाद्यभिनयसहिताः स्थायिव्यभिचारिलक्षणाश्चित्तवृत्तयो यैः । यन्मुनिः—

### विवेकः

कारणानीत्यादि स्थायी भावो रस इति वक्ष्यमाणेन सम्बन्धः । स्मृत इति ध्वनिकारसम्प्रदायसिद्धत्वं ब्रूते । कः पुनरयं स्थायी ? न हि चित्तवृत्तेराशुतरविनाशिन्याः स्थैर्यसम्भवः । हर्षादिस्वपि चातिप्रसङ्गः । वासनासन्दीपनञ्च विषयातिशयात् पात्रप्रकृतिविशेषाच्च चित्तादिसाधारणमेवेति । सत्यं, चित्तवृत्तिकदम्बक आस्वाद्यमाने बुद्बुदवदुन्मज्जनिमज्जमानास्वप्यन्यासु चित्तवृत्तिसु स्रक्सूत्रन्यायेन यद्वासनाऽऽस्वादपदवीमवगाहमानाऽनुवर्तते स स्थायी, तथा च भावाध्यायपरिसमाप्तौ मुनिः—

**बहूनां समवेतानां रूपं यस्य भवेद्बहु।**

**स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥** (ना. शा. नि. सा.) इति।

अत्र बहूनां चित्तवृत्तिरूपाणां भावानां मध्ये यस्य बहुलं रूपमुपलभ्यते स एव रसो रसीकरणयोग्यः, शेषास्तु सञ्चारिण इति वक्ष्यते (व्याचक्षते)। न तु रसानां स्थायिसञ्चारिभावेनाङ्गाङ्गिता युक्ता। अतएवान्यो(न्ये) रसस्थायीति षष्ठ्या सप्तम्या द्वितीयया वा श्रितादिषु (गमि) गम्यादीना—(पा. २.१.२४ वा.) मिति समासम् (ध्व. आ. लो १७४-७५ पृ.) आम्नासिषुः। एवञ्च स्थायितया पठितस्यापि रसान्तरे यद्व्यभिचारित्वं दृश्यते यथा क्रोधस्य वीरे जुगुप्सायाः शान्तेर्व्यभिचारितया पठितस्यापि वा यत् स्थायित्वं यथा निर्वेदस्य शान्ते तत् सर्वमुपपद्यते। तथाहि—

तवालेख्ये कौतूहलतरलतन्वीविरचिते विधायैका चक्रं रचयति सुपर्णावृतमपि (मधः)।

अथ स्विद्यत्पाणिस्त्वरितमपमृज्य तदपरा करे पौष्पं चापं मकरमुपरिष्टात् लिखति ॥ (म. सं. कं. १७६ पृ.) अत्र विविधविकल्पगोचरचित्तवृत्तिभेदेऽपि रतिवासनाभिन्नाङ्कगेयधातुवदास्वाद्यते।

ननु—

**अग्घाइ चलणङ्गुट्ठ अ विलासपरिमद्दकुट्टिम घिट्टद्धं।**

**बहुसो सहीणिवेदिअसिढिलङ्गुलि गहि अ वीडिसंठाणं ॥** (श्रृ. प्र.)

इत्यादौ चिन्ताऽऽदयोऽपि तथा प्रकाश्यन्ते तद्वरमभिमानापरनामा भवत्वेक एव श्रृङ्गारात्मको रसः, तदुपाधिकश्चायंमनियमेन व्यभिचारिसाधारण एव रसव्यवहारः प्रती(ता)यतामिति। नैतत्, भावावबोधात्। न हि काव्यप्रतिसन्धानापेक्षया स्थायिनिरुक्तिरपि[तु] पात्रप्रकृत्यपेक्षया। तथाच निबद्धं महाकविना—

**अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु य-**

**द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।**

**कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं**

**भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥** (उ.वा.च. १ ।३९) इति

अतएव पात्रप्रकृत्यपेक्षया नी (सी)ताऽऽद्युपलक्षितोऽनुरागः शब्दार्थगतत्त्वेन तु सहकाराद्युपलक्षितः पाकः प्राचीनैरुपदर्शितः। तिर्यगादिषु च बाधोदयं यावदाभासमानो रत्याद्याभास इत्युच्यत इति तदेतदास्तां तावत्। यदि स्थायी रसः पात्रे तर्हि प्रसक्त इत्यत उक्तं भाव इति।' भावना वासना व्याप्तिरित्यनर्थान्तरम्। तथा ह्युच्यते—अनेन गन्धेन रसेन वा सर्वं भावितं वासित, मिति (ना. शा. ७ अ.)। वाक्यार्थतत्त्वपरिशीलनविशदीकृते सामाजिकमनोमुकुरे वर्णनीयतन्मयीभवनयुक्त्या भविष्यद्रसास्वादोऽङ्कुरीभवन् स्ववासनाप्रतिफलनयोग्यतामापाद्यमानः स्थायी भाव उच्यते। तदुक्तं भावयतीति भावः, भू इति करणार्थो धातुरवगन्तव्य इत्यादि। कथमेवमित्यत आह तर्व्यक्तः—यदि तैरित्येतदेवोच्येत [तदा] प्रधानभूतकारणादिधर्मपरामर्शेऽसङ्गतिः स्यात्। अतो विभावाद्यैरित्युक्तम्। के पुनरमी विभावादय इत्यत आह कारणानीत्यादि। सवासना चित्तवृत्तिरुत्पत्तिधर्मिणी कारणमन्तरेण कथमात्मानमासादयेत्, तच्च [ततश्च] स्वरूपहेतुरालम्बनभावमापद्यमान आलम्बनमित्युच्यते यथा

जानकीरामभद्रौ। मिथश्चित्तवृत्तिं प्रति वासनाविशेषकारणञ्च तामुद्दीपयदुद्दीपनमित्युच्यते। अनयोरन्तरवस्थाऽपि यथाक्रममालम्बनमुद्दीपनमिति वा(चा)भिधीयते। परचित्तवृत्तिश्च नाध्यक्षा कथं लिङ्गादृते प्रतीयत इति कार्यभूता नयनत्रिभागावलोकनादयो लिङ्गभूयमापद्य तां गमयन्ति। न च प्रतिबन्धावधारणेऽनवस्था स्यादिति वाच्यं, स्वात्मनि प्रत्यक्षेण कार्यकारणभावावधारणसम्भवात्। कथमेकैव चित्तवृत्तिस्तत्र विचित्रस्मितरुदितादिकरी स्यादित्यत आह—तानि चेदिति। चेच्छब्दस्य च 'तत् कथ्यन्त' इति तच्छब्देन योजना। तदिति तदेत्यर्थः। नाट्यकाव्ययोरिति विषयसप्तम्या अ[ना]न्यत्रेति भावः। न च कारणादयो विभावादयश्चेत्येकं तत्वम्, इतरथा हि मुनिः कारणकार्यसहकारिसंयोगाद्रसनिष्पत्तिरित्येव ब्रूयात्।

## दीपिका

तत्रासंलक्ष्यक्रमे ध्वनौ प्रसक्ततयेति शेषः। स्वमान्तरं रूपं न तु रूढिकल्पितमिति भावः। कारणानीति-अथशब्दश्चार्थः कार्याणीत्यत्र योज्यः। यानीति कारणानीत्यादिभिः तानीति च विभावा इत्यादिभिः प्रत्येकमन्वीयते। लोके रामादिगतस्य स्थायिनोऽन्तरा भावोत्पत्तावप्यनवच्छिन्नवासनस्य यानि कारणान्यालम्बनानि सीताऽऽदीनि, उद्दीपनानि चोद्यानादीनि, तानि चेन्नाट्यकाव्ययोरभिनयशब्दविशेषाभ्यामुपनीयन्ते तत्तदा भावुकगतरसवासनान्तर्लीना रत्यादयो विभाव्यन्ते आस्वादाङ्कुरप्रादुष्करणयोग्याः क्रियन्ते एभिरिति विभावाः कथ्यन्ते। एवं कार्याण्यालिङ्गनादीन्यनुभावयन्ति परिपोषयन्तीत्यनुभावाः। सहकारिणि हर्षादीनि निजनिजविभावानुभावरसमुखेन दर्शितानि सन्ति विशेषेणाभिमुख्येनाचरन्तीति व्यभिचारिणः। किमतो यद्येवमित्याह-व्यक्त इति। तैः कारणादिर्भिर्विभावाद्यैर्विभावादिव्यपदेशानुगुणामवस्थामापन्नैर्वर्यक्तः प्रादुष्कृतः स्थायी प्रत्यभिज्ञायमानपूर्वरूपानुगमो रत्यादिर्भावो भाव्यते वास्यत इति वासनाऽऽत्मतया सहृदयहृदयलीनो रसः स्मृतयो ध्वनिकारमतानुसारिभिराम्नातः। व्यक्तो व्यक्तीकृत एव रसो, न तु रसः सन्व्यज्यत इति वदता रसस्य व्यक्तिरूपत्वाभिमतप्रतीतिशरीरानन्यत्वं सूचितम्। तदुक्तम् श्रीमल्लोचनकारपादैः-रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद् व्यवहार इति। यद्यप्यखण्डः काव्यार्थ इति नीत्या विभावनादिसम्भिन्नानुविद्धाङ्गरत्याद्यंशकर्बुरितस्वप्रकाशानन्दचमत्कार एव रसस्तथापि लौकिकदशाप्रसिद्धप्राधान्यप्रत्यभिज्ञानमाश्रित्य स्थायी रत्यादि रस इत्युक्तम्।

अस्यार्थस्य साम्प्रदायिकतामाह—उक्तं हीति—भरतेन तत्कृतशास्त्रे विभावानुभावव्यभिचारिणां योगात्परस्पररसाचिव्यलक्षणाद्रसनं रसस्तस्य निष्पतिः स्वत एवाविर्भावः। सात्त्विकानां तु स्तम्भादीनामनुभावतया तद्धेतूनाञ्च मुख्यतः सात्त्विकादिपदवाच्यानां सत्त्वाविर्भावविशेषाणां स्तम्भादितत्कार्योदयप्राचुर्यदर्शनेन तथैवाङ्गीकार्याणां व्यभिचारितयाऽपृथग्गणनम्।

## दर्पणः

स्वं वास्तवं स्वरूपम्। कारणानीति। लोके रामानुगतरत्यादेः स्थायिनोऽन्तरान्तरोत्पत्तैर्भावान्तरैरनुच्छिन्नवासनस्य यान्यालम्बनोद्दीपनतया कारणानि सीतादिचन्द्रादीनि, अथ कार्याणि कटाक्षभुजाक्षेपादीनि, सहचारीणि हर्षादीनि तानि नाट्ये अभिनये नाटकादौ, काव्ये श्रव्यरूपे महाकाव्यादावुपनिबद्धानि यथासंभवं विभावनादिव्यापारवत्तया, न तु संज्ञाभेदमात्रेण विभावादिशब्दव्यपदेश्यानि। तैश्च विभावाद्यैर्व्यक्तः व्यञ्जितः स्थायीभावो भाव्यते

वास्यत इति व्युत्पत्त्या वासनात्मतया सहृदयहृदयानन्दनो रसः । स्मृतो ध्वनिकारादिभिराम्नातः । अत्र विभावस्य व्यापारो विभावनम् । भावगतवासनान्तर्लीनस्य रत्यादेर्विशेषणश्चास्वादाङ्कुरणयोग्यतानयनम् अनुभावनम् । तथाभूतस्य तस्य परिपोषणं व्यभिचरणं विशेषेणाभिमुखे चरणम् । व्यक्तो व्यक्तीकृत एव रसः न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते । तदुक्तं लोचनकारैः—'रसाः प्रतीयन्ते इति त्वोदनं पचतीतिवत् व्यवहार इति । एतेन प्रतीतिशरीरमेव रस इति सूचितम् । अत्र यद्यपि मिलितो विभावादिः पानकरसन्यायेन चर्व्यमाणोऽखण्डरूप एव शरीरमेव रस इति सूचितम् । अत्र यद्यपि मिलितो विभावादिः पानकरसन्यासेन चर्व्यमाणोऽखण्डरूप एव रसस्तथापि लोकप्रसिद्धप्राधान्यप्रत्यभिज्ञानात्स्थायिभावो रस इत्युक्तम् । इह च सात्त्विकानामनुभाव रूपतया न पृथगुक्तिः । अत्रार्थे महर्षिसम्मतिमाह उक्तं हीति । भरते भरतप्रणीते शास्त्रे निष्पत्तिः अत एवाविर्भावः ।

## साहित्यचूडामणिः

अथ सर्वोत्तीर्णं रसध्वनिमालोचयितुमाह—रसस्वरूपमिति ।

कारणानीति । लोके दाम्पत्यादिव्यवहारे नाट्यकाव्ययोः दृश्यश्रव्ययोः । कविशक्त्या समर्प्यन्त इति चेत् तदा क्रमेण कारणानि विभावाः कार्याण्यनुभावाः सहाकारीणि व्यभिचारिण इति कथ्यन्ते । एतैर्व्यक्तः न पुनरुत्पादितो ज्ञापितो वा स्थायी भावो रसः स्मृतः । नाट्यकाव्ययोरित्यत्र काव्यशब्दो गोबलीवर्दन्यायेन श्रव्यमेवाचष्टे । यथाहुः—

**अनुभावविभावानां वर्णना काव्यमुच्यते ।**
**तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितः ॥** [व्य. वि १.]इति ।

यं कान्तादिमालम्ब्य रत्यादिश्चित्तवृत्तिविशेष उन्मिषति तद् आलम्बनं विभावः । लोके हि कारणमेवाभिधीयते न विभावः । यथाह—'विभाव इति विज्ञानार्थ' इति । येन वसन्तेन्दूदयादिना सोऽनुबध्यते तदुद्दीपनम् । य उत्पाद्यते रत्यादिः स स्थायी । यथोक्तम्—

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छद्यते न यः ।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥** [दशरू. ४.३४] इति ।

तत्र स्रक्सूत्रकल्पे यः सहकारितयोदेति स व्यभिचारी विविधमाभिमुख्येन चरतीति । स चोदयस्थित्यपायत्रिधर्मकः । सति स्थायिनि ये कटाक्षादयो विकाराः तेऽनुभावाः । यदाह 'यदयमनुभावयतीति वागङ्गाहार्यसत्त्वकृतोऽभिनयः तस्मादनुभाव' इति । लौकिकरसापेक्षया कार्यत्वमनुभावानाम् । तान्त्रिके तु रसे व्यञ्जकतया कारणकोटिप्रवेश एव । अनुभावविशेषा एवाष्टौ सात्त्विकाः । सत्त्वं मनः तत्प्रभवम्, यदवहितचित्तत्वादुत्पद्यते । यथोक्तम्—

**पृथग्भावा भवन्त्येतेऽनुभावत्वेऽपि सात्त्विकाः ।**
**सत्त्वादेव समुत्पत्तेस्तच्च तद्भावभावनम् ॥** [दश. ४.४] इति ।

विभावकारणादीनां काव्यलोकविषयतया विषयभेदः ।

तदुक्तम्—

**कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः ।**
**यथा स्फुरन्त्यमी काव्यान्न तथाध्यक्षतः किल ॥** [व्य. वि. १] इति ।

अत्र भरतसूत्रं संवादयति—उक्तं चेति ।

## सम्प्रदायप्रकाशिनी

कारणानीत्यादि । तैर्विभावादिभिर्व्यक्तः स्थायी भावो रसः स्मृतः । विभावादिभिरभिव्यञ्जितः स्थायी रत्यादिकश्चित्तवृत्तिविशेषो रस इति भरतमुनिना स्मृत इति युगलकसमन्वयः । यद्यपि क्षणिकस्य रत्यादिभावस्य न स्थायित्वं, तथापि विषयविशेषोल्लेखमन्तरेण सामान्यात्मनो वासनारूपस्य तस्येह विवक्षणादुपपद्यत एव स्थायित्वम् । ननु क एते विभावादय इत्यत आह—कारणान्यथेति । उदयलयधर्मिणो हि रत्यादेर्यल्लोके कारणं ललनोद्यानादि, यच्चाप्रत्यक्षस्य तस्य गमकं कार्यं भ्रूकटाक्षविक्षेपादि, यानि चास्य सहकारीणि हर्षौत्सुक्यादीनि तानि यदि काव्ये सन्दर्भ्येरन् नाट्ये वाभिनीयेरन्, तदा गुणालङ्कारमहिम्ना चतुर्विधाभिनयमहिम्ना च विभावनानुभावनाद्यतिशयविशेषादयाद् विभावानुभावादिव्यपदेशं लभन्ते । अर्थात् विशेषेण भावयन्तीति विभावाः । उक्तं हि मुनिना—

**'बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः ।**
**अनेन यस्मात् तेनायं विभाव इति संज्ञितः ॥'**

इति । एवमनुभावयन्तीत्यनुभावाः । व्यभिचरन्ति विशेषेणाभिमुख्येन चरन्तीति व्यभिचारिणः । नाट्यकाव्ययोरिति विषयसप्तमी । न ह्यन्यत्र गुणालङ्काराभिनयरूपवैशिष्ट्यवन्ध्ये विभावादिव्यवहारसम्भवः ।

उक्तार्थे प्रामाणिकसंवादं दर्शयति—उक्तं हीत्यादि । भरतसूत्रविवरणप्रपञ्चमुखेनैव युगलकार्थे विशदीचिकीर्षुराह—एतद् विवृण्वत इति । एतद् भरतसूत्रम् । विवृण्वते, आचार्या इति शेषः ।

## मधुमती

कारणानीति । कारणं तत्तद्रससमुचितं अङ्गना नवयौवनादि । कार्यं स्वेदादि । सहकारिणि चिन्तादीनि । ते यदा काव्येन नाट्येन—अभिनयेन वा प्रतिपाद्यन्ते, तदा विभावानुभावव्यभिचारिभावसंज्ञां लभन्ते इत्यर्थः । रत्यादेः स्थायिनः इत्यभेदान्वयः । तदिति । तदेत्यर्थः । क्वचित्तु 'अनुभावश्च' इति पाठः । तत्रापि चकारस्य अयमेवार्थः । अव्ययानां अनेकार्थत्वात् ।

अयमभिसन्धिः—लोके सरागस्य पुंसः तादृशः सुदृशो वा दर्शनश्रवणादिना मिथः प्रथमं युगपत् अयुगपद्वा प्रीतिः उत्पद्यते । तत्र रूपशीललावण्ययौवनतज्जन्यचेष्टाऽलङ्करणऋतुचन्द्रसमीरणादयोऽपि प्रीत्युत्पादकाः परस्परज्ञानस्य सहकारितां भजन्ते । ततश्च जातप्रीत्योः यूनोः मिथः अभिलाषः जायते । अमुमेव बाह्यरतिमाचक्षते । ततश्च मिथो लाभोपायं जिज्ञासमानयोः । चिन्ताग्लानिविपादादयः प्रादुर्भवन्ति ।

तदनुप्रीतिचिन्तादिजनिताः तदुभयोर्नायिका चेष्टाः जायन्ते । तदनन्तरं उपायारूढयोः स्वयं दूतादिना वा सति सङ्गमे, प्रीतिरनुर्वतते । चिन्तादयस्त्वपगच्छन्ति ।

तत्र प्रीतिः स्थायिभावः । चिन्तादयः व्यभिचारिणः । तदुभयप्रकाशिकाः चेष्टाः अनुभावाः । स्थायिनो विषयः आलम्बनविभावः । आलम्बनान्यस्थायिजनकालम्बनज्ञानविषयाः रूपशीलादयः उद्दीपनविभावाः । तद्वत्तया ज्ञातस्य आलम्बनस्य प्रीत्युत्पादकत्वात् । एवं च तद्वत्तया आलम्बन ज्ञानं जनकम् । 'इयं मम, अहं अस्याः' इत्यादिरूपं प्रीत्यादिनामकं ज्ञानं जन्यमिति विज्ञेयम् ।

इदं त्ववधातव्यम्—याः यौवनोद्भूताः चेष्टाः तासां उद्दीपने, याश्च प्रीत्यादिजनिताः तासां अनुभावे च अन्तर्भावः । प्रीतिजनकज्ञानविषयत्वा विशेषेऽपि युवानौ कारणमेव । तद्गुणादयस्तु कारणान्यपि उद्दीपकानि । अत एव सङ्गतयोरपि तत्तदालोकनात् चेतोविकारः जायते । उद्दीपनं च प्रीतेः अभिलाषे जनयितव्ये स्वलक्षणसहकारिसमवधानम् । न च अत एव उद्दीपकतया अन्यथासिद्धत्वात् न तानि कारणानीति वाच्यम् । प्रीतिजनकज्ञानविषयत्वेन आलम्बनरूपकारणत्वात्, सहकारित्या उद्दीपकत्वाच्च । एवं सर्वरसेष्वप्युन्नेयम् ।

इदानीं स्वाभिमतं पक्षं सिद्धवदाह—व्यक्तः इति । व्यक्तः—दध्यादिवत् रूपान्तरतां आपन्नः । नात्र घटदीपयोरिव पूर्वसिद्धयोः प्रत्याय्यप्रत्यायकभावतया, किन्तु—ज्ञानविषयीभूयैव अभिव्यक्तः इत्यर्थः । अत्र तैः व्यक्तः इत्येतावतैव सामाञ्जस्ये पुनः विभावादिग्रहणं 'नामी प्रत्येकं वशीभवितुमीशते, किन्तु मिलिता एव इति विभावयितुम् । एतच्च अग्रे स्फुटयिष्यति ।

स्वोक्ते वृद्धसंमतिमाह—उक्तं हीति । चत्वारो भरतटीकाकाराः । इति संयोगनिष्पत्तिपदयोः क्रमेण तेषां व्याख्यानमाह—एतदिति ।

## विस्तारिका

तत्र च तेषु मध्ये रसस्वरूपमाह, प्रथमोद्दिष्टत्वात् । स्वरूपमितरव्यावृत्तधर्मः । अथ चार्थे । लोके रत्यादेः स्थायिनोऽनुच्छिन्नप्रवाहस्य यानि कारणानि कार्याणि सहकारीणि च तानि काव्ये नाट्ये च यदि स्युः, तदा विभावा अनुभावा व्यभिचारिणः कथ्यन्ते, यथासंख्यमन्वयः । सर्वमिदमनूदितं लक्षणमाह—व्यक्तः स तैरित्यादि । विभावादिभिर्व्यक्तः स्थायिभावो रस इत्यर्थः ।

रामसीतादयः परस्परानुरागे परस्परं कारणानि, तदन्वयव्यतिरेकानुविधानात् । कटाक्षादयः कार्याणि, असति रत्यादौ तदभावात् । लज्जाहास्यादीनि सहकारीणि, न तत्कार्याणि; तेन विनाऽपि सम्भवेन व्यभिचारत् । न वा कारणानि, तदुत्तरत्वा नैयत्यात्, किन्तु स्वसामग्र्या प्रादुर्भवन्ति सन्ति रत्यादेरुपचायकानि भवन्ति । सामग्रीसम्पातेन रत्यादिभिः सहचरणात् तानि सहचारीण्युच्यन्ते । सहकारीणीति पाठे रत्याद्येकरूपस्य तत्तद्विचित्रस्मितरुदितकार्यजननायोगेन सामग्रीवैचित्र्यापादकानीत्यर्थः । नाट्यकाव्ययोरिति, काव्यपदं श्रव्यपरम्, नाट्यस्य पृथगुपादानात् ।

सामाजिकरत्यादिवासनाया उद्बोधो हि रसः, तस्याश्च रामादयो न कारणानि, असन्निहितत्वात् । कटाक्षादीन्यपि न कार्याणि, व्यधिकरणत्वात्, तेषामालम्बननिष्ठत्वात् । एवं सहचारिणामपि सामाजिकेष्वभावात् । किन्तु तैर्भावनायां प्रवर्तके सामाजिके बाह्यविषयेभ्यो व्यावृत्ते मनसि ज्ञानसुखात्मको रत्यादिः स्वयं प्रकाशते ।

ज्ञानोपनीता विभावादयोऽपि तद्विषया इति समूहालम्बनरूपता । विभावनम्, अनुभावनं सञ्चारणञ्च तस्य तस्य व्यापाराः, तैश्च रत्यादेरीषत्स्फुटतरः स्फुटतमश्च प्रकाश इत्याह—कथ्यन्ते इति । विभावनमनादिसामाजिकवासनान्तर्लीनरत्यादिवासनाया बहिःकरणम्; अनुभावनं तथाभूतस्य रत्यादेरास्वादाङ्कुरयोग्यताऽऽनयनम् सञ्चारणं तथाभूतस्य तस्यास्वादाङ्कुरप्रादुर्भावनम् ।

इत्थं व्यापारवैलक्षण्यादन्य एव विभावादिव्यपदेश्यः । 'स्थायी भावो रसः स्मृतः' इत्यादि । तत्त्वेऽस्य स्थायित्वे प्राप्ते स्थायिग्रहणं सान्तरेऽस्य सञ्चारित्वप्रतिपादनाय । तेन रतिहासक्रोधादीनां करुणशृङ्गारवीरादिषु सञ्चारित्वम्, तेष्वस्थिरत्वात् । अत एवोक्तम्—'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति । स्थायी रसः न तु सञ्चारी; तस्य स्थाय्यनुरोधेन बुद्बुदन्यायेनोन्मग्ननिमग्नस्वरूपत्वात् । स्थायिनः सर्वभावानुगतत्वात् । तदुक्तम्—

**स्रक्सूत्रभावादन्येषां भावनामनुगामुकः ।**
**न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥**

अभिनवगुप्तपादैरप्युक्तम्—'स्थायिरूपचित्तवृत्तिस्यूता एव व्यभिचारिणः ।' यथा हि रक्तनीलादिसूत्रे विरलविरलभावेन स्यूताः स्फटिककाचकाञ्चनपद्मरागमहानीलमरकतादयः स्वयञ्च विचित्राः सूत्रञ्च विचित्रयन्ति, तथैव नाना तदभिन्नाः स्थायिनमुपरञ्जयन्तीति । भावयतीति भावो वासनाख्यः, तेन निर्वासनेषु वैयाकरणादिषु न प्रसङ्गः । रसनं रस आस्वादः । व्यक्तो व्यक्तिमापन्नः स्वयं प्रकाशितः । तेनास्य सुखस्वरूपता स्वप्रकाशता च चिदानन्दब्रह्मप्रकाशेऽविद्यायास्तत्त्वज्ञानस्येव बाह्यविषयासङ्गस्यापगमाय विभावादेरपेक्षणीयत्वात् । तैरिति सहार्थे तृतीया । विभावदिभिर्व्यक्तः, तैर्विभावादिभिः सहेति समूहालम्बनरूपता ।

नन्वष्टौस्थायिभावाः, सात्त्विकः अप्यष्टौ, सञ्चारिणस्त्रयस्त्रिंशदिति 'एकोनपञ्चाशदमूंश्च भावा युक्त्या निबद्धाः परिपोषयन्ति' इति भावानामूनपञ्चाशत्त्वे सात्त्विकानां किमित्यगणनम् ? मैवम्; सात्त्विकानामष्टानां स्तम्भादीनामनुभावत्वेन न पृथक् परिग्रहः । स्मृतः आम्नातः ।

तत्र सम्मतिमाह—उक्तमिति । भरतेन तत्प्रणीतशास्त्रे । विभावादयो व्याख्याताः । संयोगः साहित्यम्, रसनं रस आस्वादः, निष्पत्तिः प्रकाशः ।

## सारबोधिनी

लक्ष्यदर्शनाकाङ्क्षायामाह तत्रेति । तत्र तेषु मध्ये प्रथमोद्दिष्टत्वादिति शेषः । कारणान्यथेति । अथश्चार्थे । व्यक्तः स इति । स्थायी रस इत्यर्थः ।

## काव्यप्रदीपः

रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ ४ ॥**

**विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ॥ ५ ॥**

अथेति समुच्चये । कारणानि प्रमदेन्दूदयादीनि कारकोद्दीपकरूपाणि । कार्याणि—

**'स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वैपथुः ।**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥**

वाङ्मनोबुद्धिशरीरारम्भरूपाणि च कटाक्षभुजक्षेपादीनि । सहकारीणि तेषु जनयितव्येषूत्कण्ठादीनि । विभावा आलम्बनोद्दीपनरूपाः । चेत् यदेत्यर्थः । तत् तदेत्यर्थः । यद्यप्युद्दीपकस्य स्थायिनि न कारणत्वम्, किं तूत्पन्ने तस्मिन्नीषदुत्कर्षाधायकत्वरूपमुद्दीपकत्वम् । तथाप्यनुद्दीपितोऽप्यजातप्राय एवेत्युद्दीपकेऽपि कारकत्वोपचारात्तत्रापि विभावव्यवहारः । विभावादिसंज्ञा च विभावनादिव्यापारयोगात् । तद्यथा—वासनारूपतया स्थितान्रत्यादीन्स्थायिनो विभावयन्ति रसास्वादाङ्कुरयोग्यतां नयन्तीति विभावाः । अनुभावयन्ति च तानित्यनुभावाः । पोषकतया विशेषेणाभितः काव्ये स्थायिनं चारयान्ति, विशेषेणाभिमुख्येन चरन्तीति वा व्यभिचारिणः । व्यक्तः स इति । व्यक्तिश्चर्वणेति पर्यायः । सा च विशेषणम् । तथाच व्यक्तिविशिष्ट एव स्थायी रसः । एवंच रसस्याकार्यत्ववचनं विभावादिभिः काव्योपस्थितैः स्थायिनो जननात् विभावादिकार्यताया एव प्रकृतत्वात् विशिष्टत्वस्य कार्यतानवच्छेदकत्वाद्वा । तस्मात्स्थायी न रसः किन्तु विभावादिमेलकम्, ब्रह्मैव वा । 'अन्यथा न कार्य इत्यादि ग्रन्थविरोधात्' इत्यादि प्रलपितमनादेयम् । स तैरिति । यस्य यानि कारणादीनि स तैस्तज्जातीयैरित्यर्थः । स्थायी विरुद्धैरविरुद्धैर्वा भावैरतिरस्कृत प्रवाहो भावः । यदुक्तम्—

**'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।**
**आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥'** इति ।

न चेयं कल्पना सूत्रकारस्य । उक्तं हि भरतेन-विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति ।

## काव्यप्रकाशखण्डनम्

तत्र रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहचारीणि यानि तु ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाढ्य-काव्ययोः ।** (मू. का. २७)

**विभावानुभावास्तत् कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥** (मू. का. २८)

'कारणानि' राम-सीतादीनि, परस्परनुरागे परस्परकारणानि, तस्योद्दीपनकारणानि उद्यानादीनि, अथश्चार्थे कटाक्षादीनि कार्य्याणि, लज्जा-हास्यादीनि सहचारीणि रत्यादेरुपचायकानि, सामग्रीसंपातेन रत्यादिभिः सहचरणात् । 'सहकारीणी'ति तु [प. १०.१] पाठे रत्यादेरेकरूपस्य तत्तद्विचित्रस्मितरुदितादिकार्यजननयोगे सामग्रीवैचित्र्यापादकानि ।

'विभावा' इति। ते तु द्विधा—आलम्बनविभावा नायिकादयः, उद्दीपनविभावा उद्यानादयः इति। ननु कारणादिशब्दसत्त्वे कथं विभावादिसंज्ञेति चेत्, उच्यते—सामाजिकनिष्ठरत्यादीनां आराध्यत्वेन ज्ञाता [:] सीतादयो, न ते कारणादयो येन तथा स्युः। तेषां च विभावानुभावसञ्चाराणां त्रयव्यापारवत्त्वाच्च, तथाविधसंज्ञाः, तेषां च व्यापाराणां रत्यादेरीषत्प्रकाशः स्फुटतरप्रकाशः स्फुटतमप्रकाशः फलम्। विगलितवेद्यान्तरत्वेन स्थितिः, पुरस्फुरणादिचमत्कारित्वं च। भाव इति भावयति वासयतीति भावो वासना तेन निर्वासनेषु श्रोत्रियादिषु न प्रसङ्गः।

## आदर्शः

'रसस्वरूपं' रसलक्षणम्। तत्र विभावाद्यैर्व्यक्तः स्थायिभावो रस इति रसलक्षणं कर्तुं विभावादि परिभाषां ग्राहयति—कारणानीत्यादिना व्यभिचारिण इत्यन्तेन। अन्यत्र सहकारिपदं कारणान्तरपरम्, अत्र तु रत्यादेः कार्य्य-विशेषपरमेव; रत्यादिस्वकारणव्यञ्जने शीघ्रकारितारूपात् सहभावात् तथा व्यपदेशः। तानि च निर्व्वेदादयस्त्रय-स्त्रिंशद्भावा वक्ष्यन्ते। रत्यादेरिति—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तताः॥**

इति वक्ष्यमाणस्थायिभावानामित्यर्थः। एवञ्च स्थायिनः स्थायिपरिभाषितस्य रत्यादेर्यानि कारणानि आलम्बनोद्दीपनरूपविशेषाः, यानि च कार्य्याणि गणयिष्यमाणत्रयस्त्रिंशत्कार्य्यभिन्नकार्य्यसामान्यम्, यानि च सह-कारीणि निर्व्वेदादयस्त्रयस्त्रिंशत्कार्य्यविशेषा लोके नाट्यकाव्यभिन्नलोकव्यवहारे कारणादितयैव श्रूयन्ते इति शेषः तानि चेन्नाट्यकाव्ययोर्व्यवह्रियन्ते इति शेषः, तदा यथासङ्ख्यं विभावा अनुभावा व्यभिचारणश्च कथ्यन्त इत्यर्थः। व्यभिचारिणां सञ्चारिपरिभाषाऽपि दोषोल्लासे व्यक्तीभविष्यति। अत्र च रत्यादेरित्युक्त्यैव निर्व्वाहे स्थायिन इति यदुक्तं तेन रसान्तरस्थायिभावस्य रसान्तरे स्थायिभावत्वं नास्ति किन्तु व्यभिचारित्वमेवेति ज्ञापितम्। एवञ्च हासक्रोधयोः शृङ्गारे तथात्वम्, एवमन्येषामप्यन्यत्र। एवं व्यभिचारिभावानामपि व्यभिचारिभावध्वनौ स्थायिभा-वत्वं सूचितम्। अग्रे च तद्द्वयमपि दर्शयिष्यामः।

इत्थं परिभाषां ग्राहयित्वा तद्घटितं रसलक्षणमाह—व्यक्तः स तैरिति, नाट्यकाव्ययोर्ज्ञातैः तैः विभावाद्यैः व्यक्तः ज्ञातः सन् स स्थायी भावः रत्यादिः रस इत्यर्थः। ज्ञातत्वञ्च क्वचिन्मते व्यञ्जनया, क्वचिन्मते अनुमानानन्तरं साक्षात्कारेण, क्वचिन्मते त्वनुमाननिरपेक्षेण साक्षात्कारेण, क्वचिन्मते तु व्यञ्जनानन्तरं साक्षात्का-रेणेति तत्र तत्र मते व्यक्तीभविष्यति। भरतेनेति भरतप्रणीतनाट्यशास्त्र इत्यर्थः। अत एव तस्य प्रकृतग्रन्थत्वाभावाद ग्रन्थकृतेति नोक्तम्। संयोगादिति एकज्ञानविषयीभावरूपान्मिलनादित्यर्थः, मिलितैरेव तै रसबोधजननस्य वक्ष्य-माणत्वात्।

## सुधासागरः

तत्राऽसंलक्ष्यक्रमव्यङ्ग्यविषये रसस्वरूपमाह—'कारणान्ये'ति।

अयमर्थः। अथशब्दः समुच्चये। कारणानि प्रमदेन्दूदयपवनवसन्तर्त्तुकुसुमसमीरणसुगन्धदीनि कारकोद्दीपकरूपाणि। कार्याणि—'स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु, प्रलय इत्यष्टौ

सात्त्विका मताः' इति। वाङ्मनोबुद्धिशरीराऽऽरम्भरूपाणि च कटाक्षभुजाक्षेपादीनि। सहकारीणि—तेषु जनयितव्येषूत्कण्ठादीनि। विभावा आलम्बनोद्दीपनरूपाः। चेत् यदेत्यर्थः। तत् तदेत्यर्थः।

यद्यप्युद्दीपकस्य स्थायिनि न कारणत्वं किन्तूत्पन्ने तस्मिन्नीषदुत्कर्षाधायकत्वरूपमुद्दीपकत्वन्तथाप्यनुद्दीपितोऽप्यजातप्राय एवेत्युद्दीपकत्वेऽपि कारकत्वोपचारात्तत्राऽपि विभावव्यवहारः। विभावनादिसंज्ञा च विभावादिव्यापारयोगात्। तद्यथा—वासनारूपतया स्थितान् रत्यादीन् स्थायिनो विभावयन्ति रसास्वादाङ्कुरयोग्यतां नयन्तीति विभावाः। अनुभावयन्ति च तानित्यनुभावाः। पोषकतया विशेषेणाऽभितः कार्ये स्थायिनं चारयन्ति विशेषेणाऽऽभिमुख्येन चरन्ति वा व्यभिचारिणः'। व्याख्यातं च सारबोधिनीकारैः—अथ विभावः,

**बहवोऽर्था विभाव्यन्ते वागङ्गाऽभिनयाश्रिताः।**

**अनेन यस्मात्तेनाऽयं विभावः परिकीर्त्तितः॥ (ना० शा० ७)**

**आलम्बनन्तु स रसो यमालम्ब्य प्रवर्त्तते।**

**उद्दीप्यते रसो येन च चोद्दीपनसंज्ञकः॥**

अथ चाऽनुभावाः—

स्थायिभावाननुभावयन्तः कटाक्षभुजक्षेपादयो रसपोषका अनुभावाः। अतएव भरतः—'अनुभावो विकारस्तु भावसंसूचनात्मकः' इति। (दशरू० ४.३) सात्त्विका अप्यष्टौ स्तम्भादयोऽनुभावरूपा एवेति न पृथगुक्ताः।

अथ व्यभिचारिणः,—

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।**

**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥ (दशरू० ४.७)**

वस्तुतो विभावनाऽनुभावनसञ्चारणात्मकव्यापारत्रयत्वमेव विभावादित्वम्। तेषां व्यापाराणां रत्यादेरीषत्प्रकाशः स्फुटतरप्रकाशः स्फुटतमप्रकाशः फलमिति। अतएवाऽलौकिक-विभावनादिव्यापारवत्त्वादिति वदद्भिः श्रीवाग्देवतारैर्वृत्तिकारैः विभावनाऽनुभावनसञ्चारणव्यापारवत्त्वं विभावनाऽनुभावनसञ्चारिलक्षणं कटाक्षितमिति ध्येयम्।

व्यक्त इति। व्यक्तिश्चर्वणेति पर्यायः। सा च विशेषणम्। तथा च व्यक्तिविशिष्ट एव स्थायी रसः। नन्वन्तःकरणवृत्तिविशेषस्य रत्यादेरभिव्यक्तावेव कथं परमानन्दस्वरूपरसोद्बोध इति चेत् उच्यते।

काव्ये हि विभावादिभिर्व्यज्यते स्थायी। तस्यां चाभिव्यक्तावन्तःकरणवृत्तिरूपायां चैतन्याऽऽनन्दस्वरूप आत्माऽपि भासते। वेदान्तिनये सर्वस्मिन्नेव ज्ञाने आत्मभाननैयत्यात्। आत्मनो योगघटिताया आत्मभानसामग्र्याः सत्त्वात्। सर्वस्यैव कल्पितत्वेन रङ्गे इदं रजतमित्यत्रेव आत्मचैतन्यरूपाऽधिष्ठानानुबोधसम्भवाच्च। अज्ञातस्याऽऽत्मनो भानं विना प्रत्यक्षादीनां प्रामाण्याऽनुपपत्तेश्च। तथाहि—अज्ञातज्ञापकत्वं हि प्रामाण्यम्। अज्ञानविषयश्चाऽऽत्मैव तथा चाऽऽत्मा चेन्न भासेत कथं तेषां प्रामाण्यमिति। तथा च काव्यदर्शनश्रवणमहिम्ना

उक्तयाऽभिव्यक्त्या चैतन्यस्याऽऽनन्दांशे आवरणभङ्गोऽपि क्रियते। तथा च रत्याद्यवच्छिन्नं चैतन्यमानदन्दांशे भग्नावरणतयाऽऽनन्दरूपतया प्रकाशमानं रस इति निर्गलितोऽर्थ इति। आवरणन्त्वज्ञानमेव। ज्ञानान्तरे त्वानन्दांशे आवरणभङ्गाभावान्न रसोद्बोधः। अतएव वक्ष्यति चर्व्यमाणतैकप्राण इति। चर्वणा त्वानन्दांशाऽभिव्यक्तिः। न च कथं सैव ज्ञानान्तरे न भवतीति वाच्यम्। विभावादिज्ञानाभावात्। अतएव वक्ष्यति—विभावादिजीवितावधिरिति। अस्यां चाभिव्यक्तौ विभावादिसम्भेदोऽप्यावश्यकः। लिङ्गोपहितलिङ्गिभानवदिति। अतएवोक्तम्—'स्वादः काव्यार्थसम्भेदो ब्रह्मानन्दसमुद्भवः' इति। पानकरसन्यायेन इत्यादि वक्ष्यति च श्रीवाग्देवतावतारः स्वयमपीति दिक्।

एवञ्च स्थायी न रसः किन्तु ब्रह्मैव। अन्यथा न कार्य इत्यादि ग्रन्थविरोधादित्यादिप्रलापमात्रमनादेयम्। विशेषान्तरमपि वक्ष्यामः।

केचित्तु विभावादिभिर्भावनायां प्रवर्त्तिते सामाजिके बाह्यविषयेभ्यो व्यावृत्ते मनसि ज्ञानसुखात्मको रत्यादिः स्वयं प्रकाश्यते। चिदानन्दस्वरूपब्रह्मप्रकाशेऽविद्यायास्तत्त्वज्ञानस्येव बाह्यविषयसम्बन्धस्याऽपगमाय विभावादेरपेक्षणीयत्वादिति वदन्ति। ते पुनरालङ्कारिकसर्वस्वायितं श्रीवाग्देवतावतारादृतं रसस्य व्यङ्ग्यत्वं समुद्रमध्ये क्षिपन्तो वन्दनीया एव।

स तैरिति। यस्य यानि कारणादीनि स तैस्तज्जातीयैरित्यर्थः।

स्थायीति। विरुद्धैरविरुद्धैर्वा भावैरतिस्कृतप्रवाहो भावः स्थायी। यदुक्तम्—

**विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।**
**आनन्दाऽङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥** इति।

श्रीवत्सलाञ्छनभट्टाचार्यैरपि व्याख्यातम्—'आप्रबन्धं विरुद्धाऽविरुद्धभावैरविच्छिन्नश्चित्तवृत्तिसन्तानविशेषः स्थायीत्यर्थः। न च तस्याऽऽशुविनाशित्वेन कथं स्थायित्वमिति वाच्यम्। वासनारूपतया सूक्ष्मरूपेणाऽवस्थानसम्भवादिति।

अन्येऽप्याहुः—

**विरुद्धैरविद्धैर्वा भावैर्विच्छिद्यते न यः।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥** इति।

रविभट्टाचार्यैरप्युक्तम्—

**चिरं चित्तेऽवतिष्ठन्ते सम्बन्ध्यन्तेऽनुबन्धिभिः।**
**रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते॥** इति।

भावत्वन्तु वर्णनीयमयीभवनयोग्यव्यापारविषयत्वमिति प्रतीमः।

सूत्रे भरतसम्मतिमाह—'उक्तंहि भरतेने'ति।

## विवरणम्

रसस्वरूपे निरूपणीये विभावादिपदसङ्केतो ग्राहणीयः। तमगृहीत्वा—'व्यक्तः स तैर्विभावाद्यैः' इति वाक्यार्थस्य बौद्धुमशक्यत्वादित्याशयेन कारणानीत्यादि सार्धकारिकया विभावादिपदार्थं निर्वक्ति। तस्मिन् निरुच्यमाने लोकवृत्तव्युत्पत्तिरपि दर्शिता भवति। अर्थेति वाक्यान्तरोपक्रमे भिन्नक्रमः। अथ कारणानीति वाक्यशरीरम्। चकारोऽपि तथा, तेन सहकारीणि च यानीति फलति। रत्यादेरित्यनेनैव स्थायित्वे लब्धे 'स्थायिनः' इत्युपादानं तु क्वचिद् रत्यादेर्व्यभिचारितामवगमयति। तदुक्तम्—

**'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति।**

**तेन हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एवेति सिध्यति।**

लोक इत्यनेन ललनोद्यानादि रत्यादिकारणमित्यादिलोकवृत्तगोचरा व्युत्पत्तिर्विभावादिना रत्यभिव्यञ्जने सहकारिणीति प्रतीयते। नहि प्रमदा रतिकारणमित्यजानतो मुनेः कदाचन रत्युल्लासः।

तानि चेदिति। नाट्यं नाम चतुर्विधोऽभिनयः—आङ्गिको वाचिक आहार्यः सात्त्विक इति। तत्राङ्गिकोऽभिनयः—

**'धूतं विधूतमाधूतमवधूतं च कम्पितम्'**

इत्यादिदिशा शरीरचेष्टा। साऽपि सङ्गीतविद्यासङ्केतितार्थबोधने शब्दवत् प्रमाणम्, सङ्केतवत्त्वाविशेषात्। वाचिकोऽभिनयः पदप्रयोगः। आहार्यो वेषविशेषपरिग्रहः। स च कृतिवसनचन्द्राकाररेखाविशेषादिः शिवादेरर्थस्योपस्थापकः। सात्त्विको रोमाञ्चादिः। स चान्तराणां भावानां ज्ञापकः' तथा च यत्र वाचिकोऽभिनयो 'गौरीयम्' इत्यादिः, वेषविशेषो वा पुरोवर्तिनं परिगृहीतकुमारीवेषं नटं पार्वतीति बोधयति। द्वितीयनटस्तु त्रिलोचनादिवेषेण शिव इति बोधितः। स च प्रत्यक्षोपस्थितचेष्टाविशेषवशेन 'तामुद्दिश्य कटाक्षं विक्षिपतीति प्रतीयते। एतावान् बोधो हालिकश्रोत्रियादिसाधारणः। ततश्च लोकवृत्तचातुर्यस्वरूपप्रतिभावतां नटशिवयोरभेदाध्यवसायसहकारेण शिवत्वेनोपस्थिते पार्वतीत्वोपरक्तनटान्तराभिमुखकटाक्षविक्षेप्तरि नटे तच्चेष्टयाऽभिहितस्य व्यञ्जितस्य वा सहकारिण औत्सुक्यादेर्वैशिष्ट्यमवगम्यते। तदेव पदार्थाभिनयो नाम नृत्यमित्यभिधीयते। तादृशपदार्थाभिनयगोचरतैव नाट्यारूढत्वम्। एवम्—

**प्रसभप्रसृतैः किञ्चित् कुञ्चितैः स्निग्धपक्ष्मभिः।**
**वीक्षाम्बभूव वैदेहीं कटाक्षैर्लक्ष्मणाग्रजः॥**

इत्यत्र विलक्षणकटाक्षकरणकवैदेहिकर्मकदाशरथिकर्तृकदर्शनेऽवगते कटाक्षप्रसभप्रसरणादेर्वाच्यस्य नियन्त्रणेऽप्यनियन्त्रितत्वादिकं वैशिष्ट्यमवगम्य तत्सहकृतेन वाच्यार्थेनौत्सुक्यादिसहकारिभिर्विशिष्टः पूर्ववाक्यार्थः प्रतीयते। स एव काव्यारोही यद् व्यञ्जितसहकारिभवोपरक्तयोः कार्यकारणयोरवगमः। अयं च व्यभिचारी व्यङ्ग्यो लक्ष्यक्रम एव। नह्ययमास्वादस्वरूपः, पूर्वं साधारणीकरणव्यापारालाभेन सामाजिकसमवेतभावानामनुद्बोधात्। अत एव—

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥**

इत्यत्र कुमारीणामधोमुखकमलदलगणनस्य कौतुकादपि सम्भवेन नाहत्यैव लज्जावहित्थयोर्व्यञ्जनम्, किन्तु प्राचीनतपश्चर्याऽनुसन्धानद्वारैवेति लक्ष्यक्रम एवासाविति ध्वनिकृदपि स्वीचकार। **अलक्ष्यक्रमस्तु**—एतस्माद् वाक्यार्थबोधात् तृतीयक्षणे जायमानः साधारणीकृते विभावे व्यभिचारिणामुल्लासः। **रसमहार्णवेऽपि**—'वाक्यार्थभूमिकायां क्वचिद् विश्रान्तिः' इति यदुक्तम्, तत्र स्थायिभूमिकानारोहमात्रे तात्पर्यम्।

नाट्यकाव्ययोरिति, आरूढानीति शेषः। तत् तदा। **कथ्यन्त इति**। तथा च विभावानुभावव्यभिचारिपदानां नाट्यकाव्यारूढत्वे सति कारणकार्यसहकारित्वानि यथायोगं प्रवृत्तिनिमित्तानीति भावः। **व्यक्त इति**। तैरित्येतावता विभावादिप्राप्तौ विभावाद्यैरित्यभिधानं। विभावादिप्रवृत्तिनिदानस्य काव्यारूढत्वस्य स्थायिभावाभिव्यञ्जकतालाभाय। तैर्व्यक्तो विभावादिभिः सह चर्व्यमाण इत्यपि वदन्ति।

युज्यते चैतत्। तदाह भरतः—'यथा गुडादिद्रव्यैर्व्यञ्जनौषधिभिश्च षाडवादयो रसा निष्पद्यन्ते, तथा नानाभावोपनिपाते स्थायिनो भावा रसत्वमाप्नुवन्ति' इति। षाडवस्तु—

**दध्यादिव्यञ्जनैश्चिञ्चाहरिद्रादिभिरौषधैः।**
**मधुरादिरसोपेतैस्तद्वद् द्रव्यैर्घृतादिभिः ॥**

युक्तैः पाकविशेषेण षाडवाख्यो रसः स्मृत। इति निरुक्तः।

स्थायीभाव इत्यनेन प्रथमं भावत्वेनास्वादः। ततस्तत्समुत्थास्वादान्तरविषयो रस इति प्रतीयते। तेन स्थायिभावा स्वादात्मकद्वितीयभूमिकाविश्रान्ते भावे रसाभासे च नातिप्रसङ्गः। न वा—

**एकन्तो रुअइ पिआ अण्णन्तो समरतूरणिग्घोसो।**
**विज्झाइअं सबलिया भडस्य दिट्ठी पुरो जलइ ॥**

इत्यादौ युगपदवभासमानयोरत्युत्साहभावयोरतिव्याप्तिः।

स्मृत इति यदुक्तं तदेव स्मरणं दर्शयति—उक्तं चेति। मुनिनेत्यनेन मुनिप्रवक्तृकं वचनं स्मृतिरिति दर्शितम्।

एतद्विवृण्वते। 'विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचित्तो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपसंधानान्नर्त्तकेऽपि प्रतीयमानो रसः' इति भट्टलोल्लटप्रभृतयः।

---

## सङ्केतः

### [तत्र भट्टलोल्लटादिमतम्]

एतत् इति भरतमुनिसूत्रम्। विभावैरिति। वागङ्गसत्त्वाभि नयात्मिकाः स्थाय्यादिचित्तवृत्तयः विभाव्यन्ते—विशिष्टतया ज्ञायन्ते सभ्यैः एभिः कृत्वा इति विभावाः। अनुभावैरिति। वागङ्गसत्त्वाभिनयैः चित्तवृत्तिरूपं अर्थं अनुभवन्तः अनुभाव्यन्ते—साक्षात्कार्यन्ते जनाः एभिः इति अनुभावाः। ते चात्र न रसजन्या ग्राह्याः। तेषां रसकार्यत्वेन गणनाऽनर्हत्वात्। अपि तु स्थायिनामेव ये अनुभावाः। व्यभिचारिभिरिति। विविधं आभिमुख्येन स्थायिधर्मोपजीवनस्वधर्मार्पणाभ्यां चरन्तीत्येवंशीलाः व्यभिचारिणः। अथवा—व्यभिचरन्ति रसाद्युपयोगेन जन्ममध्ये न सर्वथा भवन्त्यपीत्येवंशीलाः। निर्वेदादिभिः सहकारिभिरिति। चित्तवृत्तीनां क्रमभावित्वात् व्यभिचारिरूपाः चित्तवृत्तयः यद्यपि स्थायिरूपचित्तवृत्तिभिः समं न सहकारितां यान्ति। तथापि व्यभिचारिचित्तवृत्त्युदये स्थायिचित्तवृत्तीनां वासनात्मतया सद्भावात् स्थायिभिः सह व्यभिचारिणः सहभाविनः। प्रतीयमानो रसः इति। अयं भावः—विभावैः जनितः अनुभावैः प्रतीतिं नीतः व्यभिचारिभिः उपचितः मुख्ययया वृत्त्या अनुकार्ये तद्रूपतानुसन्धानात् अनुकर्तर्यपि प्रतीयमानः स्थायी भावः रसः इति। विभावानुभावव्यभिचारिसंयोगात् स्थायी परिपुष्टः रसतां यातीति तात्पर्यम्।

## सङ्केतः (रुय्यकः)

रसनिष्पत्तिरितिलोल्लटमते कार्यकारणभावेन ज्ञाप्यज्ञापकभावेन पोष्यपोषकभावेन यथाक्रमं, विभावादिभिस्त्रिप्रकारः सम्बन्धः संयोगः। अत एव निष्पत्तिरिति त्रिविधैवात्र पक्षे व्याख्येया। ततश्चानुकार्ये सम्भवन् स्थायिभावः पुष्टतया स्थितो मुख्यतया रसः। अपुष्टस्तु स्थायी (?), नर्त्तके तूपचारेण रसस्थितिरिति।

## बालचित्तानुरञ्जनी

एतदेव सूत्रं रसस्य केचित् उत्पत्तिपरत्वेन व्याकुर्वन्तीत्याह एतदिति। अत्रोत्पत्तिपक्षं तावदवतारयति विभावैरिति। वागाद्यभिनययुक्ता स्थायिव्यभिचारिरूपाश्चित्तवृत्तयो विभाव्यन्ते विशेषेण भाव्यन्ते यैस्ते विभावाः। तत्र कामीत्यादि। आलम्बनकारणत्वेनालम्बनविभावः। उद्यानादि उद्दीपनत्वेनोद्दीपनविभावः द्विविधैस्तैः स्थायी कार्यकारणभावसंबन्धादुत्पादितः। अनुभावयन्ति ज्ञापयन्ति गम्यगमकभावसंबन्धादिकमित्यनुभावास्तैः

ज्ञाप्यमान: विविधम् आभिमुख्येन रसेषु चरन्तीति व्यभिचारिण: । तै: पोष्यपोषकभावसम्बन्धादुपचित: मुख्यवृत्त्या रामादावनुकरणीये रामादिरूपानुसन्धानादनुकर्तरि नटेऽपि सामाजिकैरास्वाद्यमानो रस उच्यत इत्यर्थ: ।

अस्मिन् उत्पत्तिपक्षे आलम्बनस्य रसं प्रति जनकत्वेऽपि तदीयस्य जनकत्वमुद्दीपकत्वहानि: । नापि पोषकत्वं व्यभिचारिणामिव अन्यत्रापि व्यञ्जकत्वमभिव्यक्तेर्भट्टलोल्लटादिभिरनङ्गीकारात् । नापि ईषदतिशयाधानहेतुत्वमुद्दीपकत्वम् । 'जनित' इति नापि पदाविरोधात् । इत्थमनूद्यानुमितिपक्षमवतारयति ।

**काव्यादर्शः**

**बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मका: ।**
**अनेन यस्मात् तेनायं विभाव इति संज्ञित: ॥**

स च स्थाय्यात्मकरत्यादेरुत्पत्तौ कारणं, ललनादिकमर्थमालम्ब्य रत्यादीनामुत्पत्ते: । ललना आलम्बनकारणं, उद्यानवसन्तेन्दूदयादि तूद्दीपनकारणम् । अनुभावैरिति । सामाजिक: स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषमनुभवन्ननुभाव्यते साक्षात्कार्यते यै: ।

**वागङ्गसत्त्वाभिनयैर्यस्मादर्थोऽनुभाव्यते ।**
**वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृत: ॥**

व्यभिचारिभिरिति । विविधमाभिमुख्येन रसेषु चरणशीलैस्तै: उपचित इति । तेनानुपचितावस्थ: स्थायी भावो, विभावादिभिरुपचितावस्थस्तु रस: । स चोभयोरपि नटव्यतिरिक्तमाधारमपेक्षते, किन्तु अनुकार्याभिमतं नर्तकम् । आस्वादयिता तु सामाजिक इत्याह—नर्तकेऽपीति । तेनानुभावै: प्रतीतिपदं नीतो व्यभिचारिभिरुपचितो मुख्यवृत्त्यानुकरणीये रामे रामादिरूपतानुसंधानबलाद् अनुकर्तर्यपि नटे प्रतीयमान इति भाव: । किं तु प्रागवस्थाभाव: स्थायी, रसीभवति तु क्रमेणोपचित इत्युक्तं, तत्रापि विपर्ययो दृश्यते, यत इष्टजनवियोगाद् विभावादुत्पन्नो महान् शोक: क्रमेणोपशाम्यति, न तु दार्ढ्यमुपैति । क्रोधोत्साहरतीनां च निजनिजकारणबलाद् उद्भूतानामपि कालवशादमर्षस्थैर्यसेवाविपर्ययेऽपचयो दृश्यते । तस्मान्नैव भावपूर्वकत्वं रसस्य, अपि तु तद्विपर्यय एवेति लोल्लटादिव्याख्या निरस्ता ।

**विवेकः**

अतएव च रसभावादीनामनुमेयत्वं न सम्भावनीयं विभावादीनां भिन्नलक्षणत्वात् । तथाहि ये लोके रामादिगतचित्तवृत्तिविशेषहेतव: सीताऽऽद्या: केचित्त एवाभिनयविशेषैरुपदृश्यमाना: सन्दर्भविशेषैर्वा समर्थ्यमाना: सन्तो विभाव्यन्ते भावा एभिरिति कृत्वा विभावा इत्युच्यन्ते । तदिह विभावो विज्ञानार्थ: । विभावितं विज्ञातमित्यनर्थान्तरं, यदाहाचार्य: (ना.शा. १ ।४) बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रया: । अनेन यस्मात्तेनायं विभाव इति संज्ञित इति । ये च तेषां कार्यभूत: कटाक्षादयोऽर्थास्त एव काव्यादावुपदृश्यमाना: सन्तोऽनुभावयन्ति तांस्तान् भावानिति कृत्वाऽनुभावा इत्युच्यन्ते । यदाह (ना. शा. ७ ।५ पृ.)—'यदयमनुभावयति वागङ्गसत्त्वकृतानभिनयांस्तस्मादनुभाव इति' । तच्चित्तवृत्ति(ते)स्तन्मयीभवनमेव ह्यनुभवनम् । ये च तेषामन्तराऽन्तराऽनवस्थायिनोऽवस्था-

विशेषास्तदवान्तरहेतुजनिता. उत्पद्यन्ते त एवं स्वैः स्वैर्विभावादिभिरभिव्यज्यमानाः सन्तो विशेषादाभिमुख्येन चरन्ति वर्तन्ते तेषु तेषु भावेष्विति व्यभिचारिण इत्युच्यन्ते । यदाह—'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः । स्थायिन्युन्मग्नानिर्मग्नाः कल्लोला इव वारिधौ ॥ (द.रु. ४-७) अतएव प्राधान्यान्नानाभावोपगतास्वपि स्थायिन एव भावा रसत्वमाप्नुवन्ति । यदाह (ना. शा. ७ ।८)—'यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः । (४२३) एवं हि सर्वभावानां भावः स्थायी महानिह ॥ स्थायिनामेव भावानामुपकाराय सर्वदा । वर्तन्ते सात्त्विका भावा भावाश्च व्यभिचारिणः ॥' इति ॥ तदित्थमेभिर्विभावादिभिरभिव्यक्तः स्थायी भावत्व-(रमत्व) मापद्यमानो रसीभवतीति । तदुक्तम्—'योऽर्थो हृदयसंवादी तस्य भावो रसावहः (रसोद्भवः) । शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥' (ना. शा. ७ ।७) इति । एतच्च तत्रभवता भरतमुनिना सूत्रितम्—विभावेत्यादि । तत्र भट्टलोल्लटादीनां मते कार्यकारणभावेन [ज्ञाप्यज्ञापकभावेन] पोष्यपोषकभावेन यथाक्रमं विभावादिभिस्त्रिप्रकारः सम्बन्धः संयोगः । अतएव निष्पत्तिरपि त्रिधैवात्र पक्षे व्याख्येया । ततश्चानुकार्ये सम्भवन् स्थायिभावः पुष्टतया स्थितो मुख्यतया रसः । अपरिपुष्टस्त्वस्थायी । नर्तके तूपचारेण रसस्थितिरिति ।

## दीपिका

सम्प्रति स्वसिद्धान्तव्यवस्थां दर्शयितुमस्य भारतीयसूत्रस्याचार्य्यदेशीयदर्शितव्याख्यानतुच्छताप्रकटन-पूर्वकसम्प्रदायव्याख्यानप्रकर्षणायोपक्रमते-एतदिति । आलम्ब्यन्ते विषयीक्रीयन्त इत्यालम्बनानि ललनाऽऽदयः, उद्दीपयन्त्युद्बोधयन्तीत्युद्दीपनान्युद्यानादयस्तानि चोभयानि स्वरूपोद्बोधयोः कारणानि । आलम्बनोद्दीपनानि च तानि कारणानि चेति कर्मधारयः । उपचित इति सञ्चारिभिरन्तराऽन्तरोत्पन्नैर्हि रसादि विच्छिद्यते । किन्तर्हि गूढैर्गाढीक्रियते । नर्त्तक इत्युपलक्षणम्, काव्यनाटकेऽपि ज्ञेयम् । प्रभृतय इति तत्सामानशीलपरिग्रहः ।

## दर्पणः

संप्रत्यत्र भारतीयसूत्रे आचार्यदेशीयव्याख्यानं तुच्छताप्रकटनपूर्वं सांप्रदायिकव्याख्यानं प्रदर्शयितुमारभते एतदिति । विवृण्वते । समनन्तरं भट्टलोल्लट-श्रीशङ्कुकादयः । आलम्बनकारणानि । उद्दीपनकारणानि उद्यानादीनि । उक्तं हि—

**आलम्बनं स तु रसो यमालम्ब्य प्रवर्त्तते ।**
**उद्दीप्यते रसो येन स चोद्दीपनसंज्ञकः ॥** इति ॥

नटेत्युपलक्षणम् । काव्ये नाट्येऽपि ज्ञेयम् । इदं भट्टलोल्लटादीनां मतं न समीचीनम् । तदुक्तं मम साहित्यदर्पणे—

**पारमित्याल्लौकिकत्वात् सान्तरायतया तथा ।**
**अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत् ॥** इति ॥ ३-१८

## साहित्यचूडामणिः

विभावानुभावेत्यादिसूत्रे संयागानिष्पत्तिशब्दयोर्व्याख्यातृविप्रतिपत्तिं प्रकटयन्नादौ लोल्लटादीनां मतमुन्मीलयति विभावैरिति। आलम्बनं ललना पुरुषो वा। उद्यानमन्दानिला उद्दीपनम्। स्थायिनो विभावैः सह जन्यजनकभावः संयोगः। 'प्रतीतियोग्य' इति। अनुभावैः सह गम्यगमकभावः, तद्व्यतिरेक तस्यासत्कल्पत्वात्। योग्यत्वं स्थायिनो रसभावौचित्यम्। निर्वेदादिभिः वक्ष्यमाणैस्त्रयस्त्रिंशद्व्यभिचारिभिरुपचितः। व्यभिचारिभिः सह स्थायिन उपचाय्योपचायकभावः सम्बन्धः। एवं विभावादित्रये तस्य त्रयः संयोगाः। रसप्रतिष्ठास्थानमाह—'मुख्यतये'-ति। 'अवस्थानुकृतिर्नाटयमिति' रामादावभिनेतव्ये रसो मुख्यया वृत्त्या प्रतीयते। सादृश्यमात्रभीवितया तु गौण्या नटेऽपीत्याह—'तद्रूपते'-ति।

## सम्प्रदायप्रकाशिनी

तत्र लोल्लटादीनां विवरणप्रकारमुपन्यस्यति—विभावैरित्यादि। रत्यादयो हि भावा ललनादिकमालम्ब्य जायन्त इत्युत्पादकं कारणमालम्बनविभावः। उद्यानादिना तूद्दीप्यन्त इति स उद्दीपनविभावः। जातोऽप्यनुद्दीपितः सन्नजातप्राय एव। अतः कारणद्वयेनापि जननमेव निष्पाद्यत इत्यभिप्रेत्य जनित इत्युक्तम्। अनेनास्य मते विभावैः सह स्थाथिनो जन्यजनकभावः सम्बन्धः उक्तः। अनुभावैस्तु सह गम्यगमकभाव इत्याह—अनुभावैरित्यादि। प्रतीतियोग्य इति। अप्रत्यक्षोऽपि गमकैः कार्यैः प्रतीतियोग्यतां नीत इत्यर्थः। व्यभिचारिभिस्तु सह पोष्यपोषकभाव इत्याह—व्यभिचारिभिरित्यादि। ते निर्वेदादयस्त्रयस्त्रिंशद् दर्शयिष्यन्ते। सहकारिभिरुपचित इति पोष्यपोषकभावः प्रदर्शितः। एतेनास्य मते विभावापेक्षया स्थायिनो जन्यजनकभावः सम्बन्धः सूत्रसंयोगशब्दार्थः अनुभावापेक्षया गम्यगमकभावः व्यभिचार्यपेक्षया तु पोष्यपोषकभाव इति बोद्धव्यम्। निष्पत्तिशब्दार्थोऽप्यनयैव भङ्ग्या त्रिरूपः—उत्पत्तिर्ज्ञप्तिः पुष्टिश्चेति। मुख्यया वृत्त्या रामादाविति। उभयत्र दत्तपदा हि रससंविद् अस्य मते स्थायिनः साक्षात् सम्भवादनुकार्ये, तद्रूपतानुसन्धानात् तन्मयीभूतेऽनुकर्तरि च। भट्टेति। प्रस्थानप्रणयनादाचार्यत्वमस्याविष्करोति।

## मधुमती

भट्टलोल्लटप्रभृतयः इति सम्बन्धः। व्यभिचारिभिश्चेति। अत्र—'निर्वेदादिभिः इति अतद्गुणसंविज्ञानो बहुव्रीहिः। तेन ग्लान्यादिभिः इत्यर्थः बोद्धव्यः। निर्वेदस्य रसान्तरानुपकारकत्वात्। निर्वेदे च तस्य स्थायित्वात्' इति केचित्। तन्न। निर्वेदस्य रसान्तरनुपकारित्वे 'व्यभिचारित्वेऽपि स्थायित्वाभिधानार्थम्' इति विरुद्ध्येत। किञ्च—

**'न हि सुलभवियोगा कर्तुमात्मप्रियाणि**
**प्रभवति परवत्ता, शासने तिष्ठ भर्तुः।**
**अहमपि तव सूनावद्य विन्यस्य राज्यं**
**विचरितमृगयूथान्याश्रयिष्ये वनानि॥'**

इत्यादौ ऊर्वशीविरहशीङ्किनः पुरूरवसः सत्यपि निर्वेद, पुनर्नारदागमनेन तल्लाभनिश्चये सत्यां रतौ निर्वेदापगमेन, तद्व्यभिचारित्वानुभवात् । तस्मात् यत्र रसे यो व्यभिचारी सम्भवति तै उपचितः इति यथाश्रुत एवार्थः । काव्यमधिकृत्याह—मुख्ययेति । अभिधयेत्यर्थः । अनुकार्ये प्रतीयमानः इति अग्रेतनेन सम्बन्धः ।

इदमत्राकूतम्—लौकिकसामग्र्युत्पन्न एव रसः मुख्यः । स च रामस्य पुरैव सीतागोचरज्ञानेन रतिरूपो जनितः, अनुभावेन प्रतीतः,व्यभिचारिभिश्च पुष्टः । न त्विदानीं क्वाप्यन्यत्र जन्यते प्रतीयते वा, सामग्रीविरहात् । किन्तु—इदानीं पदार्थसंसर्गवत्तात्पर्यानुगामिन्या अभिधयैव रामादिनिष्ठं काव्येन प्रतीयते इति । यदाहुः—तात्पर्य चतुरादृतम् इति । वक्ष्यति च वृत्तिकार एव पञ्चमोल्लासे पूर्वपक्षग्रन्थे—'सोऽयमिषोरिव' इत्यादिना ।

एतेन—'न रामादौ अनुकार्ये रसः उत्पद्यते, तस्य तदानीं असत्त्वात्, नाप्यनुकर्तरि नटे, अभिनयाविष्टाचित्तत्वात्, सीतादीनां अतदालम्बनत्वाच्च । न सामाजिके, अत एव सामाजिकत्वाविशेषेण ग्राम्यविरक्तयोः तत्प्रसङ्गाच्च' इत्यादि निरस्तम् ।

नाट्यमधिकृत्याह—तद्रूपतेति । अनुकरणीयरामादिरूपतानुसन्धानबलादित्यर्थः । तथाच—तद्रूपारोपात् तन्निष्ठरसारोपो नटे इति भावः । क्वचित् 'नर्तकेऽपि' इति पाठः । तत्रापि नटेऽपीत्येवार्थो बोद्धव्यः । नर्तकस्य पदार्थाभिनेतृतया वस्त्वनुकर्तरि नटे तदसम्भवात् ।

एवं च—विभावरसयोः कार्यकारणभावः, अनुभावरसयोश्च प्रत्याय्यप्रत्यायकभावः, व्यभिचारिरसयोश्च पोष्यपोषकभावः सम्बन्धः । निष्पत्तिरपि उत्पत्तिज्ञप्तिपुष्टिभेदात् त्रिरूपैव । तथा च इदं सूत्रं एकतया आपाततः प्रतीयमानमपि उक्तयुक्तया त्रितयमिति ज्ञेयम् ।

वस्तुतस्तु—उक्तयुक्तया कारणैः कार्यैः सहकारिभिः इति वृत्तिस्वरसाच्च प्रकृतसूत्रस्य भट्टलोल्लटमते लौकिकरसपरत्वनिर्णये व्यभिचारिसहकृतस्य स्थायिनः अनुभावहेतुतया आर्थेन क्रमेण शाब्दः क्रमः लङ्घ्यते । तथाच—विभावात् स्थायिनः उत्पत्तिः, व्यभिचारिणश्च स्वलक्षणसहकारिसमवधानरूपा पुष्टिः, अनुभावात् प्रतीतिः इति प्रकृतसूत्रार्थः अस्य मते पर्यवस्यति ।

## विस्तारिका

एतद्विवृण्वते भट्टलोल्लटप्रभृतय इति योजना । विभावैरित्यादि । आदिपदं ललनोद्यानयोः प्रत्येकमन्वेति । तेन नायकस्य कोकिलकूजितादेश्च परिग्रहः । आलम्बनान्युद्दीपनानि च । तानि कारणानि, आलम्बनस्य विषयत्वेन कारणत्वमुद्दीपनस्य धर्मिणि किन्त्वपचय एवेति । तदुक्तम्—'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये' इति द्विधा कारणता । तदुक्तमग्निपुराणे—

**विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।**
**विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः ॥** इति ।

जनितोऽसन् उत्पादितः प्रतीतियोग्यः, कार्यस्य कारणज्ञापकत्वात् । उपचितो गाढगाढीकृतः । मुख्यया वृत्त्या साक्षात् सम्बन्धेन । अनुकार्ये प्रतिकृतौ । तद्रूपता सादृश्यम् । अनुसन्धानं ज्ञानम् । नर्तक इत्युपलक्षणं काव्यपाठकेऽपि, अभिनयसम्पादितानां विभावादीनां नटेऽसम्भवः । प्रतीयमानः, अर्थात् सामाजिकैः; नटः पात्रमेव ।

तदुक्तम्—'सामाजिकास्तु लिहते रसं पात्रं नटो मतः' इति। लोके मुखरागादिदर्शनानुमिता रत्यादयो नटेऽपि प्रतीयमाना रसा इति ताडितार्थः। अयं पक्षो न साधुः, अदृष्टानुकार्यमुखरागदीनां तु रसोदयप्रसङ्गात्। अनुकारस्य तज्ज्ञापकत्वेऽन्योन्याश्रयापत्तेः। किञ्च, प्रतीयमान इति कीदृशी सामाजिकप्रतीतिः, न मानससाक्षात्कारः, असन्निकर्षात्।

## सारबोधिनी

अयमभिसन्धिः। काव्ये हि विभावादिभिर्व्यज्यते स्थायी। तस्यां चाभिव्यक्तावन्तःकरणवृत्तिरूपायां चैतन्यानन्दस्वरूप आत्मापि भासते। वैदान्तिनये सर्वस्मिन्नेव ज्ञाने आत्मभाननैयत्यात्। आत्ममनोयोगघटिताया आत्मभनसामग्याः सत्त्वात्। सर्वस्यैव कल्पितत्वेन रङ्गे इदं रजतमित्यत्रेव आत्मचैतन्यरूपाधिष्ठानानुवेद्यसंभवाच्च। अज्ञातस्यात्मनो भानं विना प्रत्यक्षादीनां प्रामाण्यानुपपत्तेश्च। तथाहि। अज्ञातज्ञापकत्वं हि प्रामाण्यम्। तथाचात्मा चेन्न भासेत कथं तेषां प्रामाण्यमिति। तथाच काव्यदर्शनश्रवणमहिम्ना उक्तयाभिव्यक्त्या चैतन्यस्यानन्दांशे आवरणभङ्गोऽपि क्रियते। तथाच रसाद्यवच्छिन्नं चैतन्यमानन्दांशे भग्नावरणतया आनन्दरूपतया प्रकाशमानं रस इति निर्गलितोऽर्थ इति। ज्ञानान्तरेत्वानन्दांशे आवरणभङ्गाभावान्न रसोद्बोधः। अत एव वक्ष्यति 'चर्व्यमाणतैकप्राण' इति। चर्वणात्वानन्दांशाभिव्यक्तिः। न च कथं सैव ज्ञानान्तरे न भवतीति वाच्यम्। विभावादिज्ञानाभावात् अत एव वक्ष्यति 'विभावादिजीवितावधिः' इति।

## काव्यप्रदीपः

एतद्विवृण्वते भट्टलोल्लटप्रभृतयः—'स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद्यव्यभिचारिणा पोष्यपोषकभावरूपात्संबन्धाद्रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः। तथाहि ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः, व्यभिचारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये रसः। नटे तु तुल्यरूपतानुसंधानवशादारोप्यमाणः सामाजिकानां चमत्कारहेतुः' इति तदपेशलम्। सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधात्। न च तज्ज्ञानमैव चमत्कारहेतुः। लौकिकशृङ्गारादिदर्शनेनापि चमत्कारप्रसङ्गात्। न चानुभावादिविज्ञानबलायात आरोपस्तथा न तु साक्षात्कारमात्रमिति वाच्यम्। चन्दनसुखादौ वैपरीत्यदर्शनात्। अन्यथैवोपपत्त्या तादृशकल्पनायां मानाभावाच्च।

## आदर्शः

विवृण्वत इति भट्टलोल्लटप्रभृतय इत्यग्रेऽन्वयः। विवरणञ्च न लक्षणार्थस्य किन्तु विभावादिभिर्ज्ञापनप्रकारस्यैवेति बोध्यम्। तत्र विभावादिभिर्व्यज्यमानत्वमुपपादयितुं विभावादीनां तेषु सम्बन्धं ग्राहयति—विभावैरिति। 'ललना' आलम्बनरूपं कारणम्, नायकानुरागात्मनो रतेस्तामवलम्ब्यैवोत्पत्तेः; नायिकारतौ तु नायक आलम्बनम्, 'उद्यानादि'रुद्दीपनं कारणम्, जायमानाया रतिधारायास्तेनोत्तरोत्तरमुद्दीपनात्; ललनोद्यानाद्योर्यथासङ्ख्यमालम्बनोद्दीपनान्वयः। जनित इत्यत्र च भवतीति शेषः, 'कार्य्यकारणत्वस्वरूपसम्बन्धप्रदर्शने जननातीतत्व प्रदर्शनानौचित्यात्। कटाक्षभुजाक्षेपावत्र नायकस्यैव ललनालम्बनप्रदर्शनेनात्र नायकरतेरेवोपक्रान्तत्वात्, ललना-

कटाक्षादेश्च तदकार्य्यत्वात् । भुजस्य तत्राप्त्यनुकूलचेष्टैवाक्षेपः । अत्रापि 'कृत' इत्यत्र भवतीति शेषः । कार्य्यकारणभावसम्बन्धेन पूर्व्वत्र कारणस्य 'कार्य्यज्ञापकत्वम्, इह तु कार्य्यस्य कारणरत्यादिज्ञापकत्वमुक्तम् । निर्व्वेदादिभिरिति वक्ष्यमाणैस्त्रयस्त्रिंशता कार्य्यविशेषैरित्यर्थः । अत्रापि उपचितो भवतीति शेषः, उपचयश्च शीघ्रप्रत्यायनमेव । न चैवमेषामन्यापेक्षया शीघ्रप्रत्यायकत्वे मिलितानामेव रत्यादिप्रत्यायकत्वमिति वक्ष्यमाणसिद्धान्तः कथमुपपत्स्यते इति वाच्यम् एषामेकैकस्य प्रतीतौ योऽन्यतमद्वयाक्षेपो वक्ष्यते तस्य शीघ्रत्वेन रत्यादेरपि शीघ्रप्रत्यायनात्, अन्येषान्तु केवलानां प्रतीतौ विलम्बेनान्याक्षेपात् रत्यादिबोधेऽपि विलम्बनात् । नाट्याभिप्रायेणाह—मुख्ययेति वास्तव्येत्यर्थः । 'नर्त्तके' अनुकारके । काव्ये तु रामादावेवेति बोध्यम् । 'प्रतीयमानः' व्यज्यमानः । इत्थं व्यञ्जनया रामादौ सामाजिकैः प्रतीयमानो रत्यादी रस इत्युक्तम् : रामः सीताविषयकरतिमानित्याकारकज्ञानसम्बन्धेन सामाजिकवृत्तित्वादेव सामाजिका रसवन्तः ।

## सुधासागरः

एतदित्यादि । विवृण्वते—भट्टलोल्लट—श्रीशङ्कुक—भट्टनायक—अभिनवगोपानसीगुप्तपादाश्चत्वारोभरतटीकाकारा इति सम्बन्धः । अत्रेदं बोध्यम् । चतुर्णां क्रमेणोत्पत्तिरनुमितिर्भुक्तिरभिव्यक्तिश्चेति मीमांसान्यायसांख्यालङ्कारमतप्रधानाश्चत्वारः पक्षाः तत्राऽऽद्यं प्रदर्शयति—विभावैरित्यादि । स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद् व्यभिचारिणा पोष्यपोपकभावरूपात् सम्बन्धाद्रसस्य निष्पत्तिरुत्पत्तिर्ज्ञप्तिः पुष्टिश्चेत्यर्थः । तथाहि—ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः व्यभिचारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये रसः । नटे तत्तुल्यरूपताऽनुसन्धानवशादारोप्यमाणः सामाजिकानां चमत्कारहेतुरिति भट्टलोल्लटानुयायिनामाशयः ।

अत्रेदं रहस्यम् । लौकिकसामग्रीतो रामादावेव रसस्य निष्पत्तिः । सा चैतन्मते त्रिविधा—विभावैरुत्पत्तिरनुभावैर्ज्ञप्तिर्व्यभिचारिभिः पुष्टिरित्येवं भेदात् । स रसो नटादौ सादृश्यानुसन्धानवशात् सामाजिकैरारोप्यमाणश्चमत्करोतीति । न पुनरिदं रमणीयम् । सामाजिकेषु तदभावे तत्र चमत्काराऽनुभवविरोधात् । न च तज्ज्ञानमेव चमत्कारहेतु । लौकिकशृङ्गारादिदर्शनेनाऽपि चमत्कारप्रसङ्गात् । नचाऽनुभावादिविज्ञानबलाऽऽयात आरोपस्तथा न तु साक्षात्कारमात्रमिति वाच्यम्, चन्दनसुखादौ वैपरीत्यदर्शनात् । अन्यथैवोपपत्या तादृशकल्पनायां मानाभावाच्च ।

## विवरणम्

विभावैरिति । स्थायिभावजनकत्वे सति साधारणीकरणव्यापारविषयत्वं विभावपदप्रवृत्तिनिमित्तम् । तत्र स्थायिभावो रत्यादिः । स च वासनास्वरूपः । तत्र विषयीभूय समवायीभूय च नायकादयो जनकाः ।

उद्दीपनानि तु कानिचिदालम्बनगुणादीनि तत्र प्रयोजकानि । तथा हि—रूपयौवनचेष्टाविशेषालङ्करणादिविशिष्टमालम्बनं दृष्ट्वा जायमानसुखस्य पुंसो या 'नायिका सुखसाधनम्' इति बुद्धिः, सा वासनास्वरूपेण परिणता रतिरित्युच्यते । तस्यां च नायिका गुणा अपि साक्षात्कारद्वारा प्रयोजकाः । तटस्थोद्दीपनानि कालदेशादीनि

तामेव वासनां स्मरणरूपेण परिणमय्य सवासनान्तरनिष्पत्तिद्वारा द्रढयन्ति। सैव हि वासनाया रतेरुद्दीप्तिः, यत् स्मरणपरिणामो दृढीभावः। सा च दृढीकृता रतिरभिलाषं प्रसूते। स एव ज्ञानवद् वासनारूपेण स्थिरावस्थितो रतिरित्यपरे। अभिलाषो बाह्या रतिः, अन्तरङ्गं तु विज्ञानवासनैव। बाह्यरतिस्तु व्यभिचारिष्वन्तर्भवति, परिगणनस्य प्रायिकत्वादित्यन्ये।

अपरिहृतविशेषयोः कारणकार्ययोर्व्यञ्जितव्यभिचारिसंवलनमेव काव्याद्यारोहः। यदाह धनिकः—'एवमयमेवमियमित्यतिशयोक्तिरूपकाव्यव्यापाराहितविशिष्टरूपवत्तया ज्ञायमानो विभाव्यमानो विभावः' इति। तत्र विशिष्टं रूपं व्यभिचारिभावानामुपादाननिमित्तकारणत्वादि। ज्ञायमानो विभाव्यमान इत्युभयोपन्यासो विभावयतेर्ज्ञानार्थकत्वद्योतनाय। अत एव—'विज्ञानार्थोऽसौ विभावः' इति भरतः। तत्र विभावपदप्रवृत्तिनिमित्तेषु काव्यारोहभागः स्वरूपसन्नेव रतिस्मारकः। कारणांशस्तु प्रतिभास्वरूपसंस्कारविषय एवापेक्ष्यते। यद्रूपावच्छेदेन च रतिकारणता पूर्वं गृहीता, तद्धर्मावच्छिन्नगोचरं ज्ञानमधुनाऽपेक्ष्यते। स च धर्मो नायिकासु रूपयौवनसम्पदादिः, उद्यानादौ कुसुमसम्पदादिः। तदेव रूपं ललनोद्यानादिभिरित्यनेन निर्दिष्टम्। स्मारकस्य ललनोद्यानादेः स्थायिनः स्मार्यस्य च सम्बन्धो जनित इत्यनेन प्रदर्शितः।

कारणैरिति तु प्रतिभाविषयधर्मप्रदर्शनमपि विभावविभागवाक्येऽन्तर्भूतमिति नास्य वैयर्थ्यम्। एवमनुभावपदस्यापि स्थायिकार्यत्वे सति काव्यारूढत्वं प्रवृत्तिनिमित्तम्। तत्र काव्यारोहः स्वरूपसन्नपेक्ष्यत इति न विवृतः।

प्रतिभाविषयान् धर्मानाह—कार्यैरिति। स्थायिभावा हि हितसाधनतावासनास्वरूपरत्यादयः सङ्गमाभिलाषमुत्थाप्य (सङ्गमोपायेषु प्रवर्त्य) वाग्बुद्धिशरीरारम्भाननुभावान् भावयन्ति। यद्धर्मावच्छेदेन कार्यत्वं प्रतिभाविषयः, ते धर्माः कटाक्षेत्यादिना दर्शिताः। तैः सार्धं स्थायिनः सम्बन्धस्तु प्रतीतियोग्यः कृत इत्यनेन दर्शितः। प्रतीतिरनुमितिः, तद्योग्यकरणं व्यापकता, सैव रतिवासनासङ्गमाभिलाषमादौ, ततः सङ्गमोपायचिन्ताम्, अथ तदलाभे विषादम्, अनन्तरं कुञ्जाभिसरणमुपाय इति मतिम्, अतः परमनेकविधानारम्भान् जनयतीत्यनुभावे जननीये रत्यादीनामभिलाषचिन्तादयः सहकारिणः।

व्यभिचारिपदप्रवृत्तिनिमित्तं तु काव्याद्यारूढत्वे सति स्थायिभावसहकारित्वम्। तत्र काव्यारोहः स्वरूपेण सहकारिता प्रतिभाविषयतया, निर्वेदत्वादिरधुना ज्ञायमानतया। उपचित इति स्मारकत्वसम्बन्धेनोपयुज्यते। उपचयस्तु कार्ये जननीये व्यापारसम्पत्तिः।

इत्येतावता प्रबन्धेन काव्यारूढैर्विभावानुभावव्यभिचारिभिर्जनकजन्यसहकारिभिर्निरुक्तसंसर्गैः स्थायिभावः स्मार्यत इति साधितम्।

तत्त्रितयजनिता स्मृतिस्तु रामः सीताविषयकरतिमानित्यौपादानिकं बोधं जनयतीत्याह—मुख्ययेति। अभिधयेत्यर्थः। उपस्थित इति शेषः। अभिधया रामपदेनोपस्थिते रामे विभावाद्याक्षिप्ताया रतेर्भानमिति रामादावित्यत्र च्छेदः। नाट्याभिप्रायेण त्वाह—अनुकार्ये इति। अनुकरणेनाभिनयेनोपस्थिते रामादावित्यर्थः। इदन्तु 'रामोऽस्मि सर्वं सहे' इत्यादिवाचिकाभिनयेन रामस्योपस्थितिपक्षे। चित्रतुरगन्यायेन रामत्वेन नटस्यैवाङ्गिकाद्य-

भिनयादुपस्थितिपक्षे त्वाह—तद्रूपतेति। तेन लौकिको रस एव विभावानुभावव्यभिचारिभिः स्वीयस्वीयसंयोगैः काव्ये नाट्ये च निष्पाद्यते स्मार्यतेऽनुकार्यानुकरणयोः प्रत्याय्यते चेति सूत्रार्थः।

अत्र कारणकार्यसहकारिभिः काव्यनाट्यानारूढैरपि रत्यादेः स्मरणम्, आलम्बने तदारोपश्च सम्भवतीति काव्यनाट्यारूढत्वं न तत्रोपयुज्यते। विभावादीनामेकमेनापि सम्बन्धिन्या रतेः स्मरणसम्भवान्नियमतस्त्रितयापेक्षा न स्यात्, न स्याच्च व्यभिचारिस्थायिभावादीनां स्वशब्देनोपादानं दोष इत्यस्वरसः।

यत्तु सामाजिकरत्यादेरनुल्लासे चमत्कारो न स्यात्। अन्यथा लौकिकशृङ्गारादिदर्शनादपि तदवगमप्रसङ्गादिति तदस्वरसोद्भावनम्, तद् वक्ष्यमाणश्रीशङ्कुकमतेऽपि तुल्यत्वादुपेक्षणीयम्।

वस्तुसौन्दर्यं सामाजिकवासनया चर्व्यमाणत्वं चात्रापि वक्तुं शक्यमिति। अथ चित्रकरनटकवीनां व्यापारैर्धर्मतः स्वरूपतश्च पिण्डीकृतः, परमार्थतः पृथग्भूतोऽर्थः प्रतीयते। विशेषदर्शिनोऽपि हि संस्थानविशेषतुरगत्वयोस्तुरगरेखयोश्च व्यासक्तप्रकारताविशेष्यताकां बुद्धिमनुभवन्ति।

राम एवायम् अयमेव राम इति 'न रामोऽयम्' इत्यौत्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा न वायमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशय-सादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे

**'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।**
**मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥२५॥**

**दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च।**
**अविरलविलोलजलदः कालः समुपागतश्चायम्' ॥२६॥**

इत्यादिकाव्यानुसंधानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः 'संयोगात्' गम्यगमकभावरूपात् अनुमीयमानोऽपि वस्तुसौन्दर्य-बलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भाव-स्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।

---

सङ्केतः

[२ श्रीशङ्कुकमतम्]

एतन्नेति श्रीशङ्कुकः। तथाहि—विभावाद्ययोगे स्थायिनोऽवगमः न घटते, अवगमकस्याभावात्। न हि धूमं विना पर्वतस्थः अग्निः अवगम्यते। अपि च—'स्थायिनः संयोगात् रसीभवन्ति' इत्येतद्यदि मुनेर्मतं स्यात्, तदा स्थायिभावानां उद्देशं लक्षणं च आदावेव अभिदध्यात्। अथ च आदौ रसानां उद्देशलक्षणे अभिहिते। कुतश्च रसानामेव विभावानुभावान् विस्तरेण पूर्वमुक्त्वा, तानेव स्थायिनां लेशेन पुनराह? । न चोत्पत्तौ पदार्थानां कारणं उक्त्वा, पुष्यतां पुनः तदुत्पत्तौ कारणं वक्तव्यम्। वैयर्थ्यात्। किञ्च—'अनुपचितः स्थायी भावः, उपचितो रसः स्यात्' इत्युच्यमाने, एकैकस्य स्थायिनः मन्द-मन्दतर-मन्दतमादिविशेषापेक्षया आनन्त्यं स्यात्। एवं रसस्यापि तीव्र-तीव्रतर-तीव्रतमादिभेदस्य असङ्ख्यत्वं प्रसज्यते। अथ—'उपचयं प्राप्त एव रसः' इत्युच्यते, तर्हि स्मित हसित-विहसिताद्याः षड्भेदाः हास्यरसस्य न स्युः। अपरं च—'प्रागवस्थो भावः स्थायी, रसीभवति तु क्रमेणोप-

चितः' इत्यत्रापि व्यत्ययः दृश्यते, यस्मात्—इष्टवियोगजः महान् शोकः क्रमेण शाम्यत्येव, न तु दृढीभवति, एवं क्रोधोत्साहरतयश्च निजनिजकारणोद्भूता अपि कालवशात् अमर्षस्थैर्यसेवाविपर्यये अपचीयन्त एव । तस्मात् न भावपूर्वकत्वं रसस्य, अपि तु तद्विपर्यय एव । यदाह मुनिः—'रसपूर्वकत्वं भावानाम् । भावपूर्वकत्वं तु रसस्य विषयविशेषापेक्षया । तथाहि—प्रयोगे अनुकर्तरि रसं आस्वादयतां अनुकार्ये भावप्रतीतिः जायते इति प्रथमपक्षोत्थानम् । लोके तु भावदर्शनात् तत्स्वरूपरसनिष्पत्तिः इति द्वितीयः पक्षः' इति ।

वयं तु ब्रूमः—अत्र मते—लौकिकस्य साक्षात् रामादिगतस्य रसस्य, लोकोत्तरस्य च नाट्यादिप्रत्येयस्य सभ्यरसनीयस्य च नान्तरं किमपि विभाव्यते । अन्यच्च—नटे अनुकर्तरि यदि रसः स्यात्, तदा तस्य लयाद्यननुसरणं प्रसज्येत । नटेन च विभावाद्यैः काव्यशिक्षादिप्रकाशितैः अनुकार्यगताः विभावादय एव अनुक्रियन्ते, न त्वनुकार्यगतो रसः, परचित्त वृत्तीनां अलक्ष्यमाणत्वेन अनुकर्तुं अशक्यत्वात् इति । तस्मात् अन्यथोच्यते—राम एवायमिति । अत्र आद्ये रामस्य प्राधान्यम् । इदमर्थस्य तु द्वितीये । अनेन उल्लेखयुगलेन सम्यक्प्रतीतिः उक्ता । रामोऽयं इति प्रतीतिः मिथ्या, न रामोऽयं इत्येवंरूपबाधस्य औत्तरकालिकस्य समुदयादित्यर्थः । चित्रेति । चित्रचित्रिन्तेततुरगदृष्टानेत्यर्थः । तदाह—

**"प्रतिभाति न सन्देहः न तत्त्वं न विपर्ययः ।**
**धीरसावयवमित्यस्ति नासावेवायमित्यपि ।।**
**विरुद्धबुद्ध्यसम्भेदात् अविवेचितविप्लवः ।**
**युक्त्या पर्यनुयुज्येत स्फुरन् अनुभवः कया ? ।।"**

इति । अत्र विरुद्धाः—सन्देहरूपाः । अविवेचितविप्लवः—असंविज्ञातानेकरूपत्वावभासः । प्रतीत्येति । इयं च लोकोत्तरा नटग्राहिका प्रतीतिः ।

काव्यानुसन्धानेति । अत्र प्रथमात् काव्यात् रामोक्तत्वेन अनुस[illegible]त् आलम्बनविभावः । द्वितीयात्तु कारणरूपः उद्दीपनविभावः प्रकाश्यते । शिक्षाभ्यासेति । यथोपदेशं परिशीलनेन हि स्थायिकार्याः कटाक्षादयः अनुसन्धीयन्ते । न हि अशिक्षितः अनभ्यासी च नटः रोमाञ्चस्वेदाद्यनुभावाभिनयक्षमः । अभ्यासेन निर्वर्तितं यत् व्यभिचारिकार्याणां कृत्रिमनिजानुभावानां प्रकटनं तेन । निर्वेदादयो हि व्यभिचारिणः स्वस्वरुदिताद्यनुभावस्वरूपकार्यकारिणः सर्वेऽपि प्रत्येकं भवन्त्येवेति, व्यभिचारिणःअनुसन्धेयाः । स्थायी तु काव्यबलादपि नानुसन्धेयः । 'रतिः शोकः' इत्यादयो हि शब्दाः रत्यादिकं अभिधेयीकुर्वन्ति अभिधानत्वेन, न तु वाचिकाभिनयरूपतया अवगमयन्ति । न हि वागेव वाचिकम्, अपि तु तया निर्वृत्तम्, अङ्गैः आङ्गिकमिव । तेन—

**'विवृद्धात्माऽप्यगाधोऽपि दुरन्तोऽपि महानपि ।**
**बाडबेनेव जलधिः शोकः क्रोधेन पीयते ।।'**

इत्येवमादौ न शोकोऽभिनेयः, अपि तु अभिधेय एव । कृत्रिमैरपीति । नाट्यकाले मुख्यरामाद्यभावात् कृत्रिमत्वम् । तथा कृत्रिमतया । संयोगात् सम्बन्धात् । सम्बन्धमात्रेऽपि संयोगशब्दः प्रयुज्यते । स चात्र गम्यगमकभावात्मा । तत्र रसः गम्यः, विभावादिः गमकः । वस्तु रसरूपम् । रसनीयत्वेन कषायफलचर्वणपर-पुरुषदर्शनप्रभव-मुखप्रसेककलनाकल्पया रसनीयस्वरूपतया अन्येभ्यः अनुमीयमानेभ्यः विलक्षणः । सम्भाव्यमानः इति ।

हेत्वादिदर्शने सति 'हेतुमदादिभिर्भाव्यम्' इति सम्भावना। तत्र नटे वस्तुतः असन्नपि सामाजिकानां सभ्यानाम्। मुख्यरामाद्यनुगतस्थाय्यनुकरणरूपः, अत एव नामान्तरेण व्यपदिष्टः रत्यादिः रसः। तथा च रतिः अनुक्रियमाणा शृङ्गारः, हासः अनुक्रियमाणः हास्य रसः इत्यादि सिद्धम्। मिथ्याज्ञानादपि अर्थक्रिया परं स्यादेव। यदाह धर्मकीर्तिः—

**'मणिप्रदीपप्रभयोः मणिबुद्ध्याऽभिधावतोः।**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥'** इति॥

## सङ्केतः (रुय्यकः)

श्रीशङ्कुकमते तु कारणकार्यसहकारिणो लोके गमकत्वेन प्रसिद्धा नाट्ये कृत्रिमत्वेन चमत्कारहेतुत्वादलौकिकविभावादि व्यपदेशभाजः सूत्रे निर्दिष्टाः। तैरवस्तुसम्भविनोऽपि स्थायिनो गम्यगमकभावलक्षणः सम्बन्धः संयोगः। ततो रसस्य निष्पत्तिः प्रत्येयतयैवावस्थितः। सा चानुकर्तृविषया सामाजिकसम्बन्धिनी चोभयतो दत्तपादा हि रससंवित्। तत्रानुकर्त्रा(?) रामत्वेन प्रतीतौ रसः(?) संविद्विषयः। रामदेवत्वेन(?) च प्रतीतिः काचित् सम्यक्। साऽपि द्विविधा। राम एवायमित्यन्यरूपत्वव्यावृत्त्यामेका, अयमेव राम इत्यप्रत्यक्षत्वव्यावृत्त्या द्वितीया। द्विविधाऽपि सा नेह स्थिता, अवधारणगर्भक्षीणप्रतीतेः। काचित् पुनर्मिथ्या यत्र रामोऽयमिति प्रतीतावोत्तरकालिको न रामोऽयमिति बाधकप्रत्ययोद्भवः। साऽपि प्रकृते न स्थिता, बाधकप्रत्ययासंवेदनात्। काचित्तु दोलायमानोभयकोटिसंस्पर्शेन संशयप्रतिपत्तिस्वभावा। संशयोऽपि द्विविधः, रामोऽन्यो वेति विशेषसंशय एकः, रामः स्यान्न वेति सत्ताश्रितः (सत्तास्मृतः?) संशयो द्वितीयः। तत्राद्योऽतिस्थूलत्वेनासम्भाव्यत्वान्नाशङ्कितः, द्वितीयस्तु संभावितोऽप्यसंवेद्यत्वान्निराकृतः। काचित्तु सादृश्यप्रतीतिर्यथा रामसदृशोऽयमिति। सा सदृशवस्तुद्वयप्रतीतिपूर्विका भवन्ती तदभावादिह नास्ति। एवं सम्यङ्मिथ्यासंशयसादृश्यप्रतीत्यभावेऽपि रामोऽयमित्यवच्छेदपरिहारेण प्रतीतिचतुष्टयाभावेऽपि चित्रतुरगे तुरगोऽयमितिवद्व्यवस्थिता प्रतीतिरनपह्नवनीयत्वाल्लोकोत्तरतामेव प्रकाशयति, अतश्च सामान्यरूपतया रामत्वेन प्रतिपन्नेऽनुकर्त्तरि प्रतीतेर्विभावादिव्यपदेश्यः कारणादिभिः कृत्रिमैरपि कृत्रिमत्वेना प्रतीतैरविद्यमानोऽपि सामाजिकैरुपायबलाद्विद्यमानत्वेन संभाव्यमानः स्थायीभावो रसः। स चानुमीयमानसिद्धरूपसंख्यादिवैलक्षण्येन साध्यतयाऽनुमीयते, अत एव रसस्य रसनीयत्वाच्चवर्य्यमाणतैकप्राणत्वात्तथा व्यपदेशः।

## बालचित्तानुरञ्जनी

अनुमितिपक्षमवतारयति राम एवायमिति। राम एवायमित्ययोगव्यवच्छेदेन, अयमेव राम इत्यन्ययोगव्यवच्छेदेन च सम्यक् प्रतीतिः। न च वाच्यं नटे रामोऽयमित्यादिप्रतीतिर्भवतीति लोके बाधशिरस्काया एव प्रतीतिः भ्रान्तव्यवहारात् तद्वैलक्षण्येन सम्यगभिधानात् अयं न राम इति उत्तरकालीनबाधकज्ञाने सति रामोऽयमिति प्रतीतिस्तु मिथ्या। यथा नेदं रजतमिति बाधके सति शुक्तौ रजतप्रतीतिः। रामः स्यान्नवा रामः इत्युभयकोट्यालम्बनत्वेन संशयः। रामसदृशोऽयमिति सादृश्यप्रतीतिः। एताभ्यः प्रतीतिभ्यो विलक्षणया रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे, वर्ण्यमानो रस इत्युत्तरत्र संबन्धः।

ननु सम्यङ्मिथ्यादिप्रतीतिविलक्षणा प्रतीतिर्न दृश्यत इत्याशङ्क्याह चित्रेति । भित्त्यादौ लिखितस्तुरगः पूर्वोक्तज्ञानचतुष्टयविलक्षणज्ञानेन गृह्यते तद्वत् । तथाचोक्तम्—

**प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।**
**धीरसावयमित्यस्ति नासावेवायमित्यपि ॥**
**विरुद्धबुद्धिसंभेदादविवेचितविप्लवः ।**
**युक्त्या पर्यनुयुज्यते स्फुरन्ननुभवः कथम् ॥** अभिनवभारती पृ. सं. ४५०

सेयमित्यादि । नायकस्य वचनम् । ममाङ्गेषु सुधारसच्छटा अमृतरससमूहरूपा दृशोर्निबिडकर्पूरशलाका, मनसः शरीरिणी मूर्तिमती मनोरथश्रीः । सेयं परिदृश्यमाना प्राणेश्वरी प्रियतमा, लोचनमार्गं गता । अहं दैवात् चपलायतनेत्रया तया विवक्षितचरित्रया वियुक्तश्चाभवम् । निबिडाः लोलाः मेधाः यस्मिन् अयं कालश्च समुपागत इत्यादिकाव्यद्वयानुसन्धानबलात् नटः प्रथमश्लोकप्रतिपाद्य आलम्बनरूपो विभावः । द्वितीयश्लोकप्रतिपाद्यं तूद्दीपनरूपम् । विभावं प्रकाशयति तथा शिक्षया उपदेशेन योऽभ्यासः पौनःपुन्येन प्रवृत्तिस्तेन निर्वतितानि । व्यभिचारिणामेवानुभावलक्षणानि कार्याणि । तेषां प्रकटनेन कारणभूतान् व्यभिचारिणः प्रकाशयति, कार्यभूतानुभावाभिनेयनानुभावं प्रकाशयति । अत एव 'प्रकटनेन च' इत्यत्र चकारः प्रयुक्तः । अथवा अभ्यासेन निर्वर्तितं यत् स्वकार्यं कृत्रिमनिजानुभवार्जनं तत्प्रकटनेनैव नटेनैव कर्त्रा प्रकाशितः ।

ननु नाट्यसमये विकारादीनामभावेन रसाभावात् विभावादीनि कृत्रिमाण्येव तैः कथं सामाजिकानां रसानुमितिः इत्यत आह कृत्रिमैरपीति । अस्वाभाविकैरपि कृत्रिमत्वेनानवभासमानत्वात् अनुमितिर्युक्तेति भावः । विभावानुभावव्यभिचारिशब्दस्य व्यपदेशत्वमलौकिकचमत्कारकारित्वात् । एवं विधैःकारणकार्यसहकारिभिः कृत्वा, गम्यगमकरूपात् संयोगात् संबन्धात् [रसः] प्रतीयते ।

नन्वनुमीयमानत्वेन रसस्य वह्न्यादिसादृश्यं स्यात् । तेनाह वस्त्विति । वस्तुतो रामादेः सौन्दर्यबलात् रसनीयत्वेन आस्वाद्यत्वेन कृत्वा अन्यान्यनुमीयमानानि वह्न्यादीनि तेभ्यो विसदृशः । अथवा वस्तुतः अनुमीयमानग्त्यादिपदार्थस्य निरतिशयमनोहरत्वं वस्तुसौन्दर्यं तस्मात् । ननु नटे स्थाायनो रत्यादेरभावात् कथमनुमीयमान- आह स्थायित्वेनेति । तत्र नटे अविद्यमानेऽपि तत्प्रकाशितविभावाद्युपायबलात् स्थायित्वेन विद्यमानत्वेन संभाव्यमानोऽनुमितिमर्हत्येवेत्यर्थः । चर्व्यमाणः सचमत्कारं साक्षात् क्रियमाणः ।

## काव्यादर्शः

ततोऽन्यथा शङ्कुको व्याचचक्षे । 'राम एवायम्, अयमेव रामः' इति सम्यक्प्रतीतिः । नह्यत्र 'नर्तक एव सुखी' इति प्रतिपत्तिः । 'न रामोऽयम्' इति पर्यालोचनया बाधके 'रामोऽयम्' इति मिथ्याप्रतीतिः । 'रामो वा न वा' इत्युभयकोट्यवलम्बिसंशयप्रतीतिः । 'रामसदृशोऽयम्' इति सादृश्य प्रतीतिः । ताभ्यो विलक्षणया प्रतिपत्त्या चित्रतुरगादिन्यायेन न हि चित्रतुरगादौ एताः प्रतीतयः । तद्वद 'यः सुखी रामोऽसावयम्' इति ग्राह्ये नटे प्रतीतिरस्ति । उक्तं च—

**प्रतिभाति न संदेहो न तत्त्वं न विपर्ययः ।**
**धीर् 'असावयम्' इत्यस्ति 'नासा एवायम्' इत्यपि ॥**
**विरुद्धबुद्ध्यसंभेदादविवेचितविप्लवः ।**
**युक्त्या पर्यनुयुज्येत स्फुरन्नुभवः कया ॥**

विरुद्धा संदेहाद्यात्मिका, अविवेचितेति असंवेदितानेकरूपताप्रतिभासः । 'सेयं ममाङ्गेषु' इति । 'अविरलविलोल' इति । काव्यानुसंधानबलाद् आलम्बनोद्दीपन विभावैः, शिक्षाभ्यासाद् अनुभावैः सात्त्विकवाचिकाङ्गिकाहार्याभिनयरूपैस्तथाभ्यासनिर्वर्तितं यत् स्वकार्यं कृत्रिमनिजानुभावार्जनं, तत्प्रकटनेन च व्यभिचारिभिः प्रकाशितैः कृत्रिमैः प्रयत्नार्जिततया । तथेति । कृत्रिमत्वेन । गम्यगमकेति । वह्नेः शीतनिवृत्तिरनुमीयते इति । कारणस्यापि गमकत्वम् । एवं विभावादेरपि गमकत्वमिति रसो वस्तुसुन्दरत्वाद् अनुमीयते, न च अनुमितमात्रतयैव स्थित इत्याह—रसनीयत्वेनेति । रसनाव्यापारगोचरत्वेन कषायफलचर्वणपरपुरुषदर्शनप्रभवमुखप्रसेककलनारूपेण हेतुना अन्यानुमेयविसदृशः स्थाय्यनुकर्तृस्थत्वेन विभावादिभिः प्रत्याय्यमानः । तत्रासन्नपीति । नटेऽत्यन्ताविद्यमानोऽपि । चर्व्यमाण इति । सामाजिकजनास्वाद्यमानो मुख्यरामादिगतस्थाय्यनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रस्यमानत्वाद् रसः । विभावा हि काव्यबलाद् अनुसंधेयाः, स्थायी तु काव्यबलादपि नानुसंधातुं शक्यः । रतिः शोक इत्यादयो हि शब्दा रत्यादिकमभिधेयीकुर्वन्ति अभिधानत्वेन, न तु वाचिकाभिनयरूपतयावगमयन्ति । नहि वागेव वाचिकम्, अपि तु तया निर्वृत्तमङ्गैरिवाङ्गिकम् । तेन—

**विवृद्धात्माप्यगाधोऽपि दुरन्तोऽपि महानपि ।**
**वाडवेनेव जलधिः शोकः क्रोधेन पीयते ॥**
इत्यादौ न शोकोऽभिनेयः, अपि तु अभिधेयः ॥
**भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुशीकरकणाधः ।**
**स्वेदोद्गम इव करतलसंस्पर्शादिष मे वपुषि ॥**

—इत्यनेन तु वाक्येन स्वार्थमभिदधता उदयनगतः सुखात्मा रतिः स्थायिभावोऽभिनीयते, न तु उच्यते । अवगमनाशक्तिर्ह्यभिनयनं वाचकत्वाद् अन्या । ततः काव्यबलादपि स्थायी नावगन्तुं शक्यः । अत एव स्थायिपदं सूत्रे भिन्नविभक्तिकमपि मुनिना नोपात्तम् । स्थायिना रसनिष्पत्तिरिति स्थाय्येव रसीभवतीति वेत्स्येवंरूपतया । ततः प्राक् कथमपि न स्थायी प्रतीयते, विभावादियोग एव ह्यनुकरणरूपः स प्रतीयते । तेन रतिरनुक्रियमाणा शृङ्गार इत्यर्थः । इदमपि न क्षोदक्षमिति भट्टतोतः । तथा हि, अनुकरणरूपो रस इत्युक्तं न च तद् युक्तम्, यतः किंचिद्धि प्रमाणेनोपलब्धं तदनुकरणमित्युच्यते, यथैव 'असौ सुरां पिबति' इति सुरापानानुकरणत्वेन पयःपानं प्रत्यक्षावलोकितं प्रतिभाति । इह च नरगतं किं तदुपलब्धं सद् रत्यनुकरणतया भातीति चिन्त्यम् । तच्छरीरं तन्निष्ठं प्रतिशीर्षकादि रोमाञ्चगद्गदिकादि भुजाक्षेपवलनप्रभृति भ्रूक्षेपकटाक्षादिकं च न रतेश्चित्तवृत्तिरूपाया अनुकारत्वेन कस्यचित् प्रतिभाति जडत्वेन भिन्नेन्द्रियग्राह्यत्वेन भिन्नाधिकरणत्वेन च ततो वैलक्षण्यात् । मुख्यावलोकने च तदनुकरणप्रतिभासः न च रामगतां रतिमुपलब्धपूर्विणः केचित् । यच्चोक्तम्—'रामोऽयमित्यस्ति प्रतिपत्तिस्तदपि यदि तदात्वे निश्चितं तदुत्तरकालभाविबाधकवैधुर्याभावे कथं न तत्त्वज्ञानं स्यात्, बाधकसद्भावे वा कथं न

मिथ्याज्ञानम् । वास्तवेन च वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात् । तेन विरुद्धबुद्ध्यसंभेदाद्' इत्यसत् । नर्तकान्तरेऽपि च 'रामोऽयम्' इति प्रतिपत्तिरस्ति । ततश्च रामत्वं सामान्यमित्यायातम् । यथोक्तम्—'विभावाः काव्याद् अनुसंधीयन्ते' तदपि न विद्मः । न हि 'ममेयं सीता काचिद्' इति स्वात्मीयत्वेन प्रतिपत्तिर्नटस्य । तस्मात् सामाजिकप्रतीत्यनुसारेण स्थाय्यनुकरणं रस इति शङ्कुकोक्तमपि निरस्तम् । न च मुनिवचनमेवंविधमस्ति 'स्थाय्यनुकरणं रसा' इत्युक्तम् ।

## विवेकः

श्रीशङ्कुकमते तु कारणकार्यसहकारिणो लोके गमकत्वेन प्रसिद्धा नाट्ये कृत्रिमत्वेन चमत्कारहेतुत्वादलौकिकविभावादिव्यपदेशभाजः सूत्रे निर्दिष्टाः । तैरवस्तुतो (तैर्वस्तुतो)ऽसम्भाविनोऽपि स्थायिनो गम्यगमकभावलक्षणः सम्बन्धः संयोगः । ततो रसस्य निष्पत्तिः प्रत्येयतयैव स्थितः । सा चानुकर्तृविषया सामाजिकसम्बन्धिनी च । उभयतो दत्तपादा हि रससंवित् । तत्रानुकर्ता रामत्वेन प्रतीतो रामसंविद्विषयः । रामदेवेन (त्वेन) च प्रतीतिः क्वचित् सम्यक् साऽपि द्विधा । राम एवायमित्यन्यरूपत्वव्यावृत्त्यामेका, अयमेव राम इत्यप्रत्यक्षत्वव्यावृत्त्यां द्वितीया । द्विधाऽपि सा नेह स्थिता, अवधारणगर्भक्षीण (त्वेन) प्रतीतेः । क्वचित् पुनर्मिथ्या यत्र रामोऽयमिति प्रतीतावौत्त[र]कलिको न रामोऽयमिति बाधकप्रत्ययोद्भवः । साऽपि प्रकृते न स्थिता, बाधकप्रत्ययासंवेदनात् । क्वचित्तु दोलायमानोभयकोटिसंस्पर्शेन संशयप्रतिपत्तिस्वभावा । संशयोऽपि द्विविधो रामोऽन्यो वेति विशेष संशय एकः, रामः स्यान्नवेति सत्ताऽऽश्रितः संशयो द्वितीयः । तत्राद्योऽतिस्थूलत्वेनासम्भाव्यत्वान्न शङ्कितः, द्वितीयस्तु सम्भाव्यत इति—अतएव स्वभावैराशङ्क्यनिराकृता (सम्भावितोऽप्यसंवेद्यत्वान्निराकृतः)। क्वचित्तु सादृश्यप्रतीतिर्यथा रामसदृशोऽयमिति । सा सदृशवस्तुद्वयप्रतीतिपूर्विका भवन्ती तदभावादिह नास्ति । एवं सम्यङ्मिथ्यासंशयसादृश्यप्रतीत्यभावेऽपि रामोऽयमित्यवच्छेदपरिहारेण प्रतीतिचतुष्टया [भावेऽपि] चित्रतुरगे तुरगोऽयमिति वद्व्यवस्थिता प्रतीतिर [न] पहवनीयत्वाल्लोकोत्तरतामेव प्रकाशयति । अतश्च सामान्य रूपतया रामत्वेन प्रतिपन्नेऽनुकर्तरि प्रतीतेर्विभावादिव्यपदेश्यैः कारणादिभिः कृत्रिमैरपि कृत्रिमत्वेनाप्रतीतैरविद्यमानोऽपि सामाजिकैरुपायबलाद्विद्यमानत्वेन सम्भाव्यमानः स्थायी चर्व्यते । स चानुमीयमानः स्थायी सिद्धरूपव्यङ्ग्यादिवैलक्षण्येन साध्यतयाऽनुमीयते, अतएव रसस्य रसनीयत्वासम्भावनैकप्रमाणत्वात्तथा व्यपदेश इति ।

## दीपिका

अत्र रामादिगतरत्यादिरेव रसः, यद्विषयप्रेक्षकप्रतीतिर्वा, नटादिगततया प्रेक्षकाणां रत्यादिसम्भावनं वा ? तत्र सर्वत्र रस इति नाममात्रमेव, न तु रस्यमानताप्राणत्वमित्युपक्षीणोऽयं पक्षः ।

राम एवायमिति रामत्वस्यायोगव्यवच्छेदः । अयमेव राम इत्यन्ययोगव्यवच्छेदः । उभयरूपा चेयं प्रतीतिरप्यसम्यग्-विषयाऽबाधस्थले, औत्तरकालिके, बाधे सत्यपजिहीर्सिषया । रामोऽयमिति । प्रतीतिर्मिथ्या । रामः स्यान्नवेति संशयः । राम-सदृशोऽयमिति सादृश्यप्रतीतिः । एतद्विपरीततया बालादीनां यथा तुरगचित्रे तुरगप्रतीतिस्तथा रामोऽयमिति वस्तुपरिच्छेदपर्यवसानशून्या या प्रतीतिस्तया ग्राह्ये चक्षुर्विषयीकृतेऽभिनयकर्त्तरि । कारणादिभिः कृत्रिमैरपि तथा कृत्रिमतयाऽनभिमन्यमानैरिति दूरेण सम्बन्धः ।

कुतः पुनः कृत्रिमतयाऽपि कारणादीनां नटे सम्भव इत्याह- सेयमिति। एतत्पद्यद्वयं **सामर्थ्यावसेयानुभावसञ्चारिविशेषं** यथाक्रममालम्बनोद्दीपनाभिधायकं सम्भोगविप्रलम्भरूपभेदद्वयप्रकटकं **वा**। **इत्यादीनां** काव्यानां यदनुसन्धानं कविविवक्षितानुकार्यगतविशेषस्य काक्वादिना साक्षादिव करणं तद्बलात्। **शिक्षा** परम्परोपदेशः। **अभ्यासः** पौनः पुन्येन प्रवृत्तिरुत्कर्षाधानहेतुः। **ताभ्यां प्रवर्त्तितं** यत्स्वकार्यं प्रयत्नविशेषनिर्वाह्यं सात्त्विकसजातीयमश्रुरोमाञ्चादि, **तत्प्रकटनप्रकाशितैः** सम्भाव्यमानतामुपनीतैः। **गम्यगमकभावेति**—गम्यं **रत्यादि**, गमकमनुमापकं कार्यकारणादि। **अनुमीयमानो** रामादितादात्म्यप्रतीयमानतेयेति शेषः। **रसनीयत्वेन स्पृहणीयत्वेन**। **स्थायित्वेन** कालान्तरेऽप्यपरिच्छेदित्वेन दार्ढ्यदर्शनादिति भावः। **रत्यादिरिति**—**भाव इत्यस्य विवरणम्**। **तत्र न केवलं नटे** काव्यपाठके—(पि) **असन्नपि सामाजिकानां** प्रेक्षकाणां **वासनया तन्मयीभावाधायिन्या धिया चर्व्यमाणः** पुनः पुनरनुसन्धीयमानो **रस इति श्रीशङ्कुकनामा** कश्चिदभियुक्तः।

अत्रापि भावकैर्नटादिगततयाऽनुमीयमानो रत्यादि रसः, भावकगतं तदनुमानं वा? आद्ये सामाजिकचमत्काराभावप्रसङ्गः, तेषामनुमानाभासमात्रोत्पत्तेः। तदनन्तरं सुखोत्पत्तिरिति चेत्, किमनेनाभिमतं भवतः? किं कार्यं सुखं रसो, रसेन वा सुखं क्रियते? तत्राद्यो दूषयिष्यते, द्वितीये तु कोयं रसो यस्य कार्यं सुखमिति प्रश्नानिष्कृतिः। भावकगतानुमानमात्रेऽप्ययं दोषः, सुखादितादात्म्याङ्गीकारे तु साक्षात्काररूपस्वप्रकाशानन्दस्य रस्यमानताऽनुभवेनास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेयाः।

## दर्पणः

सान्तरायनाटककाव्यश्रवणादेः राम एवायमिति रामत्वस्यायोगव्यवच्छेदेन अयमेव राम इत्यन्ययोगव्यवच्छेदेन चोभयथा या साम्यप्रतीतिः, न वा रामोऽयमिति औत्तरकालिके बाधे सति औत्तरकालिकबाधविशिष्टा रामोऽयमिति या मिथ्या प्रतीतिः, रामःस्याद्वा न वायमिति या च संशयप्रतीतिः, राम सदृशोऽयमिति या सादृश्यप्रतीतिः ताभ्यो विलक्षणाया चित्रतुरगादिन्यायेन यथा बालानां चित्रतुरगे वस्तुपरिच्छेदशून्याः तुरगोऽयमिति बुद्धिर्भवति तथाविधया रामोऽयमिति प्रतिपत्त्या ज्ञानेन ग्राह्ये नटे अभिनेतरि, सेयमित्यादिर्दैवादित्यन्तश्च यथाक्रममालम्बनोद्दीपनाभिधायकसंभोगविप्रलम्भशृङ्गारप्रधानस्य। आदिपदादितरैक्यमिव काव्यानां यदनुसंधानं साक्षादिव करणम्। तद्बलात् शिक्षा उपदेशः। अभ्यासः पौनः पुन्येन प्रवृत्तिः। ताभ्यां वर्तितै स्वकार्यमश्रुरोमाञ्चादि तस्य प्रकटनं येन तथाभूतेन नटेनैव प्रकाशितैः कार्यकारणसहकारादिभिर्विभावादिशब्दव्यपदेश्यैरनुमीयमानो रत्यादिर्भावः, तदा रामतादात्म्येन प्रतीते नटे सामाजिकानां प्रेक्षकाणां वासनया तन्मयीभावदायिन्या धिया चर्व्यमाणः पुनः पुनरनुमोयमानो रस इति श्रीशङ्कुकनामा कश्चिदाचार्य इति संबन्धः।

कारणादिभिः किंभूतैः? तथा कृत्रिमतया अनभिमन्यमानैः। अनुमीयमान इत्यत्रानुमाने हेतुमाह। संयोगात् संबन्धात्। कोऽसौ संयोग इत्याह गम्येति। गम्यमनुमेयं रसादि। गमकमनुमापकं कार्यकारणादि। रसनीयत्वेन स्पृहणीयत्वेन स्थायित्वेन दार्ढ्यदर्शनात्। कालान्तरेऽप्यवच्छेद्यत्वेन अत्रापि नटगतस्य रत्यादेरनुमापकानां सामाजिकानामनुमानाभासोत्पत्तेः कथं सप्रकाशानन्दचमत्काररूपस्याविर्भावः अनुमानकारणकत्वाङ्गीकारे तु रसस्य कार्यत्वप्रसङ्गोऽस्त्विति चेन्न, अग्रे निराकरिष्यमाणत्वात्।

## साहित्यचूड़ामणिः

अथ शङ्कुकमतमभिधत्ते—'राम एवे'ति । अयोगान्योगव्यवच्छेदाभ्यां प्रतीतिगतं सम्यक्त्वमुपपाद्यते । भ्रान्तिरपि हि रामोऽयमित्येव प्रवर्तते । तस्याः प्रमासकाशादयं विशेषः यदुत्तरवेलायां नायं राम इति बाधोदय इत्यभिसन्धायाह—'न रामोऽयमि'ति । रामः स्याद् वा नवेत्ययं कोटिद्वयावगाढः सन्देहः । रामसदृशोऽयमिति सादृश्यज्ञानं स्पष्टम् । इत्थं सम्यङ्मिथ्यादिविलक्षणया प्रतिपत्त्या नटे ग्राह्ये वर्तमाने । ताटस्थ्यं रसस्य सूचयितुं सप्तमीप्रयोगः । अत्र निर्दशनमाह—चित्रेति । आलेख्यवर्त्ती यस्तुरगो मातङ्गो वा तत्प्रतीतिरलौकिक्येव । नहि सा मिथ्या भवितुमर्हति औत्तरकालिकस्य बाधस्याभावात् । सा हि पूर्वोत्तरकालयोरेकरूपा । नापि संशयः अवधृत्यैव प्रतीत्युदयात् । न च सादृश्यसंवित्, सत्यचित्रतुरगयोर्गोगवययोरिव भूयोक्यवसाम्ययोगाभावात् । तेन यथा तत्प्रतीतिः प्रतीत्यन्तरविलक्षणा एवं नटे राम-प्रतीतिः । उक्तं च,

**प्रतिभाति स न सन्देहो न तत्त्वं न विपर्ययः ।**
**धीरसवायमित्यस्ति नासावेवायमित्यपि ॥**
**विरुद्धबुद्ध्यसंभेदादविवेचितविक्रियः ।**
**युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कथम् ॥ [इति] ।**

तत्र श्रव्यस्य वाचिकाभिनयतया सहकर्तृतां प्रकाशयन् संभोगविप्रलम्भभिन्नशृङ्गारमुदाहरति—सेयमति । संयोगात् त्रयाणामप्येकरूपाद् गम्यगमकभावात् । ननु यदि विभावादयो नर्तकेनैव निर्वर्त्यन्ते, न तु रामादिना, नाट्यमण्डपे तस्याभावात्, तत् कथमत्र रामरूपतानुसन्धानमिति चेत् तत्राह—'कृत्रिमैरपी' ति । अभिमाननिबन्धनत्वात् सर्वव्यवहारस्य । गम्यगमकभावश्चायमनुमान एव विश्राम्यतीत्याह—'अनुमीयमान'—इति । नन्वनुमागोचरत्वे पर्वतनितम्बसंभिन्न-वीतिहोत्र-साधारण्यादस्य सारस्याकारचमत्कारकारिता नोपपद्यत इत्यत्राह—वस्त्विति । सारस्यवैरस्यादिप्रयोजकत्वमनुमीयमानवस्तुस्वभावायत्तं न पुनरनुमानाधीनम् । अत एवान्यस्मादनुमीयमानदहदयङ्गमाद् विलक्षणः । तत्रासन्नपि नटेऽविद्यमानोऽपि । चर्वणाबलेन लब्धसत्ताकः स्थायी भावो रसः । सामाजिकानामिति सम्बन्धमात्रे षष्ठी । इत्थं च रसस्य न क्वचिन्नियमेनावस्थानं यावदस्य सर्वतोमुखस्फुरत्ताकस्य ताटस्थ्यमेव पक्षः किमधिकरणविशेषगवेषणक्लेशेन । सामाजिकैश्चर्व्यमाण इत्युक्तौ तेषां चवर्णक्रियां प्रति कर्तृत्वे नैयत्यात् सामाजिकेषु चर्वयितृषु चर्व्यमाणो रस इत्युक्तं स्यात् । तच्चानिष्टम् ।

## सम्प्रदायप्रकाशिनी

अथ सम्बन्धत्रयक्लृप्तिगौरवादीन् दोषानसहमानस्य श्रीशङ्कुकस्य मतोपन्यासः—राम एवायमित्यादि । विभावादिशब्दव्यपदेश्यैः कारणकार्यसहकारिभिरनुमीयमानः स्थायी रस इति समन्वयः । अतो गम्यगमकभाव एक एव संयोगशब्दार्थः । निष्पत्तिरित्यनुमितिरेव । कारणान्यलौकिकप्रतीतिविषयतां यदा समासादयन्ति, तदैव विभावादिशब्दव्यपदेश्यानि भवन्तीत्याह—राम एवायमित्यादि । तत्र तावल्लौकिकी प्रतीतिश्चतुर्विधा । राम एवायम् अयमेव राम इति च सम्यग्रूपा । तत्र राम एवायमित्यरामत्वं व्यावर्त्यत इत्ययोगव्यावृत्तिरूपं सम्यक्त्वम्, अयमेव

राम इत्यन्यस्य रामत्वं व्यावर्त्यत इत्यययोगव्यावृत्तिरूपम् । यदि न रामोऽयमित्यौत्तरकालिको बाधः स्यात्, तदा तदपेक्षया प्राग्भूता राम इति प्रतीतिर्मिथ्यारूपा । रामः स्याद्वा न वेति तु संशयात्मिका । परिशिष्टा तु सादृश्यरूपेति चतुर्थैव लौकिकी प्रतीतिः । प्रतीतिचतुष्टयविलक्षणैव हि नटे प्रतीतिः किंरूपा, रामोऽयमिति निर्गलितावधारणा सामान्यरूपा चमत्कारैकघना । तदेतद् दृष्टान्तेन द्रढयति—चित्रतुरगन्यायेनेति । चित्रतुरगे हि कौतुकदशायां तुरग एवायमयमेव तुरग इत्यादिविशेषानुपहता चमत्कारैकघना सामान्यतस्तुरग इति प्रतीतिरस्ति । एवं सामान्यतो राम इति प्रतिपत्त्या ग्राह्ये नटे पुरःस्थिते यदा तेनैव नटेन कार्यकारणादीन्यभिनयेन प्रकाश्यन्ते तदैव तानि विभावादिशब्दव्यपदेश्यानि । ननु कस्तदैषां विशेष आयातः, येन विभावादिव्यपदेश इत्यत आह—कृत्रिमैरपि तथानभिमन्यमानैरिति । एतद् विभावनादिव्यापारवत्त्वे हेतुः । न हि चमत्कारदशायां नटेनाभिनीतेषु तेषु कारणादिषु कृत्रिमत्वप्रतीतिः । अतोऽभिनयदशायामेवैषां विभावादिव्यपदेशः ।

नटस्याप्येवंविधस्य कार्यप्रकाशनशक्तिविशिष्टकाव्यानुसन्धानबलादेवेत्याहसेयं ममाङ्गेष्विति, दैवादहमत्रेति च । उदाहरणद्वयं व्यङ्ग्यस्य शृङ्गाररसस्य सम्भोगविप्रलम्भरूपभेदद्वयप्रथनाय । सेयमिति प्रत्यभिज्ञा काक्वा चिरविरहदुःखोपघाती दर्शनमात्रादेव कोऽपि समुल्लासाविर्भावः प्रत्याय्यते । ममाङ्गेष्विति बहुवचनेन सर्वावयवसन्तापोपशमक्षमनिरतिशयनिर्वृतिजनकत्वम् । सुपूरा दृशि पूरयितुं शक्या । अनेन कर्पूरशलाकिकायाः पृथुलस्निग्धशीतलत्वादयः प्रत्याय्यन्ते । तथाविधशलाकाताद्रूप्यारोपणेनैव हि नायिकाया लोचनानन्दकन्दलनक्षमत्वमुत्तेज्यते । मनसः शरीरिणी मनोरथश्रीः मनसो ये ये मनोरथाश्चुम्बनालिङ्गनसम्भोगनैरन्तर्यादयस्तेषां श्रीरक्षया सम्पद् इत्यनेन कालमेतावन्तं मे मनोरथा वन्ध्याः सम्प्रति पूर्णा इति व्यज्यते । प्राणेश्वरीत्यनेन प्राणानां प्रत्यापत्तिः । एवमादिकाव्यानुसन्धानं सम्भोगे । दैवादहमिति । अत्र वियुक्तश्च कालः समुपागतश्चेति चकाराभ्यां वियोगसमुपागमक्रिययोर्यौगपद्यलक्षणो दुरुन्तरोऽनर्थः प्रत्याय्यते । एवमादिकाव्यानुसन्धानं विप्रलम्भे ।

शिक्षाभ्या (सादि ?) सेति । शिक्षा अभ्यासप्रवर्तने हेतुः । अभ्यासप्रवर्तितेति । अभ्यासेनाभिनयपौनःपुन्येन प्रवर्तितं स्वकार्यप्रकटनं येन । चिरशिक्षाभ्यासबलाद् यदेतदभिनयपौनःपुन्यं तेन स्वकार्यं प्रकटितवतेत्यर्थः । अश्रुपातादि स्वकार्यम् । गम्यगमकेति सौत्रसंयोगपदविवृतिः । वस्तुसौन्दर्येति । वस्तुनो विभावादेः सौन्दर्यं समनन्तरनिरूपितमलौकिकत्वलक्षणं, तस्य बलाद् रसनीयत्वं तेन हेतुना । अन्यानुमीयमानविलक्षणः । अन्यो ह्यनुमीयमानोऽर्थो लिङ्गज्ञानपूर्वकतया लिङ्गविविक्ततया परोक्षतया सिद्धतया च प्रतीयते । अयं तु विभावादिप्रतीति समकालं पानकरसन्यायेन विभावादिसंवलिततया पुरःस्फुरत्तया साध्यतया च प्रतीयते । नन्वेवं वैलक्षण्यादनुमीयमानतैव न स्यादित्यत आह—स्थायित्वेन सम्भाव्यमान इति । स्थायिनो ह्यनुमीयमानत्वं सिद्धम् । अनुकार्येऽनुकर्तरि च रस इति यदुक्तं लोल्लटादिभिः, न तदुपपद्यत इत्यभिप्रायेणाह—सामाजिकानामिति । सामाजिकानामेव हि चमत्कारः, नानुकार्यानुकर्त्रोः । ननु सामाजिकेषु स्थायी नास्ति, कथमेवमुक्तमित्यत आह—तत्रासन्नपि चर्व्यमाण इति । चर्व्यमाणः सचमत्कारं साक्षात्क्रियमाणः । इदमत्र तात्पर्यम्—अनुकार्यस्यातीतत्वात् तत्प्रतीतेर्लौकिकत्वेन दुःखात्मकत्वाच्च, अनुकर्तु रभिनयप्रयासैकायत्तचित्तत्वाच्च न तौ रससंवित्तिभाजनम्, अपि तु समाजिका एव । तेषां हि चमत्कारोदयः स्वसंवेदनसिद्ध इति । श्रीशङ्कुक इति । भरतसूत्रं विवृणुत इत्यनुषङ्गः ।

## मधुमती

राम एवायमिति । उपलक्षणमिदम् । 'अयं रामो भवत्येव' इत्यतोऽपि विभेदः ग्राह्यः । सम्यङ्मिथ्येति । अत्र—सावधारणत्वं सम्यक्त्वम् । बाधशिरस्कत्वं मिथ्यात्वम् । तेन—'प्रतीतेः सम्यङ्मिथ्यावैलक्षण्यं असम्भवि, नटे रामत्वप्रतीतेः भ्रमत्वाच्च' इति दूषणं अलग्नकं वेदितव्यम् ।

ननु—परप्रतीतेः रामभेदावगाहित्वेन रसानङ्गतया व्यवच्छेदेऽपि, सावसाधारणप्रतीतिवैलक्षण्याभिधानं कुतः ? इति चेन्न । अतिरिक्तव्यवच्छेदभाने तथाभूतप्रत्ययस्यापि रसानङ्गत्वात् । तेषां विगलितवेद्यान्तरत्वात् ।

वक्ष्यमाणानुमितिहेतुलिङ्गपरामर्शोपायमाह—सेयमिति । सुपूरं निर्मलम् । अत्र मनोरथश्रीः मनस एव भवतीति मनसः इति अयोगव्यवच्छेदार्थम्—

**'तत्साधवो न न विदन्ति विदन्ति सत्यम् ।'**

इत्यत्र द्वितीय 'वदन्ति' पदवत्—इति वदन्ति ।

इत्यादीति । अत्रापि प्रथमेन आलम्बनविभावः, द्वितीयेन च उद्दीपन विभावः उक्तः । शिक्षेति । शिक्षाऽभ्यासेन निर्वर्तितं जनितं यत् स्वकार्यं व्यभिचारिकार्यं रोमाञ्चादि तत्प्रकटनेन इत्यर्थः ।

यद्यपि च—अनुभावव्यभिचारिणोः कार्यादुपस्थितः नाट्येऽपि भवत्येव । तथापि नाट्यस्य अभिनयत्वात् तत एव चमत्कारानुभावात् तथैव क्रम आदृतः । अन्यथा काव्यरसात् अविशेषप्रसङ्गः इति स्मर्तव्यम् । एवं च—शब्दात् विभावस्य, प्रत्यक्षात् रोमाञ्चादीनां, तद्रूपलिङ्गात् व्यभिचारिणां च उपस्थितिः । ततः तत्प्रभवसंस्कारजन्यतावद्गोचरस्मृतिः । ततो मनसा तत्सहकृतेन पक्षीभूतनटवृत्तित्वज्ञानम्—इति प्रघट्टकतात्पर्यम् ।

ननु व्यभिचारिजन्य रोमाञ्चादिना कथं तदनुमितिः ? अत आहकृत्रिमैरिति । न हि स्वरूपसन्तः ते स्थायिनं व्यभिचारणो वा अनुमातुं ईशते । किन्तु ज्ञाता एव । ज्ञानं च भ्रमरूपं विशेषादर्शनदशायां इहापि न विरुद्धम् । नटे रामत्वारोपेण भ्रमस्य सुश्लिष्टत्वात् । गम्यगमकभावरूपादिति । व्याप्ते रित्यर्थः । रसस्य अनुमेयत्वे वह्न्यनुमिताविव चमत्कारनुपपत्तिः अत आह—वस्तुसौन्दर्येति । ततश्च अनुमीयमानरत्यादिपदार्थस्य प्रकर्षकाष्ठाप्राप्तं मनोहरत्वं वस्तुसौन्दर्यम्, तद्बलादित्यर्थः । एवं च—विषयमाहात्म्यादेव चमत्कारः इति तात्पर्यम् । अनुमानशरीरं च—रामोऽयं सीतालम्बनशृङ्गारा श्रयः, तद्विभावादिसम्बन्धित्वात् । न यदेवं, न तदेवम् । यथा अहम् । इति । काव्ये भट्टलोल्लटमतादभेदः इति तत्र विशेषो न दर्शितः ।

## विस्तारिका

नाप्यनुमितिः, गृहीतरामादिभेदे नटे तद्गतरत्याद्यनुमितौ बाधादित्याशङ्क्य श्री शङ्कुकः कश्चिद् भरतविज्ञोऽनुमानप्रकारविशेषमाह—राम एवेत्यादि । विभावादिभिर्नटेऽनुमीयमानोऽनुकार्यगतरत्यादिर्भावो रस इति प्रघट्टार्थः । तत्र प्रथमं पक्षमाह-रामोऽयमिति । प्रतिपत्त्या ग्राह्ये नटे इति रामत्वप्रकारकपुरोवर्तिविशेष्यकप्रतीतिविशेष्य इत्यर्थः । अन्यथा संशयसादृश्यप्रतीतौ रामोऽयमित्याकारकविरहेणाप्रसक्तौ वारणाप्रसङ्गात् । विलक्षणतयेति । इदन्तावद् वेद्यरूपवैलक्षण्यम्—राम एवं एवंविधरूपः । एवंविधरूप एव रामः, नान्य इत्ययोगान्ययोगव्यवच्छेदेन प्रतीतिद्वयमुद्देश्यविधेयभेदविषयं प्रमा । एवं संस्कारसत्त्वे नटे रामत्वतद्रूपयोर्बाधा-

न्नानुमितिः स्यात्। औत्तरकालिके बाधे रामोऽयमितीति। अत्र सप्तम्याः सामानाधिकरण्यमर्थः। औत्तरकालिकबाधसमानाधिकरणो रामोऽयमिति या प्रतीतिर्महत्त्वे सत्युद्भूतरूपवत्त्वादित्यत्रेव। तेन बाधे सति अपरिहार्यविषयेत्यध्याहारो निरस्तः। सम्यगित्यादैः प्रतीतिचतुष्टये यथासंख्यमन्वयः। सम्यक्त्वं प्रमा। आद्यप्रतीतेर्यथा च प्रमात्वं तत्प्रतिपादितमेव। मिथ्या तद्विशेषो बाधशिरस्कः। विलक्षणया भिन्नया। ग्राह्ये विषयीकृते। चित्रेति। यथा तुरगाकारचित्रे उक्तरूपचतुष्टयमतिभिन्ना बालकस्य तुरगोऽयमिति धीस्तद्वदित्थं ग्रन्थसङ्गतिः

हेतुमाह-कारणकार्यसहकारिभिरिति। कृत्रिमैरिति। तेन हेतोः पक्षधर्मता। तथा च कृत्रिमत्वेन झटित्येवाश्रुपुलकादिसंपादनया तथाऽनभिमानः। विभावादीति कारणत्वाद्यभावात्। कृत्रिमत्वे हेतुमाह-नटेनैवेति। एतेन रत्यादिव्यवच्छेदः। प्रकाशितैर्वस्तुतोऽसद्भिः। नटस्य प्रकाशकत्वे हेतुमाह-शिक्षेत्यादि। गुरोरुपदेशग्रहणं शिक्षा, अभ्यास प्रवृत्तिपौनःपुन्यम्, ताभ्यां प्रवर्तितमुत्पादितं स्वकार्यस्य पुलकादेः प्रकटनं प्रकाशनं यस्य तेन। नन्वभ्यासवशादविषयेऽपि तदुत्पादः, तेन रस इत्याह—काव्येति। अनुसंधानम् एतदभिप्रायेणेदमुक्तमिति विचारणम्। तद्बलात् तत्साचिव्येन, तेन व्युत्पत्तेरपि सहकारिता।

अनुसन्धेयकाव्यमाह—सेयमिति। यद्गुणश्रवणजनितपूर्वगतसन्तापसहस्रेणेयन्तः काला गमिताः। अङ्गेषु परीरम्भेण सर्वाङ्गसौहित्योत्पादनात्। पूरो द्रवः, शलाका अञ्जनतूलिका। मनोरथश्रीः अभिलाषसम्पत्तिः। सैव शरीरिणी सती मनसस्साकाशाल्लोचन गोचरङ्गता पूर्वं भावनास्पदम्, अनन्तरं चक्षुर्गोचरः, ततो भोगविषयः उपेयत्वेन वर्तमानत्वेन च प्राधान्यात् परिरम्भस्य प्रागुपादानम्। अयं संभोगः।

विप्रलम्भमाह-दैवादिति। दुरदृष्टान्न तु स्वेच्छया। आगमनसमये कातरदृष्टिनिरीक्षणान्नेत्रगतप्रकर्षमात्राभिधानम्। अविरलो निबिडः, विलोलः सर्वदिक्सञ्चारी। कालः समयः, कालो यमः, 'च' कारद्वयप्रतिपाद्यसमुच्चयेन तुल्यकालतावगतिः।

सूत्रेस्थसंयोगपदार्थमाह—गम्येति। गम्यः साध्यः, गमको हेतुः, तद्भावाद् व्याप्तेरित्यर्थः। रूपादिति पाठे गम्यगमकयोर्यद्रूपं धर्मस्तस्माद् व्याप्तेरिति पूर्ववत् श्लोके पुलकादिभी रत्यनुमानेऽत्रापि तथेत्यर्थः।

साध्यमाह—रत्यादिरिति। ननु नटे रत्यादिबाधात् कथमनुमितिरित्याह-स्थायित्वेनेति। तत्रापि रागत्वेन नटप्रतीतिरेव बीजम्। वह्न्याद्यनुमितिवैलक्षण्यमाह—अन्येति। तत्र हेतुर्वस्त्विति। वस्तुनो रत्यादेः सौन्दर्यं सुखरूपता। लौकिकसुखानुमितिवारणायाह- रसनीयत्वेन। रसनमास्वादो निरतिशयसुखरूपताऽनुमीयमानो नानुमानम्, तस्याः सुखरूपत्वात्। रसस्य क्षणिकत्वं निरस्यति—चर्व्यमाण इति। पुनः पुनरनुमीयमान इत्यर्थः।

नन्वनुमितस्य नानुमानम्, सिद्धिप्रतिबन्धादित्याह—वासनयेति। धारावाहीच्छा वासना। तेनानुमित्सयाऽनुमितौ सिद्धेरप्रतिबन्धकत्वादिति भावः। तत्रासन्नपि स्थायित्वेन सम्भाव्यमान इति सम्बन्ध इति रसस्यानुमीयमानता।

अत्रेदमालोचनीयम्—नटेऽनुमीयमानो रत्यादी रसः? सामाजिकनिष्ठं तदनुमानं वा? नाद्यः, सामाजिकानामरसिकत्वापत्तेः, तत्रानुमितिमात्रसम्भवात्। नापरः, अनुमितेः सुखानात्मकत्वेन तद्दोषतादवस्थ्यात्। न च वेदान्तिमीमांसकयोर्विज्ञानस्य सुखत्वाङ्गीकृतिः, साक्षात्कारस्यैव तयोस्तत्त्वाङ्गीकारेणानुमितौ तदयोगात्। एवं लौकिकरत्यनुमितेरपि रसत्वं स्यात्। अनुकर्तर्य्यनुमीयमानस्य तस्यासत्त्वोपगमेऽनुकार्ये वस्तुसतस्तदव्याकोपात्।

न च विभावादीनामुपायानामलौकिकत्वेन तदलौकिकत्वम्, असतस्तदनुपपत्तधर्मिग्राहकप्रमाणस्यैवालौकिकत्वसाधन क्षमत्वात् ।

## सारबोधिनी

पूरो द्रवः । शलाका अञ्जनतूलिका । मनसः सकाशादित्यर्थो बोध्यः । अयं संभोगः । विप्रलम्भमाह दैवादिति । कालः समयः । स एव कालो यमः । चकारद्वयप्रतिपाद्यसमुच्चयेन तुल्यकालतावगतिः । सूत्रस्थसंयोगपदार्थमाह गम्येति । गम्यः साध्यः । गमकः साधकः । तद्भावाद्यव्याप्तेरित्यर्थः । लोके पुलकादिभीरत्यनुमानेऽत्रापि तथेत्यर्थः । साध्यमाह रत्यादिरिति । ननु नटे रत्यादिबाधात् कथमनुमितिरित्याह स्थायित्वेनेति । अत्रापि रामत्वेन नटप्रतीतिरेव बीजम् । तथा च रामत्वबुद्ध्या नटे विद्यमानत्वेनाभिमन्यमान इत्यर्थः । वह्न्याद्यनुमितिवैलक्षण्यमाह अन्येति । तत्र हेतुर्वस्त्विति । वस्तुनो रत्यादेः । सौन्दर्यं सुखरूपता । लौकिकसुखानुमितिवारणाय रसनीयत्वेनेति । रसनमास्वादो निरतिशयसुखरूपता । अनुमीयमानोनानुमानम् । तस्यासुखरूपत्वात् । रसस्य क्षणिकत्वं निरस्यति चर्व्यमाण इति । पुनः पुनरनुसन्धीयमान इत्यर्थः । नन्वनुमितस्य नानुमानम् । सिद्धिप्रतिबन्धादित्यत आह वासनयेति । धारावाहिनीस्था वासना । अनुमित्सयानुमितौ सिद्धेर्नप्रतिबन्धकत्वमिति भावः । तत्रासन्नपि स्थायित्वेन संभाव्यमान इति संबन्धः । अत्र पक्षे भट्टलोल्लटपक्षे च दूषणं स्वयं ग्रन्थकृता 'न ताटस्थ्येन' इत्यनेन वक्ष्यते ।

## काव्यप्रदीपः

श्रीशङ्कुकस्तु—'स्थायितो विभावादिभिरनुमाप्यानुमापकभावरूपसंबन्धाद्रसस्य निष्पत्तिरनुमितिरित्यर्थः । तथाहि नियमविषया धीः सम्यग्बुद्धिः । यथा 'राम एवायम्' 'अयमेव रामः' इत्ययोगान्ययोगव्यवच्छेदविषये । अनन्तरावतीर्णबाधा तु मिथ्याधीः । यथौत्तरकालिके 'न रामोऽयम्' इति बाधे 'रामोऽयम्' इति । विरुद्धोभयकोटिका तु संशयः । यथा 'अयं रामो न वा' इति । सदृशोभयविषया धीः सादृश्यधीः । यथा 'रामासदृशोऽयम्' इति । ताभ्यो लोकप्रसिद्धाभ्यो विलक्षणया चित्रे 'तुरगोऽयम्' इतिवत् 'रामोऽयम्' इति बुद्ध्या प्रथमं पक्षभूतो नटो विषयीक्रियते । ततस्तत्राविद्यमानमपि विभावादित्रयं लिङ्गमवगम्यते । कुतः पूर्वमेव रोमाञ्चाद्याविर्भावने गुरुशिक्षामासाद्य कृतातिशयिताभ्यासेन नटेन—

**'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।**
**मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥'** इति ।
**'दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।**
**अविरलविलोलजलदः कालः समुपागतश्चायम् ॥'**

इत्यादि काव्यानुसंधानबलादालम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्याविर्भावनेन व्यञ्जनीयस्योत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात् । अथ तैः कृत्रिमत्वेनातल्लिङ्गैरपि कृत्रिमत्वेनाज्ञानात् स्थायी रत्यादिरनुमीयते । सैव चानुमितिः सचमत्कारप्रतीतिरूपा चर्वणा । अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते । चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः । ननु साक्षात्कारएव सचमत्कारः, न त्वनुमित्यादि-

रपि । अन्यथा सुखादावनुमीयमानेऽपि स स्यात् । न स्यात् । वस्तुसौन्दर्यबलाद्रसनीयत्वेन स्थायिनामन्यानुमेय-वैलक्षण्यात् । तथापि स्थायिनां नटेऽसत्त्वाद्बाधावतारेऽनुमितिरेव कथं स्यादिति चेत् । न । अभावनिश्चयाभावात् स्थायितया संभाव्यमानत्वात् ।' एतदप्यहृदयग्राहि । यत: प्रत्यक्षमेव ज्ञानं सचमत्कारम्, नानुमित्यादिरिति लोकप्रसिद्धिमवधूयान्यथा कल्पने मानाभाव: । सूत्रस्यान्यथैव योजनासंभवात् ।

## आदर्श:

अत्र मते व्यञ्जनाधीनज्ञानस्यास्वादरूपत्वं न्राग्ति साक्षात्कारस्यैव तथात्वादिति दूषणमवेक्ष्य तस्य साक्षात्कारत्वमुपपादयितु: श्रीशङ्कुकस्य मतमाह—राम एवायमिति । अत्र मते रामत्वेनाहार्य्यज्ञाते नटे, काव्ये तु राम एव प्रथमं विभावादिभी रत्याद्यनुमानम्, ततस्तदनुमानोद्बोधितया सामाजिकानां वासनात्मिकया प्रत्यासत्त्या साक्षात्कारतो रामादिरत्यादी रस इति निष्कर्ष: । तत्र नाट्याभिप्रायेण पक्षभूतनटज्ञानाकारमाह—राम एवेति । चित्रलिखिते तुरगे यथा तुरगोऽयमित्याहार्य्यप्रतीतिस्तथाभूतया रामोऽयमित्याहर्य्यप्रतीत्या ग्राह्ये नटे पक्षे, विभावादिशब्दव्यपदेश्यै: कारणकार्य्यसहकारिभि: हेतुभि:, अनुमीयमानो रामादिरत्यादि: सामाजिकानां वासनया प्रत्यासत्त्या कारणभूतया चर्व्यमाण: साक्षात्क्रियमाणो रस इत्यन्वय: । तत्र रामत्वेन नटज्ञानस्य सम्यगादिज्ञानचतुष्टयभिन्नत्वेन आहार्य्यरूपतां परिशेषयन्नाह—सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणयेति । तत्र सावधारणसम्यग्ज्ञानद्वयाकारमाह—राम एवायमिति 'अत्र रामत्वायोगो नास्ति'इति 'रामत्वायोगरहितोऽय' मिति वा प्रथमस्यार्थ: । 'एतदन्यो न राम:' इति 'एतदन्यसामान्यनिष्ठभेदप्रतियोगिरामाभिन्नोऽय'मिति वा द्वितीयस्यार्थ: । एतद्द्वयमुपलक्षणम्, अयं राम इत्यनवधारणात्मकस्य सम्यग्ज्ञानस्यापि सम्भवात् ततोऽपि वैलक्षण्यं बोध्यम् । बाधानवतारदशायाम् अरामे रामत्वेन ज्ञानं मिथ्याज्ञानम्, तदाकारमाह—रामोऽयमिति, इदृशे तु औत्तरकालिके बाधे भाविनि तत्पूर्वं रामोऽयमितीत्यर्थ: । संशयाकारमाह—राम: स्याद्वेति । सादृश्यप्रतीत्याकारमाह—रामसदृशोऽयमिति । आभ्य: प्रतीतिभ्यो विलक्षणयेत्यर्थ: । अनुमातृसामाजिकानां विभावादिज्ञानोपायमाह—नटेनैवेति । काव्ये तु वास्तव एव रामे शाब्दैर्विभावादिभिरित्यर्थ: । नटेनापि प्रकाशनस्योपायमाह—शिक्षेति । गुरूपदेश: शिक्षा, पौन-: पुन्येन प्रवृत्त्या दृढतर: संस्कारोऽभ्यास:, ताभ्यां निर्व्वत्तितस्य निष्पादितस्य स्वकार्य्यस्य अभिनयस्य प्रकटनेन प्रकाशनेन चेत्यर्थ: । तत्प्रकाशनेऽभिनेयार्थज्ञापकं काव्यानुसन्धानमपि हेतुरित्यतस्तसमुच्चयबोधकश्चकार: । अनुसन्धेयं काव्यद्वयमाह—सेयमिति दैवादहमिति च । तत्राद्यं सम्भोगशृङ्गारनाट्ये, द्वितीयं विप्रलम्भनाट्ये । तत्र आद्यार्थो यथा—अदर्शने या तत्तद्दु:खं दत्तवती सेयं सीता मम रामस्य मनस: सकाशात् लोचनगोचरं गता प्राप्ता, गोचरमिति भावप्रधाननिर्देशाद् गोचरत्वमित्यर्थ: । पूर्वं मनोगोचर एवासीदधुना तु लोचनस्यापि गोचरोऽभूदित्यर्थ: । सा कीदृशी ? बहुष्वेवाङ्गेषु सुधारसस्य छटा कणावृष्टि:, तथा दृशो: शोभन: पूर: समूहो यस्य तादृशस्य कर्पूरस्य शलाकिका स्वल्पशलाका तादृश्यां शलाकया दृशि कर्पूरदानेन दृक्प्रीणनात्, तथा दुष्प्रापविषयेच्छा मनोरथ: तस्य विषयप्राप्तिरूपा श्री: शरीरिणी । केचित्तु मनसो मनोरथश्रीरित्यन्वयमाहु: । अन्ये तु मनस: शरीरिणो मनोनिर्म्मितशरीरवतीत्यन्वयमाहु:, तद्द्वयमपि मनस इत्यस्य वैयर्थ्यापातादुपेक्षितम् । द्वितीयश्लोकार्थस्तु स्पष्ट एव । तत्र 'तया' सीतया । अविरलो विलोलो जलदो यत्र तादृश: वर्षाकाल इत्यर्थ: । इत्यादि—काव्यस्य नटेन यदनुसन्धानं तद्बलादित्यर्थ:, अभिनेयार्थज्ञाने सत्येव अभिनयसम्भवात् । ननु कृत्रिमत्वेन सीतादिज्ञाने कथं तद्विषयरामरत्यादिज्ञानमित्यत आह-कृत्रिमैरिति । यद्यपि कृत्रिमत्वज्ञानस्यानुभवसिद्धस्य दुरपह्नवत्वेन अनभिमा-

नासम्भव एव तथाऽपि अकृत्रिमत्वेनाभिमन्यमानैरिति नञ्व्यत्यासेनात्रान्वयः कृत्रिमत्वज्ञानसत्त्वेऽप्याहार्य्याकृत्रिमत्वज्ञानसम्भवात्। सूत्रे संयोगादित्यस्य मिलनं गम्यगमकभावश्चार्थ इत्यभिप्रायेणाह—गम्यगमकेति। 'गम्यगमकभावः' व्याप्तिः। तथाच अयं रामः सीतादिविषय (क)रतिमान् सीतादिविभावादिमत्त्वादित्यनुमानम्। तद्द्विक्षादिरत्र मतुबर्थः( ?)। एवमनुमितस्य रत्यादेर्वासनया प्रत्यासत्त्या साक्षात्कारे वह्न्यादेरप्यनुमितस्य साक्षात्कारापत्तिं परिहरति—वस्तुसौन्दर्य्येति, तदेव च अन्यानुमीयमानवैलक्षण्यम्। बाधसिद्धसाधनपरिहारार्थं पक्षताघटकसंशयसत्त्वं दर्शयति—स्थायित्वेनेति पक्षस्थायित्वेनेत्यर्थः। तत्रेति नटे सामाजिके चेत्यर्थः। असतोऽप्यर्थस्य विषयीकरणमिच्छाया इव वासनाया अपि स्वभाव इति भावः। तथाच उक्तानुमानतुल्य साक्षात्कारविषयो रत्यादिरत्र मते रस इति निष्कर्षः।

## सुधासागरः

तदेतत्सर्वमभिप्रेत्य स्वरूपव्याक्रिययैवैतत्पक्षं निराकृत्य द्वितीयमनुमितिपक्षं दर्शयन् श्रीशङ्कुकव्याख्यानमवतारयति—राम एवाऽयमित्यादिना।

अयं भावः। श्रीशङ्कुकमते स्थायिनो विभावादिभिरनुमाप्यानुमापकभावरूपात् सम्बन्धाद् रसस्य निष्पत्तिरनुमितिरित्यर्थः। तथा हि—नियमविषया धीः सम्यग्बुद्धिः, यथा राम एवाऽयमयमेव राम इत्ययोगाऽन्ययोगव्यवच्छेदविषये। अनन्तरावतीर्णविपरीतप्रतीतिर्मिथ्याप्रतीतिः। यथा—न रामोऽयमित्यौत्तरकालिके बाधे। उभयकोट्यवलम्बिनी प्रतीतिः संशयप्रतीतिः। यथा—रामः स्याद्वा न वाऽयमिति संशयविषये। तुल्यादिपदघटिता प्रतीतिः सादृश्यप्रतीतिः। यथा—रामसदृशोऽयमिति सादृश्यविषये। चित्रतुरगादिन्यायेन इत्यादि। यथा—चित्रे तुरगोऽयमिति पूर्वोक्तप्रतीतिचतुष्टयवैलक्षण्येन प्रतीतिरुदेति तथा रामत्वप्रकारकपुरोवर्त्तिमात्रविशेष्यकप्रतीत्या विषयीकृते नटे इति पक्षोक्तिः, अस्याऽग्रिमेणाऽनुमीयमानोऽपीत्यनेनान्वयः इति। पूर्वमेव रोमाञ्चाद्याविर्भावेण गुरुशिक्षामासाद्य कृताऽतिशयिताऽभ्यासेन नटेन। सेयमित्यादि। इन्द्रवंशाछन्दः। 'स्यादिन्द्रवंशा ततजैरसंयुता' इति लक्षणात्। अयमर्थः। सेयं प्राणेश्वरी मम मनसः सकाशात् लोचनगोचरं गतेति सम्बन्धः। सा यदनुध्यानसन्तानेनैतावान् कालो गमितः। गोचरमिति भावप्रधाननिर्देशाद्गोचरत्वमित्यर्थः। पूर्वं मनस्येवाऽऽसीत् अधुना बहिरपि दृष्टेत्यर्थः। कीदृशी ? अङ्गेषु, नैकत्राऽङ्गे—सुधारसस्याऽमृतसारस्य छटा वृष्टिः, परिरम्भेण सन्तापशान्त्या सौहित्योत्पादनात्; दृशोरिति सप्तमीद्विवचनम्, शोभनः पूरो द्रवो यस्य तथाभूतस्य कर्पूरस्य शलाकिका अञ्जनतूलिका, अतिशयिताऽऽनन्दहेतुत्वात्। शरीरिणी मूर्तिमती। मनोरथस्य श्रीः संपत्तिः। केचित्तु मनसः शरीरिणी मनोनिर्मितशरीरेत्याहुः। परिरम्भस्य चरमत्वेऽपि प्राधान्यात् प्रागुपादानम्। भ्रान्तिमानलङ्कारः।

इत्थं सम्भोगमुक्त्वा विप्रलम्भमाह—दैवादहमित्यादि। अद्याऽहम्। तया-अनुभवैकवेद्यसमागमसुखया। चपले चञ्चले आयते दीर्घे च नेत्रे यस्यास्तथाभूतया। आगमनसमये कातरदृष्टिदर्शनात् पुरःस्फूर्त्तिकत्वेन तन्मात्रप्रकर्षोक्तिः। वियुक्तश्च अभूवमिति शेषः। अविरला निबिडाः विलोलाः सर्वदिक्सञ्चारिणो जलदा यत्र एवम्भूतोऽयं दृश्यमानप्रकर्षः कालः समयः स एव कालोऽयम् इति श्लेषमूलाऽभेदाऽध्यवसानम्। सम्यक् प्रतिदिनोपचीयमानः उपागतश्च। प्रियवियोगाऽप्रियसंयोगयोरेककालतारूपः समुच्चयाऽलङ्कारः। इत्यादिवाक्यार्थानुसन्धानबलादालम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्याऽऽविर्भावनेन व्यञ्जनीयस्योत्क-

ण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात्। अथ तैः कृत्रिमत्वेनाऽतल्लिङ्गैरपि कृत्रिमत्वेनाऽज्ञानात् स्थायी रत्यादिरनुमीयते। सैव चाऽनुमितिश्चमत्काररूपा चर्वणा। अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते। चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः। अनुमानप्रयोगश्चैवम्। रामोऽयं सीताविषयकरत्यादिमान् सीताद्यात्मकविभावादिसम्बन्धित्वात् सीताविषयककटाक्षादिमत्त्वाद् वा, यन्नैवं तन्नैवम्, यथाऽहमिति। अस्मिन्कल्पे निरुक्ताऽनुमीतिरूपा चर्वणा सामाजिक निष्ठा चमत्कारकारिणी रस इति फलितम्।

## विवरणम्

एवं रामत्वनटत्वव्यासक्तैकप्रकारतानिरूपितरामनटव्यासक्तैकविशेष्यताका लोकोत्तराबुद्धिर्नटानामाहार्यभूमिकापरिग्रहेण पिण्डितगङ्गात्वतटत्वविशेषणिका तथाविधगङ्गातटावगाहिनी च कविव्यापारेण जन्यते। न चैतादृशीं बुद्धिं बाधो विरुणद्धि, नटे रामाभेदस्यानवगाहनात्। अयमेवाध्यवसायो यद् विषयतयोर्भिन्नाधिकरणकयोरभेदः। तादृशी च 'नटो रामः' इति प्रत्यक्षादिप्रतीतिवैक्ष्यमाणानुमानाङ्गम्। अत एव काव्यनाट्यारूढत्वमत्रापेक्ष्यत इति वादिनो व्याख्यानमुत्थापयति—'राम एवायम्' इति। सम्यक्प्रतीतिरवधारणम्। तच्च द्वेधा—विशेष्ये विशेषणायोगस्य विशेषणान्यतादात्म्यस्य वा विशेषणे विशेष्यान्सम्बन्धस्य च व्यवच्छेदावगाहनात्। तदुभयमपि नटस्यालौकिकप्रतीतौ नास्ति, येन रामत्वायोगज्ञानादिना बाध्येतेति' भावः।

मिथ्याप्रतीतिरौत्तरकालिकबाधेनबाध्या भवति। न चेयं तथा, नटत्वं धर्मितावच्छेदकीकृत्य रामतादात्म्यानवगाहनादित्याह—'न रामोऽयम्' इत्यादि। बाध इत्यनन्तरं भविष्यतीति शेषः। अव्यवधानलाभाय केवलम् औत्तरकालिक इत्युक्तम्। तया च भाविन्या बाधसत्तया भावेन प्रतीतिभ्य इत्यत्र प्रत्येतिधात्वर्थो भावः। पौर्वकालिकत्वेनोपलक्ष्यत इति 'यस्य च भावेन भावलक्षणम्' इति सूत्रात् सप्तमी सिध्यति। तेन 'न रामोऽयम्' इत्यौत्तरकालिकबाधकर्तृकभाविसत्तापौर्वकालिकी या 'रामोऽयम्' इति मिथ्याप्रतीतिः, ततो विलक्षणयेति वाक्यार्थः।

सर्वत्राभिलाषशब्द इतिना परामृष्टः प्रयोजकतया प्रतीताववभासते। तथा च 'रामः स्याद्वा' इत्यभिलापप्रयोजिका संशयप्रतीतिर्लभ्यते। तत्राभिलापे 'स्याद्वा' इत्यव्ययसमुदायश्च वाकारश्च संशयं ज्ञानसामान्यं वाभिधत्ते। सम्भेदे च नान्यतरवैयर्थ्यम्। 'पूतश्च विभूषितश्च' इत्यादौ चकारवत्, सङ्ख्याभिधाने सुबाख्यातवद्वा। तत्र च वाकाराद्यर्थे प्रकारितया रामो रामान्वितनञर्थश्चेत्युभयमन्वेति। वाकाराद्यर्थे तु विशेष्यितया, तदुभयप्रकारतानिरूपितविशेष्यतया वेदमर्थे सम्बध्यते। तादृशाभिलापे च विषयीभूतः सन्देहः स्वसाक्षात्कारादिद्वारा प्रयोजक इत्यवधेयम्।

'रामसदृशोऽयम्' इति यद्यपि सदृशप्रतीतौ बाधो न विरोधी, न वा नटव्यापारस्यानुपयोगः, सादृश्यस्वरूपपक्षतावच्छेदकग्राहकतयैव तदुपयोगात्। चित्रकरव्यापारोऽपि सादृश्यमेव गमयतीति रामसदृशो नट एव पक्षो भवितुमर्हति। तथापि सति नटे 'रामाभेदावभासे बाधस्वरूपासिद्ध्यादिदोषादनुमानमलब्धपदं स्यात्, अतः सदृशपक्षता निराकृता।

चित्रतुरगेति। चित्रतुरगं दृष्ट्वा तस्याग्रिमचरणौ मुखसन्निहितावुपलभ्य तेन संस्थानविशेषेण 'तुरगोऽयं धावति' इत्यनुमिमते यथा, तथेहापीति भावः।

'ग्राह्ये विषयीकृते नटे' इत्यनेन साक्षात्कारोपस्थितस्य नटनिष्ठस्य सुचरितादिनामप्रवृत्तिनिमित्तधर्मस्य प्रतीतिगोचरता सूच्यते । अत एव 'रामोऽयम्' इति प्रतीतौ 'अयम्' इत्यभिलापोऽपि सङ्गच्छते । अत एव नाटकस्य रूपकमिति सञ्ज्ञा । यथा हि 'मुखं चन्द्रः' इत्यादौ चन्द्रपदस्य विधावभिधा, तत्सादृश्यान्मुखे गौणी वृत्तिर्मुखचन्द्रयोरभेदाध्यवसायफलिका, तथाभिनयप्रमाणस्य रामे मुख्या, तत्सादृश्यान्नटे गौणी वृत्तिः । नटरामयोरभदेस्तु व्यञ्जनागम्यः । तत्राभेदस्तादात्म्यं पिण्डीभावो वेत्यन्यदेतत् ।

अत एव 'रूपकं तत्समारोपात्' इति सूत्रव्याख्याने 'मुखं चन्द्रः' इत्युदाजहार धनिकः । शब्दानामभिधादय इवान्येषामप्यभिनयानां मुख्यादयो वृत्तयो नाट्यदर्शने प्रसिद्धाः । अत एव 'शुद्धरामत्वेन नटो भासते' इति व्याख्यानं चिन्त्यम् । तथा सत्यतिशयसञ्ज्ञा हि प्रवर्तते, न तु रूपकसञ्ज्ञेति । किञ्च 'रामोऽहम्' इति वाचिकाभिनयोपस्थितो यत्र पक्षः, तत्रास्मच्छब्दप्रवृत्तिनिमित्तसुचरितत्वादिभानं केन तिरोधीयेतेति दिक् ।

नटेन प्रकाशितैः कारणकार्यसहकारिभिरनुमीयमान इत्यन्वयः । तत्र काव्यानुसन्धानस्य बलादलौकिककाव्यव्यापाराद् रामनटे कारणादेः सम्बन्धः प्रतीयते । आहार्याभिनयेन प्रत्यक्षसहकृतेनोपात्तस्य रामनटस्यैव 'सेयं ममाङ्गेषु' इत्यत्रास्मच्छब्देन परामर्शात् । तत्रापि कार्यस्यानुभावस्य वचनस्य हेतुग्राहकतयैवोपयोगो न तु प्रकृतहेतावनुप्रवेशः । तथा हि—'रामनटः सीताविषयकसम्भोगरतिमान्, चिराभिलषितसीताविषयकदर्शनजन्यहर्षवत्त्वात्, यश्चिराभिलषितयद्विषयकदर्शनजन्यहर्षवान्, स तद्विषयकसम्भोगरतिमान्, अहमिव' इत्यनुमानाकारः ।

तत्र रतिर्नाम 'इयमेतद्दर्शनादि वा सुखसाधनम्' इति वासना । तस्याः सम्भोगत्वं विषयसिद्धिकुण्ठिताभिलाषोपलक्षितत्वम् । तथाविधे साध्ये केवलो हर्षः पुत्रादिजन्मना । सीतादिदर्शनजन्मा च हर्षः प्राथमिकसीतादिदर्शनेनापि सम्भवतीति पूर्वाभिलषितत्वं सीतायां तद्दर्शने वा विशेषणम् । दर्शनपदेनात्र साक्षात्कार उच्यते । स च बाह्यद्रव्यविषयको द्वेधा सम्भवति—चक्षुषा त्वचा चेति । तत्र त्वाचस्य हर्षहेतुता 'अङ्गेषु' इत्यादिनोक्ता । तत्र सुधादिपदानां निर्वृतिजनकत्वाचविषये गौणी वृत्तिः । चाक्षुषस्य हर्षहेतुता तु 'सुपूर' इत्यादिना । सुखपूरणीयत्वमकष्टदत्वेन । शलाकिका स्वल्पवर्तिः । पूर्वाभिलषितत्वं तु मनोरथेत्यादिनोक्तम् । मनोरथस्याभिलषितवस्तुनः श्रीः सिद्धिः प्राप्तिः ।

अत्रापि 'नेत्रानन्देन चन्द्रेण' इत्यादाविव शुद्धोपचारः । मनसः सकाशादुद्गम्यैव मनोरथसिद्धिः शरीरिणी भूत्वा, लोचनस्येन्द्रियद्वयस्य गोचरं गतेत्युत्प्रेक्षागर्भेण वाक्यार्थेन क्षुद्रतमे मनसि कृच्छ्रावस्थिता न तथा सुधाकरोति स्म, यथा विततं लोचनमार्गमवतीर्य लब्धशरीरोल्लासेत्यर्थः प्रतीयते । 'मम प्राणेश्वरी' इत्यनेन सीतात्वादेरवगम इति काव्यानुसन्धानादेवावगतः पुष्कलो हेतुः ।

'रामनटः सीताविषयकविप्रलम्भरतिमान्, मेघादिदर्शनोद्दीपितत्वे सति पूर्वं सुखजनकसाक्षात्कारविषयीकृतायाः सीतायाः साक्षात्कारविरहेण दुःखितत्वात्' इत्यनुमानहेतोर्ग्राहकं काव्यानुसन्धानस्वरूपमनुभावमुल्लिखति—दैवादित्यादिः । अत्र विप्रलम्भरतिर्नामाभिलाषप्रकर्षोपहिता स्मरणरूपेण परिणता गम्या ।

तत्र पाखण्डानां भगवत्साक्षात्काररविरहेण पीडितानां भवद्विषया रतिर्नास्तीति सामान्यतः सुखव्याप्तौ व्यभिचाराद् विभावे सीतायां पूर्वतनसुखजनकसाक्षात्कारविशेषणं तयेत्यनेन निर्दिष्टम् । पूर्वं प्रियतया स्वीवृतेऽपि वस्तुनि वैराग्यदशायां न विद्यत एव । विद्यमानापि वा प्रकृष्टेनाभिलाषेण नोपधीयते रतिरिति तद्विरहप्रयोज्या बाधा प्रवेशिता । तत्र तत्साक्षात्काराभावस्वरूपो विरहो 'विप्रयुक्तः' इत्यनेन, तज्जन्यं दुःखं 'दैवात्' इत्यनेन चोक्तम् ।

न मया स्वतस्त्यक्ता, किन्तु पीडोन्मुखेन दैवेन त्याजितेत्यर्थात् तत्प्रयुक्तपीडाऽवगमात्। प्रिय(जन)विरहपीडितस्य प्रलयोद्रेकदशायां स्मरणपरिमाणो न सम्भवतीत्यतो मेघादिदर्शनसमवायित्वमुक्तम् 'अयम्'इति प्रत्यक्षनिर्देशेन सूचितमिति ध्येयम्। अथ यत्र सीतेयमेतावन्मात्र एव वाचिकोऽभिनयः, आहार्याभिनयेन वा नटान्तरे न सीतेयमिति चित्रतुरगन्यायेन बुद्धिः, तं च सीतानटमुद्दिश्य रामनटस्य कटाक्षभुजक्षेपादिस्वरूपचेष्टायाः साक्षात्कारः, तत्र न काव्यानुसन्धानान्निरुक्तहेतोर्ग्रहणमत आह—शिक्षेति। शिक्षया गुरूपदेशेन, योऽभ्यासः पौनःपुन्येन प्रवृत्तिः, तया निर्वर्तितं यत् स्वकार्यं व्यभिचारिभावकार्यं नेत्रत्रिभागचेष्टारोमहर्षादि, तत्प्रकटनेन तु तदीयव्यञ्जनया चेत्यर्थः।

चकारो विकल्पार्थः। नटेनैवेत्येवकारेण स्थायिभावनिरपेक्षत्वं नटव्यापारस्य सूच्यते। प्रकाशितैः पक्षधर्मतया गृहीतैः। रोमहर्षस्य बाह्यस्य चित्तवृत्तेर्जडत्वानुप्रवेशो नामान्तरो भावो मुख्योऽर्थः, हर्षादिश्च व्यङ्ग्यः। एवं नेत्रत्रिभागचेष्टाविशेषस्य प्रियदर्शनं मुख्यः, तद्धेतुको हर्षश्च व्यङ्ग्योऽर्थः। तथा च प्रत्यक्षपरिकलिताभिनयबोधितेन सीतानटाभिन्नप्रियजनदर्शनहेतुकहर्षेण रामनटसीतानटसम्भोगरत्यनुमितिरिति प्रघट्टकार्थः। कारणेत्यादि। कारणसहकारिणो रतिहेतावनुप्रवेशोऽनुभावस्वरूपकार्यस्य तु हेतुतत्प्रकाशकतयैवोपयोग इति स्मर्तव्यम्।

ननु स्वरूपासिद्धो हेतुः कथं रतिमवगमयेदित्याह—कृत्रिमैरिति। असिद्धैरपीत्यर्थः। तथाऽनभिमन्यमानैः अतथात्वेन व्यञ्जनयाऽभिमन्यमानैः। तथाविधो नटे व्यापारप्रयुक्तो हेतोः पक्षधर्मताभिमान एव नाट्यारूढत्वं विभावादिपदप्रवृत्तौ निमित्तमित्याशयेनाह—विभावादीति। एतेन सौत्रा विभावादिशब्दा व्याख्याता वेदितव्याः। तदीयं संयोगपदं गृहीत्वा व्याचष्टे—गम्येति। व्याप्यव्यापकभावस्वरूपं सहकारिणमासाद्य पक्षधर्मतया गृहीतैर्विभावादिभिरनुमीयमान इत्यर्थः। ल्यबन्ताध्याहारे कर्मणीयं संयोगादित्यत्र पञ्चमी। अनुमीयमान इत्यत्र शानच्। रसस्य निष्पत्तिरित्यत्र षष्ठी। अनुमातिना निष्पादयतिर्विवृतः।

नन्वेवं लिङ्गान्तरेण रत्यनुमानेऽपि कुतो न रसत्वमत आह—अन्येति। अन्यत्र पक्षेऽन्येन लिङ्गेनानुमीयमानाद् विलक्षण इति हेतुमाह—रसनीयत्वेनेति। आनन्दाभिव्यञ्जकत्वेनेत्यर्थः। आनन्दाभिव्यञ्जने बीजमाह—वस्त्विति। वस्तूनां रामनटसीतानटतद्दर्शनहेतुकालीकहर्षाणाम्, सौन्दर्यं लोकोत्तरत्वम्, तद्बलात्, तत्प्रयुक्तं तद्धेतुकतत्पक्षकानुमितेरपि लोकोत्तरत्वम् तस्मादन्यानुमीयमानविलक्षणोऽयमीयमान आनन्दमभिव्यनक्ति, गगने दृश्यमानं गन्धर्वनगरमिवेत्यर्थः।

एवंविधे रामनटनामन्यलौकिके नाट्यारूढे वस्तुनि सीतानटविषयकरतेर्बाधो नास्त्येव। प्रत्युतानुमानानुकूला स्थायिनः सम्भावनैवास्तीत्याह—स्थायित्वेनेति। स्थायित्वेनोपलक्षित उपलक्षणीयरतित्वादिविशिष्ट इत्यर्थः। यदाह—रत्यादिरिति।

रसपदार्थमाह—स्थायीभाव इति, चर्व्यमाण इत्यन्तम्। अत्र पक्षस्य रामनटादेरालम्बनस्य सीतानटादेस्तद्विषयिण्या रतेश्च न श्रोत्रियहालिकादीनां प्रतिसन्धानम्, नतरामनुमानम्, नतमामानन्दाभिव्यक्तिः।

तत्र हि सामाजिकानां वासनापि सहकारिणीत्याह—सामाजिकानामिति। चर्व्यमाण आनन्दजनकानुमितिस्वरूपचर्वणागोचरः, स्थायीभावी रसपदार्थ इत्यप्यनेनोक्तं भवतीति स्मर्तव्यम्।

न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसत्त्वेन भोगेन भुज्यते, इति भट्टनायकः ।

---

**सङ्केतः**

**[३. भट्टनायकमतम्]**

नैतदपीति भट्टतोतः । तथाहि—अनुकरणरूपो रसः इति यदूचे—तन्न । किञ्चिद्धि प्रमाणेनोपलब्धं तदनुकरणं इति वक्तुं शक्यम् । यथा—'एवमसौ सुरां पिबती'ति सुरापानानुकरणत्वेन जलपानं प्रत्यक्षेक्षितं भाति । इह च नटगतं किं तदुपलब्धं सत् रत्यनुकरणतया भाति ? इति तावत् चिन्त्यम् । तद्वपुः, तन्निष्ठं प्रतिशीर्षकादि, रोमाञ्चगद्गदिकादि, भुजाक्षेपवलनादि, भ्रूक्षेपकटाक्षादि च, न चित्तवृत्तिरूपरतेः अनुकारत्वेन कस्यचित् भाति; जडत्वेन भिन्नेद्रियग्राह्यत्वेन भिन्नाधिकरणत्वेन च, ततोऽतिवैलक्षण्यात् । तथाहि—नटवपुरादीनां जडत्वं चक्षुर्ग्राह्यत्वं च, रतेः अजडत्वं अचक्षुर्ग्राह्यत्वं च । प्रतिशीर्षकादीनां वपुः अधिकरणम्, रतेस्तु मनः अधिकरणम् । मुख्यदर्शने च तदनुकृत्याभासः । न च रामरतिं उपलब्धपूर्वी कश्चित् । एतेन—रामानुकारो नटे इत्यपि निरस्तम् ।

अथ नटगता चित्तवृत्तिरेव प्रतीता सती रत्यनुकारः शृङ्गारः ? तत्रापि किमात्मकत्वेन प्रतीयते ? इति चिन्त्यम् । ननु प्रमदाऽऽदिभिः कारणादिभिः लिङ्गैः या लौकिकी कार्यकारणसहचररूपा चित्तवृत्तिः प्रतीतियोग्या, तदात्मकत्वेन सा नटचित्तवृत्तिः भाति । हन्त ! तर्हि रत्याकारेणैव सा भातीति, दूरे रत्यनुकृतिवाचोयुक्तिः । ननु ते विभावादयः अनुकार्ये वस्तुसन्तः, इह तु अनुकर्तरि न तथा, इति विशेषः । अस्त्वेवम् । किन्तु ते विभावादयः अतत्कारणाः अतत्कार्याः अत्सहचररूपाः अपि काव्यशिक्षादिबलादानीताः कृत्रिमाः सन्तः, कृत्रिमत्वेन सभ्यैः गृह्यन्ते न वा ? इति विवेचनीयम् । यदि गृह्यन्ते, तदा तैः कथं रतेः अवगतिः ? । ननु अत एव तत् प्रतीयमानं रत्यनुकरणम् ? मुग्धबुद्धे ! हेत्वन्तरजाते हि कार्ये विशेषविदा हेत्वन्तरजत्वेन ज्ञाते रत्यनुकाररूपवस्त्वन्तरस्य अनुमानं तावत् भवेद्युक्तम् । अविशेषविदा तु तस्यैव मुख्यरतिरूपस्य प्रसिद्धस्य हेतोः—यथा वृश्चिकविशेषात् गोमयस्यैव अनुमानम् । सर्पस्य वृश्चिकस्यैव वा तत् परं मिथ्याज्ञानम् ।

अयं भावः—प्रसिद्धात् रामादिगतात् रतिरूपात् हेतोः रत्यनुकरणं नाम हेत्वन्तरम्, तज्जाश्चेत् अनुभावाः स्युः । तथैव च विशेषविदा यदि ज्ञायेरन्, तदा रत्यनुकरणरूपवस्त्वन्तरस्य अनुमानं युज्येत । न चैवम् । तत् कथमिव रत्यनुकारप्रतीतिः ? अविशेषविदा तथाविधानुभावादिदर्शने रतिरेवानुमीयते । तच्च मिथ्याज्ञानमेव इति ।

यत्रापि लिङ्गज्ञानं मिथ्या, तत्रापि तदाभासानुमानं अयुक्तम् । न हि धूमत्वेन ज्ञातात् बाष्पात् अग्न्यनुकारानुमितिः । एवं तदनुकारत्वेन भासमानादपि लिङ्गात् न तदनुकारानुमानं युक्तम् । न हि धूमानुकारत्वेन ज्ञायमानात् तुषारात् वन्ह्यनुकारजपापुञ्जप्रतीतिः दृष्टा ।

ननु अक्रुद्धोऽपि नटः क्रुद्ध इव भाति । सत्यम् । क्रुद्धेन सदृशः सः । सादृश्यं च भ्रुकुट्यादिभिः, गोरिव गवयेन मुखादिभिः, इति नैतावता अनुकारः कश्चित् । न च सभ्यानां सादृश्यं भाति, नापि सभ्यानां भावशून्या नर्तके प्रतिपत्तिः इत्युच्यते । अथ च तदनुकारप्रतिपत्तिः इति स्ववचनविरोधः ।

यच्चोक्तम्—'रामोऽयं' इति अस्ति प्रतीतिः इति—तत्रापि यदि न बाधकोदयः, तत् कथं न सम्यग् ज्ञानम् ? यदि च बाधकोदयः, कथं न मिथ्या ? वास्तवेन वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात् । तेन— 'विरुद्धबुद्ध्यसम्भेदात्' इत्यसत् । ननु नर्तकान्तरेऽपि 'रामोऽय'मित्यस्ति प्रतीतिः ! ततश्च रामत्वं सामान्यरूपमित्यायातम् ।

विभावाश्च काव्यात् अनुसन्धीयन्ते—इत्यपि न । न हि 'ममेयं सीता काचित्' इति स्वात्मीयत्वेन प्रतीतिर्नटस्य । अथ सभ्यस्य तथा प्रतीतियोग्याः क्रियन्ते इत्येतावदेव अनुसन्धानम्, तर्हि स्थायिनि सुतरां अनुसन्धानं स्यात् । तस्यैव हि मुख्यत्वेन 'अस्मिन् अयं' इति सभ्यानां प्रतीतिः ॥

तत् न सभ्यप्रतीत्यनुसारेण स्थाय्यनुकरणं रसः । न चापि नटस्य इत्थं प्रतीतिः—'रामं तद्वर्तिं वा अनुकरोमि' इति । सदृशकरणं ह्यनुकरणं अनुपलब्धप्रकृतिना न कर्तुं शक्यमिति । अथ पश्चात्करणं अनुकरणम्—तत् लोकेऽप्यनुकरणात्मता प्रसक्ता । अथ न नियतस्य कस्यचित् अनुकारः, अपि तु उत्तमप्रकृतेः शोकमनुकरोमीति—तर्हि केनेति ज्ञानम् । न तावत् शोकेन । उत्तमप्रकृतेः शोकाभावात् । न च अश्रुपातादिना शोकस्य अनुकारः । तद्वैलक्षण्यात् । इयत्तु स्यात्—उत्तमप्रकृतेः ये शोकानुभावाः तान् अनुकरोमीति । तत्रापि—कस्य उत्तमप्रकृतेः ? यस्य कस्यापीति चेत्—सोऽपि विशिष्टतां विना कथं बुद्धौ आरोप्यते ? य एवं रोदिति इति चेत्, तर्हि स्वात्मानमपि नटः अनुकरोति इत्यायातम्, तस्यापि रोदनसद्भावात्, इति गलितः अनुकार्यानुकर्तृभावः ।

यच्चोच्यते—'वर्णकैः हरितालादिभिः संयुज्यमान एव गौः' इत्यादि, तत्र यदि 'अभिव्यज्यमानः' इत्यर्थः संमतः, तत् न युज्यते । न हि वर्णकैः पारमार्थिको गौः अभिव्यज्यते, यथा दीपाद्यैः । किन्तु तत्सदृशः समूहविशेषः निर्वर्त्यते । त एव हि वर्णकाः गवावयवसंनिवेशसदृशेन संनिवेशेन स्थिताः 'गोसदृक्' इति प्रतिभासं उत्पादयन्ति इति चेत्—नैवं हि विभावादिसमूहः रतिसादृश्यप्रतीतिग्राह्यः । न च 'स्थाय्यनुकरणं रसः' इति मुनिना क्वचिदप्युक्तम् । तत् न भावानुकरणं रसः । अन्यान्यपि दूषणानि सन्ति । परं विस्तरभीरुभिः नोक्तानि ।

वयं तु ब्रूमः—अत्र मते यत्—'नटगतत्वेन अनुमीयमानः स्थायी सभ्यानां रसः' इत्यूचे, तत्र अनुमीयमानत्वं अनुभवविरुद्धम् । तस्यविगलितवेद्यान्तरत्वेन रस्यमानत्वात् इति । तस्मात् अन्यथोच्यते—न ताटस्थ्येनेत्यादि ।

ताटस्थ्यम् स्वव्यतिरिक्ताश्रयत्वम् । अत्र—तद्गतत्वेन हि रतिप्रतीतौ, घटादिवत् न रसनीयत्वं स्यात् स्वगतत्वेन तु प्रतीतौ स्वात्मनि रसस्योत्पत्तिः इत्यङ्गीकृतं स्यात् । सा च न युक्ता । सीतादेः सभ्यान् प्रति अविभावत्वात् । ननु—कान्तादित्वं च साधारणं वासनाविकासहेतुः विभावीभविष्यतीति चेत्—देवतावर्णनादौ तदपि वा कथं भवेत् ? न वा स्वकान्तादिस्मरणं मध्ये संवेद्यते । लोकोत्तरस्य रामादेश्च ये सेतुबन्धादयः ते वा कथं साधारणाः स्युः ? । न च उत्साहादिमतः रामादेः स्मृतिः । अननुभूतत्वात् । शब्दादेः तत्प्रतीतावापि न रसोत्पत्तिः, प्रत्यक्षादिव नायकमिथुनप्रतीतौ । प्रत्युत लज्जादेरेव उत्पत्तिः स्यात् । किञ्च—उत्पत्तिपक्षे सीतादिषु कामित्वं

स्यात्। करुणस्योत्पादात् दुःखित्वं च। ततश्च तत्प्रेक्षासु पुनः अप्रवृत्तिरेव स्यात्। विभावादिनिवृत्तावपि कार्यरूपरसस्य घटादिवत् अवस्थानं च प्रसज्येत। न चैवमस्ति। विभावादिनिवृत्तौ रसस्यापि निवृत्तेः। तत् नोत्पत्तिरपि। नाप्यभिव्यज्यते। दीपादिप्रकाश्यघटादिवत् तस्य पूर्वासिद्धत्वाभावात्। अथ शक्तिरूपतया अस्ति चेत्, तदा तदभिव्यक्तौ विषयार्जनरतस्य अप्रवृत्तिः स्यात्। तत्रापि च—स्वगतः अभिव्यज्यते ? परगतो वा ? इति पूर्ववदेव दोषः। तत् कथं अयं अनुभूयते ? इत्याह—किन्तु काव्ये इत्यादि। काव्ये-श्रव्ये, नाट्ये—अभिनेये। तन्मते हि—वाच्यविषयाभिधाव्यापारानन्तरभावी रसादिविषयः भावकत्वनामा व्यापारः स्वीकृतोऽस्ति। स च घननिबिडसंमोहसंवृतत्वं निवार्य विभावादीन् स्वस्य नटस्य च साधारणान् करोति। अत एव न ताटस्थ्यात्मगतत्वे।

अयं भावः—यदि हि—अभिधाव्यापारानन्तरभावी भावकत्वव्यापारः नाङ्गीक्रियते, तदा शास्त्रेभ्यः काव्यनाट्ययोः किमन्तरं स्यात् ? । तस्मात् द्वितीयोऽस्ति रसभावनाख्यः व्यापारः, यद्वशात् विभावानां साधारणत्वापादनं स्यादिति।

भाविते च रसे तस्य भोगः स्यादित्याह—भोगेनेति भोगः। यत् स्वयं भुज्यते—रस्यते, परस्मै दीयते च, सः भोगः। स च अनुभवस्मृत्यादि विलक्षण एव। तद्विशेषणमाह—सत्त्वेति। यदा हि रजसो गुणस्य द्रुतिः, तमसोऽविस्तरः, सत्त्वस्य च अतिविकासः, तदा भोगः स्वरूपं लभते। सत्त्वोद्रेके च आनन्दः भवति। सत्त्वोद्रेकेण प्रकाशः प्रकटः यः आनन्दः तन्मयी या संवित् तस्यां विश्रान्तिः, सा सतत्त्वं परमार्थः यस्य स तथा। स च परब्रह्मास्वादसोदरः सहृदय विषयः रसः। एतेन काव्ये व्यापारत्रयं वाच्यं रस-सहृदयविषयं—अभिधाभावनाभोगात्मकं उक्तम्।

अत्रोच्यते—रसस्वरूपे एव तावत् विप्रतिपत्तिः प्रवादिनाम्। तथाहि—प्रागवस्थायां यः स्थायी, स एव विभावादिभिः प्राप्तपरिपोषः अनुकार्यगत एव रसः, अनुकर्त्रा नाट्ये प्रयुज्यमानत्वात् नाट्यरसः इति केचित्।

प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेः चित्तवृत्त्यन्तरेण कः पोषार्थः ? विस्मयशोकक्रोधादेश्च क्रमेण तानवं दृष्टम्, न तु पोषः। तत् न अनुकार्ये रसः, अनुकर्तर्यपि न, लयाद्यननुसरणप्रसङ्गात्। सभ्यगते च कः चमत्कारः ? प्रत्युत करुणादौ दुःखमेव। तस्मात् नायं पक्षः। कस्तर्हि ? इह आनन्त्यात् नियतानुकारो न शक्यः, निष्प्रयोजनश्च। विशिष्टताप्रतीतौ ताटस्थ्येन वृत्त्यभावात्। तस्मात् नियतावस्थात्मकं स्थायिनं भावमुद्दिश्य विभावादिभिः संयुज्यमानैः 'अयं रामः सुखी' इति स्मृतिविलक्षणा, स्थायिनि प्रतीतिगोचरतया आस्वादरूपा प्रतिपत्तिः, अनुकर्त्रवलम्बना नाट्यैकगामिनी रसः। तस्य च अनुकार्याभिन्नत्वाभिमतः नर्तक एव आधारः, सभ्यस्तु आस्वादकः। तेन नाट्य एव रसाः, न अनुकार्यादिषु—इत्यन्ये।

अनुकर्तरि यः स्थाय्यवभासः अभिनयादिना कृतः, भित्ताविव वर्णकादिना अश्वावभासः, स एव लोकातीततया आस्वादापरसंज्ञया प्रतीत्या रस्यमानः रसः इति, नाट्याद्रसाः नाट्यरसाः भवन्ति इत्यपरे।

केचित्तु—विभावानुभावमात्रमेव भावकत्वादिरूपविशिष्टसामग्र्या सम्पद्यमानं, तद्विभावनीयानुभावनीयव्यभिचारिभिः उपचितचित्तवृत्त्युचितवासनानुरक्तस्वनिवृत्तिचर्वणाविशिष्टमेव रसः, तत् नाट्यमेव रसः इत्याहुः।

अन्ये तु शुद्धं विभावमेव, अपरे शुद्धं अनुभावम्, इतरे स्थायि भावमात्रम्, परे व्यभिचारिणम्, अन्ये तत्संयोगम्, एके अनुकार्यम्, केचन सकलमेव समुदायं च रसमाहुः, इत्यलं बहुना।

## सङ्केतः (रुय्यकः)

भट्टनायकदर्शने तु रसस्योत्पत्तिप्रतीत्यभिव्यक्तिपक्षान्दूषयन् भोगपक्षः प्रतिष्ठापितः। तत्रोत्पत्तिवादिलोल्लटेन विभावैरेवोत्पत्तिरङ्गीकृता, अनुभावव्यभिचारिणोः प्रत्यायकत्वेन पोषकत्वेन चाभ्युपगतत्वात्। प्रतीतिस्त्वनुमानरूपा श्रीशङ्कुकेनाङ्गीकृता। अभिव्यक्तिः पुनर्विद्यमानस्यैव स्थायिनो ध्वनिवादिभिरभ्युपगता। तत्र त्रयाणामपि पक्षाणामिदं साधारणं दूषणम्। स्वगतत्वेन तथाभावेन रसनीयत्वम्, परगतत्वेन ताटस्थ्यात् रसनीयत्वाभाव एव। अभिव्यक्तिपक्षे विषयार्जनतारतम्यादपि रसनीयत्वाभावः। तस्मात् पक्षत्रयं त्यक्त्वा भोगपक्षोऽङ्गीकार्यः। भोगश्च चर्वणात्मा निर्वृत्तिपर्यवसायी जननादिविलक्षणः, तेषां देशकालाकारनियमेन प्रवृत्तेरुक्तदूषणाकरक्रान्तत्वात्, अस्य च तद्विलक्षणत्वेनालौकिकत्वादुक्तदोषातिक्रमात्। तथा हि काव्यात्मनः शब्दस्य त्र्यंशो व्यापारः—अभिधाभावकत्वभोगकृत्त्वाख्यः। तत्रापि निरन्तरसान्तरार्थनिष्ठत्वेन मुख्यामुख्यभेदेन द्विविधः शब्दव्यापारः। स शास्त्रेतिहासयोरपि यथाक्रमं शब्दार्थप्राधान्येन प्रभुमित्रसम्मितयोः साधारणः। अंशद्वयन्तु काव्यनाट्ययोरेव, उभयत्रापि व्यापारप्राधान्यात् जायासम्मितत्वेन व्यवस्थितेः। तत्र भावकत्वं सीताप्रभृतिविभावादीनां यत्राप्यसम्भवः, तत्रापि भवद्भावनं साधारण्यापादनार्थम्। तच्च काव्ये गुणालंकारत्वाद्दोषपरिहाराच्च सम्भवति, नाट्ये तु चतुष्प्रकाराभिनययोगात्। सामग्रीवैचित्र्याद्धि पदार्थानां वैचित्र्यलाभः, तद्यथा रजनिकरमयूखसन्निकर्षेण चन्द्रकान्तोपलस्य द्रवत्वोत्पादः। एवं काव्यनाट्ययोः सामग्रीवैशिष्ट्येन साधारणीकरणं नाम भावकत्वं व्यापारः। साधारणीकृतेषु च विभावादिषु साधारण्येनैव विषयीकृतस्य स्थायिनः सहृदयविषयचर्वणकारित्वं नाम भोगकृत्त्वं पार्यवसानिकं व्यापारः। तत एव सहृदयरञ्जनाज्जायसम्मितत्वम्। भोगश्च परानन्दास्वादात्मा योगिगतो ब्रह्मास्वादसन्निकृष्ट इत्यास्तामेतत्।

## बालचित्तानुरञ्जनी

अस्मिन्नपि पक्षे अरुचेः भट्टनायकमतमवतारयति न ताटस्थ्येनेत्यायादिना। भट्टनायकः अनुमितिपक्षं विकल्पपूर्वकं दूषयति न ताटस्थ्येनेति। अयमभिप्रायः। रसस्य प्रतीतिः परगतत्वेन स्वगतत्वेन वा?। नाद्यः, स्वरसनीयत्वाभावेन सर्वदा रसस्य नटे रसोऽस्तीत्येवकारेण तटस्थत्वप्रसङ्गात्। न द्वितीयः, अनुमीयमानत्वचर्व्यमाणत्वयोर्विरोधात्। करुणे दुःखित्वप्रसङ्गेन तत्र प्रवृत्त्यभावप्रसङ्गाद्वेति स एवोत्पत्तिपक्षं दूषयति नोत्पद्यत इति। दण्डचक्रादीनां निवृत्तौ घटादिवत् विभावादिकारणानां निवृत्तावपि रसस्यावस्थानप्रसङ्गात्। परगतत्वेन स्वगतत्वेन वेत्यादि उक्तदूषणप्रसङ्गान्नेति भावः।

वक्ष्यमाणमभिव्यक्तमपि दूषयति नापि व्यज्यत इति। सर्वेषामभिव्यक्तिप्रसङ्गेः भावकानामेवाभिव्यक्तिरिति नियमाभावप्रसङ्गात् शृङ्गारस्य पूर्वमसिद्धत्वात् परगतस्वगतेत्याद्युक्तदूषणप्रसङ्गाच्चेति भावः।

एवमनुमित्युत्पत्त्यभिव्यक्तिपक्षं दूषयित्वा भट्टनायकः स्वसिद्धान्तमाह अपित्विति। दोषाभावगुणालङ्कारमये काव्ये चतुर्विधाभिनयरूपे नाट्ये च काव्यरूपस्य शब्दस्याभिधा भावना तद्भोगीकृतिरिति त्रयो व्यापाराः अभिधानं कर्तृवाक्यभूतशब्दार्थालङ्कारादिविषय भावकत्वं शृङ्गारादिरसादिविषयं, भोजकत्वं सहृदयविषयमिति विवेकः। अभिधातः अभिधानकर्तृत्वव्यापारात् द्वितीयो भावकत्वव्यापारः नटं प्रेक्षकांश्च प्रति विभावादीनां

साधारणकरण: साधारणीकृत आत्मा विभावादयो येन एवं विधेन भावकत्वव्यापारेण भाव्यमानो भावित: साधारण्येनानुसंधीयमान: स्थायी रस: । भोगेन भोजकत्वव्यापारेणानुभवस्मृतिविलक्षणेन भुज्यते चर्व्यते ।

## काव्यादर्श:

प्रतीतिपक्षे कक्षीक्रियमाणे सा प्रतीति: परगता स्वगता वेति दूषयन्नाह—न ताटस्थ्येनेति । रसो यदि परगततया प्रतीयेत तत् ताटस्थ्यमेव स्यात्, न च स्वगतत्वेन प्रतीयते । रामादिचरितमयात् काव्यादसौ प्रतीयते । स्वात्मगतत्वेन च प्रतीतौ करुणे दु:खित्वं स्यात् । तत: करुणप्रेक्षासु पुनरप्रवृत्ति: स्यात् । न च सा प्रतीतिर्युक्ता सीताया: सामाजिकं प्रति, अविभावत्वात् । न च कान्तात्वं साधारणं वासनाविकासहेतुर्विभावताया प्रयोजकं, देवतादौ साधारणीकरणायोग्यत्वात् । न च स्वकान्तास्मरणं मध्ये संवेद्यते । ये च रामादीनां समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भजेयु: । न च तत्त्वतो राम: स्मर्यतेऽननुभूतत्वात् । यदि च शब्दानुमानादिभ्यस्तत्प्रतीतिरिष्यते तदा न लोकस्य रसोपजन: प्रत्यक्षादिव । नायकमिथुनप्रतिपत्तौ हि लज्जाजुगुप्सास्पृहादिस्वोचिचित्तवृत्त्युदयव्यग्रतया का सरसत्वकथापि स्यात् । तन्न प्रतीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता । एतदेवोत्पत्तावपि दूषणम् । ततो नोत्पत्तिरपि । नाभिव्यज्यत इति । शक्तिरूपस्य हि शृङ्गारस्य पूर्वं स्थितस्य पश्चादभिव्यक्तौ विषयार्जनतारतम्यप्रवृत्ति: स्यात् । तत्रापि च किं स्वगतोऽभिव्यज्यते परगतो वेति पूर्ववदेव दोष:, इत्याह—अपि तु काव्य इति । दोषाभावगुणालंकारमये । नाट्य इति । चतुर्विधाभिनयरूपे । अभिधात इति । अयमर्थ: । काव्यात्मन: शब्दस्याभिधाभावनाभोगीकृतिरूपास्त्रयोंऽशा । तत्र अभिधायकत्वं वाच्यविषयं, भावकत्वं रसादिविषयं, भोगकृत्त्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापारा: । तत्राभिधायोगो यदि शुद्ध: स्यात्, तत् तन्त्रादिभ्य: शास्त्रन्यायेभ्य: श्लेषाद्यलंकाराणां को भेद: । वृत्तिवैचित्र्यं श्रुतिदुष्टादिवर्जनं च अकिंचित्करम् । तेन रसभावनाख्यो द्वितीयो व्यापारो, यद्वशाद् अभिधापि विलक्षणा । स च विभावादीनां साधारणीकरणत्वहेतु:, तेन च भावितो रसो भोगेनानुभवस्मृतिविलक्षणेन सत्त्वोद्रेकात् प्रकाशो यस्यानन्दस्य तन्मयी या संविद्विश्रान्तिश्चित्स्वभावनिर्वृतिविश्रम: सैव सतत्त्वं परमार्थो यस्य तेन परब्रह्मास्वादसब्रह्मचारिणेति । यावत् । । स एवाह—

**अभिधाभावना चान्या तद्भोगीकृतिरेव च ।**
**अभिधाधामतां याते शब्दार्थालंकृती तत: ॥**

ततोंऽशत्रयमध्यात्—

**भावनाभाव्य एषोऽपि शृङ्गारादिगणो मत: ।**
**तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नर: ॥**

किं तु कोऽयं भोग: प्रतीत्यादिव्यतिरिक्त: संसारे, रसनेति चेत्, सापि प्रतीतिरेवेति भोगीकरणव्यापार: काव्यस्य रसविषयो ध्वननात्मैव, नान्यत् किंचित्, केवलं नामान्तरम् । निष्पादनाभिव्यक्तिद्वयानभ्युगमे च नित्यो वाऽसन् वा रस: स्याद् न तृतीया गति: । न चाप्रतीतं वस्त्वस्तिताव्यवहारयोग्यम् । भावकत्वमपि समुचितगुणालंकारपरिग्रहात्मकमस्माभिरेव वक्ष्यते । किं तदपूर्वम् ।

## विवेकः

भट्टनायकदर्शने तु रसस्योत्पत्तिप्रतीत्यभिव्यक्तिपक्षान् दूषयित्वा भोगपक्षः प्रतिष्ठापितः। तत्रोत्पत्तिर्वादिना लोल्लटेन विभावैरेवोत्पत्तिरङ्गीकृताः, अनुभावव्यभिचारिणोः प्रत्यायकत्वेन पोषकत्वेन चाभ्युपपन्नत्वात्। प्रतीतिस्त्वनुमानरूपा श्रीशङ्कुकेनाङ्गीकृता। अभिव्यक्तिः पुनर्विद्यमानस्यैव स्थायिनो ध्वनिवादिभि[र]भ्युपगता। तत्र त्रयाणामपि पक्षाणां साधारणमिदं दूषणम्। स्वगतत्वेन तथाभावे न रसस्य रसनीयत्वम्, परगतत्वेन ताटस्थ्याद्रसनीयत्वाभाव एव। अभिव्यक्तिपक्षे विषयार्जनतारतम्यादपि रसनीयत्वाभावः। तस्मात् पक्षत्रयं त्यक्ता भोगपक्षोऽङ्गीकार्यः। भोगश्च चर्वणात्मा निर्वृतिपर्यवसायो जननादिविलक्षणः तेषां देशकालाकारनियमेन प्रवृत्तेरुक्तदूषणा(दोषनि) करानतिक्रान्तत्वात्। अस्य च तद्विलक्षणत्वेनालौकिकत्वादुक्तदोषातिक्रमात्। तथाहि काव्यात्मनः शब्दस्य त्र्यंशो व्यापारः—अभिधा-भावकत्व-भोगकृत्त्वाख्यः। तत्रापि (तत्राऽभिधा) निरन्तरसान्तरार्थनिष्ठत्वेन मुख्यामुख्यभेदेन द्विविधः शब्दव्यापारः। स शास्त्रेतिहासयोरपि यथाक्रमं शब्दार्थप्राधान्येन प्रभुमित्रसस्मितयोः साधारणः। अ[न्य]दंशद्वयन्तु काव्यनाट्ययोरेव, उभयत्रापि व्यापारप्राधान्याज्जायसम्मितत्वेन व्यवस्थितेः। तत्र भावकत्वं सीताप्रभृतिविभावादीनां, यत्राप्यसम्भवस्तत्रापि भवद्भावनं (?) साधारण्यापादनार्थम्। तच्च काव्ये गुणालङ्कारयोगदोषपरिहाराच्च सम्भवति, नाट्ये चतुःप्रकाराभिनययोगात् सामग्रीवैचित्र्याद्धि शब्दार्थानां वैचित्र्यपलाभः। तद्यथा रजनिकरमयूखसन्निकर्षेण चन्द्रकान्तोपलस्य द्रवत्वोत्पादः, एवं काव्यनाट्ययोः सामग्रीवैशिष्ट्येन साधारणीकरणं नाम भावकत्वं व्यापारः। साधारणीकृतेषु च विभावादिषु साधारण्येनैव विषयीकृतस्य स्थायिनः सहृदय(ये)विषयचर्वणकारित्वं नाम भोगकृत्त्वं पार्यवसानिकं व्यापारः। तत एव सहृदयरञ्जनाज्जायासम्मितत्वम्। भोगश्च परानन्दास्वादात्मा योगिगतो ब्रह्मास्वादसन्निकृष्ट इत्यास्तामेतत्।

## दीपिका

ताटस्थ्येनेति—उदासीनत्वेन, रसनीयत्वाभावप्रसङ्गात्। नात्मगतत्वेन प्रतीयते पूर्वसिद्धत्वाभावात्, वर्त्तमानस्य साक्षात्कारविरहाच्च। नोत्पद्यते-सीताऽऽदिविषयत्वेन रत्युत्पत्तौ पातकित्वापातात्, स्वकान्तविषयत्वेन तदनुसन्धानापत्तेः, रत्यादिषु भावप्रसङ्गाच्च। नाभिव्यज्यतेऽभिव्यक्तेर्ज्ञानविषयत्वेन तद्दूषणग्रस्तत्वात्। काव्ये नाट्ये च कृतास्पदेन भावकत्वव्यापारेण भाव्यमानः सकलसामाजिकगततया सम्भाव्यमानः। कोऽयं भावकत्वव्यापार इत्याह—अभिधातो द्वितीयेन साधारणीकरणात्मना। अभिधेति भट्टादिप्रसिद्धवृत्त्युपलक्षणम्। तदतिरिक्तेन समुद्रलङ्घनोत्साहशालिहनूमदादिवर्णनीय कवित्वभावकानां भेदानुव्यवसायरूपेणेत्यर्थः। स्थायी रामादौ स्थिरः। भोगेन भुज्यते विषयीक्रियते। कोऽयं भोग इत्याह—सत्त्वेति। सत्त्वस्योद्रेको रजस्तमसी अभिभूयाविर्भावस्तस्मात्प्रकाशः स्पष्टतरो य आनन्दस्तनमयी तदेकरूपा या संवित्तत्र विश्रान्तिः पूर्वापरानुसन्धानादिबाह्यप्रमेयव्यासङ्गाभावः, स एव सतत्त्वं स्वरूपं यस्य तेन। विश्रान्तिगतत्वेनेति पाठे विश्रान्ति गतः प्राप्तो विश्रान्तिगतः प्रमाता तस्य भावो धर्मो विश्रान्तिगतत्वं तेनेति भट्टनायको ध्वनिदर्शनविद्वेषी मन्यते।

अत्र किंगतो रत्यादिः साधारण्याभिमानविषयो योग्यतामापद्यते ? न तावदनुकार्यानुकर्तृगतः, असन्निहितस्य भोगविषयताऽनुपपत्तेः, साधारण्यबलादेव भावके सन्निहित इति चेत्, तथापि वास्तवताविरहेण तद्बुद्धेरप्र-

मात्वापातः। कुरु च तत्र प्रामाण्यमनियतम्। किञ्च साधारण्येन प्रतीतस्य साधारणघटादिवद् रस्यमानत्वमेव। अतएव 'साधारणत्वाकारोऽपि तत्र नोन्मिषति स्फुट' मित्यबोचं ध्वनिसिद्धान्तसंग्रहे। किञ्च भोगविषय एव भोग्यः, न च रसस्तथा, तस्य तद्ग्राह्यसिद्धत्वाभावादिति प्रतीतिपक्षोक्तदोषः। कथं तर्हि व्यञ्जनपक्षेऽपि निस्तार इति चेन. सत्यं, प्रकाशप्रादुष्कृतरूपनाममात्रेणैव रसादिप्रतीतौ न व्यञ्जनाऽभिधानमङ्गीक्रियते।

वस्तुतस्तु विलक्षणं एवायं व्यापारः, अतएव रसनास्वादनचर्वणादयो विलक्षणव्यपदेशाः। व्यञ्जकता तु पृथक्सिद्ध एवार्थे भवति। यथोक्तं प्राचीनैः—

**स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको: मतः।**
**यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्।** इति॥

न च वाच्यं, मत्पक्षेऽपि दीयतामियमेव प्रसारिणी दृष्टिः, भोगैकार्थस्यैव हि रसे भोज्यत्वमुपचरितमस्ती,ति। एवं तर्हि नामान्तरमेव भोगो रसनं व्यञ्जनञ्च इत्यस्मानेव सर्वात्मना शरणं गतोऽस्ति। ततश्च निवर्त्त्यतामस्माकं सर्वेषामुपजीव्येभ्यः सकलरसाचार्यचक्रवर्त्तिभ्यो ध्वनिकारपादेभ्यः पूर्वग्रहीता रोषकषायविषमा दृष्टिः, अङ्गीकुरु च सहृदयहृदयचिरनिद्राणानादिवासनाऽन्तर्लीनस्यैव रत्यादेः रसत्वेन स्फुरणम् इति विश्रान्तो विवादः। एषाञ्च पक्षाणामुत्तरोत्तर बलीयस्तया नासङ्गतः क्रमोपन्यासः, पूर्वेषां निराकार्यत्वञ्च, 'व्यक्तः स तै'रित्यादि सूत्रयता सूत्रकृता ध्वनिदर्शनरहस्याविष्कर्त्तरि च श्रीमदाचार्याभिनवगुप्तपादा इति गुरुगौरवं दर्शयता च वृत्तिकृता सूत्रितं मन्तव्यम्।

## दर्पणः

ताटस्थ्येन औदासीन्येन रसः स प्रतीयते, तथा सत्यरसनीयत्वापत्तेः। नानुगतत्वेन, सभ्यानां व्रीडातङ्काद्यापत्तिप्रसङ्गात्। यदि चोत्पद्यते किं सीतादिविषयत्वेन, आत्मकार्यतादिविषयत्वेन वा । आद्ये पातकित्वापातः, द्वितीये रत्यादिसद्भावप्रसङ्गः स्यात्। नाभिव्यज्यते पूर्वसिद्धत्वाभावात् दीपेन घटस्येव हि पूर्वसिद्धस्येव व्यङ्ग्यत्वम्। किन्तु काव्यं नाट्यनिष्ठेन भावकत्वाख्येन व्यापारेण भाव्यमानः सकलसभ्यनिष्ठतया संभाव्यमानः स्थायी रामादौ स्थिरतरो भोगेन भुज्यते विषयीक्रियते। कोऽसौ भावकत्वव्यापार इत्याह अभिधात इति। द्वितीयेनेत्युपलक्षणम् तेन-यस्य मते एक एवाभिधाव्यापारस्तन्मते द्वितीयेन, यस्य द्वौ तन्मते तृतीयेन, यस्य त्रयस्तन्मते चतुर्थेनेत्यर्थः विभावादिभिः साधारणीकरणञ्च रसादिकवित्वभावकानां भेदभावेन प्रत्यायनं, तदेव तस्य भावकत्वव्यापारस्यात्मा स्वरूपम्। कोऽयं भोग इत्याह सत्त्वेति। सत्त्वोद्रेकात् रजस्तमसी अभिभूयाविर्भावात्। प्रकाशः स्पष्टतरः, यद् ज्ञानं तद् रसोद्रेकरूपाया सवित् ज्ञानं तत्र विश्रान्तिर्बाह्यप्रमेयग्रहणराहित्येन स्थैर्यं तदेव सत्त्वं स्वरूपं यस्य तथाविधेन भोगेनेत्यर्थः। 'विश्रान्तिगतत्वेन' इति पाठे विश्रान्तिं गतः प्रमाता, तस्य भावस्तत्त्वं इति भट्टनायकाख्यस्य विवरणमित्यर्थः। अत्रानुकार्यनिष्ठस्य स्थायिनः साधारण्येन प्रतीतस्यापि रसत्वं असन्निहितस्य भोगविषयतानुपपत्तेः। भोगश्च सच्चिदानन्दस्वरूप इत्युक्तम्। रसस्य च तदेकार्थतया निरूपयिष्यमाणस्य कथं तद्विषयकत्वम्। उपचारस्तु भोगविषयताङ्गीकारे अस्माकं एव पक्षः।

## साहित्यचूडामणिः

इदानीं भट्टनायकमर्यादां पर्यालोचयति—'न ताटस्थ्येने'-ति । अनन्तरवादिनिर्व्यूढोरसस्य ताटस्थ्यपक्षो नोपपद्यते असत्कल्पत्वप्रसङ्गात् तस्य । नात्मगतत्वेनेति । अनुकार्यो रामादिरनुकर्ता नटश्चात्रात्मानौ, सामाजिकानां स्वीकारात् । अथवा प्रतीत्यपेक्षया त्रयोऽपि निषिध्यन्ते तद्गतत्वेन न प्रतीयते । किं बहुना रसो न केनचिदप्याकारेण प्रतीयते केवलं भाव्यत इति समर्थयिष्यमाणत्वात् । अस्तु तर्हि तस्योत्पत्तिरित्याशङ्क्याह—'नोत्पद्यत' इति । अथाभिव्यज्यतामिति चेन्नेत्याह—नाभिव्यज्यत इति । का तर्हि गतिरित्यत्राह—'अपित्वि'-ति । भोगकृत्वरूपतृतीयापेक्षया अभिधातो द्वितीयेन । 'काव्य' इति । शास्त्रादिष्वभिधैवेत्यस्तु नाम । काव्यनाट्ययोस्तु भावकत्वं भोगकृत्त्वं च वैशेषिकम् । अथ किमेतद् भावकत्वं नामेत्यत्राह—'विभावादी'-ति । विभावानुभावादीनामनुकार्यापेक्षया पूर्वमसाधारणानां सहृदयेषु यत् साधारणीकरणं तत् स्वभावेन भाव्यमानः साधारणीक्रियमाणः स्थायी ।

अथ भोगकृत्त्वमाह—'सत्त्वे'ति । 'रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते' इति दुःखमोहवार्त्तानभिज्ञं चित्तं सत्त्वम्, तस्य च उद्रेक उच्चलत्ता तेन प्रकाशा प्रथमाना आनन्दप्रकृतिकायाः संविदो या विश्रान्तिः स्वप्रतिष्ठितत्वरूपं नैश्चिन्त्यं सैव सतत्त्वं स्वभावो यस्य तादृशेन भोगेन भुज्यते रैपोषं पुष्णातीतिवत् ।

## सम्प्रदायप्रकाशिनी

अथोत्पत्तिलक्षणं ज्ञप्तिलक्षणं चोक्तचरं वक्ष्यमाणं च व्यक्तिपक्षं निराकर्तुकामस्य भट्टनायकस्य मतोपन्यासः—न ताटस्थ्येनेत्यादि । पक्षद्वयमपि विकल्प्य दूषयितुमुक्तं—न ताटस्थ्येन नात्मगतत्वेनेति । किमसौ रसस्ताटस्थ्येन प्रतीयते, उतात्मगतत्वेन । नोभयमप्युपपद्यते । उभयथापि साधारण्यभङ्गाद् रसत्वमेव हीयेतेति भावः । कथं तर्हि प्रतीतिरित्याह आह—अपि त्वित्यादि । काव्ये नाट्ये चेतिविषयसप्तम्यौ । अभिधातो द्वितीयेनेति तसिला भावकत्वव्यापारस्याभिधानन्तरभावित्वं द्योतितम् । नन्वप्रत्यक्षत्वाच्छब्दव्यापारः कार्येणैवानुमीन्यन्ते । केनेह कार्येण भावकव्यापारमनुमिनुम इत्यत आह—विभावादिसाधारणीकरणेति । येन विभावादीनि साधारणीक्रियन्ते स भावकव्यापारः । साधारणीकरणात्मनेति कार्यकारणयोरभेद उपचरितः । साधारणीकरणं हि भावकत्वव्यापारस्य कार्यमेव । भाव्यमानः साधारण्येनानुसन्धीयमानः । एवं साधारणीकृतः स्थायी भोगेन भुज्यते भोगाख्येन तदुभयातिरेकिणा व्यापारेणास्वाद्यत इत्यर्थः । भावकत्वव्यापारेण साधारणीकृता विभावादयो येन भुज्यन्ते स व्यापारो भोग इति यावत् । ननु किंस्वरूपोऽयं भोग इत्यत आह—सत्त्वोद्रेकेति । समाध्यवस्थासदृशेनेति पिण्डितार्थः । सत्त्वोद्रेकाद् यौ प्रकाशानन्दौ तन्मय्यां संविदि समाधिवृत्तिरूपायां या योगिनां विश्रान्तिर्विगलितसकलश्रमा निस्तरङ्गत्वेनावस्थितिस्तत्सतत्त्वेन तत्सदृशेन । मैत्र्यादिपरिकर्मपरिशीलनपाटवान्निर्गलितराजसतामसोपरागे सत्त्वगुणे समुद्रिच्यमाने प्रकाशानन्दैकघनायां समाधिसंविदि या योगिनामुपशान्ताशेषोपतापा निस्तरङ्गमवस्थितिस्तत्सधर्मायं भोग इत्यर्थः । तेन भुज्यते विषयसुखोपभोगवैलक्षण्येन विगलितवेद्यान्तरमास्वाद्यत इत्यर्थः ।

## मधुमती

भट्टानायकमतमवतारयति—न ताटस्थ्येनेति। ताटस्थ्यं नाम नटनिष्ठत्वम्। आत्मगतत्वं अनुकरणीय-निष्ठत्वम्। एवं च अनुकरणीयानुकर्तृनिष्ठत्वे निरस्यता सामाजिकनिष्ठत्वं दर्शितम्। नोत्पद्यते नाभिव्यज्यत इति। तत्र उत्पत्तिपक्षे वक्ष्यमाणं दूषणम्। व्यक्तिपक्षे तु व्यञ्जनायामेव प्रमाणाभावः इति हृदयम्। अभिधातो द्वितीयेन इत्युपलक्षणम्। 'लक्षणातः तृतीयेन' इत्यपि द्रष्टव्यम्।

न च 'सीता'ऽऽदिपदं तात्पर्यानुपपत्तिमूलकलक्षणया स्त्रीत्वोपस्थापकमस्तु, रसादिप्रतीतिस्तु प्रयोजनं; इति किं भावु(व) कत्वव्यापारेण इति वाच्यम्। एवं सति अर्थान्तरसङ्क्रमितवाच्यतया रसादिध्वनीनां अविवक्षि-तवाच्यान्तर्भावापत्तेः। न च इष्टापत्तिः। अपसिद्धान्तात्। व्यञ्जनाऽनङ्गीकारात्, अन्यतः प्रयोजनाप्रत्ययेन लक्षणा-नुपपत्तेः।

भाव्यमानः—साधारण्येन विषयीक्रियमाणः। सत्त्वेत्यादि। सत्त्वं गुणविशेषः। तस्य उद्रेकः रजस्तम-स्संवलनाभावः, तेन प्रकाशः स्फुटतरः यः आनन्दः तन्मयी तदात्मिका या संवित्, तत्र च विश्रान्तिः योगिनामिव विगलितवेद्यान्तरत्वेन स्थितिः, तत्सतत्त्वेन तत्समानत्वेन-समाध्यवस्थातुल्येन भोगेन भुज्यते विषयीक्रियते इत्यर्थः।

तदयमर्थः—भावकत्वव्यापारेण साधारणीकृतेषु विभावादिषु येन चमत्कार आधीयते स व्यापारः भोगः। एवं च साधारणीकरणात्मा भावकव्यापारः, चमत्कारात्मा भोगव्यापारः इति सिद्धम्। तदुक्तं भट्टनायकेनैव—'यद्यपि अभिधा-भावकत्वलक्षणमेव व्यापारद्वयं कांव्ये प्रधानम्। तथापि न तावन्मात्रे विश्रामः इति, तदुभयोत्तीर्ण-रसचर्वणात्मभोगापरपर्यायः विश्रान्तिस्थानतया प्रधानम्। इति।

## विस्तारिका

मतान्तरमाह—न ताटस्थ्येनेति। अत्र पक्षे रामादिगतरत्यादिः सामाजिकसाक्षात्कारविषयो रसः। तत्र प्रत्यासन्नास्त्रयः—रामादिः, नटः, सामाजिकश्चेति। किंगतत्वेन रसः प्रतीयताम्? तत्राद्यद्वयगतत्वं निरस्यति—न ताटस्थ्येनेति। स्वसम्बन्धबहिर्भावेनेत्यर्थः। तथा भावेऽरस्यत्वात्। नात्मगतत्वेनेति—रामादिरत्यादीनां तथा प्रतीतौ भ्रमत्वं स्यात्, आस्वादस्य प्रमात्वाव्यभिचारित्वात्। तर्हि सामाजिकरत्यादिरेव तथाऽस्त्वित्याह—नोत्पद्यत इति। असन्निहितेभ्यः सीतादिभ्यः सामाजिकरत्याद्यनुत्पादात्, आराध्यत्वज्ञानस्य प्रतिबन्धकत्वाच्च। नाभिव्य-ज्यते, प्रागसिद्धेः, अन्यथाऽकार्यत्वप्रसङ्गात्। तर्हि विभावादिभ्यः किमित्याह—काव्य इत्यादि। विभावादिभिर्भा-व्यमानव्यापारमाह—भावकत्वेनेति। अभिधा लिङ्निष्ठा शब्दभावनाऽपरनाम्नी यागादौ प्रवर्तिका। द्वितीया तज्जातीयाऽपरा विभावादिनिष्ठा रसभावनाजननी। भावयतीति भावकः, तस्य भावस्तत्त्वम्। साधारणीकरणम-नियतसम्बन्धिगतत्वेनार्थप्रत्यायनम्। भाव्यमानो मुहुर्मुहुः स्मर्यमाणः। तेन भावनोपनीतरामादिरत्यादिः सामाजि-कमनसि सन्निकृष्टघ्राणोपनीतसौरभ्यमिव चक्षुषि, स्थायी अन्तरा अन्तरा विघ्नेऽप्यनुच्छिद्यमानः। भोगेन साक्षात्कारेण भुज्यते विषयीक्रियते। भोगस्वरूपमाह—सत्त्वेत्यादि। सत्त्वं कश्चनान्तरो धर्मः, रजस्तमोऽभिभवेन तस्य प्रादुर्भाव उद्रेकः, तेन प्रकाशते प्रादुर्भवति; या आनन्दमयी संवित्, तत्र विश्रान्तिर्योगिनां विगलितवेद्यान्तरत्वेन स्थितिस्तत्कृतत्वेन तत्समानत्वेन समाध्यवस्थातुल्येनेति यावत्। भुज्यते विषयीक्रियत इत्यर्थः। भावनोपनीतो रामादिरत्यादिश्चिदानन्दाख्य साक्षात्कारविषयो रस इति पर्यवसितार्थः। विश्रान्तिगतत्वेनेति पाठे गमिर्ज्ञानार्थो

भावे निष्ठा गतत्वं ज्ञानत्वम्। संविद् विश्रान्तिर्यस्य, तस्य तथाभूतं ज्ञानत्वं यस्यति पूर्ववद् बहुव्रीहिः। तदेकात्मनेति पर्यवसितार्थः। भट्टनायकाः कश्चन विवरणकारः।

नायमपि पक्षः साधुः, संभोगेच्छारूपस्य रामादिरत्यादेः सुखरूपत्वाभावेनारसत्वात्। तस्य तदेकरूपत्वात्। न च सुखात्मकज्ञानविषयत्वेन तस्यास्वादना, प्रमाणाभावात्। एवं ज्ञानविषयस्य घटादेरपि ज्ञानताप्रसङ्गात्। किञ्च, रागसम्भेदे चिदानन्दप्रकाशो न स्यात्, रागिण एव काव्यनाट्यादितश्चमत्कारात्, विरक्तस्य तद्विरहात्।

## सारबोधिनी

मतान्तरमाह न ताटस्थ्येनेति। अयं भाव्यभावकपक्षोऽत्र भाव्यो रत्यादिर्भावको विभावादिः। तथा च विभावादिभिर्भाव्यमानो रामादिगतरत्यादिः सामाजिकसाक्षात्कारविषयो रस इति निर्गलितोऽर्थः। अत्र प्रत्यासन्नास्त्रयः। रामादिर्नटः सामाजिकश्चेति। तत्र किंगतत्वेन रसः प्रतीयताम्? तत्राद्यद्वयगतत्वं निरस्यति न ताटस्थ्येनेति। स्वसंबन्धबहिर्भावेनेत्यर्थः। तथाभावेऽरसत्वापत्तेः। तदुक्तम्

**पारमित्याल्लौकिकत्वात् सान्तरायतया तथा।**
**अनुकार्य्यस्य रत्यादेरुद्बोधो न रसौ भवेत्॥** सा. द. ३. १७-१८

पारमित्यादसाधारण्यात्। सान्तरायतया सव्यवधानतया, तेन न रामादिगतो रसः। तथा शिक्षाभ्यासादिमात्रेण राघवादिस्वरूपतां दर्शयन् नर्तको नैव रसस्यास्वादको भवेत्। तेन नटगतोऽपि न रसः। किन्तु सामाजिकगत एव। यदि नटोऽपि रसास्वादको भवेत् तदा सोऽपि सामाजिक एव। अत एव ग्रन्थकृता रत्यादेः साधारण्यं रसोद्बोधहेतुरिति वक्ष्यते। अत एव रत्यादेरात्मगतत्वेन प्रतीतावपि न रसत्वम्। सभ्यानां व्रीडातङ्कादिप्रसङ्गात्। किन्तु साधारण्येन प्रतीतावेवेत्याह नात्मगतत्वेनेति।

केचित्तु नात्मगतत्वेनेति रामादिगतरत्यादीनां तथा प्रतीतौ भ्रमत्वं स्यात्। आस्वादस्य प्रमात्वाव्यभिचारात्। तर्हि सामाजिकरत्यादिरेव तथास्त्वित्यत आह नोत्पद्यत इति। प्रागसिद्धेः। तर्हि विभावादिभ्यः किं स्यादिति। तदाह काव्य इत्यादि। विभावादिभिर्व्यज्यमान इति संबन्धः। व्यापारमाह भावकत्वेति। अभिधात् इत्युपलक्षणम्। लक्षणात् इत्यपि बोध्यम्। साधारणीकरणं नियतसंबन्धिगतत्वेनाप्रत्यायने सति प्रत्यायनम्। भाव्यमानो मुहुर्मुहुश्चिन्त्यमानः। तेन भावनीपनीतो रामादिरत्यादिः सामाजिकमनसिघ्राणोपनीतं सौरभ्यमिव चक्षुषि स्थायी भोगेन साक्षात्कारेण भुज्यते विषयीक्रियते। यथा कामिनीभावनानन्तरं तत्साक्षात्कारः, यथा वा निदिध्यासादिना आत्मसाक्षात्कारः। भोगस्वरूपमाह सत्त्वेति। रजस्तमोऽभिभवेन प्रादुर्भाव उद्रेकस्तेन प्रकाशते प्रादुर्भवति या आनन्दमयी संवित् तत्र विश्रान्तिर्विगलितवेद्यान्तरत्वेन स्थितिर्यस्य एवं भूतं सतत्त्वं स्वरूपं, यस्य, गोत्रे सगोत्रवत्; तत्त्वसतत्त्वयोः पर्यायत्वात्। तत् स्वरूपेणेत्यर्थः। भावनोपनीतरामादिरत्यादिश्चिदानन्दस्वरूपसाक्षात्कारविषयो रस इति पर्यवसितोऽर्थः। 'विश्रान्ति गतत्वेन' इति पाठे गमिर्ज्ञानार्थो भावे निष्ठा। गतत्वं ज्ञानत्वम्। संवित्तौ विश्रान्तिर्यस्येति बहुव्रीहिः। तदेकात्मनेति। पर्यवसितोऽर्थः।

केचित्तु अभिधा भावकत्वं भोगश्चेति त्रयो व्यापारः शब्दस्य। तैः रसस्याभिव्यक्तिरित्यर्थमाहुः। अयमपि पक्षो न साधुः। साक्षात्कारस्य तथाविधत्वकल्पने मानाभावात्। न च व्यञ्जनास्थाने तथाविध भोग एव कश्चिद्व्यापारः कल्पनीय इति वाच्यम्। तथापि भावकत्वरूपव्यापारान्तरकल्पनस्यैव दोषत्वात्।

## काव्यप्रदीपः

भट्टनायकस्तु—'न तावन्नटगतत्वेन न रामगतत्वेनानुमीयते, न वोत्पाद्यते, न सामाजिकगतत्वेन व्यज्यते। आद्यपक्षयोरुक्तदोषात्। अन्यगतेनान्येषां चमत्काराभावाच्च। अन्त्ये सिद्धस्यैव व्यङ्ग्यत्वात् रसस्य चासिद्धत्वात्। सर्वेषामेवाभिव्यक्तिप्रसङ्गाच्च। तस्माद्विभावादिभिः संयोगाद्भोज्यभोजकभावसंबन्धाद्रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः। न च भोगपक्षेऽपि दोषावकाशः। भोगस्यालौकिकत्वात्। तथाप्यन्यनिष्ठः स्थायी अन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्यः। अतिप्रसङ्गादिति चेत्, उच्यते—शब्दात्मनः काव्यस्य त्रयो व्यापाराः—अभिधा, भावकत्वम्, भोजकत्वं च। तत्राभिधा निरन्तरसान्तरार्थनिष्ठत्वेन द्विधा। भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते। साधारणीकरणं चैतदेव यत्सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितः। स्थाय्यनुभावादिनां च संबन्धिविशेषानवच्छिन्नत्वेन। अन्त्यं व्यापारद्वयं नाट्येऽपि। एवं काव्ये नाट्ये च द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते। भोगश्च सत्त्वगुणोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपा अनन्या लम्बना या संवित्तत्स्वरूपो लौकिकसुखानुभवविलक्षणः। सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात्सुखदुःखमोहाः प्रकाश्यन्ते। उद्रेकश्च स्वेतरावभिभूयावस्थानमिति सांख्यसिद्धान्तानुसारेण विवृणुते' तदपि न सम्यक्। एतादृशव्यापारद्वयकल्पने प्रमाणाभावात्। भुक्तेर्ज्ञानातिरेकस्यानुभवबाधितत्वेन निष्पीड्यमानस्य चास्याभिव्यक्तिपक्ष एव पर्यवसानात्।

## आदर्शः

अस्मिन् श्रीशङ्कुकमते कारणान्तराधीनाया एव वासनारूपप्रत्यासत्तेः स्वीकारः, तस्याश्चानुमानादुद्बोध इति गौरवं परिहरतो भट्टनायकस्य मतमाह—न ताटस्थ्येनेति। अत्र मते भावकत्वाख्य एको व्यापारः सामाजिके काव्येन नाट्येन च जन्यते, तयैव च प्रत्यासत्त्या रामादिरत्यादिसाक्षात्कार इति निष्कर्षः। भट्टलोल्लटमते परकीयस्य रत्यादेर्व्यञ्जनया बोधः तत्र च स्वावृत्तित्वभानमर्थसिद्धम्, तन्निरस्यति न ताटस्थ्येनेति न स्वावृत्तित्वेनेत्यर्थः। एवञ्च स्ववृत्तित्वपर्य्यवसानमपि निरस्यति—नात्मगतत्वेनेति, रसोऽत्र रत्यादिः प्रतीतस्यैव रसत्वात्। रामादिरत्यादौ स्वीयत्वमस्वीयत्वञ्च न गृह्यत इत्यर्थः। काव्यनाट्यज्ञानं विनैव सीतादौ रामादिरत्याद्युत्पत्तेर्दृष्टत्वादाह नोत्पद्यत इति काव्यनाट्याभ्यां नोत्पद्यते इत्यर्थः, ताभ्यामेव तदुत्पत्तिरिति भ्रमनिरासार्थमिदमुक्तम्, न तु तदुत्पत्तिरेव नास्तीत्यर्थः प्रमाणसिद्धायास्तदुत्पत्तेर्दुरपह्नवत्वात्। भट्टलोल्लटमतोक्तं तस्याभिव्यङ्ग्यत्वमपि निरस्यति—नाभिव्यज्यत इति। तर्हि त्वया कीदृगुच्यते इत्यत्राह—अपि तु इति। काव्ये नाट्ये च ज्ञाते सति पुरुषे जायमानेन भावकत्वाख्यव्यापारेण भाव्यमानः सन्निधाप्यमानः सन् रत्यादिः 'भोगेन' साक्षात्कारेण 'भुज्यते' विषयीक्रियते इत्यर्थः। ईदृशश्च साक्षात्कारः स्वप्रकाशानन्दमयो विषयविशिष्टः सन्नेव स्वरस इत्यग्रे स्फुटीभविष्यति। रत्यादिः कीदृशः? 'स्थायी' काव्यनाट्ये विनापि रामादौ स्थितिमान् स्थायिपरिभाषितो वा। भावकत्वव्यापारेण कीदृशेन? 'अभिघातो

द्वितीयेन', विधिवाक्यस्थलिङ्जन्यः पुरुषनिष्ठः प्रवर्त्तकव्यापारोऽभिधा तत्तुल्यकक्षेण। वाक्यजन्यत्वेन पुरुषनिष्ठत्वेन च तत्तुल्यकक्षता। तदुक्तम्—

**लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः।**
**सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते॥** इति।

लिङ्जन्या अभिधेत्यर्थः। पुरुषप्रवृत्तिस्तस्या भाव्या जन्येत्यर्थः। मिश्रेण तु लिङ्निष्ठैव अभिधेति व्याख्यातम्, तच्च नैषां सम्मतम्। पुनः कीदृशेन भावकत्वव्यापारेण? 'विभावादिसाधारणीकरणात्मना' रामादिसम्बन्धिनां सीतादिविभावादीनां सामाजिकरामाद्युभयसम्बन्धित्वरूपं साधारण्यं दर्शयता, सीता रामस्य मम चेत्याहार्य्यज्ञानं सामाजिकानां जनयतेत्यर्थः। भावकत्वव्यापारस्य इदमधिकं सामर्थ्यमनेनोक्तम्। तदुक्तं दर्पणेऽपि—

**परस्य न परस्येति ममेति न ममेति च।**
**तदास्वादे विभावादेः परिच्छेदो न जायते॥** इति।

परस्येत्यादौ सर्व्वत्र परस्यैवेत्यादिरर्थः तदैवोभयसाधारण्यपर्य्यवसानात्। भोगेन कीदृशेन? 'सत्त्वस्य' सत्त्वगुणस्य 'उद्रेकेण' गुणान्तरं तिरोधायाविर्भावेण या 'प्रकाशानन्दमयी' स्वप्रकाशानन्दरूपा 'संवित्' ज्ञानं तस्या 'विश्रान्तिः' सत्ता कृदभिहितभावत्वेन विश्रान्ता वर्तमाना संविदित्यर्थः, 'तत्सतत्त्वेन' तत्स्वरूपेण। तत्त्वसतत्त्वयोः पर्य्यायो यथा—**पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम्।** इति विरोधालङ्कारोदाहरणे, तत्त्वविदामित्यर्थः।

## सुधासागरः

ननु साक्षात्कार एव सचमत्कारो नत्वनुमित्यादिरपि। अन्यथा सुखादावनुमीयमानेऽपि सा स्यात्। न स्यात्, वस्तुसौन्दर्यबलाद् रसनीयत्वेन निरतिशयसुखरूपत्वेनेति यावत्, स्थायिनामन्यानुमेयवैलक्षण्यात्। तथापि स्थायिनां नटेऽसत्त्वाद्बाधावतारेऽनुमितिरेव कथं स्यादिति चेन्न, अभावनिश्चयाभावात्, स्थायितया सम्भाव्यमानत्वादिति।

एतदप्यहृदयग्राहि। यतः प्रत्यक्षमेव ज्ञानं सचमत्कारं नाऽनुमित्यादिरिति लोकप्रसिद्धिमवधूयाऽन्यथा कल्पने मानाभावः। सूत्रस्याऽन्यथैव योजनाऽसम्भवादित्याशयेनैतत्पक्षमपि पूर्ववदुपेक्ष्य तृतीयं भुक्तिपक्षं दर्शयन् भट्टनायकमतं अवतारयति न ताटस्थ्येन इत्यादिना।

अयमाशयः। भट्टनायकमते न तावन्नटगतत्वेन रामगत्वेन च रस उत्पद्यते। नचाऽनुमीयते, न सामाजिकगतत्वेन व्यज्यते। आद्यपक्षयोरुक्तदोषात्। अन्यगतेनाऽन्येषां चमत्काराभावाच्च। अन्त्ये सिद्धस्यैव व्यङ्ग्यत्वात्। रसस्य चाऽसिद्धत्वात्। सर्वेषामेवाऽभिव्यक्तिप्रसङ्गाच्च। तस्माद् विभावादिभिः संयोगाद् भोज्यभोजकभावसम्बन्धाद् रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः। नच भोगपक्षेऽपि दोषावकाशः। भोगस्याऽलौकिकत्वात्। तथाप्यन्यनिष्ठः स्थायी अन्निष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्योऽतिप्रसङ्गादिति चेत् उच्यते—

शब्दात्मनः काव्यस्य त्रयो व्यापाराः । अभिधा भावकत्वं भोजकत्वं च । तत्राभिधा निरन्तरसान्तरार्थनिष्ठत्वेन द्विधा । भावकत्वं साधारणीकरणम् । तेन हि व्यापारेण विभावादयः स्थायी च साधारणीक्रियन्ते । साधारणीकरणञ्चैतदेव यत् सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः । स्थाय्यनुभावादीनां च सम्बन्धिविशेषाऽनवच्छिन्नत्वेन । अन्त्यं व्यापारद्वयं नाट्येऽपि । एवं काव्ये नाट्ये द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते । भोगश्च सत्त्वगुणोद्रेकात् प्रकाशते य आनन्दस्तत्स्वरूपाऽनन्यालम्बना या संवित्तत्स्वरूपोऽलौकिकसुखानुभवविलक्षणः । सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात् सुखदुःखमोहाः प्रकाश्यन्ते । उद्रेकश्च स्वेतरानभिभूयाऽवस्थानमिति ।

तदपि न सम्यक् । एतादृशव्यापारद्वयकल्पने प्रमाणाभावात् । भुक्तेर्ज्ञानातिरेकस्याऽनुभवबाधितत्वेन निष्पीड्यमानस्य चाऽभिव्यक्तिपक्ष एव पर्यवसानात् इत्याशयेनैतत्पक्षमपि पूर्ववदुपहस्य श्रीमान् इत्यनेनाऽऽलङ्कारित्वं स्वाऽभिमतत्वं च सूचयन् गुप्तं नामाचार्यस्य प्रकाशयन्नेव चतुर्थं व्यक्तिपक्षं सिद्धान्तयितुं बालवलभीभुजङ्गाऽऽचार्यव्याख्यामवतारयति 'लोके प्रमदादिभिः कारणादिभिः' इत्यादिना ।

## विवरणम्

पररतिविषयाऽनुमितिर्न भोगजनिका क्वापि दृष्टेत्यनुशयानो मतान्तरमाह—न ताटस्थ्येनेति । ताटस्थ्येन परगतत्वेनात्मगतत्वेन च यः प्रतीयते स न रसः, परगतत्वेन भाने मात्सर्यस्य, स्वगतत्वेन च सीतारत्यादेभीने व्रीडातङ्काद्याविर्भावप्रसङ्गादिति भावः ।

नोत्पद्यते, विभावादिना निमित्तेनेति शेषः, निमित्तनाशेऽपि तत्सत्त्वप्रसङ्गादिति भावः । नाभिव्यज्यते पूर्वसिद्धो हि व्यज्यते, प्रदीपेनेव घटः, न च रसः प्राक् सिद्ध इति भावः ।

अपि त्विति । ध्वनिप्रस्थानपरिपन्थी भट्टनायकः शब्दस्य तिस्रो वृत्तीर्मन्यते । यदाह स एव—'यद्यप्यभिधाभावकत्वलक्षणं व्यापारद्वयमेव काव्ये प्रधानम्, तथापि तावन्मात्रे न विश्राम इति भोगापरपर्यायोऽपि व्यापारो विश्रान्तिस्थानतया प्रधानम्' इति । तन्मते 'प्रसभप्रसृतैः' इत्यादिकाव्येऽभिधारूपा वृत्तिर्वैदेहीकर्मकविलक्षणकटाक्षकरणकदर्शनकर्तरि रामे, कटाक्षाद्युपस्थितानौत्सुक्यव्रीडाधैर्यादीन् भासयति, प्रवाहोपस्थितं तटमिव गङ्गाशब्दः । एवं विरतायामभिधायां भावकत्वव्यापारस्याविर्भावः । तेन हि साधारणीकृता विभावानुभावव्यभिचारिणः साधारण्येन भाव्यन्ते, मुग्धनायिकाविभावितकटाक्षाद्यनुभावितव्रीडा मानुदात्त नायक इति । अत्रैव भावप्रधानानां काव्यानां विश्रान्तिः । भावनाजन्यप्रतीतिविश्रान्तिविषयान्तरत्वमेव हि भावत्वम् । यदाह महाराजः—

**तद्भावभावितविभावविभाव्यमानो**
**यो भाव्यते मनसि भावनया स भावः ।**
**यो भावनापथमतीत्य विवर्तमानः**
**साक्षात्कृतो हृदि परं स्वदते रसोऽसौ ॥** इति ।

तद्भावेति । तयोः काव्यनाट्ययोर्यो भाव इत्यर्थः ।

व्यभिचारिणः काव्यनाट्यारूढाः सन्तो भावपदेनोच्यन्ते । यदाह धनिकः—'अभिनयकाव्ययोः प्रवर्तमानस्य भावशब्दस्य प्रवृत्तिनिमित्तकथनमिदम् । ते च स्थायिनो व्यभिचारिणश्च' इति । तद्भावेन काव्यनाट्यारूढेन व्यभिचारिणा, भावितः परित्यक्तविशेषतया साधारणीकृतः, विभावो रामादिः, तेन विभाव्यमानस्तमालम्ब्य बोध्यमानः । मनसीति भाविते सतीति शेषः ।

भावानाख्यव्यापारेण हि मनसः सत्त्वमाविर्भावयिष्यता रजस्तमसी तिरोधीयेन । यदाह धनिकः—'सुखदुःखादिकैर्भावैर्भावस्तद्भावभावनम्' इति । अनुकार्याश्रयत्वेनोपनिबध्यमानैः सुखदुःखादिभिर्भावैस्तद्भावस्य भावकचेतसो भावनं वासनं भावः ।

तदुक्तं महाराजेन—' भावेन गन्धेन वा सर्वमेतद् भावितं वासितम्' इति । इतीति भावनयेति व्यापारस्य साधारणीकरणनांम्नो निर्देशः । स च काव्यनाट्यारोह एव, तथाविधेन विभावादिकुसुमेन चित्ततिलस्याधिवासनं वा । स भाव इति । साधारणीकृते विभावादौ चित्तस्य भावनेन शब्दस्यार्थस्य वा व्यापारेण प्रतीयमानः सञ्चारिस्थायिभावादिर्भाव इत्यर्थः । एतेन भाव्यमान इत्यन्ता वृत्तिरपि व्याख्याता ।

अत्र धनिको भाव इव रसेऽपि काव्यस्य भावनाव्यापारमेव मन्यते । यथाह—'काव्यं हि भावकं भाव्या रसादयः' इति ।

महाराजस्तु—भावकत्वव्यापारस्यात्मत्वरामत्वादिपरिहारेण साधारणतया स्फुरणं फलम् । न च रसाभिव्यक्तिस्तथा, मदंशस्य स्फुरणात्, अतश्चित्तस्य रजस्तमस्तिरोभावो भावकत्वम्, तस्मादास्वादप्रतिकूलवस्तुतिरोभावेन तदनुकूलप्रतिसन्धानं फलम्, न तु भोगात्मकः साक्षात्कार इत्यतो रसग्राहकं व्यापारान्तरमभिप्रैति ।

यदाह—'यो भावनापथम्" इत्यादि । तमेवानुगच्छन् भट्टनायको भोजकत्वं नाम व्यापारमनुमेने ।

तदेव वृत्तावनुवदति—सत्त्वोद्रेकेति । सत्त्वोद्रेकेण रजस्तमसोरात्यन्तिकविलयेन, प्रकाशते आविर्भवति, या आनन्दमयी, संवित् स्वप्रकाशानन्दः, तद्विश्रान्तिरानन्दात्मभिन्नवस्त्वगोचरत्वम्, तत्सतत्त्वेन तत्समानत्ववता, भोगेन सुखसाक्षात्कारेण, भुज्यते विषयीक्रियत इत्यर्थः ।

अयमर्थः—विलीनरजस्तमस्के योगिचित्ते आनन्दात्मतिरिक्ताविषयिणी संविदियं त्वानन्दे रत्याद्यभेदमात्रम्, न त्वात्मसम्बन्धमप्यवगाहते । काव्यजन्या संविदिति किञ्चिदपकृष्टेति । सत्त्वोद्रेकेत्युपादानाद् रजस्तमसोर्वृत्तिनिरोधात्मकं भोजकत्वं व्यापार इत्यपि दर्शितमिति दिक् ।

एवं चेह विभावादिभिः संयोगाद् भावितत्वादनन्तरकाले रसस्य स्थायिनो भोगेन मुक्तिस्वरूपा निष्पत्तिरिति 'सूत्रार्थः । भोजकव्यापारभुज्यमानस्थायित्वमेव रसलक्षणं बोध्यम् ।

लोके प्रमदाभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादि परिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहारयैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते, इति संबन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत् सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारदिको रसः। स च न कार्यः। विभावादिविनाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न क्वचिद्दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्। तद्ग्राहकं च न निर्विकल्पकं विभावादिपरामर्शप्रधानत्वात्। नापिसविकल्पकं चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः ॥

## सङ्केतः

## [४. अभिनवगुप्तपादमंतम्]

एवं स्थिते—सर्वपक्षेषु रसस्य प्रतीतिः अपरिहार्या । न ह्यप्रतीतं व्यवहार्यम्, पिशाचवत् । किन्तु—यथा प्रतीतिमात्रत्वावैशिष्ट्येऽपि, प्रात्यक्षी, आनुमानिकी, आगमोत्था, प्रतिभानकृता, योगिप्रत्यक्षजा चेति प्रतीतयः उपायवैलक्षण्यात् अन्यान्या एव, तद्वत् इयमपि पतीतिः चर्वणारसन-आस्वादन-भोगाद्यपरनाम्ना अस्तु, तत्र हेतुभूतायाः हृदयसंवादादिना उपकृतायाः विभावादिसामग्र्याः लोकोत्तररूपत्वात्; इति ।

एवं च प्रतीयमान एव रसः । प्रतीतिरेव च विशिष्टा उक्तरीत्या रसना-चर्वणा-चमत्कार-आस्वादभोग-लयादिशब्दवाच्या भवति । सा च नाट्येलौकिकानुमानप्रतीतेः विलक्षणा । सा च तां प्रमुखे उपायतया संदधाति । एवं काव्येऽपि अन्यशब्दप्रतीतेः विलक्षणा परं प्रमुखे उपायतया तां अपेक्षते । लौकिकप्रमाणादिव्युत्पन्नहृदयो हि लोकोत्तरं व्यवहारमाकलयति ।

एवं च प्रतीत्यादिव्यतिरिक्तः न भोगः । प्रतीत्याद्यव्यतिरिक्तत्वात् भोगः रसना भविष्यति । रसनाऽपि प्रतीतिरेव भोगीकरणव्यापारः काव्यस्य रसविषयः व्यञ्जनारूपः नामान्तरेण परैः स्मृतः । किञ्च उत्पत्त्यभिव्यक्तिद्वयानभ्युपगमे नित्यो वा असन् वा रसः इति न तृतीया गतिः स्यादिति निष्टङ्क्य श्रीमान् अभिनवगुप्तः प्राह—लोके इत्यादि । यथा-लोके धूमदर्शानानन्तरं अग्न्यनुमानं, धूमाग्न्योः नियतदशादितया 'यत्र धूमः तत्राग्निः' इति व्याप्तिनिश्चयश्च, तथा—विभावादिप्रतीत्यनन्तरमेव रत्याद्यनुमानम्—नियततया यत्र विभावादिः तत्र रत्यादिः इति व्याप्तिग्रहोऽपीत्यर्थः ।

काव्ये नाटये चेति । नाट्ये हि तैरेव कारणादिभिः विभावादिशब्दवाच्यैः स्थायी व्यक्तः, काव्येऽपि च लोकनाट्यधर्मिस्थानीयेम स्वभावोक्तिवक्रोक्तिप्रकारद्वयेन अलौकिक प्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगात् इयमेव रसवार्ता । यदाह मुनिः—'काव्यार्थान् भावयतीति भावः' इति—

**'स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।**
**यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा मता ॥**
**स्वरालङ्कारसंयुक्तं स्वस्स्वर्भूपुरुषाश्रयम् ।**
**यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥'** इति च ।

तत्र—पदार्थवाक्यार्थौ रसेष्वेव पर्यवस्यतः इति असाधारण्यप्राधान्याभ्यां काव्यार्थाः एव रसाः । अत्र च अर्थ्यन्ते प्राधान्येनेत्यर्थाः । न त्वत्र अर्थशब्दः अभिधेयवाची । रसादेः स्वशब्देन अनभिधेयत्वात् ।

ममैवैते इत्यादिकं साधारण्यप्रतीतौ हेतुः । स्वस्य, शत्रोः, उदासीनस्येति पक्षत्रयेण सर्वसम्बन्धिनां दर्शनम् । सम्बन्धिनां विशेषेण सम्बन्धिविशेषाणां वा यौ स्वीकारपरिहारौ, यः तयोः नियमः तस्य अनवसायः अपरिच्छेदः तस्मात् । नियतप्रमातृगतत्वेनेति । यः कोऽपि विदग्धः सः नियतः । साधारणोपायेति । विभांवादयो हि सर्वेषां तुल्यत्वेन प्रतीतिगोचराः ।

तत्कालेति । तत्कालं विभावादिदर्शनश्रवणसमकालं विगलिता या परिमितप्रमातृता तद्वशात् उन्मीलितः ज्ञेयान्तरस्पर्शशून्यः यः अपरिमितभावः अपरिमितत्वं यस्य सः तथा, तेन प्रमात्रा ।

स्वगतत्वेन हि रतिप्रतीतौ कामित्वम्, परगतत्वेन तु द्वेषादि, ताटस्थ्यं वा घटादिवत् । सर्वसाधारणप्रतीतौ ताटस्थ्यमेव न रसनीयत्वम् । रसनीयतायामपि सुखवत् नियतनिष्ठत्वे कामित्वमेव स्यात् । तस्मात् अनियतनिष्ठत्वेन सर्वप्रमातॄणां यो रसनीयः, सः सर्वप्रमातृताऽवलम्बनेनैव रस्यते । अत एव रङ्गमण्टपान्तःप्रविष्टानां सकलानामपि हृदयसंवादभाक्त्वं उच्यते । अत एव च रङ्गभूमौ अहृदयानामपि साधारण्यप्रतीतये सहृदयीकरणाय साधारण्यमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैः आतोद्यगानविचित्रमण्टपविदग्धगणिकादिभिः उपरञ्जनं आश्रितम् । अस्मादेव च साधारणसंवादकार्युपरञ्जनसमाश्रयणात् सुखादिप्रतीत्या न प्रमाता विवशीभवति । अविवशीभूतश्च रससंविदं वस्त्वन्तरे विश्रमयतीति ।

स्वाकार इवेति । यथा 'स्वात्मानं आत्मना जानामि' इत्यत्र अभिन्नोऽपि स्वाकारः गृह्यते तथा । ग्राह्यग्राहकता हि सर्वत्र भेदे स्यात्, अत्र तु अभेदेऽपि इति अपि शब्दार्थः । चर्व्यमाणतैकेति । न सिद्धस्वभावः, अपि तु तात्कालिक एव । एवं न चर्वणाऽतिरिक्तकालस्थायी, अत एव विभावादिजीवितावधिः । विभावादीनां यावत् जीवितसत्ताप्रतीती, तावत् रसस्य जीवितसत्ताप्रतीती । अत एव रसः न कार्यः । न हि कार्यं स्वशानकाले कारणजीवितसत्ताप्रतीती अपेक्षते इति । पानकरसेति । यथा हि पानकरसास्वादः गुडमरिचादिषु वस्तुषु मध्ये एकस्मिन् वस्तुनि चर्वद्भिः अवधारयितुं न शक्यते, तथा अयमपि । अनुभावयन् साक्षात्कारयन् ।

अयमाशयः—प्रमदादिभिः कारणादिभिः, लौकिकीं कारणत्वादि भुवं अतिक्रान्तैः विभावनाऽनुभावनासमुपरञ्जकत्वप्राणैः, अत एव अलौकिकविभावादिशब्दव्यपदेश्यैः अलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरः चर्वणैकसारः स्थायिविलक्षण एव रसः; न तु यथा शङ्कुकादिभिः अभ्यधीयत । स्थाय्येव विभावादिभिः प्रत्याय्यमानः रस्यमानत्वात् रसः उच्यते । एवं लोकेऽपि हि रसः स्यात् । असतोऽपि हि यत्र रसनीयता, तत्र वस्तुसतः कथं रसनीयता न भवेत्? इति । तेन स्थायिप्रतीतिः अनुमितिरूपा वाच्या, न तु रसः । अत एव 'विभावानुभावव्यभिचारिसंयोगात्' इति सूत्रवाक्ये स्थायिग्रहणं न कृतम् । तत् कृतं चेत्, प्रत्युत शल्यभूतं स्यात् । 'स्थायी रसीभूतः' इति पुनः औचित्यादुक्तम् । औचित्यं तु तस्स्थायिगतत्वेन कारणादितया प्रसिद्धानां इदानीं चर्वणोपयोगितया विभावादित्वावलम्बनात् ।

विभावादिभिः व्यञ्जितः दीपादिव्यङ्ग्यलौकिकघटादिवैलक्षण्येनव्यञ्जितः । ननु यदि रस्यमानतैकप्राणोऽसौ न प्रमेयादिरूपः, तर्हि सूत्रे 'नियतिः' इति कथम्? इत्यत आह—चर्वणानिष्पत्त्येति । नेयं रसस्य निष्पत्तिः, अपि तु तद्विषयरसनायाः । तन्निष्पत्त्या तु तदेकायत्तजीवितत्वात् यदि रसस्य निष्पत्तिः उपचर्यते, तन्न कश्चिद्दोषः । सा च चर्वणा न प्रमाणान्तरतः पूर्वं जाता, येनेदानीं स्मृतिः स्यात् । न च अधुना प्रमाणान्तरादुत्पन्ना, लोकोत्तरे प्रत्यक्षाद्यव्यापारात् । स्वयं तु न अप्रामाणिकी, स्वसंवेदनसिद्धत्वात् । चर्वणेयं अवबोधरूपैव, शानविशेषस्यैव चर्वणारूपत्वात् इति । अयं भावः—विभावादिभ्यः लोकोत्तरेभ्यः उपायेभ्यः जातत्वात् लोकोत्तरा चर्वणैषा बोधरूपा । अत एव लौकिककारणादिजातेभ्यः लौकिकेभ्यो ज्ञानान्तरेभ्यः विलक्षणैवेयमिति । प्रत्येयत्वमपि दर्शयति—लौकिकेति । लौकिकप्रमाणेभ्यः विलक्षणम्, चमत्कारित्वात् । ताटस्थ्येन स्वात्मानं विना यः परस्य बाधः

तेन शलते यत् मितयोगिज्ञानं तस्मात् विलक्षणम्, ताटस्थ्यप्रतीत्यादित्वेन रत्यादिबोधस्य निषिद्धत्वात्। तथा विषयोपरागशून्यस्वनिष्ठामितयोगिज्ञानाच्च विलक्षणम्, स्वात्मगतत्वेन प्रतीत्यादिनिषेधस्य उक्तत्वात्। यच्चेदं स्वसंवेदनं, अत एव लोकोत्तरं ग्राह्यम्; तस्य गोचरः।

अलौकिकानन्दमयस्य संज्ञोल्लेख रहितस्य।

तदयमत्र संक्षेपः—मुकुटप्रतिशीर्षकादिना तावत् नटबुद्धिः आच्छाद्यते। गाढप्राक्तनसंवित्संस्काराच्च काव्यबलोपढौक्यमानाऽपि न तत्र रामधीः विश्राम्यति। अत एव उभयदेशकालत्यागः। रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टाः नटे देशकालानियमेन रतिं गमयन्ति, यस्यां स्वात्माऽपि तद्वासनावत्त्वात् अनुप्रविष्टः। अत एव न ताटस्थ्येत रत्यवगमः, न च नियतहेतुतया, येन अर्जनाभिवङ्गादिसम्भावना। न च नियतपरात्मैकगततया, येन दुःखद्वेषकामित्वाद्युदयः। तेन—साधारणीभूता, सन्तानवृत्तेः एकस्या एव या संविदः गोचरीभूता रतिः शृङ्गारः। साधारणीभावना च विभावादिभिः इति। अत्र 'सङ्केतस्य प्रस्तुतत्वात् रसविचारः संक्षेपात् उक्तः। विस्तरेण तु लोल्लटादिविरचितरसविवरणेभ्यः ज्ञेयः। पादाः इति बहुवचनोक्तया ग्रन्थकारः तन्मतं बहुमतवानिति ज्ञायते।

**न वेत्ति यस्य गाम्भीर्यं गिरितुङ्गोऽपि लोल्लटः।**
**तत्तस्य रसपाथोधेः कथं जानातु शङ्कुकः ?॥**
**भोगे रत्यादिभावानां भोगं स्वस्योचितं ब्रुवन्।**
**सर्वथा रससर्वस्वं अभाङ्क्षीत् भट्टनायकः॥**
**स्वादयन्तु रसं सर्वे यथाकामं कथंचन।**
**सर्वस्वं। तु रसस्यात्र गुप्तपादा हि जानते॥**

## संङ्केतः (रुय्यकः)

ध्वनिदर्शनानुसारेणाचार्यश्रीमदभिनवगुप्तस्य मते व्यंग्यो रसः, विभावादयो व्यञ्जकाः, व्यङ्ग्य-व्यञ्जक-भावलक्षणश्च सम्बन्धः। तेषां स्थायिना सह स्थाय्येव योग्यतयाऽत्र रसीभवतीत्युच्यते। स च सम्बन्धः सूत्रे संयोगशब्देनोक्तः, ततो रसस्य निष्पत्तिरभिव्यक्तिरित्यर्थः। स च रसः सामाजिकानां, नानुकार्ये, नाप्युकर्त्तरि, सामाजिकानां निश्चमत्कारत्वप्रसंगात्। तेषामेव चास्ति लोकोत्तरश्चमत्कारः। नानुकार्यस्य, लौकिकपरिमितसान्तरायचित्तवृत्त्याक्रान्तत्वात्। नानुकर्त्तुः, तस्य तथाविधचित्तवृत्तिशून्यस्य निष्प्रयोजनत्वाच्चमत्कारपरिमित्यापाताच्च। तत्र कारणादीनामेव लोकोत्तरसाधारणीकरणव्यापारवत्त्वाल्लोकोत्तरविभावादिव्यपदेशः। तत्साधारण्ये च स्थायिरूपस्य प्रमेयस्य साधारण्यात् प्रमितेरपि साधारण्यम्। अतश्च विभावादिसाधारण्यहेतुकं समुद्रोल्लंघनादि सम्भवति, तदभेदेन स्वात्मनः प्रतीतेः। प्रमेयसाधारण्येन प्रमातृसाधारण्ये त्वयं दोष एव। तच्च नाङ्गीक्रियत इति निस्तुषं व्यञ्जनदर्शनम्।

तथाहि निर्वासनस्य रसचर्वणा नास्ति। श्रोत्रियजरन्मीमांसकादयो हि नाट्यमण्डपान्तः प्रविष्टा अपि चमत्काराभावात् कीलप्राया एव। प्रशान्तब्रह्मचारिप्रभृतयश्य शृंगाररसास्वादे बहिरङ्गाः। गाढरागाणाञ्च शान्तरसचर्वणानभिज्ञत्वम्। अननुभूतशोकस्पर्शानाञ्च करुणास्वादावसरे पाषाणप्रख्यत्वम्। (तदेवं

वासनाऽवभास एव रसचर्वयितृत्वम् ।) सा चानादिकालीना वासना स्थायिभूतैव विभावादिवशाद्रसत्वमापद्यते, न व्यभिचारिभूता, तान्त्रिकत्वाद्रसशब्दस्य । विभावादिभिर्व्यञ्जनादेव च स्थायिनो रसत्वम् । व्यंग्यव्यंजकभावो हि तेषां सम्बन्धः । तथा हि द्विविधमिह संक्षेपेण व्यंजनम्—एकं तावत् कारणसूक्ष्मरूपतयाऽवस्थितस्य स्थूलरूपत्वं यथा क्षीरावस्थायां शुक्लावस्थस्योत्तरं दधिरूपत्वम् । एतच्च प्रतीत्यनपेक्षमपि केवलवस्तुसमवेतमेव व्यंजनम् । द्वितीयन्तूपायप्रतीतिसापेक्षोपेयप्रतीतिरूपं यथा प्रदीपघटादौ प्रदीपप्रतीतिसाहित्येनैव घटप्रतीतेः—प्रदीपस्य व्यंजकत्वात् । तदुक्तम्—

स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकैात् ॥

तत्रेह रसस्य विभावादीनाञ्च द्वितीयो व्यङ्ग्यव्यञ्जकभावप्रकार आश्रीयते, पानकरसादिन्यायेन विभावादिप्रतीतिसाहित्येन रसप्रतीतेः । अत एव ध्वनिकृता रसाद्याश्रयेणासंलक्ष्यक्रमव्यङ्ग्यत्वमुक्तम्, प्रदीपघटदृष्टान्तश्च व्यञ्जने प्रदर्शितः । संलक्ष्यक्रमव्यङ्ग्यादौ कथं व्यञ्जकत्वमिति चेत्, तत्रापि व्यञ्जकप्रतीतिपुरःसरत्वेन व्यङ्ग्यप्रतीतेः क्रमवत्त्वेऽपि व्यङ्ग्यप्रतीतिकाले तावद् व्यञ्जकप्रतीतेरस्ति सहभाव इति प्रदीपघटन्यायेन स्थित एव व्यंग्यव्यंजकभावः । तत्र हि पूर्वं केवलं व्यंजकप्रतीतिः पश्चात्तु व्यंजकसहितव्यंग्यप्रतीतिरितीयानेव पूर्वकल्पाद्विशेषः । वास्तवस्तु क्रम उभयत्राप्यस्ति, केवलं पूर्वत्रोत्पलपत्रव्यतिभेदन्यायेन न संलक्ष्यते, उत्तरत्र तु संलक्ष्यत एव । संलक्षणेऽपि व्यंग्यप्रतीतिकाले तावद्व्यंजकप्रतीतिरस्तीत्येतावता प्रदीपघटदृष्टान्तोऽत्रापि न संगच्छते । तदुक्तं ध्वनिकृतैव 'न हि व्यंग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवतीति' । एवमेव चैतत् । व्यंग्यप्रतीतौ हि व्यंजकप्रतीतिरुपयुक्ता, न व्यंजकप्रतीतौ व्यंग्यप्रतीतिः, घटप्रतीति (प्रदीप) वदेव प्रदीपप्रतीतेः केवलाया अपिभावात् तदेतत् प्रसक्तानुप्रसक्तमास्ताम्, प्रकृते तु विभावादिभिर्व्यज्यते रस इति सुव्यवस्थितमेव ।

एवञ्च व्यवस्थिते रसस्य कार्यत्वं ज्ञाप्यत्वं भोग्यत्वञ्च पराकृतं भवति । तथाहि कार्यस्तावद्रसो न भवति, कारणाभावेऽपि भावप्रसंगात्, घटवत् । 'यत्कालं मर्दनं तत्कालं मर्दनसुखमिति' न्यायेन कार्यकालेऽपि कारणस्य भाव इति चेत्, नैतत्, मर्दनस्य स्पर्शरूपत्वात्, स्पर्शसंवेदनसमयेऽन्तःस्प्रष्टव्यविशेषभावत्वाच्च सुखस्य, बहिः सुखं नामान्यत् किंचिद्दृश्यतेऽन्तःस्प्रष्टव्यविशेषात् । ततो मर्दनं स्पर्शः, तत्सहभावी चान्तःस्प्रष्टव्यविशेषः, तदेव च सुखमिति नास्ति पौर्वापयम् । इह तु कार्यत्वादेरेवौत्तरकालिकत्व रसस्येति विभावः सहभावो न स्यात् । अस्ति च—तस्मान्न कार्यो रसः । किञ्च कार्यं न नियमेन कारणज्ञानमपेक्षते, इह तु नियमेन विभावादिज्ञानापेक्षा रसप्रतीतेरिति (कार्यत्वं तावन्निरस्तम्) । कार्यत्वं विहाय किमन्यदवशिष्यते ऋते व्यंग्यत्वात् । प्रत्येयत्वं तर्हि स्यात्—नैतत्, सिद्धस्य प्रतीतिर्भवतीति । न रसः पूर्वसिद्धः, प्रतीत्या विशिष्टस्यैव रसत्वात् । अतश्च न रसः प्रतीयते, अपि तु प्रतीयमान एव रसः । अत एव सिद्धत्वाभावात् सा रसस्य प्रतीतिश्चर्वणाशब्दवाच्या । एवं तर्हि चर्वणीयत्वाद् भोग्यत्वं स्यात् । एतदपि नास्ति, भोग्यत्वं हि भोगविषयत्वम्, भोगश्च किं वस्तुवृत्तमेव किञ्चित् उतस्वित् प्रतिपत्तृवृत्तम्? न तावद्वस्तुवृत्तम्, प्रतीत्यनपेक्षस्य नीलादिन्यायेन वस्तुस्वभावतयैव तस्याभावात् । प्रतिपत्तृवृत्तं चेत् प्रतिपत्तुरपि किमिच्छाद्वेषादिन्यायेन, (कश्चिदतिशयो भोग आहोस्वित् प्रतीत्यात्मा)? न तावदिच्छान्यायेन, तेषामप्रतीत्यात्मत्वे जडताऽऽपत्त्या वस्तुवृत्तविशेषात् । (प्रतीत्यात्मा चेत्) प्रतीतिविषयस्तर्हि भोगः । स प्रत्येय-

निष्ठः, प्रत्येयश्च रत्यादिः, स च नियमेन विभावादिप्रतीतिसापेक्षः प्रतीयते। एवञ्च यावत् प्रतीतिविषया एव विभावादयो रत्यादिप्रतीतिहेतवस्तावत् 'स्वज्ञानेनान्यधीहेतु' रित्यादि हठेनायातं व्यंजकत्वलक्षणम्। ततश्च व्यंग्यो रसः व्यंजका विभावादय इति सुव्यवस्थितम्। केवलं व्यङ्ग्यव्यंजकयोर्देशकालसम्बन्धावच्छेदकाभावाद् हृदयसंवादपर्यवसायिसाधारण्येन यल्लोकोत्तरत्वं तद् भूषणं न दूषणम्—इति तावद्रसस्य रूपं सिद्धान्तितम्।

इदानीं ग्रन्थो विव्रियते।

तानि चेदिति—चेच्छब्दस्य च 'तत् कथ्यन्त' इति तच्छब्देन योजना। तदिति तदेत्यर्थः। सम्यङ् मिथ्येति। तथा चोक्तम्।—

**'प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः।**
**धीरसावयमित्यस्ति नासावेवायमित्यपि॥**
**विरुद्धबुद्ध्यसम्भेदादाविर्भवति विप्लवः।**
**युक्त्या पर्य्यनुयुज्यते स्फुरन्ननुभवः कया॥'** इति

'सेयं ममाङ्गेषु' इत्यादि श्लोकचतुष्टयं क्रमेणालम्बनोद्दीपनविभावद्वयोदाहरणार्थम्। तस्य काव्यवशादेव प्रतीतिः। शिक्षाऽभ्यासान्नर्त्तकेनाश्रुपाताद्यनुभावप्रकाशनम्। अभ्यासप्रवर्त्तितेति—अभ्यासेन प्रवर्त्तितं यद् व्यभिचारिणामेव स्वकार्यमनुभावलक्षणं तत्प्रकाशनेन चित्तवृत्तिविशेषाणां व्यभिचारिणां प्रकटनम्। सत्त्वोद्रेकेति—सत्त्वाख्यगुणोद्रेकेण प्रकाशानन्दमयी या संवित्तत्र विश्रान्तिः संविदन्तरौन्मुख्याभावः। सांख्यर्हि सर्वस्य प्रीतिशब्दवाच्यानन्दभूयस्त्वं प्रकाशप्रयोजनञ्चोक्तम् 'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्ति नियमार्थाः' इति ग्रंथेन। अभ्यासपाटववतामिति—अभ्यासः पौनः पुन्येनानुशीलनम्, पाटवं प्रज्ञाप्रकर्षः। ममैवैते इति—एत इति विभावादयः। साधारण्योपायेति—साधारण्या उपायाः साधारण्येन प्रतीता विभावादयः। अपरिमितभावेन प्रमात्रेति—स्वगतत्वेन रतिप्रतीतौ कामित्वम्; परगतवेन द्वेषादि, ताटस्थ्यं वा। घटादिवत् सर्वसाधारणप्रतीतौ ताटस्थ्यमेव, न रसनीयत्वम्। रसनीयत्वे वा सुखवन्नियन्तृनिष्ठत्वे कामित्वम्, तस्मात् सर्वप्रमातृणां यो रसनीयः (स) सर्वप्रमातृताऽवलम्बनेनैव रस्यते। अत एव नाटकमण्डपान्तः प्रविष्टाः सर्वे हृदयसंवादभाजो भवन्तीत्युच्यते। सकलसहृदयसंवादभाजेति साधारण्येनेत्यस्य विशेषणम्। स्वाकार इवेति सामाजिकप्रमातृस्वरूपम्। अभिन्नोऽपीति संवित्तादात्म्यात्। गोचरीकृत इति रत्यादिभिः परस्परवैलक्षण्येनोट्टङ्कनस्य भानात् (दानात् ?)। विभावादिजीवितेति व्यंजकपरित्यागाद्धि व्यंग्यस्याप्रतिभासनात्। अन्यत् क्वेति तद्विलक्षणं-व्यंजकरूपम्। कार्योऽप्युच्यतामिति प्रौढत्वेन पूर्वप्रतिष्ठापितमार्गयोजना। लौकिकेति—लौकिकानि प्रत्यक्षादीनि प्रमाणान्यस्फुटत्वयोगीनि संविदन्तरौन्मुख्यादविविश्रान्तिभाञ्जि च। रससंवेदनयस्य स्फुटत्वेन विश्रान्त्यैतद्वैलक्षण्यम्। परिमितयोगिनां भिन्नसंज्ञानां ज्ञानानि ताटस्थ्येन वस्त्ववगमयन्ति। तटस्थस्य विषयानावेशेन प्रवृत्तिः, अपरिमितयोगिनां शान्तब्रह्मसाक्षात्कारिणां संवेदनानि शान्तत्वाद्वेद्योपरागशून्यत्वेन स्वात्ममात्रपर्यवसितानि। इदन्तु रसस्वभाववेद्यमुक्तमेव। अत एव सर्वविलक्षणत्वाल्लोकोत्तरं रसस्य संवेदनम्। स्वसंवेदनसिद्धत्वादिति—'स्वात्मन्यविकल्पका विकल्पका' इत्युक्तत्वादुभयात्मकत्वं स्वसंवेदसारविमर्शमयत्वेन। मिलिता इति द्वन्द्वेन निदि्र्दष्टाः। यत्र तु प्रयोगे केवलानां निर्देशः तत्रासाधारण्येन नान्यतमद्वयापेक्षा।

## बालचित्तानुरञ्जनी

लोक इति । लोके काव्यनाट्यव्यतिरिक्तस्य प्रमदाकटाक्षभुजाक्षेपनिर्वेदादिभिः कारणकार्यसहकारिभिः लिङ्गभूतैः स्थायिनो लौकिकचित्तवृत्तिविशेषस्य रत्यादिभावस्यानुमाने व्यत्यासः पौनःपुन्येन परिशीलनं तेन पाटवं प्रज्ञातिशयः । तद्वतो सामाजिकानां वासनात्मतया स्थित इत्युपरि संबन्धः । अनेनैतदुक्तं भवति लोके प्रमदादिभिः स्थायिनमनुमिमाना एवात्र शृङ्गारादिरसे अधिकारिणः न श्रोत्रियब्रह्मचर्यादयो नास्य मण्डपान्तर्गता अपि । एवं शृङ्गारिणश्च न शान्त रस इति । काव्ये नाट्ये वोक्तलक्षणे तैरेव प्रमदादिभिरिव लौकिकारणत्वकार्यत्वसहकारित्वपरिहारेण लौकिककारणादिशब्दवाच्यत्वं परित्यज्येत्यर्थः । कारणादिशब्दव्यवहार्यत्वाभावे कथं व्यवहार्यत्वमित्याशङ्क्य विभावानुभावव्यभिचारिभावव्यापारत्वेन लोकविलक्षणविभावानुभावव्यभिचारिशब्दवाच्यत्वमाह विभावनादीति । ननु विभावादीनां प्रतिनियतत्वेन किमसाधारण्येनेत्याह साधारण्येनेति । ममैवैत इत्यादिना तत्परिहारमभिनीय दर्शयति । न ममैवैत इत्यादिना एवविधैः प्रमदादिभिरभिव्यक्तः सामाजिकानां प्रेक्षकाणां रत्याद्यनुभवेन या वासना संस्कार तदात्मतया स्थित्या (?) पूर्वमनभिव्यक्तत्वेन स्थित इत्यर्थः । एवंविधः स्थायी रत्यादिको भावः शृङ्गारादिको रस इति संबन्धः इत्युच्यत इति शेषः ।

कीदृशो रस इत्यपेक्षायामाह प्रमात्रा साधारण्येन साधारणतया गोचरीकृतो विषयीकृतः, ननु रसस्यानियतपुरुषत्वे नित्यत्वेन कथं साधारण्यमत आह नियतप्रमातृगतत्वेनेत्यादिना । विभावादयः साधारणोपायाः तत्सामर्थ्यात् तस्मिन् काले विभावाद्यनुभावकाले विगलितायाः प्रतिनियतप्रमातृताया वशादुन्मिषितः स्फुरितः वेद्यान्तरसम्पर्कशून्यः, अपरिमितोभावश्चित्तवृत्तिविशेषो यस्य प्रमातुः तेन प्रमात्रा साधारणविभावनादिव्यापारवत्त्वात् विभावादीनां साधारण्यं तद्बलात् प्रमातुरपि साधारण्यं तेन च रसस्यापि साधारण्यमिति भावः । न केवलं रसस्य साधारण्यं तद्बलात् प्रमातुरपि साधारण्य तेन च रसस्यापि साधारण्यमिति भावः । न केवलं रसस्य साधारण्यं युक्तिसिद्धं, किन्तु सर्वानुसिद्धमित्यभिप्रेत्य साधारण्येनेत्येतद्विशिनष्टि सकलेति । विषयविषयिभावस्य भेदगर्भत्वात् प्रमात्रात्मभूतस्य रसस्य कथं विषयीकरणमत आह स्वाकार इति । स्वाकारः प्रमात्राकारः यथा स्वाकारः प्रमाता स्वात्मानमहं जानामीति ज्ञेयरूपतया गोचरीक्रियते तद्वदित्यर्थः । अलौकिकरससद्भावे प्रमाणमाह चर्व्यमाणतेति । चर्वणानन्तरकाले न तिष्ठतीत्यर्थः । अत एवाह विभावादिजीवितावधिरिति । विभावादिव्यञ्जकाभावे व्यङ्ग्यस्य रसस्याप्यभावः इत्यर्थः । लौकिक व्यङ्ग्यव्यञ्जकवत् विभावादेः रसस्य च भेदः । न प्रतीयत इत्यत आह पानकेति यथा गुडादिनिर्मिते पानके अनेकरससद्भावेऽपि न पृथक् प्रतीतिस्तथेत्यर्थः । रसस्य लोकोत्तरकार्यस्यास्वाद्यत्वमाह अलौकिकेति । तदेव दर्शयति पुर इव परिस्फुरन्नित्यादिना । सर्वाङ्गीणमिति । क्रियाविशेषणं विभावाद्यन्वयव्यतिरेकबलात् रसस्योत्पत्तिरस्तु नेत्याह न चेति । तत्र हेतुमाह विभावेति । निमित्तकारणानां दण्डादीनां नाशे घटादेरिव रसस्याप्यवस्थानप्रसङ्ग इत्यर्थः, परन्तु तर्हि ज्ञाप्यः ? नेत्याह नापीति । अज्ञानतया स्थितो ज्ञाप्यो भवति । रसस्तु न तथेत्यर्थः । कथं तर्हि प्रतीयत इत्याह अपि त्वित्यादिना । प्रदीपादिव्यङ्ग्यविलक्षणत्वेन व्यञ्जित आस्वादनीयः ।

ननु कारकव्यतिरिक्तहेत्वभावादेतदसङ्गतमित्याशङ्क्य तस्यैव लौकिकत्वमुच्यत इति न किञ्चिद्दूषणमित्याह कारकेत्यादिना । एवं तर्हि रस उत्पद्यत इति व्यवहारविरोध इत्याशङ्क्य भाक्तो व्यवहार इत्याह चर्वणानिष्पत्त्येत्यादि । तर्हि रसः प्रतीयत इति व्यवहारविरोध इत्याशङ्कायामपि व्यवहारो भाक्त इत्याह

लौकिकेत्यादिना। विलक्षणशब्दः प्रत्येकमभिसंबध्यते। लौकिकप्रत्यक्षादिप्रमाणविलक्षणताटस्थ्यावबोध-शालिमितयोगिज्ञानविलक्षणवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणं यस्य संवेदनं तद्गोचर इति। उपाचारात् प्रत्येयः। ज्ञेयोऽप्यभिधीयताम्। लौकिकेति विशेषणं न प्रत्यक्षादिप्रमाणात् गुणालङ्कारादिमण्डितव्यञ्जकव्यङ्ग्यत्वेनालौकिकस्य रसस्य वैलक्षण्यमुक्तम्। अवबुध्यत इत्यनेनेत्यवबोधः। प्रमाणं ताटस्थ्येन तदद्वैतरूपेणावबोधजगद्ग्राहकं प्रमाणमित्यर्थः। तेन शालि यन्मितयोगिज्ञानम्। योगस्य मितत्वमद्वैतानवगाहित्वेन। ताटस्थ्यावबोधशालीत्यनेन मितयोगिज्ञानाद्रसस्य वैलक्षण्यमुक्तम् परिमितेतरयोगी अपरिमितयोगीत्यादि समुपजातब्रह्मसाक्षात्कार इत्यर्थः। तद्धानं कीदृशम्? तदात्ममात्रपर्यवसितम्। अत एव वेद्यस्य घटादेः संस्पर्शेन विषयीकरणेन रहितम्। अनेन परिमितेतरयोगिज्ञानाद्रसस्य विभावादिसंबन्धत्वात् वेद्यघटितस्य रसस्य वैलक्षण्यस्य शुद्धः?

ननु तद्ग्राहकं निर्विकल्पकमेवास्तु। तथा च व्यवहारो मुख्यः स्यादित्यत आह तद्ग्राहकमिति। विभावादिविशिष्टज्ञानजनकत्वेन तन्न निर्विकल्पकमित्यर्थः। अस्तु तर्हि सविकल्पकः। नेत्याह नापीति। अलौकिकानन्दमयस्य ब्रह्मस्वरूपस्य रसस्य स्वयंप्रकाशत्वेन तद्ग्राहकं सविकल्पकं न भवतीति भावः।

ननु रसस्य निर्विकल्पकसविकल्पकग्राह्यत्वाभावे इतरनिषेधस्येतरविधनान्तरीयकत्वन्यायेन निर्विकल्पकसविकल्पकग्राह्यत्वं विकटत्वमापद्येतेत्यत आह उभयाभावरूपस्य चेत्यादि। आपद्यमानमनुभयात्मकत्वमपि लोकोत्तरतां स्वयं प्रकाशरूपतामवगमयति। यदि कोटिद्वयमेव स्यात् विरोधस्तर्हि स्यात्। न चात्र तथा, स्वयंप्रकाशरूपायास्तृतीयकोटेरङ्गीकारादिति भावः।

अथवा, "न कार्य" इत्यादिनोत्पत्त्यभिव्यक्तिनिषेधे आभ्यन्तरनिषेधन्यायेनोत्पत्त्यभिव्यक्तिरूपं विरुद्धमापद्येतेत्यत आह उभयाभावरूपस्य चेत्यादि। आचार्यग्रहणेन बहुवचनेन चायमेव पक्षः सिद्धान्त इति सूचितम्।

## काव्यादर्शः

प्रमदादिभिरिति। आदि-शब्दात् कटाक्ष—भुजाक्षेपादिभिर्निर्वेदादिभिश्च व्यभिचारिभिः कारणादिभिरिति कारणकार्यसहकारिरूपैर्लिङ्गभूतैर्लौकिकी या चित्तवृत्तिस्तदनुमानेऽभ्यासवतां नाट्येऽपि तैरेव प्रमदादिभिर्विभावादिव्यपदेश्यैः स्थायी रत्यादिरभिव्यक्तः। काव्येऽपि च लोकनाट्यधर्मिस्थानीयेन स्वभावोक्तिवक्रोक्त्यादिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसनावार्ता यन्मुनिः काव्यार्थान् भावयतीति भावः। अस्यार्थः। पदार्थवाक्यार्थौ रसेष्वेव पर्यवस्यत इत्यसाधारण्यात् प्राधान्याच्च काव्यस्यार्था रसाः। अर्थ्यन्ते प्राधान्येनेत्यर्थाः। न तु अर्थशब्दोऽभिधेयवाची रसादीनां स्वशब्दानभिधेयत्वात्। वासनात्मतयेति। एकघनताप्रतीत्या सर्वेषामनादिवासनाचित्रीकृतचेतसां वासनासंवादात्। साधारणोपायबलादिति। 'नटी विदूषको वापि' इति लक्षितप्रस्तावनावलोकनेन यो नटरूपताधिगमस्तत्पुरःसरप्रतिशीर्षकादिना तत्प्रच्छादनप्रकारोऽभ्युपायः, अलौकिकभाषादिभेदलास्याङ्गरङ्गपीठमण्डपगतकक्ष्यापरिग्रहनाट्यधर्मी सहितस्तस्मिन् हि सत्यस्यैवात्रैवैतर्ह्येव च सुखं दुःखं चेति न भवति प्रतीतिः, स्वरूपस्य निह्नवाद् रूपान्तरस्य चारोपितस्य प्रतिभासविश्रान्तिवैकल्येन स्वरूपे विश्रान्त्यभावात् सत्यतदीयरूपनिह्नवमात्र एव पर्यव-

सनात्। एष साधारणीभावसिद्ध्या रसचर्वणोपयोगित्वेन मुनिना परिकरः श्रितः। अपरिमितभावेन प्रमात्रेति। सर्वप्रमातृणां यो रसनीयः सर्वप्रमातृतावलम्बनेनैव रस्यते, अत एव नाटकमण्डपान्तःप्रविष्टः सर्वे हृदयसंवादभाजो भवन्तीत्युच्यते। तथा निजसुखादिविवशश्च कथं वस्त्वन्तरे संविदं विश्रमयेदिति तत्प्रत्यूहव्यपोहनाय प्रतिपदार्थनिष्ठैः साधारण्यमहिम्ना सकलयोग्यत्वसहिष्णुभिः शब्दादविषमयैरातोद्यगानविचित्रमण्डपविदग्धगणिकादिभिरुपरञ्जनं श्रितं, येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयीक्रियते। चर्व्यमाणतैकप्राण इति। चर्व्यमाणतैकसारो, न तु सिद्धस्वभावो, न च चर्वणातिरिक्तकालावलम्बी, अत एव विभावादिजीवितावधिः। तदस्त्यास्वादात्मा प्रतीतिर्यस्यां रतिरेव भाति। तत एव विशेषान्तरानुपहितत्वात् सा रसनीया सती न लौकिकी, न मिथ्या, नानिर्वाच्या, न लौकिकतुल्या, न तदारोपरूपेति। संक्षेपाश्चायं—मुकुटप्रतिशीर्षकादिना तावन्नटबुद्धिराच्छाद्यते, गाढप्राक्तनसंवित्संस्काराच्च काव्यबलानीयमानापि न तत्र रामधीर्विश्राम्यति। तत एवोभयदेशकालत्यागः। रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टा नटे देशकालानियमेन रतिं गमयन्ति, यस्यां स्वात्मापि तद्वासनावत्त्वादनुप्रविष्टोऽत एव न तटस्थतया रत्यवगमः। न च नियतकारणतया येनार्जनाभिष्वङ्गादिसंभावना, न च नियतपरात्मैकगततया येन दुःखद्वेषाद्युदयः, तेन साधारणीभूता संतानवृत्तेरेकस्या एव वा संविदो गोचरीभूता रतिः शृङ्गारः। साधारणीभावना च विभावादिभिः। न कार्य इति। विभावादयो न रसनिष्पत्तिहेतवस्तद्बोधापगमेऽपि रससंभवप्रसङ्गाद्, नापि ज्ञप्तिहेतवः प्रमेयभूतस्य कस्यचित् सिद्धस्य रसस्याभावात्। अलौकिकत्वसिद्धेरिति। अलौकिक एवायं चर्वणोपयोगी विभावादिव्यवहारः। स एव च भूषणं, पानकरसास्वादोऽपि किं द्राक्षामरिचादिषु दृष्ट इति तत्समानोऽयम्।

नन्वेवं रसोऽप्रमेयः स्यात्। एवमेतत्। रस्यतैकप्राणो ह्यसौ न प्रमेयादिस्वभावः। तर्हि सूत्रे निष्पत्तिरिति कथम्? नेयं रसस्य, अपि तु तद्विषयाया रसनायाः। तन्निष्पत्त्या तु तदेकायत्तजीवितस्य रसस्य निषपत्तिरुपचर्यत इत्याह—चर्वणानिष्पत्त्येति। स च लौकिकप्रत्यक्षानुमानागमोपमानादिप्रमाणजनितरत्याद्यवबोधात् तथा तटस्थपरसंवित्तिशालियोगिज्ञानात् सकलवैषयिकोपरागशून्यात्मारामावहितपरयोगिगतस्वानन्दैकघनानुभवाच्च विशिष्यत इत्याह—लौकिकप्रत्यक्षादीति। लौकिकाद् आस्वादाद् योगिविषयाच्चान्य एवायं रसास्वादः, यतो विभावादिचर्वणा तत्कालसारैवोदिता, न पूर्वापरकालानुबन्धिनी। जातिगोत्रादिविशेषपरामर्शनरहितं ज्ञानं निर्विकल्पम्। तेन विभावादिसंयोगाद् रसना निष्पद्यते, अतस्ताविधरसनागोचरो लोकोत्तरोऽर्थो रस इति तात्पर्यं मुनिसूत्रस्येत्यभिनवगुप्तपादाः।

## विवेकः

ध्वनिदर्शनानुसारेणाचार्यश्रीमदभिनवगुप्तस्य मते व्यङ्ग्यो रसः, विभावादयो व्यञ्जकाः, व्यङ्ग्यव्यञ्जकभावलक्षणश्च सम्बन्धस्तेषां स्थायिना मिह(सह)। स्थाय्येव योग्यतयाऽत्र रसीभवतीत्युच्यते। स च सम्बन्धः सूत्रे संयोगशब्देनोक्तः। ततो रसस्य निष्पत्तिरभिव्यक्तिरित्यर्थः। स च रसः सामाजिकानां, नानुकार्ये, नानुकर्तरि, सामाजिकानां निश्चमत्कारत्वप्रसङ्गात्। तेषामेव चास्ति लोकोत्तरश्चमत्कारो नानुकार्यस्य, लौकिकपरिमितसान्तरायचित्तवृत्त्याक्रान्तत्वात्। नानुकर्तुस्तस्य तथाविधचित्तवृत्तिशून्यस्य निष्प्रयोजनत्वाच्चमत्कारपारिमित्यापाताच्च। तत्र कारणादीनामेव लोकोत्तरसाधारणीकरणव्यापारवत्त्वाल्लोकोत्तरविभावादिव्यपदेशः। तद्साधारण्ये च स्थायिरूपस्य प्रमेयस्य साधारण्यात् प्रमातुरपि साधारण्यम्। अतश्च न विभावादि(द्य)साधारण्यहेतुकसमुद्रोल्ल-

ङ्घनकृतादिदोषापत्तिः, प्रमातुः पारिमित्याभावात्। यस्य समुद्रोल्लङ्घनादि सम्भवति, तदभेदेन स्वात्मनः प्रतीतेः प्रमेयसाधारण्येन। प्रमातृसाधारण्ये त्वयं दोष एव। तच्चनाङ्गीक्रियत इति निस्तुषं व्यञ्जनदर्शनम्। तथाहि निर्वासनस्य रसचर्वणा नास्ति। श्रोत्रियजरन्मीमांसकादयो हि नाट्यमण्डपान्तः प्रविष्टा अपि चमत्काराभावात् कीलकप्राया एव। प्रशान्तब्रह्मचारिप्रभृतयश्च शृङ्गाररसास्वादे बहिरङ्गा। गाढरागाणाञ्च शान्तरसचर्वणाऽनभिज्ञत्वम्। अननुभूतशोकस्पर्शानाञ्च करुणास्वादावसरे पाषाणप्रख्यत्वम्। तदेवं वासनाऽवभास एव रसचर्वयितृत्वम्। सा चानादिकालीना वासना स्थायिभूतैव विभावादिवशाद्रसत्वमापद्यते, न च व्यभिचारिभूता, तान्त्रिकत्वाद्रसशब्दस्य। विभावादिभिर्व्यञ्जनादेव[च] स्थायिनो रसत्वम्। व्यङ्ग्यव्यञ्जकभावो हि तेषां सम्बन्धः। तथाहि द्विविधमिह संक्षेपेण व्यञ्जनम्—एकं तावत् कारणे सूक्ष्मतयाऽवस्थितस्य स्थूलरूपत्वं यथा क्षीरावस्थायाः शुक्लावस्थस्योत्तरं दधिरूपत्वम्। एतच्च प्रतीत्यनपेक्षमपि केवलवस्तुसमवेतमेव व्यञ्जनम्। द्वितीयन्तूपायप्रतीतिसापेक्षोपेयप्रतीतिरूपं यथा प्रदीपघटादौ। प्रदीपप्रतीतिसाहित्येनैव घटप्रतीतेः, प्रदीपस्य व्यञ्जकत्वात्।तदुक्तम्—स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः। यथा दोषोऽन्यथाभावे को विशेषोऽस्य कारणा(का)त्॥ (प्र.वा.का. २६५) तदेवं रसस्य विभावादीनाञ्च द्वितीयो व्यङ्ग्यव्यञ्जकभावप्रकार आश्रीयते, पानकरसादिन्यायेन विभावादिप्रतीतिसाहित्येन रसप्रतीतेः। अत एव ध्वनिकृता रसाद्याश्रयेणासंलक्ष्यक्रमव्यङ्ग्यत्वमुक्तम्(२१२), प्रदीपघटदृष्टान्तश्च व्यञ्जने (३।१३.१९५ पृ:) प्रदर्शितः। संलक्ष्यक्रमव्यङ्ग्यादौ कथं व्यञ्जकत्वमिति चेत्; तत्रापि व्यञ्जकप्रतीतिपुरःसरत्वेन व्यङ्ग्यप्रतीतेः क्रमवत्त्वेऽपि व्यङ्ग्यप्रतीतिकाले तावद्व्यञ्जकप्रतीतेरस्ति सहभाव इति प्रदीपघटन्यायेन स्थित एव व्यङ्ग्यव्यञ्जकभावः। तत्र हि पूर्वं केवलं व्यञ्जकप्रतीतिः, पश्चात्तु व्यञ्जकसहितव्यङ्ग्यप्रतीतिरितीयानेव पूर्वकल्पाद्विशेषः।

वस्तुतस्तु क्रम उभयत्राप्यस्ति केवलं पूर्वत्रोत्पलदलशतव्यतिभेदन्यायेन [न] संलक्ष्यते, उत्तरत्र तु संलक्ष्यत एव। संलक्षणेऽपि व्यङ्ग्यप्रतीतिकाले तावद्व्यङ्ग्यव्यञ्जकप्रतीतिरस्तीत्येतावता प्रदीपघटदृष्टान्तोऽत्रापि न संगच्छते। तदुक्तं ध्वनिकृतैव, 'न हि व्यङ्ग्येप्रतीयमाने वाच्यबुद्धिर्दूरीभवती'ति (१९० पृ.)। एवमेव चैतद् व्यङ्ग्यप्रतीतौ हि व्यञ्जकप्रतीतिरुपयुक्ता; न व्यञ्जकप्रतीतौ व्यङ्ग्यप्रतीतिः, घटप्रदीपवदेव प्रदीपप्रतीतेः केवलाया अपि भावात्; तदेतत् प्रसक्तानुप्रसक्तमास्ताम्। प्रकृते तु विभावादिभिर्व्यज्यते रस इति सुव्यवस्थितमेव। एवञ्च व्यवस्थिते रसस्य कार्यत्वं ज्ञाप्यत्वं भोग्यत्वञ्च पराकृतं भवति। तथाहि—कार्यस्तावद्रसो न भवति, कारणाभावेऽपि भावप्रसङ्गाद्, घटवत्। यत्कालं मर्दनं तत्कालं मर्दनसुखमिति न्यायेन कार्यकालेऽपि कारणस्य भाव इति चेत्, नैतत्; मर्दनस्य स्पर्शरूपत्वात्, स्पर्शसंवेदनसमयेऽन्तःस्प्रष्टव्यस्यापि संवेदनात्। अन्तःस्प्रष्टव्यविशेषस्वभावत्वाच्च सुखस्य, बहिः सुखं नान्यत् किञ्चिद्दृश्यते अन्तःस्प्रष्टव्यविशेषात्। ततो मर्दनं स्पर्शः, तत्सहभावी चान्तःस्प्रष्टव्यविशेषः, तदेव च सुखमिति नास्ति पौर्वापर्यम्। इह तु कार्यत्वादेवौत्तरकालिकत्वं रसस्येति विभावैः सहभावो न स्यात्। अस्ति च, तस्मान्न कार्यो रसः। किञ्च कार्यं न नियमेन कारणज्ञानमपेक्षते, इह तु नियमेन विभावादिज्ञानापेक्षेति कार्यत्वं तावन्निरस्तम्। प्रत्येयत्वं तर्हि स्यात्। नैतत्; सिद्धस्य तद्भवतीति। न रसः पूर्वसिद्धः प्रतीत्यारूढस्यैव रसत्वात्। अतश्च न रसःप्रतीयते, अपि तु 'प्रतीयमान एव रसः। प्रतीयते रस इत्योदनं पचतीतिवद्व्यवहारः। (ध्व. आ.लो. २।४ आति ६९ पृ.) अतएव सिद्धत्वाभावात् सा रसस्य प्रतीतिश्चर्वणास्वादनादिशब्दवाच्या। चर्वणा चात्राभिव्यञ्जनमेव। न तु ज्ञापनं प्रमाणं (ण)व्यापारवत्; नाप्युपादानं हेतुव्यापारवत्। अतो न विभावादीनामत्र

ज्ञापकत्वं, न च कारकत्वमपि तु चर्वणोपयोगितेत्याह । अपित्विति—एवं तर्हि चर्वणीयत्वाद्भोग्यत्वं स्यात् । एतदपि नास्ति, भोग्यत्वं हि भोगविषयत्वम्, भोगश्च किं वस्तुवृत्तमेव किञ्चित् उत् स्वित्प्रतिपत्तृवृत्तम्? न तावद्वस्तुवृत्तम्; प्रतीत्यनपेक्षस्य नीलादिन्यायेन वस्तुस्वभावतयैव तस्याभावात् । प्रतिपत्तृवृत्तं चेत् प्रतिपत्तुरपि किमिच्छाद्वेषादिन्यायेन कश्चिदतिशयो भोग आहोस्वित् प्रतीत्यात्मा ? न तावदिच्छाऽऽदिन्यायेन, तेषामप्रतीत्यात्मत्वे जडताऽऽपत्त्या' प्रतीतिविर्पयन्ताह भागः । स प्रत्ययनिष्ठः प्रत्येयश्च रत्यादिः, स च नियमेन विभावादिप्रतीतिसापेक्षः प्रतीयते । एवञ्च यावत् प्रतीतिविषया एव विभावादयो रत्यादिप्रतीतिहेतवस्तावत् 'स्वज्ञानेनान्यधीहेतु' रित्यादि हठेनायातं व्यञ्जकत्वलक्षणम् । ततश्च व्यङ्ग्यो रसः व्यञ्जका विभावादय इति सुव्यवस्थितम् । केवलं व्यङ्ग्यव्यञ्जकयोर्देशकालसम्बन्ध्यवच्छेदकाभावात् हृदयसंवादपर्यवसायिसाधारण्येन यल्लोकोत्तरत्वं तद्भूषणं न दूषणम्—इति तावद्रसस्वरूपं सिद्धान्तितम् ।

'इदानीं' ग्रन्थो विव्रियते—सम्यङ्मिथ्येति, तथाचोक्तम्—प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः । धीरसावयमित्यस्ति नासावेवायमित्यपि ॥ विरुद्धबुद्ध्यसम्भेदादविवेचितविप्लवः । युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया ॥ (अ. भा. २७३ पृ. धर्मकीर्ति ?) इह 'सेयं ममाङ्गे' ष्वित्यादि श्लोकद्वयं क्रमेणालम्बनोद्दीपनविभावद्वयोदाहरणार्थम् । तस्य काव्यवशादेव प्रतीतिः' । (रु. सं. २० पृ.) मनोरथस्तावन्मन[स] एव भवतीति [पुनः] मनः शब्दप्रयोगोऽन्ययोगव्यवच्छेदार्थः । काल एवं कृतान्तः । [शिक्षेति ।] — शिक्षाऽभ्यासान्नर्तकेनाश्रुपाताद्यनुभावप्रकाशनम् । अभ्यासप्रवर्तितेति—अभ्यासेन प्रवर्तितं यद्व्यभिचारिणामेव स्वकार्यमनुभावलक्षणं तत्प्रकाशनेन चित्तवृत्तिविशेषाणां व्यभिचारिणामेव प्रकाशनम् । भाव्यमानः सम्भाव्यमानः । सत्वोद्रेकेति—सत्त्वाख्यगुणोद्रेकेण रजस्तमसोरस्तमनात् प्रकाशानन्दमयी या संवित्तत्र विश्रान्तिः संविदन्तरौन्मुख्या भावः । सत्त्वादयो गुणा अन्योन्याभिभावाश्रयादिव्यापारा इत्येषामन्यतमेनार्थादुद्भूतेनान्यदभिभूयते । तदिह सांख्यैर्हि सत्त्वस्य प्रीतिशब्दवाच्यानन्दभूयस्त्वं प्रकाशप्रयोजनञ्चोक्तम् 'प्रीत्यप्रीतिविषादात्मका गुणाः प्रकाशप्रवृत्तिनियमार्था (सां. का. १२) इति ग्रन्थेन' (रु. सं. २०पृ) प्रीतिरानन्दस्तदात्मकं सत्त्वं गुणः । अप्रीतिर्दुखं तदात्मकं रजो गुणः । विषादो मोहस्तदात्मकं तमो गुणः । एषां यथासंख्यं प्रकाशः प्रकर्षः । अभ्यासपाटववतामिति अभ्यासः पौनः पुन्येनानुशीलनं, पाटवं प्रज्ञाप्रकर्षः । ममैवैत इति—एत इति विभावचेष्टाऽऽदयः । नियतप्रमातृगतत्वेनेति ज्ञानविशेषः । [तेषां बलात् ।] अपरिमितभावेन प्रमात्रेति-स्वगतत्वेन रतिप्रतीतौ कामित्वं परगतत्वेन सत् पुरूषाणां लज्जेतरेषाञ्चसूया वा तटस्थभावो वा रागापहारेच्छाऽऽदि । घटादिवत् सर्वसाधारणप्रतीतौ ताटस्थ्यमेव, न रसनीयत्वम् । रसनीयत्वे वा सुखवन्नियन्तृनिष्ठत्वे कामित्वं, तस्मात् सर्वप्रमातृणां यो रसनीयः स सर्वप्रमातृताऽवलम्बनेनैव रस्यते । अतएव नाटक[ट्य] मण्डपान्तःप्रविष्टाः [न] सर्वे हृदयसंवादभाजो भवन्तीत्युच्यते । सकल[स]हृदयसंवादभाजेति साधारण्येनेत्यस्य विशेषणम् । स्वाकार इवेति सामाजिकप्रमातृस्वरूपम् । अभिन्नोऽपीति संवित्तादात्म्यात् । गोचरीकृत इति रत्यादिभिः परस्परवैलक्ष्यण्येनोट्टङ्कनस्य दा(भा)नात् । विभावादिजीवितेति व्यञ्जकपरित्यागेन व्यङ्ग्यस्याप्रतिभासनात् । अन्यत् क्वेति अन्यदिति तद्विलक्षणं व्यञ्जकरूपम् । (रु. सं. २० पृ.) [च]र्वणानिष्पत्त्येति ज्ञानविशेषस्यैव ज्ञातास्वादप्रधानस्य चर्वणात्मकत्वम् । कार्योऽप्युच्यतामिति प्रौढत्वेन पूर्वप्रतिष्ठापितमार्गयोजना । लौकिकेति—लौकिकानि प्रत्यक्षादीनि प्रमाणान्यस्फुटत्वयोगीनि संविदन्तरौन्मुख्यादविश्रान्तिभाञ्जि च । रससंवेदनस्य स्फुटत्वेन विश्रान्त्या च तद्वैलक्षण्यम् । परिमितयोगिनां भिन्नसंज्ञानानां ज्ञानानि ताटस्थ्येन वस्त्वव-

गमयन्ति । तटस्थ्स्य विषयानावेशेन प्रवृत्तिः, अपरिमित(परिमितेतर) योगिनां शान्तब्रह्मसाक्षात्कारिणां संवेदनानि शान्तत्वाद्वेद्योपरागशून्यत्वेन स्वात्ममात्रपर्यवसितानि । इदन्तु रसस्वभाववेद्ययु(मु)क्तमेव ।अतएव सर्वविलक्षण-त्वाल्लोकोत्तरं रसस्य संवेदनम् । तद्ग्राहकञ्चेति ज्ञानं हि द्विविधं निर्विकल्पकं सविकल्पकञ्च ।

तत्र स्वरूपमात्रग्राहि निर्विकल्पकं, नामजात्यादियोजनात्मकन्तु सविकल्पकम् । अत्र तयोर्नाद्यमित्याह विभावादीति । परामर्शनं पर्यालोचनं विषयीभाव इति यावत् । नापि द्वितीयमिति । अत आह स्वसंवेदनेति— 'स्वात्मन्यविकल्पका विकल्पका' इति न्यायात् । यदाहुः सौगताः—सर्वे (सर्व-) चित्तचैत्तानामात्मसंवेदनम् (न्या. वि. १ ।९) । चित्तं वस्तुमात्रग्राहकं ज्ञानं, चित्ते भवाश्चैत्ता वस्तुनो विशेषरुपग्राहकाः सुखदुःखोपेक्षालक्षणास्तेषां चित्तचैत्तानामात्मा संवेद्यते येन स्वरूपेण तत्स्वरूपमात्मरूपसाक्षात्कारित्वात् स्वसंवेदनं प्रत्यक्षं 'प्रत्यक्षं कल्पना-पोढमभ्रान्तञ्चोच्यत' (न्या. वि. १ ।१ :-१२ चौ सं) इति । अत्र केचिदाहुः 'न हि चित्तचैत्तानां स्वसंवेदनत्वं घटते स्वात्मनि कृया-(क्रिया-) विरोधात् । न हि सुशिक्षितोऽपि नटवतः(वटुः) स्वं स्कन्धमारोढुं शक्नोति (शृ.प्र.१ म ४१ पृ.) । न हि तीक्ष्णाऽप्यसिधाराऽऽत्मानं छिनत्ति, नहि प्रज्वलितोऽपि वडिस्कन्ध आत्मानं दहति । तथा चित्तचैत्तमपि कथमात्मानं प्रत्येतु । वेद्यवेदकभावो हि कर्मकर्तृभावः । कर्मकर्तृत्वञ्च लोके भेदेनैव प्रसिद्धं वृक्षसूत्रधारयोरिव । अत्रोच्यते—न कर्मकर्तृभावेन वेद्यवेदकत्वं ज्ञाने वर्ण्यते, किं तर्हि । व्यवस्थाप्यव्यवस्थापकभावेन । यथा प्रदीप आत्मानं प्रकाशयति तथा ज्ञानमपि जडपदार्थविलक्षणं स्वहेतोरेव प्रकाशस्वभाव उप-(स्वाभावादुप-) जायमानं स्वसंवेदनं व्यवस्थाप्यते । तथाचोक्तम्—विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते । इयमेवात्मसंवित्तिरस्पर्शा जड-रूपता ॥ (लङ्कावतार. सू.) अलङ्कारावतारे [णा] पुक्तम् (लङ्कावतारेऽप्युक्तम्)—कल्पितः कर्मकर्त्रादिः परमार्थो न विद्यते । आत्मानमात्मने चात्मा निहन्तीति निरुच्यते ॥ (ल.अ.) न च चित्तचैत्तानां ज्ञानान्तरेण प्रकाश्यत्वं युज्यते । तथाहि न तावत् समानकालतां विना ज्ञानान्तरेण चित्तं चैत्तं वा प्रकाश्यत इति घटते, उपकार्योपकारकत्वाभावात् सव्येतरगोविषाणयोरिव । नापि भिन्नकालभावि, लाक्षणिकत्वात्, प्रकाशयितव्यस्यैवाभावात् । अपि च यदि ज्ञानं स्वसंवेदनं न स्यात् तदा ज्ञातोऽन्य इति दुर्घटः स्यात्, नागृहीतविशेषणन्यायात् । तथा स्वार्थो (तथाह्यर्थो) विशेष्यो ज्ञात इति विशेषणम् । ज्ञातो ज्ञानेन विशेषितः । ज्ञानञ्च स्वबोधस्वरूपेण न प्रतीतं तत् (चेत्) कथं ज्ञानेन विशेषितोऽर्थः प्रतीयताम् ? तथाहि दण्डाग्रहणे ग्रहणं दण्डिनो न युक्तिसङ्गतम् । ननु सर्वज्ञानानां स्वसंवेदनप्रत्य-क्षत्वे घटोऽयमित्यादिसविकल्पज्ञानस्य निर्विकल्पकत्वं पीतशङ्खादिज्ञानस्याभ्रान्तत्वं [च] स्यात् । उच्यते— विकल्पज्ञानमपि स्वात्मनि निर्विकल्पकमेव । घटोऽयमित्यनेन बाह्यसत्त्वं विकल्पयति न त्वात्मानम् । तदुक्तम्—शब्दार्थग्राहि यद्यत्र ज्ञानं तत्तत्र कल्पना । स्वरूपञ्च न शब्दार्थस्तत्राध्यक्षमतोऽखिलम् । भ्रान्तमप्या-त्मनाऽभ्रान्तं स्वरूपेणैव भासनात् । असद्विषयत्वाच्च भ्रान्तिरुच्यते । यदुक्तम्—'स्वरूपे सर्वमभ्रान्तं पररूपे विपर्ययः ।' तस्मादन्यथाप्रकाशकत्वात् सिद्धम् । यद्यमी प्रकाशन्ते तदा स्वहेतोरेव प्रकाशस्वभावा उपपन्नाः सन्तः प्रकाशन्त इति स्वीकर्तव्यमेव । अतः स्वसंवेदनसिद्धत्वाद्विकल्पज्ञानमपि रसस्य ग्राहकमिति स्थितम् । एवञ्च लोकप्रसिद्धकार्यत्वादिरूपविरहत्वेनाप्रमाणो रसः स्यादितीयमपि दुर्दुरूढशङ्कापिशाचिका निरवकाशैव । प्राभाकरा अपि हि ( ?) पूर्वानुभवसापेक्षत्वाद्विषये स्मरणस्याप्रामाण्यं स्वाज्ञे ( ?) तु ज्ञानात्मन्यनुभवत्वमेत्राहुः । उभयात्मकत्वं

स्वसंवेदनसारविमल-(विमर्श) मयत्वेन । श्रीमदिति—काव्यार्थतत्त्वज्ञानसम्पदत्र श्रीः । आचार्यपदेन सम्प्रदायप्रवर्तकत्वं, पादा इति गुरुगौरवात्तत्रैव प्रकर्षः । अभिनवं गुप्तं गूढमर्थं संपादयन्तीत्यभिनवगुप्तपादाः । एवं विभावादय एव रसा इति प्रवादस्तावद्दूरपरास्त एव ।

## दीपिका

सम्प्रति स्वमतमाह—लोक इति । स्थायी यावज्जीवमविच्छेद्यवासनो रत्यादिः । तदनुमाने अभ्यासेन पाटवं प्रकर्ष इति व्याप्त्याद्यनुसन्धानविलम्बाभावसूचनम् । भावकवासनाऽऽत्मभूतस्य रत्यादेर्विशेषेण भावनमास्वादाङ्कुरणयोग्यतानयनं विभावनम् । आदिपदेनानुसमनन्तरमेव भावनं तथाभूतस्यैव रत्यादेः रसादिरूपतयाऽनुभावनं, सम्यक्चारणम् अतथाभूतस्यैव तथाभावपरिणतिनयनं सञ्चारणञ्च गृह्यते । व्यापारेत्यतः पूर्वमलौकिकेति शेषः । सम्बन्धेन बोध्यो विशेषः प्रतिनियतपुरुषगतत्वलक्षणः सम्बन्धविशेषः, तस्य स्वीकारपरिहारनियमो नियमेन भावाभावाङ्गीकारस्तस्यानध्यवसायादनिश्चयादिति साधारण्यप्रतीतिस्वरूपकथनम् । पञ्चम्युपपत्तिस्तु अनध्यवसायपदस्यानुव्यवसायज्ञानवाचकताविरहेण निश्चयाभावमात्रपरत्वाङ्गीकृत्या । यद्वा प्रतीतैरित्यत इति व्यवहार्यैरिति शेषः । अभिव्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतः । स्थायीति—तस्यामेव हि दशायां प्रत्यभिज्ञायमानं लौकिकदशाप्रसिद्धं स्थैर्यमाश्रित्य स्थायिपदप्रयोगो मुख्यः । अन्यथा रतिहासादिमात्रस्य स्थायित्वे हासक्रोधादीनां शृङ्गारादौ सञ्चारिता न स्यात् । तदुक्तं 'रसावस्थः पर भावः स्थायितां प्रतिपद्यत' इति ।

नियतेति—वासनायाः समानाधिकरणास्वादाविभावकत्वात्, अन्यथा नाट्यमण्डपस्थितजरन्मीमांसकश्रोत्रियवैयाकरणवाहि'ही कादिष्वपि प्रसङ्गात् । साधारणोपायेति विशेषणप्रधानं द्रष्टव्यम् । उपायानां विभावादीनां साधारण्यं सम्बन्धनियमभावाभावानवसायस्तद्बलात् । तत्कालेति-अत्रापि विशेषणं प्रधानं, परिमितंस्य नियताधिष्ठानस्य प्रमातृभावस्य तस्मिन्काले यद्विगलनं स्वसंवेदनं तद्वशेनोन्मिषितोऽभिमानविषयीकृतो वेद्यान्तरसम्पर्कशून्यो विषयान्तरव्यासङ्गेनाविच्छिन्नप्रवाहः अपरिमितः साधारणो भावः स्वप्रवृत्तिनिमित्तं प्रमा यस्य तेन ।

अत्र यद्यप्यपारिमित्यमात्रस्यानभिमन्यमानत्वं, प्रमाया वास्तवत्वात्, तथापि तद्विशिष्टायामभिमन्यमानतोक्तिः । न चैतदपि वास्तवमपरिमित्वाभिमानविषयत्वं प्रमाया इति पारिमित्यासंवेदनमवगृह्य पारिमित्याभिमान उच्यते, अभिमानस्य तत्कालमसंवेदनादसंविदितरत्याद्युपपत्तौ प्रमाणाभावात् । किञ्चाभिमानस्य रसप्रत्ययनिवेशे तदप्रमात्त्वपातः । तदभावे च तत्कालीनताविरहः । न च पूर्वः पश्चाद्वा भवन्नभिमानस्तदुपयोगी । एतच्च प्राचीन प्रणयानुरोधिना ग्रन्थकृता कण्ठतोनोंक्तं, प्रमात्रेति वेद्यान्तरेति च वदता सूचितमेव । संवाद ऐकरूप्यम्, तद्भाजा तत्कर्त्रा पूर्वोक्तपरिमितप्रमातृताऽनध्यवसायरूपेण । साधारण्येनेति-फलसम्बन्धप्रकटनाय पुनरुक्तिः । अन्यथा हि रत्यादीनां स्वगततया प्रतीतौ व्रीडाऽऽङ्कादिः, परगतया च दूरस्यता स्यात्, न चमत्कारोद्रेकः । एवं साधारण्यप्रतीतावपि साधारणनटादिप्रतीतिवत्? । स्वाकार इवेति—अहं वेद्मीतिवद् ज्ञातृज्ञानभेदोल्लेखाभावाद् गोचरीकृतः । यथा दीपोऽन्नतरं स्वगोचरं घटादि प्रकाशयति तथा स्वयमेव प्रकाशितः यद्वा चिदानन्दमयोऽयं पुरुष इति वेदान्तनयेऽभिन्नोऽपि स्वयमेव प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः समुल्लिखितः । चर्व्यमाणताऽऽस्वादनं तदेवैकः प्राणो जीवः स्वरूपमस्येति चर्व्यमागतैकप्राणस्तद्बहिरसन्नित्यर्थः । विभावादिजीवितावधिस्तदाकारसंवलितप्रतीतिमयत्वात्तदुपाधानतिरोधानेनोपाधेयतिरोधेयस्वरूपः । पानकेति तत्र यथा

कर्पूरमरिचादिरसाः सम्मिलिता युगपदास्वाद्यन्ते तथाऽत्रापि विभावादिभावानामेकता प्रतीतिः। **एतच्चाकाराणां बाध्यसजातीयताप्रत्यभिज्ञानात्।**

वस्तुतस्त्वखण्ड एवायं, 'वेदान्तप्रसिद्धब्रह्मतत्त्ववत्।' चर्व्यमाण आस्वाद्यमानः। **काल्पनिकमास्वाद्यास्वादयोर्भेदकथनम्।** कर्मकर्तरि वा प्रत्ययः। पुर इवेत्यादाविवशब्दानां क्रियाभिरन्वयः। **सर्वाङ्गीणमिति सर्वाङ्गव्यापनं यथा स्यादित्यर्थः।** एतच्च सर्वमलौकिकत्ववचनायानूदितम्। **चमत्कारेति—अतिशयोक्तिरूपकाव्यपरिशीलनाद्भवति हि विस्मयापरपर्यायश्चमत्कारः सर्वरसप्राणभूतः। तस्य रागाद्यङ्गप्रवणत्वेन यथायथं शृङ्गारादिव्यवहारः, तदभावे त्वद्भुतव्यपदेशः—इत्यस्मत्पितामहश्रीमन्नारायणपादैस्त्रिकलिङ्गेन्द्रश्रीनृसिंहदेवचक्रवर्त्तिगोष्ठीगरिष्ठानां पुरतो धर्मदत्तमहाकविः स्थगितः। कारीति—काल्पनिकभेदात्। शृङ्गारादिक इति-वासनोद्धाररूपः स एव सर्वो रसः। वासनायास्तु रत्याद्यनुरोधावान्तरवैषम्यात् शृङ्गारादिपदविशेषलाभः।**

एवं सिद्धान्तसारं संगृह्य तत्रावान्तरविप्रतिपत्तीर्निराकर्त्तमाह—स चेति। **कार्यत्वे हि विभावादिज्ञानस्य एव वाच्यः।** तथा च सति विभावादिज्ञानस्य विनाशेऽभावेऽपि तस्य रसस्य सम्भवाप्रसङ्गः। **नह्यवश्यं कारणावभासकाल एव कार्यावभासकालः, न चैवं रसे, तस्य विभावादिसमूहालम्बनशरीरत्वात्। अपि च कार्यं स्वकारणैः सह नैकस्यां संवित्यवभासमानं दृष्टम्। एतच्च सुखं विभावादिसंवलितं भासते। तस्मान्न कार्यम्।**

न ज्ञाप्यो ज्ञानविषयः। **सिद्धस्य प्रतीतेर्बहिरिति शेषः। किन्तर्हि तत्सद्भावे प्रमाणमित्याह-अपि त्विति। चर्वणैव भगवती स्वसंविदितस्वरूपा स्वाभिन्ने तस्मिन्प्रमाणमिति भावः। व्यञ्जित इति चर्वणीय इति च व्यक्त इति चर्व्यमाण इतिवद् व्याख्यम्। विभावादिभिर्व्यञ्जित इत्यन्ये। विभावादेस्तत्र हेतुत्वमाविष्कृतं, न चासौ कारकज्ञापकरूपः, तस्याकार्याज्ञाप्यरूपत्वात्।**

नच तदुभयभावो हेतुत्वं निर्वर्त्तितुमीष्टे 'निर्विशेषं न सामान्यमिति न्यायात्, इत्याह-कारकेति। **यद्यपि ज्ञापकस्य न वास्तवं हेतुत्वं तस्य ज्ञानं प्रतिहेतुत्वात्, ज्ञापनस्य विषयस्वरूपातिरिक्तत्वात्, तथापि वैशेषिकादिभिर्ज्ञापकस्य धूमादेर्वह्निं प्रति हेतुत्वं व्यवह्रियत इति तदुपन्यासः। अन्यदिति-विवक्षितं, यदालिङ्ग्य हेतुत्वसामान्यं व्यवतिष्ठेतेति भावः। न दूषणमिति—न खल्वन्यत्रादर्शनमात्रेण वस्तुस्वरूमपह्नूयते। माभूत्कारकत्वज्ञापकत्वे कारकज्ञापकाभ्यामन्यत्रादृष्टे इति तत्स्वरूपापहारः, तस्मादस्ति कश्चिद्विशेषो भावनत्वरसनत्वाख्यो, यं क्रोडे निधाय विभावादौ हेतुत्वसामान्यं निविशत इति सन्तोष्टव्यम्। सम्प्रति रसे कार्यत्वज्ञाप्यत्वव्यवहारं कथञ्चिन्निर्वाहयति—चर्वणेति।**

**यद्यपि रसानन्यतया चर्वणाऽपि न कार्या तथापि कादाचित्कतया तत्कार्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपेत्यादिभागेऽपि तथा व्यवहार इति भावः। लौकिकं प्रत्यक्षादिरूपं यत्प्रमाणं तद्विलक्षणभाव एवं संवित्तिः, तस्य पारिमित्यादिसम्बन्धपुरस्कारात्स्वात्ममात्रविश्रान्त्यभावाच्च। परिमितं परिमितविषयमाध्वासिकदशायां योगिनो ध्यानप्रतिपन्नमुक्त्यात्मगततया जन्यं यदसन्निहितवस्तुज्ञानं तत्ताटस्थ्येनौदासीन्येन। अवबोधो विषयप्रकाशः। शालिपदमत्र स्वरूपपरम्। न चैवं रसः, तथा सत्यरस्यताऽऽपत्तेरित्युक्तत्वात्। विमुक्तदशायां शुकादीनां ज्ञानं परिमितेतरसर्वविषयम्। न चैवं रसः। जीवनमुक्तदशायान्तु शुकादीनामेव ज्ञानं चिदानन्दमयनिष्प्रपञ्चस्वात्ममात्रविश्रान्तम्, अतएव वेद्यान्तरसंस्पर्शरहितं रागादिसम्भेदशून्यम्। न चैवं प्रकृते रत्यादि, तत्कारणा-**

दिसम्भेदस्यानुभूयमानत्वात्। विलक्षणेत्युक्तरीत्या सर्वत्रान्वीयते। अत एव लोकोत्तरं निखिलज्ञानभिन्नाकारं स्वसंवेदनं स्वप्रकाशस्तद्गोचरस्तच्छरीरान्तर्गततया तत्प्रकाशेनैव प्रकाशितो रतिसुखादिभागिति प्रत्येयोऽप्यपरोक्षव्यवहारत्वेनोच्यताम्। तद्ग्राहकं चेति—स चासौ ग्राहकश्चेति तद्ग्राहकम्। निर्विकल्पकमिन्द्रियापेतं नामजात्यादिवैशिष्ट्यशून्यस्वलक्षणावभासम्। विभावादीनामसन्निहितानां परामर्शनमनुसन्धानम्। तत्प्रधानत्वात्तद्धेतुत्वात्। सविकल्पकं हीन्द्रियसम्बन्धमात्रग्राहिविकल्पविशिष्टं ज्ञानम्। चर्व्यमाणस्य चर्वणामात्रप्राणस्य स्वसंवेदनामात्र—सिद्धत्वादपरिस्फुटविभावादिप्रकाशतयेति शेषः। आकाराणां स्फुटाभासे रसनं न स्यात्, असाधारण्यावभासात्।

यत्तु 'स्वात्मन्यविकल्प इति न्याया' दिति श्रीधरेणोक्तं तन्न युक्तं, प्रकाशमात्रे निर्विकल्पकत्वस्यांशान्तरे च विकल्पस्य प्रसङ्गात्। यदि त्वेकरूपतया परिहारस्तदा विकल्पत्वे सत्येव स्वात्मवन्निर्विकल्पकत्वं स्यात्। एतच्चोभयमङ्गीकुर्वतामुपनीय वाससि बद्धो ग्रन्थिः। अविकल्पकतावादश्च पूर्वग्रन्थावयवविरुद्धः। उभयस्य निर्विकल्पकत्वस्य सविकल्पकत्वस्य चाभावो यत्र तदुभयाभावं, तथाभूतं स्वरूपं यस्येति विग्रहः। उभयात्मकत्वं निर्विकल्पात्मकत्वाभावेन सविकल्पात्मकत्वं सविकल्पकत्वाभावेन च निर्विकल्पात्मकत्वमुपचरितमित्यर्थः। पूर्ववत्कार्यत्वज्ञाप्यत्वविरहवत्। लोकोत्तरतां लौकिकयोगिकसकलसंविद्विलक्षणताम्। न तु विरोधमिति—तथाभूततयैव प्रमाणेनानुभावात्, अनुभावस्य चाबाध्यत्वात्। तदुक्तं खण्डनकृता—

**अन्यथाऽनुपपत्तिश्चे दस्ति वस्तुप्रसाधिका।**
**पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका॥**
**वाच्याऽन्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः।**
**नह्येकत्र समावेशश्छायाऽऽतपवदेतयोः॥**

श्रीमदिति काव्यार्थतत्त्वज्ञानसम्पत्तिः। आचार्य्यपदेन सम्प्रदायप्रवर्त्तकता। पादा इति गुरुगौरवमुच्यते।

### दर्पणः

संप्रति 'लोक' इत्यादिना 'इत्याचार्याभिनवगुप्तपादाः' इत्यन्तेन ग्रन्थेन तन्मतमुपन्यस्यते ग्रन्थकारेण। तेषु गौरवप्रकटनेन तन्मतस्यैवात्मनोऽभिमतत्वमुपदर्शितम्। ग्रन्थार्थस्तु—

लोके न तु नाट्यकाव्ययोः स्थायिनोऽनादिवासनान्तर्लीनरत्यादेरुत्पत्तेरनुमानेऽभ्यासस्य पाटवमुत्कर्षः। तद्वतां न तु व्याप्त्याद्यनुसंधानविलम्बितानां सामाजिकानां स्थायी रत्यादिकः। तैः प्रमदादिभिरेव कारणकार्यसहकारिपदवाच्यतापरित्यागेन पूर्वोक्तालौकिकविभावनादिव्यापारवत्वात्। न तु पर्यायान्तरवाच्यत्वमात्रेण लौकिकविभावादिशब्दव्यवहार्यैः साधारण्येन प्रतीतैरभिव्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतः। पानकरसन्यायेन यथा पानके खण्डमरिचकर्पूरादीनां रसो मिलितानामुपपद्यास्वाद्यते तथा संवलितविभावादिसुखचमत्कारात्मकः। स चर्व्यमाणः आस्वाद्यमानः शृङ्गारादिको रस इति संबन्धः। साधारण्यं प्रतीतिस्वरूपं दर्शयति ममैवैत इत्यादि। प्रतिनयतपुरुषगतत्वेन योऽसौ यस्य विशेषस्तस्य स एवैत इत्यादिरूपेण स्वीकारस्य न ममैवैत इत्यादिरूपेण

परिहारस्य च यो नियमस्तस्यानध्यवसायापादनिश्चयात्। अत्र स्थायी रत्यादिक इति च स्थायिनां व्यभिचारित्वप्रकटनार्थम्। तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यत' इति। यद्यपि किमाकारः ? स चर्व्यमाण इत्याह नियतेति।

**'सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।**
**निर्वासनास्तु रङ्गतः काष्ठकुड्यात्मसंन्निभा':।**

इत्युक्तदिशा रसान्तरेषु बहुष्वपि विद्यमानेषु नियतः सवासनो यः प्रमाता तन्मात्रगतोऽपि न तु श्रोत्रियजरन्मीमांसकादिनिष्ठसाधारणतेति उपायानां विभावादीनां पूर्वोक्तप्रकारसाधारण्यप्रतीति प्रभावात्। तत्कालेति। वेद्यान्तरेणानवच्छिन्नप्रवाहः।

इहास्मत्पितामहानुजकविपण्डितमुख्य श्रीचण्डिदासपादैरुक्तं परमार्थतस्त्वखण्डएवायं रसो वेदान्त प्रसिद्धब्रह्मतत्त्ववद्वेदितव्य इति।

यद्यपि चर्वणा आस्वादनम्। तच्च स्वादः काव्यार्थसंभेदात्मानन्दसमुद्भव इत्युक्तनयेन रसास्वादनातिरिक्तः तथापि चर्व्यमाणो रस इति काल्पनिकं भेदमुररीकृत्य कर्मकर्तरि वा प्रयोगः। पर इवेत्याद्युत्प्रेक्षणैश्चालौकिकानन्दरूपत्वं सूचितम् अलौकिकेति। चमत्कारश्चित्तविस्तारैर्विषयापरपर्यायैः तद्रूपः। तस्य च पश्चाद्वचनेन सकलरसप्राणत्वम्। यदाहुः—

'त्रिकलिङ्गभूमण्डलाखण्डलमहाराजाधिराज श्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयतः सकलसहृदयगोष्ठीगरिष्ठास्मत्स्वपितामह श्रीमन्नारायणदासपादाश्चमत्कार एव सकलरसप्राणभूतः तस्य रागाद्यंशशबलत्वे यथायथं शृङ्गारादिव्यपदेशः। तदभावेत्वद्भतव्यपदेश इति कविभिः काल्पनिकं भेदमुररीकृत्योक्तम्।

तद्ग्राहकमिति। सरस एव ग्राहकं ज्ञानम्। तच्च निर्विकल्पक इन्द्रियस्यातन्मात्राज्जात्यादिवैशिष्ट्यशून्यं स्वलक्षणावभासः। तद्वद्धि इन्द्रियसंबद्धमात्रग्राहिरसस्तु असन्निहितानामपि परिभावादीनां यत् परामर्शनमनुसन्धानं तत्प्रधानं इति भावः। नापीति। विकल्पो विशेषज्ञानम्। चर्व्यमाणस्य चर्वणामात्रप्राणस्य स्वसंवेदनं स्वानुभवस्तत्सिद्धात्। अपरिस्फुटविभावादिप्रकाशतयेति शेषः। न खलु रसप्रतीतिकाले विभावाद्याकाराणां स्फुटोऽवभासः। उभयात्मकं निर्विकल्पकत्वाभावात्। निर्विकल्पकमुपचर्य्यतामिति भावः। पूर्ववदकार्य्यत्वात् ज्ञाप्यत्ववत् काव्यार्थतत्त्वज्ञानसंपत्तिः। श्रीः तद्योगात् श्रीमत्वम्। संप्रदायप्रवर्तकत्वादाचार्यत्वम्। पादा इत्यनेन गुरुगौरवसूचनम्। एतेन विभावादिसंभिन्नानुरक्ता आशु रत्याद्यंशकतडित्प्रकाशानन्दचमत्कारस्वरूपत्वं रसस्योक्तं भवति।

## साहित्यचूडामणिः

अथाभिनवगुप्तसरणिमनुसरति—'लोक'-इति। लौकिकी व्युत्पत्तिरनुमानादिसहकारिणी रसचर्वणाया रसिकस्याधिष्ठानभूता केवलं सत्तयोपयोगिनी न तु तादात्विकसमावेशानुप्रविष्टेति प्रकटयति—स्थायीति। स्थायिनोऽनुमानाभ्यासे यत् पाटवं व्याप्तिस्मरणादौ निर्विलम्बता तद्वतां सहृदयानाम्। एतेनानुमानपक्षस्य केवलं तावत्युपयोग इत्युक्तं भवति। तैरेव प्रमदादिभिः कारणादिभिरेव कारणत्वादिपरिहारेण लौकिकस्वभावव्युदासेन

विभावनमनुभावनं विविधमभितश्चरणं चेति ये व्यापाराः तद्वत्त्वाद् अलौकिकेन तान्त्रिकैकपरिगृहीतेन विभावादि-शब्देन व्यपदेश्यैः सामाजिकहृदयेषु वासनानुस्यूतत्वादकृत्रिमैः सत्यतया स्फुरद्भिरिति भावः । संबन्धिविशेषा ये शत्रुमित्रादयः तेषामुपादाने परित्यागे च यो नियमः तस्यानध्यवसायाद् अनिश्चयात् । सम्बन्धिनश्च संक्षेपात् त्रिधा—स्वीयाः शत्रुरुदासीनश्चेति, ये ममेत्यादिना निर्दिश्यन्ते । तत्र भावरूपमसाधारणत्रयं स्वीकारणौचित्यात्, निषेधाकारं तु परिहारानुगण्येन । इत्थं साधारण्येन प्रतीतैः । अभिव्यक्त इति सर्वत्र व्यङ्ग्यव्यञ्जकभाव एव संयोगो नान्यः कश्चित् । सामाजिकानां वासनात्मकतया संस्काराकारतया । स्थित इति स्थायिशब्दनिर्वचनम् । स्थातुं शीलमस्येति स्थायी ।

नियतोऽनुकार्यरूपः प्रमाता तद्गतत्वेन स्थितोऽपि साधारण्यं साधारणमिति धर्मप्रधानो निर्देशः साधा-रणीकरणमिति यावत् । तत्र य उपाय आङ्गिकादिचतुर्विधाभिनयानुप्राणनं नाट्यं तद्रूपाद् बलात् सामर्थ्यात् । रसः सामाजिकैकवर्तीत्यत आह 'तत्काले'ति । तस्मिन् काले नाट्यानुभूतिवेलायां विगलिता त्रुटिता या परिमितप्रमातृता परिच्छिन्नप्रमातृभावः तद्वशेनोन्मिषित उद्धुरीभूतः अथ च तदेकव्यतिरिक्तोवेद्यविकल्पवार्तानभिज्ञोऽपरिमित-भावो यस्य तादृशेन प्रमात्रा गोचरीकृत इति सम्बन्धः । द्विविधं हि प्रमातृत्वं परिमितमपरिमितं च । तत्र प्रथममह-मिदमिति स्वपरविकल्पोपकल्पितम्, अपरं तु स्वात्मस्फुरत्तामात्रक्रोडीकृतविश्वव्यवहारम् । तत्र परिमितं कदाचित् तिरोधीयते अन्यत् तु सकृत् प्रभातं परिस्फुरति । यदाहुराचार्याः—

**अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।**
**कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥**
**कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।**
**तस्मिन् लुप्त विलुप्तोऽस्मीत्यबधः प्रतिपद्यते ॥**
**न तु योऽन्तर्मुखीभावः सर्वज्ञत्वगुणास्पदम् ।**
**तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात् ॥** [स्पन्दकारिका १४-१६] इति ।

रसस्फुरत्तावस्थायां यथा चैत्रस्य चित्तवृत्तिः तथा मैत्रास्यापीति सर्वेषामेकहृदयत्वमित्याह—सकलेति । ननु चर्वणीयोऽर्थः सामाजिकाद् भिन्नो वा न वा । अलौकिकप्रमातृताभङ्गप्रसङ्गात् । न द्वितीयः चर्वयितृव्यतिरेकेण चर्वणीयावश्यं भावाद् इत्याशङ्क्याह—स्वाकार इवेति । यथात्मनः स्वरूपं स्वस्मादभिन्नमपि स्वेन विषयीक्रि-यते । यथोक्तम् 'आत्मानमात्मन्यवलोकयन्तम्,' इति । यच्चाहुराचार्याः—

**आत्मानमत एवायं ज्ञेयीकुर्यात् पृथक् स्थितम् ।**
**ज्ञेयं न तु तदौन्मुखात् खण्ड्येतास्य स्वतन्त्रता ॥** [ईश्वर प्र. १-५-१५] इति ।

एवं रसचमत्कारोऽपि । किञ्च येयं चर्व्यमाणता पुनः पुनरुपभुज्यमानता तदेकप्राणः तद्व्यतिरेके निस्सा-रत्वात् । विभावादीति । यावन्तं कालं विभावादिस्फुरत्ता तावन्तमेव रसचर्वणा नान्यम् । गुडमरिचकर्पूरादीनां माधुर्यसौरभादिसमष्टिस्वभावो यद्वदनपह्नुतमिथश्चमत्कारो लौकिको रसश्चर्वणीयः तद्वदयमपि । पुर इवेति नटे रामप्रतीतिदार्ढ्यं, हृदयमिवेति रत्यादेः स्थायित्वादनुकार्यरामहृदयात् सामाजिकहृदयानामभेदं, सर्वाङ्गीणमिति तस्य

नृत्तगीतादिबहुविधनाट्यधर्मगर्भीकृतत्वम्, अन्यत् सर्वमिति विगलितवेद्यान्तरत्वं, ब्रह्मानन्देति लोकोत्तरचमत्कारकारितां च प्रत्याययति। यदाहुः—

> **पाठ्यादथ ध्रुवागानात् ततः संपूरिते रसे।**
> **तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम्॥**
> **ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः।**
> **व्यज्यते ह्लादनिःष्यन्दो येन तृप्यन्ति योगिनः॥** [व्यक्ति वि. १] इति।

अथाभिव्यक्तिमेव स्थापयितुमुत्पत्तिज्ञप्ती निराकरोति स चेति। कार्यतापक्षे विभावादयः कारणानीति स्यात् न तु व्यञ्जका इति। ततश्च विभावादिषु कारणेषु नश्यत्स्वपि तस्य रसस्य सम्भवः प्रसज्येत, असमवायिकारणविनाशे कार्यविनाशानुपगमाद् व्यञ्जकविनाशे व्यङ्ग्यविनाशोपगमाच्च। नापि ज्ञाप्यः। कुतः? सिद्धस्य तस्याभावात्, चर्वणयां तत्तादृक्चर्व्यमाणतार्व्यतिरेकेण कालान्तरेण तस्याभावात् पारिशेष्यादभिव्यक्तिरेवेत्याह—अपित्विति। ननूत्पत्तिर्ज्ञप्तिर्वा लौकिको धर्मः तत्कथमुभयकोटिवधुर्यमित्याशङ्कते—कारकेति। परिहरति—न क्वचिदिति। रसविषये यद्यदलौकिकत्वं साधयति तत्तदशेषं भूषणं विपरीतं तु दूषणम्।

ननु रस उत्पद्यते रसः प्रतीयते इति व्यवहारः कथमिति चेदुपचारादित्याह—चर्वणेति। एवमुपचारबलात् प्रत्येयोऽप्यभिधीयतां ज्ञाप्योऽप्युच्यताम्। उपचारे मूलमाह—लौकिकेति। परिमितापरिमितयोगिद्वयविज्ञानविलक्षणस्य प्रागुक्तयुक्त्या लोकोत्तरस्य स्वसंवेदनस्य विषय इति लौकिकानां प्रत्यक्षादीनां प्रमाणानां यत् ताटस्थ्यं नातिपरित्यागो नातिस्वीकारश्च तदवबोधेन यः शालते स मितयोगी लौकिकप्रमाणावधीरणायामसामर्थ्यात् तस्य यद् ज्ञानं तस्माद् वेद्यानां लौकिकप्रत्यक्षादिप्रमाणप्रतिपाद्यानां संसर्गेणापि रहितः अत एव स्वात्ममात्रपर्यवसितः तादृशस्य परिमितेतरस्यापरिमितस्य योगिनो यत् संवेदनं तस्माच्च विलक्षणस्य लोकोत्तरस्य स्वसंवेदनस्य गोचरः इति। अयं भावः—विभावादिषु चर्वणोत्पत्तिरद्भुतपुष्पावलोकनन्यायेन तत्कालसारैव, न पूर्वापरकालानुबन्धिनी। तेन लौकिकाद् योगिविषयाच्च स्वसंवेदनादन्य एवायं रसास्वाद इति।

अथ तस्य यद् ग्राहकं प्रमाणं तत् किं निर्विकल्पकम् उत सविकल्पकम् इति विकल्प्य तदुभयविलक्षणमिति सिद्धान्तयति तद्ग्राहकमिति। विभावादिपरामर्शो हि शब्दनस्वभावा विकल्पकक्ष्यां नातिक्रामति। तत्राधान्यान्न निर्विकल्पकम्। न च तत् सविकल्पकमित्याह—चर्व्यमाणस्येति। यदि रसः सविकल्पेन गृह्येत तस्य लोकोत्तराह्लादरूपत्वं न स्यात् लोकयात्रापथप्रविष्टत्वाद् विकल्पस्य। स्वसंवेदनसिद्धता च तस्य विघटेत, विकल्पाधीनस्यार्थस्य परसंवेदनेनापि साध्यत्वात्।

ननु निर्विकल्पकसविकल्पकोभयग्राह्यत्वाभावस्वरूपस्य यदेतत् स्वसंवेदनसिद्धत्वविभावादिपरामर्शप्राधान्योभयस्वभावत्वं तद् विरुद्धधर्माध्यासवीथीमध्वमध्यास्त इति चेन्नेत्याह—उभयेति। तस्य निर्विकल्पकग्राह्यत्वाभावे स्वसंवेदनसिद्धत्वनियमो न स्यात्, सविकल्पकग्राह्यत्वप्रतिक्षेपे विभावादिपरामर्शप्राधान्यं प्रणश्येदिति येयं शुष्कशास्त्रशय्यया विरोधोद्भवविभीषिका सा तस्य पूर्ववत् कारकज्ञापकविकल्पोक्तयुक्त्या लोकोत्तरतामवगमयति न पुनर्विरोधम्। यदुक्तं—'ननु यदि न ज्ञप्तिः, न वा निष्पत्तिः तत् किमेतत्। नन्वयमसा-

वलौकिको रसः । ननु विभावादिरत्र किं ज्ञापकः उत कारकः । न ज्ञापकः अपितु चर्वणोपयोगी । ननु क्वैतद् दृष्टम् । अन्यत्र यत एव न दृष्टं तत एवालौकिकत्वमित्युक्तमिति ।

## सम्प्रदायप्रकाशिनी

इत्थं मतत्रयमुत्तरोत्तरमुपपन्नकल्पत्वेनोपन्यस्य सर्वप्रकारोपपन्नं श्रीमदाचार्याभिनवगुप्तपादमतं सिद्धान्तयितुमुपन्यस्यति—लोके प्रमदादिभिरित्यादि । लोके हि संस्कारात्मना स्थितः स्थायी रत्यादिको भावः प्रमदोद्यानादिनालम्बनोद्दीपनकारणेन भ्रूकटाक्षविक्षेपादिना कार्येण औत्सुक्यहर्षादिना सहकारिणा चानुमीयते । यथा च स्वस्य तथा शत्रोरपि तटस्थस्यापि । तानि च कारणादीनि ममैवैतानि शत्रोरेवैतानीत्यादिसम्बन्धिविशेषस्वीकारनियमोल्लेखेन, न ममैवैतानि न शत्रोरेवैतानीत्यादिसम्बन्धिविशेषपरिहारनियमोल्लेखेन च प्रतीयन्ते । इयत्यंशे लोकत एव सिद्धे सति काव्ये नाट्ये च तद्वैलक्षण्येनैव प्रतीयन्त इत्याह—अभ्यासपाटववतामित्यादि । अभ्यासपाटववतां परिशीलनपौनः पुन्याशालिनां व्युत्पन्नतमपदपदार्थानामित्यर्थः । अनेन रसप्रतीतावधिकारिणो दर्शिताः । तैरेवालौकिकविभावादिशब्दव्यवहार्यैरिति । तान्येव खलु कारणादीनि नाट्ये अभिनीतानि काव्ये वा सन्दृब्धानि चतुर्विधाभिनयमहिम्ना गुणालङ्कारमहिम्ना चालौकिकं विभावादिव्यपदेशमर्हन्ति । कारणानि विभावाः कार्याण्यनुभावाः सहकारीणि व्यभिचारिण इति । न चायं विभावादिव्यपदेशो यदृच्छाशब्दवत् प्रवृत्तिनिमितविधुरतया क्लृप्तः, अपि तु विशिष्टेनैव प्रवृतिनिमित्तनेत्याह—विभावनादिव्यापारवत्त्वादिति । विभावनानुभावनव्यभिचरणव्यापाराः प्रागेव निरुच्य निरूपिताः । यदा चैवं विभावादिशब्दव्यवहार्यता तदैतानि सम्बन्धिविशेषस्वीकारतत्परिहारनियमविगलनात् साधारण्येन प्रतीयन्त इत्याह—ममैवैत इत्यादि । तथा हि—

**पुष्पोद्भेदमवाप्य केलिशयनाद् दूरस्थया चुम्बने**
**कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते ।**
**आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनाननं**
**मन्दान्दोलितकुण्डलस्तबकया तन्व्या विधूतं शिरः ॥**

इत्यादिकाव्येषु य एते नायिकापुष्पोद्भेदादय आलम्बनोद्दीपनविभावाः, ये चाधरस्फुरणभ्रूसंज्ञादयोऽनुभावाः, ये च तदभिव्यञ्जिता हर्षौत्सुक्यादयो व्यभिचारिणः, न हि ते ममैवैत इत्यादिकं सम्बन्धिविशेषस्वीकारनियमं न ममैवैत इत्यादिकं वा तत्परिहारनियमं पुरस्कृत्य प्रतीयन्ते, अपि तु चित्रतुरगनीत्या साधारण्येन । एवं प्रतीतैर्विभावादिभिरभिव्यक्तः व्यञ्जितः रत्यादिकः स्थायी सामाजिकानां हि वासनात्मकः सूक्ष्मो रतिभावः प्रदर्शितोदाहरणादिकाव्ये प्रतीतैरभिव्यज्यत एव, न तु क्रियते ज्ञाप्यते वा, कारकत्वाद्यनुपपत्तैर्दर्शयिष्यमाणत्वात् । ननु विभावादयः साधारण्येन साक्षात्क्रियन्तां, काव्यनाट्यसमर्पितानां तेषां सर्वान् प्रत्येकरूपत्वात् । स्थायी पुनः प्रतिनियतप्रमातृगत इति कथं रसः साधारण्येन प्रतीयत इत्यत आह—नियतप्रमातृगतेत्यादि । साधारण्योपायेति । विभावनानुभावनादयो व्यापाराः साधारण्योपायास्तेषां बलात् । प्रमातृः प्रतिनियतः प्रमाताहमिति पारिमित्यविगलनाद् यत्किञ्चिदपरिमितत्वमाविर्भवतीत्याह—तत्कालविगलितेत्यादि । तावन्तं कालं विगलितायाः परिमितप्रमातृतायाः वशादुन्मिषितः अपरिमितोऽहं प्रमातेत्येवंरूपः वेद्यान्तरसम्पर्केणापि शून्यः अपरिमितभावो यस्य तेन प्रमात्रा साधारण्येन गोचरीकृतः । विभावनादिव्यापारवत्त्वाद् विभावादीनां साधारण्यं, तद्बलात् प्रमातुरपि साधारण्यं, तेन

रसोऽपि साधारण्येन गोचरीक्रियत इति यावत्। न चैतद्रसस्य साधारण्यमुपपत्तिमात्रेण समर्थ्यते, अपि तु सर्वस्यापि स्वसंवेदनसाक्षिकमित्याह—सकलसहृदयसंवादभाजेति। ननु यद्येवं सर्वप्रकारेण साधारण्यं, तर्हि स्वपरसंवित्तिवैधुर्यात् कथं गोचरीक्रियत इत्यत आह—स्वाकार इवाभिन्नोऽपीति। अभिन्नतया प्रतीयमानोऽपि स्वाकारवद् गोचरीक्रियते। स्वाकारो ह्यहमित्यभिन्नतयैव गोचरीक्रियते। नन्विमामलौकिकीं क्लृप्तिं केनानपह्नवनीयेन स्वानुभवेन निश्चिनुम इत्यत आह—चर्व्यमाणतैकप्राण इति। यदिदं स्थायिनश्चमत्कारैकघनमास्वाद्यमानत्वं तदेकजीवितो हि रसः। विश्वविलक्षणा चर्वणैव खलु सकलसहृदयसंवादसाक्षिणी रसस्य निष्कृष्टं स्वरूपम्। सा चेयं चर्वणा यावद् विभावादिप्रतीतिस्तावदेवेत्याह—विभावादिजीवितावधिरिति। यावदेव विभावादिप्रतीतिस्तावदेव चर्वणा। अतस्तदन्वयव्यतिरेकानुविधानान्न कारणान्तरक्लृप्तिर्युक्तेति भावः। ननु तर्हि विभावादयस्तदभिव्यङ्ग्यो रसश्चेति प्रतीतौ विभागः प्रसक्त इत्यत आह—पानकरसन्यायेनेति। न ह्यास्वाद्यमाने पानकरसे मधुराम्लादयो विभागेन प्रतीयन्ते। तद्विदिहापि विभावाद्याकाररूषितैव रसचर्वणा। तस्याश्च सकलसहृदयसंवादसाक्षिणी प्रतीतिर्न केनचिदपह्नोतुं शक्येत्याह—पुर इव परिस्फुरन्नित्यादि। पुष्पोद्भेदमित्यादिकाव्यस्य श्रवणसमनन्तरमेव हि सहृदयानां तीव्रसंवेगिन्यां बुद्धावुक्तलक्षणो रसः पुरः परिस्फुरतीव, यथायथा चर्वणाभिनिवेशो धारावाहिकया प्रकृष्यते तथातथा हृदयं प्रविशतीव, सर्वाङ्गमभिव्याप्यालिङ्गतीव, स्वव्यतिरेकेण वस्त्वन्तरं तिरोदधातीव, अखण्डाद्वयचमत्कारैकघनं ब्रह्मास्वादमनुभावयतीव। इत्थमलौकिकं चमत्कारं योऽयमाविष्करोति स शृङ्गारादिको रसः। ननु यदनन्तरं यद् दृश्यत इति नयेन विभावाद्यन्वयव्यतिरेकानुविधायिनो रसस्य कथं न कार्यत्वमित्यत आह—स च न कार्य इति। तत्र हेतुः—विभावादीति। न हि कारणनाशेन कार्यनाशः। रसस्य तु विभावादिजीवितावधेर्न कार्यत्वमुपपद्यत इति भावः। तस्य विभावादिना ज्ञप्तिरिति कथं न ज्ञाप्यत इत्यत आह—नापि ज्ञाप्य इति। तत्र हेतुः—सिद्धस्येति। कारणान्तरेण सिद्धं हि वह्न्यादि धूमादिना ज्ञाप्यते। न हि रसस्यान्यतः सिद्धिः, अपि तु विभावादेरेवेति भावः। कया गमनिकया तर्ह्ययं प्रतीयत इत्यत आह—अपि तु विभावादिभिरिति। ननु प्रदीपघटन्यायेन यदि व्यज्येत, तदापि व्यङ्ग्यव्यञ्जकभावस्य लौकिकत्वात् कश्चमत्कार इत्यत आह—चर्वणीय इति। व्यङ्ग्यव्यञ्जकभावोऽप्यलौकिक एवेहाङ्गीक्रियते, चमत्कारचर्वणारूपस्यालौकिकत्वातिशयविशेषस्य दुर्निह्नवत्वात्। विभावादिसंवलितत्वेनैव च प्रतीतिरिति प्रदीपघटन्यायो दृष्टान्तीक्रियते च। ननु व्यञ्जको व्यञ्जक इति व्यवह्रियतेतमां, कुत्रायं व्यञ्जकः सिद्ध इत्याक्षेप्तुकामानुपहसन्नाह—कारकज्ञापकाभ्यामित्यादि। अत्रायमाशयः—किं तावदायुष्मान् प्रतिपद्यते। कारकज्ञापकेतरस्यान्यत्रादर्शनाद् रसप्रतीतेः किं स्वरूपतो हानिरुत लोकविलक्षणत्वमेव दूषणमिति। न तावत् स्वरूपतो हानिः, सकलसहृदयसंवादसाक्षितया पुष्पोद्भेदमित्यादिकाव्यश्रवणसमनन्तरमेव पुरःस्फुरन्त्या रसप्रतीतेर्दूरदुर्निह्नवत्वात्। लौकिकविलक्षणत्वं तु न दूषणं प्रत्युतानर्घं भूषणम्। कथमितरथा बीभत्सादयोऽपि मनोदुःखविशेषाः कविशब्ददर्पणान्तः प्रतिफलनमात्रमहिम्ना शरदिन्दुसुधानिःष्यन्दसाराभिषेकसुभगतामासादयेयुः। ननु किमनेन प्रयासेन। यदि मुख्यतया नोपपद्यते कार्यत्वं रसस्य, तर्ह्युपचारेणास्तु। अस्ति चोपचरणहेतुश्चर्वणानिष्पत्तिरिति ये प्रलपन्ति बालिशास्तान् प्रौढिवादेनैव प्रधर्षयितुमाह—चर्वणानिष्पत्त्येत्यादि। त्वयैवोपचरितत्वादकार्यत्वाभ्युपगमे किमन्यत् साधनीयमस्माभिरिति भावः। ननु विभावादिप्रतीत्यन्वयव्यतिरेकानुविधायिप्रतीतिको हि रसः। अतो ज्ञाप्य एव। ज्ञाप्यान्तरविलक्षणश्चेद् ज्ञाप्यविशेषः कश्चिदलौकिकोऽस्तु। किमन्यप्रकल्पनगौरवेणेति ये भ्रान्तास्तानप्यगणयन्नाह—लौकिकप्रत्यक्षे-

त्यादि । विलक्षणशब्दः प्रत्येकमभिसम्बध्यते । प्रत्यक्षादिप्रमाणविलक्षणं मितयोगिज्ञानविलक्षणं परमितेतरयोगिसंवेदनविलक्षणं च यत् स्वसंवेदनं तद्गोचरत्वात् कथमसौ ज्ञाप्य इत्युल्लुण्टोक्तितात्पर्यम् । तत्र प्रत्यक्षादिप्रमाणवैलक्षण्ये हेतूपन्यासः—लौकिकेति । प्रत्यक्षादिकं हि प्रमाणं लौकिकं प्रत्यक्षादित्वादेव । रसस्तु गुणालङ्काराभिनयसध्रीचीनव्यञ्जकवैशिष्ट्यादलौकिक एवेति वितत्योपपादितम् । मितयोगिज्ञानवैलक्षण्यं दर्शयितुमाह—ताटस्थ्यावबोधेत्यादि । ये हि सांख्यादयो भिन्नसर्वज्ञास्ते भेदेन जगज्जानाना जगदद्वयावबोधांशे योगपारिमित्यान्मितयोगिनः । तेषां हि ज्ञानं ताटस्थ्यावबोधशालि । ते हि साक्षिणः सन्तो विश्वं ताटस्थ्येन पश्यन्ति । सहृदयसंवेदनं तु तद्विलक्षणम्, अभिनिवेशातिशयेन विभावादितादूप्यापन्नत्वात् । अथापरिमितयोगिसंवेदनवैलक्षण्यं दर्शयति—वेद्यसंस्पर्शेत्यादि । यैर्हि वेद्यजातमिदं कारणलयक्रमेण स्वात्मप्रकाशसात्कारं नीतं, तेषां संवेदनमखण्डपरिपूर्णाद्वयस्वस्वरूपमात्रोल्लेखीत्यपरिमितयोगिनः । ततो हि रससंवेदनं विलक्षणमेव, विभावदिपरामर्शैकसारत्वात् । एवं ज्ञप्तिलक्षणं प्रमेयमुखादवखण्ड्य प्रमाणमुखेनापि खण्डयति—तद्ग्राहकं चेत्यादिना । विभावादिपरामर्शेति विकल्पप्रदर्शनम् । स्वसंवेदनसिद्धत्वादिति अविकल्पताविष्करणं 'स्वात्मन्यविकल्पाविकल्पा' इति न्यायात् । अत्रापि लोकवैलक्षण्यं गुण एवेत्याह—उभयाभावरूपस्येत्यादि । उभयाभावरूपत्वमुभयात्मकत्वं चेति महती खल्वियमलौकिकता । श्रीमदाचार्येति । विवृण्वत इत्यनुषङ्गः । श्रीमदिति सारासारविवेचनसम्पदाविष्कृता । आचार्येति प्रामाण्ये परा काष्ठा प्रतिष्ठापिता । पादा इति स्वस्य तत्सम्प्रदायानुवर्तित्वम् ।

## काव्यप्रकाशखण्डनम्

ननु कथं रत्यादेः अनुरागादिरूपस्य अन्तःकरणवृत्तिविशेषस्य अभिव्यक्तावेव परमानन्दरूपरसोद्बोध इति चेत्, उच्यते । अयमभिप्रायः—वेदान्तिनये सर्वस्मिन् ज्ञाने आत्ममाननैयत्यात् काव्यदर्शनश्रवणमहिम्ना उक्तया अभिव्यक्त्या चिदात्मनः अज्ञानांशे आवरणभङ्गः क्रियते । आवरणं त्वज्ञानमेव । तथा च न रत्याद्यवच्छिन्नं चैतन्यं आनन्दांशे भग्नावरणम् । आनन्दरूपतया प्रकाशमानं रस इति निर्गलितार्थः । ज्ञानान्तरे त्वज्ञानभङ्गाभावान्न रसोद्बोधः । तस्यां चाभिव्यक्तौ लिङ्गोपहितलैङ्गिकभानवद् विभावादिसंभेदोऽप्यावश्यकः । अत एवोक्तम्—पानकरसन्यायेनेति । ननु रसस्तावत् सामाजिकनिष्ठरत्युद्बोधः । स कथं रामादिसम्बन्धित्वेन अवगतेभ्यः सीतादिभ्यो भवति? असंभवाद् इति चेत्, न । विभावादीनां साधारण्यमात्रेण ज्ञानमपेक्षितम्, साधारण्यं च यत्किञ्चित् सम्बन्धिविशेषसम्बन्धित्वेन अज्ञायमानत्वे सति ज्ञायमानत्वम् । न च सीतात्वादिज्ञाने कथमेतादृशं साधारण्यम्, तदा विभावादिव्यापारमहिम्ना सीतात्वादि[प. १०,२] परिहारेण स्त्रीत्वादिनैव ज्ञानात् । अत एवोक्तम्—ता एवापहृतविशेषा रसहेतव इति । एवं रत्यादेः साधारण्यमपि रसोद्बोधे हेतुः । अन्यथा सीताद्यालम्बनकरत्यादेः स्वनिष्ठत्वज्ञाने व्रीडातङ्कादिः स्यात् । परनिष्ठत्वज्ञाने सभ्यानां रससाक्षात्कारो न स्यात् । वस्तुतः सर्वस्मिन् ज्ञाने आत्ममाननैयत्यम् । काव्यश्रव्यमानन्तरं विभावादिभिः तस्य आनन्दांशे आवरणभङ्गः । तथा सीतात्वादि (दी ?) नां सीतात्वादिपरिहारेण साधारण्यम्, रत्यादिभावस्य च साधारण्यम्—इत्यादिस्वीकर्त्तव्यम् । इति प्राचां निष्कर्षः । तदपेक्षया कामिनीकुचकलशस्पर्शचन्दनानुलेपनादिनेव नाट्यदर्शनकाव्यश्रवणाभ्यां सुखविशेषो जायते । स एव तु रस इति नवीनाः ।

## मधुमती

अभिनवगुप्तपादमतं अवतारयति—लोके इति । काव्यनाटकव्यतिरिक्तस्थले इत्यर्थः । **अभ्यासः पौनःपुन्यम्**; तेन पाटवं प्रज्ञाऽतिशयः, तद्वताम् । अस्य सामाजिकानां इत्यनन्तरोक्तेन सम्बन्धः । एवं च—**लोके नायकादि** वृत्तान्तदर्शनेन येषां स्थाय्यनुमानाभ्यासपाटवं त एव रसिकाः । त एव चात्र अधिकारिणः । तदन्ये तु-काव्यनाट्यशालाऽन्तः पातिनोऽपि स्तम्भकुम्भायमाना एवेति नातिप्रसङ्गः । अनुमानं च—अयं एतद्विषयकरत्याश्रयः, तत्सामग्रीसत्त्वात्, तत्कार्यवत्त्वाच्च, न यदेवं न तदेवम्, यथा विरक्तः—इति । एवं च यः यत्र स्थाय्यनुमानाभ्यासपाटववान् सः तत्र अधिकारी इति द्रष्टव्यम् ।

विभावानादीति । तत्र विभावनं—सामाजिकरत्यादेः आस्वादाङ्कुर योग्यताऽऽपादनम् । अनुभावनं—रत्यादेः समनन्तरमेव भावनम् । व्यभिचारणं—तथाभूतस्यैव तस्य सम्यगभिव्यक्तिः । तदपि साधारणप्रकारक तत्तद्शानात् स्थायिनिः तत्तदंशव्यक्तिः । अत एव अर्थात् रसाभिव्यक्तिः । व्यक्तिश्च स्थायिनः ततद्वैशिष्ट्यविषयत्वमेव । न ह्यविभवितोऽनुभाव्यते । न चाननुभावितः व्यभिचर्यते । एवं च यथा—बीजस्य धरणीसम्बन्धात् शिथिलावयवत्वे अङ्कुरादयः क्रमशो भवन्ति, तथा स्थायिनोऽपि उक्ताः अवस्थाः इति ध्येयम् । उक्तं च—

**'विभावाः अनुभावाश्च सात्त्विकाः व्यभिचारिणः ।**
**प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥' इति ॥**

एवं च—यथा वर्णव्यङ्ग्यस्फोटस्य उत्तरोत्तरं व्यक्तिप्रकर्षः, तथा विभावादिव्यङ्ग्यरसस्यापीति बोद्धव्यम् ।

ननु सीतादीनां तदनालम्बनत्वात् कथं सामाजिकानां सीतात्वेन जानतां रसाभिव्यक्तिः ? अत आह—ममैवेते इति । अत्र सम्बन्ध विशेषः, तत्स्वीकारः, तन्नियमः, एवं—सम्बन्धे विशेषः, तत्परिहरः तन्नियमश्च इत्यर्थः । तथा च—यस्यां प्रतीतौ इदं एकमपि वा न भासते, सैव रसाभिव्यक्त्यनुकूला इति तात्पर्यम् । तत्रापि—सम्बन्धविशेषस्य अनौचित्यात् परिहारः । इतरेषां तु रसस्य विगलित वेद्यान्तरत्वात् परिहारः ।

तादृशी च प्रतीतिः नाट्ये प्रत्यक्षात् । काव्ये च—'शून्यं वासगृहं' इत्यादौ शब्दादेव तथोपस्थितिः । यत्र तु सम्बन्धिविशेषवाचकसीतादिपदोपादानं, तत्र समासोक्त्यलङ्करेण नायकसामान्यवृत्तान्तविषयात् शब्दादेव व्यञ्जनव्यापारात् काव्यनाट्योपदर्शितविभावादिज्ञानेन सामाजिकानां स्वस्त्रीविषयकरत्यादेरेव चर्वणमिति सीतादिनामतदालम्बनत्वं न दोषाय । अनालम्बनत्वेऽपि आलम्बनसाधारणरूपेण शानात् । एवं च काव्यं शृण्वतः, नाट्यं पश्यतो वा यावत् 'अयं रामः, इयं सीता' इति बुद्धिः तावत् न चमत्कारः, अनौचित्यात् । यदा तु नायकत्वेन नायिकात्वेन च ज्ञानं, तदैव चमत्कारः इति सर्वानुभवसिद्धं उक्तं भवति ।

वासनाऽऽत्मयेति । वासना संस्कारः, तस्य आत्मा स्वभावः, सौक्ष्मयमिति यावत् । तेन सूक्ष्मतया स्थितः इत्यर्थः ।

न च सूक्ष्मत्वे चमत्कारानुपपत्तिः । विभवादिज्ञानसंवलितस्य तस्य आविर्भावाभ्युपगमात् । तद्ज्ञाननाशे च तिरोभावः, प्रकृतेरिव सांख्यानाम्, ब्रह्मण इव च वेदान्तिनाम् । प्रकृतिविकारयोः अभेदाच्च 'स्थायी भावो रसः

स्मृतः' इत्याद्युपपद्यते। आविर्भावतिरोभावदशयोः रसत्वस्थायित्वाभ्यां व्यपदेशात्। न च आविर्भावाभ्युपगमे नित्यताविरोधः। परिणामिनित्यताऽभ्युपगमेन सत्कार्यवादाभ्युपगमात्। यत्तु—'संस्काररूपतया स्थित इत्यर्थः' इति, तन्न। संस्कारस्य जडत्वात्। ज्ञानान्तरग्राह्यत्वे स्वप्रकाशत्वाभिधानविरोधात् इति।

ननु—अस्तु विभावादीनां साधारण्यम्, स्थायिनस्तु स्वस्त्रीमात्रविषयकत्वे कुतः साधारण्यम्? अत आह—नियतेति। नियतप्रमातृगतत्वं—सामाजिकनिष्ठत्वम्।

तत्कालेति। तत्काले विभावादिसाधारण्योपस्थितिकाले विगलितायाः परिमितप्रमातृतायाः सामाजिकनिष्ठतायाः वशात् उन्मीलितः वेद्यान्तरसम्पर्कशून्यः अपरिमितभावः सामान्यविषयत्वं यस्य सः तथा, तादृशेन प्रमात्रा स्थायिरूपज्ञानेन गोचरीकृतः इत्यन्वयः। प्रकाराकाङ्क्षायामाह—साधारण्येनेति। सकलहृदयसंवादभाजा इति च साधारण्येनेत्यस्य विशेषणम्। तथा च—उक्तप्रकरणे स्थायिनः साधारण्यम्, तद्बलाच्च प्रमातुरपि स्थायिनः साधारण्यम्, तेन रसोऽपि साधारण्येन विषयीक्रियते इति प्रघट्टकतात्पर्यम्। न च अन्यसाधारण्यात् कथं अन्यसाधारण्यमिति वाच्यम्। व्याप्यसाधारण्यात् व्यापकसाधारण्यवत् अस्यापि अनुभवसिद्धत्वात्। तदिदमुक्तम्—सकलहृदयेति। स्वाकार इवेति। स्वाकारः स्वविषयः। अतिरिक्ताकारानभ्युपगमात्। एवं च विभावादिवत् स्वयमपि स्थायिनो विषयः इत्यर्थः।

विभावादिति। विभावादेः जीवितं स्थायिविषयत्वं, तदवधिः। तेन—यावदेव विभावादयः स्थायिनी भासन्ते तावदेव रसचर्वणम्। यदा तु विषयौत्कट्यादिता तत्प्रतिबन्धः, तदा तत्तिरोभावः। एवं च विभावादिज्ञाननाशनाश्यः इति भावः। ननु विभावादीनां चमत्कारविषयत्वे स्थायिभ्यः ते पृथक् अनुभूयेरन् इत्यत्र आह—पानकरसेते। तथा च विविच्य न गृह्यते इति भावः। अत एव अलक्ष्यक्रमत्वं चास्येति ध्येयम्।

वक्ष्यमाणालौकिकचमत्कारकारित्वसिद्ध्यर्थमाह—पुर इवेति। सर्वाङ्गीणमिति तु आलिङ्गनक्रियाविशेषणम्। अन्यत् सर्वमित्यादिना विगलितवेद्यान्तरत्वं उक्तम्। ब्रह्मानन्देत्यनेन अलौकिकचमत्कारस्य आनन्द मयत्वं अभिव्यनक्ति।

ननु शृङ्गारेऽस्तु रसास्वादः, करुणादौ तत् कथम्? इति चेत्—काव्यश्रवण—नाट्यदर्शनदशायां करुणादिविभावादीनामपि सुखाभिव्यञ्जकत्वमेव, स्वभावात्, दुःखजनकत्वेऽपि सम्भोगदशायां मुष्टिताडनादेरिव, सर्वस्थायिनां ज्ञानात्मकतया ज्ञानस्य सुखात्मकत्वेन सुखाभिव्यक्तौ अनुपपत्तेरभावात्। लौकिकसुखाभिव्यक्तिवत् अलौकिकसुखस्याप्यभिव्यक्तेः। अश्रुप्रभृतिप्रवृतिरपि नानुपपन्ना, लोके स्वरूपसतः यस्माद् यदुत्पत्तिः, काव्यादौ तस्मादेव ज्ञायमानात् तदाविर्भावः इति वस्तुस्वाभाव्यात्। न चैवं एकशेषापत्तिः। समाधेः वक्ष्यमाणत्वात्।

न कार्यः न कादाचिकः। सत एव सदुत्पत्तेरभ्युपगमात्। अत्र हेतुमाह—विभावादीति। निमित्तकारणनाशस्य कार्यानाशकत्वादिति भावः। न च निमित्तकारणापेक्षाबुद्धिनाशात् द्वित्वनाशवत् एतदपि स्यादिति वाच्यम्। तत्रापि द्वित्वस्य नित्यतया अपेक्षा बुद्धेः तद्व्यञ्जकत्वमात्राभ्युपगमात्। न च अयमनुयोगः तवापि तुल्यः इति वाच्यम्। अस्माकं हि कारकमन्यत्, ज्ञापकमन्यत्। तथा कार्यमन्यत्, ज्ञाप्यमन्यत्। एवं दृष्टानुरोधं कार्यमन्यत् कारणमन्यदिति नियमं परिहृत्य, विभावादिज्ञानस्य कारकत्वं ज्ञापकत्वं च, रसस्य कार्यत्वं ज्ञाप्यत्वं च, कार्यत्वं स्वस्य कारणत्वं च, इत्यभ्युगमः; रसस्यालौकिकत्वात्, दृष्टानुरोधेन एतदनुपपत्तेः। तथा निमित्तकारणनाशात्

तत्कार्यनाशः इत्यपि दृष्टानुरोधं परिहृत्य कारकशापकोभयात्मकविभावादिज्ञाननाशात् रसनाशः इत्यभ्युपगमः। कार्यत्वमात्राभ्युपगमे तु दृष्टानुरोधपरवशतया तद्विरुद्धस्य अभ्युपगन्तुं अशक्यत्वात्। नापि ज्ञाप्यः नाप्यागन्तुकज्ञानविषयः। अत्र हेतुः—सिद्धस्येति। अजन्यस्येत्यर्थः। जन्यत्वे हि आगन्तुकज्ञानविषयता, नित्यस्यास्य चिद्रूपत्वात् तदभावादिति भावः। नन्वेवं सर्वदा चर्वणाऽऽपत्तिः—अत आह अपि त्विति।

न क्वचिदिति। अत्र 'अदृष्टं' इति पाठोऽप्यस्ति। तदा—कारकज्ञापकाभ्यां इत्यादिप्रश्ने गूढाभिसन्धेः उत्तरं न क्वचित् इति, अभिसन्धिमुद्घाटयति अदृष्टं इति, इति क्रमेण योज्यम्।

एवं स्थिते कारकत्वज्ञापकत्वप्रसिद्धिं अन्यथा समर्थयति—चर्वणेति। यद्यपि चर्वणाऽपि चर्वणीयाभिन्नैव। तथापि—निष्पत्तिरपि सत एव रूपान्तरापत्तिः, न तु सर्वथैव असतः इति न दोषः। एवं च कश्चित् कार्यो ज्ञाप्यश्च, कश्चित्तु उभयरूपः इति इयमेव लोकोत्तरता।

लौकिकेति। विलक्षणशब्दः प्रत्येकमन्वेति। तेन अयमर्थः—लौकिकप्रत्यक्षविलक्षणम्, ताटस्थ्याबोधशालिपरिमितयोगिज्ञानविलक्षणम्, वेद्यान्तरसंस्पर्शरहितस्वात्मात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणम् अत एव यत् लोकोत्तरस्वसंवेदनम्, तद्गोचरः इति। ताटस्थ्यं भेदः। अवबोधपदं करणव्युत्पत्त्या प्रमाणपरम्। तत्र लौकिकप्रत्यक्षस्य अनुपयुक्तार्थविषयत्वात् तद्वैलक्षण्यम्। परिमितयोगिज्ञानस्य भेदविषयत्वात् अस्य स्थायिभावादिभेदानवगाहितया तद्वैलक्षण्यम्। परिमितेतरयोगिज्ञानस्य स्वात्ममात्रविषयत्वात्, अत्र तु विभावादीनामपि भानात् तद्वैलक्ष्यमिति नित्यस्वप्रकाशकज्ञानात्मकेऽपि रसे कादाचित्कीं चर्वणामुपादाय तदुभयव्यवहारः इति तात्पर्यम्।

प्रकारान्तरेण अलौकिकत्वं उपपादयितुमाह—तद्ग्राहकमिति। न निर्विकल्पकं न निर्विकल्पकमात्रम्। विभावादिति। तद्वैशिष्ट्यविषयत्वे चमत्कारविषयतैव न स्यात् इति भावः। नापि सविकल्पकं सविकल्पकमात्रम्। अलौकिकेति। सूक्ष्मतादशायां इति शेषः। सूक्ष्मता हि विषयोपरागाभावः। अत एव—तदानीं निर्विकल्पकरूपतया प्रत्यक्षागोचरत्वं च। तथा च—एक एव स्थायी कालभेदेन निर्विकल्परूपः सविकल्परूपश्च। अत एव—कालभेदात् न विरोधोऽपि। पूर्वादिति। यथा रसः कार्यः ज्ञाप्यश्च, तथा निर्विकल्पकः सविकल्पश्च भवतीति, अत एव लोकोत्तरश्चेत्यर्थः।

सम्प्रदायविदस्तु—नापि सविकल्पकं इत्यत्र स्वभिन्नमिति शेषः। तेन न उत्तरविरोधः। उभयाभावेत्यत्रापि—निर्विकल्पकभिन्नतया सविकल्पकत्वम्, सविकल्पकभिन्नतया निर्विकल्पकत्वं चेत्युभयात्मकत्वमपि लोकोत्तरतामेव अभिव्यक्ति, न तु विरोधम् इत्यर्थः इति वदन्ति।.

अत्र पक्षचतुष्टये—प्रथमे—'अभिधया रसप्रतीतिः' इति अशुद्धम्, तस्य अपदार्थत्वात् अवाक्यार्थत्वाच्च। नाट्येऽपि नटे रसरोपः न अनुभूयमानारोपः, तदनुभावकाभावात्। अत एव न स्मर्यमाणारोपः, स्मरणस्य अनुभवपूर्वकत्वात्, काव्यस्य अनुभावकत्वनिरासात्।

द्वितीयेऽपि—यदि वस्तुसौन्दर्यबलादेव यथातथाऽप्युपस्थितौ चमत्कारः तदा शृङ्गारादिपदादपि स्यात्। रसस्य च पूर्वमनुपस्थितौ अन्वयतो व्यतिरेकतो वा व्याप्यग्रहात् नानुमितिः। न च—'रामोऽयं सीताऽऽलम्बनरत्याश्रयः' इति साध्यम्। रतिश्च उपस्थितैवेति न व्याप्तिग्रहानुपपत्तिः। लिङ्गोपहितलैङ्गिकभावाभ्युपगमेन स्थायि-

भावादिविषयतया अनुमितेः रस विषयत्वपर्यवसानम्—इति वाच्यम्। व्यासङ्गान्यथानुपपत्त्या रसास्वादनस्य धारावाहनरूपतया सिद्धसाधनेन पक्षताविच्छेदात् तदसम्भवात्। न चान्तराऽनुमित्सया पुनः पक्षता। रसस्य विगलितवेद्यान्तरतया तदास्वादे तदनुदयात्।

तृतीयेऽपि—उक्तन्यायेनैव साधारण्यप्रतीतौ भावकत्वव्यापारकल्पने मानाभावात्। सामाजिकत्वाविशेषेण ग्राम्यविरक्तयोरपि तत्प्रसङ्गात्। कार्यत्वज्ञाप्यत्वयोः अन्यतरत्वे उक्तदोषात्, उभयरूपताऽभ्युपगमे तु चतुर्थपक्षप्रवेशे एव पर्यवसनात् इति।

चतुर्थपक्षे एव औचित्यं मनसि निधायाह—श्रीमदिति। सोऽयमर्थः उत्कर्षवाचिना श्रीपदेन कटाक्षितः। अभिनवपदेन च ध्वनिटीकाकर्तृपुराणगुप्तपादलेखनविरोधः अत्र न देश्यः इति प्रतिपाद्यते।

## विस्तारिका

सिद्धान्तपक्षमाह—लोक इत्यादि। अभ्यासेन यत् पाटवं संस्कारदाढर्यं तेन हेतोः पक्षधर्मतामात्रदर्शने झटिति व्याप्तिस्मरणान्नानुमितौ विलम्बः। स्थायिनो रत्यादेः। तेनालौकिकानां नास्वादः। अविदग्धानां तेषां तथाऽनुमित्यभावात्। तैः प्रमदादिभिः। तेन नादृष्टप्रकल्पनम्। तैरभिव्यक्त इत्यन्वयः, विभावादिव्यपदेशे हेतुमाह—विभावनादीति। व्याख्यातमेव।

ननु कारणादिशब्दसत्त्वे कथं विभावादिशब्दा इत्यत आह—कारणत्वादीति। सामाजिकनिष्ठानामलौकिकवासनानां रत्यादीनां न ते कारणादयः, येन तथा स्युः।

ननु काव्यादौ रामादिसम्बन्धित्वेनावगतेभ्यः सीतादिभ्यः कथं सामाजिकरत्युद्बोधोऽसम्बन्धादित्यत आह—साधारण्येनेति। काव्यनाट्यश्रवणदर्शनदोषवशादगृहीतभेदरामादिनिष्ठत्वेनोभयसम्बन्धितवेन साधारण्यम्।

अथ तेषां रामादिनिष्ठत्वनियमेन कथं साधारण्यमित्यत आह—ममैवेत्यादि। आत्मा प्रेष्ठः। शत्रुर्द्वेष्यः। उभयेतरस्तटस्थ उदासीनः। वर्णनीयस्य त्रैविध्यात् त्रिधोपादानम्, मित्रस्य स्वपक्षनिक्षेपात्। सम्बन्धः प्रतियोग्यनुयोगित्वम्। तस्य विशेषो विशेषप्रतियोगिकत्वम् स्वीकारपरीहारौ भावाभावौ, तयोर्नियमोऽन्ययोगव्यवच्छेदः। तस्याध्यवसायो निश्चयः। तदभावाद् ग्रहकाभावादेव नियमग्रहाभाव इत्यर्थः। साधारण्ये हेतुरयम्। इयञ्च विभावादिसाधारण्यप्रतीतिरास्वादसर्वस्वम्, आस्वादे तु सम्बन्धं प्रतियोगिनं चापहाय तेषां स्वरूपेणैव विषयत्वात्। तद्वक्ष्यति—तत्कालेत्यादिना। यत्त्वसाधारण्येनाप्रतीतिरेव साधारण्येन प्रतीतिरित्युक्तम्, तदसत्; विभावाद्यप्रतीतावपि प्रसङ्गात्, विशिष्टाभावसत्त्वात्। अभिव्यक्तः 'प्रतिबन्धकापगमे स्वयं प्रकाशितः। तेनास्य ज्ञानरूपता स्वप्रकाशता च। व्यङ्ग्यव्यञ्जकभावस्तु सहप्रतीतावपि चाक्षुषप्रत्यक्षे विषयालोकयोरिव। प्रागसिद्धौ कथं प्रतीतिरित्यत आह—वासनात्मतयेत्यादि। स्थितोऽनुवर्तमानः, तेन सिद्धत्वम्। सामाजिकानां रसवासनावतां यद्भावाद् वैयाकरणादिषु तद भावः। स्थायी आत्मनि स्थिरामापन्नः। तेनाङ्गतां बाध्यतां वा प्राप्तस्य रत्यादेर्न रसत्वम्, अपि तु सञ्चारित्वमेव। अत एवोक्तम्—'रसावस्थः परं भावः स्थायितां प्रतिपद्यत' इति।

नियतेत्यादि । नियतः प्रमात्रन्तराद् व्यवच्छिन्नः । प्रमाता सामाजिकः, तद्गतत्वेन तन्निष्ठत्वेन, प्रमात्रा साधारण्येन गोचरीकृत इत्यन्वयः । साधारण्येन सम्बन्धित्सम्बन्धावपहाय स्वरूपमात्रेण गोचरीकृतः स्वप्रमाविषयीकृतः ।

हेतुमाह—साधारण्योपायेत्यादि । सर्वसामाजिकनिष्ठ उपायो विभावादिप्रयुक्तचिन्तनरूपः । तत्काले रत्याद्युद्बोधसमये परिमितस्य प्रमात्रन्तराद्यवच्छिन्नस्य । परिमितप्रमातुर्भावः परिमितप्रमातृता । कर्मधारयोत्तरत ल्प्रत्ययप्रत्यायितस्य पारिमित्यप्रमातृत्वरूपपदार्थताऽवच्छेदकद्वयसामानाधिकरण्यस्य यद् विगलनं विगलितमग्रहस्तद्वशात् । अर्धपिप्पल्यादित्वाद् विगलितस्य पूर्वनिपातः । उन्मिषितमुद्बुद्धज्ञानम्, तस्य योऽपरिमितभावः । स्वसमवायिसम्बन्धावपहाय स्वमात्रप्रकाशनम्, तेन 'घटमहं साक्षात् करोमि' इत्याकारस्वप्रकाशानन्तरत्रिपुटीप्रत्यक्षवत् ।

प्रमातृविषयत्वं निरस्यन्नाह—वेद्यान्तरेत्यादि । अन्तरः स्वस्माद् रत्यादेरन्यः सम्पर्कः । सम्बन्धो विषयताऽऽख्यः, तथासति पारिमित्यं स्यात्, तेन प्रमातृप्रमेयप्रमाणानां सर्वेषामेव साधारण्यम् । विगलितेत्यादि-साधारण्येत्यादि-अपरिमितेत्यादिभिरभिहितम् । साधारण्यप्रतीतिफलमाह—सकलसहृदयेत्यादि । संवाद ऐकरूप्यम् । आत्मविशेषरत्यादिविशेषसाक्षात्कारविशेषसम्बन्धविशेषरूपासाधारण्यग्रहे परस्परवैधर्म्यावगतौ विषयनानात्वेनैकरूप्यविरहाद् विसंवादः स्यात्, संवादेनैव प्रामाण्यग्रहात् । अनेकस्याभ्रान्तत्वात् । आस्वादस्य प्रमात्वनियमात् । अत एव सर्वत्र 'प्रमातृ' पदप्रयोगः ।

ननु 'ज्ञानज्ञेययोरभेदे कथं विषेयविषयिताभाव इत्यत आह—स्वाकारेत्यादि । साकारवादे ज्ञानस्य तदाकारस्य च विषयस्याभेदेऽपि यथा विषयविषयीभावः, तद्विदिहेत्यर्थः । स्वस्य ज्ञानस्याकारो विषयः । अभिन्नः, ज्ञानरूपत्वात् ।

अत्रेदमालोचनीयम्—वाक्यार्थीभूय भासमानाद् विभावादिवैशिष्ट्याद् भावनायां प्रवृत्त्या विषयान्तरविमुखस्य पुंसो ज्ञानसुखवासनात्मको रत्यादिः पुनः समूहालम्बनोपनीतरत्यादिकं विषयीकृत्य समूहालम्बी पानकरस इव रसतामवलम्बते । तस्य च विभावाद्यंशविषयकत्वं चर्वणम् । विभावादीनां तत्तद्विषयत्वं चर्व्यमाणता । रत्यंशस्य रसत्वं तदंशसाक्षात्कारश्चास्वादः । यथा खण्डरसालंचर्वणातो निःसृतस्य निर्यासस्य रसो मधुरः, तस्य रासनः साक्षात्कार आस्वादश्चर्वणे विभावाद्यंशसम्बन्धस्य तत्समूहालम्बनसाध्यत्वात् कार्यतेति सिद्धान्तं हृदि निधाय परपरो ग्रन्थः सङ्गमनीयः । तदाह—चर्व्यमाणतेति । व्याख्यातैव । सैव एकः, न तु पञ्चमः, प्राणो रसत्वनिर्वाहकत्वात् ।

नन्वेवमैकरूप्ये सामाजिकभेदेनास्वादस्य कथं क्षणिकत्वम्, स्थिरत्ववैषम्यमित्याह—विभावादिजीवितेत्यादि । विभावादिपदं तज्ज्ञानपरम् । तच्च तत्समूहालम्बनम्, स्मरणम् । जीवितं स्वरूपनिर्वाहकम्, तदुपनीतविभावादिसंबलनेनैव तस्य रसत्वात् । तदेवावधिर्यस्य तत्सत्त्वप्रयोज्यसत्त्वकत्वादुपनायकस्य धारावाहिकत्वे स्थिरत्वम् । अन्यथा चान्यथात्वमिति भावः ।

पानकेति । यथा पानकरसे खण्डमरिचजीरकामिक्ष्यादीनामेको विलक्षणः कश्चनास्वादः, तद्वदिह रत्यादिविभादिनामित्यर्थः । चर्व्यमाण इति पूर्ववत् । केचित्तु कर्मकर्तरि प्रत्यय इत्याहुः, तन्न; कृत्स्नकर्मवद्भावाभावात् ।

पुर इवेत्यादिषु क्रियास्विवान्वयः । सर्वाङ्गव्यापनं यथा स्यात् । पुर इव इत्याद्यनुभावयन्नित्यन्तं सर्वमलौकिकत्व-प्रतिपादनाय । तदाह—अलौकिकेत्यादि । अलौकिको लौकिकाद्भुतदर्शनेनानुद्बद्धश्चमत्कारो विस्मयः । कारीति पूर्वमनूद्य व्याख्येयम् । रत्यादी रस इति सम्बन्धः ।

ननु मुनिसूत्रे पञ्चम्या विभावादिनां हेतुत्वमभिहितम् । हेतुत्वञ्च कारकत्वं ज्ञापकत्वं वा, तत्तु रसस्य सम्भवति कार्यत्वे ज्ञापकत्वे वा ? तत् किं रसः कार्यः, ज्ञाप्यो वेत्याह—स चेति । विभावादिविनाशे तज्ज्ञानध्वंसे ज्ञानस्य पूर्ववर्तिन एव ज्ञानान्तरे कारणत्वात् । तत्सत्त्वे तत्सत्त्वस्य विभावादिजीवितावधिरित्यनेनैव दर्शितत्वात् । ज्ञाप्यन्तज्जल्यज्ञान विषयः । सिद्धस्य सतो विभावादिज्ञानात् प्राक् । तस्य तथाभूतस्तविभावादिसमूहालम्बनरू-पस्य । तेन रत्यादित्वेन स्थितावपि न क्षति कथं तर्हि हेतुत्वमित्यत आह—विभावादिभिरिति । तज्ज्ञानैर्व्यञ्जितः, स्वोनीतविभादिविषयतां प्रापितः । चर्वणीय इति । चर्व्यन्ते विभावादयोऽनेन स्वादाख्यसंस्कारेणेति करणेऽनीयः । तेन कारकत्वज्ञापकत्वाभावेऽपीष्टं हेतुत्वमित्यर्थः । अन्यत् कारणम् ।

केचित्तु कारकज्ञापकपदे धर्मपरे अन्यद्धेतुत्वमित्याहुः, तन्न; लक्षणां विनाऽप्युपपादितत्वात् ।

क्वचिन्न दृष्टमिति । अनुभवादर्थसिद्धावुपपादकस्यादृष्टचरत्वमकिञ्चित्करमिति भावः ।

कार्यत्वाभावे रसनिष्पत्तिरिति कथमुक्तम्, कथं वा रसाः प्रतीयन्त इति व्यवहार इत्याह—चर्वणेत्यादि । आस्वादस्य विभावादिसम्बन्धश्चर्वणा, सा च विभावादिसमूहालम्बनसाध्यैवेत्याह-निष्पत्त्येति । विभावादिसम्ब-न्धांशस्य कार्यत्वे सर्वेषां कार्यत्वोपचारात् । तदाह—उपचरितेति । उच्यतां स्वातन्त्र्येण व्यवह्रियताम् ।

ज्ञाप्यत्वोपपत्तिमाह—लौकिकेत्यादि । विलक्षणपदं प्रमाणेत्यन्तयोगिज्ञानेत्यन्तसंवेदनेत्यन्तैः सह प्रत्ये-कमन्वेति । लौकिकं सन्निकर्षान्यतमजन्यं प्रत्यक्षप्रमाणम् । चक्षुरादिजन्या प्रमा । मानसत्वेन ततो वैलक्षण्यम् । योगिज्ञानवैलक्षण्यमाह-ताटस्थ्येत्यादि ।

इह हि योगिनो द्विविधाः-आरुरुक्षवः, आरूढाश्च । समाध्यधीनकृतात्मसाक्षात्कारः सवासनमिथ्याज्ञा-नस्य सम्यगनुच्छेदादनुच्छिन्नभेदावभासाः, योगजधर्मप्रत्यासत्त्या समाधिसमये गृहीतसर्वविषयाः पूर्वे, सवासनमि-थ्याज्ञानविनाशादद्वैतवासितान्तःकरणाः, सदातनसान्द्रानन्दानुभवेन बहिरासङ्गभङ्गाज्जडोन्मत्तपिशाचवद्धसन्तः शुकदेवप्रभृतयो जीवन्मुक्ताः परे ।

तत्र प्राथमिकज्ञानतो वैलक्षण्यम्, योगिज्ञानेत्यन्तेनाह—परिमितम् । अभ्यासदशायां मननादिकारणौत्क-ट्येन समाधेः कादाचित्कतया तत्समय एव प्रादुर्भूतम् । ताटस्थ्येन परस्परसम्बन्धाग्रहेणावबोधो योगजधर्मप्रत्या-सत्त्या वर्तमानातीतानागतविषयाणां प्रकाशनम् । न तच्छालि, तत्त्वसाक्षात्कारेणैव सर्वविषयावलम्बनात् । एतेन शालिपदमत्र स्वार्थ इति वदन्तो विदन्तः परास्ताः, अवबोधपदेन विषयप्रकाशनस्य ज्ञानधर्मस्यैवाभिधानात् । रसस्य विगलितवेद्यान्तरत्वेन ततो व्यतिरेकः, तस्य पूर्वविषयकत्वात् ।

आरूढयोगिसंवेदनादे व्यतिरेकमाह—वेद्येत्यादि । वेद्यो विषयः, आत्मेतरः । हेतुमाह-स्वात्मेत्यादि । शोभन आत्मा स्वात्मा, उच्छिन्नसवासनमिथ्याज्ञानत्वेन शोभनत्वात् । समाधिदार्ढ्येन सदातनत्वात् पारिमित्यवि-रहः, कदाचित्कोद्रेकस्य हि परिमितत्वात् । सम्यग् वेदनं संवेदनम् । विलोपितज्ञानान्तरजन्यसर्ववासनमेतत्, तेन ततो व्यतिरेकः, रसस्य रत्यादिवासनारूपत्वात् ।

एवं ज्ञानं क्व दृष्टमित्याह—लोकोत्तरेति । स्वसंवेदनविषय एव विषयी, प्रत्येयो ज्ञाप्यः । अभिधीयतामभिधया बोध्यताम् ।

ननु पूर्ववदुपचारेण तदित्यसमस्तम्, 'स्वसंवेदनपरामर्शकं निर्विकल्पकं सम्बन्धाग्राहि । विभावादिपरामर्शः, तत्समूहालम्बनस्मरणम्, प्रधानत्वात्तदन्वयतिरेकानुविधायित्वात् । इन्द्रियसन्निकमात्रेण जायमानस्य निर्विकल्पकस्य ज्ञानानन्तरसापेक्षत्वानुपपत्तेर्विशिष्टज्ञानस्यैव विशेषणज्ञानाधीनत्वात् । नापीत्यादि । विकल्पोविशिष्टज्ञानम् । आत्मान्यविकल्पका विकल्पका इति गुरवः । तन्मते ज्ञानं स्वांशे निर्विकल्पकम् विषयांशे सविकल्पकं नरसिंहाकारम् । चार्व्यमाणस्य पूर्ववत् करणेऽनीयः । आस्वादस्य विभावादिविषयकत्वं चवर्णमिति समूहालम्बनता, तेन विभावादीनां विषयाणां परस्परसम्बन्धाग्रहान्नसविकल्पकता । तत्र हेतुमाहस्वसंवेदनेति । स्वयमेव यत्संवेदनं तत्सिद्धत्वात् । एकास्वादविषयस्यानेकस्य तुल्यरूपता, पानकरसे दृष्टत्वात् । धर्मिग्राहकमानेन समूहालम्बनत्वेन सिद्धस्य तस्य न सविकल्पकत्वमिति भावः । उभयपदेन निर्विकल्पकत्वसविकल्पकत्वाभिधानम्, सर्वनाम्नो विवक्षितवाचित्वात् । निर्विकल्पकत्वाभावः सविकल्पकम्, अभावस्याधिकरणात्मकत्वात् । एवं सविकल्पकत्वाभावोऽपि निर्विकल्पकम् । अत एवाभावस्याधिकरणरूपत्वस्फोरणाय उभयरूपमित्यत्र रूपपदप्रयोगः । एतेनोभयपदमुभयत्वपरम् । उभयत्वस्याभावो यत्रेति सविकल्पकनिर्विकल्पकप्राप्तिरिति सिद्धान्तमविदुषामभिहितमपास्तम्, यथाश्रुतेनैवोपपत्तेः । उभयाभावस्योभयरूपत्वं लोकं एव दृष्टम्, न च रसस्तथा, येन तथात्वं स्यादित्याह—लोकोत्तरतामेवेति । पूर्ववत् कारकत्वज्ञापकत्ववत् । अभिनवगुप्तो नाट्यलोचनकारः । आचार्यपदेन गुरुत्वस्य पादा इति बहुवचनसमभिव्याहृतपादपदेन भक्त्यतिशयावगमः ।

## सारबोधिनी

सिद्धान्तपक्षमाह लोक इत्यादि । स्थाय्यनुमान इति । तेन तादृशा एव काव्यास्वादेऽधिकारिण इत्युक्तम् । न तु श्रोत्रियादयः । तादृशामेव रत्यादिभिः सह विभावादीनां कार्यकारणभावावधारणाभ्यासात् । अन्यथा कथमगृहीतसंबन्धेभ्यस्तेभ्यः स्थाय्यभिव्यक्तिः स्यादिति । व्यक्तः अभिव्यक्तानन्दांशचिदात्मना सहेति शेषः । विभावादिव्यपदेशे हेतुमाह विभावनादीति । विभावनानुभावनासञ्चारणाख्यास्त्रयो व्यापारास्तेषां च फलमीषत् प्रकाशः स्फुटतरप्रकाशः स्फुटतमप्रकाशः इति ।

ननु कारणादिशब्दसत्त्वे कथं विभावादिशब्दा इत्यत आह कारणत्वादीति । सामाजिकनिष्ठरत्यादीनां न ते कारणादयो येन तथा स्युः । ननु काव्यादौ रामादिसंबन्धित्वेनावगतेभ्यः सीतादिभ्यः कथं सामाजिकरत्युद्बोधोऽसम्बन्धादित्यत आह साधारण्येनेति । काव्यनाट्यश्रवणमहिम्ना स्वस्य रामादिना भेदाग्रहे सति उभयसंबन्धित्वेन प्रतीतिः संबन्धिविशेषनिष्ठत्वेनाप्रतीतौ प्रतीतौ वा साधारण्येन प्रतीतिर्जायत इति नोक्तदोषः । ननु कथं तथापि सीतात्वादिज्ञाने सामाजिकनिष्ठरत्युद्बोध इति चेन्मैवम् परिहृतविशेषत्वात् । तथाहि—काव्योपात्ताः सीतादयः परिहृतजनकतनयात्वादिविशेषाः कामिनीमात्ररूपाः शब्देनाभिनयेन वा प्रतीयमाना विभावादितां प्राप्नुवन्ति । तदुक्तं भरतेन—'एता एव परिहृतविशेषा रसहेतव' इति । अयं विशेषपरित्यागौ वाक्यार्थबोधकाले ततो रसोद्बोध इति प्रागुक्तम् । साधारण्यप्रतीतिः किं स्वरूपेत्याह ममैवेत्यादि । संबन्धिविशेषस्वीकारनियमः प्रथमत्रये । परिहा-

रनियमः उत्तरत्रये । अनध्यवसायात् अज्ञानादित्यर्थः । आत्मा प्रेष्ठः । शत्रुर्द्वेष्यः । उभयेतरस्तटस्थः उदासीनः । वर्णनीयस्य त्रैविध्यात् त्रिविधोपादानम् । मित्रस्य स्वपक्षनिक्षेपात् प्रागसिद्धौ कथं तस्याभिव्यक्तिरित्यत आह वासनात्मतयेति । स्थितः स्थिरतामापन्नः । तेनाङ्गतां बाध्यतां वा प्राप्तस्य रत्यादेर्न रसत्वं, किन्तु सञ्चारित्वम् । नन्वेवं विभावादीनां साधारण्येन यावद्ग्रहणं न भवति तावद्विभावादित्वमेव न भवतीत्युक्तम्, विभावादीनां साधारण्यं रत्यादिभावस्य तु स्वसंबन्धित्वेनैव ग्रहणात् कथं साधारण्यं कथञ्च तदा पारमित्ये रसतापत्तिः । एतदेव प्रागुक्तम्—'पारमित्याल्लौकिकत्वात्' इति । अत आह नियतेत्यादि । नियतः प्रमाता सामाजिकः । साधारण्योपायबलादिति । विभावादिसाधारण्येनेत्यर्थः । परिमितेति । परिमितप्रमातृता प्रमातृविशेषनिष्ठत्वम् । तस्य विगलनमग्रहः, तद्वशेनोन्मिषित उद्बुद्धो वेद्यान्तरसम्पर्कशून्योऽपरिमितो रत्यादिर्भावो यस्य तेन प्रमात्रेत्यन्वयः । अपारिमित्य साधारण्यम् । प्रमातृनिष्ठत्वेनाग्रहे सति गृह्यमाणत्वम् । भावो वर्णनीयस्तन्मयीभवनयोग्यः । साधारण्येनेति । प्रमातृविशेषसंबन्धाग्रहरूपेणेत्यर्थः । रत्यादेः साधारण्येन ग्रहश्चेन्न तदा स्वगतत्वेन सीताद्यालम्बनकरत्यादिप्रतीतौ सभ्यानां व्रीडातङ्कादिः स्यात् । परगतत्वेऽरस्यतापात इति । अभिन्नोऽपीति । अन्तःकरणवच्छिन्नस्य चैतन्यस्य प्रमातृत्वात् रत्याद्यवच्छिन्नस्य तस्य रसत्वात् चैतन्यांशमादाय अभिन्न इत्यर्थः । स्वाकार इवेति वादिमतेनेदं ज्ञानस्य तदाकारस्य विषयस्य चाभेदेऽपि यथा विषयविषयिभावस्तद्वदिहेत्यर्थः । स्वस्य ज्ञानस्याकारो विषयः । अभिन्नो ज्ञानस्वरूपत्वात् चर्व्यमाणतेति । प्रागेव व्याख्यातम् । इदानीं रसोद्बोधस्वरूपमाह पुर इवेत्यादि । यद्वा अलौकिकचमत्कारो नापह्नोतुं शक्य इत्यपेक्षायामाह पुर इवेत्यादि । सर्वाङ्गीणमिति । सर्वाङ्गव्यापनं यथा स्यात् । ब्रह्मास्वादमिवेति । मुक्तिदशायां ब्रह्ममात्रं प्रकाशते । रसे तु विभावादिसंभेदोऽपीति । भेदे ब्रह्मानन्दमिवेति दृष्टान्तदार्ष्टान्तिकभावः । 'पुर इवे'त्यादि 'अनुभावयन्' इत्यन्तं सर्वमलौकिकत्वप्रतिपादनाय । तदाह अलौकिकेति । अलौकिको लौकिकदर्शनादनुद्बुद्धः । चमत्कारो विस्मयः । अत एवोक्तम् [धर्मदत्तेन] —

**'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।**
**तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः'** ॥ सा. द. तृ. प.

ननु मुनिसूत्रे विभावादिसंयोगादिति पञ्चम्या विभावादीनां हेतुत्वमुक्तम् । तत्त्वं च कारकत्वं ज्ञापकत्वं वा तत्तेषां संभवति । रसस्य कार्यत्वे ज्ञाप्यत्वे वा तत् किं रसः कार्यो ज्ञाप्यो वा ? इत्यत आह स चेति । तत्र हेतुमाह विभावादिति । विभावादीनां विभावादिज्ञानानां समवाय्यसमवायिकारणत्वाभावान्निमित्तकारणत्वं वाच्यम् । तथा च तन्नाशे रसप्रतीतिर्न स्यादित्यर्थः । वस्तुतो नैवम् । विभावादौ भासमानस्यैव रत्युद्बोधस्य रसत्वाभ्युपगमात् । व्यङ्ग्यत्वपक्षे यावद् व्यञ्जकं व्यङ्ग्योपलंभात् । द्वित्वादेस्तु जातित्वाङ्गीकारात् तत्र निमित्तकारणनाशनाश्यत्वं नास्तीत्यवधेयम् ।

अन्ये तु—विभावादिनाशे विभावादिज्ञानध्वंससंभवेऽपि तत्सत्त्वं स्यात्, ज्ञानस्य पूर्ववर्तित्वेनैव ज्ञानान्तरे कारणत्वात् । तत्सत्त्व एव तत्सत्त्वस्य पानकरसन्यायेनेत्यनेन दर्शितत्वात् इत्याहुः ।

वस्तुतो रत्याद्यवच्छिन्नं चैतन्यं रस इत्युक्तम् । तस्य स्वप्नेऽपि कार्यत्वं नास्तीति तत्त्वम् । नापि ज्ञाप्य इति । तत्र हेतुमाह सिद्धस्येति । अयं भावः । लोके पूर्वसिद्धा एव घटादयः प्रदीपादिभिर्व्यज्यन्ते । नैवं रसे । यतो विभावादिज्ञानजनिताभिव्यक्तिविषयीभूतस्य रत्यादेः रसत्वेन स कथं विभावादिभिर्ज्ञाप्यः स्यात् इति । यद्वा—नापि

ज्ञाप्य इत्यस्य नापि फलव्याप्य इत्यर्थः । फलव्याप्यत्वं तु भग्नावरणचित् संबन्धित्वम् । तत्तु घटादौ, न तु चित्स्वरूपे रसे, स्वस्मिन् संबन्धाभावात्, भेद एव तत्सत्त्वात् । सिद्धस्येति । प्रमाणान्तरसिद्धस्येत्यर्थः । तस्य रसस्य चैतन्यरूपस्य स्वप्रकाशत्वेन प्रमाणान्तरसिद्धत्वं नास्तीत्यर्थः । तथा च फलव्याप्यत्वं प्रमाणान्तरसिद्धे घटादौ, न तु स्वप्रकाशे रसे इति भावः । तर्हि विभावादिभिः किं क्रियत इत्याह व्यञ्जितश्चर्वणीय इति । व्यञ्जितश्चित्स्वरूपोऽभिव्यक्तानन्दांशो भवतीत्यर्थः । ननु तर्हि कथमुत्पन्नो रस इति व्यवहार इत्यत आह चर्वणेति । चर्वणाविशिष्टस्यैव रसत्वेन विशेषणस्योत्पन्नतया उत्पत्तिव्यवहार इत्यर्थः । नन्वेवमपि ज्ञाप्यत्वव्यवहारोऽनुपपन्न इत्यत आह लौकिकेत्यादि । विलक्षणपदं प्रमाणसंयोगिज्ञानेऽत्यन्तसंवेदनेत्यन्तैः प्रत्येकमन्वेति । लोकोत्तरेति । लौकिकाद्वैलक्षण्ये हेतुः । युञ्जानयोगिकज्ञानवैलक्षण्ये हेतुमाह ताटस्थ्येनेति । ताटस्थ्यं भेदः । तेन योगजधर्मप्रत्यासत्त्या अतीतानागतसर्वविषयाणामवबोधः । प्रकाशनं प्रकाशता । तच्छालिस्ववासनमिथ्याज्ञानस्य सम्यगनुच्छेदात्तेषां भेदावभासत्वात् । यद्वा-शालिपदं स्वरूपपरम् । परिमितेति । परिमितम् अभ्यासदशायां समाधेः कादाचित्कतया तत्समय एव प्रादुर्भूतम् । रसस्य तु विगलितवेद्यान्तरत्वेन युञ्जानयोगिज्ञानाद्वैलक्षण्यम् ।

युक्तयोगिज्ञानाद्वैलक्षण्यमाह स्वात्मेति । शोभन आत्मेत्यर्थः । उच्छिन्नसवासनमिथ्याज्ञानत्वेन तस्य तथात्वम् । तन्मात्रपर्यवसितम् । तन्मात्रग्राहि तत् ततो वैलक्षण्यम् रसस्य रत्यादेरपि विषयीकरणात् । परिमितेतरेति । समाधिदार्ढ्येन सदातनत्वात् पारमित्यविरहः । कादाचित्कोद्रेकस्य परिमितत्वात् । संवेदनं सम्यग्वेदनम् । विनाशितसर्ववासनम् । अतोऽपि ततो वैलक्षण्यं, रसस्य रत्यादिवासनाघटितत्वात् । एवं ज्ञानं दृष्टमित्यपेक्षायामह लोकोत्तरेति । तथा च विभावादिभिरभिव्यक्तानन्दांशस्वरूपतया स्वयंप्रकाशत्वेन ज्ञाप्यत्वव्यवहार इत्यर्थः विभावादिपरामर्शप्रधानत्वादिति । तदन्वयव्यतिरेकानुविधायित्वादित्यर्थः ।

निर्विकल्पकस्य ज्ञानान्तरस्यापेक्षत्वाभावान्न निर्विकल्पकमित्यर्थः । नापि सविकल्प इति । विकल्पो विशिष्टज्ञानं, धर्मिग्राहकमानेन समूहालम्बनत्वेन सिद्धस्य रसावबोधस्य विभावादिविषयाणां परस्परसंबन्धाग्रहान्न सविकल्पकमित्यर्थः ।

ननु तथापि चैतन्यांशे सविकल्पकमस्त्वित्यत आह स्वसंवेदनसिद्धत्वादिति । स्वप्रकाशत्वादिति भावः । तत्त्वं तु स्वव्यवहारे संविदन्तरानपेक्षत्वम् ।

ननु तर्हि कथं वृत्तिव्याप्यत्वमिति चेत् आवरणभङ्गार्थमित्यवेहि । तथा च तत्त्वमसीत्यत्रेव संबन्धाग्राहिण्यपि वृत्तिरावरणभञ्जिकेति स्मर्तव्यम् । उभयेति । उभयपदेन निर्विकल्पकत्वसविकल्पकत्वाभिधानम् । सर्वनाम्नो विवक्षितवाचित्वात् निर्विकल्पकत्वाभावः । सविकल्पकमभावस्याधिकरणरूपत्वात् तथा सविकल्पकत्वाभावो निर्विकल्पकत्वम् । अत एवाभावस्याधिकरणत्वरूपत्वस्फोरणाय उभयरूपत्वमित्यत्र रूपपदप्रयोगः ।

वस्तुतस्तु, याभ्यां हेतुभ्यामुभयाभावरूपत्वं ताभ्यामेव क्रमेण सविकल्पकत्वं निर्विकल्पकत्वञ्च । तथा च कञ्चिद्धर्मं पुरस्कृत्योभयाभावरूपत्वं लोक एव न दृष्टचरम् । न च रसस्तथा येन विरोधः स्यादित्याह लोकोत्तरतामेवेति । पूर्ववत् कारकत्वज्ञापकत्ववत् । केचित्तु नापि विकल्प इत स्वभिन्न इति शेष इत्याहुः । अभिनवगोपानसीगुप्तपादा इति । अस्य बालवलभीभुजङ्ग इति नाम । तदेव भङ्ग्यन्तरेणोक्तम् । यथा तौताितता इति प्राञ्चः ।

अत्रायं परिच्छेदः। काव्योपनिबन्धनमहिम्ना परिहृतसीतात्वादिविशेषैः साधारण्येन प्रतीतैर्विभावादिभिर्व्यञ्जितं वर्णनीयसाधारण्येन गृहीतसामाजिकरत्याद्यवच्छिन्नमात्मचैतन्यमानन्दांशे भग्नावरणमानन्दरूपतया प्रकाशमानं विभावादिसंभिन्नं रस इति। अत्र सीतादीनां विशेषपरिहारग्रहस्य साधारण्येन विना न कदाचिदपि विभावादित्वम्। तथा रत्यादिभावस्यापि साधारण्यग्रहं विना रत्युद्बोधस्य स्वप्नेऽपि न रसत्वमिति च न विस्मर्तव्यम्। अपि च तत्त्वमस्यादिवाक्यव्यवच्छेदेनार्थेन च विभावनादिव्यापारमहिम्ना रसाभिव्यक्तिः साक्षात्काररूपैव जायते तेन रससाक्षात्कार इति व्यवहारः 'यत्साक्षात् अपरोक्षात् ब्रह्म' इति श्रुतेः। चैतन्यांशे साक्षात्वाच्च।

**प्रयत्नतः प्रकटिता मया रसनिरूपणे।**
**गम्भीरा युक्तिसरसीसरसीकुरुते न कम्?॥**

## काव्यप्रदीपः

आचार्याभिनवगुप्तपादास्तु—'स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात्संबन्धाद्विभावादीनामेव वा परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिरभिव्यक्तिः। तथाहि लोके प्रमदादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत्पाटवं झटिति प्रवृत्तिस्तद्वतां सामाजिकानां सूक्ष्मतयान्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणालंकारयोगाच्चतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यपदेशयोग्यदशाविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते। नन्वेवं येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्वासनाविरहिणां किं रसाभिव्यक्तिर्नास्त्येव। कः संदेहः। अतएव शृङ्गारिणामेव शृङ्गाररस्य, निर्विण्णस्वभावानामेव शान्तस्याभिव्यक्तिरित्याद्यनुभूयते। किं चापरापि स्वाभाविकी वासना सहकारिणी। यां विना शृङ्गारिणामपि मीमांसकवैयाकरणादीनां न रसाभिव्यक्तिः। तदुक्तम्—'वासना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु' इति। तथाप्यन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिः। उच्यते—'ममैवैते' न 'शत्रोरेवैते' 'तटस्थस्यैवैते' इति संबन्धिविशेषस्वीकारनियमस्य, 'न ममैवैते' 'न शत्रोरेवैते' 'न तटस्थस्यैवैते' इति संबन्धिविशेषपरिहारनियमस्य चाज्ञानात्तेषां साधारण्येन प्रतीतेः। साधारण्येन प्रतीतिश्च न सर्वसंबन्धितया प्रतीतिः। किं तु संबन्धिविशेषीयत्वेनाप्रतीतौ प्रतीतिः। यद्वा 'अमुकस्यैवैते' इत्यवधारणं विना 'अमुकस्य' इत्येवं प्रतीतिः। अतएवोक्तम्—'ममैवैते' इति नियमानवसायात्' इति। तथा च स्वीयत्वासंसर्गाग्रहात्स्वीयत्वसंसर्गग्रहप्रयोजनं संपद्यते। एवं च वाक्यार्थबोधे संबन्धिविषयत्वानुभवोऽपि न विरुध्यते। संसर्गबोधे संबन्धी न विषयः किं तु पदार्थस्मरण एवेत्यनुभवविरोधाद्विचारासहत्वाच्चानुपादेयम्। नन्वेयं विभावादीनां साधारण्यं विना तत्त्वव्याघातादस्तु साधारण्यम्। स्थायिनस्तु तत्कथं स्यात्। तस्य तत्तदात्मनिष्ठत्वात्। यद्यप्यसाधारण्येऽपि तस्य न रसप्रतीतिविरोधस्तथापि तदंशे सहृदयसंवादो न स्यात्। स एव चालौकिकतादृशस्वीकारकारणमिति। उच्यते—उपायानां विभावादीनामुक्तरूपसाधारण्यबलाद्रसानुभवकाले स्थायिनां प्रमातृविशेषनिष्ठत्वलक्षणायाः परिमितप्रमातृताया यद्विगलनमज्ञानं तद्वशेनोन्मिषितो वेद्यान्तरसंपर्कशून्योऽपरिमितो भावो यस्य तेन प्रमात्रा सकलसहृदयसंवादकारिणा प्रमातृविशेषसंबन्धाग्रहरूपेण साधारण्येन स्थायी चर्व्यते। ननु चर्वणाविशिष्टः स्थायी रस इत्युच्यते। चर्वणया च स्थायी विषयीक्रियताम्। न तु सुखात्मक आत्मेति न रसस्य व्यक्तिरिति चेत्। न। स्वप्रकाशनये स्वाकारवदभिन्नस्याप्यात्मनो विषयीकरणात्। अभिव्यक्तिविशिष्टश्च रत्यादिः स्थायी चर्व्यमाणतैकप्राणतया चर्वणानाशे विनष्टो रस

इति प्रतीतिविषयो विभावादिजीवितावधित्वेनानित्यचर्वणः पुर इव परिस्फुरन्हृदयमिव प्रविशन्सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधब्रह्मास्वादमिवानुभावयन्नत एवालौकिकचमत्कारकारी शृङ्गारादिको रस इत्युच्यते। नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम्। तच्च न युक्तम्। विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्। घटपटाविति समूहालम्बनवदिति चेत्। न। पानकरसन्यायेन चर्वणात्। यथा पानके कर्पूराद्यंशो न पार्थक्येनानुभूयते तथात्रापि विभावाद्यंशः। ननु विभावादीनां परामर्शस्यान्वयव्यतिरेकात्तत्कार्य एव रसः किं नोच्यत इति चेत्। न। विभावादिपरामर्शस्य कारणत्वं यदि स्यात्तदा निमित्तकारणत्वमेव। नच तन्नाशस्य कार्यनाशकता दृष्टा। द्वित्वादीनां तथात्वानभ्युपगमात्। चन्दनादिस्पर्शजन्यसुखादिन्यायो भविष्यतीति चेत्। न। नहि तत्र स्पर्शाभावेन सुखं विनाश्यते। किं तु तदभावे कारणाभावात्कार्यं नोत्पद्यते। उत्पन्नस्य सुखस्य तर्हि कथं विनाश इति चेत्। विरोधिगुणान्तरात्। अत्रापि तथैवास्त्विति चेत्। न। रसस्य वेद्यान्तरसंपर्कशून्यतया ज्ञानान्तरादेस्तत्कालेऽभावात्। नन्वेष दोषो व्यक्तावपि समान इति चेत्। न समानः। व्यक्तेर्लोकोत्तरतया दोषासंस्पर्शात्। किं च चर्वणाविशिष्टः स्थायी रसः। न च काव्याद्युपस्थाप्यो विभावादिर्विशिष्टहेतुः। तर्ह्यस्तु ज्ञाप्य इति चेत्। न। विभावादिपरामर्श विना तत्सिद्धेरभावात्। न चैकैव सामग्री निष्पादिका ज्ञापिका चेति संभवति। किंच स्वभिन्नतज्जन्यज्ञानविषयो हि तज्ज्ञाप्य उच्यते। अतएव स्वप्रकाशनयेऽपि चाक्षुषादिज्ञानं न चक्षुरादिज्ञाप्यं व्यवह्रियते। न चात्र तथा। स्वाभिन्नतज्जन्यज्ञानविषयतयैव तु तज्ज्ञाप्यत्वं न निषेधामः। किंतु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यो हेतुर्न लोकसिद्ध इति चेत्, अलौकिकत्वसिद्धेर्भूषणमेतन्नदूषणम्। कथं तर्हि विभावादिभिरुत्पन्नो रसो ज्ञेयो रस इत्यादि व्यवहार इति चेत्, आद्यस्तावच्चर्वणोत्पत्त्या। तत्रोत्पत्त्युपचारात्। द्वितीयोऽपि गुणालंकाराद्यसंभिन्नरसादिविषया या लौकिकी प्रमितिः, यच्चापरिपक्वयोगिनां युञ्जनपदवाच्यानां जगद्भेदविषयकत्वशालिविज्ञानम्, यच्च परिपक्वयोगिनां युक्तपदाभिधेयानां बाह्यार्थसंस्पर्शरहितं स्वात्ममात्रविषयं संवेदनम्, तेभ्यो गुणालंकारयुक्तरसादिमात्रविषयतया विलक्षणं यत्संवेदनं तद्गोचरतयेति मन्तव्यम्। न केवलमसत्त्वादज्ञाप्यो रसः, किं त्वितोऽपि यत्स्तद्ग्राहकं न निर्विकल्पकम्। विभावादिपरामर्शस्य विर्निकल्पकजननायोग्यत्वात्। नापि स्वभिन्नसविकल्पकम्। चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनमात्रसिद्धत्वात् चर्वणादशायां ज्ञानान्तराभावात्। स्वाभिन्नसविकल्पकविषयत्वेन ज्ञाप्यत्वमिष्टमेव। ननु निर्विकल्पस्वभिन्नसविकल्पयोरन्यतरविषयत्वाभावोऽपरविषयत्वपर्यवसन्नः। तथा चैकविषयत्वाभावेऽपरविषयत्वप्रसक्तिरित्युभयविषयत्वाभावेऽनुभवविषयत्वं प्रसज्येतेति चेत्। न। एवं ह्युभयरूपत्वमापद्यमानं स्वाभिन्नसविकल्पकविषतया लोकोत्तरचमत्कारमेव गमयति, न पुनर्विरोधमिति। अथ विभावादयो मिलिताः किमिति व्यञ्जकत्वेन निर्दिष्टाः। एकैकस्य व्यञ्जकत्वे व्यभिचारात्। अथैकैकस्मादन्यद्वयाक्षेपात्तत्राप्यस्त्येव रसव्यक्तिरित्यव्यभिचार इति चेत्। न।

## आदर्शः

अनयोः श्रीशङ्कुकभट्टनायकमतयो रत्यादिसाक्षात्कारार्थमलौकिकाक्लृप्तप्रत्यासत्तिकल्पनागौरवं परिहरतोऽभिनवगुप्ताचार्य्यस्य मतं स्वाभिमतमाह—लोके इति। अत्र मते प्रथमं काव्यतो नाट्यतो वा विभावादिज्ञाने सति रामोऽहं सीताविषयरतिमानित्याकारकः स्वस्मिन् सीतादिविषयरतिमद्रामाभेदारोप आहार्य्यो व्यञ्जनया जायते, स च स्वस्मिन् रामादिरतिमत्तां साक्षात् नावगाहते, किन्तु स्वनिष्ठे वासनाख्यगुणविशेषे तदीयं वासनात्वमिदन्त्व-

ञ्चागृह्णानस्तत्र रामरतित्वारोपरूप एव स्वाश्रये सामाजिके रतित्वादिना व्यधिकरणेन प्रकारेण वासनावत्तां रामाभेदञ्च गृह्णाति चक्षुःसन्निकृष्टायां शुक्तौ तदीयं शुक्तित्वमिदन्त्वञ्चागृह्णानो भूतलं रजतवदित्यारोप इव ततस्तत्समानाकारः साक्षात्कार इति निष्कर्षः । एवञ्च व्यञ्जनया रत्याद्युपनयः संयुक्तसमवायेन च व्यधिकरणरतित्वादिप्रकारको वासनासाक्षात्कार आत्मविशेष्यक इति न प्रत्यासत्त्यन्तरकल्पनागौरवमिति सिद्धान्ताभिप्रायः ।

लोके इति, लोके संसारे प्रमदादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमाने येऽभ्यासपाटववन्तस्तेषां सामाजिकानां वासनात्मतया स्थितः अर्थात् कश्चिद् गुणविशेषः स एव 'स्थायी' 'रत्यादिः' 'अभिव्यक्तः' रामादिरत्यादिस्थायिभावाभिन्नत्वेन व्यञ्जनया प्रतिपादितः सन् 'प्रमात्रा' दर्शिताकारप्रमया साधारण्येन गोचरीकृतः सन् रस इत्यन्वयः । प्रमातृपदमत्र भावप्रधाननिर्देशात् प्रमातृत्वरूपप्रमापरं 'न पुनः प्रमातृपुरुषपरम्, स्वाकार इवाभिन्नोऽपीत्यग्रे स्वाभिन्नत्वरूपरत्यादिविशेषणानुपपत्तेः पुरुषाभिन्नत्वाभावाद् रत्यादेः स्वाकारवादे ज्ञानस्यैवाकारो' विषय इति स्वीकारेण पुरुषपरत्वे तदृष्टान्तत्वानुपपत्तेश्च । तादृशज्ञानस्य प्रमात्वञ्च धर्म्यंशे वासनांशे चेत्यवधेयम् । रत्यादिरभिव्यक्त इत्यनेन प्रथमं व्यञ्जनाधीन आरोप उक्तः, स च अनुभवसिद्धो रत्युपनयार्थं स्वीकृतः । अत एव विभावादिभिर्व्यञ्जित इत्यग्रे वक्ष्यति । अत एव च असंलक्ष्य (क्रम) व्यङ्ग्यपरिभाषाऽपि व्यङ्ग्यत्वादेवोपपन्ना । प्रमात्रा गोचरीकृत इत्यनेन तु तस्य साक्षात्कारोऽपि दर्शितः, स च आस्वादार्थं स्वीकृतः, रामोऽहं सीताविषयरतिमानित्यादिस्तदाकारः । सामाजिकानामभ्यासपाटवकथनञ्च अतादृशानामृष्यशृङ्गादीनां रसानुद्बोधदर्शनात् । वासनात्मतया स्थितो गुणविशेषः केन हेतुना रत्यादिरूपतयाऽभिव्यक्त इत्यत्राह—तैरेवेति रत्यादि कारणादिभिः प्रमदादिभिरेव अभिव्यक्त इत्यर्थः । सामाजिकानां रतिमन्नायकाभेदारोपः स्वस्मिन्निति दर्पणेऽप्युक्तम् । यथा—

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः ।**
**तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ॥**
**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ।**
**उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ॥ इति (सा. द. ३ प.)**

यस्य हनूमतः पाथोधिप्लवनादय आसन् तस्याभेदेन प्रमाता स्वात्मानं प्रतिपद्यते । कुत इत्याह— व्यापारोऽस्तीत्यादि, साधारणीकृतिः हनूमदादिनायकसामाजिकयोरभेदबोधात्मकसाधारण्यकारकः, तत्प्रभावेणेत्यर्थः । तथा रत्याद्यभेदारोपः स्ववासनायामित्यप्याह तत्रैव ।

**साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ।** इति

वासनावतामेव तदा रत्याद्यारोपादास्वादो भवतीत्यप्याह तत्रैव—

**सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।**
**निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः ॥** इति .

कारणादिभिरित्यादिपदात् कार्य्यसहकारिणोरपि परिग्रहः । तैः कीदृशैः ? काव्ये नाट्ये च **'कारणत्वादि-परिहारेण'** कारणादिशब्दव्यपदेश्यत्वपरिहारेण **'अलौकिकविभावादिशब्दव्यवहार्यैः,'** तादृशव्यवहारहेतुं योगार्थमाह—विभावनादीति । आस्वादपात्रीकरणरूपेण विशेषेण भावनं ज्ञापनं विभावनम् एवमनुभावनम् अनुभव गोचरीकरणम्; व्यभिचारणं शैघ्र्यरूपेण विशेषेण अभितश्चारणं ज्ञापनम्, ईदृशव्यापारवत्त्वादित्यर्थः । एतत्प्रदर्शनञ्च स्वरूपकथनमात्रं न तु रसोत्पत्तायस्य उपयोगोऽस्तीति मन्तव्यम् । पुनः कीदृशैः ? **'साधारण्येन प्रतीतैः'** सीतादिविभावादयो रामस्य मम चेत्येवमुभयसाधारण्येन आहार्य्यप्रतीतैरित्यर्थः । तच्च साधारणीकृत्यात्मकव्यापारबलादिति बोध्यम्, तादृशसाधारण्येन एतादृशसाधारण्यस्थापि सिद्धेः । दर्शितमिदं साधारण्यं परिशेषेण पर्य्यापयति—ममैवेते इत्यादि । शत्रुपदम् आलम्बनविभावशत्रुभूतस्थायिभावाश्रयनायकपरम् । स च रौद्रवीरभयानक रस एव नायकरूपः क्रुद्धस्य नायकस्य क्रोधालम्बनविभावशत्रुत्वात्, जेतुर्नायकवीरस्योत्साहालम्बनभूतजेतव्यशत्रुत्वात्, भीतस्य नायकस्य भयावलम्बनभूतभीषकशत्रुत्वात् । तटस्थपदन्तु तादृशशत्रुत्वोदासीनषडरसीयषड्नायकपरम् । तथाच शत्रुतटस्थपदाभ्यां नवरसीयनवनायका बोध्याः । ममैवेत्यत्र मत्पदं रसबोद्धसामाजिकपरम् । तथाच एते सीतादयो ममैवेति रामादिनायकस्यैवेति च यः सम्बन्धस्यावधारणरूपेण विशेषेण स्वीकारः, यश्च नैव ममेति नैव रामादिनायकस्येति सम्बन्धस्यावधारणरूपेण विशेषेण परिहारः, नियमेन तदनवसायादित्यर्थः । एवञ्च उभयीयत्वरूपं साधारण्यं पर्य्यवस्यति । न ममैवेत्यत्र नैव मम इत्येवमेवकारयोजनाभावे 'ममैव' 'न शत्रोरेव' इत्यनयोरेकार्थतापत्तिः स्यात्, पूर्व्वत्र एवकारेण परत्र च नञा शात्रवीयत्वस्यैव व्यवच्छेदात् । ईदृशं साधारण्यं विभावादीनामुक्तं दर्पणेऽपि—

**परस्य न परस्येति ममेति न ममेति च ।**
**तदास्वादे विभावादेः परिच्छेदेन न जायते ॥** इति (सा. द. ३प,)

परस्येत्यादौ सर्वत्र परस्यैवेत्यादिरर्थः प्रागेव व्याख्यातः । अत एवात्र शत्रोरेव त्येवकारगर्भत्वम् । रामादिरत्यादित्वेनाभिव्यक्तो वासनारूपगुणविशेषः कीदृशः ? नियतप्रामाता सामाजिकः तद्गतत्वेन स्थितोऽपि उक्तप्रमारूपेण 'प्रमात्रा', 'साधारण्येन' रामादिरत्याद्यभेदारोपरूपेण साधारण्येन, 'गोचरीकृतः' । तादृश्यत्वेन गोचरीकरणे हेतुमाह—साधारणोपायेति । उभयसम्बन्धित्वेन सीतादिज्ञानं साधारणोपायः । व्यञ्जनाधीनज्ञानसमानाकारसाक्षात्कारप्रदर्शनमनेन कृतम् । तत्र च 'साधारण्येन रत्यादिरपि तद्वत् प्रतीयते' इति संवादो दर्शित एव । उक्तप्रमारूपेण प्रमात्रा कीदृशेन ? तत्काले तादृशप्रमोत्पत्तिकाले प्रमातुः स्वस्मिन् रामाद्यभेदारोपवशाद् विगलितः ज्ञानाविषयीभूतः परिमितप्रमातृभावो रामदिभिन्नत्वेन 'स्वमात्रविषयीभावो यस्तद्वशेन अर्थात् तद्विगलनवशेन उन्मिषितः जातः वेद्यान्तरस्य घटादेः सम्पर्केण विषयीभावेन शून्यः अपरिमितभावः रतिवासनासाधारण्यरूपापरिच्छिन्नभावो यस्य तादृशेन । स्वस्मिन् रामाद्यभेदारोपादेव स्ववासनायां रामादिरतित्वस्य रत्यभेदस्य वा आरोपात् तद्वशत्वम् । अनेन स्वस्मिन् रामाद्यभेदस्य स्ववासनायां च रामादिरतित्वस्य रामादिरत्यभेदस्य वा आरोपो दर्शितः । दैवात् कस्यचित् तादृशज्ञानोत्पत्तावपि न वस्तुसिद्धिरित्यतः सकलसामाजिकानामेव तादृशज्ञानरूपं संवादं दर्शयति—सकलसहृदयेति । एकत्र दृष्टस्यापरत्र दर्शनं संवादः । तथाच तादृशसंवादाद् वस्तुसिद्धिः । वासनात्मतया स्थितो गुणविशेषः पुनः कीदृशः ? प्रदर्शिताकारकस्वज्ञानादभिन्नोऽपि तादृशज्ञानेन गोचरीकृतः । ज्ञानविषययोरभेदकथनमत्र परिणामवादाभिप्रायेण इत्युक्तमेव । तत्रैव स्वाकारवादेन दृष्टान्तमाह—स्वाकार इवेति, विषयो

ज्ञानादभिन्नो ज्ञानस्यैवाकार इति तत्सिद्धान्तात्, तद्विदित्यर्थः। एवंविधरसतापन्नो वासनात्मकगुणविशेषः पुनः कीदृशः ? चर्व्यमाणतैकप्राणः; प्राणो हि रसता, चर्व्यमाणता च साक्षात्क्रियमाणता तद्दशायामेव रसतापन्न इत्यर्थः। अन्यदा तु रत्यादिभिन्नवासनारूप इत्यर्थः। शाब्दं विभावादिज्ञानं यावत्तिष्ठति अनुभवसिद्धं तावदेव तत्तिष्ठतीत्याह—विभावादीति, विभावादिज्ञानजीवितावधिरित्यर्थः। उक्तप्रमाया ये सीतारामतद्रतिस्ववासनादयो विषयास्ते सर्व एव रसतापन्नाः चर्व्यमाणा भवन्तीत्याह—पानकेति, मरीचकर्पूरादिचूर्णमिश्रिता आमिक्षा पानकम्, तदीयस्य नानाद्रव्यीयरसस्य चर्व्यमाणतादशायां यथा एकत्वाभिमानः तथा नानाविषयैतच्चर्वणायामप्येकत्वाभिमान इत्यर्थः। तत्कारणीभूतज्ञानविषयस्य विभावादेरपि चर्वणागोचरत्वमाह दर्पणेऽपि—

**प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते।**
**ततः सम्बलितः सर्वो विभावादिः सचेतसाम्।**
**प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्॥** इति।(सा.द. ३ प.)

पुर इत्यादिपञ्चकं स्पष्टम्। 'चमत्कारः' साक्षात्काररूप आस्वादः। तदभिन्नस्य तस्य तत्कारित्वं परिणामवादाभिप्रायेण बोध्यम्, रसतानापन्नदशीयस्य तत्कारित्वात्। इत्यमुक्तसाक्षात्कारविषयस्यापि वासनादेः साक्षात्काराभिन्नत्वे स्वाकार इवाभिन्नोऽपीत्यनेन प्रकाशिते ज्ञानजन्यज्ञानरूपात् कार्य्यज्ञानान्तरात् तस्य वैलक्षण्येनापाततः कार्य्यत्वाभावमेव साधयति—स च न कार्य्य इति। यदि ज्ञानोत्तरज्ञानरूपत्वे सति असौ कार्य्यः स्यात् तदा स्वपूर्ववर्त्तिज्ञाननाशक्षणेऽपि स्थितिमान् स्यात् ज्ञानोत्तरज्ञानान्तरवादित्याह—विभावादीति, विभावादिज्ञाननाशक्षणेऽपीत्यर्थः। 'सम्भवः' स्थितिः। न चात्रेष्टापत्तिरिति वाच्यम्, अनुभवबलेन विभावादिज्ञानरसयोरेकदैव नाशस्य विभावादिजीवितावधिरित्यनेन उक्तत्वात्। अतोऽसौ जन्यज्ञानान्तरवैलक्षण्येन अकार्य एवेत्यापातत एवोक्तम्; अग्रे तु तस्य कार्य्यत्वमपि दुरपह्नवं स्वीकरिष्यत्येव। तथा तस्य वैलक्षण्यमेवेति साधयितुं ज्ञाप्याद्विषयान्तराद् वैलक्षण्येनाज्ञाप्यत्वमपि आपातत एव साधयति—नापीति। सिद्धस्येति घटादिवदज्ञानदशायामपि 'सिद्धस्य' स्थितस्य तस्याभावादित्यर्थः। स्वज्ञानात् पूर्वं तस्य रसस्वरूपत्वाभावस्य चर्व्यमाणतैकप्राण इत्यनेनैव उक्तत्वात् तदेव पुनः स्मारयति—अपि त्विति। चर्वणीय इत्यत्र सन् रस इति पूरणीयम्। तथाच चर्वणीयः सन्नेव रसः अन्यदा तु वासनीरत्यादिरूप एव न तु रस इत्यर्थः। नन्वेवं तस्याकार्य्यत्वेऽज्ञाप्यतया अज्ञेयत्वे च विभावादिरपि तस्य न कारको न वा ज्ञापक इत्यायातम्, तथाच 'व्यक्तः स तैरित्यादिना' कथं तज्ज्ञापकत्वमुक्तम्, कथं वा विभावानुभावेत्यादिभरतसूत्रेण विभावादीनां तन्निष्पादकत्वमुक्तमित्याशङ्कते—कारकेति। दर्शितरीत्या अन्यसाधारणे एव तस्य कार्य्यत्वज्ञेयत्वे न स्तः, विलक्षणव्यक्तौ तत्रानन्यसाधारणे तु कार्य्यत्वज्ञाप्यत्वे स्त एव इत्यतो विभावादिष्वपि अनन्यसाधारणे कारकत्वज्ञापकत्वे स्त एवेत्यतोऽन्यत्रादर्शनं न दोषः किन्तु विलक्षणसिद्धौ गुण एवेत्याह—न क्वचिदिति। 'अलौकिकसिद्धेः' लोकसिद्धवस्त्वन्तरभिन्नसिद्धेः। नन्वेवं 'कोऽप्यजायत रसो निरन्तरम्' इत्यादि लोकव्यवह्रियमापं कथं तस्य जन्यत्वमित्यतस्तस्य लौकिके अपि कार्य्यत्वज्ञेयत्वे साधयति—चर्वणेति; तस्य विभावादिज्ञानतो निष्पत्तिश्चर्वणा निष्पत्त्यैव उपचरितेत्यर्थः; वासनारत्याद्यंशे तु न विभावादिज्ञानतो निष्पत्तिः, अपि तु तद्भिन्नस्वस्वकारणत एवेति बोध्यम्, नत्वेतावतैव वासनारत्याद्यंशे अजन्यत्वमुक्तं तयोर्जन्यत्वस्य प्रमाणसिद्धत्वात्। एवञ्च विशिष्टस्य रसस्य विभावादिज्ञानजन्यत्व एवांशिक उपचारो न जन्यत्व इत्यवधेयम्। एवं घटादिसाधारणज्ञाप्यत्वाभावेऽपि स्वेनैव स्वस्य गृह्यमाणत्वाज् ज्ञाप्यत्वं ज्ञेयत्वञ्चास्तीति साधयति—लौकिकेति। लौकिकं यत् प्रत्यक्षादिप्रमाणं तत्ताटस्थ्येन तदौदासीन्येन अर्थाद् योगजधर्मेण अवबो-

धशालिनो मितपरिभाषितस्य योगिनो यज्ज्ञानं यच्च वेद्यान्तरसम्पर्केण रहितं शून्यं विषयान्तराग्राहिस्वात्ममात्र पर्य्यवसितम् आत्माद्वैतग्राहि परिमितेतरयोगिनः संवेदनं ज्ञानं ताभ्यां विलक्षणस्य लोकविलक्षणस्य च स्वात्मक-संवेदनस्य गोचर इत्यर्थः । निर्द्धर्मकवासनाग्रहात् तदंशे निर्विकल्पकत्वम् अन्यांशे सविकल्पत्वं वक्ष्यते । इदानीं निर्विकल्पकान्तरवैलक्षण्यान्निर्विकल्पकत्वाभावमपि साधयति—तद्ग्राहकमिति । स्वमात्रग्राह्यत्वादत्र तद्ग्राहकं तद्ग्रहः स्वमेव । विभावादीति । परामर्शः ज्ञानम्, तत्प्रधानत्वात् तदधीनत्वात्, तथाच ज्ञानाजन्यनिर्विकल्पकादस्य वैलक्षण्येन निर्विकल्पकत्वाभाव आपाततः साधितः । सविकल्पकान्तरद्वैलण्येन तस्य सविकल्पकत्वाभावमपि आपाततः साधयतिः । सविकल्पकान्तराद्वैलक्षण्येन तस्य सविकल्पकत्वाभावमपि आपाततः साधयति—नापीति । स्वसंवेदनं स्वात्मकसंवेदनम्, तत्सिद्धत्वात् तन्मात्रग्राह्यत्वात्, सविकल्पकान्तरस्य तु स्वभिन्नस्वानुव्यवसायेन ग्रहात्, तद्वैलक्षण्येन न तथात्वमिति भावः । इदञ्च गुरुभिन्नानामेव मते; तन्मते तु सर्व्वसविकल्पकस्यैव स्वेन ग्रह इत्यवैलक्षण्यमैव । अंशभेदेन तस्य तदुभयात्मकत्वमपि साधयति—उभयाभावेति । उभयाभाव उभयभेदः, तेन विशिष्टं स्वरूपं यस्य सः, उभयभिन्नः तद्रूपस्येत्यर्थः । भेदस्याव्याप्यवृत्तित्वमङ्गीकृत्येदमुक्तम् । पूर्व्ववदिति, अलौकिकतत्कारकतज्ज्ञापकविभावादिवदित्यर्थः । न तु विरोधमिति ।

## सुधासागरः

इदमत्र रहस्यम् । पुरा किल काचिद्वलभी पठतां बहूनां ब्राह्मणबालानामध्ययनशालाऽऽसीत् । तत्र पठन् कश्चिद् गौडबालोऽतिसौबुद्ध्यान्मुखरत्वाच्च निखिलबालानां भयप्रदत्वेन बालवलभीभुजङ्ग इति गुरुणा व्यपदिष्टः । स चाऽऽचार्यतामुपगत इति सकलरहस्याभिज्ञः श्रीवाग्देवतावतारो गूढं तन्नामाऽभिनवगोपानसीगुप्तपाद इति वैदग्ध्यमुखेनाऽभिव्यनक्तीति । अत एव मधुमत्यां रविभट्टाचार्यैरुक्तम् । अभिनवपदेन ध्वनिटीकाकर्तृपुराण-गुप्तपादलिखनविरोधोऽत्र न देय इति ।

प्रकृतग्रन्थस्याऽयमाशयः । स्थायिनां विभावादिभिः समंव्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धाद् विभावादीनामेव परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिः । तथा हि लोके प्रमदादिकारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत् पाटवं झटिति प्रवृत्तिस्तद्वतां सामाजिकानां सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्य नाट्ये च गुणालङ्कारयोगाच्चतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यपदेशयोग्य-दशाविशिष्टैस्तैरेव कारणादिभिर्व्यज्यते ।

नन्वेवं येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां तद्विरहिणां किं रसाऽभिव्यक्तिर्नास्त्येव ? का सन्देहः । अतएव शृङ्गारिणामेव शृङ्गारस्य निर्विण्णस्वभावानामेव शान्तस्याऽभिव्यक्तिरित्याद्यनुभूयते ।

किञ्च अपराऽपि स्वाभाविकी वासना सहकारिणी । यां विना शृङ्गारिणामपि मीमांसकवैयाकरणानां न रसाऽभिव्यक्तिः । तदुक्तम्—'वासना चेन्न हेतुः स्यात् स स्यान्मीमांसकादिषु' इति ।

ननु तथाऽप्यन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायिनोऽभिव्यक्तिः ? उच्यते । ममैवैते शत्रोरेवैते तटस्थस्यैवैते इति सम्बन्धिविशेषस्वीकारनियमस्य न ममैवैते च शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धिविशेष-परिहारनियमस्य चाज्ञानात् तेषां साधरण्येन प्रतीतेः ।

अत्रेदमवधेयम् । आत्मा प्रियः शत्रुर्द्वेष्यः उभयाऽन्यस्तटस्थ इति वर्णनीयस्य त्रैविध्यात्त्रिविधोपादानम् ।

मित्रस्याऽऽत्मपक्षे निक्षेपान्नाधिक्यमिति । साधारण्येन प्रतीतिश्च न सर्वसम्बन्धितया प्रतीतिः । किन्तु सम्बन्धि-विशेषीयत्वेनाऽप्रतीतौ प्रतीतिः । यद्वा—अमुकस्यैवेत्यवधारणं विनाऽमुकस्येत्येवं प्रतीतिः । अतएवोक्तं ममैवैते इति । नियमानध्यवसायादिति । तथा च स्वीयत्वाऽसंसर्गाग्रहात् स्वीयत्वसंसर्गग्रहप्रयोजनं सम्पद्यते । एवञ्च वाक्यार्थबोधे सम्बन्धिविषयत्वाऽनुभवोऽपि न विरुध्यते । संसर्गबोधे सम्बन्धी न विषयः किन्तु पदार्थस्मरण एवेत्यनुभवविरोधाद् विचाराऽसहत्वाच्चानुपादेयम् ।

ननु तथापि सीतात्वादिज्ञाने कथं साधारण्यं कथञ्चाऽऽराध्यत्वज्ञाने सामाजिकनिष्ठरत्युद्बोध इति चेत् । नैवम् । परिहृतजनकतनयत्वादिविशेषाः कामिनीमात्ररूपाः शब्देनाऽभिनयेन वा प्रतीयमाना विभावादितां प्राप्नुवन्ति । अयं विशेषपरित्यागो वाक्यार्थबोधकाले ततो रसोद्बोध इति ।

नन्वेवं विभावादीनां साधारण्यं विनाऽभिव्यञ्जकत्वव्याघातादस्तु साधारण्यम् । स्थायिनस्तु तत्कथं स्यात्, तस्य तत्तदात्मनिष्ठत्वात् । यद्यप्यसाधारण्येऽपि तस्य न रसप्रतीतिविरोधस्तथापि तदंशे सहृदयहृदयसंवादो न स्यात् । स एव चाऽलौकिकतादृशचमत्कारस्वीकारकारणमिति । उच्यते-उपायानां विभावादीनामुक्तरूप-साधारण्यबलाद् रसाऽनुभवकाले स्थायिनां प्रमातृविशेषनिष्ठत्वलक्षणायाः परिमितप्रमातृताया यद्विगलनमज्ञानं तद्वशेनोन्मिषितो वेद्यान्तरसम्पर्कशून्योऽपरिमितो भावो यस्य तेन प्रमात्रा सकलसहृदयहृदयसंवादकारिणा प्रमातृ-विशेषसम्बन्धाऽग्रहरूपेण साधारण्येन स्थायी चर्व्यते । रत्यादेः साधारण्येन ग्रहश्चेन्न स्यात्तदा स्वगतत्वेन सीताद्यालम्बनकरत्यादिप्रतीतौ सभ्यानां व्रीडाऽऽतङ्कादिः स्यात् । अपरगतत्वेऽरस्यतापात इति ध्येयम् ।

अतएव देवनाथतर्कपञ्चाननैर्व्याख्यातम्—ननु 'शून्यं वासगृहम्' इत्यादौ अस्तु तथा । यत्र तु रामसीता-दयः स्वपदोपात्तास्तत्र पदार्थतावच्छेदकं विना कथं प्रतीतिरिति चेत् सत्यम् । प्रथमं शक्तिलक्षणाजन्यबोधे विशेष्यैव प्रतीतिः । उत्तरकालं तु समासोक्त्यलङ्कारमहिम्ना नायकनायिकासामान्यविषयवृत्तान्तानां व्यञ्जनया शब्दादुपस्थितौ सामाजिकानां स्वस्वविषयकरत्यादौ स्वचर्वणम् । अन्यथा काव्यादितः साधारण्येन विहिताऽविहि-तव्युत्पत्तिर्न स्यात् । ततश्च रामादिष्वपि तत्तद्विशेषमपहाय धीरोदात्तादिसामान्याऽवभासो न विरुद्धः । एवञ्च काव्यनाट्यादौ यावदयं राम इयं सीतेत्यादिबुद्धिस्तावन्न चमत्कारः, अनौचित्यात् । यदा तु सामान्यतो भानं तदा स इति सर्वाऽनुभवसिद्धमिति ।

काव्यश्रवणादिदशायां स्वपरादिविभाग एव नास्ति अन्यथा व्रीडाऽऽतङ्कादि प्रसङ्गात् । अतएव तद्दशा-यामद्वैतभानमिति वेदान्तिनः प्राहुः ।

जयरामन्यायपञ्चानना अपि व्याचख्युः । ननु शब्दाद् विभावादीनां ज्ञानम्, अथ रत्यादेरित्यत्र न विवादः । परन्तु लोकविलक्षणाद्रत्यादिज्ञानाल्लोकविलक्षणः प्रबलाऽऽनन्दो जायते स एव रसोऽस्तु । रसस्य जन्यत्वे भरतसूत्रे संयोगादिति पञ्चम्या जनकत्वरूपमुख्यताऽपीति चेत् न । रसप्रतीतौ नियमता विभावादिविषयकत्वमा-नुभविकम् । तच्च रसस्य जन्यसुखरूपत्वेन सम्भवति । तथा हि—शब्दाद्विभावादेर्ज्ञानमथ रत्यादेस्ततः सुखो-त्पत्तिरथास्याऽनुभव इति व्यवधानात् । तदुक्तम्—विभावादिज्ञानाऽभावेपि तज्ज्ञानप्रसङ्गादिते । नच विभावादिज्ञानाऽधीनसमूहविषयकरत्यादिबोधस्योपनायकस्य सुखोत्पत्तिकाले सत्त्वात्तत्साक्षात्कारे विभावादिभा-नमविरुद्धमिति वाच्यम् । सुखसाक्षात्कारसामग्र्या इतरज्ञानविरोधित्वेन तदयोगादिति भाव इति ।

ननु चर्वणाविशिष्टः स्थायी रस इत्युच्यते। चर्वणया च स्थायी विषयीक्रियतां न तु सुखात्मक आत्मेति न रसस्य व्यक्तिरिति चेत् न। स्वप्रकाशनये स्वप्रकारवदभिन्नस्याऽऽत्मनो विषयीकरणात्। स्वस्य ज्ञानस्याऽऽकारो विषय अभिन्नो ज्ञानस्वरूपाद् यथा। एवमन्तःकरणावच्छिन्नस्य चैतन्यस्य प्रमातृत्वाद्रत्याद्यवच्छिन्नस्य तस्य रसत्वाच्चैतन्यांऽशमादायाऽभिन्न इति भावः। अभिव्यक्तिविशिष्टश्च रत्यादिः स्थायी चर्व्यमाणतैकप्राणतया चर्वणानाशे विनष्टो रस इति प्रतीतिविषयो, विभावादिजीविताऽवधित्वेनाऽनित्यचर्वणः, जीवितस्य चर्वणाया विभावादिरेवाऽवधिः। परिहृतविशेषाः सीतारामादयो विभावनापन्ना यावत्तावदेव स्वविषयस्थायिव्यक्तिरूपां चर्वणां कुर्वन्ति। विशेषज्ञानादिना तन्निवृत्तौ चर्वणानिवृत्तिरिति भावः। एवं सत्यपि विभावादिज्ञाने बलवत्तरविषयव्यासङ्गादपि चर्वणानिवृत्तिरिति बोध्यम्। पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद् ब्रह्मास्वादमिवाऽनुभावयन्नतएवाऽलौकिकचमत्कारकारी शृङ्गारादिको रस इत्युच्यते।

अत्रेदं रहस्यम्। चतुर्वर्गप्रदं सेवनात् इति प्रकृतग्रन्थस्य मोक्षोपायरूपत्वमुक्तम्। प्रतिपादितञ्च इदमुत्तममतिशयिनि इति सूत्रव्याख्याऽवसरेऽस्माभिः। तदत्र श्रीवाग्देवतावतारैर्ब्रह्मसहोदररसाऽऽविर्भावप्रकारप्रदर्शनेन ब्रह्माऽवबोधोऽपि सति तादृशेऽधिकारिणि सति च तादृंशसामग्रीसमवधाने सद्गुरूपदिष्टयत्किञ्चिद्वाक्यनिष्ठया तत्त्वमस्याद्युपनिषद्वाक्यनिष्ठया वा व्यञ्जनयैव भवतीति ध्वनितम्। ब्रह्मैव रस इति तु प्रलपितमात्रम्। मुक्तिदशायां ब्रह्ममात्रं प्रकाशते। रसे तु विभावादिसन्देशोऽपीति भेदेन ब्रह्माऽऽनन्दमिवेति दृष्टान्तदार्ष्टान्तिकभावस्य दर्शितत्वात्। एवञ्च व्यञ्जनाया अलौकिकत्वादवाग्गौचरत्वमपि ब्रह्मणो निर्बाधमिति।

प्रकृतमनुसरमः। नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम्। तच्च न युक्तम्। विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्। घटपटाविति समूहालम्बनवदिति चेत् न। पानकरसन्यायेन चर्वणात्। यथा पानके कर्पूराद्यंशो न पार्थक्येनाऽनुभूयते तथाऽत्रापि विभावाद्यंशः। अत एवाऽलक्ष्यक्रमत्वमुक्तम्।

ननु विभावादीनां परामर्शस्याऽन्वयव्यतिरेकात् तत्कार्य एव रसः किं नोच्यत इति चेत् न। विभावादिपरामर्शस्य कारणत्वं यदि स्यात् तदा निमित्तकारणत्वमेव, समवाय्यसमवायिकारणत्वाऽसम्भवात्। न च तन्नाशस्य कार्यनाशकता दृष्टा। तथा च विभावादिज्ञाननाशे रसप्रतीतिः स्यात्। नचैवम्। विभावादौ भासमान एव रत्युद्बोधस्य रसत्वाऽभ्युपगममात्। ननु द्वित्वादिरूपकार्याणामपेक्षाबुद्धिरूपनिमित्तकारणनाशनाश्यत्वं दृश्यते इति चेत्, मैवम्। द्वित्वादीनान्तथात्वाऽनभ्युपगमात्। तथा हि—द्वित्वादेर्जातित्वाङ्गीकारात्तत्र निमित्तकारणनाशनाश्यत्वं नास्ति। किन्तु द्वित्वमपेक्षाबुद्धिव्यङ्ग्यं न तु तत्कार्यमित्यपेक्षाविगमे द्वित्वादिकं न प्रतीयते। यावद्व्यञ्जकं व्यङ्ग्योपलम्भात्। चन्दनादिस्पर्शजन्यमुखादिन्यायो भविष्यतीति चेत् न। न हि तत्र स्पर्शाभावेन सुखं विनाश्यते। किन्तु तदभावे कारणाभावात् कार्यं नोत्पद्यते। उत्पन्नस्य सुखस्य तर्हि कथं विनाश इति चेत्, विरोधिगुणान्तरात्। अत्राऽपि तथैवाऽस्त्विति चेत् न। रसस्य वेद्यान्तरसम्पर्कशून्यतया ज्ञानान्तरादेस्तकालेऽभावात्। नन्वेष दोषो व्यक्तावपि समान इति चेत्, न समानः। व्यक्तेर्लोकोत्तरतया दोषाऽसंस्पर्शात्।

किञ्च चर्वणाविशिष्टः स्थायी रसः। न च काव्याद्युपस्थाप्यो विभावादिर्विशिष्टे हेतुः। तर्ह्यस्तु ज्ञाप्य इति चेत् न। विभावादिपरामर्शं विना तत्सिद्धेरभावात्। अयमाशयः। लोके पूर्वसिद्धा एव घटादयः प्रदीपादिभिर्व्य-

ज्यन्ते । नचैवं रसे । यतो विभावादिज्ञानजनिताऽभिव्यक्तिविषयीभूतस्य रत्यादेः रसत्वं, स कथं विभावादिव्याप्य इति ।

श्रीवत्सलाञ्छनभट्टाचार्यैरपि व्याख्यातम् । रसस्य चैतन्यस्वरूपस्य स्वप्रकाशत्वेन प्रमाणान्तरसिद्धत्वं नास्तीति प्रमाणान्तरसिद्धे घटादावेव ज्ञाप्यत्वं न तु स्वप्रकाशे रसे इति भाव इति ।

प्राञ्चस्तु ज्ञाप्यः फलव्याप्यः । भग्नाऽऽवरणचित्सम्बन्धित्वरूपफलव्याप्यत्वं घटादावेव न तु किंचित्स्वरूपे रसे । स्वस्मिन्स्वसम्बन्धाभावादित्याहुः । नचैकैव सामग्री निष्पादिका ज्ञापिका चेति सम्भवति ।

किञ्च—स्वभिन्नज्जन्यज्ञानविषयस्य हि तज्जन्यज्ञानविषयतयैव तु तज्ज्ञाप्यत्वं न निषेधामः । किन्तु विभावादिभिर्व्यञ्जितश्चर्वणीयः । व्यञ्जितश्चित्स्वरूपोऽभिव्यक्ताऽऽनन्दांशो भवतीति भावः । रसस्य व्यङ्ग्यत्वाद् व्यञ्जकत्वमेवाऽत्र पञ्चम्यर्थ इति बोध्यम् । कारक-ज्ञापकाभ्यामन्यो हेतुर्न लोकसिद्ध इति चेत्, अलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम् । अलौकिककार्यहेतावलौकिकत्वस्योचितत्वात् । कथं तर्हि विभावादिभिरुत्पन्नो रसो ज्ञेयो रस इत्यादिव्यवहार इति चेत्, आद्यस्तावच्चर्वणोत्पत्त्या तत्रोत्पत्त्युपचारात् । द्वितीयोऽपि गुणाऽलङ्काराद्यसंभिन्नरसादिविषया लौकिकी प्रमितिः । तच्चाऽपरिपक्वयोगिनां युञ्जानपदवाच्यानां जगद्भेदविषयकत्वशालि विज्ञानम् । यच्च परिपक्वयोगिनां युक्तपदाऽभिधेयानां बाह्यार्थसंस्पर्शरहितं स्वात्ममात्रविषयं संवेदनं तेभ्यो गुणाऽलङ्कारयुक्तरसादिमात्रविषयतया विलक्षणं यत्संवेदनं तद्गोचरतयेति मन्तव्यम् ।

अत्रेदं बोध्यम् । द्विविधाः खलु योगिनो भवन्ति । युञ्जाना युक्ताश्च । तत्र युञ्जानयोगिनां समाधिसत्त्वे योगजधर्मप्रत्यासत्त्या भेदविषयकमतीताऽनागतसर्वविषयकं ज्ञानं समाधेः काचित्कतया परिमितं कादाचित्कम् । युक्तयोगिनां तु च्छिन्नसवासनमिथ्याज्ञानतया स्वात्ममात्रविषयकं समाधिदाढर्यात्परिमितेतरदिति ।

न केवलमसत्त्वादज्ञाप्यो रसः । किन्त्वितोपि यतस्तद्ग्राहकं न निर्विकल्पकम् विभावादिपरामर्शस्य निर्विकल्पकजननाऽयोग्यत्वात् । निर्विकल्पकस्य ज्ञानान्तरसापेक्षत्वाभावादिति भावः । नाऽपि स्वभिन्नसविकल्पकम् । चर्व्यमाणस्याऽलौकिकानन्दस्य तस्य स्वसंवेदनमात्रसिद्धत्वात् । स्वप्रकाशत्वादिति भावः । तत्त्वन्तु स्वव्यवहारसंविदन्तरानपेक्षत्वम् । ननु तर्हि कथं वृत्तिव्याप्यत्वमिति चेत् आवरणभङ्गार्थमित्यवेहि । एवञ्च तत्त्वमसीत्यत्रेव सम्बन्धाऽग्राहिण्यपि वृत्तिरावरणभञ्जिकेति । वस्तुतस्तत्रापि अलौकिकवृत्त्या व्यञ्जनयैव ब्रह्मबोधः न खलु व्यञ्जनातिरिक्तवृत्तेरावरणभञ्जकत्वं क्वचिदनुभूतमिति सुधीभिर्न विस्मर्तव्यम् । किञ्च चर्वणादशायां ज्ञानान्तरभावः । अयं घट इत्यादिव्यवसाये यथा स्वभिन्नाऽनुव्यवसायविषयता तथा न चर्वणादशायां, चर्वणानन्तरं हि चर्वणाया एवोत्पादो न तु मानसज्ञानस्य । व्याञ्जनिकसामग्र्या बलवत्त्वात् । चर्वणायाश्च व्यङ्ग्यत्वात् स्वाऽभिन्नसविकल्पकविषयत्वेन ज्ञाप्यत्वमिष्टमेव ।

सारबोधिनीकारास्तु विकल्पो विशिष्टज्ञानम् । धर्मिग्राहकमानेन समूहालम्बनत्वेन सिद्धस्य रसाऽवबोधस्य विभावादिविषयाणां परस्परसम्बन्धाऽग्रहान्न सविकल्पकत्वमित्यर्थ इत्याहुः ।

ननु निर्विकल्पस्वभिन्नसविकल्पयोरन्यतरविषयत्वाभावोऽपरविषयत्वपर्यवसन्नः । तथा चैकविषयत्वाभावेऽपरविषयत्वप्रसक्तिरित्युभयत्वाभावे उभयविषयत्वं प्रसज्येतेति चेन्न । एवं ह्युभयरूपत्वमापाद्यमानं स्वाऽभिन्नसविकल्पकविषयत्वरूपतृतीयकोटिशालितया लोकोत्तरं चमत्कारमेवाऽवगमयति न पुनर्विरोधमिति ।

अयमाशयः। याभ्यां हेतुभ्यामुभयाभावरूपत्वं ताभ्यामेव क्रमेण सविकल्पकत्वं निर्विकल्पकत्वं च। तथा च कञ्चिद्धर्मं पुरस्कृत्योभयाऽभावरूपत्वमुभयरूपत्वं चेति। अतएव जयरामपञ्चाननैरुक्तम्—विभावादिसमूहालम्बनरूपे रसे विभावादेर्विभावत्वादिना भानात्तदंशे सविकल्पकत्वम्, अनावृतचैतन्यस्य स्वरूपतो भानात्तदंशे निर्विकल्पकत्वमिष्टमेवेति भाव इति।

एवञ्च काव्योपनिबन्धमहिम्ना परिहृतसीतात्वादिविशेषैः साधारण्येन प्रतीतैर्विभावादिभिर्व्यञ्जितं वर्णनीयसाधारण्येन गृहीतसामाजिकरत्याद्यवच्छिन्नमानन्दांऽशे भग्नावरणमानन्दरूपतया प्रकाशमानं समूहालम्बनोपनीतविभावादिसमूहविषयकमात्मचैतन्यं रस इति निष्कृष्टोऽर्थः। तत्र सीतादिनां साधारण्यग्रहं विना न कदाचिदपि विभावादित्वम्। तथा रत्यादिभावस्याऽपि साधारण्यग्रहं विना रत्युद्बोधस्य स्वप्नेऽपि न रसत्वमिति च न विस्मर्त्तव्यम्।

अपि च तत्त्वमस्यादिवाक्यावच्छेदेनाऽर्थेन च विभावादिव्यापारमहिम्ना रसाऽभिव्यक्तिः साक्षात्काररूपैव जायते। तेन रससाक्षात्कार इति व्यवहारः। 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः चैतन्यांऽशे साक्षात्त्वाच्च। रसस्य व्यङ्ग्यत्वव्यवहारश्च चैतन्यांऽशे रत्याद्यवच्छिन्नचैतन्यस्मृतिरूपव्यक्त्याऽऽवरणभङ्गाद्रत्याद्यंशे तच्छक्तिभग्नावरणकचित्सम्बन्धित्वात्। घटादेश्चाक्षुषवृत्त्या भग्नावरणकचित्सम्बन्धित्वेन चाक्षुषत्वादिव्यवहारवदिति सूक्ष्मदृशाऽवधातव्यम्।

इदं त्ववधेयम्। परमकारुणिकश्रीवाग्देवतावतारैरत्र लोकोत्तररसनिरूपणमिषेणाऽरूपसरूपं प्रकाशाऽप्रकाशं सकलप्रत्येयप्रत्यायनक्षमं सर्वस्थमपि दुर्ज्ञेयं लोकलीलाललितमप्यलौकिकं सगुणमप्यगुणं 'नेह नानास्ति किञ्चन' 'आत्मा वै श्रोतव्यो मन्तव्यः' 'एकमेवाद्वितीयं ब्रह्म' तत्त्वमस्यादिश्रुत्युपस्थापितमप्यवाच्यं सच्चिदानन्दब्रह्मादिपदव्यपदिष्टमप्यदृष्टं प्रत्यक्षादिप्रमाणाऽवेद्यमपि प्रामाणिकं सदसद्विलक्षणं वस्तु तादृशवैदग्ध्योपोद्बलितैर्व्यञ्जनैकवेद्यमिति ध्वनितमिति।

## विवरणम्

अत्र भट्टनायकमते रसोल्लासे विभावादीनामगोचरत्वे तदुत्कर्षाद् रसोत्कर्षो न स्यात्, न स्याच्च रसतदाभासादिविवेकः, भावध्वनीनां च भावनावृत्तिप्रधानानां न स्यादानन्दाभिव्यञ्जकत्वम्, अतो मतान्तरमाह—लोक इत्यादि। लोके लौकिकव्यवहारे। प्रमदादिभिरित्यत्रादिपदेन कटाक्षनिरीक्षणहर्षादयः संगृह्यन्ते। तैर्यः स्थायिनः प्रमदादिविषयकरत्यादेः, अनुमाने 'पुरुषोऽयं प्रमदाविषयकरतिमान् प्रमदाकर्मककटाक्षकरणकनिरीक्षणजन्यहर्षवत्त्वात्' इत्याद्यनुमितिकरणे रतिव्याप्ये हेतौ, अभ्यासः पौनःपुन्येनानुसन्धानम्, तज्जन्यस्य पाटवस्य दृढतरसंस्कारस्य सम्बन्धिनामित्यर्थः। निरुक्तहेतौ निरुक्तसाध्यव्याप्तिगोचरदृढतरसंस्कारवतामिति यावत्।

एतेनास्वादाधिकारी लोकवृत्तचतुरो निरूपितः। समवेतसमवायि भावार्थिका षष्ठी अभिव्यक्त इत्यत्र व्यक्त्यर्थेऽन्वेति। सिद्धसाध्यसमभिव्याहाराच्च निरुक्तपाटवस्य स्थाय्यभिव्यक्तिसहकारिता लभ्यते। तेन भावकत्ववृत्तिरपि व्यञ्जनैव, न ततोऽन्या। अन्यथा निरुक्तचातुर्यस्वरूपा प्रतिभा तत्सहकारिणी न स्यात्, स्याच्च हालिकादावपि स्थायिनो भावनमिति ध्वन्यते।

काव्ये नाट्ये चेति । आरूढैरिति शेषः । विभावादिशब्दव्यपदेशे बीजप्रदर्शनमिदम् । तैरेव इत्यत्रैवकारो भिन्नक्रमः, काव्ये नाट्ये चारूढैरेव तैरभिव्यक्त इति फलति । तेन काव्यनाट्यारोहस्य परम्परया स्थाय्यभिव्यञ्जनोपयोगिताऽपि दर्शिता । तेन च कारणादिशब्दमप्रयुज्य विभावादिशब्दस्य यो भरतसूत्रे प्रयोगः, स कारणादिभिः स्थायिध्वनने काव्यारोहः सहकारीति सूचनायेत्याशयमभिव्यञ्जयन्नेव सौत्रं विभावादिपदं व्याचष्टे—कारणत्वादीत्यादिना, व्यपदेश्यैरित्यन्तेन। कारणत्वादेः कारणादिशब्दप्रयोगस्य परिहारेण योऽयमलौकिकः सूत्रस्थो विभावादिशब्दव्यपदेशः तत्प्रतिपाद्यैः काव्यनाट्यारूढैः कारणादिभिरिति वाक्यार्थः ।

व्यपदेश्यं व्यपदेशकर्म व्यपदेशजन्यबुद्धिविषयः । तत्र बुद्धावन्वितप्रकारमुद्दिशति—विभावनेति । विभावादिपदं योगरूढम् । तत्र विशेषेण भावजनकत्वं योगस्य, काव्याद्यारूढत्वं रूढेः प्रवृत्तिनिमित्तम् । मिलितं तदुभयं विभावना । सैव साधारणीकृतार्थव्यञ्जनानुकूलो व्यापारः । तद्वत्ता तु स एव विभावादिशब्दजन्यबुद्धौ प्रकार इत्यर्थः ।

**चुम्बन्ती शनकैः कान्तं निद्राव्याजमुपागतम् ।**
**ज्ञात्वा नतमुखी बाला हसता तेन चुम्बिता ॥**

इत्यत्र काव्ये प्रथमं तावतां पदानां युगपदनुसन्धानमाकाङ्क्षास्मरणाभिन्नम् । ततो द्वितीये क्षणे तावतां पदार्थानां स्मरणम् । ततो निद्राव्याजोपागताभिन्नकान्तकर्मकस्य शनैश्चुम्बनस्य कर्त्री कान्तव्याजज्ञानानतमुखी बाला हसदभिन्नतत्कर्तृकचुम्बनकर्मेति वाक्यार्थस्तृतीयक्षणे प्रतीयते । तत्र च प्रकरणाद्युपस्थितयो रामसीतयोरेव कान्तबालापदाभ्यामुपस्थितिः । ततश्चुम्बनेनौत्सुक्यहर्षौ, शनकैरिति शङ्का, निद्रया कैतवम्, ज्ञात्वेति मतिः, मुखनमनेन लज्जा, हासेन हर्षः, चुम्बनेनौत्सुक्यं तुरीयक्षणे स्मर्यते । तदेव काव्यवैचित्र्यम् । तत्सहकृतो वाक्यार्थः पञ्चमे क्षणे । निद्राव्याजोपागतकितवकान्तकर्मकशनैश्चुम्बनकर्त्री शङ्कौत्सुक्यहर्षवती कैतवज्ञानप्रयोज्यमुखनमनकर्त्री मतिलज्जावती बाला, हसदभिन्नेन हर्षवतोत्सुकेन कान्तेन चुम्बितेति व्यञ्जनाभिधाव्यतिकरेण वाक्यार्थानुभवमुल्लासयति । सैव बुद्धिः काव्यारूढत्वम्, यद् व्यञ्जनोपनीतव्यभिचारिभावैः सह विभावानुभावयोरनुभवः ।

एवं नटस्याहार्यभूमिकाया रामो मुख्योऽर्थः । तथैव द्वितीयनटभूमिकायाः सीताऽनुकरणचेष्टया वस्तुतो रत्यनुत्थितयाऽनुकार्यस्य तात्त्विकी चेष्टाऽभिधीयते । तया च व्यभिचारिभावा व्यज्यन्त इति व्यञ्जनोपस्थितव्यभिचारिभावोपरक्तयोर्विभावानुभावयोरभिनयस्य मुख्यया वृत्त्याऽनुभावनमेव नाट्यारूढत्वमवसेयम् ।

अत्र काव्यारोहात्मके वाक्यार्थानुभवे रामत्वसीतात्वाभ्यां विभावौ तद्वदनयोः संयोगत्वेन चुम्बनम्, रामेण सह सपदि सङ्गच्छेयेत्याकारेणौत्सुक्यम्, मा स्म जागरीद् राम इति शङ्का, कितवो रामो मद्भावमज्ञासीदिति मतिः, असमञ्जसं रामेण मद्भावपरिज्ञानमिति लज्जा, प्रसभमनया विदितभावया सङ्गच्छेयेत्यौत्सुक्यं च विशेषाकारेणावगम्यते । तथैव नाट्यारोहेऽपि । अत्र च वैयञ्जनिकवाक्यार्थबोधे वाक्यार्थ इव वाक्यमपि भासत एव, आलोकघटयोरिव व्यङ्ग्यव्यञ्जकयोर्वाक्यतदर्थयोरेकबुद्ध्यनुप्रवेशध्रौव्यात् ।

अत एवैतदनन्तरे षष्ठे क्षणे शब्दार्थालङ्कारचमत्काराः स्वदन्ते, मूर्ध्नि वर्गान्त्यगस्पर्शादिवर्णैश्चित्ते द्रवीभावश्च जन्यते । यतो द्रुतेन चेतसा रत्यादेराह्लादकत्वं नाम गुणो विषयीकरिष्यते । त एते शब्दार्थचमत्काराः

काव्यश्रवणादनन्तरे षष्ठे क्षणे भुज्यन्ते । तत्रैव च क्षणे पूर्वोत्पन्नकाव्याद्यारोहस्वरूपसाधारणीकरणव्यापारसहकृतेन शब्दार्थालङ्कारचमत्कारावास्वादयता द्रवता च चित्तेन साधारणीकृता विभावानुभावव्यभिचारिणः प्रतिसन्धीयन्ते ।

यदि च काव्यारोहजनितश्चित्तचमत्कार एव चित्तस्य व्यापारः, तदा काव्यानुसन्धानादनन्तरे सप्तमे क्षणे साधारणतया प्रतिसन्धीयन्ते विभावादयः । तथा हि—रामसीतादयस्तावदास्वादाङ्कुरकवलितगुणान्तरप्रसरणनिरुद्धास्वादविरुद्धधर्माध्यासादन्तर्मुखीभवता समुद्रिक्तसत्त्वेन चित्तेन रामत्वसीतात्वादिपरिच्छिन्नधर्मपरिहारेण जुगुप्साद्यभिव्यञ्जन-(स्त्रीपुंसव्यञ्जन)-घटितनायकत्वादितिरोभावेन काव्यारोहविषयव्यभिचार्यादिशक्तिसमुत्थध्वननमार्गाध्वनीनगुणविशेषवैशिष्ट्यपरिपुष्टास्वादमर्मसन्धयः प्रतिसन्धीयन्ते । 'चुम्बन्ती शनकैः कान्तम्' इत्यादौ पराभिप्रायप्रकटनपाटवधृतिनिह्नुतौत्सुक्यमुचितानुरागित्वसाहसपरिहासादयो नायकस्याभीष्टेऽपि वस्तुन्यभिप्रायनिह्नवस्वरूपं वाम्यमौत्सुक्यसत्प्रतिप्रक्षितव्रीडत्वलक्षणो हावो लज्जाऽतिशयप्रयोजितं चाभिजात्यमित्यादयो नायिकाया गुणास्तत्र प्रतिसन्धाने प्रकारीभवन्ति, न तु नायकत्वादयः ।

चुम्बनमुखनमनद्वितीयचुम्बनादयोऽनुभावास्तु रागेङ्गितत्व-कुट्टमितत्वप्रगल्भत्वादिना, शङ्कौत्सुक्यादयश्च विषयविशेषपरिहारेण स्मर्यन्ते । तथा ह्यौत्सुक्यस्यानेन पुंसाऽनया स्त्रिया वा सहाधुना मिथुनीभवेयमित्याकारः । तत्र चेदन्त्वस्त्रीत्व-पुंस्त्वादेः परिच्छिन्नतयाऽश्लीलत्वेन, अत एव मिथुनीभवनस्यापि त्यागेन साक्षाच्चिकीर्षात्वेन केवलमवभास इति शङ्कापि, जागरणविषयकत्वादिपरिहारेणानभीष्टसंशयत्वेनैव भासत इत्याद्यूह्यमित्यभिप्रायकः साधारण्येन प्रतीतैरित्यन्तो ग्रन्थः ।

तत्रापि प्रियो द्वेष्य उदासीन इति त्रिविध एव क्षेत्रज्ञः । तेषां च न सम्बन्धो न च सम्बन्धायोगो नतमां सम्बन्धायोगव्यवच्छेदो न चान्यसम्बन्धव्यवच्छेदो न चाप्यसाधारणधर्मो विभावादौ भासत इति ममैवैत इत्यादिना प्रपञ्चितम् ।

साधारण्येन प्रतीतैरित्यनेनाष्टमे सप्तमे वा क्षणे वाम्याभिजात्यहाववती प्रगल्भं कितवं चालम्ब्य लज्जितोत्सुका कुट्टमितवती चेत्येकः, वाम्यहावादिमतीमालम्ब्योत्सुको हृष्टश्च प्रगल्भ इत्यपरः काव्यार्थो यौगपद्येन स्वदते । स एव भावास्वाद इति सूचितं भवति ।

अभिव्यक्त इति काव्यास्वादाद् द्वितीयं काव्यानुसन्धानादष्टमे नवमे वा क्षणे रत्योः स्मरणम्, ततो नवमे दशमे वा क्षणे पराभिप्रायप्रकटनादिगुणवदालम्बिता लज्जौत्सुक्यसहकारेण कुट्टमितमनुभावयन्ती हाववाम्याभिजात्यसम्पन्नजनसमवेता रतिरिति, तं च वाम्यादिगुणवन्तं जनमालम्बिता हर्षौत्सुक्याभ्यां प्रागल्भ्यमनुभावयन्ती पराभिप्रायप्रकटककितवसमवेता रतिरिति च युगपदास्वाद्यते । स एव स्थायिभावास्वादः । यदाह धनिकः—

**अप्रयुक्ता प्रयुक्ता वा बुद्ध्यवस्था यथा क्रिया।**
**वाक्यार्थः कारकैर्युक्ता स्थायीभावस्तथेतरैः ॥** इति ।

ततो दशम एकादशे वा क्षणे शब्दार्थचमत्कारभावास्वादगोचरानर्थानुपादाय तथाविधविभावानुभावव्यभिचारिभावसम्पन्ने परस्पररतिमदालम्बिते रती इति चर्वणा । स एव पानकरसन्यायेनालौकिकरसास्वादः ।

स चास्वादकप्रकर्षबलादधिकाधिककालं यथानुभवमवतिष्ठमानो निखिलैरेवालङ्कारचमत्कारास्वादादिभिः सह विरमति । संख्याजनकापेक्षाबुद्धीनां प्रयोजनानुरोधेन त्रिक्षणावस्थायित्वमिव काव्यप्रयोज्यास्वादपरम्पराणामधिकाधिककालव्यापकत्वमविरुद्धमिति दिक् ।

अभिव्यक्तः सामाजिकानां रत्यादिकः स्थायी प्रमात्रा चर्व्यमाणो रस इति समन्वयः । रत्यादौ स्थायिपदनिर्देशे बीजमाह—वासनेति । इयमेतत्साक्षात्कारो वा सुखसाधनमिति वासना रतिः । सा च प्रथमं स्मरणरूपेण, ततो दृढतरवासनारूपेण परिणता, मुहुर्मुहुरभिलाषं भावयति । सोऽप्यभिलाषः संस्कारमादधाति ज्ञानवदित्यप्याहुः ।

स एवाभिलाषो 'ममेयं स्यात्,' एनामहं पश्येयम्' इत्याद्याकारो दर्शनादिसिद्धौ सत्यामानन्दं जनयति । तत्त्वाध्यात्मिकं सुखमाह्लाद इति व्यपदिश्यते । तदभेदेन सामाजिकैः स्वीया रतिर्भुज्यते । स्वाप्निकरतिसम्पत्त्येव कामसुखमतीतमपि सत्त्वोद्रेकोपनीतं साक्षात् परिस्फुरति । तत्र च माधुर्यगुणाभिव्यञ्जकवर्णजनिता चित्तद्रुतिरेव कारणमिति नवमे वक्ष्यति ।

यद्वा स्वां कान्तामालम्ब्य सुखसाधनतामाह्लादतादात्म्यं वाऽवगाहमाना वासना निरुक्तैकादशे क्षणे स्वकान्तात्वादिपरिहारेणानवच्छिन्ने धर्मिणि सुखतादात्म्यादिमवगाहमाना स्मरणं जनयति । स एव स्वप्रकाशः, तज्जनितानुव्यवसायो वा ज्ञानमिव तद्विषयमानन्दमपि तदात्ववर्तिनमिव साक्षात्करोतीत्यानन्दानित्यत्ववादिसाधारणी सरणिः ।

रत्यवच्छिन्नस्यानन्दस्यावरणभङ्गात् स्वप्रकाशेन रत्युल्लासेनास्वादनमित्यौपनिषदानुसारी पन्थाः ।

प्रमात्रा चर्व्यमाण इत्यस्य प्रमात्राह्लादाभेदेन साक्षात् क्रियमाण इत्यर्थः । वासनायाः सन्निकर्षबालदयोग्यत्वं व्यञ्जनबलाच्च योग्यत्वमेव । स्मरणभावेन परिणता वासना योग्यैव । योग्याह्लादसंसर्गेणायोग्यमपि साक्षात्क्रियते । अत एव 'दधिधवलमाकाशम्' इत्यादयश्चाक्षुषसाक्षात्काराः । आनन्दपिण्डीकृताया अलौकिकरतेरसौ वासनाविशेषेण चर्वणा व्यञ्जनया पिण्डीकृते वस्तुनि काव्येन साक्षात्कार एव जन्यते । सर्वत्र । तदुक्तम्—

**शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।**
**प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ।।**

इत्यप्याहुः ।

तत् किमसौ रत्यादिः प्रमात्रा विशेषतः सम्बन्धवत्तया न साक्षात्क्रियते, व्यञ्जनोपनीते रत्यादौ सन्निकर्षोपनीतस्यात्मादेर्भानसम्भवादत आह—नियतेति । नियतश्चैत्रत्वाद्यवच्छिन्नः । अपिना विषयसत्तायामप्यग्रहणमुच्यते ।

तत्राग्रहणे हेतुमाह—साधारणेति । तदुपायस्यैष महिमा यदास्वादविरोधिनोऽस्मादाद्यंशस्य तिरोधानं नामेत्यर्थः ।

तिरोधानप्रकारमाह—तत्कालेति । तत्काले साधारणोपायोद्भवकाले, विगलितः प्रतिरुद्धसाक्षात्कारो यः, परिमितो विशेषरूपः, प्रमातुर्भावः चैत्रत्वादिः तादृशाच्चैत्रत्वादिपरिमितप्रकारविगलनसहभावाद् उन्मीलितो व्यञ्जितः, वेद्यान्तरस्य प्रमाणान्तरवेद्यार्थस्य संबलनेन शून्यः, अपरिमितभावो व्यापकधर्म उदात्तत्वादिर्यस्येत्यर्थः ।

तथा च साधारणोपायस्य न केवलमुदात्तत्वादिधर्मसम्बन्धबोधने सामर्थ्यम्, यावदव्यञ्जितस्येन्द्रियादिनोपस्थितस्य स्वत्वादेर्भाने विरोधित्वमपीति भावः ।

रतौ यदि तत्तदात्मसम्बन्धो रसास्वादविषयः स्यात्, तदा तत्काव्यजनितस्यास्वादस्य सकलसामाजिकवृत्तेस्तुल्याकारताऽपि न स्यादित्याह—सकलेति। नन्वानन्दरत्योरभेदः कथं भुज्यते, तयोर्विविक्तत्वादत आह—स्वाकार इवेति। यथा सौगतानां ज्ञानाकारो बाह्यार्थाभेदेनानादिवासनादोषात् प्रतीयते, तथा रत्यादिरानन्दाद् भिन्नोऽप्यभिन्नतयाऽध्यवसीयत इत्यर्थः।

नन्वानन्दात्मिकाया रतेः स्वप्रकाशता न सङ्गच्छते, भेदे विषयविषयिभावाभावादत आह—स्वाकार इति। स्वाकारो ज्ञानांशः। तथा च गुरुमते ज्ञानांश इवौपनिषदमते आनन्दांशस्यापि स्वगोचरत्वं सम्भवतीति भाव इत्यपरे।

रत्यादौ रसपदप्रयोगः कादाचित्करसत्वावच्छिन्नप्रवृत्तिक इत्याह—चर्व्यमाणतेति। आनन्दाभेदेन व्यञ्जनयास्वाद्यमानस्थायिभावत्वं रसपदवाच्यतायाः प्राणाः प्रवृत्तिनिमित्तमित्यर्थः।

स च धर्मः कादाचित्क इत्याह—विभावादीति। साधारणीकृतविभावादिपरामर्शो रसचर्वणायाः पूर्वावधिः, तन्नाशश्चोत्तरावधिरित्यर्थः।

नन्वेवमानन्दस्थायिनोरविशेषादास्वादस्योत्कर्षापकर्षौ न स्यातामत आह—पानकेति।

अयं भावः—गुणालङ्कारचमत्कारभावास्वादस्थायिभावास्वादादयः सर्वेऽपि यावद्रसास्वादमवस्थिताः स्वं स्वं विषयमत्र रसास्वादे समर्पयन्तस्तदुत्कर्षापकर्षाभ्यां रसास्वादमप्युत्कर्षापकर्षाभ्यां योजयन्ति, खण्डमरिचादय इव पानकरसमिति।

पुर इवेति हृदयमिवेत्यादिभ्यां लौकिकमानससाक्षात्कारविषयत्वमुक्तम्। सर्वेत्यादिना 'पादे मे सुखम्' इत्यादिवद् देहावच्छेदस्यानवगाहनम्। अन्यदित्यादिना चास्वादाननुकूलानां पदार्थानामप्रतिभासः। ब्रह्मेत्यादिना चास्वादान्तरात् प्रकर्षः सकलबहिरर्थतिरोधानलक्षण उपलक्ष्यते।

ननु साधारणीकृतविभावादिसमवहितरतेस्तथाविधात् प्रतिसन्धानादानन्दो जायते, स लौकिकसन्निकर्षाद् भुज्यत इत्येवास्तु, किमानन्दपिण्डीकृतस्थायिभावभोगेनेत्यत आह—अलौकिकेति। अलौकिकभोगविषय इत्यर्थः। भोगस्य लौकिकत्वाङ्गीकारे चाध्यात्मिकसुखान्तरादवैलक्षण्ये काव्ये विशिष्य शुश्रूषा न स्यादिति भावः।

एतावता प्रबन्धेन विभावादिशब्दार्थाः, तेषां साधारण्येन परामर्शस्वरूपः संयोगः, विभावादिभिः सह पानकरसन्यायेनानन्दाभेदेन चर्वणाविषयः स्थायी भाव इति रसपदार्थोऽपि व्याख्यातः।

संयोगादित्यत्र पञ्चम्यर्थं व्याख्यातुमुपक्रममाणो देशयति—स चेत्यादि। सम्भवः सत्ता। तथा च नेयं हेतौ पञ्चमी, हेतुता हि रसस्य कार्यत्वे सति स्यात्। न च तथा सम्भवति, विभावादिपरामर्शस्यात्मगुणतया निमित्तकारणत्वाभ्युपगमे तन्नाशेऽपि तदनुवृत्तिप्रसङ्गात्। न खलु निमित्तनाशो निमित्तिनाशकः। नहि वयं काणादा इवापेक्षाबुद्धिनाशादनेकसङ्ख्यानाशमनुमन्यामहे, द्वित्वादेर्नित्यत्वादिति भावः।

धूमादित्यादाविव ज्ञापकहेतौ न पञ्चमी, नहि रसस्य साध्यस्य, न वा तद्व्याप्त्यादेः पूर्वं सिद्धिरित्याह—नापीति। संयोगादित्यत्र पञ्चम्यर्थो व्यञ्जकता व्यङ्ग्यता वा। सा च ज्ञापकत्वाद्यभेदेनाध्यवसिता जनकता जन्यता वा। सा च चर्वणाविषये रसपदार्थेऽन्वेति। रसपदार्थश्चर्वणाविषयः स्थायी। तत्र च चर्वणांशे जन्यत्वस्वरूपेण, विषयांशे ज्ञाप्यत्वस्वरूपेण व्यञ्जनस्यान्वय इत्याशयेन सिद्धान्तमाह—अपि त्विति। अत्र पक्षे निष्पत्तिपदं स्वरू-

पार्थकम्। अथवा स्थायिभावार्थक एव सौत्रो रसशब्दः। निष्पत्तिस्तु तेन सह पिण्डीकृता चर्वणा। तत्र यथायोगं पिण्डीकृतस्यैव पञ्चम्यर्थस्यान्वय इति ध्येयम्।

जनकताज्ञापकताकरम्बितं वस्तु लोके न पञ्चम्यर्थः क्वापि दृष्ट इत्याशङ्कते—कारकेति।

**प्रत्युषपद्मिनीयं रक्ता रविनायकालोकात्।**

इत्यादौ रक्तपदेनारोपितं लौहित्यमनुरागश्च, आलोकपदेन निरीक्षणत्वेनाध्यवसितो बिसप्रसूनविकासः प्रभा च, पञ्चम्या कारकं ज्ञापकं च पिण्डीकृतमुपस्थाप्यत इत्यनुभवस्य दुरपह्नवत्वादलौकिक (त्व) सिद्ध्यनुकूलव्यञ्जनावृत्तिसाधकत्वाल्लोके तद्दर्शनमभिमतमस्माकमित्याह—न क्वचिदिति।

मा भूत् कारकत्वज्ञापकत्वयोरभेदाध्यवसायः, श्लेषमर्यादयोपस्थितं कार्यत्वं ज्ञाप्यत्वं च यथायोगं निष्पत्तिपदार्थोत्पत्तौ रसपदार्थे चर्वणाविषयस्थायिनि चान्वेतीति पक्षान्तरमाह—चर्वणेत्यादिना, अभिधीयतामित्यन्तेन।

रसस्य निष्पत्तिरिति विग्रहे स्थायिन उत्पत्तिर्न प्रतीयते, बाधात्, किन्तु तद्विशेषणचर्वणाया इत्याह—चर्वणेति। उपचरिता आरोपिता। कार्योऽपि कार्यत्वमपि। उच्यताम् अभिधीयताम्, पञ्चम्येति शेषः। प्रत्येयत्वं प्रत्ययगोचरत्वं पञ्चम्यर्थः। तत्र विभावादिसंयोगजन्यं वाक्यार्थभूतं प्रत्ययं विशिनष्टि—लौकिकेति। प्रमाणेत्पत्र भावे ल्युट्। तथाविधप्रमितेरित्यर्थः।

ताटस्थ्यं विषययोर्विषयविषयिणोर्वा भेदः। तदवबोधस्तद्विषयकत्वम्। तच्छालि यन्मितयोगिनो ज्ञानम्, तस्मादित्यर्थः। मितयोगी अपरिपक्वसमाधिः। तज्ज्ञाने हि बाह्यविषयाणां परस्परभेदः। प्रधानादेर्जडाच्चैतन्यस्य च भेदो भासते। न चेह तथा, भेदादेरास्वादाननुकूलस्यास्वादागोचरत्वादिति भावः।

वेद्येति। वेद्यघटाद्याकारायां चित्तवृत्तौ चैतन्यप्रतिफलनमेव चितिशक्तेर्वेद्यसंस्पर्शः। तद्रहितं स्वात्ममात्रे स्वरूपमात्रे पर्यवसितं च यदपरिमितयोगिसंवेदनम्, तस्माच्च विलक्षणमित्यर्थः। इह हि विभावाद्याकारेण परिणतायां चित्तवृत्तौ चैतन्यं प्रतिफलतीति न स्वात्ममात्रे पर्यवसानमिति भावः।

प्रत्येयः प्रत्येत्वमभिधीयतां पञ्चम्येति शेषः। एवं च विभावादिपरामर्शव्यञ्जनाजन्यो रत्याद्यवच्छिन्नानन्दस्य प्रकाशो यः, तद्गोचरत्वं विभावादिसंयोगादित्यर्थः। तच्च रसेऽन्वेति। रसस्तु रत्याद्यवच्छिन्नानन्द इति पर्यवसिते रत्याद्यानन्दे प्रकाशगोचरत्वमाक्षिपति—तद्ग्राहकं चेति, विभावादीति। ज्ञानाजन्यं ज्ञानं निर्विकल्पकमिति भावः। स्वसंवेदनेति, स्वात्मकसंवेदनेत्यर्थः। तदगोचरत्वं तु भेदनियतं स्वस्मिन् न सम्भवतीति भावः। समाधत्ते—उभयेति। प्रत्येयत्वं प्रत्येयतादात्म्यम्, तद्विषयता च परस्परं भिद्येते। तथापि व्यञ्जनावृत्त्या पिण्डीकृतं तादात्म्यमानन्दांशे, विषयत्वं रत्यंशेऽन्वेतीत्याशयः।

उभयाभावस्वरूपस्य परस्परभिन्नस्य। उभयरूपत्वं परस्पराभेदाध्यवसायेन पिण्डीकारः। लोकोत्तररतां लोकोत्तरं व्यञ्जनव्यापारम्। गमयतीति व्यवस्थापयति। न विरोधं गमयति न विरोधेन बाध्यते। नहि विषयतात्वाभेदत्वपर्याप्तप्रकारतानिरूपिततदुभयव्यासक्तविशेष्यताकमलौकिकं वैयञ्जनिकबोधं प्रति बाधादेर्विरोधित्वं सम्भवतीति भावः।

अभिनवगोपानसीगुप्तपादो बालवलभीभुजङ्गो भवदेवभट्टो ग्रन्थकृता स्वगुरुरसौ पर्यायान्तरेणाभिहितः।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम् अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः ।

---

### सङ्केतः

व्याघ्रादयः इति । विभावादयः प्रत्येकं रसेषु पृथयुच्यमानाः अनैकान्तिकतां भजन्ते । संयोगस्तु अव्यभिचारी । तथाहि—यत्र बन्धुविनाशो विभावः, अश्रुपातादिश्च अनुभावः, चिन्तादैन्यादिश्च व्यभिचारी, सः अवश्यं शोको रसः । एवं अन्यत्रापि । अश्रुपातादयः इति । तत्र वीरे अश्रुपातः माघे निबद्धः । यथा—

**'स वमन् रुषाऽश्रु घनघर्मविगलदुरुगण्डमण्डलः ।**

**स्वेदजलकणकरालकरः व्यरुचत् प्रभिन्न इव कुञ्जरस्त्रिधा ॥**

इति । मिलिताः इति । संयोगरूपतयेति यावत् ।

### संङ्केतः (रुय्यकः)

त्रयाणामेव व्यञ्जकत्वम्, तत्रैवोदाहरणत्रयं दत्तम् । प्रणतिपर इति विषयसप्तमी । पूर्णेक्षणामित्यत्रेक्षणव्यापार ईक्षणशब्दः ।

### बालचित्तानुरञ्जनी

ननु विभावानुभावव्यभिचारिसंयोगादस्य रसस्य निष्पत्तिरिति विशेषाभिधाने व्यभिचारात्[सूत्रे] मिलिताः संमुग्धत्वेन [स्थिताः] निर्दिष्टा इत्यर्थः । ननु समूहादमुकस्य रसस्य निष्पत्तिरिति विशेषेण किमिति नोच्यत इत्यत आह व्याघ्रादय इति । 'इत्यादौ' इत्यनेन प्रकारेण पृथक् अमुकविभावादिसंयोगन्यायेन [संयोगस्यान्यत्र] निर्देशेऽपि ।

### काव्यादर्शः

ततोऽभिव्यज्यन्ते रसः । प्रतीत्यैव रस्यन्ते । तत्राङ्गित्वेनाभिव्यक्तौ ध्वनिः, अन्यथा तु रसवदाद्यलंकारः । विभावानामनुभावानां व्यभिचारिणां च पृथक् पृथग् रसेषु नियमो नास्ति, व्यभिचारात् । सामग्री तु न व्यभिचारिणीत्याह—व्याघ्रादयः इति । यत्रापि विभावानामनुभावानां व्यभिचारिणां वा प्रधानत्वेन विवक्षितानां केवलानामेवोपादानं तत्राप्यौचित्याद् अन्यतमद्वयाक्षेपः ।

## विवेकः

इदानीं विभावानुभावव्यभिचारिणामन्यतमेनैव रसनिष्पत्तिरिति ये मन्यन्ते तेऽपि भ्रान्ता इति प्रदर्शयितुं सूत्रकर्तुरभिप्रायं व्याचष्टे व्याघ्रादय इति—यथैते स्त्रीनीचानां भयहेतवस्तथा वीरादीनां वासाहानि (-मुत्साहादि) हेतवः। अश्रुपातादय इति—एतेनाश्रुस्तम्भस्वेदरोमाञ्चस्वरभेदवेपथुवैवर्ण्यप्रलयात्मानोऽष्टौ सात्त्विका भावाः सूचिताः। एवं व्यभिचारिणोऽपीत्याह—चिन्ताऽऽदय इति। अतोऽमी पृथगेकैकशो नैकस्मिन्नन्ते पक्षे व्यवस्थिताः केवलानां व्यभिचारदर्शनात्, ततो मुनिना स्वसूत्रे मिलिता इति द्वन्द्वेन निर्दिष्टाः। नन्वत्राप्यनैकान्तिकत्वम्, केवलानामेव विभावादीनां निर्देशे रसस्य प्रतीतेः। सत्यं, किन्तु यत्रापि प्रयोगे केवलानां निर्देशस्तत्राप्यसाधारण्येन नान्यतमद्वयापेक्षा, त्रयाणां व्यञ्जकत्वम्।

## दीपिका

अत्र केचिद्विभावमात्रस्य, केचित्सञ्चारिमात्रस्य प्रतीत्या रसनिष्पत्तिमाहुः, वियदित्यादिषु तथा दर्शनात्। यत्र च सर्वसानिध्यं तत्र यस्योत्कटतया प्रतीतिस्तत्प्रतीतिरेव रसबीजं, शेषस्तु वर्जनीयसन्निधिरेवेति ये मन्यन्ते तान्सर्वान्प्रत्याह-व्याघ्रादय इत्यादि। एते हि यथा भीरूणां भयं तथा वीराणामुत्साहमपूर्वदर्शिनामाश्चर्यं, पुत्रादिव्यापादने च शोकं जनयन्तीति काव्यनिबद्धानामेषां प्रतीत्या कस्य रसस्याभिव्यक्तिर्नियम्यताम्, तस्मात्सहकारिसमवधानरूपया सामग्र्यैव नियन्तुं। शक्यम्। सा च विभावादित्रयमिलनरूपमेव। एवमुत्तरयोरपि वेदितव्यम्। पृथगेकैकशः। अनैकान्तिकत्वादेकस्मिन्नन्ते पक्षेऽनियतत्वात्। सूत्रे भारतीये। मिलिताः सर्वप्रधानद्वन्द्वेऽस्मदीये च सूत्रे समानतया निर्दिष्टाः। एतेन क्वचित्कस्यचिदुद्भटत्वमपि स्वात्मदार्ढ्यमेव धत्ते, न तु परशक्तिव्युदासम्।

## दर्पणः

इह ये केचिद्विभावानामन्यतमेनैव निष्पत्तिः। यत्र तु त्रयाणां सद्भावस्तत्रोद्भटतया प्रतीतस्य एतस्यैव रसनंबीजता। अन्यत् स्ववर्जनीयसन्निधितयावस्थितिरिति मन्यन्ते। तान् प्रत्याह व्याघ्रादय इति। अयमाशयः। यदि विभावमात्रस्योपनिबन्धे रसप्रतीतिस्तदा भयानकरसस्य निष्पत्तये व्याघ्रादिमात्रस्योपनिबन्धे कथं तस्य प्रतीतिः स्यात्? ते हि भीरूणां भयमिव धीराणामुत्साहम् अपूर्वदर्शिनां विस्मयं व्याघ्रादिभयार्थानां [?] क्रोधं जनयन्तीत्यनेकरसविभावः। एवमश्रुपातादय इत्यादि व्याख्येयम्। अतश्च विभावनां पृथक् पृथक् रसनिष्पादकत्वे अनैकान्तिकदोषापातः। तदाहुः-पक्षसपक्षविपक्षवृत्तिरनैकान्तिक इति। इह हि येन विभावेन केवलेन भयानको निर्वाह्यः तस्य पक्षे वीरादावपि संभवः विभावादीनां मिलितानां तु कारणत्वेन कश्चिद्दोष इत्यभिप्रेत्योक्तम्—'विभावानुभावव्यभिचारिसंयोगद्रसनिष्पत्तिरिति। एवञ्च मिलिता विभावादयः प्रतिनियतमेव रसं बोधयितुमीशत इत्याशयः यत् क्वचित्तु यत्र एकस्य द्वयोर्वा सद्भावस्तत्र यद्यन्यतमाक्षेपः संभवति तदा न दोष इत्याह—

## साहित्यचूडामणिः

इतोऽपि काञ्चित् सूत्रशिक्षामाह—व्याघ्रादय इति। यदि किल सूत्रे विभावेनानुभावेन व्यभिचारिणा वा व्यक्तिनिष्ठेन तदुचितस्य व्यक्तिनिष्ठस्य स्थायिनः संयोग इत्यभ्यधास्यत तदानैकान्तिकत्वमापत्स्यत व्यभिचारात्, तन्मूलश्च सर्वस्यापि रसप्रपञ्चस्य सङ्करप्रसङ्ग इति विभावादयो मिलिताः सामान्याकारेणोपात्ताः। वीराद्भु-

तेति। व्याघ्रादि हिंस्रमालोक्य यथा कश्चित् कातर्याद् बिभेति तथान्यो विक्रमादुत्सहते अपरः कुतूहलेन विस्मयते इतरः क्रूरतया क्रुध्यतीति विभावव्यभिचारः।

करुणेति। यथा कश्चिद् रतिमनुभवन्नभिलाषेण रोदिति एवमपरः परदुःखेन शोचति अन्यः सर्पादिदंशाद् बिभ्यदपीत्यनुभावव्यभिचारः।

वीरोति। रममाणस्य चिन्ता एवमुत्सहमानस्याशोचतोऽविभ्यतोऽपीति व्यभिचारिव्यभिचारः इत्यनैकान्तिकभीत्या मेलकेन व्यपदेशः।

### सम्प्रदायप्रकाशिनी

ननु रसविशेषनिर्ज्ञानाय विभावादीनि विभज्य निर्देशमर्हन्ति, तस्मादयुक्तोऽयं सामान्यतो निर्देश इत्यत आह—व्याघ्रादय इत्यादि। व्याघ्रादयो हि यथा भयसंस्कारवतां भयाय कल्पन्ते, तथोत्साहादिसंस्कारवतां तदभिव्यक्तये भवन्ति। अतो विभावानामनैकान्तिकत्वम्। अथानुभावानामाह—अश्रुपातादय इति। शृङ्गारे हि रोषहर्षादिना, करुणे शोकेन, भयानके च भयेन। व्यभिचारिणां दर्शयति—चिन्तादय इति। शृङ्गारे मानादिना, वीरे मनोरथादिना, करुणे दुःखेन, भयानके भयेन चिन्ताद्याविर्भावः। इतिर्हेतौ। पृथगिति त्रिष्वेकतरस्यापि न विभज्य निर्देशार्हतेति द्योतितम्।

### मधुमती

भरतसूत्रे मिलितविभावादिनिर्देशस्य प्रयोजनमाह—व्याघ्रादयः इति। न च केवलात् विभावादितोऽपि यो यद्रसाधिकारी तस्य तदभिव्यक्तिः स्यात् इति वाच्यम्। एकस्य अनेकरसाधिकारित्वसम्भवेन दोषतादवस्थ्यात्। न च—मिलितव्यञ्जकत्वेऽपि, यत्र विभावानुभावव्यभिचारिणां साधारण्यम्, तत्र शृङ्गारभयानकयोः किं विनिगमकम्? एकस्या एव अङ्गनातनोः कुणपत्वेन कामिनीत्वेन च परिव्राट्कामुकयोः प्रतीतिसत्त्वात्। तथा च कामिन्याः उभयरसविभावत्वं, चिन्तायाः उभयव्यभिचारित्वं, अश्रुपातस्य उभयानुभावत्वं च सिद्धमेव—इति वाच्यम्। तत्र केषांचित् साधारण्येऽपि, असाधारणं अन्यं व्यभिचारिणं अनुभावं वा समादाय रसविशेषाभिव्यक्तिनियमात्। तथैव च अनुभवात्।

### विस्तारिका

ननु विभावादिभ्यः प्रत्येकमास्वादसम्भवे मुनिसूत्रे द्वन्द्वेन, भवदीयसूत्रे च तैरिति बहुवचनेन किमिति साहित्यमभिहितमित्यत आह—व्याघ्रादय इत्यादि। एतेन भीरूणां भयमिव, वीराणामुत्साहम्, अपूर्वदर्शिनां विस्मयम्, व्यापादितबन्धूनां क्रोधमिति तन्मात्रोपनिबन्धे परस्परविरोधादास्वादानुदये व्यभिचारेण कारणत्वं न स्यात्। तद्वक्ष्यति—अनैकान्तिकत्वादिति।

एवमनुभावसञ्चारिमात्रोपनिबन्धेऽपीत्याह—अश्रुपातादय इति। शृङ्गारस्य विप्रलम्भस्य। चिन्ता संस्कारोद्बोधको ध्यानाख्यो ज्ञानविशेषः; शृङ्गारे चिन्तावगतरूपादीनाम्, वीरे सहायानाम्, करुणे बन्धुगतोपकारादीनाम्,

भयानके भयहेतुगतचण्डत्वादीनां ध्यानस्य परिपोषकत्वात् । पृथगेकैकम् । अनैकान्तिकत्वाद् व्यभिचारित्वादिति । व्याख्यातमेव । सूत्रे मुनिकृतेऽस्मत्कृते च ।

## सारबोधिनी

अथ कः पुनरयं स्थायी । चित्तवृत्तेराशु विनाशिन्याः स्थैर्याभावादन्यस्य वक्तुमशक्यत्वादिति चेदुच्यते । आप्रबन्धं विरुद्धाविरुद्धभावैरविच्छिन्नप्रवाहश्चित्तवृत्तिसन्तानविशेष एव स्थायी । न च तस्याशु विनाशित्वेन कथं स्थायित्वमिति वाच्यम् । वासनात्मतया सूक्ष्मरूपतया वावस्थानसंभवात् । अत एवोक्तम्—

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छद्यते न यः ।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥**

अन्येऽप्याहुः

**चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः ।**
**रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥**

चिरमिति व्यभिचारवारणाय । अनुबन्धिभिर्विभावादिभिः । तथा—

**सजातीयविजातीयैरतिरस्कृतमूर्तिमान् ।**
**यावद्रसं वर्तमानः स्थायीभाव उदाहृतः ॥**

अथ विभावः ।

**बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिताः ।**
**अनेन यस्मात् तेनायं विभावः परिकीर्तितः ॥**
**आलम्बनं स तु रसो यमालम्ब्य प्रवर्तते ।**
**उद्दीप्यते रसो येन स चोद्दीपनसंज्ञकः ॥**

अथानुभावः ।

स्थायिभावाननुभावन्तः कटाक्षभुजाक्षेपादयो रसपोषका अनुभावाः । अत एव भरतः—

**अनुभावो विकारस्तु भावसंसूचनात्मकः । इति ॥**

सात्त्विका अप्यष्टौ स्तम्भादयोऽनुभावरूपा एवेति न पृथगुक्ताः । अथ व्यभिचारिणः ।

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।**
**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥**

वस्तुतो विभावनानुभावनासञ्चारणात्मकव्यापारत्रयवत्त्वमेव विभावादित्वम् । येषां व्यापाराणां रत्यादेरीषत्प्रकाशः स्फुटतरप्रकाशः, स्फुटतमप्रकाशः फलं विगलितवेद्यान्तरत्वं चमत्कारः, पुरः स्फुरणादिकञ्च । **अथ** भावसामान्यलक्षणम्—

**भावयति वासयति इति भावो वासना** । वर्णनीयतन्मयीभवनयोग्यः । तदुक्तम्—

**सुखदुःखादिभिर्विभावस्तद्भावभावनम्** ।

ननु विभावादिभ्यः प्रत्येकमास्वादसंभवे मुनिसूत्रे द्वन्द्वेन, भवदीसूत्रे 'व्यक्तः स तैः' इत्यत्र **तैरिति बहुवचनेन** च किमिति साहित्यमुक्तमित्यत आह व्याघ्रादय इति । पृथगेकैकम् । **अनैकान्तादव्यवस्थितेः । तथाहि । एते** भीरूणां भयमिव । वीराणामुत्साहमपूर्वदर्शिनां विस्मयं व्यापादितबन्धूनां क्रोधं जनयन्तीति **नैकैकस्मिन् व्यञ्जक**त्वमित्यर्थः । एवमनुभावसञ्चारिमात्रोपनिबन्धेऽपीत्याह अश्रुपातादय इति । चिन्तादय इति च । **शृङ्गारेऽवगतरूपा**दीनां भयानके भयहेतुगतचण्डत्वादीनां चिन्तया परिपोषणात् ।

## काव्यप्रदीपः

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम् । अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः । चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानाम् । इत्यन्यद्वयाक्षेपानियमात् । नन्वेवं मिलितस्यैव व्यञ्जकत्वे एकैकोपस्थितौ रसव्यक्तिर्न स्यात् । दृश्यते चासौ ।

## आदर्शः

अत्रापि अवगमयतीत्यन्वयः । मिलितानामेव विभावादीनां रसबोधकत्वे भरतसूत्रे द्वन्द्वनिर्देशस्याभिप्राय इति दर्शयितुं प्रत्येकस्य रसबोधनासामर्थ्यं दर्शयति—व्याघ्रादय इति, भयानकस्येव वीराद्भुतरौद्राणामपि विभावा इत्यर्थः । एवमुत्तरद्वयेऽपि अनुभावा व्यभिचारिण इति द्वयं विधेयं बोध्यम् । पृथगनैकान्तिकत्वादिति । अनैकान्तिकत्वं साधारणत्वम्, तच्च नानाफलस्य; तथाच नानाफलसाधारणत्वादित्यर्थः । एवञ्च वर्णितात् प्रत्येकतो विरोधेन न कस्यापि फलस्योत्पत्तिरतो मिलिता निर्दिष्टा इत्यर्थः । मिलितनिर्देशाञ्च साहित्यलाभे दण्डचक्रादिवन्मिलितानामेव रसबोधकत्वमित्यर्थः । तथाच नानाफलसाधारणेभ्योऽपि सर्व्वसाधारणं यत् फलं तदेव जायते इत्यर्थः । सकलं फलन्तु न सर्वसाधारणमित्यदोषः ।

## सुधासागरः

प्रकृतमनुसरामः—

ननु विभावादयो मिलिताः किमति व्यञ्जकत्वेन निर्दिष्टाः एकैकस्य व्यञ्जकत्वे व्यभिचारात् । अथैकैकस्मादन्यद्वयाऽऽक्षेपात्तत्राप्यस्त्येव रसव्यक्तिरित्यव्यभिचार इति चेत्, न । व्याघ्रादयो हि विभावा भयानकस्येव रौद्राद्भुतवीराणाम् । अश्रुपातादयोऽनुभावा शृङ्गारस्येव करुणभयानकयोः । चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामित्यन्यद्वयाऽऽक्षेपाऽनियमात् । एते व्याघ्रादयो भीरूणां भयमिव वीराणामुत्साहमपूर्वदर्शिनां विस्मयं व्यापादितबन्धूनां क्रोधं जनयन्ति । एवमनुभावसञ्चारिणोरप्यनैयत्यमिति भावः ।

## विवरणम्

विभावादि संवलितायाः साधारण्येन व्यञ्जनया प्रतीताया रतेरनुसन्धानेनाध्यात्मिकं सुखं जन्यते । तदीयो मानससाक्षात्कारः काव्योपनीतरत्याद्यभेदमानन्दे विषयीकरोति दोषविशेषादिति तु न्याय-वैशेषिक-सौत्रान्तिक-मौरारदर्शनसधारणः पन्थाः ।

विभावादीनां प्रत्येकमेव रसाभिव्यञ्जनसामर्थ्यम्, क्वचिन्मेलनं त्वर्थात् । अत एव वियदलिमलिनेत्यादौ केवलाद् विभावादेव रसाभिव्यक्तिरिति सूत्रे संयोगपदं न मिलितविभावादिपरामर्शार्थकमिति केचित् । तान् निरसितुमाह—व्याघ्रादय इति । तथा च मालतीमाधवे—'रे रे सङ्करपुरवासिणो जाणबआ !' इत्यादौ वर्ण्यमानो व्याघ्रादिविभावो मदयन्त्यादौ भयानकम्, माधवे वीरम्, मकरन्दे रौद्रम्, तटस्थेष्वद्भुतं विभावयति । न चैकस्य सहकारिवैचित्र्यं विना विचित्रकार्योपधायकत्वं सम्भवति । तथा च मदयन्तीगतभयानकाभिव्यक्तौ विद्रवणादेरनुभावस्य, सम्भ्रमादेर्व्यभिचारिणश्च सहकारित्वमवश्यमेषितव्यम्, एवमन्यत्रापीति भावः ।

अश्रुपातादय इति । 'नयनस्य बाष्पधारा नाला नीलाम्बुजातस्य' इत्यादौ वर्ण्यमानोऽश्रुपातः प्रोषितागतभर्तृकायां शृङ्गारम्, प्रनष्टबान्धवायां शोकम्, भीषणवस्तुरुद्धायां भयमभिव्यनक्तीति भावः ।

चिन्तादय इति । चिन्ता उपायजिज्ञासा, सा च सङ्गम-परपराभव-शोक-भयापनोदनादिविभावानासाद्य यथायथं शृङ्गार-वीर-करुण-भयानकानभिव्यनक्तीति भावः ।

**वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः।**
**धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे॥ २७॥**

**इत्यादौ**

---

### सङ्केतः

वियदलीति। अङ्कः चिह्नम्। टङ्कः बन्धः। अत्र केवलविभावसद्भावेऽपि अन्यतमद्वयाक्षेपकत्वेन रस-पुष्टिः। तेन नानैकान्तिकत्वम्। अन्यतमद्वयाक्षेपश्च प्रसीद इतिपदात्। प्रसन्नावलोकनमुखप्रसत्तिप्रसादवचनादिः अनुभाववर्गः, प्रणतिपरे इति पदाच्च औत्सुक्याभिलाष दैन्यादिः, मुग्धपदाच्च त्रासत्रपाहर्षादिः व्यभिचारी च समाक्षिप्यते इति।

### बालचित्तानुरञ्जनी

केवलाद्विभावात् केवलादनुभावात् केवलाद् व्यभिचारिभावात् रसनिष्पत्तिदर्शनादित्याशङ्क्याह विय-दित्यादिना। आकाशं भ्रमरनीलोदकगर्भमेघच्छन्नम्, एवं विधा दिशां श्रीः भ्रमरकोकिलध्वनिभिरलङ्कृता भूमि-र्नवाङ्कुचिह्नबन्धा। अतः हे मुग्धे! दयिते प्रणतिपरे मयि प्रसीद। आकाशादय उद्दीपनविभावाः। एतैरेव केवलैः रसः प्रतीयते।

### काव्यादर्शः

यथा—'वियदलि' इति। अत्र च मुख्यार्थबाधाद्यभावान्मध्यकक्षा(?) लक्षणायास्तृतीयस्या अभावाद-भिधा ध्वननं चेति द्वावेव व्यापारौ, अत एवाभिधामूलत्वम्। टङ्को बन्धः। प्रणतिपर इति विषयसप्तमी। ईक्षण-मिति। ईक्षणव्यापारे ईक्षणशब्दः। अन्यतम इति। विभावापेक्षयानुभावव्यभिचारिणां, अनुभावापेक्षया विभावव्यभिचारिणां, व्यभिचार्यपेक्षया च विभावानुभावानामन्यतमत्वम्। तथा हि 'वियदलि' इत्यादौ विभावभू-तस्य सौन्दर्यस्यानुगतत्वेन 'प्रसीद' इति पद महिम्नानुभाववर्गो मुग्धपदाच्च व्यभिचारिवर्गो भाति।

### विवेकः

तत्रैवोदाहरणत्रयं दत्तं यथा वियदित्यादि। मधुकरकोकिलकूजितैरित्युपलक्षणे तृतीया। प्रणतिपर इति विषयसप्तमी। अत्र मुग्ध इत्यालम्बनविभावस्तथाभूता आकाशादय उद्दीपनविभावाः।

### दीपिका

एषूदाहरणेषु तदा का गतिरित्याह—वियदिति। अलिमलिना अम्बुगर्भाश्च मेघा यत्रेति विग्रहः। मधुकरा एव कोकिलाः—तथा च यथा वसन्ते कोकिलैर्दिशां काऽपि लक्ष्मीस्तथा सम्प्रति मधुकरैर्मदत्वेन

(मदमत्तत्वेन) मेदुरध्वनिभिरित्येकः (समाधानोपायः), क्वचन क्वचन केऽपि कोकिलाः प्रावृष्यपि माद्यन्तीत्यपरः। पाषाणप्रायः कठोरप्रदेशष्टङ्कः। प्रणतिपर इति विषयसप्तमी। अत्र मुग्धा प्रणतिपरश्च कान्तः परस्परमालम्बनं, गगनादयस्तूद्दीपनं, सामर्थ्यावसेयाश्चावहित्थावेगादयः सञ्चारिणः, रोमाञ्चस्तम्भकाकुयाञ्चाऽऽदयश्चानुभावाः।

## दर्पणः

वियदित्यादि। मधुकराणां कोकिलानां च कूजितं तैरिति लक्षणे तृतीया। वर्षास्वपि जम्बुफलास्वादन-लम्पटानां च कूजितं वर्ण्यत इति न विरोधः। अभिनवाङ्कुरा एवं प्रज्ञाविशिष्टानि येषु एवंभूताः टङ्काः पाषाणदारण-प्रायकुचोरःप्रदेशा यस्याः अधररागः। अत्र प्रणतिपरो नायकः मुग्धा च परस्परमालम्बनं वर्णितस्वरूपं गगनादिचोद्दीपनम्। एतन्मात्रसद्भावे चावहित्थवेगादीनां। रोमाञ्च स्तम्भादीनां सामर्थ्यादाक्षेपः।

## साहित्यचूडामणिः

नन्वितोऽप्यनैकान्तिकत्वं यद् विभावादीनामेकैकश-स्त्रयाणामवस्थानमुदाहरणेष्ववलोक्यत इत्या-शङ्क्य परिहरति—वियदिति। अत्र हि केवलानामनुभावादिशून्यानामालम्बनोद्दीपनरूपाणां विभावानामवस्था-नम्।

## सम्प्रदायप्रकाशिनी

ननु विभावादिसंयोगाद् रसनिष्पत्तिरित्युच्यते। नैतदस्तीति चोदयन् पृथग् व्यञ्जकत्वमेषामुदाहृत्य दर्श-यति—वियदलिमलिनेत्यादिश्लोकत्रयेण। तत्र प्रथमश्लोके धारारूढमानतया प्रसादावसरानभिज्ञां कामपि मुग्धां प्रसादं नेतुं वयस्या वक्ति—हे मुग्धे अवसरानभिज्ञे प्रसीद प्रसादस्य तवायं प्राप्तः कालः। कुतः, वियत् तावत् नवाम्बुवाहनिरन्तरं, दिशोऽपि मधुकरपरभृतकूजितैरुद्वेलश्रियः, भूरपि नवाङ्कुराङ्कविच्छित्तिमती। अतो वियति दिक्षु धरण्यां वा चक्षुषी निधातुमेव न शक्यते, प्राणधारणकथा तु दूरे। यदस्ति तदस्तु, किमधिकमापतिष्यति प्राणपरि-त्यागात्, गर्वोत्सिक्तं तु कितवं द्रष्टुमेव नोत्सह इति चेन्मन्यसे, तदपि नास्ति। यतः प्रणतिपरो वर्तते दयितः। अत्र केवलमालम्बनोद्दीपनरूपा विभावा एव निबद्धाः, पुष्कला च रसाभिव्यक्तिः।

## मधुमती

ननु प्रत्येकमपि रसः अनुभयते इत्यत आह—वियदित्यादि।

भरतसूत्रे मिलितविभावादिनिर्देशस्य प्रयोजनमाह---व्याघ्रादयः इति। न च केवलात् विभावादितोऽपि यो यद्रसाधिकारी तस्य तदभिव्यक्तिः स्यात् इति वाच्यम्। एकस्य अनेकरसाधिकारित्वसम्भवेन दोषादवस्थ्यात्। न च---मिलितव्यञ्जकत्वेऽपि, यत्र विभावानुभावव्यभिचारिणां साधरण्यम्, तत्र शृङ्गारभयानकयोः किं विनिगमकम्? एकस्या एव अङ्गनातनोः कुणपत्वेन कामिनीत्वेन च परिव्राट्कामुकयोः प्रतीतिसत्त्वात्। तथा च कामिन्याः उभयरसविभावत्वं, चिन्तायाः उभयव्यभिचारित्वं, अश्रुपातस्य उभयानुभावत्वं च सिद्धमेव---इति वाच्यम्। तत्र केषांचित् साधाण्येऽपि, असाधरणं अन्ये व्यभिचारिणं अनुभावं वा समादाय रसवि-शेषाभिव्यक्तिनियमात् तथैव च अनुभवात्।

## विस्तारिका

नन्वेवं वक्ष्यमाणलक्ष्येषु कथमेकैकतो रस इत्यत आह—वियदित्यादि। मुग्धे विवेकरहिते। दयिते प्रसीद, तद्विषयं प्रसादं कुरु। एवमुद्दीपनोदये मानभङ्गो भविष्यत्येव, किमिति दयितस्य प्रणतिमुपेक्षसे? दयितस्य न स्वामिनः। नभसि दिशि भुवि च। मानवैरिणमाह—अलय इव मलिना अम्बुगर्भाश्च मेघा यत्र। अलीत्यनेन सादृश्यादुद्दीपनान्तराणामलीनां स्मरणम्। अम्बुगर्भत्वेनावृष्टत्वाच्चिरस्थितिः। मधुकरकोकिलाभ्यां साहित्येन कूजनम्। केषाञ्चन कोकिलानां वर्षास्वपि मदः। श्रीः सम्पत्तिः। संपद्वशादकालेऽपि कोकिलकूजितोदयः। अभिनवा अङ्कुरा यत्र, एवमङ्को मध्यभागो यस्य तथाभूतष्टङ्कः पाषाणप्रायः कठिनस्थानविदारको यत्रासौ तथा।

## सारबोधिनी

वियदित्यादि। अलिमलिनश्चासावम्बुगर्भमेघश्चेति कर्मधारयस्ततो बहुव्रीहिः। अभिनवाङ्कुर एवाङ्कः अङ्कार्थटङ्कः पाषाणदारण इति। अङ्के इति वा सप्तम्यन्ते। पीडाजनकत्वात् टङ्कः, मुग्धे विवेकरहिते। एवमुद्दीपनोदये मानभङ्गो भविष्यत्येव किमिति दयितस्य प्रणतिमुपेक्षस इति। यतः कोकिलेति केषाञ्चन कोकिलानां वर्षास्वपि मदः।

## काव्यप्रदीपः

यथा

'वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे॥'

इत्यादौ कामिनीगताया रतेरालम्बनमात्रस्योपस्थितौ।

## आदर्शः

ननु यत्र श्लोके मिलितानामनिर्देशस्तत्राप्यनुभवसिद्धस्य रसबोधस्योत्पत्तौ का गतिरित्याशङ्क्य श्लोकत्रये मिलितनिर्देशाभावं दर्शयति—वियदलीत्यादि। तत्राद्ये, हे मुग्धे भद्राभद्रविवेचनशून्ये, दयिते प्रणतिपरे सति प्रसीद, बहुतरोद्दीपकसत्त्वात्, आवश्यकेऽन्यदा प्रसादे तु तव गौरवरक्षा न भविष्यतीति भावः। अतो बहुतरोद्दीपनानि दर्शयति—वियदलीत्यादि। अलिवन्मलिनः अम्बुगर्भश्च मेघो यत्र, वियत् तादृशम्, तथाच तादृशोद्दीपकदर्शनादूर्ध्वमुखी स्थातुं न शक्ष्यसि, तथा मधुकरा एव सुस्वरत्वात् कोकिलाः, तेषां कूजितैः दिशां श्रीः, वर्षास्वपि केचित् कोकिला माद्यन्तीत्यतो मधुकरकोकिलयोर्द्वन्द्वो वा। तथाच तच्छ्रवणात् तिर्य्यङ्मुख्यपि स्थातुं न शक्ष्यसीति भावः। तथा अभिनवाङ्कुरा एव अङ्कस्थाः टङ्काः पाषाणदारकास्त्रविशेषा यस्याः, धरणिस्तादृशी, उद्दीपकत्वेन दुःखदायकत्वादङ्कुराणां मर्म्मच्छेदकटङ्करूपणम्। तथाच तद्दर्शनादधोमुख्यपि स्थातुं न शक्ष्यसीति भावः। अत्र मानिनीविप्रलम्भस्य दयित आलम्बनम् तत्प्रणतिमेघादय उद्दीपनानीति विभावमात्र स्थितिः।

## सुधासागरः

नन्वेवं मिलितस्येव व्यञ्जकत्वे एकैकोपस्थितौ रसव्यक्तिर्न स्यात्। दृश्यते चाऽसौ। यथा वियदलीत्यादौ। पुष्पिताग्रा छन्दः। 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रे' —ति लक्षणात्। मानवतीम्प्रति सख्या इयमुक्तिः।

अयमर्थः। हे मुग्धे मानभङ्गावश्यम्भावे दयितप्रणामोपेक्षणाद् विवेकरहिते। प्रणतिपरे मुहुः प्रणामशालिनि। दयिते इति विषयसप्तमी प्रेमपात्रे न तु स्वामिमात्रे। प्रसीद तद्विषयं प्रसादं कुरु। मानभङ्गसामग्रीमाह—वियदित्यादि। वियदाकाशम्। अलयो भ्रमराः तद्वन्मलिना अत्यन्तकृष्णाश्च तेऽम्बु गर्भे येषां तथाभूता मेघा यत्र तादृशं द्रष्टुमशक्यमिति भावः। अस्तीति शेषः सर्वत्र बोध्यः। अम्बुगर्भत्वेन दृष्टत्वात् स्थैर्यं व्यज्यते। मधुकरकोकिलयोः सहितयोः कूजितैर्दिशां श्रीः शोभा। वर्षायां कोकिलकूजिताभावेऽपि मुग्धायां भयप्रदर्शनार्थं सख्याः प्रतारणोक्तिरियमिति केचित्। मधुकरा एव कोकिला इति रूपकम्। तथाच यथा वसन्ते कोकिलाः कान्तिहेतवः तथेदानीं मधुकरा इति भावः। यद्वा क्वचन केचन कोकिलाः प्रावृष्यपि माद्यन्तीति यथाश्रुतमेव सम्यगिति चण्डीदासादयः। धरणिः भूमिः। अभिनवा नूतना अङ्कुरा एवाङ्के उत्सङ्गे टङ्का पाषाणदारकाः मर्मभेदित्वात् पाषाणप्रायकठिनमानभञ्जकत्वाद्वा यस्यां सा तादृशी। अभिनवाः अङ्कुरा यत्र एवंविधोऽङ्को मध्यो यस्य स तथाभूतष्टङ्कः पाषाणप्रायकठिनस्थानं यस्यां सेति चक्रवर्त्तिभट्टाचार्याः आहुः। अभिनवाङ्कुरा। अङ्कश्चिह्नं यत्र तथाविधष्टङ्कः पाषाणप्रायदेशो यत्रेति गोविन्दमहामहोपाध्यायाः। एवमूर्ध्वमधस्तिर्यग्वा उद्दीपनप्रवृत्त्या तद्रहितदृष्टिसञ्चारस्थलाभावात् प्रणतिपरे प्रेयसि दृष्टिपातं कुर्विति भावः।

इत्यादौ कामिनीगताया रतेरालम्बनोद्दीपनविभावमात्रस्योपस्थितौ।

## विवरणम्

पृथगिति। इतरद्विकासहितस्यैकस्यैवेत्यर्थः। अनैकान्तिकत्वाद् रसविशेषसमुल्लासानुपधायकत्वात्। परोक्तानि प्रत्येकं रसाभिव्यञ्जकतास्थानान्यनूद्य तत्रापि मिलितव्यञ्जकत्वं समर्थयते—वियदित्यादिना। अलिमलिना अम्बुगर्भाश्च मेघा यत्र, तथा वियत्। मधुकराणां कोकिलानां चेति द्वन्द्वः। वर्षास्वपि कोकिलमदः कविसमयप्रसिद्धः—

**महदपि परदुःखं शीतलं सम्यगाहुः**
**प्रणयमगणयित्वा यन्ममापद्गतस्य।**
**अधरमिव मदान्धा पातुमेषा प्रवृत्ता**
**फलमभिनवपाकं राजजम्बूद्रुमस्य॥**

इति कालिदासप्रयोगात्।

अभिनवाङ्कुरा एव, अङ्कस्य मानादेः कलङ्कस्य पाषाणत्वेनार्थादध्यवसितस्य टङ्काः पाषाणदारणा यस्यामीदृशी धरणिः। 'टङ्कः पाषाणदारणे' इति कोशः। 'दयिते' इति विषयसप्तमी। 'मुग्धे' इति सम्बुद्धौ प्रथमा।

इत्यादाविति। केवलानां विभावानामेव यद्यप्यवस्थितिरिति सम्बन्धः। मुग्धासमवेताया रतेरालम्बनं दयितः, प्रावृडादयश्चोद्दीपनविभावा एव केवलं निर्दिष्टाः, न त्वनुभावा इत्याक्षेपार्थः।

प्रसीदेत्याशंसया विद्यमाना रत्यादयोऽनुभावा ईर्ष्या व्यभिचारी चाक्षिप्यन्ते। तेन विरहस्यास्वाद इति समाधेरर्थः।

**परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः**
**कथमपि परिवारप्रार्थनाभिः क्रियासु।**
**कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-**
**मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २८ ॥**

इत्यादौ

---

### सङ्केतः

परिमृदितेति। अत्र कथमपिपदात् ग्लान्यालस्यश्रमप्रभृतिः व्यभिचारिगणः, अङ्गं प्रवृत्तिः, कपोलः इति पदेभ्यः—कस्याः अङ्गम् ?इत्याद्यपेक्षायां विभावश्च लभ्यते।

### बालचित्तानुरञ्जनी

नायकं प्रति दूतीवचनम्। प्रियायाः शरीरं परिमृदितबिसिनीवत् म्लानम्। अस्याः क्रियासु प्रवृत्तिः क्लेशेन परिवारप्रार्थनाभिर्भवति। अभिनवगजदन्तखण्डकान्तिभिरस्याः कपोलः पूर्णस्य चन्द्रस्य शोभां प्राप्नोति। अत्राङ्ग-म्लानत्वादेः केवलादनुभावात् शृङ्गाररसोत्पत्तिः।

### काव्यादर्शः

'परिमृदित' इत्यादौ चाङ्गम्लानत्वादेरनुभावस्यानुगत्या प्रवृत्तिः। 'कथमपि' इति पदार्पितोऽभिलाषचि-न्तौत्सुक्यग्लान्यालस्यादिर्व्यभिचारी विभावश्च भाति।

### विवेकः

परीत्यादि—परिमलन (मर्दन) मङ्गप्रत्यङ्गलुलनं तज्जनितया ग्लान्या निद्राच्छेदादिः। प्रवृत्तिः कथमपी-त्यादिना विषयनिवृत्तिः। कलयत्यनुकुरुते। लक्ष्मीः कान्तिः। अभिनवेति च्छेदविशेषणम्, तथाभूतेन कपोलपाण्डु-त्वेन कोऽपि कामाभिषङ्गः सूच्यते।

### दीपिका

परीति—क्रियासु स्वशरीरधारणमात्रोपयोगिनीषु। अत्रानुभवैर्निद्राहानादिभिर्निर्वेदचिन्ताऽऽदयो व्यभि-चारिण आक्षिप्यन्ते। आलम्बनस्य तु मालतीं प्रति जीवितसर्वस्वायमानस्य माधवस्य, उद्दीपनानाञ्च तद्गुणश्रव-णादीनां प्रकरणादवगतिः।

### दर्पणः

परिमृदितेत्यादौ चानुभावैर्व्यभिचारिणो निद्राच्छेदेन निर्वेदचिन्तादयः । आलम्बनं च माधवः । उद्दीपनञ्च चतुर्गुणश्रवणादिप्रकरणसामर्थ्यादवगम्यते ।

### साहित्यचूडामणिः

परिमृदितेत्यादौ विभावादिशून्यानामङ्ग्लानिक्रियाप्रवृत्त्यभावादिरूपाणामनुभावानामवस्थानम् ।

### सम्प्रदायप्रकाशिनी

परिमृदितेत्यादि । अत्र निद्राच्छेदादिना यदेतदङ्गानां मृदितमृणालनालम्लानता, या च स्नानादिकासु देहक्रियासु परिजनप्रार्थनया कथमप्यरतिमन्थरा प्रवृत्तिः, यच्चैतत् कपोलस्य शरीरसन्तापातिशयशंसि निष्कलङ्क-मृगाङ्कलक्ष्मीकलनं, त्रितयमप्यतद् अनुभावैकरूपं सदपि सहृदयहृदयसंवादसाक्षिणीं कामपि रसप्रकर्षकाष्ठामपरोक्षयति ।

### विस्तारिका .

परीति । मालतीमाधवे 'तथा ह्यस्याः' इत्युपक्रमे श्लोकोऽयम् । परिमृदिता करतलद्वयमर्दनेन शिथिलीकृता मृणाली स्वल्पमृणालम्, म्लानिश्श्रान्तातः क्रियासु परिवारप्रार्थनाभिरेका प्रवृत्तिः, यत्र कुत्रचित् । तत आलस्यम् । अभिनवस्य करिणो यो दन्तच्छेदस्तद्दन्तस्य कोमलत्वेनाश्रु[शु] रक्तसम्बन्धः । तेन दुग्धालक्तकमिश्रणवर्णलाभः । निष्कलङ्कस्य कलामात्रावशिष्टस्य । लक्ष्मीं शोभाम् । ततः क्षामता पाण्डुता च । क्षामत्वे पाण्डुत्वेऽपि न शोभाच्युतिः । कपोलः, न तु कपोलौ । एकः करिदन्तकान्तः, तदितरश्च पाण्डुः । सौकुमार्येणाशु सर्वतः पाण्डिमानुदयाद् विप्रलम्भानुभावोऽयम् ।

### सारबोधिनी

परीति । मालतीमाधवे तथाह्यस्या इत्युपक्रमे श्लोकोऽयम् । क्रियासु परिवारप्रार्थनाभिः बह्वीभिरेका प्रवृत्तिर्यत्र कुत्रचित् । ततो विषयवैमल्यम् । अभिनवस्य करिणो यो दन्तच्छेदः । तद्दन्तस्य कोमलत्वेनाशु रक्तसंबन्धस्तेन दुग्धालक्तकमिश्रणवर्णलाभः । निष्कलङ्कस्य कलामात्रावशिष्टस्य, ततः क्षमता पाण्डुता च । अङ्गं कपोल इति च जात्यभिप्रायमेकवचनम् । कौमार्येण सर्वतः पाण्डुताविरहात् 'कपोलत्वम्' इत्येकवचनमिति केचित् ।

### काव्यप्रदीपः

एवम्—

**'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः**
**कथमपि परिवारप्रार्थनाभिः क्रियासु ।**
**कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-**
**मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥'**

इत्यादावङ्गम्लान्याद्यनुभावमात्रस्य ।

## आदर्शः

परिमृदितेति । मालत्या अवस्थाकथनमिदम् । तस्या अङ्गं परिमृदितमृणालीवत् म्लानम्, बह्वीषु क्रियासु परिवाराणां प्रार्थनाभिः तस्याः कथम् अप्येका प्रवृत्तिः । बहुवचनेन प्रार्थनाबहुत्वस्य एकवचनेन प्रवृत्तेरेकत्वस्य च लाभः । प्रवृत्त्येकत्वेन तद्विषयक्रियैकत्वलाभश्च । चक्रवर्त्ती तु—क्रियैकत्वलाभाय क्रियायामिति पाठं रचयति, तच्च निष्फलम् । अस्मद्व्याख्यानेनैव तत्सिद्धेः । तथा तस्याः कपोलः अभिनवकरिदन्तच्छेदवत् कान्तः पाण्डुत्वात्, छेदेति कृदभिहितभावत्वात् अभिनवच्छिन्नेत्यर्थः, तथाच अतिपाण्डुत्वलाभः । अत एव—

**सद्यः कृत्तद्विरददशनच्छेदगौरस्य तस्य ।**

इति कालिदासकाव्येऽपि कृत्तत्वस्यैव सद्यस्त्वमुक्तम् । चक्रवर्त्ती तु अभिनवेति करिदन्तविशेषणमेवाह । अत्र मालतीविप्रलम्भस्य अङ्गम्लान्याद्यनुभावमात्रस्थितिः ।

## सुधासागरः

एवं परिमृदितेत्यादि । मालिनी छन्दः । 'ननमयययुतेयं मालिनी भोगिलोकैरि' ति लक्षणात् । मालतीमाधवाख्यनाटके तथाह्यस्या इत्युपक्रमे श्लोकोऽयम् । अयमर्थः । अस्या इत्यनुषज्यते । परिमृदिता करतलद्वयमर्दनेन शिथिलीकृता या मृणाली बालमृणालः तद्वन्म्लानमङ्गम् । जात्यभिप्रायमेकवचनम् । तथा क्रियासु—शरीरधारणमात्रोपयोगिनीषु बह्वीषूपन्यस्तासु । परिवारस्य सखीसार्थस्य प्रार्थनाभिरनेकाभिः । कथमप्यनिच्छन्त्या अपि बलात्कारेण प्रवृत्तिः क्वचिदुपक्रममात्रम् । चकारोऽप्यर्थे । कपोलोऽपि, निष्कलङ्कस्य कलामात्रावशिष्टस्य हिमांशोश्चन्द्रस्य लक्ष्मीं शोभा कलयति धारयति । शोभामित्यनेनैवमपि न शोभाच्युतिरिति गम्यते । कपोल इत्येकवचनादेक एव पाण्डुः सौकुमार्येणाऽऽशु सर्वतः पाण्डिमोदयात् । अपरस्त्वभिनवस्य करिणो यो दन्तच्छेदः छिद्यते इति छेदः कर्मणि घञ, छिन्नो भागस्तद्वत्कान्तः अलक्तकमिश्रदुग्धवर्णः । नूतनकरिदन्तस्य कोमलत्वेनाऽऽरक्तसम्बन्धेन तल्लाभादिति चक्रवर्तिनः । जात्यभिप्रायमेकवचनमिति केचित् । अन्ये त्वभिनवो यः करिदन्तच्छेद इत्यन्वयस्तेन शौक्ल्याधिक्यं तेन च विप्रलम्भोत्कर्षः । तथा च कालिदासः—'सद्यः कृत्तद्विरददशनच्छेदगौरस्य तस्य' इत्यत्र कर्तनस्य सद्यस्त्वमाहेत्याहुः ।

इत्यादौ अङ्गमालिन्यविषयवैतृष्ण्यपाण्डुत्वक्षामतारूपाणामनुभावमात्राणामुपस्थितौ ।

## विवरणम्

परिमृदित इत्यादौ 'तथा ह्यस्याः' इत्यादि मालत्यां श्रूयते । प्रवृत्तिश्चेष्टा । वैवर्ण्यस्यैव द्वौ भेदौ—म्लानिः, पाण्डिमा च । तौ 'परिमृदित' इत्यादिना चोक्तौ । अत्र वैवर्ण्यजडतादय एव कण्ठोक्ताः, तथापि 'कस्मिन्नपि महाभागधेयजन्मनि' इत्यादिना पूर्ववाक्येनैकवाक्तायां माधवमदनोद्यानादेरुपस्थितावेव रत्युल्लासो नान्यथेति वाक्यार्थः ।

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि॥ २९ ॥

इत्यादौ च

---

**सङ्केतः**

दुरादुत्सुकेति। अत्र उत्सुकत्वादिव्यभिचार्यनुगत्वेन दूरात् इत्यादिपदेभ्यः सहसा प्रसारणादिरूपः अनुभावः, प्रेयसि इत्यादिपदात् विभावश्च लभ्यते। पूर्णेक्षणं इत्यत्र ईक्षणशब्दः व्यापारवचनः। एवं द्वयसद्भावेऽप्युदाहार्यम्। परं विभावादित्रयसद्भावे रसप्रतीत्युत्कर्षः। त्रयसद्भावश्च दशरूपके एव। यदाह वामनः—

'सन्दर्भेषु दशरूपकं श्रेयः। तद्धि चित्रम्, चित्रपटवत् विशेषसाकल्यात्।' इति। तद्रूपसमर्पणया तु प्रबन्धेऽपि।

**बालचित्तानुरञ्जनी**

कृतापराधं प्राणेश्वरं प्रति नायिकाया नानाविधं भावमाह। नायिकायाश्चक्षुः कृतापराधे पुरुषे दूरे स्थिते सति उत्सुकम्। अनेनौत्सुक्यमुक्तम्। समीपमागते सति विवृतम्। अनेन व्रीडा। आगत्य संभाषणे कुर्विति विस्फारितं विकसितम्। अनेन हर्षः सूचितः। आलिङ्गनं कुर्वति सत्यरूणम्। अनेन कोपः। गृहीतवस्त्रे सति अञ्चितभ्रूलतम्। अनेनासूया। पादयोः प्रणिपातं कुर्वति वाष्पाम्बु तु पूर्णेक्षणम्। अनेन प्रसादः। एवं प्रपञ्चनिपुणं जातम्। अत्रौत्सुक्यादेः केवलात् व्यभिचारिणः सकाशाद्रसनिष्पत्तिः।

**काव्यादर्शः**

व्यभिचारिणां च प्राधान्यं तद्विभावानुभावप्राधान्यकृतम्, यथा—'दूरादुत्सुकम्' इति। अत्रौत्सुक्यादेर्व्यभिचारिणोऽनुगतत्वेन 'राद्' इत्यादिपदार्पितः सहसाप्रसरणादिरूपोऽनुभावः 'प्रेयसि' इति विभावश्च प्रकाशते।

**विवेकः**

दूरादिति—औत्सुक्यं स्वशब्देनोक्तम्। अस्य च यथा न दुष्टत्वं तदग्रे (७म उः) वक्ष्यते। औत्सुक्यार[म्भ] चा (श्चा) नुरक्तकक्षावैपरीत्याचरणलक्षणेन। विवलनेन (विवलितेन) लज्जा व्यज्यते। प्रसृतनेत्रपुटत्वरूपेण स्फारणेन हर्षः। आरुण्येन कोपः। आञ्चितभ्रूलतत्वेनासूया। व्यतिकरपदेन संसर्गपरेण चरणपातस्य

सुतरां मानपरिपन्थित्वं द्योत्यते। ईक्षणव्यापारेऽत्रेक्षणशब्दः। प्रपञ्चचतुरमित्येकस्यैव वस्तुनो भूयान् भेदः[प्रपञ्चः]। जातागसि न तु कृतागसि, अतएवाह प्रेयसीति।

## दीपिका

दूरादिति-विवलनेन लज्जा, स्फारणेन हर्षः, आरुण्येन कोपः, भ्रूलताकौटिल्येन कोपस्यैव प्रकर्षकत्वलक्षणाऽसूया। चरणानत्या व्यतिकरः संसर्गोऽस्येति समासः। बाष्पेति-त्वयाऽप्येवं विषमविप्रियं कृतं, मयाऽतिकठिनयैतावत्पर्यतंसोढ़मित्यनुतापः। ईक्षणं दर्शनम्। प्रपञ्चोऽत्र व्यावारबाहुल्यं, तत्र चतुरं शिल्पवत्? । जातागसि प्रमादान्न तु बुद्धिपूर्वं कृतागसि, अतएव प्रेयसि।

## दर्पणः

दूरादिति। चरणानतिव्यतिकरः संपर्को यस्येति समासः। प्रपञ्चो नानाविधता। अत्रोक्तरूपमौत्सुक्यं विवलनादिभिश्चानुभावैः सूचिता व्रीडाहर्षादयो यथासंख्यं व्यभिचारिणः केवलायामित्यत्र स्फुटतयेति शेषः। असाधारणत्वं मुख्यत्वम्। अन्यतमस्य एकस्य द्वयोर्वा अपेक्षया द्वयस्येत्युपलक्षणम्। द्वयोरुपादाने एकस्यापेक्षकत्वम्।

## साहित्यचूडामणिः

दूरादिति। प्रेयसि दूरवर्तिन्युत्सुकम्, 'एष्यत्युत्सुकामि'ति क्वचित् पाठः। संकथाप्रवृत्ते स्फारितम्। किञ्चेति। नायकस्य धृष्टतया नायिकायाः पादप्रणामपरायणत्वमिति यावत्। चरणानतौ व्यतिकरः संबन्धो यस्य। प्रेयसि दूरदृष्टे सत्यौत्सुक्यम् आगते विवलनेन व्रीडा सम्भाषिणि स्फारणेन हर्षः संश्लिष्यत्यारुण्येन कोपः गृहीतवसने भ्रूवल्लीवेल्लनेनासूया चरणप्रणते बाष्पाम्बुपूर्णतया चक्षुषः प्रसाद इति व्यभिचारिणामेव व्यञ्जकत्वम्।

## सम्प्रदायप्रकाशिनी

दूरादुत्सुकमिति। औत्सुक्यव्यतिरिक्तानां व्यभिचारिणां नियमेन व्यङ्ग्यत्वम्, औत्सुक्यस्य तु वाच्यत्वमेवेति भविष्यति। अत उत्सुकमिति स्वशब्देनास्योपादानं युक्तम्। विवलनेन लज्जा, स्फारणेन हर्षः, अरुणीभावेन कोपः, भ्रू लताञ्चनेनासूया, उद्बाष्पतया प्रसाद इति व्यभिचारिणामेव व्यञ्जकत्वम्।

## मधुमती

दूरादुत्सुकेमिति। अत्र दृष्टिलक्षणोदाहरणे विस्तरभिया उपेक्षिते।

## विस्तारिका

दूरादित्यादि। इतोऽन्यत्र मा यात्विति शङ्कात औत्सुक्यम्। दूरतो दर्शनेन ममौत्सुक्यमनेनावगतमिति लज्जया विवलितं तिर्यक्कृतम् सम्भाषिणि सम्यग्भाषिणि, अपूर्वालापेन हर्षोदयाद् नयनविस्फारः। संश्लिष्यति सम्पर्काकाङ्क्षया सान्निध्यं गच्छति। अप्रसाध्यैव स्पर्शमिच्छतीति रोषादरुणम्। क्रोधात् सविधं परित्यज्य

स्थानान्तरं गच्छन्त्या अञ्चलग्रहणम्। किञ्चिदित्यर्थे किञ्चेति। ततः कोषप्रकर्षोऽसूया। चरणानतिः चरणशिरःसंयोगः, तेन व्यतिकरः सम्पर्को यस्य। दयितस्य स्पर्शनेन नत्योपायेन च मानभङ्गात् प्रसादः, तदनुभावश्च वाष्पाम्बु, तत्पूर्वमसूयाऽदिभिः कठिने चेतसि द्रवीभावाभावात्। अम्बुपदं बाहुल्ये, ईक्षणं दृष्टिः, प्रपञ्चः प्रकारवैचित्र्यम्, जातागसि कृतापराधे, अतः प्रेयसि प्रकृते प्रिये। प्रीणातीति प्रियः।

## सारबोधिनी

दूरादित्यादि। इतोऽन्यत्र वा यातीति शङ्कात औत्सुक्यम्। दूरतो दर्शनेन ममौत्सुक्यमनेनावगतमिति लज्जया विवलितं तिर्यक्कृतम्। संभाषिणि सम्यक् भाषिणी अपूर्वालापेन हर्षोदयान्नयनविस्फारः। संश्लिष्यति संपर्काकाङ्क्षया सांनिध्यं गच्छति मामप्रसाद्यैव स्पर्शमिच्छतीति कोपादरुणम्। क्रोधात् सविधं परित्यज्य स्थानान्तरं गच्छन्त्या अञ्चलग्रहणम्। किञ्चिदित्यर्थे किञ्चेति। वस्तुतः समुच्चयार्थकमेव आरुण्ये सत्यञ्चलग्रहणेनाधिक्यात्। ततः कोपप्रकर्षोऽसूया। चरणानतिश्चरणशिरः संयोगः तेन व्यतिकरः संपर्को यस्य। ततश्च मानभङ्गात् प्रसादस्तदनुभावश्च।

यद्यपि प्रसादो न व्यभिचारित्वेन गणितस्तथापि 'मनः प्रसादो हर्षः स्यात्' इत्यादिना हर्षनिर्वचनाद्धर्षविशेष एव प्रसादो यस्मिन् सति प्रसादपात्रस्यापराधाः समूलं गच्छन्त्येव। प्रपञ्चः प्रकारवैचित्र्यम्।

## काव्यप्रदीपः

**'दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं**
**संश्लिष्यत्यरुणं गृहीतवसने किं चाञ्चितभ्रूलतम्।**
**मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं**
**चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि॥'**

## आदर्शः

दूरादित्यादि। निराकरणेन प्रसादान्निवृत्त्या अपक्रान्तस्य नायकस्य पुनरागमने जातभावाया मानिन्याश्चक्षुःक्रियावर्णनमिदम्। दूरादिति सप्तम्यर्थे पञ्चमी, दूरस्थ इत्यर्थः। तथाच जातागसि जातापराधे प्रेयसि दूरगे सति मानिन्याश्चक्षुः अहो, प्रपञ्चतुरं नानावस्थाप्राप्तिकुशलं जातम्। प्रपञ्चचातुर्य्यं विवृणोति—दूरादित्यादि, दूरस्थे प्रेयसि स्वसन्निहितगमनार्थम् उत्सुकम् उत्कण्ठितम्, आगते सति विवलितम्, पूर्वनिराकरणलज्जया संकुचितम्, सम्भाषिणि च निराकरणेऽप्यवैमुख्यदर्शनात् हर्षेण स्फारितम्, चाटुकरणं विनैव संश्लिष्यति सति पूर्वकोपाविर्भावेण अरुणम्, अञ्चिता आकुञ्चिता, भ्रूलतायास्तथाभावश्च चाटुकरणं विनैव उत्तरोत्तरं प्रवृत्त्या असूयया, व्यतिकरः समूहः, ईक्षणपदञ्च गोलकपरमेव अतश्चक्षुरीक्षणयोर्भेदाद् बहुव्रीहिः। पूर्णं क्षणादिति तु क्वचित् पाठः। वाष्पाम्बुपूर्णता च कोपोत्तरं प्रसादात्, प्रसादश्च हर्षरूपव्यभिचारिभावो बोध्यः।

## सुधासागरः

दूरादुत्सुकमित्यादि । शार्दूलविक्रीडितं छन्दः । अयमर्थः । जातागसि जाततम् आगोऽपराधो यस्मात् प्रमादतः, तथाभूते न तु कृतागसि । अतएव प्रेयसि प्रीतिपात्रे, मानिन्याश्चक्षुः, अहो इत्याश्चर्ये, प्रपञ्चे विचित्रव्यापारसन्ताने चतुरं जातमित्यन्वयः । प्रपञ्चचातुर्यमेव प्रपञ्चयति दूरादित्यादि । दूरात् दृष्टे इति शेषः सप्तम्यर्थे पञ्चमी, दूरस्थे इत्यर्थ इति महेशः । सर्वेषु सप्तम्यन्तेषु प्रेयसीति सम्बध्यते । उत्सुक इतोऽन्यत्र वा यातीति शङ्कयोत्कण्ठासूचकचेष्टाविशेषशालि । आगते समीपं प्राप्ते विवलितम् दूरतः पश्यन्त्या ममौत्सुक्यमनेन ज्ञातमिति लज्जया तिर्यक्कृतम् । सम्भाषिणि सम्यग्भाषिणि स्फारितं विकसितम्, प्रियालापेन हर्षोदयात्, संश्लिष्यति सम्यगतिशयेन सान्निध्यंप्राप्नुवति अरुणमारक्तम्, अप्रसाद्यैव स्पर्शमिच्छतीति क्रोधात् । अतएवापसरन्त्या गृहीतवसने, किञ्चेति समुच्चये, अञ्चितभ्रूलतञ्च, अञ्चिता कुटिलीकृता भ्रूलता गेन तथाभूतं कोपाधिक्यमसूयोदयात् । किञ्चिदित्यर्थे किञ्चेतीति केचित् । चरणयोरानतिः प्रणामस्तस्य व्यतिकरः सम्बन्धो यस्येति दयितविशेषणम् । व्यतिकरः समूह इति कश्चित् । बाष्पाम्बुनाऽश्रुजलेन पूर्णमीक्षणं यस्य तथाभूतम्, मानभङ्गेन प्रसादोदयादिति भावः । अम्बुपदं बाहुल्यसूचनाय, ईक्षणपदं गोलकाधिष्ठातृतेजःपरम् । गोलकस्याश्रुपूर्णतयैव तत्पूर्णत्वोपचारः । चक्षुर्जातमित्यत्र चक्षुष्पदं गोलकपरमतो भेदात् बहुव्रीहिसंगतिः । महेशस्तु ईक्षणपदं गोलकपरम् । चक्षुष्पदञ्च तेजः परमित्याह । तन्न । औत्सुक्यविवलितत्त्वविस्फारणादीनां तेजस्यसम्भवात् । वस्तुतस्तु बाष्पाम्बुना पूर्णं समाप्तमीक्षणं दर्शनं यस्येत्यर्थमालोचयामः । बाष्पाम्बुपूर्णेक्षणादिति पाठस्तु क्वचित्कोऽसमञ्जस एवेति ।

## विवरणम्

उत्सुकं प्रसृतम् । तेनान्तरमौत्सुक्यं व्यज्यते । आगते सन्निहिते । अत्र च विवलनेन लज्जा, स्फारणेन हर्षः अरुणतया कोपः, भ्रूलताऽञ्चनेनासूया, बाष्पाम्बुना प्रसादः प्रतीयते । प्रपञ्चचतुरं बहुलव्यापारदक्षम् ।

अत्रानुभावमुखेन निरुक्तव्यभिचारिणां प्रतीतिरस्ति, न तु विभावस्य । प्रेयः पदं तु न विभावार्पकम्, प्रीतिविषयवाचिनस्तस्यास्वादानुकूलरतिव्यञ्जनाक्षमत्वात् । व्यञ्जितोदात्तत्वादिगुणविशिष्ट एव साधारणीकरणव्यापारारूढ आस्वादविषयः । अनुभावव्यवकलनं तु व्यभिचारिणां न सम्भवत्येवेति व्यभिचार्यनुभावयोर्विभावविरह एव कैवल्यपदार्थ आक्षेपस्य ।

एवमपि 'जातागसि' इत्यत्रास्ति वाक्यवैशिष्ट्यम् दैवाज्जातागसि, न तु स्वयं कृतागसीति । तेन नित्यानुकूलत्वस्वरूप आस्वादानुकूलो धर्मोऽभिव्यज्यत इति समाधेरर्थः ।

यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ।

---

### सङ्केतः

नानैकान्तिकत्वमिति । विभावानुभाव्यभिचारिसंयोगस्येति शेषः ।

### बालचित्तानुरञ्जनी

यद्यप्येतेषु श्लोकेषु विभावादयः केवलादस्य कारणत्वेन प्रतीयन्ते । तथाप्येतेषां प्राधान्येत तेनान्ययोराक्षेपात्सूत्रोक्तं मिलितानां कारणत्वम् । न कुत्रापि व्यभिचरतीति भावः । तत्र प्रथमश्लोके प्रसीदेति पदसामर्थ्यात् विभावेन कटाक्षभुजाक्षेपाद्यनुभाववर्गः, मुग्धपदात् व्यभिचारिवर्ग आक्षिप्यते ।

द्वितीयश्लोके अङ्गम्लानादिना अनुभावेन कथमपिपदार्पितः अभिलाषचिन्तौत्सुक्यादिव्यभिचारिवर्गः विभावश्च नायिकारूपः ।

तृतीये औत्सुक्यादिना व्यभिचारिणा दूरादित्यादि पदार्पितः सहसा प्रंसरणादिरूप अनुभावः प्रेयसीति विभावश्चाक्षिप्यते ।

### काव्यादर्शः

एवं द्वयप्राधान्ये सर्वप्राधान्येऽप्युदाहार्यम् । किं तु सर्वप्राधान्य एव रसास्वादोत्कर्षः । तच्च प्रबन्ध एव, क्तकेषु तु कल्प्यते । नानैकान्तिकत्वमिति न व्यभिचारः ।

### दीपिका

केवलानामेवेति-स्फुटतयेति शेषः । असाधारणत्वमितरापेक्षया व्यक्तिशक्तिमत्त्वम्, अन्यतमस्य द्वयोरुपादानस्थले द्वयस्यैकोपादानस्थले आक्षेपकत्वेन साहचर्य्यनै यत्येन नानैकान्तिकत्वं न व्यभिचारित्वगस्मदङ्गीकृतस्य सामुदायिकस्येत्यर्थः । अतो न विभावाद्येकतमनिर्वाह्यता रसस्येति ।

### साहित्यचूडामणिः

अनुभावादिशून्यानामौत्सुक्यादीनां व्यभिचारिणमेव यद्यप्यवस्थानं, तथापि एकैकशो निर्दिष्टानामन्यतमद्वयापेक्षत्वादाक्षेपकत्वे सति नानैकान्तिकता । तथाहि विभावोदाहरणे तदविनाभूतनामश्रुपातकर्णोत्पलताडनादीनामनुभावानां निर्वेदालस्यादीनां व्यभिचारिणामप्याक्षेपः । द्वितीये मालत्या माधवलक्षणमालम्बनं भवनवलभीवातायनाद्युद्दीपनं, निर्वेदादयो व्यभिचारिणश्चाक्षिप्यन्ते । तत्र तृतीये पादप्रहारप्रत्यालिङ्गनादेरनुभावस्य तदुचितानामालम्बनोद्दीपनानां चाक्षेपः असाधारण्यात् सजातीये रसान्तरे विजातीये रोगादौ वा साधारण्याभावात् ।

## सम्प्रदायप्रकाशिनी

इत्थं च सति संयोगादिति यदुक्तं, तदव्यापकमित्याक्षेपः। एतत् परिहरति—तथाप्येषामसाधारणत्वमिति। एषां विभावादीनामसाधारणत्वमेव, न तु रसान्तरसाधारण्यम्। इतिर्हेतौ। यत इत्थमसाधारण्यमतोऽन्यतमद्वयाक्षेपः। अन्यतमद्वयेति। वियदलीत्यत्र वेपथुवैवर्ण्याश्रुपातादयोऽनुभावास्तदभिव्यञ्जिता ग्लानिशङ्कासूयादयो व्यभिचारिणश्चाक्षिप्यन्ते। परिमृदितेत्यादावप्येवमुन्नेयम्।

## मधुमती

अत्र स्थितिरिति। यद्यपि प्रसादः न व्यभिचारी। तथापि तेन स्वहेतुभूता मतिः उपलक्ष्यते। शास्त्रोक्तार्थानुसन्धानेन अर्थनिर्धारणस्य सुव्यक्तत्वात्। 'प्रणामान्तो मानः' इति हि श्रूयते। 'प्रियः चरण पतितः' इति, इदानीमेव प्रसादोचितः इति प्रतिसन्धानात्। तथापीति। कार्योन्नेयधर्माणां यथाकार्यं उन्नयनमिति, सति रसचर्वणे अनुपात्ताः अपि अनुमित्युपनीताः रसचर्वणाविषयाः। न चैवं 'कष्टकल्पनया व्यक्तिः' इत्यनेन विरोधः। यत्र हि अनुभावविभावयोः काव्योपात्तयोरपि प्रणिधानगम्यत्वम्, तत्र प्रतीतिविलम्बेन दोषस्य वक्ष्यमाणत्वात्। अत्र तु अनुमितेः संभृतसामग्रीकत्वेन प्रतीत्यविलम्बः इति, न तद्विषयत्वमेतस्य। तदिदं रसचर्वणातद्विलम्बाभ्यां अनुसन्धेयम्।

रससामान्यलक्षणं तु रसत्वमेव। न च तत्र मानाभावः। रसपदशक्यतावच्छेदकत्वेन तत्सिद्धेः। तच्च बाधकाभावात् जातिः, अखण्डोपाधिर्वा इति ध्येयम्।

## विस्तारिका

यद्यपीत्यादि। प्रथमे मुग्धा दयितो मेघाद्याश्चालम्बनोद्दीपनविभावाः। द्वितीये म्लानत्वादयश्चिन्ताद्यनुभावाः। तृतीये तदनुभावमुखेन प्रतीयमाना औत्सुक्यादयः सञ्चारिणः। केवलानां बाहुल्येनोपादानात् तथैव प्रतीयमानानाम्, तथापीति नानैकान्तिकत्वमित्यनेन सम्बन्धः। असाधारण्यं झटित्याख्यापकत्वम्, न तु कष्टेन कल्पनम्; उभयोऽपादानेऽन्यतमस्यै कोपनिबन्धे द्वयस्याक्षेपः। स च व्यञ्जनयैव। वियदित्यादौ प्रणतिरनुभावः। प्रसादः प्रार्थनोन्नेयाऽसूया च सञ्चारिणीति त्रितयसाहित्यान्नो व्यभिचारः। परीत्यादौ वक्ता माधवो मालती च विभावौ प्रकरणगम्यौ। म्लानत्वादिगम्याश्चिन्तादयः सञ्चारिणः। दूरादित्यादौ मानिनी प्रेयांसौ विभावौ, चरणानतिरनुभावः, विचलनादिगम्यः व्रीडादयः सञ्चारिणः।

यत्र तु झटिति नाक्षेपणम्, तत्र योग्यतयैव काव्यव्यवहारः। यथा—

**चन्द्रबिम्बमिदं लक्ष्यं भ्रमरौघमनोहरम्।**
**पुण्डरीकमिवाभाति नभःसरसि निर्मलम्॥**

इत्यत्र प्रकरणसत्त्वेऽपि झटिति प्रतीतेरिति।

## सारबोधिनी

ननु यद्येषामसाधारण्यं किमन्यद्द्वयाक्षेपकत्वम् इति चेन्न। रसस्य विभावादिसमूहालम्बनात्मकत्वेनैकस्मादभिव्यक्तेरसंभवात्।

## काव्यप्रदीपः

इत्यादावुत्सुकादिविशेषणव्यङ्ग्यनामौत्सुक्यलज्जाहर्षकोपासूयाप्रसादानां व्यभिचारिमात्राणाम्। यद्यप्यत्र प्रेयसीत्यालम्बनविभावोऽप्यस्ति, तथापि रत्यनुकूलधर्मवत्तया निर्देशादनस्तिकल्प एवेति। मैवम्। एषां विभावादीनामसाधारण्येनान्यद्द्वयाक्षेपकत्वेनात्रापि मिलितानामेव व्यञ्जकत्वात्। नन्वेषां चेदसाधारण्यं किमन्यद्द्वयाक्षेपणेन। एकैकव्यभिचारेण हि त्रयोपादानम्। अथ साधारण्यमेव कथं तर्हि स्थायिविशेषयोग्यविभावाद्याक्षेपकत्वमिति। उच्यते—एकस्य व्यभिचारान्मिलितानां व्यञ्जकत्वे स्थितेऽसाधारणेनापीतरद्द्वयमाक्षिप्यते। किंच रसस्य विभावादिसमूहालम्बनरूपत्वादेकैकस्मादसाधारणादपि व्यक्त्यभावान्मिलितानामेव व्यञ्जकत्वम्। अतोऽसाधारण्येऽपीतरद्द्वयमाक्षिप्यते। ततो मिलितैस्तदभिव्यक्तिः इति।

## आदर्शः

यद्यपीति पूर्वश्लोके विभावानां मध्यश्लोके अनुभावानां चरमश्लोके व्यभिचारिभावानां केवलानां स्थितिरित्यर्थः। कोपश्च रौद्ररसस्थायिभावोऽपि शृङ्गारेऽत्र व्यभिचारिभाव इति प्रतिपादितं प्रागेव। एषां स्थितश्च न वाचकशब्दवाच्यत्वं व्रीडादीनामतथात्वात्, किन्तु शीघ्रप्रतीयमानत्वमेव विवलितत्वादीनामनन्यप्रयोजनकत्वेन शीघ्रं व्रीडादिबोधनात्, बोध्यत्वमात्रन्तु न स्थितिः व्यङ्ग्यभूतान्यद्द्वयस्यापि तथात्वेन केवलत्वाभावात्। केवलत्वञ्च असामग्र्यमेव विवक्षितम्; तेन वियदलीत्यादौ प्रसीदेत्यनेन प्रसादस्य हर्षरूपव्यभिचारिभावस्य, दूरादित्यादौ प्रेयस आलम्बनविभावस्य सत्त्वेऽपि केवलत्वमुपपन्नम्। अन्यतमद्द्वयाक्षेपकत्व इत्यत्र तु द्वयत्वमविवक्षितम्, अनुक्ताक्षेपकत्वे सतीत्येवार्थः। एषामसाधारणत्वमिति शृङ्गारप्रकरणादसाधारण्यम्, तत्प्रकरणलाभस्तु वियदलीत्यादौ प्रणते नायके प्रसाद प्रार्थनया, परिमृदितेत्यादौ तत्प्रबन्धे विरहिण्या मालत्याः प्रकान्तत्वेन, दूरादित्यादौ तु मानिनीपदेनैवेति बोध्यम्। अन्यतमाक्षेपश्च अन्यतमस्य व्यञ्जनया बोधनम् तत्र वियदलीत्यादौ प्रसादेन प्रार्थनीयस्याऽऽलिङ्गनादेरनुभावस्य आक्षेपः। परिमृदितेत्यादौ तु अङ्गम्लान्या ग्लानेः, कथमपि प्रवृत्त्या आलस्य, कपोले पाण्डुत्वेन चिन्तायाश्च व्यभिचारिभावानाम्, चिन्तनीयस्य माधवस्याऽऽल्म्बनविभावस्य तद्रूपादेरुद्दीपनविभावस्य चाक्षेपः। दूरादित्यादौ तु वाष्पाम्बुव्यंग्यप्रसादेन आलिङ्गनादेरनुभावस्याक्षेप इति त्रितयसत्त्वम्।

## सुधासागरः

इत्यादौ उत्सुकादिविशेषणव्यङ्ग्यानामौत्सुक्यलज्जाहर्षकोपाऽसूयाप्रसादानां व्यभिचारिमात्रणामुपस्थितौ रसव्यक्तिः।

## विवरणम्

असाधारणतयेत्युपलक्षणं विभावादीनामपीति शेषः। अन्यतमद्वयं स्वभिन्नद्वयम्। तदाक्षेपकत्वात् ताभ्यामाक्षिप्ताभ्यां सह काव्यारोहात्। नानैकान्तिकत्वमिति, त्रयाणां काव्यारूढानां मिलित्वा रसोल्लासकत्वमिति नियमभङ्गो नेत्यर्थः।

इदमत्राकूतम्—पदवाक्यानुसन्धानम् १, पदार्थयोर्विभावानुभावयोः स्मरणम् २, अनुभावाविशिष्टविभावानुभवः ३, अनुभावव्यञ्जितव्यभिचारिस्मरणम् ४, व्यभिचारिविशेषितपूर्ववाक्यार्थस्य वैयञ्जनिकबोधस्वरूपः काव्यारोहः ५, अलङ्कारगुणचमत्काराणामास्वादः ६, विभावानुभावव्यभिचारिणां साधारण्येन स्मरणम् ७, साधारणीकृतानामेव तेषां वैशिष्ट्यानुभवः, स एव व्यभिचारिभावास्वादः ८, तदनन्तरो वा व्यभिचारिभावाभेदेनानन्दोल्लासः ९, ततो रतिस्मरणम् १०, अथ साधारणीकृतविभावानुभावव्यभिचारिभिरुपबृंहितस्य रतिभावस्यान्वयानुभवः, स एव स्थायिभावास्वादः ११, तदनन्तरो वा तथाविधरत्यभेदेनानन्दानुभवः १२, ततो रत्योः परस्परं शृङ्खलितविषयताकोऽनुभवः, स एव रसास्वादः १३, तदनन्तरो वा विभावानुभावव्यभिचारिपरिबृंहितरत्यभेदेनानन्दांशप्रकाशः १४, एवं चतुर्दशतयीं कक्षामारुढो रस इति व्यपदिश्यते। न चैतत् त्रितयसंयोगं विना सम्भवतीति दिक्।

तद्विशेषानाह—

**(सू. ४४) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**

**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृता ।। २९ ।।**

---

### सङ्केतः

शृङ्गारेति । अत्र-कामस्य सकलजातिसुलभतया अत्यन्तपरिचितत्वेन सर्वान् प्रति हृद्यतेति पूर्व शृङ्गारः, तदनु तदनुगामित्वात् हास्यः, तद्वैपरीत्यात् निरपेक्षभावाच्च ततः करुणः, ततः तत्कारणं अर्थसारः रौद्रः, ततः रौद्रस्य कामार्थप्राधान्येन कामार्थयोऽश्च धर्ममूलत्वादिति धर्मप्रधानः वीरः, तस्य च भीतत्राणसारत्वात् ततो भयानकः, ततः तद्विभावसाधारण्यः सम्भावनात् बीभत्सः, इति इयत् वीरेणाक्षिप्तम् । वीरस्य च फलभूतः अद्भुतः इति अस्त्येषां क्रमः ।

### सङ्केतः (रुय्यकः)

अष्टौ नाट्ये रसा इति भरतमतानुसारेण, शान्तस्तु नवमो रसो ज्ञापयिष्यते । परस्परावलोकनेति संभोगस्य क्रमेणादिमध्यान्तावस्था निदर्शिताः ।

### काव्यादर्शः

शृङ्गारेति । सकलजातिसुलभत्वेन हृद्यतया च पूर्वं शृङ्गारस्तदनुगामी च ततो हास्यस्तद्विपरीतः करुणः । ततस्तन्निमित्तमर्थप्रधानो रौद्रः । कामार्थयोर्धर्ममूलत्वाद् धर्मप्रधानो वीरः । तस्य भीताभयदानसारत्वात् ततो भयानकः । तद्विभावसाधारण्यसंभावनात् ततो बीभत्स इतीयद् वीरेणाक्षिप्तम् । वीरस्यान्तेऽद्भुतः फलमिति ततोऽद्भुतः । सर्वे चामी सुखप्रधानाः, स्वसंविच्चर्वणारूपस्यैकघनस्य प्रकाशस्य आनन्दसारत्वात् । तथा ह्येकघमशोकसंविच्चर्वणेऽपि लोके स्त्रीलोकस्य हृदयविश्रान्तिः, अन्तरायशून्यविश्रान्तिशरीरत्वात् । अविश्रान्तिरूपतैव च दुःखम् । अत एव कापिलैर्दुःखस्य चाञ्चल्यमेव प्राणत्वेनोक्तं रजोवृत्तितां वदद्भिरिति आनन्दरूपता सर्वरसानाम् । अष्टाविति । एत एवोपरञ्जका इति भावः । तेनार्द्रतास्थायिकः स्नेहो रस इत्यसत् । स्नेहो भक्तिर्वात्सल्यमिति रतेरेव विशेषाः । तेन तुल्ययोरन्योन्यं रतिः स्नेहः; अनुत्तमस्योत्तमे रतिर्भक्तिः; उत्तमस्यानुत्तमे रतिर्वात्सल्यमित्यादौ च भावस्यैवास्वाद्यत्वम् ।

### विवेकः

शृङ्गारेत्यादि—नट अवस्कन्दन इति नटः । किञ्चिच्चलनार्थत्वात् सात्त्विकबहुलं देवर्षिमनुष्यादीनां हर्षविस्मयादिजननं यत् पुरावृत्ताख्यानं तदनुकारचतुर्विधाभिनय-(ये)न तादात्म्यापत्तिर्नाट्यं, तदाश्रिता रसा नाट्यरसाः । ते चाष्टाविति भरतमतानुसारेण, नवमस्य शान्तरसस्याग्ने स्थापयिष्यमाणत्वात् । तत्र शृङ्गारो नाम परस्परजीवितसर्वस्वाभिमानात्मकरतिस्थायिभावप्रभावः स्त्रीपुंसहेतुक उत्तमयुवप्रकृतिरुज्ज्वलवेशात्मक

आलस्यौग्र्यजुगुप्सारूपव्यभिचारिव्यञ्जितः। अयञ्च श्यामवर्णो विष्णुदैवतः। एतदुपयोगश्च मसीपरिग्रहादौ। एवमुत्तरत्रापि द्रष्टव्यम्।

## दीपिका

विशिष्यन्त इति विशेषास्तस्य रसस्य सामान्यतो निर्णीतस्य विशेषा स्तानाहेति-प्रसक्तानुप्रसक्त्येत्यर्थः। शृङ्गारेति—परस्परजीवितसर्वस्वायमानयोरुत्तमप्रहृष्टयोर्नायकनायिकयो रतिप्रकृतिरिभिलाषः पूर्वदर्शितसामान्ययोगाच्छृङ्गारः। तत्रालम्बनं नायकौ, तयोरेव लावण्ययौवनादिदेशकालविशेषादिरुद्दीपनम्, अनुभावास्तत्तन्नयनत्रिभागवीक्षणालिङ्गनादयः, सञ्चारिणश्च यथायथं सर्वं एव भावाः। तदुक्तम्—'एकोनपञ्चाशदमुञ्च भावा युक्तया निबद्धाः परिपोषयन्ती'ति। आत्मनः परस्य वा वाग्वेशरूपचेष्टावैकृतविलोकनाच्चेतोविकासो हासः। तत्प्रकृती रसो हास्यं, तत्रालम्बनं विकृतवेशः पुरुषः तच्चेष्टाऽऽदिरुद्दीपनं, नयनविकाशहस्ततालिकाऽऽदयोऽनुभावाः, सञ्चारिणश्चावहित्थाग्लानिमूर्च्छाऽऽदय इति।

तत्रात्मनो यथा—गृहीततापसवेशं निर्वर्ण्य-रावणः—

'जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं
हारो वक्षसि यज्ञसूत्रमुचितं क्लृप्ता जटाः कुन्तलाः।
रुद्राक्षः स किलैष यत्कुवलयञ्चैनांशुकं बन्धनं
सीतालोचनहारि कल्पितमहो रम्यं वपुः कामिना'॥

शेषन्तु वृत्तिकृदुदाहरिष्यति। बन्धुवधविभवनाशजनितशोकप्रकृतिः करुणः। तत्र च पतिमरणादिरालम्बनं, भूमिपतनरोदनोरस्ताडनादिरनुभावः, ग्लानिनिर्वेदमूर्च्छामरणादिः सञ्चारो।

ननु कथं करुणो रसः, तस्य शोकमयत्वात्, रसस्य च सान्द्रानन्दात्मकत्वात्। सत्यं, महाभारतादौ प्राक् पर्वाद्यनुभवे(?) तावदस्ति स्तनमर्दनगाढालिङ्गनादौ सुरताङ्ग इव सूक्ष्मपीडाऽनुवेधः, पश्चात् सान्द्रतरानन्दश्चमत्कारः स्वसंवित्तिसाक्षिकः, ततश्च कुतः करुणस्य न रसत्वम्? अशिक्षितास्तु तत्प्रतिबद्धे भूयोभूयः स्वहृदयप्रवृत्तेर्दुःखैकमयत्वे सत्यन्यथाऽनुपपत्त्या यष्टिलग्नवदकामेनाप्यङ्गीकार्याः।

एतेन क्रोधादिस्थायिनो रौद्रादयो व्याख्याताः। अपकारिणि क्रोधोद्रेकप्रकृती रौद्रः। अत्रालम्बनमपकारी, तदपकारादिरुद्दीपनं बाह्वास्फोटशस्त्रोल्लासप्रतिद्वन्दिग्रहादि-रनुभावः, सञ्चारिणस्तुचपलतागर्वग्लानिर्मूर्च्छाऽऽदयः। दानयुद्धादिषूत्साहपरिपोषको वीरः। अत्रालम्बनं देययुद्धादयः, उद्दीपनं दानपात्रप्राप्तिसाम्राज्यादयः, अनुभावः सर्वस्वत्यागयात्राग्रहणादिः, सञ्चारिणो धृतिहर्षगर्वादयः। स्त्रीनीचादिगतविकृतसत्त्वादिदर्शनजनितभयस्थायी भयानकः। तत्र विकृतः सत्त्वादिरालम्बनं, तस्योच्चनादादिरुद्दीपनं नयननिमीलनगात्रसङ्कोचपलायनादयोऽनुभावाः, सञ्चारिणस्तु जडताग्लानिमूर्च्छामरणादयः। विकृतिपूतिमांसादिदर्शनाद्विषयवैरस्यभावाच्च जुगुप्साप्रकृतिर्बीभत्सः। तस्य च पूतिमांसादिरालम्बनं, तत्रैव कृमिपातादिरुद्दीपनं, मुखविघूर्णननिष्ठीवनपराङ्मुखत्वादयो नीचेषु, उत्तमेषु तु कार्यान्तरस्य व्यासङ्गादयोऽनुभावाः, निर्वेदापस्मारजाड्यादयो व्यभिचारिणः। लोकोत्तरवस्तुप्रतिभासजनितविस्मयप्रकृतिरद्भुतः। तस्य चालम्बनं महापुरु-

षादिः, उद्दीपनं तद्गुणातिशयः, साधुवादशिरोधूननादयो नीचेषु, सस्पृहत्वादयस्तु महत्स्वनुभावाः, उत्साहधृतिहर्षादयः सञ्चारिणः। नाट्यरसा इति-सात्त्विकबहुलगीतवाद्यादिपूर्वकाभिनयेन पुरावृत्तानुकारो नाट्यं, तदाश्रया रसा नाट्यरसाः। ते चाष्टौ मुनिना कण्ठोक्ताः, शान्तस्य नाट्ये तादृक्पुष्टिविरहात्। यदाह ध्वनिकारः—'पुष्टिर्नाट्येषु नैतस्ये'ति।

**दर्पणः**

विशेषानिति। तस्य सामान्यतो निर्णीतस्य रसस्य। त इति विशेषास्तान्। तत्र शृङ्गारो नाम प्रौढतरपरस्पररागोत्तरसुरप्रकृतिः इति स्थायिभावः। तत्रालम्बनं नायकौ। उद्दीपनं तयोरेव यौवनादि। चन्द्रचन्दनकोकिलभ्रमरनिःश्वासदेशकालविशेषादिश्चनुभावाः। कटाक्षभुजाक्षेपालिङ्गनचुम्बनादयः सञ्चारिणः। अत आह—

**एकोनपञ्चाशदमी च भावा युक्त्या निबद्धाः परिपोषयन्ति।**
**आलस्यमौग्रयं मरणं जुगुप्सा तस्याश्रयाद्वैतविरुद्धनिष्ठमिति॥**

एकोनपञ्चाशद्भावाश्च व्यभिचरिणः। स्थायिनोऽष्टौ। वाग्देशादिचेष्टावैकृताश्च ततो विकासो हासः। तत्कृती रसो हास्यः। तत्रालम्बनं विकृतवेषादिकः यः कोऽपि। उद्दीपनं तच्चेष्टादि। अनुभावाः अक्षिसङ्कोचनवदनस्मेरतादयः। सञ्चारिणोऽवहित्थाग्लानिमूर्च्छादयः। एवमादिरसस्य च यथोपपादितमस्मत्साहित्यदर्पणे। रौद्रः अपकारिणि प्रौढक्रोधप्रकृतिः। तत्रालम्बनमपकारौ। उद्दीपनमपकारादिः। अनुभावोऽशस्फोटेन तर्जनादिः। सञ्चारिणो गर्वादयः। क्रूरसञ्चारभयस्थायिभावः स्त्रीणां च प्रकृतिर्भयानकः। तत्रालम्बनं क्रूरसत्त्वादि। अनुभावो नयनमीलनगात्रसङ्कोचनपलायनादिः। सञ्चारिणो जडताग्लानिमूर्च्छादयः। विकृतपूतमांसादिजुगुप्साप्रकृतिः बीभत्सः। तत्रालम्बनं पूतिमांसादि। उद्दीपनं तत्रैव कृमिपातादि। अनुभावास्तु उत्तमप्रकृतिगताः कार्यान्तरव्यासङ्गादयः। अधमगताश्च मुखविकृतित्वनिष्ठीवनादयः। व्यभिचारिणो निर्वेदापस्मारजाड्यादयः। लोकोत्तरवस्तुप्रतिभासको विस्मयप्रकृतिरद्भुतः। तत्रालम्बनं दिव्यपुरुषादि। अनुभावाः साधुवादशिरोधूलनादयः। सञ्चारिणो हर्षधृत्युत्साहादयः। एते शृङ्गारादयः। सात्त्विकबहुलगीतवाद्यादिपूर्वकाभिनयेन पुरावृत्तानुकारो नाट्यम्। तदाश्रया रसा महर्षिणा अष्टौ कण्ठोक्ताः। अन्ये तु महाकाव्यादौ 'शान्तोऽस्ति नवमो रस' इत्याहुः तन्न तस्य सम्यक् नाट्यपोषकत्वाभावात्। यदाह धनिकः—'पुष्टिर्नाट्येषु नैतस्य' इति।

**साहित्यचूडामणिः**

एवं रससामान्यस्वभावमभिधाय तद्विशेषानपि दर्शयितुमाह—तदिति। अष्टाविति, शान्तस्य रसतायां विप्रतिपत्तेः।

**सम्प्रदायप्रकाशिनी**

अथ रसविशेषलक्षणावसर इत्याह—तद्विशेषानिति।

शृङ्गारहास्येति। शान्तस्याभिनयव्यङ्ग्यत्वानभ्युपगमादष्टौ नाट्यरसाः।

## मधुमती

प्राप्तावसरतया रसं विभज्यते—तद्विशेषानाहेति । यद्यपि प्रकृततया 'अष्टौ काव्ये रसाः स्मृताः' इत्येव वक्तुमर्हति । तथापि, एतावता सामान्यतो रसावगमे सिद्धे, इदानीं विशेषजिज्ञासायां, 'विशेषाभिधानस्यतदितरव्यवच्छेदकत्वम्' इति व्युत्पत्तिबलात् श्रव्यकाव्ये शान्तरसाभावप्रसङ्गः इति, नाट्य इति विभिद्योक्तम् । तत्र रतिनिष्पाद्यत्वं शृङ्गारत्वम्। न च स्वस्मिन् स्वक्रियाविरोधः। सत्कार्यवादाभ्युपगमेन सामञ्जस्यात्। एवं रसान्तरलक्षणमप्यूह्यम् ।

## विस्तारिका

तद्विशेषानिति । सामान्यज्ञानान्तरं तत्रैव शिष्यजिज्ञासोदयात्। अष्टाविति । तेन वात्सल्यस्य न रसत्वम्, तस्य भावान्तर्भावात् । विशिष्य तत्र वक्ष्यामः । नाट्यमभिनयात्मकं काव्यम् । श्रव्ये तु शान्तोऽपि रसः । नाट्ये ह्यवस्थाऽनुकृतौ सर्वविषयोपरमस्वरूपस्य तस्य न सम्भवः । गीतवाद्यादेस्तद्विरोधित्वात् । अत एवाहुः—'पुंभिर्नाट्येषु नैतस्य' इति ।

## सारबोधिनी

तद्विशेषानिति । सामान्यज्ञानान्तरं तत्रैव जिज्ञासोदयात् । नेदमभिनयात्मकं काव्यम् । श्रव्ये तु, शान्तोऽपि रसः । नाट्ये ह्यवस्थानुकृतौ सर्वविषयोपरमस्वरूपस्य तस्य च न संभवः । गीतवाद्यादेस्तद्विरोधित्वात् । तदुक्तम्—

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।**
**रसः प्रशान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥**

## काव्यप्रदीपः

केचिदाहुरेक शृङ्गारो रसः, केचिच्च द्वादशेत्यादि, तन्निरासाय भेदानाह—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ ६ ॥**

शान्तस्य रोमाञ्चादिविरहेणानभिनेयत्वात्काव्यमात्रगोचरत्वमित्यभिधानानाट्य इत्युक्तम् । यद्वा नाट्ये तावदष्टौ रसाः प्रतिपादिताः, अतः काव्येऽपि तावन्त एवेत्यर्थः । ननु रसः सुखात्मक इति प्रतिपादितम्, तत्कथं दुःखमयः करुणादिको रस इति चेत् । न । लोके तथात्वेऽपि काव्यादौ पार्यन्तिकालौकिकसुखोदयात् । अन्यथा प्रेक्षावतामप्रवृत्त्यापत्तेः । शृङ्गारादीनां च लक्षणं रत्यादिप्रकृतिकत्वम् । तत्र मनोनुकूलेष्वर्थेषु सुखसंवेदनं रतिः । तत्प्रकृतिको रसः शृङ्गारः ।

## काव्यप्रकाशखण्डनम्

अथ प्राचां रसविशेषानाह—

**शृङ्गार-हास्य-करुणा रौद्र-वीर-भयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥** (मू. का. २९)

श्रव्यकाव्ये शान्तोऽपि रसः ।

### आदर्शः

तद्विशेषान् रसविशेषान् । शृङ्गारहास्येत्यादिनाट्यकारिकात्वादेव नाट्ये इत्युक्तम् काव्येऽपीत्यपि बोध्यम् । एषां लक्षणानि तु स्थायिभावभेदादेव रतिस्थायिभावको रसः शृङ्गार इत्यादिरीत्या बोध्यानीत्यभिप्रायेण 'व्यक्तः स तै'रित्यादिनैवोक्तप्रायाणीत्यतो विशिष्य नोक्तानि । दर्पणे तु संज्ञाव्युत्पत्तिमुखेन शृङ्गाररसयान्यथाप्यन्येषां लक्षणानि तद्विभावादींश्च उक्तवान् । तत्र शृङ्गारस्य यथा—

**शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।**
**उत्तमप्रकृतिप्रायो रसः शृङ्गारः इष्यते ॥** इति

तदागमनं मन्मथप्राप्तिः, तद्धेतुकः तज्जन्यः वीतरागाणां शृङ्गाररसानुद्बोधात् । तद्विभावादयश्चोक्ताः, यथा—

**परोढां वर्जयित्वाऽत्र वेश्याञ्चाननुरागिणीम् ।**
**आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥** इति ।

अत्र पादत्रयं नायकशृङ्गारे, चतुर्थपादो नायिकाशृङ्गारे । वेश्या चात्र परानूढा । दक्षिणाद्या इति, दक्षिणधृष्टानुकूलशठरूपाश्चात्वारो बालवृद्धरोगीतरे रतिसमर्थाः । आद्यपदाद् धर्म्मोपयुक्तपरिग्रहः, तेन रतिसमर्थः स्वभर्त्तेत्यर्थः । पर्य्युदस्तपरोढाविषयत्वे तु शृङ्गाराभास इति बोध्यम् । तदुद्दीपनविभावादयश्चोक्ताः । यथा—

**चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।**
**भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः ॥**
**त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः ।**
**स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥**

रोलम्बा भ्रमराः । औग्र्यादिवर्ज्जनं सम्भोगशृङ्गार एव । विप्रलम्भे तु जुगुप्सामात्रवर्जनम् । जुगुप्सा च बीभत्सस्थायिभावोऽपि रसान्तरे व्यभिचारिभाव इत्युक्तम् ।

हास्यस्य यथा—

**विकृताकारवाग्वेशचेष्टादेः कुहकाद् भवेत् ।**
**हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ॥**
**विकृताकारवाक्चेष्टं यमालोक्य हसेन्नरः ।**
**तदत्रालम्बनं प्रोक्तं तच्चेष्टोद्दीपनं मतम् ॥**

अनुभावोऽक्षिसंकोचवदनस्मेरतादयः ।
निद्राऽऽलस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः ।। इति ।

करुणस्य यथा—

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ।।
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ।।
अनुभावा दैवनिन्दा-भूपात-क्रन्दनादयः ।
वैवर्णोच्छ्वास-निःश्वास-स्तम्भ-प्रलपनानि च ।।
निर्वेद-मोहापस्मार-व्याधि-ग्लानि-स्मृति श्रमाः ।
विषाद जडतोन्माद-चिन्ताऽऽद्या व्यभिचारिणः ।। इति ।

प्रलपनपर्य्यन्ता अनुभावा बोध्याः । रौद्रस्य यथा—

रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ।।
मुष्टिप्रहार-पतन-विकृतच्छेदावदारणैश्चैव ।
संग्रामसम्भ्रमाद्यैस्तस्योद्दीप्तिर्भवेत् प्रौढा ।।
भ्रूविभङ्गोष्ठनिर्दश-बाहुस्फोटनतर्ज्जनम् ।
आत्माऽवदानकथनमायुधोत्क्षेपणानि च ।।
अनुभावास्तथाऽऽक्षेप-क्रूरसन्दर्शनादयः ।
उग्रताऽऽवेग-रोमाञ्च-स्वेद-वेपथवो मदः ।।
मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः । इति ।

उग्रतादयो व्यभिचारिणः तत्पूर्व्वे त्वनुभावाः । वीरस्य यथा—

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ।।
आलम्बनविभावाश्च विजेतव्यादयो मताः ।
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ।
सञ्चारिणस्तु धृति-मति-गर्व-स्मृति-तर्क-रोमाञ्चाः ।
स च धर्मदानयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात् । इति

रोमाञ्चस्य व्यभिचारिभावत्वाभावेऽपि तन्निदानहर्षपरमैव रोमाञ्चपदम्। स चेति धर्म्मवीरो दानवीरो युद्धवीरो दयावीरश्चेति चतुर्द्धेत्यर्थः दानादिषु सर्व्वत्रोत्साहसम्भवात्। भयानकस्य यथा—

**भयानको भयस्थायिभावः कालाधिदैवतः।**
**स्त्री-नीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः॥**
**यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।**
**चेष्टा घोरतरा तस्य भवेदुद्दीपनं पुनः॥**
**अनुभावस्तु वैवर्ण्य-गद्गदस्वर भाषणम्।**
**पुलक-स्वेद-रोमाञ्च-कम्प-दिक्प्रेक्षणादयः॥**
**जुगुप्साऽऽवेग-सम्मोह-सन्त्रास-ग्लानि-दीनताः।**
**शङ्काऽपस्मार-सम्भ्रान्ति-मृत्वाद्या व्यभिचारिणः॥** इति

पुलकहेतुत्वादेव (पुलकैकहेतुत्वादेव ?) अत्र पुलकोऽश्रूद्गम एव। तथाच रोमाञ्चादस्य भेदः। जुगुप्साद्यास्तु व्यभिचारिणः। संभ्रान्तिः भ्रमणं चपलतारूपम्, न तु भयरूपं तस्यात्र स्थायिभावत्वात्।

बीभत्सस्य यथा—

**जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः।**
**नीलवर्णो महाकालदैवतोऽयमुदाहृतः॥**
**दुर्गन्धमांस रुधिरमेदांस्यालम्बनं मतम्।**
**तत्रैव कृमिपातादिरुद्दीपनमुदाहृतम्॥**
**निष्ठीवनास्यबलननेत्रसंकोचनादयः।**
**अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः।**
**मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः॥** इति।

अत्र च 'तत्रयु'रित्यादिकं पश्चादन्वितम्।

अद्भुतस्य यथा—

**अद्भूतो विस्मयस्थायिभावो गन्धर्व्वदैवतः।**
**पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्॥**
**गुणानां तस्य महिमा भवेदुद्दीपनं पुनः।**
**स्तम्भः स्वेदोऽथ रोमाञ्च-गद्गदस्वर-सम्भ्रमाः॥**
**तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः।**
**वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः॥** इति।

संभ्रान्तिहर्षाद्या इत्यत्र सम्भ्रान्तिजन्यहर्षाद्या इत्यर्थः, तेनानुभावत्वेनोक्तात् सम्भ्रमादस्य भेदः।

## सुधासागरः

यद्यप्यत्र प्रेयसीत्यालम्बनविभावोऽप्यस्ति, तथापि रत्यनुकूलधर्मवत्तयाऽनिर्देशादनस्तिकल्प एवेति। मैवम्। एषां विभावादीनामसाधरण्येनाऽन्यद्वयाक्षेपकत्वेनाऽत्रापि मिलितानामेव व्यञ्जकत्वात्।

नन्वेषां चेदसाधारण्यं किमन्यद्वयाक्षेपेण। एकैकव्यभिचारेण हि त्रयोपादानम्। अथ साधारण्यमेव, कथं तर्हि स्थायिविशेषयोग्यविभावाद्याक्षेपकत्वमिति। उच्यते, एकैकस्य व्यभिचारान्मिलितानां व्यञ्जकत्वे स्थितेऽसाधारणेनाऽपीतरतद्वयमाक्षिप्यते। किञ्च—रसस्य विभावादिसमूहालम्बनरूपत्वादेकैकस्मादसाधारणादपि व्यक्त्यभावान्मिलितानामेव व्यञ्जकत्वमतो साधारण्येऽपीतरद्वयमाक्षिप्यते, ततो मिलितैस्तदभिव्यक्तिरिति।

केचिदाहुरेक एव शृङ्गारो रसः। केचिच्च द्वादशेत्यादि। तन्निरासाय सामान्यज्ञानान्तरं विशेषजिज्ञासोदयाच्च वृत्तिकृदाह—तद्विशेषानाहेति। शृङ्गारहासेति।

रससामान्यलक्षणं रसत्वमेव। न च तत्र मानाभावः। रसपदशक्यतावच्छेदकतया तत्सिद्धेः। तच्च बाधकाभावाज्जातिरखण्डोपाधिर्वा। यद्यपि प्रकृततयाऽष्टौ काव्ये रसाः स्मृता इति वक्तुमर्हति, तथापि सामान्यतो रसाधिगमे विशेषजिज्ञासायां विशेषाभिधानस्य तदितरव्यवच्छेदपरत्वं स्यात्, व्युत्पत्तिबलात्। श्रव्यकाव्ये शान्तरसाभावप्रसङ्ग इति विभिद्योक्तम्।

अतएव श्रीवत्सलाञ्छनभट्टाचार्याः प्राहुः नाट्यमभिनयात्मकं काव्यम्, श्रव्यकाव्ये तु शान्तोऽपि रसः। नाट्ये ह्यवस्थाऽनुकृतौ सर्वविषयोपरमस्वरूपस्य तस्य च न सम्भवः। गीतवाद्यादेस्तद्विरोधित्वात्। तदुक्तम्—

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न कदाचिदिच्छा।**

**रसः प्रशान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः॥ इति**

प्रदीपकारास्तु शान्तस्य रोमाञ्चादिविरहेणाऽनभिनेयत्वात् काव्यमात्रगोचरत्वमित्यभिधानान्नाट्य इत्युक्तम्। यद्वा तावदष्टौ रसाः प्रतिपादिताः। अतः काव्येऽपि तावन्त एवेत्यर्थ इत्याहुः। तन्नादरणीयम्। यतः 'कश्चित् न रसं स्वदते नटः' इत्यादिना नाट्येऽपि शान्तरसोऽस्तीति व्यवस्थापितम्।

ननु रसः सुखात्मक इति प्रतिपादितं तत्कथं दुःखमयः करुणादिको रस इति चेन्न। लोके तथात्वेऽपि काव्यादौ पार्यन्तिकाऽलौकिकसुखोदयात्। अन्यथा प्रेक्षावतामप्रवृत्त्यापत्तेः।अयमाशयः, यद्यपि करुणो रसः सुखदुःखसंभिन्नस्तथापि शोकावच्छिन्नस्य चैतन्यस्याऽऽनन्दांशे भग्नावरणस्य करुणरसत्वे निरतिशयस्याऽऽनन्दांशस्योत्कटत्वेनोत्कटेच्छाविषयत्वात् शोकांशे च बलवद्द्वेषाभावात्तत्र सामाजिकानां प्रवृत्तिः वर्णनीयतन्मयीभावेन शोकाभिव्यक्तेरश्रुपातादयो भवन्तीति न किञ्चिदनुपपन्नम्। एवं बीभत्सभयानकयोरपीति।

तत्र रतिनिष्पाद्यत्वं शृङ्गारत्वमिति रविभट्टाचार्याः। न च स्वस्मिन् स्वक्रियाविरोधः, सत्कार्यवादाभ्युपगमात्।

यद्वा 'रत्यादिप्रकृतिकत्वं शृङ्गारादीनां लक्षणम्। रतिस्तु मनोऽनुकूलेष्वर्थेषु सुखसंवेदनमि'-ति प्रदीपकाराः।

वयन्तु स्मरकरम्बिताऽन्तःकरणयोः स्त्रीपुंसयोः परस्परं रिरंसा रतिरिति । 'रतिर्देवादिविषया' इत्यादौ तु रतिशब्दप्रयोगो भाक्त इति प्रतीमः । उक्तञ्च रससुधासागरकारैः—'यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता' इति ।

## विवरणम्

अत्र केचिद् निर्वेदादयस्तावद् रसा एवेति मन्यन्ते । यदाहुः—

**रसनाद् रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः ।**
**निर्वेदादिष्वपि तत् प्रकाममस्तीति तेऽपि रसाः ।** इति ।

यः किलान्तरो भाव आनन्दाभेदेनास्वाद्यते, स रसः । निर्वेदादयोऽपि क्वचिदानन्दाभेदेनाध्यवसीयन्ते, यत्र भावविश्रान्तं काव्यम् । यथा—

**जहिहि तरलां लक्ष्मीमेतां त्यजामरपादपान्**
**हृदय ! हतया किं ते चिन्तामणेरपि चिन्तया ।**
**जठरदहनज्वालाशान्त्यै यदि स्युरमी तदा**
**स्वपितुरुदधेरौर्वं निर्वापयेयुरुषर्बुधम् ।।** इति ।

अत्र धनोपायानुसरणविषयां धृतिमभिव्यज्य काव्यं विश्राम्यति । न चात्र शमोऽप्यास्वाद्यते, अननुसृतलक्ष्मीलिप्साविरामस्यात्यन्तमप्राप्तेरिति ।

अत्र धनिकः—

**निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम् ।**
**वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः ।। इति ।**

अताद्रूप्यात् स्थायिलक्षणायोगात् । अयमाशयः—यः खलु प्रबन्धशरीरावच्छिन्नस्येतिवृत्तात्मनः सर्वेषु मुख-प्रतिमुख-गर्भ-विमर्षोपसंहारेषु सन्धिषु स्रक्सूत्रन्यायेनानुवर्तते, स स्थायीत्युच्यते । न च निर्वेदादिस्तथा, सर्वेषु सन्धिष्वेकस्य व्यभिचारिणःपोषे वैरस्यात् । स्थाय्यूपकारार्थमेवान्तराऽन्तरा व्यभिचारिणां प्रादुर्भावतिरोभावे सत्येव चारुताप्रतीतेः । अत एव व्यभिचारिशब्दयोगार्थनिर्वचनमाह भरतः—'विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः' इति । एवमेव—

**विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।**
**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ।।** इति धनिकः ।

महाराजोऽपि—

**विशेषेणाभितः कार्ये स्थायिनं चारयन्ति ये ।**
**अनुभावादिहेतूंस्तान् वदन्ति व्यभिचारिणः ।**

**जनित्वा ये न जायन्ते तेऽथवा व्यभिचारिणः।**

**स्मृत्यादयो हि प्रेमादौ भवन्ति न भवन्ति च॥** इति।

तथात्रापि। कायो नाम महाकाव्यनाटकादेः प्रबन्धस्वरूपशरीरावयवाः। तैश्च स्थायिव्यञ्जने सहकारितैवेति ध्येयम्। तदाहुराचार्याभिनवगोपानसीगुप्तपादाः—

'यथा च विरलविरलभावावस्थितानामपि स्फटिककाचाभ्रकपद्मरागमहानीलानामेकसूत्रग्रथनकृतमेकवाक्यत्वम्, एवमुदयास्तमयधर्मणामप्येषामेकस्थायिसूत्रस्यूतत्वकृतम्। व्यभिचारिता चामीषामन्तराऽन्तरा शुद्धस्य स्थायिनोऽवकाशदानेन पूर्वापरव्यभिचारात्' इति।

तेन प्रबन्धानभिव्यङ्ग्यः प्रबन्धैकदेशेनाभिव्यज्यमानः प्रबन्धाभिव्यङ्ग्यभावस्योपकारको भावो व्यभिचारिभावनिर्वचनानामर्थः। नहि क्षेत्रज्ञमधिकृत्य स्थायिव्यभिचारिविभागो व्यवस्थितः, स्थायिनामपि स्थाय्यन्तरे प्रबन्धाभिव्यङ्ग्ये व्यभिचारितादर्शनात्। यदाह रत्नाकरे शार्ङ्गदेवः—

**रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः।**
**स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः॥**
**रसान्तरेषु रत्याद्या यथायोगं भवन्ति ते।**
**तथाहि हासः शृङ्गारे रतिः शान्ते च दृश्यते॥**
**क्रोधो वीरे भयं शोके जुगुप्सा च भयानके॥**
**उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणौ॥**
**शमः सर्वरसेष्वस्ति स्थैर्यात् त्वव्यभिचारिणः॥** इति।

भूयिष्ठत्वं स्तोकत्वं च विभावादीनां प्रबन्धाभिव्यापकत्वं तदेकदेशवृत्तित्वं च। उत्पत्तिरभिव्यक्तिः। मुक्तकश्लोकादौ तु रत्यादेरिव चिन्ताद्यंशानामपि रसवदास्वादनं न वारयितुं शक्यते। भवन्तु सर्वे भावा रसा एव।

ननु मुक्तकेऽपि स्थायिनां व्याभिचारिमुखेनास्वादनम्, न तु नित्यव्यभिचारिणां चिन्तादिभावानामिति चेन्न, गालवमधिकृत्य मदालसानाटके—

**उदञ्चिता चुम्बति तापसस्य**
**जटाकलापं पलितोज्जवला भ्रूः।**
**सन्ध्याघनं चन्द्रकलेव सेयं**
**न ब्रह्मचिन्तामलिना मुखश्रीः॥**

इति कुवलयाश्ववचने चिन्तामुखेन जडताया आस्वाददर्शनादिति। परे तु आनन्दांशस्यैकरूप्यादेक एव सर्वत्र रस इति स्वीकुर्वन्ति। यदाहुः—

**शृङ्गार-हास्य-करुणाद्भुत-रौद्र-वीर-**
**बीभत्स-वत्सल-भयानक-शान्तसञ्ज्ञान्।**

**आम्नासिषुर्दश रसान् कवयो वयं तु**
**शृङ्गारमेव रसनाद् रसमामनामः ॥** इति ।

नारायणस्तु—स्थायिनामानन्दाभेदस्य लोकोत्तरस्य चर्वणाददद्भुत एव सर्वत्र रस इत्युररीचकार । तदाह धर्मदत्तः स्वग्रन्थे—

**रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।**
**तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ॥**
**तस्माददद्भुतमेवाह कृती नारायणो रसम् ॥** इति ।

इतरे द्वादश रसा इत्यभ्युपगच्छन्ति । यदाहुः—

**शृङ्गार-वीर-करुणाद्भुत-रौद्र-भयानकाः ।**
**बीभत्स-हास्य-प्रेयांसः शान्तोदात्तोद्धता रसाः ॥**
**रतौ सञ्चारिणः सर्वान् गर्वस्नेहौ धृतिं मतिम् ।**
**स्थायिनोऽप्युद्धतप्रेयःशान्तोदात्तेषु जानते ॥ इति ।**

दश रसा इति केचित् । यदाहुः—

**शृङ्गारवीरकरुणाद्भुतरौद्रभयानकाः ।**
**बीभत्सहास्यशान्ताश्च वात्सल्यं च रसा दश ॥** इति ।

वात्सल्यं प्रेमोदयः, स शृङ्गाररसे प्रेयस्यन्तर्भूत इति नवैव रसा इति साम्प्रदायिकाः । यदाहुः—

**शृङ्गारवीरकरुणहास्यरौद्रभयानकाः ॥**

**बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ।**
**प्रेमोदयस्तु पूर्वेभ्यो रसेभ्यो न पृथङ्मतः ॥** इति ।

तदेव च ध्वनिकारोऽनुमेने, प्रबन्धेष्वारम्भे विश्रान्तौ च नवानामेवानुसन्धानात् । यदाह—

'रसा ह्यारब्धविश्रान्तेरनुसन्धानभागिनः' इति ।

साहित्यसुधासिन्धुकारस्तु—रत्युत्साहहर्षविस्मयशमप्रकृतिकान् शृङ्गारवीरहास्याद्भुतशान्तान् पञ्चैव रसाननुमेने । शोकक्रोधजुगुप्साभयप्रकृतिकास्त्वनास्वाद्या एव, दुखानुबन्धादिति । तदेवंविधभेदे ध्वनिकारमतमेव सिद्धान्ततयोल्लिखति—शृङ्गारेत्यादि, शान्तोऽपीत्यन्तेन । तत्र विभावानुभावव्यभिचारिपरिबृंहितरतिरानन्दाभेदेन चर्व्यमाणेति शृङ्गाराभासदेवादिविषयकरतिभावादिसाधारणत्वादुपेक्ष्य, आलम्बनरतिप्रकर्षेणास्वादप्रकर्षमापन्ना तथाविधा रतिरिति, शृङ्गारस्य स्वरूपं चात्रैव भक्तिवत्सलयोरनयोरन्तर्भाव इति युज्यते । बहुविषया तिर्यगालम्बिता, वात्सल्यरतिमतीं महाश्वेतामालम्ब्य वैशम्पायनरतिश्च न प्रकृष्यते । प्रकृष्यते च भक्त्या वत्सलो वत्सलेन भक्तिरुचितकामिरत्या तथाविधा कामिनीरतिरिति । अत एव धनिकः—

**प्रमोदात्मा रतिः सैव यूनोरन्योऽन्यरक्तयोः ।**
**प्रकृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ।** इति ॥

नाट्ये रसा इति । नाट्ये शान्तरसाभिनयो न सम्भवति ।

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदीहा ।**
**रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥**

इत्युक्तलक्षणस्य तस्य लौकिकसामाजिकैरनास्वादितत्वेन तत्राभिनयसङ्केताग्रहादिति भावः ।

तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलम्भश्च । तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते । यथा—

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण लसता बाला चिरे चुम्बिता ।। ३० ।।**

---

**सङ्केतः**

द्वौ भेदाविति । आत्मेति शेषः । तेन द्वौ भेदौ आत्मा शृङ्गारस्य, न तु आत्मानौ इति । अयमभिप्रायः—सम्भोगे चेत् न विप्रलम्भाशङ्का, तदा स्वाधीने अनुकूले च अनादरः स्यात्, वामत्वात् कामस्य । यन्मुनिः—

**"यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।**
**दुर्लभत्वं च यत् नार्याः कामिनः सा परा रतिः ।।"** इति ।।

एवं विप्रलम्भे चेत् न संयोगाशा, तदा नैराश्येन करुण एव स्यात् । तस्मात्—

**'प्राप्तं गतमिवेत्येवं गतं प्राप्तमिवेति च ।'**

इत्येवं परम्पराक्रमेण वर्धिष्णुः अयं कामः परमप्रीतिकृत् । सम्भोगविप्रलम्भयोस्तु शृङ्गारशब्दः—ग्रामैकदेशे ग्रामशब्दवत्—उपचारात् इति । सम्भोगः इति । संयुक्ताभ्यां भुज्यते इति सम्भोगः । सम्भोगसुखास्वादलोभेन वियुक्ताभ्यां प्रलभ्यते आत्मा अत्रेति विप्रलम्भः ।

शून्यमिति । किञ्चित् पूर्वकायेन । शनैः मन्दम् । तच्च यथा सः न जागर्तीत्याशयेन । अत्र गण्डयोः पुलकोद्गमेन निद्राव्याजावगमात् नायिकायाः लज्जाभावः ।

**संङ्केतः (रुय्यकः)**

लज्जानम्रेति—अन्तर्लीनणिजर्थत्वेन नामने बालायाः कर्तृत्वम् । अत्रोभयाधिष्ठानत्वे बालिकायाः प्रयोजनकत्व मुदाहृतम् । इदानीं रसोदाहरणेषु शिक्षार्थं प्रत्येक विभावानुभावव्यभिचारियोजना क्रियते । शून्यं वासगृहमिति—शृङ्गारस्योभयाधिष्ठानत्वेऽपि नायिकाप्रयुक्तस्य संभोगशृङ्गारस्येदमुदाहरणम्, नायकप्रयुक्तस्य तु 'त्वं मुग्धाक्षी'ति । उभयत्रापि परस्परानुरागस्य परिप्राप्तस्य वर्णनम् । तत्राद्ये श्लोके बालेति निर्दिष्टाया नायिकायाः प्रियेणेति निर्दिष्ट आलम्बनविभावः । एवं स्थितस्य बाला आलम्बनविभावत्वेन व्याख्येया परस्पराधिष्ठानत्वात् शृङ्गारस्य । उद्दीपनविभावस्तु शून्यं वासगृहं शयनञ्च, नायिकागतत्वेनानुभावा विलोकनादीनि परिचुम्बनपर्यन्तानि, पुलकालोकनन्तु व्यभिचारिभावः, तयापि तस्याश्चित्तवृत्तिविशेषत्वेन व्यभिचारिभाववत्त्वात्, तस्य चात्र व्यजान्त-

तयावस्तुवृत्तत्वेनाभावान्न वास्तवं व्यभिचारित्वमिति व्याजेन तदाश्रयणास्यानुभावत्वमुक्तम् । व्यभिचारिभावश्च विलोकनेन शङ्काः, उत्थानेन चपलता, तस्य शनैर्भावेन त्रासः, निर्वर्णेनेन, हर्षः, परिचुम्बनेनौत्सुक्यम्, आलोकनेन च लज्जाऽऽख्यो निर्दिष्ट । नायकगतत्वेन व्याजनिद्राश्रयणेन धृतिः, आकारगोपनरूपमवहित्थञ्च चिरपरिचुम्बनेनौत्सुक्यं हर्षस्य (हर्षश्च) व्यभिचारिभावः प्रतिपादितः । एवञ्च विभावानुभावव्यभिचारिबलात् संभोगशृगांराभिव्यक्तिः ।

## बालचित्तानुरञ्जनी

रसस्य सामान्यलक्षणमुक्त्वा रसस्य विशेषानाह तदिति । यद्यपि नवमः शान्तो रसोऽस्ति तथापि तस्य नटनीयत्वाभावान्न व्याघातः । अत एव 'अष्टौ नाट्ये रसाः' इत्युक्तम् । सर्वप्राणिसुलभत्वात् प्रधानत्वाच्च प्रथमोद्दिष्टस्य शृङ्गाररसस्य द्वैविध्यमाह तत्रेति । संयुक्ताभ्यां भुज्यत इति संभोगः । संभोगास्वादलोभेन वियुक्ताभ्यामात्मा लभ्यत इति विप्रलम्भः । ननु संभोगस्य परस्परावलोकानादिभेदेनानेकत्वात् कथं द्वैविध्यमत आह तत्राद्य इति ।

तत्र संभोगशृङ्गारमुदाहरति यथेति । स्वस्मिन् अनुरागं जिज्ञासमानेन केनचित् कामिनी, शून्यं वासगृहं विलोक्य शयनात् शनैः किञ्चिदुत्थायालीकनिद्रामुपागतस्य पत्युर्मुखं चिरं दृष्ट्वा विस्रम्भं परिचुम्ब्य तस्यैव जातपुलकां गण्डस्थलीमालोक्य लज्जावनतमुखी एवं स्वानुरागं प्रकाशयन्ती नवोढा काचन चिरं चुम्बिता ।

शून्यमित्यनेन परं काव्याङ्गत्वमुद्दीपनत्वं व्यज्यते । वासगृहमिति । स्रगादिसुरतोपकरणसंपत् व्यज्यते । 'किञ्चिदुत्थाय' इति पूर्वशरीरमात्रेण शय्यात्यागः । शनैरिति मिथः सन्दानितोऽनुसंक्षोभनीकृता । निद्राव्याजमिति अनुरागात् इयं स्वयं मे चुम्बनादिकं करिष्यतीति प्रतिनिर्देशात् तदा असौ प्रियतम इति । हसतेति झटिति व्याजनिद्राफलप्राप्तिः । चिरमिति अशिथिलकेशग्रहत्वम् । बाला चिरं चुम्बितेति विघ्नापगमसंभोगीकारश्च व्यज्यते ।

## काव्यादर्शः

तत्रेति । तेषु मध्ये । शृङ्गारस्येति । स्त्रीपुंसमाल्यर्तुशैलपुरहर्म्यचन्द्रपवनोद्यानाद्यालम्बनोद्दीपनरूपविभावाः, पुलकस्वेदकटाक्षाद्यनुभावाः, जुगुप्सालस्यौग्र्यवर्जव्यभिचारिका यूनोः प्रारम्भादिफलपर्यन्तव्यापिनी सुखोत्तरा परस्परास्थाबन्धात्मिका रतिः स्थायी भावश्चर्व्यमाणतैकप्राणः शृङ्गारो रसः । उपचारात्तु संभोगशृङ्गारः, लज्जाद्यैर्निषिद्धान्यपि इष्टदर्शनादीनि कामिनौ यत्र संभुङ्क्तः । संभोगेऽपि न चेद् विरहाशङ्काः तदा स्वाधीनेऽनुकूले वानादर एव स्यात् । यतः सुलभावमानी मदनः । तथा ह्यभिलष्यमाणं वस्तु प्राप्तं चेत् काऽभिलाषः ।तेन प्राप्तं प्राप्तमपहारितमिव, गतं [गतं] प्राप्तमित्येवं परंपराक्रमेण वर्धिष्णुरयं कामः परां प्रीतिं तनोति । अत एव तद्दशाद्वयमीलने सातिशयश्चमत्कारो मुक्तकेष्वपि । यथा—

**'एकस्मिन्‌ शयने पराङ्मुखतया वीतोत्तरं ताम्यतोः'** इति ॥

चुम्बनादीत्यादिपदाद् जलक्रीडाचन्द्रोपवनादि ।

## विवेकः

अस्य च द्वे अधिष्ठाने सम्भोगो विप्रलम्भश्च । तत्र सम्भोगस्यानन्त्यं दर्शयति परस्परावलोकनेति । एतेन सम्भोगस्य क्रमेणादिमध्यान्तावस्था निदर्शिताः । अभिनयैरुपदर्श्यमानश्चायं न तथा स्वदते यथा सन्दर्भविशेषे समर्प्यमाणः । यदाहुः (हृ. द.)—कविवागभिनेयश्च तदुपायो द्विधेष्यते । वस्तुशक्ति महिम्ना तु प्रथमोऽत्र विशिष्यते ॥ इति । अतो यद्यपि भरतपाठानुसारेण नाट्यरसा इत्युक्तं तथापि काव्यस्य प्राधान्यात् परिचुम्बनाद्यात्मनः सम्भोगस्य नाट्यविषयतया साक्षात् प्रयोक्तुं मुनिनैव निषिद्धत्वामुनिनेय-(त्तमुन्नेय)काव्यविषयतयाऽऽख्यायमानमुदाहरति । शून्यमित्यादि । 'लज्जानम्रेत्यन्तर्भूतणिजर्थत्वेन नामने बालायाः कर्तृत्वम् ।' (रु. सं. २१) रतेरुभयाधिष्ठानत्वात् । सम्भोगस्योभयाधिष्ठानाच्चापि नायिकाप्रयुक्तसम्भोगस्येदमुदाहरणम् ।

## दीपिका

काव्यरसास्तु शृङ्गारादयोऽष्टौ शान्तश्चेति नवेति भावः । तत्र रसेषु भिद्येते वक्ष्यमाणारीत्येति भेदौ । संयुक्तयोरन्योन्यानुकूलयो रम्यवेशगीतनाट्यादिसेवनात्प्रक्रंस्यमानरतिप्रकृतिः सम्भोगः । वियुक्तयोस्तु गुणस्मरणादिना रतिपोषप्रकृतिर्विप्रलम्भः । संयोगवियोगौ चात्र परस्परायत्तताऽनायत्ततारूपो, तेन दूतीप्रेषणादौ सम्भोगे, ईर्ष्यामानादौ विप्रलम्भे नाव्याप्तिः । परितः सर्वतो गण्डादिचतुःस्थाने वदनसंयोजनविशेषो वाभ्रव्यादिप्रणीतः परिचुम्बनम् । नम्रेत्यन्तं कृतकारिताऽर्थम् । तेन बालाया नमनकर्तृत्वेनालोक्येत्येककर्तृतया चोपपत्तिः । यवन्तानान्तूत्तरोत्तरतः पौर्वकाल्यम् । तत्र चोभयोरनुरागोद्रेके सत्यपि नायिकाया औत्सुक्त्यं स्पष्टम् ।

## दर्पणः

तत्र संभोगः संयुक्तनायकविषयः । विप्रलम्भश्च विप्रयुक्तविषयः । संयोगवियोगौ च परस्परौ यत्र नापन्नतारूपौ । तेन दूतीप्रेषणादेः संयोगविषयत्वम् ईर्ष्यामानादेश्च विप्रलम्भविषयत्वमविरुद्धम् । शून्यमिति । अत्र नम्रशब्दः अन्तर्भूतणिजर्थः । तेन लोकन-नमनयोरेककर्तृकतया पूर्वकाले क्त्वाप्रत्ययः । इह नायकः आलम्बनविभावः । शून्यवासगृहादिरुद्दीपनविभावः । अनुभावा बालागतादिविलोकनादयः । नायकगताश्च व्याजनिद्रादयः । निद्रा या हि व्याजा तस्या न व्यभिचारित्वम् । व्यभिचारश्च नायकगताविलोकनेन शङ्कोत्थानेन चपलता । उत्थानस्य गतैर्मानत्रासः । चिरं निर्णयेन सुप्तो न वेति सन्देहप्रभवो वितर्कः । 'विस्रब्धम्' इत्यनेन निद्रानिश्चयज्ञानेन हर्षः । परिचुम्बनेन औत्सुक्यम् । आलोकनेन च पतनोन्मुखनमनेन लज्जा नायिकानिष्ठैव । नायकगता च व्याजनिद्राश्रयेण धृतिः । चिरचुम्बनेनौत्सुक्यं हर्षश्च । एभिश्च साधारण्येन प्रतीतैः साधारण्येनाभिव्यक्तःसहृदयरतिभावः शृङ्गाररसरूपता लभते । एवं वक्ष्यमाणोदाहरणेष्वपि विभावादिविवेको बोद्धव्यः ।

अत्र द्वयोरनुरागिणोरनुरक्ततोद्रेकेऽपि नायिकाया औत्सुक्यमधिकम् ।

## साहित्यचूडामणिः

शून्यमिति । शून्यं विविक्तम् । शनैः, अन्यथा पत्युत्थानप्रसंगात् । निद्रैव व्याजश्चित्तपरीक्षणम् । पत्युः कपोलयोः पुलकोत्पत्तिस्तस्य निद्राहानिमनुमापयतीति मुग्धाया लज्जोदयः । अत्र नायिकया नायकस्याभियोगः ।

## सम्प्रदायप्रकाशिनी

शृङ्गारस्यावान्तरभेदप्रथनायाह—तत्रेति ।

शून्यमिति । वासगृहं शून्यं विलोक्य शयनाच्छनैः किञ्चिदुत्थाय निद्राव्याजमुपागतस्य पत्युर्मुखं सुचिरं निर्वर्ण्यं विस्रब्धं परिचुम्ब्य जातपुलकां गण्डस्थलीमालोक्य लज्जानम्रमुखी बाला हसता प्रियेण चिरं चुम्बितेति वाक्यार्थकक्ष्या शब्दार्थशासनमात्रविदां गोचरः । शून्यवासगृहविलोकनमुत्थानस्य, उत्थानं मुखनिर्वर्णनस्य तदपि परिचुम्बनस्य, परिचुम्बनं पुलकितकपोलालोकनस्य, तच्च मुखावनतेः, सा च प्रियकर्तृकस्य चिरचुम्बनस्य कारण-भूयमापद्यत इत्यर्थवैचित्र्यपर्यालोचनकक्ष्या त्वालङ्कारिकाणां गोचरः । ध्वनिप्रस्थानविदां तु कक्ष्याद्वयं चातिलङ्घ्य श्रवणसमनन्तरमेव सहृदयानामन्यदेव पार्यन्तिक्यां प्रतीतिविश्रान्तिकक्ष्यायामभिव्यङ्ग्यसम्भोगशृङ्गाररसचर्वणसु-खसाम्राज्यं नवनवमुद्धुरीभवद् विप्रथते । तथा हि—शून्यमित्यनेन निष्क्रान्ताशेषपरिजनतया क्रीडागिरिकुञ्जादिवत् परमोद्दीपनत्वं व्यज्यते । वासगृहेति स्रगनुलेपनमुखविचित्रसुरतोपकरणसमृद्धिः । विलोक्येति विलोकनक्रियायाः पौनःपुन्यलक्षणो विशेषो विष्वग्वृत्तिता च । किञ्चिदुत्थायेति पूर्वकायमात्रेण शय्यापरित्यागः । शनैरिति मिथस्स-न्दानितोरुसंक्षोभभीरुता । उपागतस्येति बुद्धिपूर्वमुपागमाद् व्याजनिद्राया दूरदुर्निरूपता । सुचिरमिति निर्वर्णननै-पुणमान्द्यान्मौग्ध्यमस्याः, तस्य च व्याजनिद्रागोपननैपुणम् । पत्युरिति परमलज्जास्पदत्वम् । विस्रब्धमित्यविमृश्यकारितायाः परा काष्ठा । परिचुम्ब्येति चुम्बनस्य परितः स्वाच्छन्द्येन प्रवृत्तिः । जातपुलकां, न तु जनितपुलकाम् । अनेन पुलकानामवशादाविर्भावः । आलोक्येति पुलकसन्दर्शनमात्रेण, न तु निपुणं निर्वर्ण्येति । नम्रमुखी, न तु नमितमुखी । अनेन तथा धारावाहिलज्जासंवेग, यदस्या मुखावनमनेऽपि न स्वातन्त्र्यम् । तत्तु लज्जातिभारात् स्वयमेव नतमिति । पत्युरित्युद्दिश्य प्रियेणेति प्रतिनिर्देशात् तदासौ विशिष्य प्रियोऽभूदिति । हसतेति झटिति व्याजनिद्राविधूननम् । बालेति अनैपुणाच्चुम्बनचौर्यरहस्यभेदः । चिरमिति यावता कालेन लज्जा-संवेगोपशमः सम्भोगप्रस्तावाङ्गीकारश्च, तावदविकलकचग्रहमाक्रम्य चुम्बितेति । अत्र विस्रब्धपरिचुम्बनान्तं शृङ्गा-रस्य नायिकारब्धत्वम् । अथ गण्डस्थलीमालोक्य लज्जानम्रमुखीति तस्य स्थगनम् । अथ हसता प्रियेण चुम्बितेति निष्पत्तौ नायकारब्धत्वम् । तेन शृङ्गारद्वयमिहाभिव्यज्यते । आद्यस्य पतिरालम्बनविभावः । शून्यवासगृहमुद्दीपन-विभावः । शयनादुत्थानं मुखनिर्वर्णनं परिचुम्बनं चेत्यनुभावाः । तदभिव्यञ्जिता हर्षौत्सुक्यशङ्कादयो व्यभिचारिणः । तैरभिव्यज्यमानो रतिभावः । सचेतनचेतश्चमत्काराय प्रभवति । अथ द्वितीयस्य बाला आलम्बनविभावः । शून्य-वासगृहादिकमुद्दीपनविभावः । हासोऽनुभावः तदभिव्यञ्जिता हर्षौत्सुक्यादयो व्यभिचारिणः । उभयारब्धोऽपि सन् प्रथमं नायिकारब्ध इति मूर्धन्यतया प्रागुदाहृतः । एवमुदाहरणेषु पदध्वन्यादिप्रपञ्चः स्वयमनुसन्धेयः । अस्माभिस्तु यावदपेक्षितं तावदेव लिख्यते ग्रन्थगौरवभयात् ।

## मधुमती

तत्र प्रथमोद्दिष्टं शृङ्गारं विभजते—सम्भोग इति । इष्टालिङ्गनाद्यवाप्तिपुष्टरतित्वं सम्भोगत्वम् । तदलाभा-पुष्टप्रकृष्टरतित्वं विप्रलम्भत्वम् ।

शून्यमिति । अत्र पत्युर्मुखं इत्यनेन आलम्बनम्, शून्यं इत्यनेन उद्दीपनम्, शयनादुत्थाय इत्यनेन उत्क-ण्ठालक्षणः व्यभिचारी, शनैः इत्यनेन स्तम्भरूपः अनुभावश्च ।

## विस्तारिका

द्वौ भेदा वित्युभयस्यैव रतिप्रकृतिकत्वात्। एक एव। सम्भोगत्वं सामान्यमाश्रित्य। तच्च विप्रलम्भभिन्नत्वे सति रतिप्रकृतिकत्वम्, न त्वलक्ष्यक्रमत्वम्, तस्य भावादिसाधारणत्वात्।

शून्यमिति। वासगृहं शयनगृहम्, विलोक्य निपुणं निभाल्य सहचरनिभृतसत्त्वशङ्कया किञ्चित्, न तु सर्वतः। निद्राभङ्गे पार्श्वपरिवर्तनेन समाधास्यमानत्वात्। शनैर्वलयादिक्वणो यथा न स्यात्। निद्राव्याजम्, न तु 'व्याजेन तां सर्वथा, तदसम्बन्धात्। सुचिरं यावद्बुद्धिवैभवम्, अत एव निर्वर्ण्य निःशेषं वर्णयित्वा। पत्युः, न तु प्रियस्य; तथाविधवर्णनायामपि निद्राव्याजसहिष्णुत्वात्। विस्रब्धं विश्वस्तम्, एतावताऽप्यभङ्गात्, निद्राया वास्तवत्वभ्रमात्। परितः कपोलयोर्भाले नयनपोश्च चुम्बनात्। स्थलीत्वेन पुलकस्याङ्कुरता। पुलकस्य सर्वाङ्गीणत्वेऽपि गण्डस्थल एव दर्शनात् तथोक्तिः। चिरं सलाभमूलपरिशोधनात्, इदानीं प्रियस्य कालाक्षेपकत्वात्। तव निखिलमेव रहस्यमवगतमिति हासः। लज्जत इति लज्जा पचाद्यच् पृथक् पदम्। ततो मुखनमनम्। लज्जनक्रियापेक्षया समानकर्तृकत्वेन क्त्वोत्पत्तिः। लज्जापदानुपादाने तदनुभावमुखनम्रत्वेन तत्प्रतीतावनुभावव्यङ्ग्यत्वपुष्ट्या भावध्वनित्वं स्यात्; उपादाने तु गोपनकृतपुष्टिराहित्येन शृङ्गाराङ्गत्वप्राप्तिः। अत एव हासस्यापि स्वपदोपादानम्।

केचित्तु नमिरन्तर्भूतकारितार्थः। नमनप्रयोजनयोश्चुम्बनस्य च बालाया एव कर्तृत्वेनैककर्तृकतेति भ्रान्त्या प्रतारयन्ति, तन्न; कारितान्तर्भावे मुखेन सह सामानाधिकरण्यानुपपत्तेः, तस्य नमनकर्तृकत्वविरहात्।

## सारबोधिनी

द्वौ भेदाविति। उभयस्यापि रतिप्रकृतिकत्वात्। तदुक्तम्—

**अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ।**
**दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः॥**
**भावो यदा रतिर्नाम प्रकर्षमधिगच्छति।**
**नाभिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते॥** इति॥

एक एव संभोगत्वसामान्यमाश्रित्य। तच्च विप्रलम्भभिन्नत्वे सति रतिप्रकृतिकत्वम्। शून्यमिति। शून्यम् इत्यनेनोद्दीपनातिशयः चुम्बनोपयोगिता च ध्वन्यते। एवं वासगृहम् इत्युपकरणसंपत्तिः। विलोक्य निपुणं निभाल्य। सहचरनिभृतसत्त्वशङ्कया। किञ्चिन्न तु सर्वतः। निद्राभङ्गे पार्श्वपरिवर्तनेन समाधास्यमानत्वात्। शयनादुत्थायेति। वामपार्श्वशयितस्य गण्डचुम्बनविधानयोग्यता उत्कण्ठातिशयश्च व्यज्यते। शनैर्वलयादिकरणो यथा न स्यात्। 'निद्राव्याजमुपागतस्य' इत्यनेन तदीयदार्ढ्यादिदर्शनाभिसंधानम्। 'पत्युर्मुखम्' इत्यनेन युक्तानुरागित्वम्। 'विस्रब्धम्' इत्यनेन रागातिशयादविमृश्यकारित्वम्। नम्रमुखी न तु नामितमुखी। लज्जातिशयात् तथा व्याकुलभूतात् येन मुखादनमनेऽपि न स्वातन्त्र्यम्। 'चिरम्' इत्यनेन लज्जापगमः संभोगस्वीकारश्च व्यज्यते। हसतेति। तव निखिलमेव रहस्यमवगतमिति हासः। लज्जत इति लज्जा पृथक् पदम्। ततो मुखनमनं लज्जनक्रियापेक्षया समानकर्तृकत्वेन आलोक्येत्यत्रौत्सुक्योत्पत्तिः। लज्जापदानुपादाने तु तदनुभावमुखनम्रत्वेन

तत्प्रतीतौ अनुभाव्यङ्ग्यत्वपुष्ट्या भावध्वनित्वं स्यात् । उपादाने तु गोपनकृतपुष्टिराहित्येन शृङ्गाराङ्गत्वप्राप्तिः । अत एव हासस्यापि स्वपदेनोपादानम् ।

## काव्यप्रदीपः

स द्वेधा-संभोगो विप्रहलम्भश्च ।

तत्र—

**'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।**
**दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥'**

स च परस्परालोकनालिङ्गनादिभेदादगणेय इत्येक एव गण्यते ।

**'भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।**
**नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥'**

स च संगमपूर्वः, तदन्यश्च तत्रान्त्योऽभिलाषहेतुक इत्युच्यते । अभिलाषपदेन तद्धेतोरनादिसंगमाभावस्य लक्षणात् । आद्यस्तु क्वचिदीर्ष्यया प्रणयेन वा मानरूपः । स ईर्ष्याहेतुक इत्युच्यते । ईर्ष्यापदेन मानहेतोरुपलक्षणात् । क्वचित्तु कार्यवशाद्देशान्तरस्थितेः । स प्रवासहेतुकोऽभिधीयते । उत्पद्यमानोत्पत्स्यमानावपि प्रवासौ स्वज्ञानद्वारा विप्रलम्भप्रयोजकाविति नाव्याप्तिः । प्रवासशब्देन ज्ञानलक्षणाद्वा क्वचिच्छापात् । स च शापहेतुक इति व्यवहियते । क्वचिदुक्तत्रितयातिरिक्ताद्गुरुलज्जादितः कारणात् । स एष विरहहेतुक इत्युच्यते । करुणशृङ्गारस्याप्यत्रैवान्तर्भावः । तत्र संभोगो नायिकारब्धो नायकारब्धश्च । क्रमेणोदाहरणम्—

**'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जा नम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'**

## काव्यप्रकाशखण्डनम्

तत्र शृङ्गारस्य द्वौ भेदौ—संभोगो विप्रलम्भश्च । उभयस्यैव रतिप्रकृतिकत्वात् । तत्राद्यः परस्परालोकनालिङ्गन-चुम्बनाद्यन्तभेदादपरिच्छेद्य इति संभोगत्वमुपाधिमादायैक्यम् । उदा.

**शून्य वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥**

शून्यमित्यादिना उद्दीपनातिशयः, चुम्बनप्रवृत्तियोग्यता च ध्वन्यते। एवं वासगृहमित्युपकरणसंपत्तिः। विलोक्य निपुणं निभाल्य, सहचरनिभृतत्वशङ्कया, किञ्चित् न तु सर्वतः, निद्राभङ्गभिया, [प. ११.१] शयनादुत्थायेत्युत्कण्ठातिशयो ध्वन्यते। शनैर्वलयादिक्वाणो यथा न स्यात्। निद्राव्याजमुपागतस्येत्यनेन तदीयधाष्ट्र्याभिधानम्, पत्युर्मुखमित्यनेन युक्तानुरागित्वम्, विश्रब्धमित्यनेन अनुरागातिशयादविमृश्यकारित्वम्। नम्रमुखी न तु नामितमुखी, लज्जातिशयात् तथा व्याकुलाऽभूत् येन मुखावनामनेऽपि न स्वातन्त्र्यम्। चिरमित्यनेन लज्जापगमः संभोगस्वीकारश्च व्यज्यते। हसता तव निखिलमेव रहस्यमवगतमिति हासः। लज्जत इति लज्जा पृथक् पदम्, ततो मुखनमनलज्जनक्रियापेक्षया समानकर्तृकत्वेन, आलोक्येत्यत्र क्त्वोत्पत्तिः।

**आदर्शः**

सम्भोगो विप्रलम्भश्चेति। तत्र दर्पणे—

**दर्शनस्पर्शनादीनि निषेवेते विलासिनौ।**
**यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः॥**

इति सम्भोगलक्षणम्, तच्च नायकनायिकयोरेकतरदर्शनादिव्यङ्ग्यसम्भोगे अव्यासम्। तथा—

**'यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ'**

इति विप्रलम्भलक्षणम्, तदपि नायकप्रसाद्यमानमानिनीविप्रलम्भेऽव्याप्तमतोऽन्यदेव लक्षणमाह। यथा—

**सम्भोगः सुखसम्भिन्ना विप्रलम्भस्तु दुःखयुक्।**
**रतिस्तयोः प्रकर्षः स्यादाधिक्यात् सुखदुःखयोः॥** इति।

अत एव निःशेषच्युतेत्यादौ वाच्यात्तदन्तिकागमनाद् यादृशं दुःखम्, रन्तुं तदन्तिकगमनाद् व्यङ्ग्यात्ततोऽप्यधिकदुःखमिति दुःखसम्भिन्नरतिव्यञ्जकस्य व्यङ्ग्यस्यातिशायित्वम्।

अनन्तभेदत्वादिति। भेदः भेदकः, बहुव्रीहिणा भेदानन्त्यादित्यर्थः।

शून्यं वासगृहमिति। अत्र उत्थायेत्यादिसमस्तक्रियासु पूर्व्वपूर्व्वक्रियापेक्षया आनन्तर्य्यं क्त्वाप्रत्ययतो बोध्यम्। आलोक्य लज्जानम्रमुखीत्यत्र अव्याहृतायां जातेति क्रियायामानन्तर्य्यं बोध्यम्। 'लज्जा' इत्येव क्रियापदमिति तु चक्रवर्त्ती। तथापि नम्रमुखीत्यस्यान्वयार्थं तत इत्यध्याहारावश्यकत्वेनेतो विशेषाभावादुपेक्षितम्।

बाला समस्तक्रियासु कर्त्री चुम्बितेत्यस्य तु कर्म्म। शयनात् किञ्चिदुत्थानं प्रियजागरणे झटिति संवरणाय, बालात्वेनाप्रागल्भ्यात्। उत्थाने शनैस्त्वञ्च जागरणहेतुशब्दानुत्पत्तये। सुचिरनिर्वर्णनञ्च अनुरागान्निद्रानिश्चयाय च। तन्निश्चयाच्च विश्रब्धं ज्ञाताश्वासं परिचुम्बनम्। प्रियेण चिरं चुम्बनञ्च भावनिश्चयेन बालायास्त्रासशङ्काऽपगमाय। चुम्बितेत्यत्र सवृद्धिकर्णपरिशोधनार्थं चिरमिति चक्रवर्त्ती, तच्च प्रहसनमात्रं वस्तुतस्तादृशबुद्ध्यभावात् उत्प्रेक्षायामेव तथात्वौचित्यात्। अत्र द्वयोरपि परस्परालम्बनिके रती सामाजिकेन स्ववासनायामारोपिते रसः।

पवमुत्तरोत्तरं बोध्यम् । निर्दिष्टाः स्वस्वक्रियाः स्वस्वरत्यनुभावाः । ता एव व्यत्ययेन परस्पररत्योरुद्दीपनानि । शून्यं वासगृहन्तु द्वयो रत्योरुद्दीपनम् । स्वस्वक्रियाव्यङ्ग्यौ हर्षौ द्वयो रत्योर्व्यभिचारिणौ ।

## सुधासागरः

तत्र सम्भोगो विप्रलम्भश्चेति शृङ्गारो द्विविधः द्वयो रतिप्रकृतिकत्वात् । तत्र—

**अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।**
**दर्शनस्पर्शनादीनि स सम्भोग उदाहृतः ॥**
**भावो यदा रतिर्नाम प्रकर्षमधिगच्छति ।**
**नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥**

अतएव मधुमतीकाराः प्राहुः—इष्टालिङ्गनाद्यवाप्तिपुष्टरतित्वं सम्भोगत्वं तदलाभाऽपुष्टप्रकृष्टरतित्वं विप्रलम्भत्वमिति ।

ननु सम्भोगेऽवान्तरभेदाः सम्भवन्ति ते किमिति नोदाहृता इति शङ्कां निराकुर्वन् वृत्तिकृदाह—तत्राद्यः परस्परावलोकनेत्यादि ।

सम्भोगमुदाहरति—शून्यमित्यादि ।

शार्दूलविक्रीडितं छन्दः । नवोढाया अभिनवसमागमवर्णनमिदम् । अयमर्थः । शून्यं निर्जनं, वासगृहं शयनागारं, विलोक्य—सखीनिभृतसत्त्वशङ्क्या विशेषेण दृष्टवा शयनात् न तु सर्वतः, निद्राभङ्गे पार्श्वपरिवर्त्तनेन समाधातुं शक्यत्वात्, शनैः वलयादिक्वाणशङ्क्या मन्दमुत्थाय, अनुरागजिज्ञासया निद्रायाः व्याजमिषमुपगतस्य प्राप्तस्य न तु व्याजेन निद्राम्, सर्वथा तदसम्बन्धात् पत्युः न तु प्रियस्य, अपूर्वसमागमेनानुद्भिन्नरहस्यत्वात् । तथा निर्वर्णनेऽपि निद्राव्याजसहिष्णुत्वादित्यन्ये । मुखं सुचिरं यावद्बुद्धिवैभवम्, निर्वर्ण्य अनुरागातिशयानन्निद्रानिर्णयार्थञ्च निःशेषं वर्णयित्वा । सुचिरं व्याजमुपागतस्येति वाऽन्वयः । विस्रब्धं विश्वासयुक्तं यथा स्यात्तथा निद्रायास्तात्त्विकत्वभ्रमात् । परिचुम्ब्य परितः कपोलयोर्भाले नयनयोश्चुम्बयित्वा गण्डस्थलीं जातपुलकां रोमाञ्चितामालोक्य । लज्जा लज्जावतीत्यर्थः । लज्जत इति लज्जेति मत्यर्थीयाच्प्रत्ययः । तेन लज्जनक्रियया समानकर्तृत्वेनाऽऽलोक्येति क्त्वाप्रत्ययोपपत्तिः । अन्यानि क्त्वान्तान्यप्येतदपेक्षाण्येव । अतएव नम्रमुखी । बाला—नवोढात्वेनाप्रगल्भा नत्वज्ञातयौवना । तव सर्वं रहस्यमवगतमिति हसता अतएवोद्भिन्नरहस्यत्वात् प्रियेण चिरं—लज्जापगमः सम्भोगस्वीकारश्च यावत् तावत् पर्यन्तं चुम्बिते-ति वाक्यार्थः ।

तत्र शून्यमित्यनेनोद्दीपनातिशयश्चुम्बनप्रहृतियोग्यता च ध्वन्यते । वासगृहमिति स्रक्चन्दनादिसम्पत्तिः । पत्युरिति युक्तानुरागित्वम् । विस्रब्धमित्यनेन च रागातिशयादविमृश्यकारित्वम् । नम्रेत्युक्तं न तु नामितेति । तेन लज्जया तथा विह्वलत्वं यथा मुखनामनेऽप्यशक्तिरिति व्यज्यते ।

अत्र यद्यपि परस्परस्यालम्बनत्वेन उभयोरपि रतिः प्रतीयते । शून्यगृहं शयनञ्चोभयोरुद्दीपनम् । बालाया रत्युद्दीपनं नायकनिद्रा । अनुभावौ मुखनिर्वर्णनचुम्बने । लज्जा व्यभिचारिभावः । नायकरतेरुद्दीपनं नायिकया

चुम्बनम्। हासादिरनुभावः। हासव्यङ्ग्यो हर्षः सञ्चारी तथापि नायकविषयिण्याः नायिकानिष्ठाया रतेरुद्रेकश्चर्वणाविषय इति सहृदयैराकलनीयम्। भोगावासो वासगृहमिति हारावली।

## विवरणम्

द्वौ भेदाविति। गुप्तपादादिभिर्विप्रलम्भशब्देनायोगवियोगौ सामान्येन लक्षिताविति तदनुसारेणेदम्।

धनिकस्तु—'अयोगो विप्रयोगश्च सम्भोगश्चेति स त्रिधा' इति विभज्यायोगविप्रयोगविशेषत्वाद् विप्रलम्भस्य तत्सामान्याभिधायित्वेन विप्रलम्भशब्द उपचरितवृत्तिर्मा भूदिति स न युक्त इत्याह।

विप्रयोग इति पाठे तु विप्रयोगत्वेनैवायोगोऽप्युपगृह्यते।

चुम्बनेत्यादि। एवं विभावानुभावसहस्रानुभाविता हर्षव्यभिचारिता रतिरनुभावभेदेन सङ्ख्यातुं न शक्यत इत्यभिलाषविषयसिद्ध्यनुभावतिहर्षव्यभिचारितरतिप्रकृतिकत्वेनैकेनैव धर्मेण गण्यत इत्यर्थः।

शून्यमिति। शून्यवासगृहस्योद्दीपनस्य विलोकनेन रतेः स्मरणपरिणामे कारणेन रतिकण्टकरहितमिदमिति मतिः, शयनादुत्थायेत्यौत्सुक्यम्, किञ्चिदिति शनैरित्यनेन चाभिघातशब्दादिना मा स्म जागरीदयमिति शङ्का, तया च लज्जौत्सुक्यव्यतिकरः, निद्राव्याजेत्यादिना पत्युरालम्बनस्य परचित्तपरीक्षाचातुर्ययुक्तानुरागित्वादिरास्वादानुकूलो धर्मः, सुचिरमिति निद्रात्ययमिति मतिः, तया च लक्षिताऽहमनेनेति वाम्यपरित्यागाद् भयम्, लज्जितेत्यर्थकेन लज्जेत्यनेनावगुण्ठनादिव्यापारवाचिना, नम्रमुखीत्यनेन चावहित्थलज्जे, तैश्च मतिलज्जौत्सुक्यशङ्काप्रशमभयहर्षादिभिर्व्यभिचारितश्चित्तपरीक्षाचातुरकितवालम्बितो वामस्वभावाभिजातमध्यनायिकासमवेतो रतिभावः स्वदते। अथ परचित्तपरीक्षापटोः कितवस्य हासचुम्बनानुभावितहर्षव्यभिचारितनिरुक्तनायिकालम्बनकरतिभावे गुणोभूयास्वादप्रकर्षकाष्ठामासादयतीति हर्षव्यभिचारितयोरेव रत्योरन्योऽन्यप्रकर्षकत्वादुपपद्यते सम्भोगशृङ्गारः।

तथा

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनाः ॥ ३१ ॥

---

### सङ्केतः

त्वं मुग्धाक्षीति। वीटिका कशासंयोजनपाशः, जालिकेति यावत्। सम्भोगस्य तात्कालिकं फलं परीरम्भः। स च कञ्चुलिकासद्भावे तथाविधसुखातिशयफलावहो न स्यात् इत्याशयेन विनैव कञ्चुलिकया इत्युक्तम्। सस्मिता या सखी सैव नेत्रोत्सवः तेन आनन्दितः। अलीकेति। समिषोपन्यासं यथा थवति तथेत्यर्थः।

### सङ्केतः (रुय्यकः)

त्वं मुग्धाक्षीति तु नायकस्य। वीटिकाश्रयणनि (विष्ट) सस्मिता येयं सखी नायिका सैव नेत्रोत्सवः।

त्वं मुग्धाक्षीत्यादि। मुग्धाक्षी प्रियतमश्चालम्बनविभावौ, उद्दीपनविभावस्तु शय्या तदाक्षिप्तञ्च वासगृहम्, स एवालीनिर्गमः (?) तेन करे प्रापितः। अनुभावो वीटिकास्पर्शः। व्यभिचारिभावः 'त्वं मुग्धाक्षीति' चाटुकाररूपस्तुत्याख्यो रतिभावः कथितः। एवं निर्व्यूढस्य रतिभावस्य स्थायित्वाभावात् पारिशेष्यता व्यभिचारित्वम्, तस्या वीटिकास्पर्शनौत्सुक्यचपलताऽऽवेगानां स्वीकारः, स्मितं नायिकागतत्वेन लज्जाऽनुभावः। अपसारितकञ्चुका च नायिकाऽऽलम्बनविभाववद्भाव्यु (—द्ध्व्यो ?) द्दीपनाविर्भावोऽपि। एवं सामग्रीवशाद्रसाभिव्यक्तिः।

### काव्यादर्शः

वीटिकाः कञ्चुकग्रंथनानि। सस्मिता या सखी सैव नैत्रोत्सवः।

### विवेकः

त्वं मुग्धाक्षीत्यादिषु नायकप्रयुक्तस्य। उभयत्रापि च परस्परानुरागस्य पारप्राप्तस्य वर्णनम्। तदिह 'बालेति निर्दिष्टाया नायिकायाः प्रियेणेति निर्दिष्टमालम्बनं विभावत्वेन, अनुभावा विलोकनादीनि परिचुम्बनपर्यन्तानि; जातपुलकत्वलज्जानम्रत्वे तु व्यभिचारिभावभूताया लज्जाया विभावना। नायकगतत्वेन च व्याजनिद्राऽऽश्रयणं पुलकोद्गमः सात्त्विकः, परिचुम्बनश्चानुभावः। यद्यपि निद्रा व्यभिचारिभावस्तथाऽपि तस्याश्चित्तवृत्तिविशेषत्वेन व्यभिचारिभावत्वात्तस्य चात्र व्याजात्म(त्त) तया वस्तुवृत्तत्वाभावान्न वास्तवं व्यभिचा-

रित्वमिति व्याजेन तदाश्रयणस्य नानुभावत्वमुक्तम्। व्यभिचारिभावश्च विलोकनेन शङ्कोत्थानेन चपलता, तस्य शनैर्भावेन त्रासः, सुचिरं' निर्वर्णनेन किमयं सुप्तो नवेति सन्देहप्रभवो वितर्को, निर्वर्णनेन हर्षः, परिचुम्बनेनौतसुक्यमवलोकनेन[च] लज्जाऽऽख्यो निर्दिष्टः। नायकश(ग) तत्वेन तुप व्याजनिद्राऽऽश्रयणेन धृतिराकारगोपनरूपमवहित्थं च चिरपरिचुम्बनेनौत्सुक्यं हर्षश्च व्यभिचारिभावाः प्रतिपादिताः (रु. सं. २३ पृ.)। तदियमभिलाषप्रसरनिरोधपरम्परामसहमाना तं परिचुम्बितवती, तेनापि च सा परिचुम्बितेति स्वयमनुभूतः परत्रानुमितः स्थायी रतिरूपो विभावादिभिरभिव्यज्यमानाः स्रक्सूत्रन्यायेन विगलितवेद्यान्तरैः सामाजिकैश्चर्व्यमाणः परब्रह्मसाक्षातकारक्षणमिव (इव) प्रत्यक्षतामुपनयन्नपारचमत्कारसारतायां विश्राम्यतीति परस्परजीवितसर्वस्वाभिमानरूपाया रतेः केनचिदध(दूध)न्येन लब्धावगाहनायाः पारप्राप्तेः परिचुम्बनलक्षणः सम्भोगशृङ्गारः परिपूर्णः।

त्वं मुग्धाक्षीत्यादौ(दि)—प्रियतम इति प्रियत्वमात्रनिरासपरेण तमपा कोऽप्यनुरागप्रकर्षः। वीटिकाग्रथननिविष्टस्मितविशेषवतीयं सखी नायिका सैव नेत्रोत्सवस्तेनानन्दित इति। अत्र 'मुग्धाक्षी प्रियतमश्चालम्बनविभावौ, उद्दीपनविभावस्तु शय्यातटाक्षिप्तं वा सगृहं, स एवतीव (ली-) जननिर्गमनेन पारं प्रापितः, अनुभावो वीटिकास्पर्शो व्यभिचारिभावस्तु मुग्धक्षीति चाटुकाररूपः स्तुत्याख्यो रतिभावः कथितः। एवं विधस्य रतिभावस्य स्थायित्वाभावात् पारिशेष्यतो व्यभिचारित्वं तथा [तस्याः] वीटिकास्पर्शनौत्सुक्यचपलताऽऽवेगानां स्वीकारः, स्मितं नायिकागतत्वेन लज्जाऽनुभावः। अपसारितकञ्चुका च नायिकाऽऽलम्बनविभाववद्भाव्युद्दीपनविभावोऽपि। एवं पूर्ववद् विभावादिसामग्रीवशाद्रसाभिव्यक्तिः' (रु.सं. २३पृ.)।

## दीपिका

सम्प्रति नायकौत्सुक्यमुदाहरति-त्वमिति। तद्वीटिकाऽऽक्षयणं सखी आलीजनस्य नायिका तस्या नेत्रोत्सव इत्येके। उक्तासु वक्ष्यमाणासु चोदाहृतिषु पूर्वोक्तनयेन विभावादिविभागो रसनिष्पत्तौ भावुकैर्बोध्यः। अस्माभिस्तु विस्तरभीत्या न प्रपञ्चितः।

## दर्पणः

नायकौत्सुक्यातिरेके पुनरुदाहरति त्वमिति। वीटिका ग्रन्थिः। सस्मितसखी सैव नायिका। नैत्रस्योत्सवो विकाशादिः।

## साहित्यचूडामणिः

अथ विपर्ययमुदाहरति—त्वमिति। विनैव न तु विनापि। वीटिका कञ्चुलिकाया बन्धनग्रन्थिः। शनकैरिति, युगपदपक्रमणस्य शङ्कावहत्वात्। अलीकः—

**दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।**
**तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम्॥**

इत्यादिवचनोपन्यासो यत्र।

## सम्प्रदायप्रकाशिनी

नायकारब्धत्वेनाप्युदाहर्तुमाह—तथेति ।

त्वं मुग्धाक्षीति । वीटिका कञ्चुलिकाग्रन्थिः । सखीति वयस्याप्रतीत्यपेक्षया नायिकाया व्यपदेशः । नायके कञ्चुलिकावीटिकामुद्ग्रथयितुमिच्छति सति तस्य शय्योपान्ते निविष्टा रिरंसाविर्भावेन सस्मिता या सखी नायिका सैव नेत्रोत्सवः आलिजनस्य नयनानन्दहेतुः । अलीकमित्युपन्यासविशेषणम्, अलीको वचनोपन्यासो यत्रेति । अपनीतनिचोल कैव शोभस इति निचोलमुद्ग्रथयितुकामे कमितरि सस्मितत्वेन नेत्रोत्सवभूतया नायिकयानन्दितः सविधवर्ती सखीजनः शुकोऽध्यापनीयः शारिका भोजनीयेत्यादिकं वचनमलीकत्वेनोपन्यस्योपन्यस्य निर्यात इत्यर्थः ।

## मधुमती

त्वं मुग्धाक्षीति । अत्र त्वं मुग्धाक्षि ! इत्यनेन आलम्बनम्, विनैव कञ्चुलिकया इत्यनेन उद्दीपनम्, अभिधायिनि वीटिकासंस्पृशि इत्यनेन तुल्यकालत्वप्रतीत्या उत्कण्ठालक्षणः व्यभिचारी, वीटिकासंस्पृशि इत्यनेन अनुभावश्च ।

न च उदाहरणयोः अन्यतरवैयर्थ्यम् । नायकालम्बनस्य सम्भोगस्य आद्येन, नायिकालम्बनस्य च सम्भोगस्य अन्त्येन श्लोकेन उदाहरणात् । तत्प्रयोजनमपि—नायकयोः आलम्बनत्वं आश्रयत्वं च समानमिति ध्वननम् ।

## विस्तारिका

लक्ष्यान्तरमाह—तथेति । मुग्धं मनोहरमक्षि यस्याः । अक्ष्णैव जगद्वशीकरणक्षमत्वम्, अतः कञ्चुलिकावैयर्थ्यम् । लक्ष्मीं शोभाम् । ताच्छील्ये णिनिः । ततः सर्वमनोहारिता । वीटिका ग्रन्थिमुद्रा, निविष्टा निविडं लग्ना, सस्मिता च स्मितेन कञ्चुलिकाऽपसारणसम्मतिप्रकटनम्, अन्यथाऽसूयया भ्रूकौटिल्यमेव स्यात् । अत एव वाणीनिःसरणम् । सखी आलीजनस्य सखी नायिका, सैव नेत्रोत्सवः पत्युर्वल्लभायास्तं प्रत्यनुरक्तायाः सख्या दर्शनेन हर्षोदयात् । निर्यातो गृहान्निःसृतः शनकैरुत्सवं विहाय सपदि गन्तुमशक्तः, जनोऽविदगधः, औचित्यावर्जितद्रागपसरणत्यागात् ।

पूर्वत्र नायिकायाः, परत्र च नायकस्य रागौत्कट्येन लक्षणयोर्भेदः । अनयोर्नायिका नायकश्चालम्बनविभावौ । शून्यगृहनयनसौन्दर्यादय उद्दीपनाः, चुम्बनवीटिकासंस्पर्शादयोऽनुभावाः, लज्जाहास्यादयः सञ्चारिणः । एतैः कारणादिभिरनुमितवर्णनीयरतीनां सामाजिकानां काव्योपनिबन्धेन । एभिरेव विभावादिभिरुद्बुद्धा रतिः स्वं विभावादिकं च विषयीकृत्य समूहालम्बनरूपः पानकरस इव रसः । एवं सर्वत्रावधेयम् ।

## सारबोधिनी

लक्ष्यान्तरमाह त्वमिति । ननु किम् उदाहरणान्तरेणेति चेदुच्यते । प्रथमं नायिकोत्कण्ठा वर्णनीया इत्यत्र तात्पर्यति । तथा चाहुः 'पूर्वं रक्ता भवेन्नारी पुमान् पश्चात् तदिङ्गतैः' इति । अत एव तथैवोदाहृतम् । वीटिका

कञ्चुलिकाग्रन्थिः । सस्मितेत्यनेन कञ्चुलिकापसारणस्वरसो व्यज्यते । सखीति । आलीजनस्य सखी नायिकैव, सैव नेत्रोत्सवः । पत्युर्वल्लभस्य तं प्रत्यनुरक्तायाः सख्या दर्शनेन हर्षोदयात् ।

केचित्तु—'सखी विस्रम्भापात्रं स्यादाली स्नेहस्य भूमिकेति' दर्शनात् सखी नायिका च भिन्ना इत्याहुः । अलीकेति । शुको भोजनीयः । चकोरी चन्द्रिकापानाय मोचनीया । सखि नैकाकिनी कर्तुं शक्ष्यसि । तदहमपि ते द्वितीयकमाचरामीत्याद्यलीकवचनम् । शनकैरिति । हठेन निर्याणे सख्या लज्जासंभावनाभीरुतवम् । अत्र नायिका आलम्बनम् । तत्र च नायक इत्युदाहरणभेदः ।

## काव्यप्रदीपः

अलोक्येति लज्जया समानर्कतृकम् ।

**त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहरिणीं**
**लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।**
**शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो**
**निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥**

वीटिका वसनग्रन्थिः ।

## आदर्शः

नायिकारतिप्रयोज्यनायकरतावुदाहृत्य नायकरतिप्रयोज्यनायिकारतावदाहरति—त्वं मुग्धाक्षिति । शय्याप्रान्तोपविष्टाया नायिकायाः स्तनपिधानमुद्घाटयितुं छलेन तद्ग्रन्थिं स्पृशति नायके सति नायिकया सहर्ष-विलोकित आलीजनश्छलेन निर्यात इति समुदायार्थः । मुग्धाक्षिति मुग्धाङ्गीति वा स्वाभाविकसौन्दर्य्यप्रदर्शनाय सम्बोधनम् । वीटिका ग्रन्थिः । सखी आलीजनस्य नायिका । झटिति निर्याणे नायिकाया लज्जा स्यादतोऽज्ञाना-भिनयाय शनैर्निर्याणं तस्यालीकहेतुकथनञ्च । अत्रापि द्वयोरेव रत्योर्द्वावालम्बने । एतादृशोक्ति-वीटिकासंस्पर्शौ नायकरतेरनुभावौ, नेत्रोत्सवः स्मितञ्च नायिकारतेः । एकतररतेरनुभावा अन्यतररतेरुद्दीपनानि । द्वयोरुक्तानुभाव-व्यङ्ग्यौ हर्षौ व्यभिचारिणौ । रतिज्ञे सामाजिके रसोत्पत्तिः ।

## सुधासागरः

त्वं मुग्धेति । अमरुशतके कुचोपपीडं परिरभ्य रन्तुकामस्य आलिङ्गनव्यवधानभूतां कञ्चुकीं मोचयितुं प्रवृत्तस्य नायकस्य वर्णनमिदम् । शार्दूलविक्रीडितं छन्दः । अयमर्थः । हे मुग्धाक्षि सुन्दरनयने त्वं कञ्चुलिकया विनैव मनोहारिणीं चित्ताकर्षणशीलाम्, ताच्छील्ये णिनिः, लक्ष्मीं शोभां । धत्से धारयसि, अक्ष्णैव मनोहरणात् अत एव कञ्चुलिकावैयर्थ्यम् । न केवलं कञ्कुलिकया शोभाऽनुत्पत्तिरपि तु रमणीयाङ्गतिरोधानमपीति एवकारार्थः । इत्यभिधायिनी भाषमाण एव प्रियतमेऽतिशयितप्रातिपात्रे नायके तस्याः कञ्चुलिकायाः वीटिका ग्रन्थिः तत्संस्पृशि सति कञ्चुकीमोचनायेति भावः सखीसार्थाल्लज्जया शय्याया उपान्ते समीपे निविष्टा निबिडसंलग्ना, प्रतारणाभिज्ञ-तया स्मितसहिता सखीस्निग्धाङ्गनैव नेत्रोत्सवः तां दृष्ट्वा हर्षोदयात् तेनानन्दितः सञ्जातानन्दः आलीजनः,

अलीकानां मिथ्याभूतानां शुको मया भोजनीयः मया तु सारिका पाठनीयेत्यादिवचनानामुपन्यासो यथा स्यात्तथा । शनकैर्मन्दं निर्यातः मन्दिरान्निर्गतः ।

शनैस्त्वमुत्सवत्यागे दुःखोत्पादात् । अतएवाऽऽलीजनोऽविदग्धः समयज्ञानादिति चक्रवर्त्तिनः । वयन्तु शनैस्त्वलीककथा च नायिकाया लज्जातिशयपरिहाराय, अतएवालीजनो विदग्ध इति प्रतीमः । प्रियतम इत्यनेनाऽनुपेक्षणीयत्वं सस्मितेत्यनेन कञ्चुलिकाऽपसारणे स्वरसश्च व्यज्यते ।

यद्यप्यत्र मुग्धाक्षी प्रियतमश्च परस्परत्यालम्बनविभावौ । नायकरतेरुद्दीपनं नयनसौन्दर्याङ्गशोभादि । आभाषणवीटिकास्पर्शावनुभावौ । तयोरभिधायिनि वीटिकासंस्पृशीति तुल्यकालताऽवगत्या प्रतीयमान उत्कण्ठाख्यः सञ्चारी । नायिकारतेस्तु नायकरत्यनुभावावेवोद्दीपनं, स्मितादिरनुभावः । तद्व्यङ्ग्यो हर्षः सञ्चारी । तथापि प्राधान्येन तु आस्वादविषयत्वं नायिकालम्बनाया नायकनिष्ठरतरेवेतिपूर्वस्माद् भेदः ।

अतएव सम्भोगो नायिकारब्धो नायकारब्धश्चेति प्रदीपकाराः ।

मधुमतीकृताऽप्युक्तम्—न चोदाहरणयोरन्यतरवैयर्थ्यम् । नायकालम्बनस्याद्येन नायिकालम्बनस्य सम्भोगस्य चान्त्येन श्लोकेनोदाहरणादिति ।

अत्र श्रीवाग्देवतावतारैः द्विविधसम्भोगोदाहरणेन नायकयोरालम्बनत्वमाश्रयत्वञ्च समानमिति ध्वनितम् ।

यत्तु 'पूर्वं रक्ता भवेन्नारी पुमान् पश्चात्तदिङ्गितैः' इति क्रमप्रदर्शनायोदाहरणान्तरमिति कैश्चिदुक्तम्, तन्न सम्यक् । प्रथमोदाहरणेनैव तादृक्क्रमावगतिसिद्धेः । तत्र नायिकोत्कण्ठाया एव प्रथमं वर्णनात्, प्रायिकत्वाच्चेति सुधीभिर्ध्येयम् ।

## विवरणम्

'पुरुषः प्रमदायुक्त शृङ्गार इति गीयते' इति, 'आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात् तदिङ्गितैः' इति च यद्यपि स्त्रीरागस्य गुणीभावोऽवगम्यते, तथापि तदौत्सर्गिकमित्याशयेनोत्सर्गापवादस्थलमुदाहरति—त्वमित्यादि । मुग्धाक्षीत्यामन्त्रणपदेन विनैवेत्यादिविनोक्त्यलङ्कारेण च गर्भितस्याभिधानस्वरूपानुभावस्य वैशिष्ट्ये सम्बोध्याया अतिलावण्यम्, वक्तुश्च कञ्चुकापसारणनिभृतालिङ्गनाद्यभिलाषः, कैतवं तु वीटिकास्पर्शस्य, तन्मोचनौत्सुक्यं सन्निकर्षतो हर्षश्च व्यङ्ग्यम् । तैश्चाभिलाषौत्सुक्यहर्षैः कितवस्य सुन्दरीगोचरा रतिरभिव्यज्यते । शय्योपान्तोपवेशनेन लज्जावहित्थे मानो वा । स्मितेन नेत्रोत्सवेन तदास्फारणेन हर्षः । आलीजनस्यानन्देन संख्याः प्रसाद ईर्ष्याप्रशमरूपः, निर्याणेन वासगृहशून्यतास्वरूपमुद्दीपनम् । अलीकवचनेत्यादिना चालीभिरस्मदभिप्रायः परीक्षित इति विस्रम्भः । तेन निर्यन्त्रणो रतिव्यापारः, तेनापि हर्षः प्रत्याय्यते । ततश्च विप्रलब्धप्रसन्ननायिकासमवेतो निरुक्तनायकालम्बितश्च, कथितया तद्रत्या प्रकृष्यमाणः, स्मितनेत्रास्फारणाद्यनुभावितः, शून्यवासगृहाद्युद्दीपितो निर्यन्त्रणनिधुवनपरिपूर्यमाणहर्षलज्जावहित्थव्यभिचारितो रतिरसः सामाजिकाय स्वदते ।

अपरस्तु, अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः । क्रमेणोदाहरणम्—

**प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-**
**स्तास्ता मुग्धदृशो निसर्गमधुराचेष्टा भवेयुर्मयि ।**
**यास्वन्तःवरणस्य बाह्यकरणव्यापाररोधी क्षणा-**
**दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ३२ ॥**

---

### सङ्केतः

अपरस्त्विति । पूर्वं असङ्गे सङ्गेच्छा अभिलाषः । प्रतिनियतेऽपि सङ्गे कुतश्चित् कारणात् असङ्गः विरहः । सपत्नीषु कान्तकृतसन्मानाद्यसहनं ईर्ष्या । देशान्तरगमनं प्रवासः । कुपितदेवादि कृतः वाग्दण्डः शापः ।

प्रेमार्द्राः इति । प्रणयस्पृशः स्वयमाश्लेषादियाच्ञास्पृशः परिचयात् पुनः पुनः करणात् उद्गाढरागोदयाः तास्ताः चेष्टाः मयि भवेयुः भवन्तु इति आशंसापरिकल्पितासु मनोरथविषयीकृतासु लयः चेष्टानां साक्षादनुभवः इव ।

### सङ्केतः (रुय्यकः)

प्रेमार्द्रा इत्याद्यनुवादेन परिचयादुद्गाढरागोदया भवेयुरिति विधेयम् । लयस्तन्मयत्वम् । निशान्तोऽन्तःपुरम् । सख्युर्भावः सख्यम्, तेनोपदेशः । जीवित प्रियेत्यामन्त्रणपदद्वयम्, प्रियेति तु सुहृद्विशषणत्वे प्रियसखैरित्यश्रुविशेषणं न वाच्यम् ।

अपरस्त्विति । अभिलाषहेतुकविप्रलम्भो यत्रानिर्व्यूढे समागमे मनोरथास्पदविषयोऽभिलाषः । विरहविप्रलम्भो यत्रानिर्णीतहेतुको विप्रलम्भः, ईर्ष्याविप्रलम्भो नायिकाऽन्तरव्यग्रनायकविषयः । प्रवासविप्रलम्भः प्रोषितविषयः । शापविप्रलम्भो यत्र शापवशान्नायकयोर्विघटनम् । ननु शापहेतुको भरते करुणरस उक्तः । अत्र कथं तद्धेतुको विप्रलंभः स्यात् ? सत्यम्, सापेक्षनिरपेक्षभावकृतोऽनयोर्विषयः । शापहेतुकोऽपि सापेक्षभावो विप्रलम्भो यथा कालिदासस्य विक्रमोर्वश्यां मेघदूते च । करुणस्तु निरपेक्षभावो यथेन्दुमतीविषयेषु प्रलापेषु ।

प्रेमाद्रा इति । अत्राभिलाषविप्रलम्भे प्रबन्धविषये माधवस्य मालती आलम्बनविभावः वसन्तोद्यानादिः प्रबन्धगत उद्दीपनविभावः, काक्वादिर्वाचिकोऽनुभावः । नायिकागतेतिवृत्तचिन्तास्मृतिप्रभृतयो व्यभिचारिणः, आनन्दा (पर) नामा हर्षश्च व्यभिचारिभावः । एभिरत्राभिलाषविप्रलम्भो व्यज्यते ।

## बालचित्तानुरञ्जनी

एवं संभोगरसमुदाहृत्य विप्रलम्भस्य पञ्चविधत्वमाह अपरस्त्विति। पूर्वमसङ्गे सङ्गे वा अभिलाषः। संभोगे सत्येव कुतश्चित् कारणात् असंयोगे विरहः। सपत्नीषु कान्तकृतविरहः कान्तकृतसम्मानाद्यसहनमीर्ष्या। दिशान्तरगमनं प्रवासः। कुपितदेवादिकृतो वाग्दण्डः शापः।

अभिलाषहेतुकमुदाहरति प्रेमार्द्रा इत्यादि। कस्यचित् कामिनो वचनम्। प्रेम स्नेहः तदेव चुम्बनादिना प्रकर्षं नीतं प्रणयः। स एव परिचयातिशयेन प्रचीयामानो रागः। सुन्दर्यास्तास्ता एवंविधाश्चेष्टा परिचयादुद्गाढ-रागोदया भवेयुः। मम तु प्रार्थनया कल्पितास्वपि यासु चेष्टासु क्षणात् अन्तःकरणस्यानन्देन सान्द्रोलयः तन्मयत्वं भवति।

## काव्यादर्शः

अपर इति विप्रलम्भशृङ्गारः। सुखास्वादनलोभेन विशेशण प्रलभ्यते आत्मात्रेति। द्वयोरप्यन्योन्यं रत्यु-त्पत्तावपि कुतोऽपि हेतोरप्राप्तसमागमोऽभिलाषविप्रलम्भो यथा वत्सराज—रत्नावल्योः। विरहविप्रलम्भस्तु खण्डितया प्रसाद्यमानयापि प्रसादमव्रजन्त्या, ततः पश्चात् तप्तया विरहोत्कण्ठितया सह। ईष्याविप्रलम्भस्तु प्रणयखण्डनादिना खण्डितया सह। प्रवासो भिन्नदेशत्वं, तद्विप्रलम्भः प्रोषितभर्तृकयेति विभागः। करुणविप्रल-म्भस्तु करुण एव, यथा रतिप्रलापेषु 'हृदयेवससीति मत्प्रिय'इत्यादौ।

प्रेमार्द्रा इत्यनुवादेन परिचयाद् उद्गाढरागोदया भवेयुरिति विधेयम्। लयस्तन्मयत्वम्।

## विवेकः

अपरस्त्विति—विप्रलम्भः। अयञ्च 'प्रथमानुरागमानप्रवासकरुणात्मकत्वेन'(रु. का. अ. १४।१) यद्य-प्यन्यैश्चतुर्विध उक्तस्तथाऽपि शापहेतुकं भेदमाश्रित्याह पञ्चधेति। त(य)त्रालोकनादिमात्रात् प्रकर्षधाराऽधिरूढा-नुरागयोर्नायकयोः कुतञ्चिन्निमित्तादसंप्राप्तयोश्चेष्टाः स प्रथमः। अत्र चाभिलाषचिन्तास्मृति-गुणकीर्तनोद्वेगप्रलापोन्मादव्याधिजडतामरणरूपा दशावस्था जायन्ते। तत्राभिलाषहेतुको विप्रलम्भो यत्रानिर्व्यूढ-समागमे मनोरथादि विषयोऽभिलाषः। विरहोत्कण्ठितया सह विप्रलम्भो विरहविप्रलम्भः। ईर्ष्याविप्रलम्भो नायिकाऽन्तरव्यग्रनायकविषयः। परदेशं नायके यास्यति याति याते वा प्रवास(५) हेतुकः प्रवासविप्रलम्भः। शापवशाद्यत्र नायकयोरन्यत्र विघटनं स शापविप्रलम्भः। ननु शापहेतुको भरते (ना. शा १म. ३६८ पृ.) करुणरस उक्तः, तत्र कथं तद्धेतुको विप्रलम्भः स्यात्? सत्यं सापेक्षनिरपेक्षभावकृतोऽनयोर्विशेषः। शापहेतुकोऽपि सापेक्ष-भावो यथा कालिदासस्य विक्रमोर्वश्यां मेघदूते च। करुणस्तु निरपेक्षभावो यथेन्दुमतीविषयेषु प्रलापेषु। प्रेमार्द्रा इत्यादि—प्रणयः प्रेमपूर्वको वशीकारः। 'प्रेमार्द्रा इत्याद्यनुवादेन परिचयादुद्गाढरागोदया भवेयुरिति विधेयम्'। (रु.सं.२१ पृ.) तास्ता इति याः स्वसंवेद्याव्यपदेश्यानन्तरूपाः। निसर्गपदेनाधेयगुणविरहः। अन्तःकरणम् मनो बहिः-(बाह्य) करणं चक्षुरादि, तद्व्यापारपरिपन्थी हर्षमयो लयस्तन्मयत्वम्। अत्रानन्यसामान्यपरस्परानुरागसन्तप्य-मानरणरणकोत्कलिकाकदर्थ्यमानमानसत्वेऽपि गुरुजनपारतन्त्र्यादनिर्व्यूढः समागम इति। 'अत्राभिलाषविप्रलम्भे प्रबन्धविषये मालती माधवस्यालम्बनविभावो, वसन्तोद्यानादिः प्रबन्धगत उद्दीपनविभावः, का क्वादिर्वा-

चिकोऽनुभावः। एतन्मुद्रिताश्चिन्तास्मृतिप्रभृतयो व्यभिचारिणः—एभिरत्राभिलाषविप्रलम्भो व्यज्यते (रु.स. २४ पृ.)।

## दीपिका

अपर इति अभिलाषः सङ्गमप्रागभावः-एकदेशस्थयोरपि गुर्वादिवशात्सङ्गमो परोधो विरहः। ईर्ष्येति मानोपलक्षणम्। तेन कुमारसम्भव अष्टमसर्गे सन्ध्यावर्णनादौ वर्णितः प्रणयमानोऽपि संगृह्यते। अन्यासङ्गिनि कान्ते सानुरागप्रियविषयः कोप ईर्ष्या। प्रवासो देशविच्छेदः। मुन्यादिक्रोधयन्त्रणं शापः। स च सर्वापवादक इत्याह-पञ्च-विध इति। अभिलाष-विरह-प्रवासविषये तत्सद्भावे तेनैव व्यवहारः।

क्रमेणेति-दिङ्मात्रेणेति शेषः। प्रेमदर्शनादिगतो भावव्यञ्जकः कश्चन विशेषः। तत्पूर्वको वशीकारः प्रणयः। परिचयो रहस्यवेदनम्। मयि भवेयुरिति—आश्वासकाक्वा धन्य एवाहं यदि तद्विषयः स्यामित्याकूत-ध्वननम्। लयस्तन्मयत्वम्।

## दर्पणः

अपरो विप्रलम्भः। अभिलाषः सङ्गमप्रागभावः। विरहे एकस्थयोरपि गुर्वादिवशात् संभोगोपरोधः। ईर्ष्या अन्यासक्तेन कान्तेनापि कोपः। एवञ्चोपलक्षणम्। तेन प्रणयमानोऽपि सङ्गृह्यते। तदुक्तं मम साहित्यदर्पणे—

**द्वयोः प्रणयमानः स्यात् प्रमोदेऽपि महत्यपि।**
**प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना॥ इति** [सा. द. ३.१६८]

प्रवासो भिन्नदेशता। शापो मुन्यादिक्रोधयन्त्रणोः, तस्य चापवादत्वात्। पूर्वभेदान्तरसंभवेऽप्यनेनैव व्यपदेशः। प्रेमाद्रा इति। दर्शनादिगताभावव्यञ्जकः कश्चनविशेषः। प्रेम्णः तत्पूर्वको वशीकारः। प्रणयरहस्यसं-वेदनं परिचयः। लयस्तन्मयत्वमिव।

## साहित्यचूडामणिः

अपर इति। अपरो विप्रलम्भलक्षणः। यत्र नायकयोरुत्कण्ठायामपि यतः कुतोऽपि हेतोरसमागमः, सोऽभिलाषहेतुकः, प्रणयखण्डनादिना खण्डितया सह विरहनिमित्तकः। यथाह—

**तत्रायोगोऽनुरागेऽपि नवयोरेकचित्तयोः।**
**पारतन्त्र्येण दैवाद् वा विप्रकर्षादसङ्गमः॥**
**दशावस्थः स तत्रादावभिलाषोऽथ चिन्तनम्।**
**स्मृतिर्गुणकथोद्वेगः प्रलापोन्मादसंज्वराः॥**
**जडता मरणं चेति दुरवस्थं यथोत्तरम्।** [दशरू. ४.५०-५२]

**विप्रयोगस्तु विश्लेषो रूढविस्रम्भयोर्द्वयोः॥** [दशरू. ४.५७]

इति । प्रणयकलहादौ मानिन्या सममीर्ष्याहेतुकः, अर्थार्जनादिना कौतूहलात् प्रोषितपतिकया सह प्रवासनिबन्धनः, प्रभुकोपसंपन्नः स एव शापमूल इति पञ्चविधः ।

प्रेमेति । प्रेम्णा भावविशेषणार्द्राः आनुकूल्यशालिन्यः । उक्तं हि—

**यद्यदस्य प्रियं वेत्ति तस्य तस्याशुकारिताम् ।**
**योग्यतामार्द्रतामाहुर्मनः कालुष्यनाशिनीम् ।।** इति ।

प्रेमैव विस्रम्भयोगी प्रणयः । स एव फलपर्यन्तो रागः ।

रागात् फलवती सेयमनुरागेण भुज्यते

इत्युक्तत्वात् । उक्तसर्ववैशिष्ट्यशालिन्यस्तस्याश्चेष्टाः मयि भवेयुरित्याशंसा । लयः तप्तायः पिण्डपाथोन्यायेन तन्मयीभावः । तत्रायं विशेषः यत् किल हर्षबाहुल्यम् ।

## सम्प्रदायप्रकाशिनी

विप्रलम्भं विभजति—अपरस्त्विति ।

प्रेमार्द्रा इति । साक्षात्कृतमालतीविभ्रमस्य सङ्कल्पदशावस्थस्य माधवस्येयमाशंसा । मुग्धदृशः अकृतकविलासं पश्यन्त्याः अत एव निसर्गमधुराः स्वभावसुभगाः तास्ताश्चेष्टाः निरुक्तिसरणिसमुल्लङ्घिन्यः स्वानुभवैकसमधिगम्या नयनत्रिभागालोकनादयो विलासविशेषाः मयि प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया भवेयुरिति त्रितयमप्याशंसास्पदतया विधेयम् । प्राक्पर्वणि सन्दर्शनादिना प्रादुर्भूता रतिः प्रेम । तदुक्तं—

**'सन्दर्शनादिजनिता रतिः प्रेम निगद्यते'**

इति । तदेव चुम्बनादिना प्रकर्षं नीतं प्रणयः । यदुक्तं—

**'प्रेम नीतं प्रकर्षं चेत् तदा प्रणय उच्यते'**

इति । प्रणय एव परिचयान्नीलीमञ्जिष्ठादिनीत्या रञ्जनक्षमो रागः । यदुक्तं—

**'रागोऽभिधीयते गाढः प्रणयो रञ्जनक्षमः'**

इति । या एता मुग्धदृशो निसर्गमधुराश्चेष्टाः, ता मयि सन्दर्शनादिजनितेन प्रेम्णा पूर्वमार्द्राः, अथ चुम्बनाद्युपचितप्रणयानुबन्धिन्यः, अथ परिचयादुद्गाढरागोदया भवेयुः किम् । यासु मनोरथमात्रेणापि मद्विषयत्वेनानुचिन्तितासु मनसो लयो निष्पन्दत्वं भवति । कीदृशः, बाह्यकरणव्यापाररोधी बाह्यकरणानां चक्षुरादीनां रूपादिग्रहणलक्षणस्य व्यापारस्य रोधनक्षमः । ईदृशो लयः स्वापमूर्छादावपि साधारण इत्यत आह—आनन्दसान्द्र इति । यास्वाशंसापरिकल्पितास्वपि ब्रह्मास्वादसुखसधर्मायमन्तःकरणस्य लयो जायते, ताश्चेत् साक्षान्मयि भवेयुस्तदा का निर्वृतिरिति न विद्म इति भावः । अयमभिलाषविप्रलम्भः ।

## मधुमती

अपरस्त्विति । अभिलापेण अयोगपूर्वविप्रलम्भः, विरहेण करुणविप्रलम्भश्च सङ्गृहीतः । न च करुणः न शृङ्गारः तस्या शोकप्रकृतिकत्वात् इति वाच्यम् । प्रत्युज्जीवनान्तप्रयाणे अन्यतरस्यापि रतेः अनपायात् । तत्प्रकृतिकस्य शृङ्गारस्यैव औचित्यात् । अतथाभूते करुणसौलभ्यात् । अत एव रघुवंशे—

**तेनाष्टौ परिगमिताः समाः कथंचित्**
**बालत्वात् अवितथसूनृतेन सूनोः ।**
**सादृश्यप्रतिकृतिदर्शनैः प्रियायाः**
**स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ इत्यभिधाय,**

**तस्य प्रसह्य हृदयं किल शोकशङ्कुः**
**प्लक्षप्ररोह इव सौधतलं बिभेद ।**
**प्राणान्तहेतुमपि तं भिषज़ामसाध्यं**
**लाभं प्रियाऽनुगमनं त्वरया नु मेने ॥ इत्यनन्तरम्—**

**तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वोः**
**देहात्यागात् अमरगणनालेख्यमासाद्य सद्यः ।**
**पूर्वकाराधिकचतुरया सङ्गतः कान्तयाऽसौ**
**लीलागारेष्वरमत पुनः नन्दनाभ्यन्तरेषु ॥**

इत्यनेन लोकोत्तरा रत्यनुवृत्तिः दर्शिता । अत एव स्थितोऽपि शोकः शृङ्गारस्य व्यभिचारितां भजते । अत एव अन्यत्रापि—

**'रसावस्थः परं भावः स्थायितां प्रतिपद्यते ।' इत्युक्तम् ।**

प्रेमार्द्रा: इति । अपराधसहस्रैरपि अविचलितं प्रेमैव प्रणयः । स एव परिचयातिशयेन रञ्जनक्षमः अनुरागः ।

## विस्तारिका

सङ्गमप्रत्याशाकालीनस्तनुत्पादो विप्रलम्भः, प्राप्तिनिश्चयः प्रत्याशा अभिलाषः, इच्छादेरात्मैक्येऽपि गुर्वादिपारतन्त्र्यं विरहः, अन्यासङ्गिनि प्रिये कोप ईर्ष्या, प्रवासो वैदेश्यम्, मुन्यादिकोपनियन्त्रणं शापः, हेतुर्नियतपूर्ववर्ती । अभिलाषस्योत्पादकत्वाभावेऽप्युत्पत्तिप्राक्कालीनत्वं नियतमेव, सिद्धे इच्छाविरहात् ।

ननु कथं पञ्चविधत्वम्? मूर्च्छितनायकवैरस्यस्य करुणविप्रलम्भाख्यस्य भेदान्तरस्यापि सम्भवात् । तदुक्तम्—

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्यः ।**
**विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भः ॥** इति ।

मैवम्; उभयरसप्रकृत्योः शोकरत्योर्युगपदनुद्बोधात् । आलम्बनविनाशस्थितिहेतुकत्वेन परस्परविरोधात् । अत एव करुणविप्रलम्भपदस्यासमवेतार्थत्वम् । अत एव सङ्गमप्रत्याशाकालीनत्वेन विशेषितम् । तर्हि तत्र का गतिरिति चेत्; एकत्र कालभेदेन करुणविप्रलम्भयोरेव सत्त्वाद् मरणज्ञानकाले शोकस्य सङ्गमप्रत्याशायाञ्च रतेरुद्बोधात् प्रत्याशाहेतवश्च भावादय एव विज्ञेयाः । विरहप्रवासयोर्भेदं तु लक्ष्ये विवेचयिष्यामः । सम्भोगविप्रलम्भयोरुभयोरपि (रतिप्रकृतिकत्वेऽपि सङ्गमस्य स्वाधीनत्वतद्भावाभ्यां भेदः, तेन विदेशस्थयोरपि) दूतीप्रेषणादौ सम्भोगः । एकदेशस्थयोरपि (कोपादिना प्रतिबन्धे विप्रलम्भः ।

प्रेमार्द्रा इति । प्रेम स्नेहः । आर्द्राः सरसाः । प्रणयः प्रश्रयो गुर्वादिभयलाघवम् ।) परिचयो दृढासक्तिः । उद्गाढा निःशेषमुत्सारितगुर्वादिपारतन्त्र्याः । तास्ता मदनुभूतविशेषाः । गमनसमये कातर्यदर्शनाद् विशिष्य दृगुपादानम् । निसर्गमधुराः प्रकृतिमनोहराः, मयि पुनर्भवेयुरित्यन्वयः । आशंसा इच्छा । अन्तःकरणस्य मनसः । लयस्तन्मयत्वम् । बाह्यकरणानि चक्षुरादीनि । व्यापारः पटुत्वेन विषयग्राहित्वम् । मालतीप्राप्तौ श्मशानसाधने प्रवृत्तस्य माधवस्याभिलाषोऽयम् ।

ननु पूर्वराग एव विप्रलम्भभेदः, न त्वभिलाषः, तस्य तद्दशाभेदत्वात् । तदुक्तम्—

**श्रवणाद् दर्शनाद् वापि मिथः संरूढरागयोः ।**
**दशा विशेषयोः प्राप्तौ पूर्वरागः स उच्यते ॥**
**अभिलाषश्चिन्तास्मृतिगुणकथनोत्थाः संलापाः ।**
**उन्मादोऽश्च व्याधिर्जडतामृतिरिति दशात्र दशाः ॥** इति ।

मैवम्; अभिलाषस्यैव तद्भेदत्वात् । चिन्तादीनां तदनुभावत्वेन तस्यैव गमकत्वात् । तस्य सङ्गमप्रागभावकालीनत्वेन विरहादिष्वन्तः पातात् । तत्र चिन्ता यथा—

**कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ।**
**इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम् ॥**

इत्यत्र प्राप्त्युपायश्चिन्ताया अभिलाषानुभावत्वं स्फुटमेव । एवं गुणस्मरणादिष्वपि ।

## सारबोधिनी

अपरस्त्विति । सङ्गमप्रत्याशाकालीनस्तदनुत्पादो विप्रलम्भः । प्राप्तिनिश्चयःप्रत्याशा । अभिलाष इच्छा । देशैक्येऽपि गुर्वादिपारतन्त्र्याद्विरहः । अन्यासङ्गिनि प्रिये कोप ईर्ष्या । अत्रेर्ष्यापदं मानोपलक्षणम् । तेन प्रणयकोपस्यापि परिग्रहः । तदुक्तम्—'मानः कोपः स तु द्वेधा प्रणयेर्ष्या समुद्भव' इति टीकाकृतः । प्रवासो वैदेश्यम् । विरहप्रवास योस्तु भेदं लक्ष्ये विवेचयिष्यामः । मुन्यादिकोपनियन्त्रणः शापः । हेतुर्नियतपूर्ववर्ती । अभिलाषस्यानुत्पादकत्वेऽपि तत्पूर्वकालीनत्वं नियतमेव, सिद्धे इच्छाविरहात् । अत्र प्राञ्चः—

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।**
**विमनायते यदैकस्तदा भवेत् करुणाविप्रलम्भः ॥**

इति दर्शनान्मूर्च्छितनायिकादिविषयकः करुणविप्रलम्भोऽप्यन्योऽप्यस्ति ।

अभिलाषहेतुकमुदाहरति प्रेमार्द्रा इति । प्रेमैव काष्ठापन्नं प्रणयः । परिचयोऽत्यन्तसंघर्षः । निसर्गः स्वभावः । आशंसा इच्छा । लयस्तन्मयत्वम् । व्यापारः पटुत्वेन स्वविषयग्राहित्वम् ।

## काव्यप्रदीपः

विप्रलम्भेष्वभिलाषहेतुको यथा—

**'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-**
**स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।**
**यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-**
**दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥'**

प्रेम स्नेहः । स एव प्रकृष्टः प्रणयः । स एव परिचयातिशयेन रञ्जनक्षमो रागः ।

## काव्यप्रकाशखण्डनम्

अपरस्त्वभिलाषविरहेर्ष्याप्रवासशापहेतुकः पञ्चविधः । स च सङ्गमप्रत्याशाकालीनस्तदनुत्पादः । अभिलाषः इच्छा, देशैक्येऽपि गुर्वादिपारतन्त्र्यं विरहः । देशैक्येति विशेषणादस्य प्रवासतो भेदः । अन्यसङ्गिनि प्रिये कोपः ईर्ष्या, प्रवासो वैदेश्यम्, मुन्यादिनियन्त्रणं शापः । अत्र हेतुः पूर्ववर्ती, अभिलाषस्यानुत्पादकत्वेऽपि पूर्ववर्तित्वं नियतमेव सिद्धम्, इच्छाविरहात् ।

क्रमेण उदाहरणानि—

**प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयाः**
**तास्ता मुग्धदृशे निसर्गचतुरा चेष्टा भवेयुर्मयि ।**
**यास्त्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-**
**दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥**

प्रणयः प्रेमैव कष्टापन्नम् । परिचयोऽत्यन्तसंपर्कः । केचित् तु प्रेम स्नेहः स एव प्रकृष्टः सन् प्रणयः उच्यते । स एव परिचयातिशयेन रञ्जनसमो राग इत्याहुः । भवेयुरिति प्रार्थनायां लिङ् । यास्वाशंसापरिकल्पितास्वपि अन्तःकरणस्य आनन्दसान्द्रो लयो भवतीत्यन्वयः । रोधीत्यत्रावश्यके णिनिः । निसर्गः स्वभावः, आशंसा इच्छा, लयस्तन्मयत्वम्, व्यापारः पटुत्वेन स्वस्वविषयग्राहित्वम् ।

## आदर्शः

अपरस्त्विति । अस्यैतादृशपञ्चोपाधिभिः सङ्कलनसम्भवान्नानात्यमिति समस्तसम्भोगस्य त्वभिलाषेण सङ्कलनसम्भवेऽपि एकत्वानपाय इति चाभिप्रायः । हेतुक इत्यत्र हेतुपदं ज्ञापकहेतुपरम्, तत्र च अभिलाषविरहेर्ष्या-त्रयमनुभावत्वेन ज्ञापक रतिजन्यत्वात्तत्रस्य । प्रवासशापौ तूद्दीपकौ मम प्रियः प्रवसतीति अहं शापप्रतिबन्धात्

प्रियान्तिकं गन्तुं न शक्नोमीति ज्ञाने सति रत्युद्दीपेः। अत एव शापपदमत्र प्रियजनप्राप्तिप्रतिबन्धकपरमेव, तेन नृपतिरुद्धत्वादिपरिग्रहः। प्रवासस्तु न प्रतिबन्धकः स्वेच्छया आगमनसम्भवात्। अभिलाषश्च अभिलषितस्य जनस्य साक्षात् परम्परया वा प्राप्तीच्छा; तज्जनेकष्टसाधनताज्ञानधारा तु रतिरित्यभिलाषस्तज्जन्यत्वादनुभावः। कृतसङ्केतस्य नायकस्यानागमने सत्युत्कण्ठा विरहः। तदुक्तम्—

**प्रियः कृत्वा तु सङ्केतं यस्या नायाति सन्निधिम्।**
**सा मनोभवदुःखार्त्ता विरहोत्कण्ठिता मता॥** इति।

सा चोत्कण्ठा रतिजन्यैवेत्यनुभावः व्यभिचारित्वेऽप्यनुभावत्वानपायात्। पत्यावपकारप्रयुक्तः सानुरागो द्वेष ईर्ष्या। भावि वर्त्तमानं वा प्रियजनवैदेश्यं प्रवासः। इष्टप्रातिप्रतिबन्धिका अनिष्टहेतुर्वा सिद्धवचसो वाक् शापः। एतौ द्वावुद्दीपनविभावावित्युक्तमेव। तत्राभिलाषहेतुमाह—प्रेमार्द्रा इति। श्मशाने माधवस्य पूर्व्वानुभूतमालती-दृक्चेष्टास्वियमाशंसा। सा च मालतीप्राप्तीच्छौपाधिक्येवेति परम्परया मालतीप्राप्तीच्छैव। मुग्धदृशो मालत्याः तास्ता दृक्चेष्टा मयि भवेयुः, दृक्चेष्टात्वलाभायैव मुग्धदृक्त्वोपादानम्। चेष्टाः कीदृश्यः? प्रेम्णा आर्द्राः स्निग्धाः, सतः प्रेम्णः सूचकस्वरूपविशेष एव स्निग्धत्वम्, प्रणयः बन्धुता तत्स्पृशः तत्सूचिकाः, परिचयात् मुहर्दर्शनात्, रागः अनुरागः, यासु क्रियासु आशंसापरिकल्पितास्वपि अन्तःकरणस्य आनन्देन सान्द्रः व्याप्तः लयः लीनता भवति आनन्दमग्नता भवतीत्यर्थः। लयः कीदृशः? बाह्यकरणस्य व्यापारप्रतिरोधकः। अत्र माधवनिष्ठरतेर्मुग्धदृक मालती आलम्बनम्, तदीयदृक्चेष्टा मुग्धदृक्त्वञ्च उद्दीपनम्। ईदृशाशंसालभ्यया तदप्राप्त्या व्यङ्ग्यमौत्सुक्यञ्च व्यभिचारिभावः। अभिलाष एवानुभावः। माधवरतिज्ञे सामाजिके रसोत्पत्तिः। एवंरीत्या सर्वत्र बोध्यम्।

## सुधासागरः

विप्रलम्भः सङ्गमपूर्वस्तदन्यश्च। तत्रान्त्योऽभिलाषहेतुक इत्युच्यते। अभिलाषपदेन तद्धेतोरनादिसङ्ग-माभावस्य लक्षणात्। आद्यस्तु क्वचिदीर्ष्यया प्रणयेन वा मानरूपः स ईर्ष्याहेतुक इत्युच्यते। ईर्ष्यापदेन मानहेतो-रुपलक्षणात्। क्वचित्तु कार्यवशादेशान्तरस्थितेः स प्रवासहेतुकोऽभिधीयते। उत्पद्यमानोत्पत्स्यमानावपि प्रवासौ स्वज्ञानद्वारा विप्रलम्भप्रयोजकाविति नाव्याप्तिः। प्रवासशब्देन ज्ञानलक्षणाद् वा। क्वचिच्छापात् स च शापहेतुक इति व्यवह्रियते। क्वचिदुक्तत्रितयातिरिक्ताद् गुरुलज्जादितः कारणात्। स एष विरहहेतुक इत्युच्यते। करुण-शृङ्गारस्याप्यत्रैवाऽन्तर्भावः।

न च करुणो न शृङ्गारस्तस्य शोकप्रकृतित्वादिति वाच्यम्। प्रत्युज्जीवनान्तप्रयाणेऽन्यतरस्यापि रतेरन-पायात्। तत्प्रकृतिकस्य शृङ्गारस्यैवोचितत्वात्। अतथाभूते करुणसौलभ्यात्। उक्तञ्च मिश्रपक्षधरवाचस्पतिप्र-मुखैः—

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।**
**विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भ** इति॥

इति दर्शनान्मूर्च्छितनायकादिविषयकः करुणविप्रलम्भोऽप्यस्तीति। अतएव च रघुवंशे अष्टमसर्गे 'सादृ-श्यप्रतिकृतिदर्शनैः प्रियायाः' इत्यभिधाय 'लाभं प्रियानुगमने त्वरया स मेने' इत्यनन्तरम् 'अरमत पुनर्नन्दनाभ्यन्तरेषु'

इत्यनेन रत्यनुवृत्तिर्दर्शिता। अतएव स्थितोऽपि शोकः शृङ्गारस्य व्यभिचारितां भजते। उक्तञ्चान्यत्राऽपि—'रसावस्थः परं भावः स्थायितां प्रतिद्यते' इति। तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अपरस्त्वभिलाषविरहेत्यादि।

तत्राभिलाषहेतुकमुदाहरति—प्रेमार्द्रा इत्यादि । ाार्दूलविक्रीडितं छन्दः।

मालत्यर्थं श्मशानसाधने प्रवृत्तस्य माधवस्याभिलाषोऽयम्। अयमर्थः। मुग्धदृशो मालत्यास्तास्ता मदनुभूतविशेषाश्चेष्टा दृग्व्यापाराद्या मयि भवेयुरित्यन्वयः। आशंसायां लिङ्। कीदृश्यः प्रेम्णा स्नेहेनार्द्राः स्निग्धाः, प्रेमव्यञ्जकत्वात्।

प्रेमैवाबलोकनादिना प्रकर्षं नीतः प्रणयस्तं स्पृशन्तीति प्रणयस्पृशः।

प्रेमा दर्शनादिगतो भावव्यञ्जकः कश्चन विशेषस्तत्पूर्वकोवशीकारः प्रणय इति चण्डीदासभट्टाचार्याः।

प्रणयः प्रश्रयः स च गुर्वादिभयलाघवमिति चक्रवर्त्तिनः। व्यवहारकौशलमिति मिश्राः। वत्सलतेति नृसिंहठक्कुराः प्राहुः।

परिचयाद् दृढाऽऽसक्तिवशादुद्गाढः स्थिरतया निःशेषमुत्सारितगुर्वादिपारतन्त्र्यः रागस्योदयो यासु तथाभूताः परिचयातिशयेन रञ्जनक्षमः प्रणय एव रागः। परिचयो रहस्यावेदनमिति चण्डीदासः। निसर्गेण स्वभावेन मधुरा मनोहराः, यास्वाशंसया मनोरथेन कल्पितास्वपि, किंपुनरनुभूतासु इत्यपिशब्दद्योत्यम्, क्षणात् अन्तः करणस्य मनसः आनन्देन सान्द्रो घनो लयस्तन्मयीभावः बाह्यकरणस्य चक्षुरादेर्व्यापारं विषयग्राहित्वं रुणद्धीति तथाभूतो भवतीति वाक्यार्थः।

अत्र मुग्धदृश इति दृक्प्रकर्षोपक्रमात् प्रेमार्द्रा इत्यादिविशेषणस्वारस्याच्च चेष्टापदेन दृग्व्यापारलाभ इति वैद्यनाथाः। वयन्तु तास्ता इत्यनेन कटाक्षभुजक्षेपादि-लज्जास्मितहर्षासूयादिव्यापारदुक्तविशेषणविशिष्टा इति सर्वे विवक्षिता इति प्रतीमः।

## विवरणम्

इतर इति। अयमत्र विवेकः—अभिलाषविषयसिद्ध्याऽनुभावेन कुण्ठितोऽभिलाषो हर्षश्च यत्र प्रधानरतिमुल्लासयतः, तत्र सम्भोगः। यत्र च विषयासिद्ध्या धारारूढोऽभिलाषः पीडा च रतिमुल्लासयतः, तत्र विप्रलम्भ इति। यदाहुः—

**दर्शनस्पर्शनादीनि यत्रान्योऽन्यं विलासिनौ।**
**अनुरक्तौ निषेवेते स सम्भोग उदाहृतः॥** इति।

अनुरागोऽत्र बाह्यरतिभिलाषः। तथा—

**यत्र भावो रतिर्नाम प्रकर्षमधिगच्छति।**
**नाधिगच्छति चाभीष्टं विप्रलम्भः स उच्यते॥** इति।

रतिरभिलाषः। स चाभिलाषो द्विविधो विषयसिद्धिमलभमानो बाधां जनयति, पूर्वराग उत्कण्ठा चेति। तत्र कदाप्यलब्धसङ्गमः पूर्वरागः, सङ्गमपूर्वक उत्कण्ठा। सैव दत्तसङ्केतस्यानागमनसहकारेण बाधाजनिका विरह

इत्युच्यते। अभिलाषस्य बाधाजनने मानः प्रवासश्च सहकारिणौ। तत्र मान ईर्ष्याप्रयुक्तौ विक्षेपः। प्रवासो द्विविधः—धनादिलिप्सया शापेन च। एवं चैतैः पञ्चभिरुपाधिभिर्विभजते—अभिलाषेत्यादि। अभिलाषः पूर्वरागस्तद्धेतुकस्तद्धेतुकबाधाव्यभिचरितः। एवमुत्तरत्रापि।

प्रेमार्द्रा इति, अचतुरैप्युपलक्ष्यप्रेमाणः। नैवंविधं चेष्टितं विदग्धायाः सम्भवतीत्यतः—प्रणयस्पृश इति। विरलजनोपलक्ष्यमाणप्रणयाः कुलकुमार्यो नैवं चेष्टन्ते, यथा प्रणयिभिन्नो जनोऽवगच्छेदतः—परिचयादिति। अत्यन्तसन्निकर्षादित्यर्थः। उद्गाढरागोदया आविर्भूतरागानुमाना। तास्ता अवचनीयसौकुमार्याः। मुग्धदृशः रमणीयदर्शनायाः। अत एव चेष्टानामपि निसर्गमाधुर्यम्। मयि भवेयुः मद्दर्शने वर्तेरन्। चेष्टानां सौन्दर्यं सर्वप्रकाररमणीयत्वम्, तदुपपादयति—-यास्विति। अन्तः करणस्य लयः तन्मयीभावः। अयं च सङ्कल्पपरिकल्पितचेष्टासमुत्थानन्दो लयविगमकालिकस्याभिलाषहेतुकदुःखस्य प्रकर्षं इति नात्र सम्भोगत्वम्। यथा—

**मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-**
**र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।**
**पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां**
**मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति॥**

इत्यत्र स्वप्नसम्भोगोऽयं शापहेतुकविप्रलम्भमेव पुष्णाति।

**अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्**
**यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः ।**
**इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे**
**बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ३३ ॥**

एषा विरहोत्कण्ठिता ।

---

### सङ्केतः

अन्यत्रेति । अन्यत्र नायिकायाम् । एतेन-स्वस्मिन् पत्युः अनुरागः उक्तः । नाप्यस्य तादृक् इत्यादिना तु परिवारानुकूलत्वं उक्तम् । निशान्तान्तरे गृहान्तः, न तु बहिः । एतेन सतीत्वं उक्तम् ।

### संङ्केतः (रुय्यकः)

अन्यत्रेति । अत्र विरहोत्कण्ठिताया अनागतो नायक आलम्बनविभावः, अन्तःपुरवाचिनिशान्तादिपदविशिष्टमुद्दीपनम्, विवर्त्तनाद्याङगिकोऽनुभावः । अन्यत्र व्रजतीति शङ्का, नागतश्चेत्युद्वेगो व्यभिचारिभावः । एतैरत्र विरहविप्रलम्भो व्यक्तः ।

### बालचित्तानुरञ्जनी

विरहहेतुकमुदाहरति अन्यत्रेति । नायकं प्रति दूतीवचनम् । निशान्तान्तरे गृहमध्ये अनेन सतीत्वम् । रात्रौ बाला वृत्तविवर्तनयोः व्यतिकरो यस्याः सा एवंविधा सती निद्रां नाधिगच्छति । तत्र हेतुः व्रजतीति । अनेन प्रकारेण अनेककल्पनास्वीकृतचित्ता । अनेककल्पनामेवाह मम नायकः, अन्यत्र अन्यस्यां नायिकायाम् । अनेन पत्युरनुरागः सूचितः । व्रजतीति का खलु कथा ? संभावनैव नास्तीत्यर्थः । तदेव दर्शयति । योऽसौ यद्वचनेन मां नेच्छति । अनेन परिवारानुकूलत्वम् तादृक् सुहृदप्यस्य नास्ति अथवा नागतः । सहसा विधेरयं कः प्रक्रमः ? एषा स्त्री विरहोत्कण्ठिता । तथा चोक्तम्—

'विरमत्यव्यलीके तु विरहोत्कण्ठिता मता' ॥ इति ।

### काव्यादर्शः

निशान्तोऽन्तःपुरम् । सख्युर्भावः सख्यं तेनोपदेशः ।

## विवेकः

अन्यत्रेति । मां नेच्छतीति दयितसमागमाधीनमात्मजीवितत्वं हहहेति कष्टे, प्रक्रम आरम्भः । अल्पेतर बहु । स्वान्तं मनः । निशान्तमन्तःपुरम् । स्त्रियश्चतुर्धा, यदाहुः—दिव्या च कुलपाली च कुलस्त्री गणिका तथा । एतास्तु नायिका ज्ञेयाश्चतस्रः काव्यहेतवः ॥ इति । एता एवास्थाभेदादष्टधा—तद् यथा—स्वाधीनपतिका विरहोत्कण्ठिता वासकसज्जा कलहान्तरिता खण्डिता विप्रलब्धा प्रोषितभर्तृकाऽभिसारिका चेति । अत्रौचित्यप्राप्ता(प्राप्त आ) गमनसमयेऽपि प्रियतमस्यानागमनाचिन्ताविधुरा विरहोत्कण्ठिता । तदिह विरहोत्कण्ठिताया अनागतो नायक आलम्बनविभावोऽन्तः पुरादिकिमुद्दीपनं विवर्तनाद्याऽनुभावः, एतत्प्रकाशिताश्च चिन्ताऽऽदयो व्यभिचारिणः । 'एभिरत्र विरहविप्रलम्भो व्यज्यते' (रु. सं. २१पृ.) । अत्रापि पूर्वपदुपचरित एव विप्रलम्भशब्दः ।

## दीपिका

बाला नेच्छति न बहु मन्यते । प्रक्रम उपक्रमः । इति प्रकारे । निशान्तं गृहम् । वृत्तविवर्त्तनव्यतिकरा पुनः पुनः प्रवृत्तपार्श्वपरिवर्त्तना । एतत्प्रवासोदाहरणं कुतो न स्यादित्याह- एषेति-प्रकरणवशादवसेयेति शेषः ।

## दर्पणः

निशान्तं गृहं, वृत्तः प्रवृत्तः । निवर्तनस्य पार्श्वपरिवर्तनस्य व्यतिकरः पौनः पुन्यं यस्या एवेति प्रकरणादित्यर्थः ।

## साहित्यचूडामणिः

अन्यत्रेति । विपक्षविषये गच्छतीति का खलु कथा शङ्कापि नास्ति ।

अथ सुहृदः कस्यचिद् गृहे विलम्बितवानित्याशङ्क्याह—नापीति । इयमेव हि सुहृदस्तस्य मध्यनिच्छा यत् तद्भवने विलम्बितः पतिः क्षणमपि मां विरहयतीति ।

नायिकाया निर्णयेन व्याख्यातप्रायमेतदित्याह—एषेति ।

## सम्प्रदायप्रकाशिनी

अन्यत्रेति । का खलु कथा शङ्कैव न विद्यत इत्यर्थः । यदि स्वतो न व्रजति, तर्हि सुहृत्प्रेरणयेत्यत आह—नाप्यस्य तादृगिति । यो मां नेच्छतीति, यो मामभिद्रुह्यन्नन्यत्र नयेदित्यर्थः । तर्ह्यागमनमेव प्राप्तं, तदपि नास्तीत्याह—नागतश्चेति । इत्थं स्वतः सुहृदो वा नास्यापराधः शङ्क्यः, अपि तु विधेरेवेत्याह—कोऽयं विधिरिति । कल्पना विकल्पनाः, वृत्तविवर्तनव्यतिकरा गृहान्तर एव शय्यादिषु प्रवृत्तविलुठनातिरेका ।

## मधुमती

ननु—एतच्छ्लोके विरलस्य नामापि नास्ति इतयत आह—एषेति । 'चिरयत्यधिके कान्ते रिलोत्कण्ठितामता' । इतयुक्ततल्लक्षणसत्त्वादिति भावः ।

## विस्तारिका

अन्यत्रेति । प्रवासे नायिकाऽन्तरगृहे वा तत्तावदलोकमेव तत्कथाऽपि नास्ति । शत्रुभिरपि मिथ्याप्रवादो न कृतः । सहृद्वारणं वारयति—नापीति । हहहेति दैन्ये । प्रक्रम आरम्भः, विप्रलम्भस्य कोऽयमित्यननुभूतपूर्वत्वात् । वृत्तविवर्तनमुद्वृत्तपरिवर्तनम्, तस्य व्यतिकरः सम्बन्धो यस्याः । निशान्तान्तरे गृहविशेषे वासगृहे ।

नन्वेतन्न भेदान्तरम्, प्रवासत्वेनैव सिद्धेः । न च भिन्नदेशत्वाभावान्न तथा, तत्र तद्विशेषणवैयर्थ्यादित्यत आह—एषेत्यादि । अनयोरैक्ये प्रोषितभर्तृकातोऽस्या भेदान्तरत्वानुपपत्तेः । न चानुपपन्नः, मुनिनैव नायिकायाः स्वाधीनभर्तृकत्वादिषोडशावस्थास्वीकारात् । अन्यथा सर्वेषामेव विरहान्तःपातसम्भवेऽभिलापादीनामपि तद्भेदत्वं न स्यात् । सङ्गमानुत्पादकताऽवच्छेदकभेदेन भेदस्य दूरपह्नवत्वादिति ।

## सारबोधिनी

विरहहेतुकमुदाहरति अन्यत्रेति । अन्यत्र प्रवासे नायिकान्तरगृहे वा । तत्तावदलीकमेव । तत्कथापि नास्ति । प्रक्रम आरम्भः विप्रलम्भस्य । कोऽयमित्यननुभूतपूर्वत्वात् । वृत्तविवर्तनेन मद्वृत्तविवर्तनं तस्य व्यतिकरः संबन्धो यस्याः । निशान्तान्तरे गृहाभ्यन्तरे । नन्वेतन्न भेदान्तरम्, प्रवासत्वेनैव सिद्धेः । न च भिन्नदेशत्वाभावान्न तथात्वम् । तद्विशेषणवैयर्थ्यादित्याह एषेति । अनयोरैक्ये प्रोषितभर्तृकातोऽस्या भेदान्तरानुपत्तेः । न चानुपपन्नम्, मुनिना नायिकायाः स्वाधीनभर्तृकत्वादिषोडशावस्थास्वीकारात् ।

## काव्यप्रकाशखण्डनम्

विरहहेतुकमुदाहरति—

**अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्**
**यो मां [प. ११.२] नेच्छति नागतश्च सहसा कोऽयं विधेः प्रक्रमः ।**
**इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे**
**बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि ॥**

एषा विरहोत्कण्ठिता । अन्यत्र प्रवासे नायिकान्तरगृहे वा तत् तावदलीकमेव तत्कथाऽपि नास्ति । नापि कश्चिदीदृग् एतस्य सुहृन्मित्रं यो मां नेच्छति न सहते यन्निषिद्धो भागच्छेदिति भावः । शीघ्रं न नागतः कोऽयं विधेः प्रक्रमः ? विधेर्दैवस्य प्रकम आरम्भः । कोऽयमित्यननुभूतपूर्वः । इत्थं बहुवितर्कैग्रस्तं मनो यस्याः, वृत्तविवर्त्तनं उद्धृत्तपरिवर्त्तनं शय्यायां परिवृत्तिः, तस्य व्यतिकरः सम्बन्धो यस्याः सा । निशान्तान्तरे गृहाभ्यान्तरे बाला तन्वी निद्रां सुप्तिं निशि रात्रौ नाप्नोति नाधिगच्छतीत्यन्वयः ।

## आदर्शः

विरहहेतुकमाह—अन्यत्र इति । कृतसङ्केतस्य नायकस्यानागमनेन उत्कण्ठया अनाप्तनिद्राया नायिकायाः क्रियावर्णनमिदम् । अल्पेतराभिरिति कल्पनाभिर्ग्रस्तवित्ता बाला निशान्तस्य गृहस्य अन्तरे मध्ये निशि निद्रां

नाप्नोति । कीदृशी ? वृत्तः विवर्त्तनस्य अङ्गपरावृत्तेः व्यतिकरः समूहः यस्याः तादृशी । कल्पनाकारमाह—अन्यत्रेति । नायिकान्तरगृहे व्रजतीति कथा का मिथ्यैव, मय्युत्कटानुरागादिति भावः । मद्विरक्तसुहृद्वाक्याद् व्रजतीत्यपि नेत्याह नाप्यस्येति । नेच्छति द्वेष्टि । फलन्तु न दृश्यत एवेत्यतो विस्मयादाह—नागतश्चेति । 'हहहा' विस्मये । प्रक्रम आरम्भः । एषेति । विरहलक्षणमुक्तमेव ।

## सुधासागरः

विरहेतुकमुदाहरति—अन्यत्र इत्यादि । शादूलविक्रीडितं छन्दः । अयमर्थः । बाला काचित्स्वकीया गुरुलज्जादियत्किञ्चित्कारणात्कदाचिन्नायकागमनविलम्बे नानाकल्पनां करोति तदाह—अन्यत्र नायिकान्तरगृहे व्रजति गच्छतीति खलु का कथा । तादृशमदेकपत्नीव्रतधरप्रियस्यान्यनायिकाभिलाषः स्वप्नेऽप्यसम्भावितः, किं पुनर्गमनमित्यर्थः । नाप्यस्य तादृक् सुहृत् अस्य मद्धृदयवर्त्तिनः कान्तस्य तादृशः सखापि कश्चन नास्ति, यो मां नेच्छति मत्सौभाग्यं द्वेष्टि । तथा च तज्जन्योऽपि विकारोऽसम्भावितः । तर्हि हेत्वभावेऽनागमनमप्यसम्भाव्यमित्यत्राह—नागतश्च । चकारस्त्वर्थे आगतस्तु नेत्यर्थः । सहसाऽकस्मात् प्रलयमन्तरेण विधेर्दैवस्य कोऽयं प्रक्रमः । अभूतपूर्वो ज्वररोगादिप्रहारादिकं विनैव निरपराधाया मम मारणक्रियारम्भः । इत्युक्तप्रकारेणाऽल्पेतराभिर्बह्वीभिः कल्पनाभिः वितर्कणैः कवलितं विषयान्तरसञ्चाराभावाद् दुःखानुभवाच्च चर्चितमिव स्वान्तं मनो यस्यास्तथाभूता वाला निशान्तस्य भवनस्यान्तरे मध्ये निशि स्वापकालेऽपि वृत्तविवर्त्तनमुद्वृत्तपरिवर्तनं तस्य व्यतिकरः सम्बन्धो यस्यां तादृशी सती चित्तस्वास्थ्याभावान्मुहुः शय्यायां लुठन्तीति यावत्, निद्रां प्राप्नोति मोहवशात्कदाचिन्निश्चलत्वेऽपि न कथंचिन्निद्रातीति भावः ।

एषा च 'आगन्तुं कृतचिन्तोऽपि दैवान्नायाति यत्प्रियः । तदनागमदुःखार्ता विरहोत्कण्ठिता मता' इत्युक्तलक्षणा नायिकेत्यवश्यं विरहस्य प्रवासादितः पृथग्भावः स्वीकार्यः । अन्यथा प्रोषितभर्तृकादितोऽस्या भेदान्तरत्वानापत्तेरिति बोध्यम् । तदेतदभिप्रेत्य श्रीमद्वृत्तिकृदाह—एषा विरहोत्कण्ठितेति ।

## विवरणम्

एषा विरहेत्यादि । तेन विरहस्वरूपोत्कण्ठाहेतुकबाधाव्यभिचारितो विप्रलम्भ इत्युक्तं भवति ।

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ।। ३४ ।।**

---

### सङ्केतः

सा पत्युरिति । अत्र सख्युर्भावः सख्यम् मैत्री । सखि वणिग्दूताद्यः इति यः । तेन उपदेशः तं तथा । अथवा सख्यां साधुः उचितः सख्यः । 'तत्र साधुः' इति यः । स चासौ उपदेशश्च तं तथा इति । रोदनस्य सशब्दत्वपरिहाराय अश्रुभिः इत्युक्तम् । अश्रूणामेव प्राचुर्याय लोलोदकैः इत्युक्तम् । स्वच्छैः इत्यनेन तु चिरकालं रोदनं लभ्यते, न तु क्षणमात्रम् । क्षणमात्ररोदने हि किञ्चिदञ्जनसद्भावात् अश्रूणां स्वच्छता न स्यात् । प्राक् अश्रूणि बिन्दुतया कपोलमूले पतन्ति । पश्चात् तत्र मिलितानि लुठल्लोलोदकतया परिणमन्तीति तात्पर्यार्थः ।

### सङ्केतः (रुय्यकः)

सा पत्युरिति । अत्रेर्ष्याविप्रलम्भे नायिकायाः पत्युरिति निर्दिष्टमालम्बनम्,अपराद्धा उद्दीपनं, नेत्रपर्यसनमश्रु चानुभावः, नेत्रपर्यसनेन प्रकाशितं दैन्यं व्यभिचारिभावः । एतैरत्रेर्ष्याविप्रलम्भः प्रकाश्यते ।

### बालचित्तानुरञ्जनी

ईर्ष्याविप्रलम्भस्योदाहरणमाह सा पत्युरित्यादि । कविवचनम् । सा बाला भर्तृरग्रे प्रथमेऽपराधसमये अप्रियप्रस्तावे केवलं रोदिति । कीदृशी ? निर्मलकपोलयोर्यन्मूलं नेत्रयोरधोभागः तत्र क्षरितैः निमेषार्द्धबद्धबिन्दुजालतया लुठत् पतनशीलत्वेन लोलमुदकं येषा तैः, नैरन्तर्येण प्रथममेवोन्मृष्टकज्जलतया स्वच्छैः । एवं विधैरश्रुभिः पर्यस्ते लम्बितपक्ष्मणी नेत्रोत्पले यस्याः सा । ननु वक्रोक्त्यादिकं किमिति न करोतीत्यत आह । सख्या भावः सख्यम् । सखी दूती तस्याः उपदेशः, तं विना सविभ्रमं अङ्गवलनं वक्रोक्तिश्च । ताभ्यां संसूचनम् स्वाभिप्रायप्रकाशनं नो जानाति । रोदनत्वस्य सशब्दत्वपरिहाराय अश्रुभिरित्युक्तम् । अश्रुप्राचुर्यार्थं लोलालकैरित्युक्तम् । चिरकालरोदनसूचनार्थं स्वच्छैरित्युक्तम् । स्वल्पकाले तु कज्जलसंबद्धत्वात् ।

सा पत्युरित्यादि—सख्युर्भावः सख्यं, तेनोपदेश इति । सविभ्रमाङ्गवलनादिभिः रसपराधोद्भावनं दयितसमावर्जनाय विधेयमिति तद्विदां रहस्यम् । [गलितं] स्खलद्गतिपतनं, लोठनमश्रुणा उदकात्मकत्वेऽपि प्रवाहरूपताऽभिव्यञ्जकं लोलोदकैरिति विशेषणम् । 'अत्र नायिकायाः पत्युरिति निर्दिष्टमालम्बनम्, एतत्प्रकाशितश्वासूयाऽमर्षादयो व्यभिचारिणः । एतैरत्रेर्ष्याविप्रलम्भः प्रकाश्यते (रु. सं. २४ पृ) । अत्र च मुख्य एव विप्रलम्भशब्दो वञ्चनार्थत्वात् ।

## विवेकः

सा पत्युरित्यादि—सख्युर्भावः सख्यं, तेनोपदेश इति। सविभ्रमाङ्गवलनादिभिरपराधोद्भावनं दयितसमावर्जनाय विधेयमिति तद्विदां रहस्यम्। (गलितं) स्खलद्गतिपतनं, लोठनमश्रुण उदकात्मकत्वेऽपि प्रवाहरूपताऽभिव्यञ्जकं लोलोदकैरिति विशेषणम्। 'अत्र नायिकायाः पत्युरिति निर्दिष्टमालम्बनम्, एतत्प्रकाशिताश्चासूयाऽमर्षादयो व्यभिचारिणः। एतैरत्रैर्ष्याविप्रलम्भः प्रकाश्यते'। अत्र च मुख्य एव विप्रलम्भशब्दो वञ्चनार्थत्वात्।

## दीपिका

सखीनां भावः सख्यं सौहार्द्यं, तेनोपदेशः, तद्विना तद्भावे। सविभ्रमाङ्गवलनादिभिर्वक्रोक्तिभिश्च संसूचनं मानोत्तारणम्। केवलमेवेति समुदितो निपातः। अश्रुपदमत्र कज्जलादिमिलितनेत्रजल, तेनोदकैरिति सङ्गच्छते।

## दर्पणः

सख्यं सौहार्द्रम्। तेनोपदेशोऽर्थात् सखीनामश्रुभिः पर्यस्तनेत्रोत्पलेति संबन्धः।

## साहित्यचूडामणिः

सेति। सख्यं सखित्वं तेन हेतुनोपदेशः सं विना। यद्यपि

स्त्रीणामीर्ष्याकृतो मानः कार्योऽन्यासङ्गिनि प्रिये [दशरू. ४.५९] इति सामान्येनेक्तिः, तथापि

तत्र प्रणयमानः स्यात् कोपोपहितयोर्द्वयोः [दशरू. ४.५८] इति नीत्या प्रणयमानस्य नायिकेव नायकोऽपि विषयः। यथा—

**अस्मिनेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः**
**सा हंसैः कृतकौतिका चिरमभूद् गोदावरी सैकते।**
**आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया**
**कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः॥** इति।

द्वयोरेकत्र यथा—

**पणअकुविआण दोण्णवि अलिअपसुत्ताणमाणइल्लाण।**
**णिच्चलणिरुद्धणीसासदिण्णअण्णाण को मल्लो॥**

**[प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानिनोः।**

**निश्चलनिरुद्धनिःश्वासदत्ताज्ञयोः को मल्लः।]**

### सम्प्रदायप्रकाशिनी

सा पत्युरिति। सख्योपदेशं सखीकर्तृकमुपदेशमित्यर्थः।

### विस्तारिका

सा पत्युरित्यादि। पातीति पतिः, न तु प्रियः, तदाऽपराधानुदयात्। प्रथमेति। इदंप्रथमतया दुःसहत्वात्, सख्येन सौहार्द्येन य उपदेशस्तं विना, सखीभिरनुपदेशात्। सविभ्रमाङ्गवलनावक्रोक्तिभ्यां संसूचनम्, अर्थान्मानस्य सूचनम्। नो जानातीत्यन्वयः। रोदनेनैव गतार्थत्वेऽप्यस्त्रोपादानं विशेषणदानाय। तदाह—स्वच्छैरित्यादि। अञ्जनपत्रावलीविशेषाग्रहणेनाश्रुकपोलयोः स्वच्छताः। निरन्तरोत्तानशयनाद् मूलेन गम[ल]नम्। केवलमेवेत्ययोगान्ययोगव्यवच्छेदः। सूक्ष्मत्वादलकलोलता। तेनालोदकैरिति पाठे लुठद् भूमौ पतल्लोलोदकं स्रोतो येषां तैः।

अत्र पत्युरन्यासंगाद् बालाया ईर्ष्या।

नन्वेवम्—

**'अलिअपसुत्त खविसिमीलिअच्छेदे सुठअं मज्झ ओआसं।**
**गंडपरिउवमापुलइं अंगण उण्णे चिराइस्सं॥**

इत्यत्र प्रणयस्य भेदान्तरत्वं स्यात्। न चेयमीर्ष्या, पुंसस्तद्भावात्। अन्यासङ्गिनि पत्यौ कोपस्येर्ष्यात्वात्। तस्मान्मानस्य भेदमुक्त्वा प्रणयेर्ष्यासमुद्भवत्वेन प्रभेदद्वयं वक्तुमुचितम्। यदुक्तम्—'मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भव' इति। मैवम्, कालक्षेपासहिष्णुत्वप्रयुक्तकोपाभासस्य तस्य सम्भोगपोषकत्वेनैतस्यैव सञ्चारित्वात्। मानस्य सङ्गमप्रतिबन्धकत्वात्। अस्य तु तन्निर्वाहकत्वात्। अत एव गण्डपरिचुम्बने सर्वाङ्गीणं पुलकम्। अथ कथमत्र कोपस्याभासतेति चेत्, प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विनेति। उक्तनयेनापकारित्वरूपकारणं विना तत्त्वेनाहार्यत्वात्। अन्यथा—

**भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्ष्यते**
**रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।**
**कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते**
**दृष्टेर्निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने॥**

इत्यत्रानिर्व्यूढत्वस्यापि मानभेदत्वं स्यात्। अत्र मानानुत्पाद एव, न तु मान इति चेत्, प्रकृतेऽपि वस्तुतस्तत्सत्त्वेन समानत्वात्। एतेनेर्ष्यापदं मानोपलक्षणम्। तेन प्रणयमानस्यापि परिग्रह इति टीकाकृतां प्रलपितमपास्तम्।

### सारबोधिनी

ईर्ष्याहेतुकमुदाहरति सा पत्युरिति। सख्या भावः सख्यं तेनोपदेशः। पत्युरन्यासङ्गाद्बालाया ईर्ष्या।

## काव्यप्रदीपः

ईर्ष्याहेतुको यथा—

**सा पत्युः प्रथमेऽपराधसमये सख्योपदेशं बिना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यन्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥**

सख्येनोपदेशः सख्योपदेशः।

## काव्यप्रकाशखण्डनम्

ईर्ष्याहेतुकमुदाहरति—

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः ॥**

लुठन्तो लोला अलका येषु तैः अश्रुभिः, पर्यस्ते व्याकुलीकृते नेत्रोत्पले यस्याः सा बाला केवलमेव रोदितीत्यन्वयः। सख्या भाव सख्यं तेनोपदेशः। नारायणभट्टास्तु 'सख्या इति षष्ठी एकादेशः प्रामादिकः' इति पेठुस्तच्चिन्त्यम्। अत्र पत्युरन्यासङ्गाद् बालाया ईर्ष्या।

## आदर्शः

ईर्ष्याहेतुकमाह—सा पत्युरिति। सापराधे पत्यौ कोपरीतिमजानत्याः क्रियां सख्यां कथयन्त्या उक्तिरियम्। अपराधः अन्यनायिकासमागमः। पत्युः प्राथमिकतज्ज्ञानसमये तदुचिताया अङ्गवलनाया अङ्गभङ्गे वक्रोक्तेश्च संसूचनं प्रकाशनं सख्या उपदेशं सख्येन सखीत्वेन वा उपदेशं विना न जानाति। तदज्ञाने किं करोतीत्याह—स्वच्छैरिति, केवलमश्रुभिर्विशिष्टा रोदित्येवेत्यर्थः। केवलपदाद् 'रोदनोक्तिव्यवच्छेदः। एवकाराद् गृहकर्मकरणव्यवच्छेदः। अञ्जनत्यागादश्रुणः स्वच्छता। पाण्डुत्वादञ्जनाविलत्वाभावाच्च कपोलस्याच्छता। रोदनस्यान्येन ज्ञानेऽपि लज्जते इत्यतः परितो नेत्रपर्य्यासः। अलकानां विकीर्णत्वाल्लुण्ठनम्। अत्र उपनायिकाविषयद्वेषप्रयुक्ता पत्यावेव सानुरागद्वेषरूपा ईर्ष्या अनुभावः। नेत्रपर्य्यासव्यक्ता लज्जा व्यभिचारिभावः। पतिरालम्बनं तदपचार उद्दीपनम्, नायिकारतिज्ञे सामाजिके रसोत्पत्तिः।

## सुधासागरः

ईर्ष्याहेतुकमुदाहरति—सा पत्युः इत्यादि। शार्दूलविक्रीडितं छन्दः। काचित् सखीवृत्तान्तं सखीं प्रति कथयति। सा बाला मुग्धा परदर्शने लज्जा परितोऽस्ते क्षिप्ते नेत्रोत्पले यया तादृशी सती, पत्युर्न तु प्रियस्य

अपराधकारित्वात्, प्रथमापराधस्यान्याङ्गनासङ्गमरूपस्य समये, प्रथमत्वेनासह्यत्वं व्यज्यते, सख्येन सौहार्देन य उपदेशस्तं विना, यद्वा सख्येत्यसमस्तं तृतीयान्तम् तथा च सखीकर्तृकापदेशं विनेत्यर्थः । सविभ्रममङ्गस्य भ्रुकुट्या-देर्या वलना व्यापारविशेषः, वक्रोक्तयश्च ताभिः संसूचनं अर्थान्मानस्य प्रकाशनं नो जानाति । तर्हि किं करोती-त्याह—स्वच्छैरित्यादि । स्वच्छैरञ्जनत्यागान्निर्मलैः अच्छयोः पत्ररचनत्यागान्निर्मलयोः कपोलयोर्मूले गलितैः । अतएव गलन्तो मज्जन्तो लोलाः कुसुमगुम्फनादिसंस्काराभावाच्चञ्चला अलकाश्चूर्णकुन्तलकेशा येषु तादृशैः अश्रुभिरित्युपलक्षणे तृतीया । तथा चाऽश्रुभिरुपलक्षितं केवलमेव रोदिति । अन्यसम्भोगदुःखिताऽपि सरलतया हेतूक्त्यङ्गवलनाद्यमिश्रितं रोदनं करोतीत्यर्थः ।

लुठल्लोलालकैरिति पाठेऽपि स एवार्थः । लुठल्लोलोदकैरिति पाठे तु लुठद् भूमौ पतल्लोलोदकं स्रोतो येषां तैरित्यर्थः । अत्र वैद्यनाथैः लुठल्लोलालकरूपैरश्रुभिरिति रूपकमुभयोः सूक्ष्मत्वादिति व्याख्यातम् । तत्र रूपकमप्रयोजकमिति काव्यविदां स्पष्टम् ।

## विवरणम्

ईर्ष्याहेतुकस्य सा पत्युरिति ।

**प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं**
**धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।**
**यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता**
**गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ।। ३५ ।।**

---

### सङ्केतः

प्रस्थानमिति । अत्र गतं आसितं इति आरम्भे क्तः, न त्वतीते । अतीतक्ते हि तयोः अतीतत्वात् सुहृत्सार्थः किमु त्यज्यते इत्यत्र अर्थासङ्गतिः स्यात् । जीवित ! इति प्रिय ! इति च आमन्त्रणे । इदं च पदद्वयम् । प्रियेति तु सुहृद्विशेषणे, पूर्वं प्रियसखैः इति अस्रविशेषणं न वाच्यं स्यात् । अथवा प्रियस्य सुहृदा मित्राणां सार्थः समूहः वलयादिः, तद्भावभावित्वात्, इति यदि व्याख्या, तदा प्रियेति सुहृद्विशेषणतयैव वाच्यम् । प्रियतमे अत्यन्तवल्लभे, न तु भर्तरि । तदयं तात्पर्यार्थः—हे प्रिय ! जीवित ! प्रियत्वादेव त्वं भण्यसे—पश्चादपि यातव्ये सुहृत्सार्थः किमिति त्यज्यते ? पश्चात् महद्दुःखं अनुभविष्यसीति । किमु इति पदं काक्वा प्रश्नेन वा व्याख्येयम् । यदि च प्रियेण सनाथः सुहृत्सार्थः इति मध्यमपदलोपी समासः, तदा—अयमर्थस्तावत् एकः, सुहृत्सार्थः अन्यश्च प्रिययुक्तः, तत् गन्तुमुचितमेव—इत्यपि व्याख्या ।

### संङ्केतः (रुय्यकः)

प्रस्थानमिति । अत्र प्रियतम इति निर्दिष्टमालम्बनं, प्रियतमगमनौत्सुक्यमुद्दीपनं कार्श्यमश्रु चानुभावः । एभिरत्र प्रवासविप्रलम्भो दीप्यते ।

### बालचित्तानुरञ्जनी

प्रवासहेतुकं विप्रलम्भमुदाहरति प्रस्थानमिति । काचित् प्रोषितभर्तृका आत्मानं प्रति सोपालम्भमाह हे प्रियजीवित ! प्राणप्रियं यातुं निश्चितमनसि सति सर्वे सुहृदः सहैव प्रचलिताः । कथम् इत्यत आह प्रियसखैः वल्लभसहचरैः । एतद्विशेषणं विभक्तिविपरिणामेन सर्वत्र योजनीयम् । प्रिये तिष्ठति तिष्ठद्भिर्गच्छति गच्छद्भिरित्यर्थः । वलयैः कङ्कणैः प्रस्थानं कृतं दौर्बल्यात् । अश्रुभिरनवरतं गतम् । अश्रूणामप्रवृत्तिरेवावस्थितिः । गतिश्च प्रवृत्तिरेव न त्वभावः । तथा सति अश्रूणामभाव एव स्यात् । धृत्या सन्तोषेण क्षणमपि न स्थितम् । चित्तेनापि प्रथममेव गन्तुमुपक्रान्तम् । अन्तःस्थेन त्वयापि अवश्यं गन्तव्ये सति सुहृत्सार्थः किमिति परित्यज्यताम् ? गम्यतामेवेत्यर्थः । प्रियतमे गन्तुं निश्चितचेतस्यपि नायिका जीवने निरपेक्षा बभूव किल । गते सति किं वक्तव्यमिति भावः ।

### काव्यादर्शः

**जीवित प्रिय इत्यामन्त्रणपदद्वयं, प्रियेति तु सुहृद्विशेषणे ।। प्रियसखैरिति अस्रविशेषणं न वाच्यम् ।।**

## विवेकः

प्रस्थानमित्यादि । वलयादीनामपसरणादिषु स्वातन्त्र्ये यस्य प्रवासशङ्कामात्रमपि जीवितसंशयमापादयति तस्मिन् प्राणेश्वरेऽङ्गीकृतप्रवाससाहसे सत्याकस्मिकतद्विच्छेदाविर्भवत्सकलकरणक्षोभायास्तात्कालिकी काऽपि तनुताऽऽद्यवस्था द्योत्यते । 'जीवित प्रिय' इत्यामन्त्रणे पदद्वयम् । प्रियेति तु सुहृद्विशेषणत्वे प्रियसखैरित्यश्रुविशेषणं न वाच्यम् । 'अत्र प्रियतम इति निर्दिष्टमालम्बनं, प्रियागमनौन्मुख्यमुद्दीपनं, कार्श्यमश्रु चानुभावौ, विषादश्चित्तस्य पुरोगमनादावेगो मरणञ्च सूच्यमानं व्यभिचारिभावः । एभिरत्र प्रवासविप्रलम्भो दीप्यते (रु. सं. २४ पृ:) ।'

## दीपिका

गन्तव्य इति-भावे कृत्यः । तेन गमन उपस्थिते सतीत्यर्थः । जीवितेति सम्बुद्धिः ।

## दर्पणः

प्रस्थानमिति । अत्र प्रवासस्य भाविरूपो भेदः । यदुक्तं मयैव 'भावी भवनभूत' इति । 'त्रिधा स्यात्तत्र कार्यज' इति कार्याज्जातः प्रवासभेदः ।

## साहित्यचूडामणिः

प्रस्थानमिति । सर्वसमं प्रस्थितम् । नपुंसकमनपुंसकेनेत्येकशेषः एकवद्भावश्च । सुहृत्सार्थ इत्यस्य प्रियसखैरित्यनेन पौनरुक्त्यं दुष्परिहरम् । प्रियेति पृथक्पदं सम्बुद्ध्यन्तं जीवितविशेषणम् अतो न पौनरुक्त्यमित्येके । तदसत् । सुहृत्सखिशब्दयोः पौनरुक्त्यस्य तादवस्थ्यात् । किञ्च मूढ ! मूर्ख ! इत्यादि हि जीवितं प्रत्युचितमामन्त्रणं नतु प्रियेति । तस्य तज्जिहासायामनौचित्यात् ।

## सम्प्रदायप्रकाशिनी

प्रस्थानमिति । कृतप्रयाणसंविधानके प्रेयसि सद्यस्समुत्सन्नदेहेन्द्रियसौष्ठवा काचित् स्वयमेव जीवितं सोपालम्भं वक्ति—भो जीवित ! यातुं निश्चितचेतसि प्रियतमे वलयैः प्रस्थानं कृतम् । अनेन शरीरसादः । प्रियसखैरस्त्रैरजस्रं गतम् विरहे सति सद्योनिर्गमात् प्रियसखत्वम् । अनेन बाह्येन्द्रियव्यथा । धृत्या चित्तेनेति चान्तःकरणोपप्लवः । इत्थं य एते सहचरास्ते प्रतिष्ठामानेन तेनैव सह प्रस्थिताः । एषां त्यागे तव को हेतुः । अगमनं चेत् तन्नास्त्येवेत्याह—गन्तव्ये सतीति । निर्लज्ज ! हतजीवित ! अवसादावसरे नावसीदसि, धिक् त्वां निष्ठरमिति भावः ।

## विस्तारिका

प्रस्थानमिति । वलयानां सह प्रस्थानेन तानवम् । अस्राणामपि हृदयस्थितत्वेन प्रियसखत्वम् । निश्चितचेतसि, न तु गन्तुमुद्यते । समं सह । गन्तव्य इति—आवश्यकेत्यर्थे कृत्यः । जीवितेति प्रियेति च सम्बुद्धिः, कान्तस्येव प्रियस्य तव त्यक्तुमुचितत्वात् ।

## काव्यप्रदीपः

भविष्यत्प्रवासहेतुको यथा—

'प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रिय सुहृत्सार्थः किमु त्यज्यते ॥'

भूतप्रवासहेतुर्यथा मम—

'कियदम्बु भवेद्वसुंधरायां कति वा पल्लवसंचया भवेयुः ।
कियती च समृद्धिरम्बुजानां परितापोऽपह्रियेत यैः कृशाङ्ग्याः ॥

सख्याः प्रवासिनं नायिकं प्रतीयमुक्तिः ।

भवत्तद्धेतुको यथा ममैव—

'किं मूढे परिखद्यसे कतिपयैरेव प्रिये वासरै-
रायाता वयमेहि धेहि परितः प्रास्थानिकं मङ्गलम् ।
एवं वादिनि वल्लभे दयितया निःश्वस्य पाणौ कृतो
मङ्गल्यः कलशो विलोचनपयोधाराभिरापूरितः ॥'

## काव्यप्रकाशखण्डनम्

प्रवासहेतुकमुदाहरति—

प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्व्वे समं प्रस्थिताः
गन्तव्ये सति जीवित ! प्रिय ! सुहृत्सार्थः किमुत्सृज्यते ? ॥

वलयैरिति तेन कार्श्यम् । अस्त्राणामपि हृदयस्थितत्वेन प्रियसखत्वम् । निश्चितचेतसि नो गन्तुमुद्यते । जीवितेति प्रियेति सम्बुद्धिः, [प. १२.१] कान्तस्येव तव त्यक्तुमुचितत्वात् ।

## आदर्शः

प्रवासहेतुकमाह—प्रस्थानमिति । पत्युर्भाविप्रवास ज्ञानेन स्वजीवितं प्रति नायिकाया उक्तिरियम् । हे जीवित, प्रियतमप्रवासे सति त्वया अवश्यं गन्तव्यम्, तथाच तस्मिन् यातुं निश्चितचेतसि सति सर्वे अर्थात् तव सुहृदः समम् एकदा प्रस्थिताः स्वस्थानाच्चलिताः कृतयात्रा इत्यर्थः । तथाच त्वया च गन्तव्ये सति, वल यादिप्रिय-सुहृत्सार्थः, उ भोः, किं त्यज्यते प्रस्थितेन तेनैव समं गम्यतामित्यर्थः । वलयादिप्रियसुहृदां प्रस्थानमाह—प्रस्थान-

मिति; प्रस्थानं यात्रा। बहुदिनव्यापकैतद्वार्त्तया कृशत्वेन वलयभ्रंशः। अस्रेषु पृथक्प्रियसखत्वोपादानम् अत्यन्तप्रियत्वप्रतिपादनाय। तच्चेदृशदुःखेऽश्रुपातेनैव जीवितरक्षा भवतीत्यतः स्वरक्षाकारित्वात्। चक्रवर्ती तु—जीविताऽस्रयोर्द्वयोरप्येकहृदयवासित्वेन अत्यन्तप्रियत्वमिति व्याचष्टे, तन्न, चक्षुष्येवास्रवासात्। धृतेरप्येवं प्रियसखत्वोपादानापत्तेश्च। चित्तस्य गमनेच्छया व्यवसाय एव पुरस्त्वम् गमनं तु सहैवैति, अतः समं प्रस्थिता इति नानुपपन्नम्। अत्र इयमुक्तिरेव अनुभावः। उच्यमानैतदर्थव्यङ्ग्य दैन्यं व्यभिचारिभावः। प्रियतम आलम्बनम्। तत्प्रवास उद्दीपनम्। नायिकारतिज्ञे सामाजिके रसोत्पत्तिः।

## सुधासागरः

प्रवासहेतुकमुदाहरति—प्रस्थानमित्यादि। शार्दूलविक्रीडितं छन्दः। काचित् प्रोष्यत्पतिका स्वजीवितं सम्बोध्य सोपालम्भं वदति।

हे प्रिय प्रीतिपात्र जीवित प्रियतमे प्रेयसि, यातुं गन्तुम्, निश्चितं सञ्जातनिश्चयं चेतो यस्य तथाभूते सति, नतु गन्तुमुद्यते, सर्वे अर्थात्तव सुहृदः समं सह प्रस्थिताः स्थानात्प्रचलिताः ततस्तवापि गन्तव्ये सति गमनावश्यम्भावे सति विरहवेदनायाः सोढुमशक्यत्वादिति भावः। 'कृत्यल्युटो बहुलम्' इत्यवश्यार्थे तव्यप्रत्ययः। सुहृदां स्वमित्राणां सार्थः समूहः किमु कुतस्त्यज्यते त्वयापि गन्तव्यमिति भावः। के के प्रस्थितास्तत्राह—प्रस्थानामित्यादि। वलयैः कङ्कणैः प्रस्थानं कृतम्, प्रियगमनश्रवणजनितकार्श्येन स्वस्थानाच्चलितमिति भावः। प्रियसखैः। प्रीतिपात्रमित्रैः प्रियस्य नायकस्य वा मित्रभूतैरिति वचनादिविपरिणामेन सर्वेषु तृतीयान्तेषु योज्यम्। तत्त्वञ्च वलयानां प्रियसन्निधानान्वयवयतिरेकानुविधायितया अस्राणामपि हृदयस्थत्वेन प्रियसखत्वमिति चक्रवर्ती। अस्रैरश्रुभिरजस्रं निरन्तरमसंख्यातत्वात्, गतं स्थानान्निर्गतम्। धृत्या धैर्येण क्षणमपि नासितं न स्थितं, चित्तेन गन्तुं पुरः पूर्वमेव व्यवसितमुद्युक्तम्, न गतम्। तेन सममित्यनेनाविरोधः।

**प्रियेति सम्बोधनेन प्रियतमेनेव त्वयापि त्यक्तुमुचितमिति ध्वन्यते।**

**प्रियाणां सुहृदां, प्रियस्य वा सुहृदां सार्थः इत्यर्थकमेकं पदमिति केचित्।**

प्रियसखैरिति विशिष्यास्रविशेषणमत्यन्तप्रियत्वप्रतिपादनाय। तच्च जीवितनाशकदुःखोपस्थितावप्यस्रोद्गमात्किञ्चद्दुःखोपशमेन जीवितरक्षकत्वात् दुःखातिशयेऽप्यत्यागाद् वेत्याहुः।

सार्थशब्दश्च यद्यपि 'सङ्घसार्थौ तु जन्तुभिः' इति अमरोक्तेः जन्तुसमूह एव प्रयुज्यते नाचेतनसमूहे, तथापि प्रकृते चैतन्यारोपात् समर्थनीय इति वैद्यनाथाः।

वयन्तु अचेतनेषु सुहृत्त्वारोपाच्चैतन्यव्यवहार इति प्रतीमः।

## विवरणम्

भविष्यत्प्रवासहेतुकस्य प्रस्थानमिति।

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ३६ ॥**

---

### सङ्केतः

त्वामालिख्येति। आत्मानं अङ्घ्रिगतं यावत् आलेख्यतया साक्षादिव च इच्छामि, तावत् आलेख्येऽपि साक्षादिव तद्विभावनात् अश्रूद्गमः। तस्मिन्नपीति। चित्रेऽपि इत्यर्थः। तथा अत्र मनसैव तस्याः चित्रविषयनयनं, तस्य च पादविषयं पतनं न बहिर्वर्णकादिभिः करणं, इत्यपि व्याख्यातम्। अत्र व्याख्याद्वयेऽपि सहृदयैः सारेतरता विभाव्या( ?)।

### संङ्केतः (रुय्यकः)

त्वामालिख्येति। अत्र शापविप्रलम्भे गृह्यकस्य त्वामिति निर्दिष्ट आलम्बनविभावः, मेघोदयाद्युद्दीपनविभावः, चित्रलेखनं बाष्पश्चानुभावः, स्मृतिर्व्यभिचारिभावः। एतैः शापविप्रलम्भो व्यज्यते। एवमत्र शृंगारे वितत्य विभावादयो निरूपिताः।

### बालचित्तानुरञ्जनी

शापहेतुकं विप्रलम्भमुदाहरति त्वामालिख्येति। हे सखि ! धातुरागैः प्रणयकुपितां त्वाम् आलिख्य आत्मानं ते चरणपतितं यावत् कर्तुमिच्छामि तावत् मुहुर्मुहुरुपचितैरश्रुभिः मे दृष्टिरालुप्यते। तस्मिन् स्थितेऽपि आवयोः सङ्गमं क्रूरो विधिः न सहते।

### विवेकः

त्वामालिख्येत्यादि। धातुरागैरिति बहुवचनमालिख्येति समन्तादर्थमाडित्युपपदं पुष्णाति, तेन हि करचरणपल्लव(कपोल) चक्षुरादिरूपनिष्पादका भिन्नभिन्नवर्णा मनःशिलाऽऽदयो गम्यन्ते। प्रणयपदेन सत्य( ?)क्रोधजनकोऽपराधस्तव कदापि न मया कृत इति व्यज्यते। शिलापदेन लिखनयोग्यता, लिखतोऽपि ममाश्रूणि निर्गतान्येव, तानि च दृष्टिविधातमिव कृतवन्ति किन्तु मुद्गर (मुकुर) प्रोञ्छनेनापोह्यन्त इति कथं कथमपि लिखननिर्वाहः। इदानीन्तु प्रणामकालोद्यममात्रे स्मृतत्वच्चेष्टाविह्वलान्तःकरणस्य मम वारं वारं प्रवाहरूपतामापन्नैरश्रुभिः समन्ताद्दृष्टिरालुप्यत इति वाचस्पतिमिश्राः। जानास्येव यथा प्रणयरोषेर्ष्याव्यवहितेषु विलासेषु मम वाष्पतरलितं चक्षुर्भवतीति मयि कामय (काम्य) जीवितत्वम् 'आत्मानन्ते' इति पदशक्त्या व्यज्यते। अन्यथाऽऽत्मानमिच्छामी-

त्युपक्रमणे नौ इत्युपसंहारे च प्राप्तत्वाद्व्यर्थताऽऽपत्तिरिति काश्मीरकाः । वयन्तु ब्रूमः, यावदेवैतत् सर्वं कर्तुमिच्छामि तावत् सङ्कल्पविषय एव प्रलापसमयानुभूतकृतककोपप्रसादसम्भेदात्मकस्मृतत्वच्चेष्टाविह्वलस्य ममाविर्भूतैरश्रुभिर्दृष्टिरालुप्यते, तच्चित्रलिखिताया अपि तावदास्तां दर्शनविनोदनादिकं, यावत्तल्लिखनोचितरेखोपरेखाऽऽदिरूपमपि सङ्गमं न सहत इत्यत एव कृतान्तस्यापि पुनः क्रूर इति विशेषणम् । दैवमपि(भि)-शापमन्तरेण नैतन्मिथुनविघटने पटीय इति यथाऽत्र रतिरतितरामुद्दीप्ता तथाऽऽलेख्यादिरूपस्यापि समागमस्य विप्रयोग इति विप्रलम्भोऽपि परं पारमाश्रयते । मानसस्यापि च प्रवासस्य सर्वथैवाननुप्रवेशादयमबुद्धिपूर्वकः । 'अत्र गुह्यकस्य त्वामिति निर्दिष्ट आलम्बनविभावः, मेघोदयाद्युद्दीपनविभावः, चित्रलेखनं वाष्पञ्चानुभावः, स्मृतिर्व्यभिचारिभावः, एतैः शापविप्रलम्भो व्यज्यते' (रु. सं. २४ पृ:) । 'विप्रलम्भस्तु करुणवदि'ति (ना. शा.) वचनात् करुणे ये भावा निर्वेदादयस्तेऽत्रापि द्रष्टव्याः । तदित्थं वितत्य विभावादियोजनां कृत्वा विभावादिभिरभिव्यक्तः शृङ्गाररस उभयप्रकारः प्रकाशितः ।

## दीपिका

त्वामिति-कृतान्तो दैवं, क्रूरः श्रेयोविघटनजागरूकः । अत्राकृतिलिखिनात्कथञ्चिन्निर्वाह्यपादपतनारम्भेऽप्यत्रै [—वा] सरसमये त्वदीयविलासविशेषसमुद्दीपितशोकावेशविधुरस्य मम वाष्पैर्दर्शनविघातद्वारा विघ्नः क्रियत इति सर्वतन्त्रविदो वाचस्पतिमिश्राः ।

आधुनिकास्तु लिखनमपीच्छाविषय एव,न तु निर्व्यूढमिति मन्यन्ते । अत्र च त्वामिति निर्दिष्टनायिकाऽऽलम्बनं, कल्पनाबीजं पूर्वप्रणयकोपस्मरणं, प्राकरणिकश्च मेघोदयादिरुद्दीपनं, लिखितवाष्पश्चानुभावः, सञ्चारिणस्तु स्मृतिशोकदैन्यादयः । एतैः प्रतीयमानैर्यक्षेऽनुमीयमाना रतिः सहृदयहृदयलीनां वासनामुद्बोध्य निखिले तदाकारर्थासिद्धसान्द्रानन्दास्वादे पर्यवस्तीति-एषैव सर्वत्र रीतिः । अत्र च प्रबन्धपर्यालोचनया विप्रलम्भसञ्चार्युन्माद एवोद्रिक्त इति नेदं रसध्वन्युदाहरणं यद्यपि तथाप्येतन्मात्रानुसन्धाने नोन्मादाभासः स्फुट इत्यभिप्रेत्योदाहृतम् ।

## दर्पणः

त्वामिति । अत्र तवाकृतिलेखनं कथञ्चिन्निर्वाह्य पादपतनारम्भे त्वद्विलासस्मरण विपुलान्तःकरणस्य मम प्रवाहतामाप । तैर्वाच्यैः समन्ताद्दर्शनविघातः क्रियत इति सर्वशास्त्रविदां श्रीमद्वाचस्पतिमिश्राणां व्याख्यानमपि निगूढमिति त्वन्येषां एतावत् विद्यमानसंधानेनैवेदं रसध्वन्युदाहरणम् । प्रबन्धपर्यालोचने तु विप्रलम्भसञ्चारो उन्माद एव ।

## साहित्यचूडामणिः

त्वामिति । अत्र 'शापेनास्तङ्गमितमहिमे'ति प्रकरणवशेन शापहेतुकत्वम् ।

## सम्प्रदायप्रकाशिनी

त्वामालिख्येति । अत्र सर्वप्रकारदुःखकारी मन्मथ एव कृतान्तत्वेनाध्यवसीयते ।

## मधुमती

त्वामालिख्येति। कृतान्तः—दैवम्। यद्यपि—अयं प्रवासस्यैव भेदः सम्भवति। अन्यथा सावधित्वलक्षणप्रकारभेदेन प्रवासोऽपि द्विविधः स्यात्। तथापि कयाऽपि विवक्षया सन्नपि विशेषो नाभिधीयते। यथा—सम्भोगे मानान्तरत्वादयः, विप्रलम्भे च नोदनाद्यनेकावस्थाविशेषाः। कथाचित् विवक्षया अन्तर्भूतमपि पृथगभिधीयते। यथा—अत्रैव शापहेतुकस्य प्रवासप्रवेशेऽपि पृथक्कृत्य अभिधानमिति। आचार्यशैलीयम्।

पितृचरणास्तु—पाण्डोः शापहेतुको विप्रलम्भः प्रामाणिकः प्रवासपदेन सङ्गृहीतुं न शक्यते इति, तदर्थं पृथगभिधानम्। वैदेश्यनिबन्धन चिरव्यवधानस्यैव प्रवासपदशक्यत्वात्। तस्य च अत्र अभावात्। वक्रेक्षितादिभिः आलिङ्गनं प्रतिश्रुत्य शापभयेन अप्रदानेन वञ्चनात्मकविप्रलम्भस्य स्फुटत्वात्।

**यत्राङ्गना युवानश्च वसते न वसन्ति च।**
**स प्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते॥**
**चित्तोत्कण्ठादिभिः चेतः भृशं वासयतीह यः।**
**प्रवासयति वा यूनः स प्रवासो निरुच्यते॥**
**प्रपूर्वको वसिः ज्ञेयः कारितान्तःप्रमापणे।**
**तूष्णीं प्रवासयेदेनमिति वृद्धानुशासनात्॥**

इत्यादि च प्रवासपदव्युत्पत्तिमात्रम्। तत्कथनमपि—'प्रवासे भूषणादि व वर्णनीयम्, चिन्तोत्कण्ठादि परं वर्णनीयम्' इत्युपदेशपरम्।

## विस्तारिका

त्वामित्यादि। कोपेन रक्तिमोदयाद् धातुरागैर्लिखनम्। धातुरागै रक्तधातुभिः। शिलायाम्, तदानीं शय्यां विहाय भूमिशयनात्। इच्छासमय एव स्मरणोद्रिक्तविरहजनिताश्रुभिर्दृष्टिलोपः, तेन न लिखनपादपतनयोर्द्वयोरप्यनिर्वाहः। अर्थान्तरं न्यस्यति क्रूर इति। क्रूरः परप्रेयो विघटकः। तस्मिन्नपि प्रकृतो मा भवतु, प्रतिकृतावपि नौ आवयोः कृतान्तो दैवम्, तदेव कृतान्तो यमः। 'कृतान्तो यमसिद्धान्तदैवानुकूलकर्मसु' इत्यनुशासनात्।

अत्र कुबेरशापस्तदनुचरस्य प्रियाविच्छेदहेतुः।

## सारबोधिनी

त्वामिति। कुपिताया लौहित्यात् धातुरागैरित्युक्तम्। यक्षजातीयमेचकवर्णलाभार्थं शिलायामित्युक्तम्। अत्रेच्छासमयस्मरणोद्रिक्तविरहजनिताश्रुभिर्दृष्टिलोपस्तेन लिखनपादपतनयोर्द्वयोरप्यनिर्वाहः। अर्थान्तरंन्यस्यति। क्रूर इति। कृतान्तो दैवम्। तदेव कृतान्तो यमः। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इत्यनुशासनात्। ननु 'शठेन विधिना निद्रादरिद्रीकृत' इत्यत्रेव क्रूरपदेनासूयावगतावसूयाख्यभावध्वनिरेवायं कथं विप्रलम्भोदाहरणमिति चेन्न विप्रलम्भावगमानन्तरं समर्थनीयवाक्येन क्रूरेत्यादिना भावाभिव्यक्तेरकिञ्चित्करत्वात् तस्य। न

च तर्हि 'शठेन विधिना।' इत्यत्रापि तथा स्यात् यावत्तावत्पदाभ्यामेकवाक्यत्वेनैवान्वयादिति युक्तमेवेदं विप्रलम्भोदाहरणमिति।

**काव्यप्रदीपः**

शापहेतुको यथा—

**'त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः॥'**

आलिख्येत्यपीच्छाविषय एव।

विरहहेतुको यथा—

**'अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृ-**
**द्यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः।**
**इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे**
**बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि॥'**

एषा विरहोत्कण्ठितेत्यभिलाषहेतुकादेर्भिद्यते।

**'न्यङ्ग्व्रीडादिभिश्चेतोविकासो हास उच्यते।'**

**काव्यप्रकाशखण्डनम्**

शापहेतुकमुदाहरति—

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥**

कुपिताया लौहित्यौचित्यात् धातुरागैरित्युक्तम्। अत्रेच्छासमयस्मरणोद्रिक्तविरहजनिताश्रुभिर्दृष्टिलोपस्तेन लिखन-पादपतनयोरप्यनिर्वाहः। अर्थान्तरं न्यस्यति—क्रूर इति कृतान्तो दैवं तदेव कृतान्तो यमः। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इत्यनुशासनात्। अत्र आद्यपादत्रयमेव विप्रलम्भोदाहरणम्। क्रूरेत्यादि वाक्यान्तरं भावाभिव्यञ्जकम्। अतः शठेन, विधिनेत्यस्य नानेन तुल्यता, तत्र समाप्तिपर्य्यन्तं यावत्-तावत्पदाभ्यामेकवाक्यत्वेनैवान्वयात्।

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।**
**विमनायते यदैकस्तदा भवेत् करुण-विप्रलम्भः ॥** इति ।

मूर्च्छितनायकादिविषयः । करुण-विप्रलम्भोऽन्योऽप्यस्तीति प्राञ्चः ।

## आदर्शः

शापहेतुकमाह—त्वामालिख्येति । भर्तृशापप्रतिरुद्धप्रियासन्निधिगमनस्य यक्षस्य मेघद्वारा प्रियायामुक्तिरियम् । प्रणयकुपितां त्वां प्रियां धातुरागैः शिलायामिलिख्य आत्मानं तव चरणपतितं कर्तुं यावदिच्छामि तावदुपचितैर्वाष्पैः मे दृष्टिर्मुहुरालुप्यते अतस्तस्मिन्नपि समये क्रूरः कृतान्तः दैवं नौ आवयो सङ्गमं न सहते । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति कोषः । शिलायां लिखनमौज्ज्वल्याय । कुपिताया रक्तत्वेन धातुरागैर्लिखनम् । लिखनं चरणपातश्च द्वयमपि इच्छाविषय एव न तु निष्पन्नमिति भावः । केचित्तु चरणपात एव वाष्पप्रतिरुद्धः, लिखनन्तु निष्पन्नमेवेत्याहुः । चरणपातोऽपि लेखरूप एवेत्यन्ये । अत्रालुप्यते इत्यन्तेन निराकाङ्क्षवाक्येन यक्षस्य विप्रलम्भरतिर्व्यज्यते, प्रिया तदालम्बनं दृष्टिलोपव्यङ्ग्यं दैन्यं व्यभिचारिभावः, इयमुक्तिरेवानुभावः । प्रकरणलभ्यः शाप उद्दीपनम्, यक्षरतिज्ञे सामाजिके रसोत्पत्तिः । ननु क्रूर इत्यादिना निराकाङ्क्षवाक्येन व्यङ्ग्यो दैवविषयासूयारूपव्यभिचारिभावोऽप्यस्तीति कथमयं नासूयारूपव्यभिचारिभावध्वनिरिति चेत्, तदंशे इष्टत्वादेव किन्तु द्वयोरपि निराकाङ्क्षवाक्यव्यङ्ग्यत्वेन रसभावयोर्द्वयोरङ्गाङ्गिभावापन्नसङ्करध्वनिरेवायं वक्ष्यमाणो बोध्यः, तथाऽपि सङ्करघटकविप्रलम्भध्वनित्वमुपपद्यत एव ।

## सुधासागरः

शापहेतुकमुदाहरति—त्वामालिख्य इत्यादि । मन्दाक्रान्ता छन्दः । लक्षणमुक्तं प्राक् । मेघदूते कुबेरशापेन वियुक्तभार्यस्य यक्षराजस्य प्रियामुद्दिश्य मेघरूपदूतं प्रत्युक्तिरियम् । हे प्रिये ! प्रणयेन प्रेमातिशयेन कुपितां त्वां त्वत्प्रतिकृतिमित्यर्थः । धातवो गैरिकादयः ते एव रागाः रञ्जकद्रव्याणि तैः, शिलायां शिलापदे आलिख्य निर्माय आत्मानं मां मत्प्रतिकृतिमत्यर्थः, ते तव चित्रगताया इत्यर्थः, चरणपतितं कर्तुं तथा लिखितुं यावत् इच्छामि तावत् इच्छासमकालं मुहुरुपचितैः प्रवृद्धैरस्रैर्बाष्पैर्मे दृष्टिर्दर्शनमालुप्यते लुप्ताः भवतीत्यन्वयः । अर्थान्तरं न्यस्यति—क्रूरः परश्रेयोविघाते जागरूकः कृतान्तः दैवमेव कृतान्तो यमः, तस्मिन्नपि आलेख्येऽपि नौ आवयोः सङ्गमं न सहते किमु साक्षादिति ।

अत्र प्रणयकुपितामिति कोपव्यञ्जकलौहित्यसम्पादनाय धातुरागैरित्युक्तम् । यक्षजातीयमेचकवर्णलाभाय शिलायामित्युक्तम् ।

अत्र कथञ्चिल्लिखितायामाकृतौ पादपतनारम्भे तत्कालीन-तदीयविलासविशेषानुस्मरणसमुद्दीपितशोकविशेषप्रवृत्तैरश्रुभिर्दर्शनविघातद्वारा विघ्नः क्रियत इति सर्वतन्त्रविदो वाचस्पतिमिश्राः ।

आधुनिकाः प्रदीपकारादयस्तु लिखनमपीच्छाविषय एवेत्याहुः ।

ननु शठेन विधाना निद्रादरिद्रीकृत इत्यत्रेव क्रूरपदेनासूयावगमादसूयाख्यभावध्वनिरेवायं कथं विप्रलम्भोदाहरणमिति चेत् । न । विप्रलम्भावगमादनन्तरं समर्थनीयवाक्येन क्रूर इत्यादिना भावव्यक्तेरकिञ्चित्करत्वात् ।

जातत्वात्तस्य । न च तर्हि शठेन विधिनेत्यत्रापि तथा स्यादिति वाच्यम् । यावत्तावत्पदाभ्यामेकवाक्यत्वेनैवान्वायादिति युक्तमेवेदं विप्रलम्भोदाहरणम् ।

## विवरणम्

शापहेतुकस्य त्वामालिख्येत्युदाहरणम् ।

यथा लावण्यविशेषदर्शनाज्जाताह्लादः कामी तामाह्लादजनकत्वेनाह्लादाभेदेन वाऽध्यवस्यति । तदध्यवसायवासना पुनः पुनरुद्दीपनैः स्मरणमापाद्य दृढीकृता रतिराह्लादो नाम । द्रुतेन चेतसा वेद्यसुखविशेषः स्तम्भस्वेदरोमाञ्चादिजनकः । तथा विकृतवस्तुदर्शनाज्जाते हर्षे हर्षजनकतया, तदभेदेन वा, विदूषकादिमध्यवस्यति । तदध्यवसायोत्था वासना दार्ढ्यमापादिता हासहर्षविकृतेन चेतसा ग्राह्यः सुखविशेषो नाडीक्षोभद्वारा स्मितहसितविहसितादि प्रवर्तयति । तथाविधहासप्रकृतिको हास्यो रसः । तत्र विदूषकादिरालम्बनम्, तदीयानि विकृताकारवाक्चेष्टादीन्युद्दीपनानि, स्मितहसितादयोऽनुभावाः, अवहित्थालस्यादयो व्यभिचारिणः ।

हास्यादीनां क्रमेणोदाहरणम्—

**आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि-**
**वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।**
**तारस्वनं प्रथितथूत्कमदात्प्रहारं हाहा-**
**हतोऽहमिति रोदिति विष्णुशर्मा ॥ ३७ ॥**

---

**सङ्केतः**

आकुञ्चयेति । अत्र अशुचिं अशुचिक्रियाकारणत्वात् वामं पाणिम् ।

**संङ्केतः (रुय्यकः)**

इदानीं हास्यादिषु निरूप्यन्ते । आकुञ्च्येति । अत्र हास्योदाहरणे हासस्थायिभावात्मा हास्यो रसः । स च हासो रतिवदुभयाधिष्ठानत्वाभावेन हासकनिष्ठ एव । स चात्रानुपनिबद्धोऽपि हास्यो विभावमाहात्म्यात् प्रतीयते । विभावस्त्वत्रालम्बनरूपो विष्णुशर्मा, उद्दीपनरूपस्तु प्रहारदानादिः, अनुभावव्यभिचारिणावनुक्तावपि साक्षात् प्रतीयेते, तत्रानुभावाः कपोलस्पर्शनदृष्टिसंकोचादयः, व्यभिचारिणः पुनवहित्थादयः । एभिः सहृदयस्य रसव्यक्तिर्भवति । यत्र तु हासक उपनिबध्यते तत्रानुभावव्यभिचारिणावपि यथायोगमुपनिबद्धौ ज्ञेयौ ।

**बालचित्तानुरञ्जनी**

एवं शृङ्गारं सप्रपञ्चमुदाहृत्य हास्यादीनामुदाहरणकथनं प्रतिजानीते हास्यादीनामिति । तत्र हास्यस्योदाहरणमाह आकुञ्च्येति । कविवचनम् । वेश्या अशुचिं हस्तमाकुञ्च्य प्रतिपदं प्रतिक्षणं मन्त्रपूतानां जलानां बिन्दुभिः पवित्रे मम शिरसि स्थूलध्वनिप्रहितथूत्कारं यथा स्यात्तथा प्रहारं दत्तवती । अहं हतोऽस्मि । हाहा खेदे इति विष्णुशर्मा कश्चित् रोदनं करोति । अत्र विकृतचेष्टादिभिर्विभावः, कपोलोत्पुलकादिभिरनुभावः अवहित्थाग्लानिरूपादिव्यभिचारी हासस्थायिभावो हास्यः रसः ।

**काव्यादर्शः**

हास्यादीनामिति । वर्णदेशकालवयोवैपरीत्याद् विकृतवेषनर्तनगत्यनुकरणासत्प्रलापविभावो नासौष्ठस्पन्दस्वेदास्यरागपार्श्वग्रहणाद्यनुभावः त्रपावहित्थालस्यादिव्यभिचारी हासः स्थायी हास्यः । स चोत्तममध्यमाधमेषु स्मितहसितापहसितैरात्मस्थस्त्रिधा । तथा स्मितादीनां संक्रान्तिजातैर्हसितापहसितातिहसितैः यदा परं हासयति तदा परस्थोऽपि ।

यन्मुनिः—

**ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।**
**अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥**
**आकुञ्चिताक्षिगण्डं यत् सस्वनं मधुरं तथा ।**
**कालागतं सास्यरागं तद् वै विहसितं भवेत् ॥**
**अस्थानहसितं यत् तु साश्रुनेत्रं तथैव च ।**
**उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥**

## विवेकः

इदानीन्तु तथैव हास्यादयो विविच्यन्ते । तत्र हास्यः सितः प्रमथदैवतः । आकुञ्च्येत्याद्यत्र हासः स्थायिभावः । अयश्च हासो 'रतिवदुभयाधिष्ठानत्वाभावेन हासकनिष्ठ एव । स चात्रानुपनिबद्धोऽपि हासो विभावमाहात्पयात् प्रतीयते । विभावस्तत्रालम्बनरूपो विष्णुशर्मा, उद्दीपनविभावरूपस्तु प्रहारदानादिः, अनुभावव्यभिचारिणावनुक्तावपि साक्षात् प्रतीयेते, तत्रानुभावाः कपोलस्पर्शनदृष्टिसंकोचादयः, व्यभिचारिणः पुनरवहित्थाऽऽदयः । एभिः सहृदयस्य हास्यरसाभिव्यक्तिर्भवति । यत्र तु हासक उपनिबध्यते तत्रानुभावव्यभिचारिणावपि यथायोगमुपनिबद्धो ज्ञेयौ'। (रु. सं. २५ पृः) अथ शोकस्थायि भावः करुणः । अयं कपोतवर्णो यमश्चास्याधिदेवता ।

## दीपिका

प्रतिपदेमेकैकेन मन्त्रपदेन संस्कृत्य सिक्तैः पृषतैर्बिन्दुभिः, तारस्वरं यथा स्यात्तया प्रहितं सर्वदिक्प्रेषितं थूदिति शब्दो यत्र प्रहारे तत्र । विष्णुशर्माऽऽलम्बनं, रोदनवैचित्यादिरुद्दीपनं, सामर्थ्यलक्ष्या वैहासिकगताः कपोलस्पर्शदृष्टिसङ्कोचादयोऽनुभावाः । अवहित्थादर्पग्लान्यादयः सञ्चारिणो नोपात्ताः ।

## दर्पणः

आकुञ्च्येति । थूदिति प्रहारशब्दानुकरणम् । अत्र विष्णुशर्मा आलम्बनम् । कपोलोच्छ्वासनदृष्टिसङ्कोचादयो हर्षावहित्थाश्चानुभावव्यभिचारिणः । अनुक्ता अपि सामर्थ्याल्लभ्याः । एवमन्यत्रापि ।

## साहित्यचूडामणिः

विष्णुशर्मेति नाम्ना ब्राह्मण्यप्रयुक्तं चापलम् । तेन

**पाषण्डविप्रप्रभृतेश्चेटचेटीविटाकुलम्** [दशरू. ३.५४]

इति प्रहसनौचित्यं ध्वन्यते ।

## सम्प्रदायप्रकाशिनी

रसान्तराणामवसरतः प्राप्तिं दर्शयति—हास्यादीनामिति ।

आकुञ्च्येति । विष्णुशर्मेति नामैव तावदाजन्मनो जाल्मत्वमाविष्करोति । एतन्नामकः, कश्चित् शोच्यः श्रोत्रियो हा हा हतोऽहमिति रोदिति । कुतः, वेश्या अशुचिं पाणिमाकुञ्च्य या पुण्यस्त्री न भवति सैव वेशवाटचेटिका काचित् प्रायत्याभावान्नित्योपहतं पाणिमङ्गुष्ठारूढाकुञ्चिताङ्गुलिकं कृत्वा मन्त्राम्भसां पृषतैः प्रतिपदं पवित्रे ममैव मूर्ध्नि प्रहारमदात् । कथं, तारस्वनं वेणुपर्वस्फोटवद् यथाङ्गुलिघट्टनात् स्वनाविर्भावस्तथा । प्रहितशूत्कं कुड्मलितेनोष्ठसम्पुटेनासभ्यः शूत्कारोऽपि यथा प्रहीयते तथा ।

## मधुमती

क्रमप्राप्तेऽपि हास्याद्युदाहरणे, 'शृङ्गारवत् नामीषु अवान्तरभेदः वाच्यः' इति विभावयितुमाह—हास्यादीनामिति ।

आकुञ्च्येति । विष्णुशर्मा आलम्बनम् । रोदनादि उद्दीपनम् । लज्जादयः व्यभिचारिणः । वैवर्ण्यादयः अनुभावाः ।

## विस्तारिका

आकुञ्च्येति, सङ्कुचिताग्रं कृत्वा । अशुचिम्, तदातनोच्छिष्टसम्बन्धात् । मम मूर्ध्नि प्रहारमदादिति सम्बन्धः । मन्त्राम्भसां मन्त्रितपयसाम्, पृषतैः कणैः प्रतिदिनमापो हिष्ठेत्यादिभिः पवित्रे कृतसंस्कारे, प्रथितो विस्तारितस्थुगिति शब्दो यत्र प्रहारे तारस्वरमित्यपि क्रियाविशेषणम् । इति एवंशब्देनाकुञ्च्येत्यादि 'हा हा हतोऽहम्' इत्यन्तेन तादृशं शब्दमुच्चार्येत्यर्थः । शर्मान्तनामश्रवणेनापि हसितं स्यात् ।

अत्र विष्णुशर्मा आलम्बनम्, तस्य रोदनमुद्दीपनम्, द्रष्टुरुद्वेगजाड्यादयः सञ्चारिणः, स्मितहसितातिहसितान्युत्तममध्यमाधमेष्वनुभावाः । यस्य हासस्तदनिर्बन्धेऽपि सामर्थ्यात् तदवसायः । अत एवोक्तम्—

**यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते ।**
**तथाप्येष विभावादिसामर्थ्यादवसीयते ॥** इति ।

विकृतवाग्वेषादिदर्शनेऽवश्यं हासोदयात् । अत्र हास्यो रसः ।

## सारबोधिनी

हास्यरसमुदाहरति आकुञ्च्येति । संकुचिताग्रं कृत्वा मम मूर्ध्नि प्रहारमदादिति संबन्धः । मन्त्राम्भसां मन्त्रितपयसां प्रथितो विस्तारितः, थूगिति शब्दो यत्र प्रहारे । तारस्वरमित्यपि क्रियाविशेषणम् । आकुञ्च्येत्यादि 'हा हा हतोऽहम्' इत्यन्तेन तादृशं शब्दमुच्चार्येत्यर्थः । शर्मा तन्नामा ।

श्रवणेनापि हसितम् । अत्र विष्णुशर्मा आलम्बनम् । तस्य रोदनमुद्दीपनम् । द्रष्टुरुद्वेगजाड्यादयो व्यभिचारिणः । स्मितहसितातिहसितानि उत्तममध्यमाधमेष्वनुभावाः । यस्य हासस्तदनिबन्धोऽपि सामर्थ्यात्तदवसायः । तदुक्तम्—

**यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते ।**
**तथाप्येष विभावादिसामर्थ्यादवसीयते ॥** इति ॥

विकृतवाग्वेशादिदर्शनेऽवश्यं हासोदयादत्र हास्यो रसः।

**काव्यप्रदीपः**

न्यङ्गं वैकृतम्। तेन हासप्रकृतिको हास्यः। यथा—

**'आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या**
**मन्नाम्भसां प्रतिपदं पृषतैः पवित्रे।**
**तारस्वरं प्रथितथूत्कमदात्प्रहारं**
**हा हा हतोऽहमिति रोदिति विष्णुशर्मा॥'**

अत्र ताड्यमानो विष्णुशर्मा तत्क्रन्दनं च विभावौ रसाश्रयस्य। एतद्वाक्यमनुभावः। चापलादिर्व्यभिचारीति।

'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।'

**काव्यप्रकाशखण्डनम्**

अथ हास्यदीनां उदाहरणम्—

**आकुञ्चय पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।**
**तारस्वरं प्रहितथूत्कमदात् प्रहारं हाहा हतोऽहमिति रोदिति विष्णुशर्म्मा॥**

हाहा हतोऽहमित्यन्तेन तादृशमुच्चार्येत्यर्थः। शर्मान्तनामश्रवणे हि हसितं स्यात्। अत्र विष्णुशर्मा आलम्बनम्, तस्य रोदनमुद्दिपनम्, द्रष्टुरुद्वेगजाड्यादयो व्यभिचारिणः, स्मितहसितातिहसितानि उत्तम-मध्यमेष्वनुभावाः। यस्य हासस्तदनिबन्धेऽपि सामर्थ्यात् तदवसायः। तदुक्तम्—

**यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते।**
**तथाऽप्येष विभावादिसामर्थ्यादवसीयते॥**

विकृतवाग्वेषादिदर्शनेनावश्यं हास्योदयाद् अत्र हास्यो रसः।

**आदर्शः**

हास्यरसमुदाहरति—आकुञ्च्येति। रुदन्तं विष्णुशर्माणं दृष्ट्वा हसत उक्तिरियम्। विष्णुशर्मा इति रोदिति। कीदृशं रोदितीत्यत्राह—आकुञ्च्येत्यादि हाहाहतोऽहमित्यन्तम्, वेश्या मम मूर्ध्नि अशुचिं पाणिमाकुञ्चय तारस्वरं प्रहितथूत्कञ्च यथा स्यात् तथा प्रहारमदात्। मूर्ध्नि कीदृशे? प्रतिपदं प्रत्यवयवरूपप्रतिस्थानं मन्त्राम्भसां पृषतैः कणाभिः पवित्रे। अत एव अशुचिपाणिप्रहारेणात्यन्तदुःखाद्रोदनम्। तारेत्यादि द्वयं प्रहारदानक्रियाविशेषणम्। थूत्कं लाला। अत्र एतद्वक्तुर्हासस्य रुदद्विष्णुशर्मा आलम्बनम्। रोदनकथनमनुभावः। रोदनवाक्यार्थो आकुञ्च्येत्यादयः उद्दीपनानि। रोदनकथनव्यङ्ग्या वक्तश्चपलता व्यभिचारिभावः। हासज्ञे सामाजिके रसोत्पत्तिः।

## सुधासागरः

सूत्रक्रमप्राप्तेऽपि हास्याद्युदाहरणे शृङ्गारवन्नामीष्ववान्तरभेदो वाच्य इति विभावयितुं श्रीमद्वृत्तिकृदाह—हास्यादीनामित्यादि । तत्र हास्यं यथेत्यादि तूदाहरणानामसङ्कीर्णतां ध्वनयितुमिति बोध्यम् । 'व्यङ्ग्यव्रीडादिभिश्चेतोविकासो हास उच्यते ।' व्यङ्ग्यं वैकृतम् । तेन हासप्रकृतिको हासः । यथा—आकुञ्चेत्यादि । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् । विष्णुशर्माणमुपहसतः कस्यचिदुक्तिरियम् । इतीत्युपलक्षणार्थकतृतीयान्तम् । विष्णुशर्मा कश्चिद् विप्रः आकुञ्च्येत्यादि हतोऽहमित्यन्तेन वाक्येनोपलक्षितं रोदितीत्यन्वयः । वाक्यार्थस्तु वेश्याऽशुचिमुच्छिष्टादिनोपहतं पाणिमाकुञ्च्य संङ्कुचिताग्रं कृत्वा मुष्टिं कृत्वेति यावत् । मन्त्रपूतानामम्भसां पृषतैर्बिन्दुभिः प्रतिपदं प्रतिक्षणं पवित्रे मम मूर्ध्नि तारो दीर्घः स्वरो यत्र प्रथितो विस्तारितः थूदिति शब्दश्च यत्र तथा प्रहारमदात् दत्तवती । हाहेति खेदातिशये । हतो नष्टोऽहमिति ।

प्रतिपदं प्रत्यवयवमिति केचित् ।

प्रतिपदं प्रतिमन्त्रपदं तथा चैकैकेन मन्त्रपाठेन संस्कृतैः पृषतैः पवित्रे इत्यर्थ इति चण्डीदासभट्टाचार्याः प्राहुः ।

प्रहितथूकमिति पाठे प्रहितं—प्रक्षिप्तं थूकं लाला यत्रेति व्याचक्षते ।

यत्तु तारस्वरं यथात् स्यात्तथा रोदितीति व्याख्यानम्, तदयुक्तम् । हतोऽहमित्यन्तस्य रोदनकर्तृवाक्यस्यानुकरणात् तदन्तर्गतस्यान्यववतृवाक्यार्थे रोदने विशेषणसम्पर्कित्वासम्भवादिति सहृदयैराकलनीयम् ।

अत्र विष्णुशर्माऽऽलम्बनम् । तस्य रोदनमुद्दीपनम् । द्रष्टुरुद्वेगजाड्यादयो व्यभिचारिणः । स्मितहसितादीनि उत्तममध्यमाधमेष्वनुभावाः ।

रसाश्रयस्यैतद्वाक्यमनुभावः, चापलादिर्व्यभिचारीति प्रदीपकाराः ।

यस्य हासस्तदनिबन्धेऽपि सामर्थ्यात्तदवसायः । तदुक्तम्—यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते । तथाप्येष विभावादिसामर्थ्यादवसीयते इति । विकृतवाग्वेषादिदर्शनेऽवश्यं हासोदयादत्र हास्यो रसो व्यज्यते ।

## विवरणम्

त हास्यमुदाहरति—आकुञ्च्येति । अत्र विष्णुशर्मा तदीयमनूद्यं वचनं च विभावौ, अनुवादकवचनाक्षिप्तविहसितादयोऽनुभावाः, स्वप्नावहित्थालस्यचपलतादयो व्यभिचारिणः ।

विष्णुशर्मणि हर्षसाधनत्वतदभेदादिवासनात्मकः स्थायी हर्षसाधनत्वादिप्रतिसन्धानजन्मा राग एव हासः । रागोऽपि वासनारूपेण परिणमतीत्यप्याहुः ।

शोको द्विविधः—प्रतियोगिनि प्रीत्या तन्नाशेऽसहिष्णुत्वलक्षणो द्वेषः प्रथमः, द्वितीयस्तु दुःखसाधनविपदुपनिपातगोचरः । तत्राद्यः करुणरसप्रकृतिः । स हि द्वेषांशे दुःखमयोऽपि रत्यंशाह्लादसम्भेदात् सुरतदन्तव्रणादिरिव स्वदते ।

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥ ३८ ॥

---

### सङ्केतः

हा मातरिति। काश्मीरराजमातृमरणे भट्टनारायणवाक्यमिदम्। अशनिः हुतवहः वज्राग्निः। मध्यं रुद्धं याभिः ताभिः तथा। ततो घर्घरादिभिः त्रिभिः पदैः कर्मधारयः। घर्घराः अव्यक्तः।

### संङ्केतः (रुय्यकः)

हा मातरिति। अत्र करुणोदाहरणे मातृशब्दवाच्या शोचनीयोत्तमस्त्री आलम्बनम्, अंगेषु हुतवह उद्दीपनम् रोदनपरिदेविते अनुभावः, तदाक्षिप्तास्तु व्यभिचारिणो निर्वेदग्लानिचिन्तादैन्यादयः। एभिरत्र करुणरसाभिव्यक्तिः।

### बालचित्तानुरञ्जनी

करुणस्योदाहरणमाह हामातेति। राजजननीमरणे कविवचनम्। हा मातः त्वरितासि वेगेन गतासि। कुत्र वर्तसे? किमेतज्जातम्? हा देवताः। ब्राह्मणानामाशिषः क्व। प्राणान् धिक् विनश्वरत्वात्। अकस्मात् वज्रं किं पतितम्? अङ्गेषु अग्निः पतितः? लोचने दग्धे। इत्थमनेन प्रकारेण घर्घरमध्ये रुद्धाः करुणाः सन्त्यः नगरस्त्रीणां विलापवचनानि चित्रलिखितानपि प्राणिनो रोदयन्ति भित्तीरपि शतधा कुर्वन्ति। अचेतनान् रोदयन्तीति किमु वक्तव्यमिति भावः। अत्रेष्टनाशादिविभावः। देवोपालम्भाश्रुपाताद्यनुभावः, चिन्तादिव्यभिचारी शोकस्थायिभावः करुणरसः।

### काव्यादर्शः

इष्टानिष्टवियोगयोगविभावो दैवोपालम्भनिःश्वासस्वरभेदाश्रुपातवैवर्ण्यप्रलयस्तम्भकम्पभूलुठनाद्यनुभावो निर्वेदग्लानिचिन्ताविषादचरणादिव्यभिचारी शोकस्थायी करुणः।

### विवेकः

हा मातरित्यत्र करुणोदाहरणे मातृशब्दवाच्या शोचनीयोत्तमस्त्री आलम्बनविभावः, अङ्गेषु हुतवह उद्दीपनविभावः, रोदनपरिदेविते अनुभावः, तदाक्षिप्तास्तु व्यभिचारिणो निर्वेदग्लानिचिन्तादैन्यादयः। एभिरत्रेष्टनाशप्रभवः

शोकस्थायिभावो व्यज्यमानः सामाजिकानां तन्मयोभवनयुक्त्या समास्वाद्यतां प्रतिपन्नः करुणो नाम रसः। ननु करुणात्मककाव्यश्रवणाद्दुःखाविर्भावोऽश्रुपातादयश्च रसिकानामपि प्रवर्तन्ते, तत् कथमस्य रसत्वमिति चेत्? उच्यते—यथा षाडवादौ शर्करादिमाधुर्यस्य मरिचादिना यथा वा रतहर्षसम्भवे स्त्रीणां केशाधरग्रहणात्मना कुट्टमितेन तथाऽत्रापीति वृत्तवर्णनाकर्णनोपचरितदुःखानुवेधेनानन्दस्यैव प्रकर्षः, विप्रलम्भवदस्य निरतिशयानन्दात्मकत्वात्। अतएव चात्रोत्तरोत्तरं रसिकानां प्रवृत्तयः (द. रू. ४/४४-४५ वृ:) यदि च लौकिककरुणवद्दुःखात्मकत्वमस्य स्यात् तदा न केऽप्यत्र सचेतसः प्रवर्तेरन्, एवञ्च करुणरसप्रधानो नाम (प्रधानानाम)-भिनेयानभिनेयकाव्यानामुच्छेदः प्रसज्यत इत्यादिकमवसेयम्। अथ क्रोधस्थायिभावो रक्तवर्णो रुद्राधिदैवतः संग्रामादिहेतुको रौद्रः।

## दीपिका

कुत्र कस्मिन् गन्तव्ये त्वरिताऽसि येनास्मान्सततभक्तानपि नापेक्षसे। अशनिरूपो हुतवहः। दृशाविति-दृशोःपूर्वपरिचितलावण्यलहरीसंवलिततदपाङ्गतरङ्गणादिवैचित्र्याद्विशेषोक्तिः। मध्यरुद्धा मध्य अर्द्धे रुद्धा विच्छिन्नाः बाष्पोदयसंवृतकण्ठतया। अत्र लोकान्तरगतनायिकाऽऽलम्बनं, तद्गेहेऽग्निपतनादिरुद्दीपनम्, अश्रु-तद्गुणवर्णनप्लुतकरुणस्वरस्तम्भादिरनुभावः, तत्प्रकाशितो निर्वेदः सञ्चारी।

## साहित्यचूडामणिः

हेति। अन्न कालधर्मयोगिनीं काञ्चिदुद्दिश्य शोकः परिपोषं प्राप्त इति करुणो रसः।

## सम्प्रदायप्रकाशिनी

करुणमुदाहरति—हा मातरिति। शत्रुसम्पाताद्युपप्लवेनाकुलानां पौराङ्गनानामित्थं निर्गता गिरश्चित्रस्थानपिं जनान् रोदयन्ति चित्रभित्तीरपि शतधादलयन्ति। कीदृश्यः, हा मातस्त्वरितासीति, कुत्रेति, किमिदमिति, हा देवताः क्वाशिष इति, धिक् प्राणानिति, पतितोऽशनिरिति, हुतवहस्तेऽङ्गेष्विति, दग्धे दृशाविति, घर्घराः भिन्नकण्ठत्वाद् विस्वराः मध्यरुद्धाः अवसन्नस्वरत्वादर्धोक्तिप्रायाः करुणाश्च।

## मधुमती

हा मातरिति। अत्र मातृपदप्रतिपाद्या आलम्बनम्। अङ्गेषु हुतवहः इत्युद्दीपनम्। रोदनादयः अनुभावाः। तदनुमिताः निर्वेदग्लान्यादयः व्यभिचारिणः।

## विस्तारिका

करुणमाह—हा मातरिति। कस्याञ्चन राजमहिष्यां मृतायां तत्परिजनस्य विलापोऽयम्। त्वरिताऽसि त्वरया कुत्र गतासि। किमिदमतर्कितोपनतत्वात्। हा इति धिगित्यर्थे। विविधोपचारपूजास्तुतिनतिभिरप्यरक्षणाद् देवताक्षेपः। विविधदानमानतर्पितानां द्विजानामशीर्भिरपि न किञ्चित् कृतमित्याह-केति। एतावद् व्यतिरेकेऽपि स्थिरत्वात् प्राणनिन्दा। हुतवहो य एवाहुतिभिर्हुतस्तर्पितः साग्निकत्वात् स एवाशनिः, अद्भिर्जातोऽपामेव दाहकः। पतितः स्वयमेवास्मिन्नङ्गे। सचेतनैरर्पयितुमशक्यः। अतिसौन्दर्याद् विशिष्य दृगुपादानम्। बहुशस्तारस्वरेण

क्रन्दनाद विस्वरेण घर्घरता। बाप्पबाहुल्येन अन्तरान्तरास्थगनम्। अचेतनमतिकठिनमपि द्रावयति, तदाह—चित्रे-त्यादि।

अत्र मृतनायिकालम्बनम्, तद्रूपतच्छरीरवह्निसंयोगाद्युद्दीपनम्, रोदनमनुभावः, दैन्यग्लानिमूर्च्छादयः सञ्चारिणः।

### काव्यप्रदीपः

'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।

आदिग्रहणादनिष्टाप्तिः। शोकप्रकृतिकः करुणः। यथा—

**'हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो**
**धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।**
**इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-**
**श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥'**

अत्र विपन्ना काचिदीश्वरी संबोध्या, तदङ्गदाहश्च विभावौ।

### काव्यप्रकाशखण्डनम्

करुणामाह—

**हा मातस्त्वरिताऽसि कुत्र [प. १२.२] किमिदं हा देवताः क्वाशिषो**
**धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।**
**इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-**
**श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥**

तादृक्पूजादिभिरप्यरक्षणात् देवताक्षेपः। विविधदानादितर्पितानां द्विजानामाशीर्भिरपि न किञ्चित् कृत-मित्याह—क्वेति। मध्यरुद्ध इति बाष्पबाहुल्येनान्तरावस्थानम्। इत्थमिति गिर इत्यनेनान्वितम्। अत्र नृपयोषि-दालम्बनम्, तत्शरीरवह्निसंयोगादि उद्दीपनम्, नोदनमनुभावः, दैन्यग्लानिमूर्च्छादयः सञ्चारिणः।

### आदर्शः

करुणामाह—हा मातरिति। दह्यमानायां मदालसायां पुरस्त्रीणां रोदनं पूर्वार्द्धार्थः। तत् कथयतः कस्य-चिदुक्तिः परार्द्धम्। पौराङ्गनानामित्थं गिरः चित्रस्थानपीत्यन्वयः। भित्तीः देहलीः। त्वरिताऽसि त्वरितं गताऽसि। धिगिति शीघ्रं नश्वराणां दह्यमानप्राणानां तन्मरणेऽप्यनश्वराणां स्वप्राणानाञ्च निन्दा। दृग्दाहे संस्थानानुपलम्भेना-त्यन्तदुःखाद् दग्धे इत्युक्तम्। गिरः कीदृश्यः? स्वरभङ्ग्या घर्घराः, श्रमान्मध्यरुद्धाः, करुणाः कातर्य्यसूचकाः। घर्घरमध्यरुद्धयोः कर्मधारये तेन सह करुणा इत्यस्य कर्मधारयः। अत्र रुदतीनां शोकस्य दह्यमाना आलम्बनम्, रोदनमनुभावः, रोदनवाक्यार्थश्च उद्दीपनानि। मध्यरोधव्यङ्ग्यः श्रमो व्यभिचारी। शोकज्ञे सामाजिके रसोत्पत्तिः।

## सुधासागरः

करुणमुदाहरति—'इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्' । आदि ग्रहणादनिष्टाप्तेः । शोकप्रकृतिकः करुणः । यथा—हा मातरित्यादि । शार्दूलविक्रीडितं छन्दः । राजपत्न्यां मृतायां तत्परिजनविलापवर्णनमिदम् । अयमर्थः । इत्थम् एतत्प्रकाराः, पुरे भवानामङ्गनानां घर्घरस्वराः उच्चैः क्रन्दनादिति भावः, ताः श्रमाद् बाष्पबाहुल्याच्च मध्येऽन्तराले रुद्धाः विच्छिन्नाश्चेति कर्मधारयोत्तरं पुनः करुण इत्यनेन कर्मधारयः । करुणाः । कातर्यसूचिकाः, नातो रसस्य शब्दवाच्यतादोषः, एवम्भूता गिरश्चित्रस्थानप्यालेख्यधृतानापि रोदयन्ति, भित्तीरपि शतधा शतखण्डाः कुर्वन्ति, किम्पुनः सचेतनानित्यन्वयः । किम्प्रकारा गिर इत्यपेक्षायां वाग्भेदरूपानुकरणं पूर्वार्द्धम् । तदर्थस्तु—हा विषादे । भो मातः कुत्र गन्तव्ये त्वरिताऽसि सञ्जातत्वराऽसि येनास्मानपि नापेक्षितवती । किमिदम् आकस्मिकोत्पातरूपम् । हा इति धिगर्थे, देवताः धिक् । नानोपचारपूजास्तुतिनतिभिरप्यरक्षणात्, आशिषः अर्थाद्दानादितर्पितद्विजानाम्, क्व कुत्र गता इति शेषः, ता अपि विफला इति भावः । प्राणान् धिक्, त्वदभावेऽपि स्थिरत्वात् । ते तव, अङ्गेषु सुकुमारेषु अशनिर्वज्रं तद्रूपो हुतवहः य एवाऽऽहुतिभिस्तर्पितः स एव पतितः स्वयमेव, सचेतनैरेतेष्वङ्गेषु पातयितुमशक्यत्वात् । यद्वा पतितोऽशनिरिति भिन्नवाक्यम् । वज्रपात एवाऽयं यत्तव विपत्तिरिति । दृशौ नेत्रे दग्धे इति विशेषणोपादानं रमणीयताऽतिशयेन तद्दाहे दुःखाधिक्यात् । यद्वा अस्माकं दृशौ दग्धे इति । अशुभदर्शितत्वाल्लौकोक्त्या द्रष्टव्यम् ।

## विवरणम्

तमुदाहरति—हा मातरिति । कुत्र त्वरिताऽसि कं देशं गन्तुमस्मान् नापेक्षसे । तवाङ्गेषु हुतवहो मम दृशौ दग्धे इत्यसङ्गति । प्रत्येकं पौराङ्गनानां गीः । घर्घराश्च मध्ये दुःखाधिक्याद् रुद्धाश्च करुणाश्चेति विग्रहः ।

अत्र मातृपदोपचरिता काचिदालम्बनम्, तदीयदाहादिरुद्दीपनम्, रोदनाद्यनुभावः, निर्वेदादिर्व्यभिचारी, मातृविषयकप्रीत्युपबृंहितं तन्निधनासहिष्णुत्वं स्थायिभावः । यत्र च शोच्यविषया रतिर्न परिस्फुरति, किन्तु केवल एवानिष्ट गोचरो द्वेषः, तत्रासौ भाव एव, न रसः । यथा—

**एतेषु रे तरुणवातविधूयमान-**
**दावावलीकवलितेषु महीरुहेषु ।**
**अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च**
**वज्रं पुन क्षिपसि निर्दय कस्य हेतोः ॥ इति ।**

अत्राप्रस्तुतप्रशंसया गम्यमानो दैवोपालम्भमात्रव्यापारस्य विपद्गृहीतस्य पुंसो वृत्तान्तः शोकं गमयति ।

ममेदं कार्यमेवेति बुद्धिर्वासनारूपेण परिणतोत्साह इत्युच्यते । स च चिकीर्षाप्रवृत्ती जनयित्वा वृत्ते फलं दीप्तिस्वरूपसुखेन सम्बध्यते । स च कर्तव्यत्वाध्यवसायो द्विविधः—द्वेषयोनिर्निष्फलेच्छायोनिश्च । तयोराद्यः शत्रुगोचरद्वेषादिसहकारेण तन्निधनादौ चिकीर्षाप्रवृत्ती जनयति । द्वितीयस्तु फलानुसन्धानसहकारेण यागादौ रणादौ च । तत्राद्यो रौद्ररसस्य प्रकृतिः, वीरस्य । वैरिक्रोधयोनिर्वैरिहनने, फलानुसन्धानयोनिश्च सङ्ग्रामादौ प्रवृत्तिरेवोत्साहः, तस्या अपि वासना रूपेण परिणाम इत्यपि वक्तुं शक्यते ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां समीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ।। ३९ ।।

---

### सङ्केतः

कृतमिति । अत्र नरकरिपुः अच्युतः । किरीटी अर्जुनः ।

### सङ्केतः (रुय्यक)

कृतमनुमतमिति । अत्र रौद्ररसे अश्वत्थामगतक्रोधः स्थायिभावः, तत्र गुरुपातकमालम्बनम्, उदायुधत्व-मुद्दीपनम् (तदायुधत्वमुद्दीपनं), तेन हि गुरोरस्त्रत्याग आक्षिप्यते, अनुभावोऽसृङ्मेदोमांसैर्दिग्बलिकरणम्, प्रतिज्ञा-भ्रुकुट्यादयः सामर्थ्यावसेयाः व्यभिचारिणश्चैतदनुभावगम्या आवेगामर्षचपलतौग्र्यादयः । एतैरत्र रौद्ररसोऽभिव्यज्यते ।

### काव्यादर्शः

दारापहारदेशजात्यभिजनविद्यानिन्दोपहासाधिक्षेपादिविभावो नेत्ररागभ्रुकुटीकरणदन्तौष्ठपीडनहस्ताग्र-निष्पेषशस्त्रसंपातप्रहरणरुधिराकर्षणाद्यनुभावऔग्र्यावेगोत्साहादिव्यभिचारी क्रोधस्थायिभावो रौद्रः ।

### विवेकः

कृतमित्यादि । नरकरिपुणा विष्णुना सहेति । 'अत्राश्वत्थामगतक्रोधः स्थायिभावः, तत्र गुरुपातकमालम्ब-नविभावः, उदायुधत्वमुद्दीपनविभावः, तेन हि गुरोरस्त्रत्याग आक्षिप्यते, अनुभावोऽसृङ्मेदोमांसैर्दिग्बलिकरणम्, प्रतिज्ञाभ्रुकुटिदन्तौष्ठसंदंशनादयश्च सामर्थ्यावसेयाः । व्यभिचारिणश्चैतदनुभावगम्या आवेगामर्षचपलतौग्र्या-दयः । एतै रौद्ररसोऽभिव्यज्यते' (रु. सं. २५) रक्तास्यनेत्रता चात्र जायते, इतरथा वीर इति । अथोत्साहस्थायिभावो गौरवर्णो महेन्द्राधिदैवतो वीरः । अयञ्च दयादानधर्मयुद्धभेदाच्चतुर्धा । तत्र दयावीरादीनां शान्तप्रभेदत्वमिति मन्यमानो युद्धवीरमुदाहरति, अभिमानमयत्वेनास्य व्यवस्थापनात् ।

### दीपिका

कृतमिति-अत्रपितृवैरिण आलम्बनम्, अनुमत्यादय उद्दीपनं, प्रतिज्ञाग्रहणं तत्सहचराश्च भृकुटीदन्तौष्ठ-पीडनादयोऽनुभावाः, उत्साहौग्र्यादयः संचारिणः ।

### साहित्यचूडामणिः

कृतमिति । अत्राश्वत्थाम्नः क्रोधः परिपुष्ट इति रौद्ररसत्वम् ।

### सम्प्रदायप्रकाशिनी

रौद्रमुदाहरति—कृतमनुमतमिति । गुरुपातकं गुरुवधलक्षणं पातकम् । नरकरिपुणां सार्धं भवतामसृङ्मेदोमांसैर्दिशां बलिं करामीत्यश्वत्थाम्न उक्तौ क्रोधोऽभिव्यज्यमानो रौद्रत्वमापद्यते ।

### मधुमती

कृतमनुमतदिति । अत्र गुरुपदहेतवः भीमादयः आलम्बनम् । उदायुधत्वं उद्दीपनम् । वैवर्ण्यादयः अनुभावाः । उग्रतादयः व्यभिचारिणः ।

### विस्तारिका

रौद्रमाह—कृतमित्यादि । द्रोणाचार्यवधे अश्वत्थामोक्तिरियम् । गुरोः पांतकमेव गुरुपातकम्, तस्य कर्तर्यनुमन्तरि चानिराकर्तरि च दण्डः समुचित इति क्रमेणाह—कृतमित्यादि । अविवेचनात् पशुत्वम् । उदायुधैः कथमायुधोद्यमः कृतः । अत एव मर्यादाशून्यैः, नरकरिपुणां श्रीकृष्णेन सार्धं क्रोधात् क्रमं विस्मृत्य प्रागनुमन्तुरुपादानम् । अयमहमनन्यसहायो मेदो बसा बलिपूजोपहारं करोमि । एवमुपहारस्यादृष्टचरत्वान्मदेककृतिसाध्यत्वम् ।

अत्रापकारिणोऽर्जुनादय आलम्बनम्, अस्त्रोद्यमनमुद्दीपनम्, प्रतिज्ञा अनुभावः अन्यनैरपेक्ष्यगम्यगर्वः सञ्चारी ।

### सारबोधिनी

रौद्रमाह कृतमिति । 'कुत्सिते कः' इति गुरोः पातक एव गुरुपातकम् । तस्य कर्तर्य्यनुमन्तरि अनिराकर्तरि दण्डः समुचित इति । तान् क्रमेणाह कृतमित्यादि । अहमनन्यसहायः । नरकरिपुणा श्रीकृष्णेन । अत्र नरकरिपुपदमुपहासं व्यनक्ति । क्रोधात् क्रमविस्मृत्या प्रागनुमन्तुरुपादानम् । अत्रापकारिणोऽर्जुनादय आलम्बनम् । अस्त्रोद्यमनमुद्दीपनम् । प्रतिज्ञानुभावः । अन्यनैरपेक्ष्यगम्यो गर्वः सञ्चारी ।

### काव्यप्रदीपः

'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते' ।

तत्प्रकृतिको रौद्रः । यथा—

**'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं**
**मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।**
**नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-**
**मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'**

## काव्यप्रकाशखण्डनम्

रौद्रमाह—

**कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं**
**मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।**
**नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-**
**मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ।।**

द्रोणे हतेऽश्वत्थाम्नो वचनं वेणीसंहारेऽर्जुनं प्रति—गुरोःपातकमेव गुरुपातकं तस्य कर्तर्यनुमन्तरि अनिराकर्त्तरि दण्डः समुचित इति क्रमेणाऽऽह—कृतमित्यादि । अयमहमनन्यसहायः, नरकरिपुणा कृष्णेन, क्रोधात् क्रमं विस्मृत्य प्रागनुमन्तुरुपादानम् । अत्रापकारिणोऽर्जुनादय आलम्बनम्, अस्त्रोद्यमनमुद्दीपनम्, रोदनमनुभावः, अन्यनैरपेक्ष्यगम्यगर्वः सञ्चारी ।

## आदर्शः

रौद्रमाह—कृतमिति । स्वेच्छामृतद्रोणशिरश्छेदक्रुद्धस्याश्वत्थाम्नोऽर्ज्जुनं सम्बोध्य उक्तिरियम् । इदं स्वेच्छामृतमत्पितृशिरश्छेदरूपं गुरु पातकं यैरुद्गतायुधैः मर्य्यादाशून्यैः अत एव मनुपशुभिः भवद्भिरर्ज्जुनाद्यैः कृतम् अनुमतं दृष्टं वा, नरकासुरस्य रिपुणा कृष्णेन सहितानां भीमकिरीटिसहितानाञ्च तेषाम् असृङ्मेदोमांसैः अयमहं दिशां दिक्स्थितभूतानां बलिं करोमीत्यर्थः । किरीटी अर्जुनः, मेदः तैलम् । उदायुधानामीदृशाकार्य्यकरणानौचित्यान्मनुजपशुत्वाद्युक्तम् । तदुपपानार्थम् उदायुधैरिति, अत एव निर्मर्य्यादैरिति । नरकरिपुपदश्लेषात् पातकरिपुत्वमपि सूचितम्. तेन पातककारिणः पातकरिपूंश्च हनिष्यामीत्यतो मत्क्रोधाज्जगदेव नङ्क्ष्यतीति भावः । अयमहमिति एतत्क्षणवर्ती अहमित्यर्थः । अत्र अश्वत्थाम्नः क्रोधस्य अर्जुनाद्या आलम्बनानि तेषामकार्य्यम् उद्दीपनम् । तादृशं तर्जनम् अनुभावः । तर्जनव्यङ्ग्यो गर्वोऽमर्षश्च व्यभिचारी । क्रोधज्ञे सामाजिके रसोत्पत्तिः । न चात्र वीरो रस इति वाच्यम् असद्वीरत्वेन निन्दितेषु क्रोधस्यैवाविर्भावात् सद्वीर एवोत्साहात् ।

## सुधासागरः

रौद्रमुदाहरति—'प्रतिकूलेषू तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते । तत्प्रकृतिको रौद्रः । यथा कृतमित्यादि । हरिणी छन्दः । 'रसयुगहयैर्न्सौम्रो स्लौ गो यदा हरिणी तदा' इति लक्षणात् । वेणीसंवरणे द्रोणवधानन्तरं अर्जुनादीन् प्रति अश्वत्थाम्नः उक्तिरियम् । अयमर्थः । इदं गुरोर्द्रोणस्य वधरूपं पातकमेव गुरुपातकं महापातकम्, यैः अविवेकान्मनुजरूपैः पशुभिः उदायुधैरुद्यतास्त्रैरत एव निर्मर्यादैर्मर्यादाशून्यैर्भवद्भिरर्जुनादिभिः, पातकस्य कर्त्तरि अनुमन्तरि अनिराकर्त्तरि च दण्डो युक्त इति क्रमेणाह कृतं जनितमनुमतमनु जातं दृष्टमनिराकृतं वा तेषां बधकर्तृणां धृष्टद्युम्नादीनाम् नरकरिपुणा कृष्णेनाऽनुमन्त्रा सार्द्धमसृङ्मेदोमांसैः रुधिरवसापिशितैरयम् एतत्क्षणवर्ती अहमन-

न्यसहायः दिशां लक्षणया दिग्देवतानाम् बलिं तृप्तिहेतुकपश्वालम्भनं करोमि। पशुपदेन बलिदानयोग्यता व्यज्यते। कीदृशानां सभीमकिरीटिनाम् अनिराकर्तृभीमार्जुनसहितानाम्।

अत्र यद्यपि धृष्टद्युम्नस्य सम्बोधनं क्रमप्राप्तं तथापि महापातकित्वेनाऽग्राह्यनामकतया तमवज्ञाय पराक्रमयोग्यतया 'अरे रे अर्जुनाऽर्जुन सात्यके सात्यके' इति सम्बोध्योक्तिरियम्। अतएव सम्बोधनं व्युत्क्रम्य तेषामित्यनेन बुद्धिस्थतया क्रमप्राप्तधृष्टद्युम्नादयः परामृष्टाः। एवञ्च क्रोधात् क्रमविस्मरणमिति श्रीवत्सलाञ्छनभट्टाचार्यैः उक्तमनुसृतञ्च वैद्यनाथैः। न तु तद् युक्तम्। रौद्ररसेऽप्ययुक्तकारित्ववर्णनाऽनियमात्।

## विवरणम्

तत्र रौद्रमुदाहरति—कृतमित्यादि। अत्र शत्रव आलम्बनम्, तदीयं द्रोणवधादिकमुद्दीपनम् उद्धतवचनमुखरागादयोऽनुभावाः, गर्वादयो व्यभिचारिणः, उत्साहोपबृंहितः क्रोधः स्थायी, स सुरतदन्तघातादिवच्चर्वणीयः।

**क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा**
**युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।**
**सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः**
**किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ ४० ॥**

---

### सङ्केतः

क्षुद्रा इति । विजहित इति— जहातेः पञ्चमी परस्मैपदमध्यमबहुवचने 'हाकः' इति आकारस्य इत्वम् । सौमित्रे ! इति मातृतनयत्वेन अवीरत्वं ख्याप्यते । वीरत्वादिर्हि पितुर्धर्मः, कौलीन्यादिकं च मातुरिति । मेघनादः इति । अत्र मेघनादे वक्तरि मेघनादः इत्यनुपयुज्यमानत्वात् बाधितस्वार्थः स्ववाच्यभूतार्थगामित्वरूपात् सम्बन्धात् इन्द्रजेतृत्वस्वर्गपुर्यवस्कन्ददातृत्वाद्यार्थान्तरं लक्षयत् अनन्यसामान्यविक्रमादिकं ध्वनयति । इयं शुद्धा सारोपा लक्षणा, सादृश्यव्यतिरिक्तसम्बन्धान्तरजत्वात्; अरोप्यस्य मेघनादशब्दस्य, आरोपविषयस्य अहंशब्दाभिधेयस्य च उक्तत्वात् । अत्र मेघनादरूपं वाच्यं स्वपरत्वेन अनुपात्तम्, व्यङ्ग्यार्थान्तरपरिणतत्वात् । तस्मात् अविवक्षितमेव वाच्यं, नात्यन्ततिरस्कृतम् । व्यङ्ग्यार्थाधारेण तस्याप्युपयुक्तत्वात् । यदि वा—शुद्धसाध्यवसानाऽपि लक्षणा स्यात् । तथाहि—अत्र आरोपविषयः शक्रजेतृत्वादिरर्थः आरोप्येण मेघनादार्थेन विषयिणा निगीर्णः इति । एतच्च व्याख्यानं युक्तमिव भाति । यतः—यत्र लक्ष्यलक्षणयोः विषयविषयिभावेन ताटस्थ्यं स्यात् तत्र सारोपत्वम् । पूर्वव्याख्याने तु—न हि मेघनादेन अहंभावो लक्ष्यते, किन्तु शक्रजेतृत्वादि इति । अर्थान्तरं च लक्ष्यं कार्य, यत्र वाच्यं परिणम्यते, न पुनर्व्यङ्ग्यम् । किञ्चित्संरम्भया लीलया क्रीडया बद्धाब्धिं, रमते—क्रीडति इति व्युत्पत्त्या अन्वितनामानं रामं अन्वेषयामि इति ।

### सङ्केतः (रुय्यकः)

क्षुद्रा इत्यादि । अत्र वीररसे मेघनादगत उत्साहः स्थायिभावः, तत्र रामभद्र आलम्बनम्, जलनिधिनियमनमुद्दीपनं, वानरलक्ष्मणत्यागेन रामान्वेषणमनुभावः, तदाक्षिप्ता धृतिगर्वौत्सुक्यादयो व्यभिचारिणः । एभिरत्र वीररसाभिव्यक्तिः ।

### बालचित्तानुरञ्जनी

क्षुद्राः संत्रासमिति । इन्द्रजितो वचनम् । हे क्षुद्राः कपटाः, भयं परित्यजत । चूर्णितेन्द्रगजकुम्भाः एते ममामी बाणाः युष्मद्देहेषु निष्पतन्तः परां लज्जां दधति । हे सौमित्रे लक्ष्मण तिष्ठ । त्वमपि कोपानां पात्रं न हि । अहं मेघनादः इन्द्रजित् । ननु किञ्चित् भ्रूभङ्गविलासेनैव निवारितसमुद्रं रामचन्द्रमन्वेषयामि । अत्र प्रतिनायको विभावः । धैर्याद्यनुभावचिन्तादिर्व्यभिचारी, उत्साहस्थायिभावो वीरो रसः ।

## काव्यादर्शः

उत्साहोऽत्र व्यभिचारी, क्रोधस्य प्राधान्येन रसनीयत्वात् । अस्य चोद्रिक्तं हन्तृत्वम् । येषां उद्धतास्तद्वेषधारिणो ये नटास्ते प्रकृतिश्चर्वणोदयहेतुः । भीमादयो हि स्वभावक्रोधनत्वाद् उद्धताः, तदनुकारिणि नटे रौद्र आस्वाद्य इति तेऽस्य प्रकृतिः । प्रतिनायकगतनयविनयाध्यवसायप्रतापविक्रमाधिक्षेपादिविभावः स्थैर्यगाम्भीर्यत्यागाद्यनुभावः स्मृत्यौग्र्यधृतिगर्वामर्षादिव्यभिचारी उत्साहः स्थायी धर्मदानयुद्धभेदात् त्रिधा वीरः । यन्मुनिः—

**दानवीरं धर्मवीरं युद्धवीरं तथैव च ।**
**रसै वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥**

रौद्रममता[?र्ष] प्राधान्याद् अनुचितयुद्धाद्यपि इति मोहविस्मयप्राधान्यम् । इह च पत्यङ्कनिमग्तां स्वल्पसंतोषं चापास्य यस्तत्त्वनिश्चयरूपोऽसंमोहाध्यवसायः । स एवोत्साहहेतुरिति भेदः ।

## विवेकः

क्षुद्रा इति । सुमित्रातनयत्वेन व्यपदेशो वीरत्वनिरासाय, नन्वित्यभिमुखीकरणं निश्चयाय अहं मेघनाद इति प्रसिद्धवीरगुणत्वं तदिहाहमेवंविध इत्येवंप्रमाणाः कोऽप्युत्साहः स्थायिभावः, तत्र रामभद्र आलम्बनविभावः, जलनिधिनियमनमुद्दीपनविभावः, वानरलक्ष्मणपरित्यागेन रामान्वेषणमनुभावः, तदाक्षिप्ता धृतिगर्वौत्सुक्यादयो व्यभिचारिणः । एभिरत्र वीररसाभिव्यक्तिः' (रु. सं. २७) । अथ कृष्णवर्णः । कालाधिदैवतो भयस्थायिभावो भयानकः ।

## दीपिका

अत्र रक्ताङ्गनेत्रता युद्धवीरभेदिनी । क्षुद्रा इति-परं लज्जां दधति, अतादृक्कार्यनिष्पत्त्या लज्जिता इव कृतकार्या अपि न मामानन्दयन्तीत्यर्थः ।

## साहित्यचूडामणिः

क्षुद्रा इति । अत्र मेघनादसम्बन्धिन उत्साहस्य परिपोषाद् वीरो रसः ।

## सम्प्रदायप्रकीशिनी

वीरमुदाहरति—क्षुद्रा इति । किञ्चिदित्यन्वेषणक्रियाविशेषणम् ।

## मधुमती

क्षुद्राः इति । श्रीरामः आलम्बनम् । जलधिनियमनादि उद्दीपनम् । वानरादिपरित्यागेन रामान्वेषणं अनुभावः । हर्षादयः व्यभिचारिणः ।

## विस्तारिका

वीरमाह—क्षुद्रा इति । मेघनादोक्तिरियम् । दर्शनमात्रेण पलायनत्वादेते क्षुद्रा इत्यात्मनः परामर्शः । अरे इत्यादिना सम्बोधनासम्भवात् । उच्चैराह—अरे हरयो वानरा मनसः शङ्कां विजहत । अमी मदीयाः सायका युस्मद्देहेषु निष्पतन्तो लज्जां दधति, लज्जया युस्मच्छरीरेषु न पतिष्यन्ति । दीर्घनिद्रां प्रापयन्तीति सायकाः, न तु बाणाः । हेतुमाहक्षुण्णेत्यादि । शक्रेणारुढ इभः, तस्यापि रक्षणाक्षमत्वम् । सौमित्र इति । मातृसम्बन्धोल्लेखेन निर्वीर्यत्वम् । रुषामिति गुरुत्वाद् बहुवचनम् । आत्मानं परिचाययति मेघनादः, न तु शक्रजित्, तस्याप्यनुत्कर्षकत्वात् । अन्वेषयामि, न त्वन्विष्यामि । किञ्चित् संरम्भो यथाकथञ्चित् क्रोधः । स एव लीला क्रीडा तथा नियमितो बद्धः, अथ चाज्ञावशीकृतः ।

अत्र राम आलम्बनम् । तत्समुद्रबन्धनमुद्दीपनम्, नीचेषूपेक्षणं रामं प्रति च स्पर्धानुभावौ । ऐरावतकुम्भचूर्णनस्मरणम्, लज्जां दधतीति गम्यगर्वश्च सञ्चारिणौ ।

अथ विभावादिसाम्ये वीररौद्रयोर्न भेदः । न च स्थायिभेद एव भेदकः, तस्यापि नियामकमुखप्रेक्षिततत्वात् । मैवम्; विवेचकत्वतदभावयोरेव वैधर्म्यात् पूर्वत्र क्षुद्रान् विहाय राममात्रान्वेषणेन विवेचनस्य परत्रानिराकर्त्रनुमन्तृकर्तृणां क्रोधविषयत्वतारतम्यलब्धक्रमोपन्यासमपहाय व्युत्क्रमोपन्यासेनाविवेकस्य स्फुटत्वात् क्रोधेनैव क्रमविस्मृतेरिति ।

यत्तु 'रक्तास्यनेत्रता रौद्रे युद्धवीरात्तु भेदिनि' इत्याहुः, तन्न; क्रोधसञ्चारिणि वीरे तस्याः सुलभत्वेन भेदकत्वानुपपत्तेः ।

ननु 'स च दानधर्मयुद्धैर्दयया च समन्वितः । चतुर्धा स्यात् इत्युक्तदिशा वीरस्य चतुर्विधत्वसम्भवे कथं युद्धमात्रोदाहरणम्? तत्र दानवीरो भार्गवः । यथा—'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः" इत्यत्र । धर्मवीरो युधिष्ठिरः । यथा—

> **राज्यं वसु च देहश्च भार्यामातृसुताश्च ये ।**
> **यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ॥** इति ।

दयावीरो जीमूतवाहनो यथा—

> **शिरामुखैः स्यन्दन एव रक्तमद्यापि देहे मम मांसमस्ति ।**
> **तृप्तिं न पश्यामि तवापि तावत किं भक्षणात् त्वं विरतो गरुत्मन् ॥**

इत्येतेषु दानधर्मदयाविषयोत्साहोद्बोधाद् वीरत्वमेवेति चेदुच्यते, एषु लोकातिक्रान्तदानादिभिर्विस्मयस्योद्बोधनादद्भुतस्यैव रसत्वात् । न चात्र द्वित्रादिपदानुपादानान्न तथा । वस्तुतो लोकातिगत्वस्य तज्ज्ञाप्यत्वात्, न तु तत्कार्यत्वात्, । अन्यतस्तदुपपत्तौ तदुपादानवैयर्थ्यात् । न च युद्धवीरेऽप्येवं सुवचमिति वाच्यम्; शत्रुविजयस्य सर्वत्र दृष्टचरत्वेन लोकानतिक्रमणात् । विशिष्यवर्णने तु वारयितुमशक्यत्वात् । यथा कथञ्चिद् दानादिवर्णने 'शाखेयं गृहमेधिनां वनितयां भिक्षुः कृतार्थीकृतः' इत्यादौ तेषामपि वीरत्वानङ्गीकारात् ।

ननु करुणस्य कथं रसत्वम्? दुःखहेतुशोकप्रकृतिकत्वादिति चेन्न; अलौकिकसामाजिकनिष्ठशोकाख्य-वासनायाः सुखरूपत्वेनैव सिद्धत्वात्। एतेन दुःखहेतुभ्यो मरणादिज्ञानेभ्यः कथं सुखोद्बोध इति निरस्तम्, लोक एव तेषां दुःखहेतुत्वात्। काव्ये नाट्ये तु सुरते दन्ताघातादिभ्य इव तेभ्य एव सुखोद्बोधात्। अन्यथा करुणरस-प्रधाने रामायणादौ सर्वेषामप्रवृत्तिप्रसङ्गात्। बलवद्द्वेषविषयदुःखहेतावपि द्वेषप्रसङ्गात्। दुःखायार्थव्ययापत्तेः। एवं बीभत्स-भयानकयोरप्यवधेयम्।

## सारबोधिनी

वीरमाह क्षुद्रा इति। एत इति। एत इत्येवं संबोधनासंभवात्। एते यूयं विजहितेत्यन्वयः सौमित्रेति। मातृसंबन्धोल्लेखनेन निवार्यत्वं ख्याप्यते। अत्र राम आलम्बनम्। जलधिनियमनमुद्दीपनम्। नीचेषूपलक्षणम्। रामं प्रति स्पर्धा चानुभावः। ऐरावतकुम्भचूर्णनस्मृतिः 'लज्जां दधती' तिगम्योगर्वश्च सञ्चारिणौ। अथ विभावादि-साम्ये वीररौद्रयोर्न भेदः। न च स्थायिभेद एव भेदकः, तस्यापि नियामकमुखप्रेक्षित्वात्। मैवम्। विवेचकत्वतद-भावाभ्यामेव वैधर्म्यात्। इह क्षुद्रान् विहाय राममात्रान्वेषणविवेचनस्य, रौद्रे चानिराकर्तृ—अनुमन्तृगतक्रोधविषयस्य तारतम्यलब्धक्रमोपन्यासमपहाय व्युत्क्रमोपन्यासेनाविवेचनस्य स्फुटत्वात्। क्रोधेनैव क्रमविस्मृतेरिति। यत्तु, 'रक्तास्यनेत्रता रौद्रे युद्धवीरात्तु भेदिनीत्याहुः' तन्न, क्रोधसञ्चारिणि वीरेऽपि तस्याः सुलभत्वेन भेदकत्वानुपपत्तेः। स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यादिति दिशा तेऽप्युदाहार्याः तत्र दानवीरो भार्गवो यथा—

**त्यागः सप्तसमुद्रिमुद्रितमहीनिर्व्याजदानावधिः।**

धर्मवीरो यथा

**'राज्यं वसु च देहश्च भार्याभ्रातृसुताश्च ये।**
**यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम्॥**

दयावीरो जीमूतावाहनो यथा—

**'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति।**
**तृप्तिं न पश्यामि तवापि तावत् त्वं भक्षणात् किं विरतो गरुत्मन्॥**

इत्येतेषु दान-धर्म-दया विषयोत्साहोद्बोधाद्वीरत्वमेव।

## काव्यप्रदीपः

'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते'।

तत्प्रकृतिको वीरः। स च त्रिधा-युद्धवीरो दानवीरो दयावीरश्च। तत्राद्यो यथा—

**'क्षुद्राः संत्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भा**
**युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।**

**सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः**
**किंचित्संरम्भलीलानियमितजलधिं राममन्वेषयामि ॥'**

अपरावूहनीयौ ।

### काव्यप्रकाशखण्डनम्

वीरमाह—

**क्षुद्राः सन्त्रासमेते विजहत हरयो क्षुण्णशक्रेभकुम्भा**
**युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।**
**सौमित्रे ! तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः**
**किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥**

दूताङ्गदे पद्यम् । एत इत्येवं सम्बोधनासंभवात्, एते यूयं विजहतेत्यन्वयः । विजहितेत्यत्रेहल्यघोरितीत्वापवादो जहातेश्चेति पक्षे इकारः । युष्मपद्देहेषु पतन्तः सायका लज्जां दधतीति न तत्र पतिष्यन्तीति भावः । सौमित्रेति मातृसम्बन्धोल्लेखेन निर्वीर्यत्वं व्यज्यते । अत्र राम आलम्बनम्, जलनिधिनियमनमुद्दीपनम्, नीचेषू [प. १३.१] पेक्षणं रामं प्रति स्पर्द्धा चानुभावौ, ऐरावतकुम्भसंचूर्णनस्मृतिः, लज्जां दधतीति गम्यो गर्वश्च सञ्चारिणौ ।

### आदर्शः

युद्धवीरमुदाहरति—क्षुद्रा इति । हे दृश्यमानाल्पसामर्थ्यत्वेन एते इयन्तः क्षुद्रा हरयः, सन्त्रासं विजहित त्यजत यतो भिन्नशक्रेभकुम्भा अमी मम सायकाः मच्चापान्निष्पतन्तो युष्मद्देहेषु अर्थात् पतितुं लज्जां परं केवलं दधति, न तु पाताभिमुख्यं पौरुषं वा, युष्मद्देहेषु निष्पतन्त इति तु नार्थः निष्पतनस्य पतनरूपत्वाभावात् । सौमित्रे इति मातृसम्बन्धकीर्त्तनम् अवीरत्वख्यापनाय । मेघनादः प्रसिद्ध एतन्नाम्ना, रामन्तु किञ्चिदन्वेषयामि । तत्र हेतुमाह—भ्रूभङ्गेति, न तु सोऽपि सामस्त्येन ममान्वेषणपात्रमिति भावः । अत्र भ्रूभङ्गेत्यादिना रामस्य सद्वीरत्वकथनमुत्साहस्यैवानुभाव इति वीर एवात्र रसः, रामस्तदालम्बनम् । जलनिधिनियमनमुद्दीपनम् । तदन्वेषणमनुभावः । वानराद्युपेक्षाव्यङ्ग्यो गर्वो व्यभिचारी । उत्साहज्ञे सामाजिके रसोत्पत्तिः । दानधर्मदयावीराद्युदाहरणानि तु दानाद्यतिशयवर्णनश्लोका बोध्यानि ।

### सुधासागरः

'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते' । तत्प्रकृतिको वीरः । स च त्रिधा । युद्धवीरो दानवीरो दयावीरश्चेति प्रदीपकाराः ।

श्रीवत्सलाञ्छनभट्टाचार्यैस्तु दानवीरो भार्गवो यथा—'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः' । धर्मवीरो युधिष्ठिरो यथा—

**राज्यं वसु च देहश्च भार्या भ्रातृसुताश्च ये।**
**यच्च लोके ममायत्तं तद्धर्माय समुद्यतम्॥**

दयावीरो जीमूतवाहनो यथा—

**शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति।**
**तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन्॥**

इति वीरश्चतुर्द्धोदाहृतः।

वस्तुतस्तु युद्धविषयोत्साहप्रकृतिके वीरशब्दो रूढः। अन्यत्र प्रयोगो भाक्तः। उक्तञ्च प्राक्। हास्यादय एकैकप्रकारा इति वृत्तिकृद्भिः कटाक्षितमिति। तथा चैकविधं वीरमुदाहरति—क्षुद्रा इत्यादि। स्रग्धरा छन्दः। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात्। हनुमन्नाटके रावणपुत्रस्येन्द्रजित इयमुक्तिः। अयमर्थः। भोः जात्या पशुक्रमेण च क्षुद्राः नीचाः हरयो वानराः एते दृश्यमानदुरवस्थाः यूयमिति शेषः, सन्त्रासं विजहित त्यजतेति सम्बन्धः।

एते आगताः अर्थान्मयीति केचित्।

एते क्षुद्रा इति स्वज्ञानोल्लेख इति चक्रवर्त्तिनः।

एते इयन्त इति भास्करभट्टाचार्यः।

भयत्यागे हेतुमाह—क्षुण्णेत्यादि। यतः क्षुण्णश्चूर्णितः शक्ररूढस्येभस्यैरावणस्य कुम्भो यैस्तादृशाः, अमी सायकाः बाणाः, युष्मद्देहेषु निष्पतन्तः न तु पात्यमानाः परं लज्जां महाव्रीडां दधति धारयन्ति क्षुद्रकार्यकरणाल्लज्जिता इव न माम् आनन्दयन्तीत्यर्थः।

स्वलज्जाया एव बाणेषु समारोपात् लज्जाम् अर्थान्मदीयां दधति पुष्णन्तीति दीपिकाकाराः। तथा च देवात् बाणपातेऽपि मदनुद्देश्यत्वाद्भयं त्यजतेत्यर्थः।

चण्डीदासादयस्तु निष्पतन्तो मच्चापान्निर्गच्छन्तो युष्मद्देहेषु अर्थात्पतितुं परं लज्जां दधति न तु पाताभिमुख्यं पौरुषं वत्यर्थः। न च निष्पतन्त इत्यस्य पतन्त इत्यर्थः, निष्पतनस्य पतनरूपत्वाभावादित्याहुः।

मिश्रादयस्तु हे हरयः इति विशिष्य हनुमदादीन् सम्बोध्य युष्मदित्यादिवाक्यम्। क्षुद्रमात्रसम्बोधने च पूर्ववाक्यमिति योजयन्ति।

लक्ष्मण प्रत्याह—सौमित्रे इति। सुमित्रायाः पुत्र त्वं तिष्ठ युद्धोद्यमाद् विरमेत्यर्थः। हेतुमाह पात्रमित्यादि। हि यस्मात्त्वं रुषां क्रोधानां पात्रं विषयोनाऽसि न भवसि। तर्हि किमथमुद्यमस्तत्राह—नन्वहमित्यादि। अहं मेघनादः प्रसिद्धनामा नत्विन्द्रजित्, तत्त्वस्याप्यनुत्कर्षकत्वात्। राममन्वेषयामि मार्गयामि कीदृक्परा क्रमशील इति हेतुगर्भं विशेषणमाह—किञ्चिदिति। किञ्चित्संरम्भः ईषत् क्रोधः स एव लीला तया नियमितो बद्धो जलधिर्येन तथाभूतम्। किञ्चिद्भ्रूभङ्गति सुगमः पाठः।

किञ्चिदित्यन्वेषणक्रियाविशेषणम्, तेन सोऽपि न तादृगन्वेषणपात्रमिति केचित्।

अन्ये तु सेनाग्रवर्तिनो रामस्यान्वेषणानुपपत्तेः राममनुलक्षीकृत्य एषोऽहं यामीत्यर्थमाहुः ।

गर्वातिशयाद्, विकत्थनमेतदित्यन्ये ।

अत्र सौमित्रे इति मातृसम्बन्धोत्कीर्त्तनान्निर्वीर्यत्वं ध्वन्यते । रुषामिति बहुवचनेन तदतिशयः प्रकाश्यते ।

अत्र राम आलम्बनम् । जलधिनियमनमुद्दीपनम् । नीचेषूपेक्षणं रामं प्रति स्पर्धा चानुभावौ । ऐरावतकुम्भचूर्णनं स्मृतिः । लज्जां दधतीति गम्यगर्वश्च सञ्चारिणौ ।

अथ विभावादिसाम्ये वीररौद्रयोर्न भेदः । न च स्थायिभेद एव भेदकस्तस्याऽपि नियामकमुखप्रेक्षित्वात् । मैवम् । विवेचकत्वाऽविवेचकत्वाभ्यामेव वैधर्म्यात् । इह क्षुद्रान् विहाय राममात्रान्वेषणविवेचनस्य रौद्रे चाऽनिराकर्तृगतक्रोधविषयत्वतारतम्यलब्धक्रमोपन्यासमहाय व्युत्क्रमोपन्यासेनाविवेचनस्य स्फुटत्वात् इति श्रीवत्सलाञ्छनादयः ।

वस्तुतस्तु 'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते' इत्युक्तम् । तैक्ष्ण्यव्यञ्जकानि चासृङ्मेदोमांसादिपदानि तान्येव रौद्रनिर्णायकानीति स्पष्टमेव सुधियाम् ।

## विवरणम्

वीरमुदाहरति—क्षुद्राः सन्त्रासमित्यादि । अत्र रामेण सह रण आलम्बनम्, त्वयः प्रभावातिशय उद्दीपनम्, रणान्तरायनिवारणरामान्वेषणादिरनुभावः, गर्वौत्सुक्यादिर्व्यभिचारी, रामेण सह रणः कर्तव्य एवेत्यध्यवसायः स्थायीति ।

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
**पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।**
**दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ।। ४१ ।।**

---

### सङ्केतः

अनुपपति पृष्ठानुपातिनि स्यन्दने रथे ।

### संङ्केतः (रुय्यकः)

ग्रीवाभङ्गेत्यादि । अत्र भयानकरसे मृगगतभयं स्थायिभावः, दुष्यन्ताधिष्ठितः स्पन्दन आलम्बनम्, तदीयमनुपतनं शरपतनोन्मुखत्वञ्चोद्दीपनम्, सग्रीवाभङ्ग दृष्टिपातादयश्चेष्टाविशेषाः समग्रलोकव्यापिनोऽनुभावाः, तदाक्षिप्ताश्च व्यभिचारिणः शंकात्रासश्रमादयः । एषामत्र भयानकरसव्यञ्जकत्वम् ।

### बालचित्तानुरञ्जनी

भयानकरसमुदाहरति ग्रीवेति । दुष्यन्तवचनम् । अयं मृगः पश्चाद्गच्छति [अनुपतति पश्चाद्गच्छति धावति वा] रथे कण्ठस्य चक्रोकरणमनोहरं यथा तथा मुहुर्दत्तदृष्टिः सन् बाणपतनभयात् स्थूलेन पृष्ठभागेन । अर्द्धे चेत्यनेन पश्चादेशः । शरीरस्य पूर्वभागं प्रविष्टः । अर्धभक्षितैः श्रमेण विततमुखाद्भ्रंशिभिः बालतृणैर्विक्षिप्तमार्गः एवं विधः सन् अधिकलङ्घनत्वात् आकाशे बहुतरं प्रयाति । भूम्यां स्वल्पं प्रयाति । पश्य ! अत्र विकृतस्वरश्रवणादिर्विभावः मुहुश्चञ्चलविलोचनाद्यनुभावः शङ्कादिर्व्यभिचारो भयस्थायिभावो भयानको रसः ।

### काव्यादर्शः

प्रेतादिविकृतस्वरश्रवणतदवलोकनस्वजनबान्धववधादिदर्शनशून्यगृहारण्यादिविभावं चलद्दृष्टिकरकम्पहृतपादस्पन्दकण्ठौष्ठशुष्कताद्यनुभावं शङ्कापस्मारत्रासादिव्यभिचारि भयं स्थायिभावो भयानकः ।

### विवेकः

ग्रीवेत्यदि 'अत्र मृगगतभयं स्थायिभावः दुष्यन्ताधिष्ठितस्यन्दन आलम्बनविभावः, तदीयमनुपतनं शरपतनोन्मुखत्वञ्चोद्दीपनविभावः, ग्रीवाभङ्गादृष्टिपातादयश्चेष्टाविशेषाः समग्रश्लोकव्यापिनोऽनुभावाः, तदाक्षिप्ताश्च व्यभिचारिणः शङ्कात्रासश्रमादयः । एषामत्र भयानकरसाभिव्यञ्जकत्वम्' (रु.सं. २५ पृ.) अथ नीलवर्णो महाकालाधिदैवतो जुगुप्सास्थायिभावो बीभत्सः ।

## दीपिका

ग्रीवेति-मृगानुसारिणो राज्ञ उक्तिः। पश्चार्द्धं निपातः।

## साहित्यचूडामणिः

ग्रीवेति। अनुपाततीति अनुढौकमाने रथे अत्र कृष्णसारवर्तिनो भयस्य स्वभावोक्त्यादिना परिपोषाद् भयानको रसः।

## सम्प्रदायप्रकाशिनी

भयानकमुदाहरति—ग्रीवाभङ्गेति।

## मधुमती

ग्रीवाभङ्गेति। अत्र स्यन्दनं आलम्बनम्। शरपतनोन्मुखत्वं उद्दीपनम्। ग्रीवाभङ्गादयः अनुभावाः। शङ्कात्रासादयः व्यभिचारिणः। भयात् इत्यत्र भयशब्दः त्रासवाची। अत्र विवृतमुखत्वं पूर्वकायप्रवेशश्चनिमित्तान्तरतोऽपि भवतीति झटित्यप्रतीत्या चमत्कारनुपपत्त्यापत्तेः व्यभिचारिणेरपि त्रासश्रमयोः स्वशब्देनाभिधानम्—

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया" इत्यादाविवेति ज्ञेयम्।

## विस्तारिका

भयानकमाह—ग्रीवेत्यादि। गम्यदेशवैषम्यावैषम्यनिरूपणाय कादाचित्कविवर्तनेन रथदर्शनविच्छेदः तदाह—मुहुरिति। पश्चादर्धं पश्चार्धमिति निपाततः। भूयसा स्थूलेन प्रविष्ट प्रवेष्टुमारब्धः। आदिकर्मणि निष्ठा। कृशे स्थूलप्रदेशस्यागणनं भयमेव पुष्णाति। नृपाद् भयमेव रसप्रकृतिः, न शरपतनादिति। तदभयस्य स्वशब्दोपादानेन दोषः। अत एव तत्त्राणाय पश्चार्धसंवरणम् तत्र राजाऽवलम्बनम्, अनुसरणमुद्दीपनम्, पलायनमनुभावः, श्रमः सञ्चारी।

## सारबोधिनी

भयमुदाहरति ग्रीवेत्यादि। गम्यदेशवैषम्यावैषम्यनिरूपणाय कदाचित्कविवर्तनं न रथदर्शनविच्छेदादाह मुहुरिति। भूयसेति। भूयसा लघुनि गोपनं न संभवतीत्यपि न गणयतीति भावः। ततो भयपोषणम्। स्यन्दनाद्भयमेव रसप्रकृतिर्नशरपतनादिति तद्भयस्य शब्दोपादानेऽपि न दोषः। श्रमविवृतेति। अत्र स्यन्दनमालम्बनम्। अनुसरणमुद्दीपनम्। पलायनमनुभावः। श्रमः सञ्चारी।

## काव्यप्रदीपः

तत्प्रकृतिको भयानकः।

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'

## काव्यप्रकाशखण्डनम्

भयानकमाह—

ग्रीवाभङ्गामिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतित्वाद् वियति बहुतरं स्तोकमुर्व्या प्रयाति।

अभिज्ञानशाकुन्तले प्रथमाङ्के पद्यम्। गम्यदेशवैषम्यावैषम्यनिरूपणाय कादाचित्कविवर्त्तनेन रथदर्शन-विच्छेदादाह—मुहुरिति। भूयसेति भूयसो लघुनिगोपनं न संभवतीत्यपि न गणयतीत्यर्थः। ततो भयपोषणं स्यन्दनात् भयमेव रसप्रकृतिः, तेन शरपतनादिति तद्भयस्य शब्दोपादानेऽपि न दोषः। श्रमविवृतेति दैवाद् भ्रश्यति, नादानं न वा विसर्गः। अत्र स्यन्दनमालम्बनम्, अनुसरणमुद्दीपनम्, पलायनमनुभावः, श्रमः सञ्चारी।

## आदर्शः

भयानकमाह—ग्रीवेति। मृगहननाय धावितरथस्य मृगक्रियां दर्शयतो दुष्मन्तस्य सारथिं प्रत्युक्तिरि-यम्। प्रकरणलभ्य एष मृग उदयग्रप्लुतत्वात् प्रौढौत् फालत्वाद् वियति बहुतरं प्रयाति उर्व्यां स्तोकम्, एतत् पश्येत्यर्थः। मृगः कीदृशः? अनुपतति पश्चाद्धावति स्यन्दने ग्रीवाभङ्गेणाभिरामं यथा स्यात् तथा मुहुर्द्दत्तदृष्टिः, तथा शरपतनभयात् शरपतन(परि)जिहीर्षातो भूयसा महता पश्चार्द्धेन पूर्वकायं प्रविष्टः कुञ्चिताङ्ग इत्यर्थः। भयपदन्तु नात्र भौतिपरम्, तस्या अत्र स्थायिभावत्वेन शब्दवाच्यत्वे रसत्वानाप्तेः। पश्चार्द्धेनेत्यत्र पृपोदरादित्वात्, 'त' लोपः। तथा श्रमविवृतात् मुखाद् भ्रंशिभिः अर्द्धावलीढैः शष्पैः कीर्णवत्मो। अत्र मृगनिष्ठस्य भयस्य दुष्मन्त आलम्बनम्। शरपात उद्दीपनम्। सर्वा मृगक्रिया अनुभावाः। वाच्यः श्रमो व्यभिचारी। भयज्ञे सामाजिके रसोत्पत्तिः।

## सुधासागरः

'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्' तत्प्रकृतिको भयानकः। यथा—ग्रीवाभङ्गेत्यादि। स्रग्धरा छन्दः। लक्षणमुक्तम्। शाकुन्तले मृगहननाय धावितरथस्य दुष्यन्तस्य राज्ञः सूतं प्रति 'अयं पुनरिदानीमपि' इत्युपक्रम्योक्तिरियम्। पश्येत्यस्य वाक्यार्थः कर्म। स च इदानीमप्यथ्यं पुरो दृश्यमानो मृगः पुनरुदग्रप्लुतत्वादु-त्कटोत्फालत्वाद्वियत्याकाशे बहुतरमधिकतरं प्रयाति उर्व्यां स्तोकमल्पं प्रयाति। किम्भूतः अनु पश्चात्पतति धावति स्यन्दने रथे ग्रीवाया भङ्गेन वक्रीभावेनाभिरामं यथा स्यात् तथा। मुहुर्वारंवारं गम्यदेशदर्शनेन विच्छेदात् बद्धदृष्टि-र्दत्तदृष्टिः। शरपतनभयाद् भूयसा स्थूलेन पश्चार्द्धेनापरार्धेन 'अपरस्यार्द्धे पश्चभावो वक्तव्यः' इति वार्तिकानुसा-रात्। पूर्वकार्यं प्रविष्टः प्रवेष्टुमारब्धः। आदिकर्मणि क्तः। स्थूलस्य कृशे कथं प्रवेश इत्यप्रतिसन्धानाद् भयातिशयसूचनम्। तथा अर्द्धावलीढैरर्द्धभक्षितैः श्रमेण विवृतात्प्रसारितान्मुखाद् भ्रंशिभिः पतद्भिर्दैवान्नतु

पातितैः, कीर्णं व्याप्तं वर्त्म मार्गो यस्य तथाभूत इति । वियति राज्ञः स्वाभ्याभावाद् बहुतरं भूमौ तत्सत्त्वात् स्तोकमिति केचित् कल्पयन्ति ।

अत्र स्यदनाद् भयमेव रसप्रकृतिर्न शरपरतनादिति तद्भयस्य शब्दोपादानेऽपि न दोषः । स्यन्दनः आलम्बनम् । अनुपतनमुद्दीपनम् । पलायनमनुभावः । श्रमः सञ्चारीति बोध्यम् ।

## विवरणम्

यद्यपि भयं नाम दुःखसाधनत्वेन दुःखाभेदेन वा द्विष्टस्य वस्तुनो दर्शनम् । तच्च नास्वाद्यम्, न वा कुत्रापि प्रबन्धे मुखसन्धिमारभ्य निर्वहणपर्यन्तमनुवर्तते । करुणस्तु महाभारते स्त्रीपर्वणि, रौद्रो वेणीसंहारे सर्वानेव सन्धीन् व्याप्नोति, न च तथा भयमिति कथं रसप्रकृतिः, तथापि गुरुदैवतपित्रादिविषयो बहुमानः स्वावधिकोत्कर्षवत्तया ज्ञानं वासनारूपेण परिणतं भयमिति व्यपदिश्यतेः । यदाह सङ्गीतरत्नाकरे शाङ्र्गदेवः—

**वास्तवं कृत्रिमं चेति भयं द्वेधा निगद्यते ।**
**स्त्रीणां च नीचप्रकृतेः, पुंसः स्याद् वास्तवं भयम् ।।**
**मध्यमे चोत्तमे पुंसि कृत्रिमं तदुदाहृतम् ।**
**स्वभावादभयौ तौ हि स्वामिनं च गुरुं प्रति ।।**
**भयं विनयबोधाय दर्शयेतामतात्त्विकम् ।**
**नीचत्वाभावबोधाय तत् कार्यं मृदुचेष्टितैः ।।** इति ।

विनयबोधायेति भयानुभावैरभिव्यञ्जितो बहुमान एव विनय इत्युच्यते । तथाविधविनयध्वननाय नटो मृदुचेष्टितं भयानुभावमभिनयेदिति शिक्षेयम् । स विनयो रामादिचरितेषु सर्वसन्धिव्यापी दृश्यते, स एव रसप्रकृतिः । यथा—

**दधदपिहितपक्ष्म प्रेक्षणं बाहुमूल-**
**प्रणिहितमृदुसाचिग्रीवमास्यारविन्दम् ।**
**जनकपतिपुरस्तादास्त हस्तावसक्त-**
**प्रतिसरगणनैकव्यापृतो रामभद्रः ।।** इति ।

अत्र मङ्गलप्रतिसरशून्यगणनेन, चक्षुषा मुकुलितेन, सङ्कुलितेन, सङ्कुचता दोर्मूलेन, तत्र भुग्नविन्यस्तेनाननेन चानुभावैः, व्रीडाऽवहित्थादिभिर्व्यभिचारिभिश्चाभिव्यञ्जितो रसत्वमापद्यते, विदेहराजालम्बितो रामविनयः । ग्रीवा-भङ्गेत्यादिकन्तु वास्तवभयप्रकृतिकस्य भावस्यैवोदाहरणं दिवप्रदर्शनायेति ध्येयम् ।

प्रवृत्त्यजनकं ज्ञानमुपेक्षाबुद्धिः । सा चेष्टसाधनस्यापि बलवदनिष्टसाधनत्वावगाहिनी द्वेषद्वारा निवृत्तिं भावयन्ती शमसुखं जनयति । सैव वासनारूपेण परिणता बीभत्सप्रकृतिजुगुप्सेत्युच्यते । सैव शुद्धबीभत्सरसस्य प्रकृतिः । यथा—

**लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।**
**मांसास्थिकूटं जघनं जनः कामग्रहातुरः ।।** इति ।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्यग्रपूतीनि जग्ध्वा।
आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ४२ ॥

---

### सङ्केतः

उत्कृत्येति। अथ इति सामस्त्ये चार्थे वा।स्थपुटगतं विषमस्थानस्थमपि।

### सङ्केतः (रुय्यकः)

उत्कृत्येति। अत्र बीभत्सरसोदाहरणे जुगुप्सा स्थायिभावः। सा च जुगुप्समानाधिष्ठाना। तद्गतां हि जगुप्सां भीतित्वेनालम्ब्य सहृदयाः साधारण्येन चर्वयन्ति। स च जुगुप्समानोऽत्रानिर्दिष्टोऽपि हास्यरसन्यायेन विभावसामर्थ्यादाक्षिप्यते। तत्र प्रबन्धे कल्प्यमानं श्मशानमालम्बनविभावः, प्रेतकर्तृकं शवनिष्ठं कृत्युत्कर्त्तनादि समस्तश्लोकगतमुद्दीपनविभावः, तदाक्षिप्ताश्चानुभावा मुखविक्रूणननिष्ठीवनादयः, व्यभिचारिणश्च ग्लानिमोह-व्याधिप्रभृतयः। एभिरत्र बीभत्सरसः प्रकाश्यते।

### बालचित्तानुरञ्जनी

बीभत्समुदाहरति उत्कृत्योत्कृत्येति। श्मशानवर्णनम्। प्रेतानां मध्ये दरिद्रः करङ्कानश्वान् चर्म प्रथमं छित्वा छित्वा पश्चात् पृथूत्सेधेन तेनाधिकानि अंसं गुदप्रदेशः पृष्टपिण्डाद्यवयवप्रदेशेषु सुललानि अतिदुर्गन्धीनि मांसानि भक्षयित्वा श्रान्तानि रक्ताद्यन्तनेत्राणि येन, प्रकटितदन्तः एवं विधः सन् उत्सङ्गस्थितान् शवान् अस्थिषु लग्नं विषमस्थानगतमपि मांसम् अव्यग्रं यथा तथा भक्षयति। अत्राहृद्यदर्शनादिविभावः, नासाविघूर्णनाद्यनुभावः, अप-स्मारादिव्यभिचारी, जुगुप्सास्थायिभावो बीभत्सरसः।

### काव्यादर्शः

अहृद्यपूतिव्रणकीटादिदर्शनश्रवणविभावोऽङ्गसंकोचननासामुखवित्कूणनाच्छादननिष्ठीवनाद्यनुभावो-ऽपस्मारौग्र्यमोहगदादिव्यभिचारी जुगुप्सास्थायिभावो बीभत्सः।

### विवेकः

उत्कृत्येत्यादि। कृत्तिश्चर्म, पिण्डी जङ्घाया ऊर्ध्वभागः, आदिपदात् कक्षामूलं मांसलस्थानम्, उग्रपूती-न्युतकटसटित(?) गन्धानि, स्थपुटं निम्नोन्नतम्। 'अत्र' जुगुप्सा स्थायिभावः। सा च जुगुप्समानाधिष्ठाना। तद्गतां

हि जुगुप्सां भित्तित्वेनालम्ब्य सहृदयाः साधारण्येन चर्वयन्ति । स च जुगुप्समानोऽत्रानिर्दिष्टोऽपि हास्य रसन्यायेन विभावादिसामर्थ्यादाक्षिप्यते । तत्र प्रकरणे प्राधान्येन वर्ण्यमानं श्मशानमालम्बनविभावः, प्रेतकर्तृकं शवनिष्टं कृत्युतकर्तनादिसमस्तश्लोकगतमुद्दीपनविभावः, तदाक्षिप्ताश्चानुभावाः, अथ (मुख) विकूणननिष्ठीवनादयः, व्यभिचारिणश्च ग्लानिमोहव्याधिप्रभृतयः । एभिरत्र बीभत्सरसः प्रकाश्यते (रु. सं. २५. पृः) । अथ पीतवर्णो ब्रह्माधिदैवतो विस्मयस्थायिभावोऽद्भूतः ।

## दीपिका

उत्कृत्येत्यादि-उच्छोथ उच्छलता । पिण्डं जङ्घार्धविभागः । उग्रपूतीन्युत्कटदुर्गन्धानि । रङ्कश्चिरक्षुधितः । करङ्कोऽस्थिशेषं शिरः । स्थपुटो विकटगभीरभागः ।

## दर्पणः

उच्छाय उच्छूनता । पिण्डी जङ्घोर्ध्वभागः । रङ्कश्चिरदुर्ल्लभाहारः । करङ्कोऽस्थिशेषं शिरस्थपुटम्, विकटगर्तावभागः । एषां शृङ्गारादिरसानां यथासंख्यमिति शेषः ।

## साहित्यचूडामणिः

उत्कृत्येति । प्रेतरङ्कः पिशाचविशेषः शवशरीरात् । अन्तर्जुगुप्सायाः परिपोष इति बीभत्सरसत्वम् ।

## सम्प्रदायप्रकाशिनी

बीभत्समुदाहरति—उत्कृत्योत्कृत्येति । कृत्तिश्चर्म । उच्छोटः उपचयः । पिण्डी जानूरुप्रकोष्ठभुजान्तरप्रदेशः । स्नायूनि अस्थिबन्धनसिराः । प्रेतरङ्कः प्रेतशिशुः । करङ्कः शवः । स्थपुटं विषमकर्परादिसन्धिः ।

## मधुमती

उत्कृत्येति । स्थपुटं विषमम् । अव्यग्रं केवलम् । 'पीडाद्यवयवे'ति क्वचित् पाठः । स तु युक्तः । अत्र शवशरीरं आलम्बनम् । कृन्तनादिः उद्दीपनम् । मांसविकर्तनादयः अनुभावाः ।ग्लान्यादयः व्यभचारिणः ।

## विस्तारिका

बीभत्समाह—उत्कृत्येत्यादि । वीप्सया यावत् सम्भवस्तावद्विधिः । उत्कृत्योत्कृत्य कृति प्रथममत्ति । अथ अनन्तरम्, भूयांसि मांसानि जग्ध्वा क्रव्यमत्तीति सम्बन्धः । तेन क्त्वाप्रत्ययानामथशब्दस्य च नासङ्गतिः । उत्सेध उच्छूनता । उच्छ्रोथ इत्यपि पाठान्तरम् । भूयांसि प्रचुराणि स्फिगुरुमूलकटिसन्धिभागः । पिण्डी जङ्घार्धभागः । पिण्ड इति पाठे तदाकारत्वात् तथा । उग्रपूतीनि प्रसारितदुर्गन्धानि । आर्तो भीतः, बलवत्पिशाचाद् भयात् । अत एव सर्वदिक् प्रसारितनयनः । दैन्याद् दशनप्रकटनम् । रङ्को दरिद्रः, स्थपुटं नतोन्नतम् । तद्गगतक्रव्यादनेऽव्यग्रता । निखिलमांसभोजनादल्पमात्रावशेषात् ।

अत्र पूतिमांसमालम्बनम् । तत्र कृमिपातादय उद्दीपनानि । वदनविधूननिष्ठावनादयोऽनुभावाः, उद्वेगादयः सञ्चारिणः ।

## सारबोधिनी

बीभत्समुदाहरति उत्कृत्योत्कृत्येति । वीप्सायां यावत् संभवस्तावत् द्विविधः । प्रथमं कृत्तिं उत्कृत्योत्कृत्य मांसानि जग्ध्वा । अथ क्रव्यमव्यग्रमत्तीति संबन्धः । उत्सेध उच्छूनता । उच्छोप उच्छोद्य इत्यपि पाठान्तरम् । अर्थस्तु स एव । स्फिक् ऊरुमूलकटिसंधिभागः । पिण्डी जङ्घोर्ध्वभागः । पिण्ड इति पाठे तदाकारत्वात्तथा । स्थपुटं विषमगंभीरभागः । करङ्कस्याङ्कसंस्थात्वम् । बलवत्पिशाचान्तरशङ्कया । तत एव दृक्प्रेरणम् । दशनप्रकटनञ्च । अत्र शव आलम्बनम् । उत्कर्तनाद्युद्दीपनम् । नासाकुञ्चनादयोनुभावाः, उद्वेगादयः सञ्चारिणः ।

## काव्यप्रदीपः

'जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात्' ।

तत्प्रकृतिको बीभत्सः । यथा—

**'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-**
**न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।**
**आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-**
**दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'**

स्थपुटं निम्नं विषमम् ।

## काव्यप्रकाशखण्डनम्

बीभत्समाह—

**उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-**
**न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।**
**आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-**
**दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥**

वीप्सायांयावत्संभवस्तावद् विधिः । प्रथमं कृत्तिं उत्कृत्योत्कृत्य अथ मांसानि जग्ध्वा क्रव्यमत्तीत्यन्वयः । उत्सेध उच्छूनता, उद्बोध इत्यपि पाठान्तरम्, अर्थस्तु स एव । स्फिक् ऊरूमूलकटिसन्धिभागः, पिण्डी जङ्घोर्ध्वभागः, 'पिण्ड' इति पाठे तदाकारकत्वात् । तथा स्थपुटं विषमगभीरभागः । करङ्कस्याङ्कसंस्थत्वं बलवत्पिशाचाशङ्कयैव, अत एव दृक्प्रेरणं दशनप्रकटनं च । अत्र शव आलम्बनम्, उत्कर्त्तनाद्युद्दीपनम्, नासाकुञ्चनादयोऽनुभावाः, उद्वेगादयः सञ्चारिणः ।

## आदर्शः

बीभत्समाह—उत्कृत्येति । श्मशाने शवं भुञ्जानं प्रेतं दृष्ट्वा माधवस्योक्तिरियम् । अयं प्रेतरङ्कः प्रेतेषु दरिद्रः अङ्कस्थात् करङ्कात् प्रेतशरीरात् अस्थिसंस्थं स्थपुटगतमपि क्रव्यं मांसम् अव्यग्रम् अनाकुलं यथा स्यात् तथा अत्तीत्यन्वयः । स्थपुटं ग्रन्थिः । क्रमेण भक्षणादव्यग्रता । भक्षणक्रममेवाह—उत्कृत्येति । कृत्तिं चर्म उत्कृत्योत्कृत्य प्रथमं जग्ध्वेत्यन्वयः । अथ अनन्तरं पृथूच्छोथेन महोत्फुल्लतया भूयांसि बहुलानि अंसस्फिक्पृष्ठपिण्डादिरूपावयवेषु सुलभानि उत्कटदुर्गन्धीनि मांसानि जग्ध्वेत्यन्वयः । अंसः भुजमूलम् । स्फिक् नितम्बः । आदिना ऊरुपरिग्रहः । स्थपुटगतस्यानुपेक्षणादार्त्तत्वम् । तदाकर्षणार्थं च दशनप्रकटनम् । कश्चिदाच्छिद्य नेष्यतीति भयात् पर्य्यस्तनेत्रत्वम् । अत्र माधवनिष्ठजुगुप्साया भक्ष्यः शवो भक्षकः प्रेतश्चालम्बनम् । पूतिगन्धाद्युद्दीपनम् । माधवस्येयमुक्तिः तद्व्यङ्ग्यं निष्ठीवनञ्चानुभावः । एतद्दर्शनव्यङ्ग्या जडता व्यभिचारिभावः । जुगुप्साङ्गे सामाजिके रसोत्पत्तिः ।

## सुधासागरः

'जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात्' तत्प्रकृतिको बीभत्सः । यथा उत्कृत्योत्कृत्येत्यादि । स्रग्धरा छन्दः । मालतीमाधवे श्मशानवर्णनम् । अयमर्थः । प्रेतेषु रङ्कः कृपणो दरिद्र इति यावत् आर्त्तः क्षुत्पीडितः, बलवत्प्रेतान्तरेणाऽपहरणशङ्कया परितोऽस्ते क्षिप्ते नेत्रे येन, तथा दैन्यात्, त्वगुत्पाटनाय वा प्रकटिता दशना दन्ता येन तथाभूतः सन्, प्रथमं कृत्तिं चर्म उत्कृत्योत्कृत्योत्पाट्योत्पाट्यात्ति चर्वयति । बहुतरभक्ष्येणापि तृप्तिं स्वप्नेऽप्यसम्भावयन् चर्मापि त्यक्तुं न शक्नोतीति भावः । अथानन्तरमसौ स्कन्धौ स्फिक् ऊरुभागः पृष्ठपिण्डी जङ्घोर्ध्वभागः आदिपदाद् बाहूदराद्यवयवेषु सुलभानि पृथूच्छोथेन युक्तानि अत एव भूयांसि स्थूलतमानि अत एवोग्रपूतीनि तीव्रदुर्गन्धानि मांसानि जग्ध्वा अलभ्यलाभबुद्ध्या झटिति भक्षयित्वा अङ्कस्थात् करङ्कान्मस्तकात् 'करङ्को मस्तकः' इति मेदिनी । अस्थिसंस्थं स्थपुटगतमपि गम्भीरविषमभागलग्नमपि क्रव्यं मांसमव्यग्रं मया भुक्तमिदं सर्वमिति न कश्चिदपहरिष्यतीत्यव्याकुलं यथा स्यात् तथाऽत्तीति ।

अत्र शवः आलम्बनमुत्कर्त्तनाद्युद्दीपनम् । नासाकुञ्चनादयोऽनुभावाः । उद्वेगादयः सञ्चारिणः ।

## विवरणम्

उत्कृत्योत्कृत्य कृत्तिमित्यादौ पुनरुद्वेगी बीभत्सः प्रकृते भाव एव दिक्प्रदर्शनाय निदर्शित इति स्मर्तव्यम् । त एते बीभत्सा धनिकेन प्रपञ्चिताः—

**बीभत्सः कृमिपूतिगन्धिकलिलप्रायैर्जुगुप्सैकभू-**
**रुद्वेगी रुधिरान्त्रकीकसवसास्नाय्वादभिः क्षोभणः ।**
**वैराग्याज्जघनस्तनादिषु घृणाशुद्धोऽनुभावैर्युतो**
**लालावक्त्रविकूणनादिभिरिहावेगार्तिशङ्कादयः ॥** इति ।

अनेन शुद्धबीभत्सेन भर्तृहरिचरितादौ सर्वे सन्धयो (व्याप्ता) दृश्यन्ते । अभीष्टे वस्तुनि दोषदर्शनादुपेक्षैव शुद्धजुगुप्सा, सा च द्वेषविशेष इत्यपि वदन्ति ।

**चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः ।**
**लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ।। ४३ ।।**

---

### सङ्केतः

तत्र—एते अष्टौ रसाः सुखप्रधानाः, स्वसंविच्चर्वणरूपस्य एकघनस्य प्रकाशस्य प्रीतिसारत्वात् । तथाहि—एकघनशोकसंविच्चवर्णेऽपि लोकस्य हृदयविश्रान्तिः । अन्तरायशून्यविश्रान्तिशरीरत्वात् । अविश्रान्तिरूपतैव च दुःखम् । अत एव कपिलाः रजोवृत्तितां वदन्तः दुःखस्य चाञ्चल्यमेव प्राणाः इत्याहुः । तस्मात् आनन्दरूपाः सर्वे रसाः, किन्तु उपरञ्जकविषयवशात् केषामपि कटुता स्पर्शोऽपि, वीरस्येव । स हि क्लेशसहनादिप्राण एवेति ।

### संङ्केतः (रुय्यकः)

चित्रं महानिति । अत्राद्भुतरसे विस्मयः स्थायिभावः । स च विस्मय मानाधिष्ठानः । विस्मयमानश्चात्र वक्त्रैव क्वचिद्वर्ण्यमानोऽपि भवति । एवं रसान्तरेऽपि बोद्धव्यम् । तत्र वर्ण्यमानो लोकोत्तरः पुरुष आलम्बनम्, तदीयं निर्विकारत्वाद्युद्दीपनम्, स्तुतिरनुभावः, एवं नयनविस्तारानिमेषप्रेक्षणरोमाञ्चादयोऽपि सामर्थ्यादवसीयन्ते, व्यभिचारिणो हर्षोत्सुक्यादयः स्तुत्यानुगुण्येन प्रतीयन्ते । एवञ्चैषामद्भुतरसव्यञ्जनम् ।

### बालचित्तानुरञ्जनी

अद्भुतरसमुदाहरति चित्रमिति । नायकवचनम् । एष पुरुषः महान् विकाररहितः । चित्रं बत हर्षे । एषा कान्तिः । क्व नु कुत्रापि । प्रकारः अभिनवः एव । धैर्यं लोकोत्कृष्टम् । अहो प्रभावः । आकृतिरपि का ? अपूर्वैव । ब्राह्मण एतद्विषयः । सर्गः नूतनः । अत्र लोकोत्तरवस्तुदर्शनादिविभावः, नेत्रविकासाद्यनुभावः हर्षादिर्व्यभिचारी विस्मयस्थायिभावोऽद्भुतरसः ।

### काव्यादर्शः

इष्टदर्शनादिमायेन्द्रजालादिविभावो नेत्रविस्ताररोमाञ्चाश्रुस्वेदसाधुवाददानाद्यनुभावो हर्षावेगजडतादिव्यभिचारी चित्तविस्तारात्मा विस्मयः स्थायिभावो रसनीयतां गतोऽद्भुतो रसः ।

नरकरिपुणा विष्णुना ।

### विवेकः

चित्रमित्यादि । बतेति श्लाघायाम् । 'अत्र विस्मयः स्थायिभावः । स च विस्मयमानाधिष्ठानः । विस्मयमानश्चात्र वक्त्रैव क्वचिद्वर्ण्यमानोऽपि भवति । एवं रसान्तरेऽपि बोद्धव्यम् । अतएव चर्व्यमाणो (अत्र वर्ण्यमानो) लोकोत्तरः पुरुष आलम्बनम्; तदीयं निर्विकारत्वाद्युद्दीपनविभावः, स्तुतिरनुभावः, एवं नयनविस्तारानिमेषप्रेक्षणरोमाञ्चादयोऽपि सामर्थ्यादवसीयन्ते, व्यभिचारिणो हर्षौत्सुक्यादयस्तुल्यानुगुण्येन प्रतीयन्ते' (रु. सं. २५-२६)

तदित्थमेषामद्भुतरसव्यञ्जकत्वम् । विभावानुभावौ लोकप्रसिद्धावेवेति तयोर्लक्षणं मुनिनाऽपि न कृतम् । यत् स एवाह—(ना. शा. ७/९) लोकस्वभावसंसिद्धा लोकयात्राऽनुगामिनः । अनुभावा विभावाश्च ज्ञेयास्तुवभिनये बुधैः ॥ इति । अतः प्रतिनियता एव रसे तिष्ठन्तीति कृत्वा ।

## दीपिका

चित्रमिति-अत्र बतेत्यादीनां चित्रमित्यादिपूर्वपूर्वपदाहितसंस्कारसाहित्येन शक्तिदार्ढ्यं द्रष्टव्यम् । भङ्गिर्व्यवस्थितिः । सृज्यत इति सर्गः ।

## साहित्यचूडामणिः

चित्रमिति । अत्रे विस्मयस्य परिपोषं इत्यद्भुतो रसः ।

## सम्प्रदायप्रकाशिनी

अद्भुतमुदाहरति—चित्रमिति । अत्र महत्त्वाविकारित्वकान्तिभङ्गिधैर्यप्रभावाकृतिसर्गेषु चित्रं बत क्व अभिनवैव लोकोत्तरम् अहो कापि नूतन एवेत्येतैर्लोकातिक्रान्तकौतुकास्पदता प्रत्याय्यते ।

## मधुमती

चित्रमिति । अत्र महान् अवतारः इत्यादिकं निर्दिश्य, पश्चात् चित्रं इति योज्यम् । अत्र पुरुषविशेषः । आलम्बनम् । निर्विकारत्वादिः उद्दीपनम् । नेत्रविकासादयः अनुभावाः । हर्षादयोऽनुभावाः ।

एषु रसचर्वणस्य अनुभवसिद्धत्वात् अनुपात्तानामपि आक्षेपादुपस्थितिः । सात्त्विकानामपि अनुभावविशेषतया अस्य मते तत्त्वेनैवोपयोगः इति पृथक् न दर्शिताः ।

## विस्तारिका

अद्भुतमाह—चित्रमिति चित्रवत् । अभिनवा लोकोत्तरा 'अहो'-'काऽपि'-'नूतन' शब्दाः स्वसमभिव्याहृतशब्दार्थस्यालौकिकत्वप्रकाशकाः । महानेष इत्यत्र महिम्नः, अवतार इत्यत्र सदाचारप्रवर्तकस्य, कान्तिरित्यत्र सौन्दर्यनिष्ठौज्ज्वल्यस्य, भङ्गिरित्यत्र गमनोपवेशनदर्शनादिगतसौन्दर्यातिशयस्य, धैर्यमित्यत्र विरोधिसहस्रसंपातेऽप्यचलचित्तत्वस्य, प्रभाव इत्यत्र प्रभुत्वनिष्ठसर्ववशीकरणस्य, आकृतिरित्यत्र शरीरनिष्ठसुकुमारत्वादेः, एष सर्ग इत्यत्र विधिसर्गनिर्माणवैभवातिशयस्य तद्धर्मिमात्रवृत्तित्वावगतिः ।

अत्र महापुरुष आलम्बनम्, तद्गुणातिशय उद्दीपनम्, स्तवादयोऽनुभावाः, मतिधृतिहर्षादयः सञ्चारिणः । एवं विभावादयो भावादिष्वपि भाव्याः ।

## सारबोधिनी

अद्भतमुदाहरति चित्रमिति । बत श्लाघायाम् । चित्रं महान् बत क्व अभिनवा लोकोत्तरम् । 'अहो' 'क्वापि' 'नूतन' इति शब्दाः स्वसमभिव्याहृतशब्दार्थस्य लौकिकत्वप्रकाशकाः । अवतार इति सदाचारप्रवर्तक-

त्वात्। 'अविकार' इति पाठे विकारभावरहित इत्यर्थः। अत्र महापुरुष आलम्बनम्। तद्गुणातिशय उद्दीपनम्। स्तवादयोऽनुभावाः। मतिधृतिहर्षादयः सञ्चारिणः। एवं विभावादयो भावेष्वपि भाव्याः।

## काव्यप्रदीपः

'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात्'।

तत्प्रकृतिकोऽद्भुतः। यथा—

**'चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः।**
**लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः॥'**

## काव्यप्रकाशखण्डनम्

अद्भुतमाह—

**चित्रं महानेष नवाऽवतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः।**
**लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एव सर्गः॥ [प. १३.२]**

अत्र 'चित्रं महान् बत लोकोत्तरम् अहो कापि नूतन' इति शब्दाः स्वसमभिव्याहृतशब्दार्थस्यालौकिकत्व-प्रकाशकाः। अवतार इति सदाचारादिप्रवर्त्तकत्वात्। अविकार इति पाठे विकाराभाव इत्यर्थः। अत्र मा(म)हापुरुष आलम्बनम्, तद्गुणातिशय उद्दीपनम्, स्तवादयोऽनुभावाः, मति-धृति-हर्षादयः सञ्चारिणः। एवं विभावादयो भावेष्वपि भाव्याः।

## आदर्शः

अद्भुतमाह—चित्रमिति। सर्वप्रकारप्रकृष्टं कञ्चिन्महापुरुषं दृष्ट्वा कस्यचिदुक्तिरियम्। अर्थादनुभूय-मानमिदम् अवतारमहत्त्वादिकं चित्रं विलक्षणं न तु विस्मये अत्र चित्रपदं तस्यात्र स्थायिभावत्वेन शब्दवाच्यत्वे रसत्वानाप्तेः। वत हर्षे। एषोऽवतारः महान्, एषा कान्तिर्न क्वापीत्यर्थः। इयं भङ्गिरभिनवैव, धैर्य्यं लोकोत्तरं प्रभावश्च अहो आश्चर्य्यः। अत्र न प्रभावविषय एव विस्मयः मतेः स्थायिभावः। इयमाकृतिः काऽपि अनिर्वच-नीया। एष विधेः सर्गः सृष्टिर्नूतनः। अत्र वक्तुर्विस्मयस्य महापुरुष आलम्बनम्, तस्य कान्त्यादिकमुद्दीपनम्, वक्तुरियमुक्तिरेवानुभावः। वतपदार्थो हर्षो व्यभिचारिभावः। विस्मयज्ञे सामाजिके रसोत्पत्तिः।

## सुधासागरः

'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात्' उक्तञ्चान्यत्र—

**विरुद्धेषु पदार्थेषु लोकसीमातिवर्त्तिषु।**
**विस्तारश्चेतसो यस्तु विस्मयः स उदाहृतः॥** इति।

तत्प्रकृतिकोऽद्भुतः। यथा चित्रमित्यादि। इन्द्रवज्रा छन्दः। 'स्यादिन्द्रवज्रा यदि तौ जगौ ग' इति लक्षणात्। वामनमुद्दिश्य बलेरुक्तिरियम्। अयमर्थः। महान् माहात्म्यशील एष पुरुषश्चित्रं लोकोत्तरं वस्तु, बत श्लाघायाम्, अवतारः सदाचारप्रवर्त्तकः। अत्राप्येष इति मध्यमणिन्यायेन सम्बध्यते। एषा दृश्यमाना कान्तिः क्व, न क्वापीति भङ्ग्यन्तरेण लोकोत्तरेत्युक्तं भवति। भङ्गिः गमनोपवेशनदर्शनादिगतप्रकारविषयरूपा। अभिनवैव वैलक्षण्यगतमात्यन्तिकत्वमेवकारार्थः। धैर्यं विरोधिसहस्रसम्पातेप्यचलचित्तत्वम् लोकोत्तरम्, अहो अलौकिकः प्रभावः सामर्थ्यम् सकलवशीकाररूपम्। काप्यनिर्वाच्या आकृतिरवयवसंस्थानम्। एष सर्गो निर्माणं, नूतनः प्रसिद्धब्रह्मनिर्मितिविलक्षण इति।

अत्र चित्रादिशब्दा भङ्गिभेदेन स्वसमभिव्याहृतपदार्थस्य लोकोत्तरताप्रतिपादकाः, न तु विस्मयार्थकाः, तस्याऽत्र स्थायित्वेन वाच्यतादोषापत्तेरिति बोध्यम्।

अत्र महापुरुष आलम्बनम्। तद्गुणातिशयः उद्दीपनम्। स्तवादयोऽनुभावाः। धृतिहर्षादयो व्यभिचारिणः।

## विवरणम्

लोकोत्तरोत्कर्षवत्तया ज्ञानं विस्मयः, तत्प्रकृतिकोऽद्भुतः। तमुदाहरति—चित्रमिति। अत्र वर्णनीय आलम्बनम्, तदीया गुणा उद्दीपनम्, स्तुतिवचननेत्रविकासादयोऽनुभावाः, हर्षावेगधृत्यादयो व्यभिचारिणः, तैर्विस्मयः स्वदते।

एषां स्थायिभावानाह—

(सू. ३३) रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ ३० ॥

स्पष्टम्।

---

**सङ्केतः**

रतीत्यादि। अन्योन्यास्थाबन्धात्मिका रतिः। चित्तस्य विकासः हासः। वैधुर्यं शोकः। तैक्ष्ण्यप्रबोधः क्रोधः। स्थेयान् संरम्भः उत्साहः। वैक्लव्यं भयम्। सङ्कोचः जुगुप्सा। विस्तारः विस्मयः।

तत्र—एषां विभावानुभावव्यभिचारिणः कथ्यन्ते—

(१) मिथः स्त्रीपुंसालम्बनरूप—तदुपयोगिपवनारामचन्द्रार्कोदयास्तजलक्रीडाद्युद्दीपनरूपविभावा, सम्भोगे—सुखमय हर्षादिव्यभिचारिणी, रोमाञ्चस्वेदाश्रुकम्पश्वसितकेशबन्धांशुकसंयमनभूषामाल्यादिसम्यङ्निवेशनचाटु—प्रभृत्यनुभावा, विप्रलम्भे तु—दुःखप्रायशङ्कौत्सुक्यमदग्लानिनिद्रानिर्वेदमरणादिव्यभिचारिणी, सन्ताप- जागरकृशताविलापदीनवचनलेखनवाचनवार्ताप्रश्नमरणोद्यमसन्देशाद्यनुभावा रतिः जुगुप्साऽलस्यौग्र्यवर्जिता शृङ्गारः।

स्थायी चर्वणतां गतः रसः स्यात्—इति तु सर्वत्र विज्ञेयम्।

यद्यपि रतिश्रमकृतं निद्रादि सम्भोगेऽप्यस्ति। तथापि तत् रतौ चित्रतां आधत्ते। विप्रलम्भे तु तत् रतिभावनापरम्परोदितमेवेति युक्तमेवात्र सुखमयत्वम्। विप्रलम्भे च मरणं अचिरकालप्रत्यापत्तिमयं इष्टम्, येन न शोकावेशः। अथवा—चैतन्यावस्थितैव प्राणत्यागकर्तृताऽऽत्मिका पूर्वक्रियैव पाशबन्धाद्यवसरगता मन्तव्या, न तु प्राणत्यागः। तथा—विप्रलम्भे उन्मादापस्मारव्याधीनां या नात्यन्तं कुत्सिता दशा, सा काव्ये नाट्ये च दर्शनीया। यदि वा—तादृश्यां दशायां स्वजीवितनिन्दात्मिकायां तद्देहोपभोगसाररत्यात्मकावस्थः बन्धादिः विच्छिद्यते एवेति कुत्सितदशायाः असम्भव एव।

(२) विकृतकेशबन्धवेषनर्तनगत्यनुकरणभूषणन्यासोद्धट्टनादि विभावः, नासौष्ठकपोलस्पन्दननेत्रविकास मुखरागपार्श्वग्रहणाद्यनुभावः, त्रपाऽवहित्थनिद्राऽऽलस्यादि व्यभिचारी हासः हास्यः।

सः उत्तममध्यमाधमेषु स्मितविहसितापहसितैः त्रेधा। तत्र—कपोलोल्लासमात्रं अदृश्यदन्तं स्मितम्। मधुरस्वनं सास्यरागं कालागतं विहसितम्। निर्हेतुकं साश्रुनेत्रं कम्पितांसशिरस्कं अपहसितम्। एतेषां स्मितादीनां क्रमेण सङ्क्रमजैः हसितोपहसितातिहसितैः परस्थमपि त्रेधा। उपहसितातिहसितयोः उपसर्गभेदेन अर्थभेदः। तत्र—उत्फुल्लास्यनेत्रं विकासिगण्डं किञ्चिद्दृश्यदन्तं हसितम्। उत्फुल्लनासं विजिह्मदृष्टि निरीक्षणं निकुञ्चितांसशिरस्कं उपहसितम्। ससंरम्भाश्रुनेत्रं उद्धतं सशब्दं सकराघातं अतिहसितम्।

अयं भावः—परं हसन्तं दृष्ट्वा स्वयं विभावान् अपश्यन्नपि हसन् लोके दृष्टः। तथा विभावदर्शनेऽपि गाम्भीर्यात् कोऽपि न हसति, परहासेक्षणे च तत्क्षणं हसति। यथा अम्लदाडिमादिरसास्वादः अन्यत्रापि दन्तोदकविकारानुरूपदर्शनात् सङ्क्रमणस्वभावः तथा हासोऽपि सङ्क्रामति। न त्वन्ये रसाः। यस्तु स्वामिशोकात् भृत्यस्य शोकः सः अन्य एव शोकवत्स्वामिविभावकः, विभावभेदात्। इह च तद्विभावक एव हासः सङ्क्रामतीत्यर्थः।

(३) इष्टानिष्टवियोगसंयोगविभावः, निश्वासमुखशोषाश्रुपातभूलुठनाक्रान्दाद्यनुभावः, निर्वेददैन्यविषादमरणादिव्यंभिचारी शोकः करुणः।

(४) दारापहारदेशजातिविद्यानिन्दाऽऽक्रोशादिविभावः, नेत्ररागभ्रुकुटीकरणदन्तौष्ठग्रहणाद्यनुभावः, औग्र्यावेगामर्षादिव्यभिचारी क्रोधः रौद्रः।

(५) विपक्षगत नयासंमोहाध्यवसायप्रतापविक्रमाधिक्षेपादिविभावः, स्थैर्यधैर्यगाम्भीर्यत्यागाद्यनुभावः, धृतिस्मृतिगर्वामर्षादिव्यभिचारी, उत्साहः वीरः।

स च त्रेधा—धर्मदानयुद्धभेदात्। धर्मादित्रयं तु विपक्षगतं सत् विभावरूपं स्यात्, स्वपक्षगतं तु अनुभावरूपम्। इह च विपत्पङ्कनिमग्नतास्वल्पसन्तोषमिथ्याज्ञानानि अपास्य, यः तत्त्वनिर्णयरूपः असंमोहाध्यवसायः स एव उत्साहहेतुः प्राधान्येन। रौद्रे तु ममताप्राधान्यात् अशास्त्रितानुचितयुद्धाद्यपीति मोहविस्मयप्राधान्यं इति विवेकः।

(६) पिशाचादिविकृतस्वरश्रुतितद्दृष्टिशून्यगृहारण्यगमनादिविभावं, करहत्पादकम्पमुखशोषमालिन्याद्यनुभावं, शङ्कादैन्यादिव्यभिचारि स्त्रीनीचादीनां सहजं उत्तमानां कृतकं च भयं भयानकः। उत्तमाः हि भयाभावेऽपि गुरुराजादिभ्यः भयं दर्शयन्तः सुतरां उत्तमाः स्युः। प्रभुभक्तिश्च सचिवादीनाम्। यथा—स्वेच्छाचारी भीत एवास्मीति।

ननु—राजादयः किमति गुर्वादिभ्यः कृतकं भयं दर्शयन्तः मृदून् करकम्पादीन् दर्शयन्ति? किमिति च भय एव कृतकत्वम्। सर्वस्य हि कृतकत्वं सम्भवति, यथा—वेश्या अर्थिना कृतकां रतिं स्पष्टयति। उच्यते—भये हि दर्शिते गुरुः विनीतं मन्यते। मृदुचेष्ट्या च नाधमप्रकृतिं एनं गणयति। कृतकरत्यादेश्च उपदिष्टात् न किञ्चित् फलम्। यत्र तु राजा परानुग्रहाय क्रोधविस्मयादीन् दर्शयति, तत्र व्यभिचारितैव तेषाम्, न तु स्थायितेति।

(७) वमनव्रणपूतिविष्ठाकृमिकीटादिदर्शनश्रवणादिविभावा, गात्रसङ्कोचहृल्लासनासाविकूणनपिधानथूत्काराद्यनुभावा, मोहापस्मारौग्र्यादिव्यभिचारिणी जुगुप्सा बीभत्सः।

(८) दिव्यविमानमायेन्द्रजालावदातकर्मेप्सितावाप्तिप्रभृतिविभावः, निर्निमेषाक्षिविकासरोमाञ्चप्रीत्यश्रुसाधुवादप्रसाददानाद्यनुभावः हर्षावेगजाड्यादिव्यभिचारी विस्मयः अद्भुतः।

यद्वा—लोकोत्तरवाचिकाद्यभिनयैः चित्तवृत्तय एव भावयन्ति—लोकदशायामनास्वाद्यमपि आस्वाद्यं स्वी-कुर्वन्ति इति भावाः स्थायिनः व्यभिचारिणश्च। जात एव हि जन्तुः अष्टाभिः संविद्भिः युज्यते। तथाहि—दुःखद्वेषी सुखलुब्धः सर्वोऽपि रिरंसते, हसति, शङ्कया शोचति, परस्मै कुप्यति, हिताय उत्सहते, बिभेति, परं जुगुप्सते, तत्तत्स्व परकर्तव्यवैचित्र्यदर्शनात् विस्मयते च। केवलं कस्यचित् काचिदधिका चित्तवृत्तिः, काचिदूना। कस्यचित्

उचितविषयनियन्त्रिता, कस्याप्यन्यथा। तत् काचिदेव उपयोगिनी इति उपदेश्या। तद्विभागकृतश्च उत्तमादि व्यवहारः। ये त्वमी व्यभिचारिणः—ते रसायनं उपयुक्तवतः ग्लान्यालस्यश्रमप्रभृतयः जन्ममध्ये न भवन्त्येव। यस्यापि वा विभावबलात् भवन्ति, तस्यापि हि हेतुक्षये क्षीयमाणाः संस्कारशेषतां नावश्यं अनुबध्नन्ति। रत्यादयस्तु कृतस्वकर्तव्यतया प्रलीनकल्पाः अपि संस्कारशेषता नातिवर्तन्ते। वस्त्वन्तरविषयस्य रत्यादेः अनुच्छेदात्।

तस्मात्—स्थायिभावरूपचित्तवृत्ति सूत्रस्यूताः एव अमी स्वं उदयास्तमयवैचित्र्यशतसहस्रधर्माणं लभमानाः, स्थायिनं विचित्रयन्तः भान्तीति व्यभिचारिणः। तथाहि—ग्लानोऽयं इत्युक्ते, 'कुतः?' इति हेतुप्रश्नेन अस्थायिता अस्य सूच्यते। न तु 'रामः उत्साहशक्तिमान्' इत्यत्र हेतु प्रश्नमाहुः। अत एव—विभावाः तत्र उद्बोधकाः सन्तः, स्वरूपोपरञ्जकत्वं कुर्वाणाः रत्युत्साहादेः उचितानुचित्वं आवहन्ति, न तु ते। तदभावे स्थायिनः सर्वथैव निरुपाख्याः; वासनात्मतया तेषां स्थिततत्वात्। व्यभिचारिणां स्वविभावाभावे नामापि न स्यात्। तथा एषां विभावबहुत्वे स्थायित्वम्, तदल्पे तु व्यभिचारित्वम्। यथा—रावणादौ मिथः प्रतीत्यभावात् रतिः व्यभिचारिणी, तथा गुर्वादिषु च वीरशृङ्गारादौ रोषो व्यभिचार्येव। एवं भावान्तरेष्वपि वाच्यम्।

## बालचित्तानुरञ्जनी

स्थायिभावापरिज्ञाने शृङ्गारादिनिरूपणं कर्त्तुमशक्यमित्यनेन वागङ्गाभिनयात्मकशृङ्गारादिरसनिरूपणं कर्त्तुमशक्यमित्यभिप्रेत्योत्तरश्लोकमवतारयति एषामित्यादि। वारयति स्पष्टमित्यनेन। वागङ्गाभिनयात्मका बहवोऽर्था विभाव्यन्ते उत्पाद्यन्ते येन स विभावः। स चालम्बनोद्दीपनभेदेन द्विविधः। वागङ्गादिभिर्यस्मादर्थोऽनुभाव्यते स वागङ्गोपाङ्गसंयुक्तः अनुभावः। एतौ स्पष्टत्वादुपेक्ष्य स्थायिभावनोपनीतत्वेन दुर्ज्ञानत्वमभिप्रेत्याह।

## काव्यादर्शः

रतिर्हासेति। स्थायित्वमेषामेव। जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति। केवलं कस्यचित् काचिद् अधिका चित्तवृत्तिः काचिद् ऊना, कस्यचिद् उचितविषयनियन्त्रिता, कस्यचिद् अन्यथा। रत्यादयो हि संपादितस्वकर्तव्यतया प्रलीनकल्पा अपि संस्कारशेषतां नातिवर्तन्ते, वस्त्वन्तरविषयस्य रत्यादेरखण्डनात्। भावयन्ति व्याप्नुवन्ति सामाजिकानां, मन इति भावाः। स्थायिनो व्यभिचारिणश्च।

## विवेकः

यथाक्रमं स्थायिभावानाह—रतिरित्यादि। रतिः परस्परा स्थायित्वादित्युक्तमेव। एवं वाग्वेषादिवैकृतकृतश्चेतोविकाशो हासः। इष्टनाशादिप्रभवं चित्तस्य वैक्लव्यं शोकः। प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधः। कार्यारम्भेषु संरम्भस्थेयानुत्तमप्रकृतिरुत्साहः। रौद्रशक्त्यादिजनितं स्त्रीनीचप्रकृतिकस्य वैक्लव्यं भयम्। दोषदर्शनादिभिः पदार्थानां गर्हणा जुगुप्सा। पदार्थानां लोकसीमाऽतिक्रमास्पदतया चित्तस्य विस्फारो विस्मयः। एतश्च सर्वलोकानुभवसिद्धमित्यत आह स्पष्टमिति।

### दीपिका

हृदयङ्गम् वस्तुनि सुखोपायत्वसंवेदनं रतिः । वागादिवैकृतैश्चेतोविकाशो हासः । इष्टनाशादि भयाच्चेतोद्रुतिः शोकः । प्रतिकूलेषु तैक्ष्ण्यप्रबोधः क्रोधः । कार्यारम्भेष्वासङ्ग उत्साहः । रौद्रशक्त्या कृतं चित्तवैक्लव्यं भयम् । दोषदर्शनादिभिर्वस्तुनिन्दा जुगुप्सा । लोकोत्तरवस्तुदर्शनाच्चित्तविस्तारो विस्मयः ।

### दर्पणः

एषां शृङ्गारादिरसानां यथासङ्ख्यमिति शेषः । स्थायिनो भावान् । तदाहुः—

**स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामकः ।**
**न तिरोधीयते स्थायी, तैरसौ पुष्यते परम् ॥** इति

रतिलक्षणम् । यथा मम साहित्यदर्पणे—

**रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणयितम् इति ।**
**यं च मदनाविष्टस्त्रीपुरुषनिष्ठैव शृङ्गारस्थायी ।**

### साहित्यचूडामणिः

अथ स्थायिभावानुद्दिशति रतिरिति । स्पष्टमिति । पाठप्रधानत्वात् प्रमेयस्य । यथासंख्येन योजनं तु स्पष्टतरम् ।

### सम्प्रदायप्रकाशिनी

रसानेवं सोदाहरणं निरूप्य स्थायिभावान् प्रस्तौति—एषामित्यादि ।

रतिहासादयः संस्कारात्मकाः सूक्ष्माश्चित्तवृत्तिविशेषाः । भावान्तरोपकार्यत्वेनैषां प्राधान्यम् । यदुक्तम्—

**'स्थायिनामेव भावानामुपकाराय सर्वदा ।**
**वर्तन्ते सात्त्विका भावा भावाश्च व्यभिचारिणः ॥'** इति ।

अथ व्यभिचारिणः । प्रवहद्रूपे स्थायिभावे । तदुत्क्षोभशंसिनः फेनबुद्बुदादिवन्निमज्जनोन्मज्जनधर्मिणो व्यभिचारिणः । यदुक्तम्—

**'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।**
**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधोः ॥'** इति ।

निर्वेदग्लानीति । ईर्ष्यातत्त्वज्ञानादिना स्वात्मावमतिर्निर्वेदः । तस्य निःश्वासोच्छ्वासवैवर्ण्यादयोऽनुभावाः, ग्लानिदैन्यादयो व्यभिचारिणः । यदाह—

**'बाष्पाभिपूर्णनयनः पुनः पुनः श्वसिति दीनमुखनेत्रः।**
**योगीव ध्यानरतो भवति हि निर्वेदतः पुरुषः॥'**

इति। एवं ग्लान्यादिव्यभिचारिणां विभावादयोऽन्यतो द्रष्टव्याः। क्रीडानर्तननिधुवनादिश्रमजनिता-निष्प्रणता ग्लानिः। वैरिपारुष्यस्वदुर्नयातिरेकादिपर्यालोचनया सन्निकृष्टानिष्टोत्प्रेक्षा शङ्का। परसमुच्छ्रयासहिष्णु-त्वमसूया। वयोमदिरादिसम्मोहादानन्दसम्भेदो मदः।

**'उत्तमसत्त्वः प्रहसति नृत्यति गायति च मध्यमप्रकृतिः।**
**परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः॥'**

मनसः खेदः श्रमः। क्रियास्वनुत्सहनत्वमालस्यम्। निरोजस्कता चित्तस्य दैन्यम्। द्रव्यापहारादिना चित्तस्य दुर्विकल्पैकशीलता चिन्ता। व्यसनाकर्णनाद् वैचित्त्यं मोहः। संस्कारोद्बोधः स्मृतिः। अननुरूपाचारादिना धाष्ट्र्यभ्रंशो व्रीडा। अविमृश्यकारित्वं चपलता। इष्टलाभादिना समुल्लासो हर्षः। क्रियास्वतिसंभ्रम आवेगः। अप्रतिपत्तिर्जडता। कुलैश्वर्याद्युत्सेको गर्वः। प्रारब्धकार्यवैधुर्यादिना सत्त्वभ्रंशो विषादः। कालक्षेपाक्षमत्वमौत्सु-क्यम्। चिन्तालस्यादिना मनस्संमीलनं निद्रा। ग्रहलङ्घनादिना करणविप्लवोऽपस्मारः। निद्रानिबन्धनमिन्द्रियमान्द्यं सुप्तम्। निद्रातो व्युत्थितिर्विबोधः। अधिक्षेपाद्यभिनिविष्टत्वममर्षः। हर्षादिविकारगोपनमवहित्थम्। नृशंसत्वमु-ग्रता। तत्त्वनिर्धारणं मतिः। धातूत्क्षोभो व्याधिः विरहामयग्रहादिदोषैरप्रेक्ष पूर्वकारित्वमुन्मादः। अकाण्डाशनिभू-कम्पादिजनितं चाकित्यं त्रासः। सन्देहप्रभवो विचारो वितर्कः। त एते स्वनाम्नैव निरुक्तकल्पा इत्याह—समाख्यातास्तु नामभिरिति।

## मधुमती

एषामिति—

**'चिरं चित्तेऽवतिष्ठन्ते सम्बन्ध्यन्तेऽनुबन्धिभिः।**
**रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनस्तु ये॥'** इति
**'विरुद्धैरविरुद्धैर्वा भावैः विच्छिद्यते न यः।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥'**

इति वा स्थायिसामान्यलक्षणम्। विरुद्धैः = विजातीयैः व्यभिचार्यादिभिः। अविरुद्धः = सजातीयैः स्थाय्यन्तरैः। अत एव (मालतीमाधवे श्मशानाङ्के) कन्यारत्नार्थितया महामांसविक्रयप्रसङ्गेन श्मशानवाटं गतस्य माधवस्य प्रेतरङ्कादिदर्शनेन समुद्भूता जुगुप्साऽपि रतिमेव पुष्णाति। अन्यान्—विभावादीन्। आत्मभावं—आत्मन सह आस्वादविषयताम्।

विशेषलक्षणानि तु—मनोऽनुकूलार्थविषयकसुखात्मकसंवेदनं रतिः। विकृतवाग्वेषादिविषयकं ज्ञानं हासः। अनौचित्येन इष्टवियोगे सति पुनः तत्प्राप्त्यशक्यतानिश्चयः शोकः। अपकारित्वेन प्रतिकूलज्ञानं क्रोधः।

'मयेदं कार्यम्' इत्यध्यवसायः उत्साहः। भयहेतूपनिपाते तत्परिहारानर्हणज्ञानं भयम्। सदोषपदार्थगोचरं निन्द्यत्व-प्रकारं ज्ञानं जुगुप्सा। लोकसीमाऽतिक्रान्तत्वेन ज्ञानं विस्मयः इति।

यदि तु एक एव स्थायी इति पक्षः, तदा—तत्तद्ज्ञानोपनीताः तद्विषयाः यदा तत्तद्ज्ञानाभिव्यक्ते स्थायिनि भासन्ते, तदा रत्यादिसंज्ञां स्थायी तत्तदाकारेण परिणतः लभते इति लभ्यत इति नानुपत्तिः। न च विषयभानात् पूर्वं स्थायिनः ज्ञानस्य निर्विषयत्वापत्तिः, स्वविषयत्वाङ्गीकारात्। विषयानुपरक्तत्वेन सूक्ष्मः परं न प्रकाशते इत्यन्यदे-तत्। न च स्थायिनः एकत्वे रसभेदानुपपत्तिः। तदापि रस्यमानत्वात्। न हि स्थायिमात्रं रसः। अपि तु व्यक्तः। व्यक्तिश्च तत्तद्विभावादिज्ञानजनिततया नाना। तेन रसोऽपि नाना भवत्येव। तथा हि—यथा सुवर्णत्वाविशेषेऽपि कटकमुकुटयोः तद्विकारयोः भेदः, तथा स्थायित्वाविशेषेऽपि व्यक्तीनां तद्विकाराणां भेद एव। तस्मात् रसानां एकजातीयत्वं, न तु एकत्वम्। अत एव—रसभेदायत्तवृत्तिभेदनायकभेदप्रतिनियतकष्टत्वादिदोषादयोऽपि तत्र तत्र उपपद्यन्ते इति। एतेन—'वीरादिषु रसप्रसिद्धः घटपक्षप्रसिद्धिवत् अप्रामाणिकी' इति शृङ्गारप्रकाशे महाराजाभिधानं अपास्तम्।

## विस्तारिका

नन्वास्वादस्य वैजात्यविरहेण कथमष्टौ भेदाः? स्थायिभावभेदाद् भेद इति चेत् के ते स्थायिभावा इत्याह—स्थायिभावानित्यादि। स्थायिभावानामास्वादानन्यत्वेऽपि विषयत्वेन भेदकाः। साकारवादे घटपटादयो ज्ञानस्येव, स्थायिनो यावज्जीवं विभावेषु स्थिराः। तदुक्तम्—

**अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।**
**आस्वादाङ्कुरगर्भोऽसौ भावः स्थायीति संज्ञितः॥** इति।
**रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।**
**रागादिवैकृताच्चेतो विकासो हास उच्यते॥**
**इष्टनाशादिभिश्चेतो वैक्लव्यं शोक उच्यते।**
**कार्यारम्भेषु संरम्भ उत्साहः परिकीर्तितः॥**

संरम्भस्त्वरा।

**प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञितः।**
**रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम्॥**
**दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते।**
**विविधेषु पदार्थेषु लोकसीमातिवर्तिषु।**
**विस्फारश्चेतसो यस्तु विस्मयः स उदाहृतः॥**

एतानि लौकिकख्यादीनि लक्षितानि न सामाजिकनिष्ठानि, तेषां वासनाविशेषत्वात्। ते तु चित्तवृत्तिभेदाः कार्यवैजात्येनोन्नेयवैजात्या इति। स्पष्टमित्यनुभाव वैजात्यादित्यर्थः।

## सारबोधिनी

के ते स्थायिनो भावा इत्यपेक्षायामाह एषां स्थायिभावानिति। यदा आलम्बनादिभी रतिर्व्यज्यते तदा शृङ्गारः। यदा हासादयस्तदा अन्ये इत्यवधेयम्। स्थायिलक्षणं पूर्वमुक्तम्। अधुनारत्यादिलक्षणान्युच्यन्ते। यथा—

> रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम्।
> वागादिवैकृताच्चेतोविकासो हास उच्यते॥
> इष्टनाशादिभिश्चेतोवैक्लव्यं शोक उच्यते।
> प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञकः॥
> कार्यारम्भेषु संरम्भ उत्साहः परिकीर्तितः।
> रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम्॥
> दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते।
> विविधेषु पदार्थेषु लोकसीमातिवर्तिषु॥
> विस्तारश्चेतसो यस्तु विस्मयः स उदाहृतः॥

अव्याख्याने बीजमाह स्पष्टमिति। ननु कथं शोकादिसंभिन्नत्वेन करुणादीनां रसत्वम्। न च तेषां रसत्वं नास्तीति वाच्यम्। अत्राप्येतस्याश्रुतचरत्वात्। अश्रुपातादेर्दुःखाद्याविष्कारस्यानुदयप्रसङ्गाच्चेति चेत् यद्यपि करुणो रसः सुखदुःखसंभिन्नस्तथापि शोकावच्छिन्नस्य चैतन्यस्यानन्दांशे भग्नावरणस्य करुणरसत्वे निरतिशयस्यानन्दांशस्योत्कटेच्छाविषयत्वात्। शोकांशे बलवद्दोषाभावात् तत्र समाजिकानां प्रवृत्तिः। वर्णनीयतन्मयीभावेन शोकाभिव्यक्तेरश्रुपातादयो भवन्तीति न किञ्चिदनुपपन्नम्। एवं बीभत्स भयानकयोरपीति दिक्।

## काव्यप्रदीपः

एषां भेदो वचनमात्रान्न सिध्यतीत्येषां विचित्रानुक्तरूपान्स्थायिभावानाह—

> **रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
> **जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥ ७॥**

तत्र—

> 'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमा।
> आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥'

इति सामान्यलक्षणम्। अवस्थितिश्चैषां स्रक्सूत्रन्यायेन, फेनबुद्बुद्न्यायेन तु व्यभिचारिणामित्यनयोर्भेदः। विशेषलक्षणान्युक्तानि। अष्टावेव चेत्स्था (चैते स्था) यिनः। अतो न्यूनाधिकत्वशङ्का रसे निरस्तेति।

काव्यप्रकाशखण्डनम्

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥** (मू० का० ३०)

शान्तस्य तु निर्वेदः स्थायी ।

नवीनास्तु शृङ्गार-वीर-हास्याद्भुतसंज्ञाश्चत्वार एव रसाः । करुणादीनां यथा न रसत्वं तथा वक्ष्यते ।

अथ करुणादीनां कथं न रसत्वमिति चेत्, उच्यते—

**इष्टनाशादिभिश्चेतोवैक्लव्यं शोक उच्यते।**

तथा—

**रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम्।**
**दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते ॥**

तथा—

**तत्त्वज्ञानाद् यदीर्ष्यादेर्निर्वेदः स्वावमाननम् ॥**

इत्यादिनियुक्तशोकादिप्रवृत्तिकानां करुणादीनां रसत्वनिषेधात् । न च तेषां तथाभूतत्वेऽपि अभिव्यक्तानन्दचिदात्मना सहाभिव्यक्तानां रसत्वमिति वाच्यम् । एवमपि स्थाय्यंशे रसत्वविरोधात् । अथालौकिकविभावाद्यभिव्यक्तानां तेषां रसत्वमुचितम्, सुरते दन्ताद्याघातस्यास्वाद्यवदिति चेत्, न। एवं क्षुधापिपासादिनानाविधदुःखहेतुजनितचेतोवैक्लव्यस्यापि रसान्तरत्वापत्तेः । सुरते दन्ताघातस्य बलवत्कामसंभवदुःखनाशकत्वेन भारापगमानन्तरं सुखिनः संवृत्ता स्म इतिवदुपादेयत्वम् । यत् तु शोकादयोऽपि रत्यादिवत् स्वप्रकाशज्ञानसुखात्मका इति तदुन्मत्तप्रलपितम् । किञ्च सामाजिकेषु मृतकलत्रपुत्रादीनां विभावादीनां शोकादिस्थायिभावस्य चर्वणीयेन अज-महीपालादिना सह साधारण्यम्, अस्रुपातादिदर्शनात् । वर्णनीयतन्मयीभवनं चापेक्षितमिति चेत्, कथं ब्रह्मानन्दसहोदररसोद्बोधः ? कथं वा नाम (मा)ङ्गल्यम् ? अत एव केचिदजविलापादिकं न पठन्ति । बीभत्से तु मांसपूयाद्युपस्थित्या वान्तनिष्ठीवनादिकं यन्न भवेत् तदेवाश्चर्यम्, कुतस्तादृशपरमानन्दरूपरसोद्बोध इति । एवं भयेऽपि । तथा शान्तस्य त्यक्त [प. १४.१] सर्ववासनेषु भवतु नाम कथञ्चिद् रसत्वम्, विषयिषु पुनः सर्वविषयोपरमोपस्थित्या कथं रसत्वम् ? । तदुक्तम्—

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।**
**रसः प्रशान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः ॥**

एवं वीर-रौद्रयोर्नभेदः, विभावादिसाम्यात् । न च स्थायिभेद एव भेदकः, तस्यापि नियामकमुखप्रेक्षितत्वात् । यत् तु—

**'रक्तास्यनेत्रता रौद्रे युद्धवीरात् तु भेदिनी।'**

इत्याहुः, तत्र । क्रोधसञ्चारिणि वीरे तस्याः सुलभत्वेन भेदकत्वानुपपत्तेः । न च रौद्रे अविवेकत्वस्य वीराद् भेदकस्य संभवाद् भेद इति वाच्यम् । क्रौधसञ्चारिणि वीरेऽप्यविवेकत्वस्य संभवात् । दानवीरादीनां प्रभावातिशयवर्णन एवं कवीनां तात्पर्यमिति न तेषां रसत्वम् । एवं वात्सल्यनामाऽपि न रसः । भावेनैव गतार्थत्वात् ।

ननु कथं अजविलापादिकं कविभिर्वर्ण्यत इति चेत्, उच्यते—तेषां अज-महीपतिप्रभृतीनां स्वस्वप्रियानुरागप्रकर्षप्रतिपत्त्यर्थम् । अत एव च अजमहीपतेः स्वप्रियां इन्दुमतीं प्रति देहत्यागः कालिदासेन वर्णितः । एवं शान्तस्यापि वर्णनं मुमुक्षूणां वैराग्यातिशयप्रतिपत्तये । एवं भयातिशयवर्णनं तत्तद्व्यक्तीनां मार्दवप्रतिपादनाय । वस्तुतस्तु कविभिः स्वशक्तिप्रदर्शनार्थमेव पद्मबन्धादिनिर्माणवत् तत्र तत्र प्रवर्त्यत इति ।

## आदर्शः

रतिर्हासश्चेति । उक्तरसानामेते यथासङ्ख्यं स्थायिभावाः । रत्यादीनां लक्षणानि तूक्तानि दर्पणे । यथा—

**रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम् ।**
**रागादिवैकृताच्चेतोविकाशो हास इष्यते ।**
**इष्टनाशादिभिश्चेतोवैक्लव्यं शोक उच्यते ॥**
**प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञितः**
**कार्य्यारम्भेषु संरम्भ उत्साहः समुदाहृतः ।**
**रौद्रशक्त्यादिजनितं वैक्लव्यं मनसो भयम् ॥**
**दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते ।**
**विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु ।**
**'विस्तारश्चेतसो यस्तु स विस्मय उदाहृतः ॥** इति

'प्रवणायितम्' उत्कट आवेशोऽनुरागरूपः, सोऽपि इष्टसाधनताज्ञानधारारूपः; नत्विच्छारूपः, अभिलाषहेतुत्वेनोक्तत्वात् । चेतोविकाश उपहसनीयत्वेन ज्ञानं मुखविकाशरूपहास्यहेतुः । इष्टनाशादिभिरित्यादिपदाच्छोच्यावस्थामात्रपरिग्रहः । वैक्लव्यं दुःखम् । संरम्भः सहर्षप्रवृत्तिः । तैक्ष्ण्यस्य अपचिकीर्षायाः प्रबोध उत्कटत्वम् । रौद्रशक्तेयति रौद्रः क्रुद्धः तस्य क्रोधरूपया शक्त्या; वैक्लव्यमिह भाविदुःखद्वेषः, तस्य च क्रोधजन्यत्वं तज्जन्यदुःखविषयत्वात्, न तु तज्जन्यं दुःखमेव वैक्लव्यं तदनुत्पत्तिदशायामपि भीत्युपलम्भात् । एवञ्च मनःक्षोभरूपाद्वक्ष्यमाणत्रासरूपव्यभिचारिभावदस्य भेदः ।

विस्तार इति दृष्टेहेतुभ्योऽसम्भाव्यत्वज्ञानेन हेत्वनुसन्धाने मनोव्यापारमेव चेतसो विस्तारः । एते स्थायिभावः स्ववासनायामभेदेनारोप्यमाणा रसतामापद्यन्ते इति दर्शितसिद्धान्तोऽवधेयः ।

## सुधासागरः

रसानां भेदो वचनमात्रान्न सिध्यतीत्येषां विचित्रान् उक्तरूपान् स्थायिभावानाह रतिर्हासेति ।

**विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।**
**आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥**

इति सामान्यलक्षणम्। उक्तञ्च जयरामतर्कपञ्चाननैः—अथ भावसामान्यलक्षणम्। भावयति वासयतीति। भावो वासनाख्यो वर्णनीयमयीभवनयोग्यव्यापारविषयः। तदुक्तम्—'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्' इतिं दिगिति।

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥**

इत्यन्ये,

**चिरं चित्तेऽवतिष्ठन्ते सम्बन्ध्यन्तेऽनुबन्धिभिः।**
**रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनाऽत्र ते॥**

चिरमिति व्यभिचारिव्युदासाय, अनुबन्धिभिर्विभावादिभिरित्यपरे,

**सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान्।**
**यावद् रसं वर्त्तमानः स्थायी भाव उदाहृतः॥ इतीतरे।**

अवस्थितिश्चैषां स्रक्सूत्रन्यायेन, फेनबुद्बुद्न्यायेन तु व्यभिचारिणामित्यनयोर्भेदः। विशेषलक्षणान्यनुपदमेवोक्तानि। अष्टावेव चेत् स्थायिनोऽतो न्यूनाधिकसंख्या रसे निरस्तेति बोध्यम्। एवञ्च रसभेदे सिद्धे एक एव रस इत्यभिप्रायेण वीरादिषु रसप्रसिद्धिः घटे पट [वटे यक्ष]-प्रसिद्धिवदप्रामाणिकेति शृङ्गारप्रकाशे [१.७] महाराजाभिधानमपास्तम्।

## विवरणम्

स्थायिभावा रसस्वरूपाभिधाने निरूपिताः। तदेतदाह—स्पष्टमिति। रत्यादयोऽष्टौ व्यभिचारिणोऽपि सन्तः क्वचित् स्थायित्वमापद्यन्ते। सात्त्विकास्त्वात्मत्वेनाध्यस्तस्य प्राणस्य सूक्ष्मभूतप्रकारात्मकाः स्तंभत्वादिनाऽष्टधाभिद्यमाना व्यभिचारिणोऽपि बाह्यस्वरूपेण परिणामादनुभावतयाऽपि स्पृश्यन्ते। यदाहुः—

'पृथग् भावा भवन्त्येतेऽनुभावात्वेऽपि सात्त्विकाः' इति।

विवृतं चैतन्नृत्याध्याये शार्ङ्गदेवेन—

**उक्तै रत्यादिकैर्भावैः संविद् विक्रियते यदा॥**
**प्राणेऽध्यस्यत्यथात्मानं देहं प्राणस्तनोति सः।**
**तदा स्तम्भादयो देहे विकाराः प्रभवन्त्यमी॥ इत्युपक्रम्य,**

**कदाचित् स्पन्दमानः स देहे प्राणश्चरत्ययम्।**
**यदाऽध्यास्ते धरां स्तम्भमन्तर्भावयते तदा॥ इत्यादिना।**

व्यभिचारिणो ब्रूते—

(सू. ४६) निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ।। ३१ ।।

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ।। ३२ ।।

सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मति व्याधिस्तथोन्मादस्तथा मरणमेव च ।। ३३

त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ।। ३४ ।।

निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम् । तेन

---

सङ्केतः

निर्वेदः स्वावज्ञा । ग्लानिः बलापचयः । शङ्का अनिष्टोत्प्रेक्षा । असूया अक्षमा । मदः प्रीतिसंमोहसंभेदः । खेदः श्रमः । कार्येष्वनादरः आलस्यम् । दैन्यं अनौजस्यम् । चिन्ता ध्यानम् । मोहः मूढता । स्मृतिः स्मरणम् । धृतिः सन्तोषः । व्रीडा मनस्सङ्कोचः । चपलता चेतोऽनवस्था । हर्षः चित्तप्रसत्तिः । आवेगः सम्भ्रमः । जडता अर्थप्रतिपत्तिः । गर्वः परावज्ञा । विषादः चित्तपीडा । औत्सुक्यं विलम्बाक्षमत्वम् । निद्रा मनस्संमीलनम् । अपस्मारः आवेशः । सुप्तं निद्रागाढावस्था । प्रबोधः विनिद्रता । अमर्षः प्रतिकर्तुमिच्छा । अवहित्थं आकारगोपनम् । उग्रता चण्डत्वम् । मतिः अर्थनिर्णयः । व्याधिः मनस्तापः । उन्मादः मनोविप्लवः । मरणं म्रियमाणता । त्रासः चित्तचमत्कारः । वितर्कः सम्भावनम् । त्रयस्त्रिंशत् इति नियमार्थम् । तेन अन्येऽप्यत्रैवान्तर्भवन्ति । तथाहि—दम्भः अवहित्थे । उद्वेगः निर्वेदे । क्षुत्तृष्णादि ग्लानौ इति । अन्ये तु—एवमाहुः । त्रयस्त्रिंशतैव स्थायी चर्वणयोग्यः स्यात् इति त्रयस्त्रिंशत् इत्युक्ताः इति । एषां विभावानुभावाः स्वयमूह्याः, न तु व्यभिचारिणः । एवं हि तदास्वादे रसान्तरमपि स्यात् । यत्रापि व्यभिचारिणि व्यभिचार्यन्तरं स्यात्, यथा—पुरूरवसः उन्मादे वितर्कचिन्तादि, तत्रापि रतिस्थायि-

भावस्यैव व्यभिचार्यन्तरयोगः । स वितर्कादिः केवलं उन्मादेन कृतोपरागः इति । एते च मिथः क्वापि विभावानुभावा भवन्ति । तथाहि—गर्वः अध्यात्मशास्त्रावेक्षणाद्यनुभावः आवेगजः असूयाकृत् इत्यादि ।

निर्वेदस्येति । आदौ अस्य न्यासः, स्थायिनां अन्ते नैकट्येन सामीप्यर्थमित्यर्थः ।

## बालचित्तानुरञ्जनी

व्यभिचारिण इति । स्वावमाननं निर्वेदः । तत्त्वज्ञानेन आपदा ईर्ष्यादिना वा अस्योत्पत्तिः । निष्प्राणता ग्लानिरित्याद्या याऽसकृत् क्षुद्भिरस्या उत्पत्तिः । अनर्थप्रतिपत्तिः शङ्का, परक्रौर्याद् दुर्नयाद्वा उत्पत्तिः । असूया परोत्कर्षाक्षमा । गर्वदौर्जन्यमत्युत्पन्नो मदः । हर्षोत्कर्षः, पानादस्योत्पत्तिः । श्रमः स्वेदः अध्वगत्यादेरस्योत्पत्तिः । आलस्य जृम्भादिमत्, जाड्यश्रमादिभिरस्योत्पत्तिः । दैन्यमनौजस्यम्, दौर्गत्यादेरस्योत्पत्तिः । चिन्ता ध्यानम् इष्टानिष्टौ । मोहो विचित्तता प्रीतिः दुःखावेगानुचिन्तनैरस्योत्पत्तिः । स्मृतिः संस्कारः । सदृशज्ञानचिन्ताद्यैरस्या उत्पत्तिः । धृतिः सन्तोषः ज्ञानशक्त्यादेरस्या उत्पत्तिः । हर्षः प्रसन्नतायां सत्यां अश्रूद्भेदादि उत्सवादिभ्यः अस्योत्पत्तिः । आवेगः संभ्रमः, अभिनयादिभिरस्योत्पत्तिः । जडता अप्रतिपत्तिः, इष्टानिष्टदर्शनाश्रुतिभिरस्या उत्पत्तिः । गर्वः मदः अभिजनलावण्यबलैः स्वेर्ष्यादिभिरस्योत्पत्तिः । निद्रा मनः संमीलनम्, चिन्तालस्यश्रमादिभिरस्या उत्पत्तिः । अपस्मारः आवेशः ग्रहदुःखाद्यैरस्योत्पत्तिः । अमर्षः अभिनिविष्टता अधिक्षेपापमानादेरस्योत्पत्तिः । अवहितत्वमाकारगोपनम् । उग्रता द्विष्टे पुरुषे अपराधदौर्मुख्यचौर्यैश्चण्डत्वम् । व्याधयः सन्निपाताद्याः । उन्मादः अप्रेक्ष्यकारिता, संनिपातग्रहादिभिरस्योत्पत्तिः । मरणं प्रसिद्धम् । गर्जितादिना उत्पन्नो मनःक्षोभस्त्रासः । वितर्को विचारः, सन्देहादस्योत्पत्तिः ।

## काव्यादर्शः

निर्वेदः स्वावमाननं, ग्लानिर्बलापचयः, शङ्कानिष्टोत्प्रेक्षा, असूयाक्षमा, मद आनन्दसंमोहसंभेदः शृङ्गारादिभिः, मनसः क्रियाविद्वेष आलस्यं, इति कर्तव्यतायामनालोचो मोहः । आवेगः संभ्रमः, जडतार्थाप्रतिपत्तिः, गर्वः परावज्ञा, विषादो मनःपीडा, औत्सुक्यं कालाक्षमत्वं, निद्रा मनः संमीलनं, अपस्मार आवेशः, सुप्तं निद्राया गाढावस्था, विबोधो विनिद्रत्वं, अमर्षः प्रतिचिकीर्षा, न बहिस्थं चित्तं यत्र पृषोदरादित्वाद् अवहित्थमवहित्था वा इङ्गिताकारगुप्तिः, मतिरर्थनिश्चयः, उन्मादः चित्तस्य विप्लवः । मरणमिति आदीर्घकालप्रत्यापत्तिरिति केचित् । 'मृङ् प्राणत्याग' इति धात्वर्थविचाराद् विषभक्षणपाशबन्धादीत्यन्ये । वितर्कः संभावना । विविधमाभिमुख्येन स्थायिधर्मोपजीवनेन स्वधर्मार्पणेन च चरन्तीति व्यभिचारिणः । ते हि चित्तवृत्तिविशेषा जन्ममध्ये समुचित्तविभावाभावाद् न भवन्त्यपि । तथा हि कृतरसायनस्य ग्लान्यालस्यादयो न भवन्त्येव । यस्यापि वा स्युर्विभावबलात्तस्यापि हेतुक्षये क्षीयमाणाः संस्कारशेषतां नानुबध्नन्त्येव ॥ नामतस्त्रयस्त्रिंशदिति, संख्यावचनं नियमार्थम् । तेनान्येषामत्रैवान्तर्भावः । यथा, उद्वेगस्य निर्वेदे, दम्भस्यावहित्थे, क्षुत्तृष्णादेर्ग्लान्यादौ । एषां विभावानुभावाः स्वयमूह्याः । तथा हि व्याध्यपमानाधिक्षेपदारिद्र्येष्टवियोगताडनतत्त्वज्ञानादिविभावो रुदितनिःश्वसितानुपादेयताद्यनुभावो निर्वेदः । एवमन्येऽपि ।

## विवेकः

अथ व्यभिचारिभावान् कथयति—निर्वेद इत्यादि । तत्र तत्त्वज्ञानापदीर्ष्याऽऽदिभिः स्वावमानना निर्वेदः । अत्र चिन्ता-ग्लानि-दैन्यादयो व्यभिचारिणो निःश्वासोच्छ्वासवैवर्ण्यादयोऽनुभावाः । यदाह—(ना.शा. ७/४७) बाष्पाम्बुपूर्णनयनः पुनः पुनः श्वासदीनमुखनेत्रः । योगीव ध्यानरतो भवति निर्वेदतः पुरुषः ॥ इति । निधुवन-कलाऽभ्यासश्रमादिजनिता निःप्राणता ग्लानिः । अस्यां वैवर्ण्यकम्पानुत्साहादयोऽनुभावाः । यदाह—कार्श्येन साऽभिनेया मन्दकममयेन कम्पेन । गदितैःक्षामक्षामैर्नयनविकारैश्च मन्दसञ्चारैः ॥ श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् । (ना.शा. ७/४९-५०) इति । परकौर्यपर्यालोचनयाऽऽत्मदुर्नयादिना स्पृष्टा (सृष्टा) निष्टाभ्यागम-नोत्प्रेक्षा शङ्का । अत्र कम्पास्यशोषस्वरान्यभाववैवर्ण्यपार्श्वावलोकनादयोऽनुभावाः । गर्हादौर्जन्यमन्युभूः परसौभाग्यैश्वर्यविद्याविलाससमुच्चयदर्शनासहिष्णुत्वमसूया । अत्रावज्ञादोषोद्घोषभृकुटीक्रोधेङ्गितादयोऽनुभावाः । मदिरापानादिकृतसम्मोहानन्दसम्भेदो मदः । अत्र स्खलद्गतित्वनिद्रात्रुटितहसितादयोऽनुभावाः । अयश्च तरुणमध्यनिकृष्टभेदात् त्रिधा । तत्र च हसनगानपरुषवचनशयनरोदनानि पञ्च । यदाह—(ना.शा. ७/६२) उत्तमसत्त्वः [स्वपिति] प्रहसति गायति च मध्यमप्रकृतिः । पुरुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥ इत्यादि । रताध्वगतत्वव्यायामादिना मनः शरीरयोः खेदः श्रमः । अत्र स्वेदाङ्गभङ्गमर्दनादयोऽनुभावाः । स्त्रीनीचविषयं कृत्य-वैरस्यमालस्यम् । अत्र जृम्भाऽऽसितादयोऽनुभावाः । यदाह (ना.शा. ७/७२) आलस्यं त्वभिनेयं खेदसमुत्थं स्वभावजं वापि । आहारवर्जनादारब्धानामप्यनारम्भात् ॥ इति । दारिद्र्यन्यक्कारकारणादनोजस्कता चेतसो दैन्यम् । अत्र वैवर्ण्यमलिनवसनादयः । ऐश्वर्येष्टद्रव्यापहारादिजनिता बहुप्रकारौत्सुक्यहेतुश्चिन्ता । अत्रोच्छ्वा-सनिःश्वसितसन्तापशून्यहृदयतानृजा(मृजा) विहीनत्वारत्यादयोऽनुभावाः । व्यसनाभिघातभयपूर्ववैरसंस्मरणानु-चिन्तनेन विचित्तता मोहः । अत्राज्ञानभ्रम पतनघूर्णनादर्शनादयः । समानज्ञानचिन्ताऽऽदिना संस्कारोद्बोधः स्मृतिः । अत्र भ्रूसमुन्नतिनखवाद्यादयः । ज्ञानशक्त्यादिभिः सन्तोषः समस्तभोगहेतुर्धृतिः । अत्र भयशोकविषादादिशून्यतया रोमाञ्चादयः । यदाह—(न. शा. ७/८५-८६)—विज्ञानशौचवैभवकृशांन्तिसमुद्भवा धृतिः सद्भिः । भयशोकवि-षादादौ रहिता तु सदा प्रयोक्तव्या ॥ प्राप्तानामुपभोगः शब्दस्पर्शरूपरसगन्धानाम् । अप्राप्तौ हि न शोको यस्यां हि भवेद्धृतिः सा तु ॥ इति अनुरूपाचारादिघटितो धाष्ट्र्याभावो व्रीडा । अत्राङ्गविवलनधोमुखत्वभूविलिखनव-स्त्राङ्गुरीयकादिस्पर्शनादयः । मात्सर्यरागद्वेषादिभिरविमृश्यकारित्वं चपलता । अत्र भर्तसनापारुष्यस्वच्छन्दाचर-णादयः । इष्टलाभस्तवादिजनितश्चित्तप्रसादो हर्षः । यदाह (ना. शा. १/९३) प्राप्ये वाऽप्राप्ये वा लब्धेऽर्थे प्रियसमागमे वापि । हृदयमनोरथलाभे हर्षः सञ्जायते नृणाम् ॥ अत्र नयनवदनप्रसादप्रियवादाश्रुपुलकहास्यस्वेद-गद्गदादयः । उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनादिभिः सम्भ्रम आवेगः । अत्रोत्पातो विद्युदु-ल्कानिर्घातादिः । तत्र सर्वाङ्गस्रस्ततामुखवैवर्ण्यविषादादयोऽनुभावः । वातकृतेऽवगुण्ठनाक्षिमर्दनवस्त्रसमूह-नत्वरितगमनादयः । वर्षाकृते सर्वाङ्गसंपिण्डनप्र[धा]बल(न) च्छन्नाश्रयणादयः । अग्निकृते धूमाकुलने-त्रताऽङ्गसंवेगादयः । कुञ्जरोद्भमणकृते त्वरितापसर्पणचपलगमनभयस्तम्भवेपथुपश्चादवलोकनादयः ।

प्रियश्रवणकृतेऽभ्युत्थानालिङ्गनवस्त्राभरणादिप्रदानाश्रुपुलकादयः । अप्रियश्रवणकृते भूमिपतनपरिदेवि-तपरिवर्तनपरिधावितविलापाक्रन्दादयः । व्यसनाभिघातकृते तु सहसाऽपसर्पणागजतुगारोहणादय इति । इष्टानिष्ट-श्रवणदर्शनव्याध्यादिभिः सर्वकार्याप्रतिपत्तिर्जडता । अत्र निमिषनिरीक्षणविस्मित ˙˙ (?)

श्वासाधिक्यकार्श्यपरवशत्वादयः । कुललावण्यधनैश्वर्यादिपर्याप्तो मदो गर्वः । अत्रान्यधर्षणसविलासाङ्गनिरीक्षणादयः ।आरब्धकार्यवैधुर्यादिना सत्त्वभ्रंशो विषादः । अत्र निःश्वासोच्छ्वाससन्तापसहायान्वेषणादयः । रम्येछा(क्षा) रतसम्भ्रमादिना समयक्षेपासहत्वमौत्सुक्यम् । अत्रोच्छ्वासत्वराऽभ्यासहृत्तापस्वेदविभ्रमादयः । चिन्ताऽऽलस्यश्रमादिभिर्मनःसंमीलनं निद्रा । अत्र जृम्भणाङ्गभङ्गाक्षिनिमीलनादयः । ग्रहदुःखादिवैशसादपस्मारो व्याधिविविशेषः । अत्र भूपातकम्पस्वेदलालाफेनोद्गामादयः । निद्राजनितमिन्द्रियाणामस्तमयनं सुप्तम् । अत्र श्वासोच्छ्वासावेव । यदाह-(ना.शा.७/१७) निःश्वासैः सोच्छ्वासैर्मन्दाक्षिनिमीलननि(नै)र्निश्चेष्टः । सर्वेन्द्रियसंमोहः सुप्तं स्वप्नायिते व्यङ्ग्यम् ॥ निद्राविद्रवहेतुभ्यश्चैतन्यावगमो विरोधः (विबोधः) । अत्र जृम्भाऽक्षिनिमीलनादयः । अधिक्षेपापमानादेरभिनिवेशोऽमर्षः । अत्र स्वेदशिरःकम्पनतर्जनताडनादयः । लज्जावशाद्धर्षप्रकर्षादिजनिताङ्गवैकृतगोपनमवहित्थम् । अत्र व्यापारान्तरासङ्गनम्राननत्वाहयः । चौर्याभिग्रहणयोग्यनृणामपराधाच्चण्डत्वमुग्रता । अत्र स्वेदशिरः कम्पतर्जनताडनादयः । शास्त्रादिपर्यालोचनया भ्रान्तिच्छेदात्तत्त्वनिर्धारणं मतिः । अत्र हर्षधृतिगर्वादयः । विरहादिवैशसाच्छरीरातङ्कः सन्निपातादिरूपो व्याधिः । अत्राज्ञानस्वेदकम्पादयो यथास्वमनुभावाः । उत्कण्ठाऽतिशयहर्षशोकादिभिः सन्निपातग्रहादिकृतैरप्रेक्षाकारित्वमुन्मादः । अत्रास्थानरुदितगीतहसितादयः । इतरत् सुप्रसिद्धम् । वृत्तानुवादे तच्छस्तमुत्पाद्ये प्रायशो नहि । एकस्मिंस्तु मृतेऽप्यन्तो जीवेद् यदि कथञ्चन । कार्श्येन गणना तत्र म्रियते चेन्न सम्मतिः (सङ्गतिः ?) ॥ (शृ० ति० २/१८, १९) अदीर्घप्रत्यापत्तिरिति केचित्, मृङ् प्राणत्याग इति धात्व(र्था) भि(ति)चारात्( ?) । यथा नागानन्दे पञ्चमेऽङ्के करुणरसे नायकस्य मृतस्य देवीप्रसादात्तत्क्षणं जीवितप्रत्यापत्तिः । तद्वद् यदि विप्रलम्भे स्यात्तदा न विरोधः । यथा वा कादम्बरीपरिणयाख्ये नाटके दीर्घकालप्रत्यापत्तौ तु तस्यान्तरा प्रवाहविच्छेद एवेत्येवंविधेतिवृत्तोपनिबन्धनं रससमवहितचेतसा कविना परिहर्तव्यमेव । विषभक्षणपाशकरणादीनीत्यन्ये अतएव (ध्व. आ. वृ. लोचन १६५ पृ.; अभि. भार. १ म. ३५७ पृ.; २ य: ४२७ पृ.) शृङ्गारे मरणे व्यवसायमात्रं विषभक्षणादिरूपमुपनिबन्धन्ति, नतु तदेव । अन्यत्र कामचारो यथा (म. बी. च. १/३९) पश्यन्तु भवन्तस्ताडकाम् । हृन्मर्मभेदिपतदुत्कटकङ्कपत्रसंवेगतत्क्षणकृतस्फुरदङ्गभङ्गा । नासाकुटीरकुहरद्वयतुल्यरूपनिर्यद्वहद्बुद्बुदलदसृक्प्रसरा मृतैव ॥' (द.रू. ४/२० वृ.) आकस्मिकगर्जितादिजनितो मनः क्षोभस्त्रासः । अत्र सम्भ्रमोत्कम्पितादयः । सन्देहप्रभवो विचारस्तर्कः (विचारो वितर्कः) । अत्र भ्रूलताशिरोऽसंविविवर्त्तनादयो नामतः प्रसिद्धाः । उद्वेगस्य तु बीभत्सव्यभिचारित्वमन्यैरुक्तम् । एतस्योक्तेष्वेवान्तर्भावो द्रष्टव्यः ।

## दीपिका

व्यभिचारिण इति-प्रत्यभिज्ञायामानलौकिकदशाऽऽविर्भावतिरोभावस्वभावोव्रीडाऽऽदिरास्वादाङ्कुरणदशायां व्यभिचारीत्युच्यते । आस्वाददशायान्तु तस्य नानाऽऽकारकर्बुरितघनानन्दस्य द्वित्रिक्षणमात्रजीवितस्य, प्रबन्धेष्ववान्तरानेकवाक्यानां, मुक्तकादौ तु तस्यैव काव्यस्य, पुनः पुनर्भावनया सन्तन्यमानस्वरूपस्यांशानां स्थायिसञ्चारिताविभागो नास्त्येव । अतएव मेघदूतादावुन्मादादिः सञ्चार्यन्तरानुगमसन्तन्यमानतालक्षणाऽनुबन्धयोगेऽपि स्थायित्वं न लभते पूर्वप्रसिद्धपात्रगतस्थैर्यप्रत्यभिज्ञाविरहात् । तत्र हि रत्यादय एव स्थिराः, उन्मादादादयस्तु बुद्बुदवत् मग्ननिमग्नस्वरूपा एवं । तथा च हासशोकादिनां क्वचन स्थायिनामपि रत्युत्साहादौ तदभावात्

सञ्चारिता। त्रयस्त्रिंशद्वयाभिचारिण इति त्वयोगत्त्वव्यवच्छेदार्थम्। एते हि न क्वचित् स्थायिनः। एतेषाञ्च सात्त्विकेभ्यः सत्त्वाविर्भावविशेषेभ्यो न वैधर्म्यं, किन्तु रत्यादिभ्य एव।

यद्वा तेषां नान्तःकरणपरिणतित्वमिति( ?) न ते व्यभिचारिणः।.व्यभिचारिणो हि भावाश्चित्तवृत्तिविशेषाः एवेति सकलमनाकुलम्। चिन्ताग्लानिदैन्यादिकृततत्त्वज्ञानापदीर्ष्यादिजं स्वावमाननं निर्वेदः। निधुवनादिजा निष्प्राणायमानताकम्पानुत्साहादिहेतुर्ग्लानिः। आत्मदुर्नयादेरनिष्टोत्प्रेक्षणकृतकम्पास्यशोषवैवर्ण्यादिहेतुः शङ्का। गर्वदौर्जन्यादिभूरवज्ञादोषैकदर्शनादिकृदसूया परैश्वर्यासहिष्णुता। मदिराऽऽदिकृतः सम्मोहानन्दसम्भेदः स्खलनहसितादिकारी मदः। स्वेदाङ्गभङ्गादिकृतमनःखेदः सम्भोगादिजः श्रमः। जृम्भाऽऽसितादिकृत्क्रियावैरस्यं नीचादेरालस्यम्। वैवर्ण्यमलिनवसनताऽऽदिहेतुर्दारिद्र्यादेरनौजस्यं दैन्यम्। सन्तापशून्यमनस्त्वादिहेतुरैश्वर्यभ्रंशादिकृता चित्तव्यासक्तिश्चिन्ता। भयव्यसनादिजन्या पतनघूर्णनादिजनिका विचित्तता मोहः। सदृशदर्शनादितो रससमुल्लासादिहेतुर्वासनोद्बोधः स्मृतिः। अभीष्टलाभादिजश्चित्तसन्तोषो वदनविकाशादिहेतुर्धृतिः। असदृशाचरणादितो धाष्ट्र्याभावो भूलिखनावाङ्मुखत्वादिहेतुर्व्रीडा। भर्त्सनादिहेतुरविमृष्यकारित्वं मात्सर्य्यद्वेषादिकं चपलता। बन्धुसङ्गमादिजश्चित्तप्रसादो नयनोल्लासपुलकादिहेतुर्हर्षः। विस्मृतकम्पादिकृतविभवौत्सुक्यादिजः सम्भ्रम आवेगः। इष्टानिष्टदर्शनश्रवणाद्युत्थाऽप्रतिपत्तिरनिमेषनेत्रताऽऽदिहेतुर्जडता। लावण्यैश्वैर्यादिजः सविलासाङ्गवीक्षणादिकृच्चित्तोत्सेको गर्वः। प्रारब्धासिद्ध्यादिजः सहायान्वेषणत्वादिहेतुः सत्त्वभ्रंशो विषादः। सुरतादौ कालक्षेपाक्षमत्वं स्वेदादिकृदौत्सुक्यम्। चिन्ताऽऽदिमनःसम्मीलनं जृम्भाऽऽदिहेतुः निद्रा। चित्तविक्षेपाग्रहावेशदुःखादिजोऽपस्मारः। निद्राऽऽलस्यस्वप्नायिताऽऽदिहेतुर्विषयाननुभूतिः सुप्तम्। निद्राक्षये चेतनाशयः प्रबोधः। अवज्ञाऽऽदेरभिनिविष्टत्वं तर्जनादिकृदमर्षः। व्यापारान्तरासङ्गादिकृद् व्रीडादेर्विक्रियागुप्तिरवहित्थम्। चोरादौ चण्डत्वं तर्जनताडनाऽऽदिकृदुग्रता। हर्षावेगादिहेतुः शास्त्रादेस्तत्त्वज्ञानं मतिः। कामशोकादिजः कम्पस्वेदादिहेतुरन्तःकरणे परोधो व्याधिः। हर्षशोकाग्रहावशोत्कण्ठादिजोऽस्थानहसितगीतरुदितकृच्चित्तसम्मोह उन्मादः। शोकादितो जीवोद्गमारम्भान्तविविधचेष्टाकृन्मरणम्। संभ्रमोत्कण्ठादिहेतुर्गर्वितादेर्मनःक्षोभस्त्रासः। सन्देहप्रभवो विमर्षः शिरोऽङ्गुल्यादिनर्त्तनकृद्वितर्कः। भावाश्चित्तवृत्तयः तेन मरणादीनां जीवनपरित्यागरूपता निरस्ता। शेषास्तु चित्तवृत्तयः। काश्चिदास्वेवान्तर्भवन्ति, काश्चिदेतासामेव विभावानुभावरूपा इति पृथङ्नोक्ताः। अतएवोक्तं, नामत इति। नामत उद्देशमात्रेणोक्ताः स्वयञ्च विविच्य बोद्धव्या इत्यर्थः। स्थायिताऽभिधानार्थं स्थायित्वसूचनार्थम्। स्थायिनां सन्निकर्षश्चर्वणक्षणेऽत्रास्तीत्यारम्भादेव रसालयष्टिचर्वणन्यायेन सान्द्रानन्दमयानुविद्धाङ्गचमत्कारो रसः, पानकादौ कर्पूराद्यंशवत्। किञ्चिल्लज्जाऽऽदिप्रयुक्तचमत्कृतित्वे सञ्चारिप्राधान्यं, नीरसप्रायशुष्कनारिकेलचर्वणवत् पर्यन्ते किञ्चिदास्वादे भावमात्रम्—इति स्वसंवेदनमूलानादिसहृदयपर(म्परा)-मननप्रसिद्धिकृत एव हि रसभावव्यपदेशविभागः।

## दर्पणः

व्यभिचारिण इति।

विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥

तत्र तत्त्वज्ञानापदीर्ष्यादिभिश्चिन्ताग्लानिदैन्यादिकृत् स्वावमाननं निर्वेदः। सदृशदर्शनादिजोऽनुमानादिकृद्वासनोद्वेगः स्मृतिः। यथा मम—

**स्नपयति समवायं स्मेरवक्त्रारविन्द-**
**स्फुटदधरपुटान्तर्दर्शिता [न्त] र्विभेदम्।**
**अलसचलितमौर्वी......किञ्चिदाङ्गं**
**कलयति च मनो मे पक्ष्मलाक्ष्याः कटाक्षः॥**

हर्षशोकप्रहारेणोत्कण्ठादिजोऽस्थानहसितगीतप्रलपितादिकृच्चित्तसम्मोह उन्मादः। यथा ममैव—

**किं कन्दर्पमुखं पिबाम मधुपैरेतैर्नवैः पल्लवैः**
**च्युतशरैः करोति जगतां जेतु प्रयासं वृथा।**
**निद्रातुं शयितुं प्रयातुमथवा स्थातुं प्रभुः को भवेत्**
**एकोऽसौ कलकण्ठकष्ठकुहरे जागर्ति चेत् पञ्चमः॥**

एवमन्येषामपि व्यभिचारिणां कारणकार्य्यस्वरूपोदाहरणानि लोकप्रसिद्ध्या मदीयसाहित्यदर्पणोक्तरीत्या बोद्धव्यानि। भावाश्चित्तवृत्तयो नाम। उद्देश्यतः त्रयस्त्रिंशदुक्ताः। अन्या अपि चित्तवृत्तयः एषामेव विभावानुभावरूपतया एष्वेवान्तर्भवितुमर्हन्तीत्याशयः। किञ्च रत्यादीनामपि स्थायित्वाभावे सञ्चारित्वमेव, तल्लक्षणायोगात्। हासक्रोधादयः शृङ्गारवीरादौ लवणाकर इव बुद्बुद्प्राया उन्मग्ननिर्मग्ना दृश्यन्ते। अयमेव विशेषः। निर्वेदादयः पुनर्व्यभिचारिण एव न कदाचन स्थायिनो भवितुमर्हन्ति। ये तु विक्रमोर्वशीये मदीयचन्द्रकलाख्यनाटिकाप्रभृतिषु तु उन्मादादेर्ग्रन्थव्यापित्वम्। न तूपात्तस्थैर्यम्। तदुक्तं मम साहित्यदर्पणे उन्मादादेर्न तु स्थायिमात्रेण स्थैर्यमिति।

## साहित्यचूडामणिः

अथ व्यभिचारिणोऽप्युपादत्ते निर्वेदेति। 'उद्भटोक्तमुद्देशमात्रमेतत्। लक्षणपरीक्षे बहिर्लक्षणीये। नामभिः समाख्याताः अन्वर्थतया परिज्ञाताः। एतेषां च स्वशब्दोपादानं दोषतया वक्ष्यते 'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता" इति [सप्तमे]। व्यज्यमानत्वेन सामान्येन व्यभिचारित्वमात्रं निर्व्यूढमिति पृथग्लक्षणपरीक्षोपेक्षा ग्रन्थकारस्य।

ननु व्यभिचारिगणनायां हर्षौत्सुक्यादिसद्भावेऽपि किमर्थममङ्गलप्रायस्य निर्वेदस्य प्रथममुपादानमित्यत्राह— निर्वेदस्येति। तत्त्वचिन्तायां तु निर्वेदस्य न किञ्चिदमङ्गलप्रायत्वं प्रत्युत मङ्गलप्रायत्वमित्याह—अमङ्गलप्रायस्येति। अभ्युपगम्यापि परिहरति व्यभिचारित्वेऽपीति। निर्वेदस्य व्यभिचारित्वमनेकरससाधाणम्। रसविशेषं प्रति स्थायित्वमसाधारणम्। अतः प्राधान्यात् प्रथममुपादानम्।

## सम्प्रदायप्रकाशिनी

इत्थं संस्थायिव्यभिचारिभावं रसाष्टकं काव्यनाट्यसाधारणं विचार्य काव्यैकगोचरं शान्तरसं प्रतुष्टूषुराह—निर्वेदस्यामङ्गलेत्यादि । निर्वेदग्लानीति सूत्रे प्रथममुपादानं स्थायिताभिधानार्थं स्थायित्वज्ञापनायेत्यर्थः ।

## मधुमती

निर्वेदत्यादि ।

**विशेषेणाभितः काये स्थायिनं बालयन्ति ये ।**
**अनुभावादिहेतूस्तान् वदन्ति व्यभिचारिणः ॥**

इति व्यभिचारिसामान्यलक्षणम् । बालयन्ति—सम्यगभिव्यञ्जयन्ति ।

विशेषलक्षणानि तु—

**तत्त्वज्ञानापदीर्ष्यादेः निर्वेदः स्वावमाननम् ।**
**बलस्यापचयः ग्लनिः आधिव्याधिसमुद्भवः ॥**
**अनिष्टाभ्यागमोत्प्रेक्षां शङ्कां आचक्षते बुधाः ।**
**परोत्कर्षाक्षमाऽसूया गर्वदौर्जन्यमन्युना ॥**
**संमोहानन्दसंभेदः मदिरादिकृतो मदः ।**
**मनश्शरीरयोः खेदः क्रियाऽतिशयजः श्रमः ॥**
**क्रियाविद्वेष आलस्यं सुखसंविन्मदादिभिः ।**
**सत्त्वत्यागादनुत्कर्षः वाक्यादेः दैन्यमुच्यते ॥**
**प्रयत्नपूर्विकाऽर्थेषु स्मृतिः चिन्तेति कथ्यते ।**
**सुखदुःखादिजनितः मोहः चित्तस्य मूढता ॥**
**स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ।**
**अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता धृतिः ॥**
**चेतोनिमीलनं व्रीडा स्तुत्यकार्यक्रियादिभिः ।**
**आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ॥**
**मनः प्रमोदो हर्षः स्यात् इष्टावाप्तिस्तवादिभिः ।**
**आदरातिशयाच्चेतस्या वेगः सम्भ्रमो मतः ॥**
**क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ।**
**गर्वोऽनयेषां अवज्ञानं आत्मसम्भावनादिभिः ॥**
**विषादः चेतसो ग्लानिः उपायाभावनाशयोः ।**
**इष्टानवाप्तावौत्सुक्यं अभिलाषस्तदाप्तये ॥**

**निद्राव्यापारवैमुख्यं इन्द्रियाणां श्रमादिभिः ।**
**आवेश ग्रहदुःखाद्यैः अपस्मारः तथाविधः ॥**
**निदद्धिजनितं सुप्तं इन्द्रियाणां निमीलनम् ।**
**निदापगमहेतुभ्यः प्रबोधः चेतनागमः ॥**
**क्रोधः कृतापकारेषु स्थिरोऽमर्षत्वमश्नुते ।**
**अवहित्थं तु लज्जादेः हर्षाद्याकारगोपनम् ॥**
**विदुः वान्दण्डपारुष्यं उग्रतामपकारिषु ।**
**शास्त्रोक्तार्थानुसन्धानात् अर्थनिर्धारणं मतिः ॥**
**विरहादेः मनस्तापः शरीरातङ्कदो गदः ।**
**उत्कण्ठाहर्षशोकादेः उन्मादः चित्तविभ्रमः ॥**
**मरणं मरणोद्योगः विरहादिभवो मतः ।**
**त्रासः चित्तचमत्कारः आकस्मिकभयादिभिः ॥**
**ऊहो वितर्क इत्युक्तः पदार्थेषु यथामति ॥**

विभावलक्षणं तु—

**बहवोऽर्थाः विभाव्यन्ते वागङ्गाभिनयात्मकाः ।**
**अनेन यस्मात् तेनायं विभावः इति कीर्तितः ॥** इति ॥

विभाव्यन्ते—ये हि लोके रामादिगतरतिभावानां अनुमापकाः सीतादयः, तैरेव काव्यनाट्यनिवेशितैः साधारण्येनोपस्थितैः सामाजिकरत्यादिभावाः आस्वादाङ्कुरप्रादुर्भावयोग्याः । क्रियन्ते—इत्यर्थः ।

अनुभावलक्षणं तु—

**अनुभावो विकारस्तु भावसंसूचनात्मकः ।**
**इति । स्थायिव्यभिचारिसंसूचनात्मकः इत्यर्थः ॥**

वृत्तिकृता तु—'अलौकिकविभावनादिव्यापारवत्त्वात्' इति वदताविभावनानुभावनसञ्चारण व्यापारवत्त्वं विभावानुभावव्यभिचारिलक्षणं कटाक्षितमेव । अतः कण्ठतो नोक्तमिति भाव्यम् ।

काव्ये शान्ताभावभ्रमं निवारयन्नाह—निर्वेदस्येति । अलौकिकं सुखमयं रसमधिकृत्य प्रकृतशास्त्रप्रवृत्तेः, निर्विण्णस्य च तत्र अनधिकारः इति, निर्वेदस्य अमङ्गलप्रायत्वं उक्तम् । स्थायित्वाभिधानार्थमिति । स्थायिप्रकरणानुद्दिष्टस्येति शेषः । तेन—क्रोधरूपामर्षस्य स्थायित्वेऽपि न कथं प्रथमाभिधानम् । इति निरस्तम् । तस्य स्थायिप्रकरणे एव उद्देशात् ।

इदुमुपलक्षणम्—अन्येऽपि स्थायिनः रसान्तरेषु उपादीयमानः व्यभिचारितां भजन्ते इति। इयान् विशेषः—यत्—निर्वेदस्य व्यभिचारितया प्रसिद्धिः अन्येषां तु स्थायितया। स्थायिनश्च सर्वे एव व्यभिचारिणः, व्यभिचारिणश्च सर्वे न तथा, इत्यपरो विशेषः। तदिदं वक्ष्यति—'समाख्या तास्तु नामतः'। इति॥

## विस्तारिका

भावनिरुक्तेर्व्यभिचारिघटितत्वेन तानाह—व्यभिचारिण इत्यादि। स्वनामतोऽसाधारणनाम्ना। तेन लक्ष्यपर्यालोचनयैव लक्षणलाभ इत्यर्थः। तत्सामान्यलक्षणम्—

**विशेषेणाभिगुरुयेन चरन्तो व्यभिचारिणः।**
**स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥** इति।

विशेषणानां तु निर्वेदादीनां लक्षणस्य लक्ष्यात्मविवेचनेनैव लब्धेरित्यर्थः।

तथाहि—

**तत्त्वज्ञानाद् यदीर्ष्यादेनिर्वेदः स्वावमाननम्।**
**तत्र चिन्ताऽश्रुनिःश्वासवैवर्ण्योच्छ्वसितादयः॥**

यथा—

**किं करोमि क्व गच्छामि कमुपैमि दुरात्मना।**
**दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः॥**

इत्यत्रापदा स्वावमाननम्।

बलस्यापचयो ग्लानिः। यथा—

**किसलयमिव मुग्धं बन्धनाद्विप्रलूनं**
**हृदयकुसुमशोषी दारुणी दीर्घशोकः।**
**ग्लपयति परिपाण्डु क्षाममस्याः शरीरं**
**शरदिज इव धर्मः केतकीगर्भपत्रम्॥** इति।

शङ्का अनिष्टसमुन्नयः। यथा—

**आनीतैव मया सीता किं नानीत पुरद्विषः।**
**स चेदायाति लङ्कायां न जाने किं भवेत् तदा॥'**

परोत्कर्षाक्षमाऽसूया शङ्कोपहसितादिकृत्।

यथा—

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते।
यानि त्रीण्यकुतोभयान्यपि पदान्यासन् खरायोधने
यद्वाः कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥

इति रामं प्रति कुशोपहासः ।

संमोहानन्दसंभेदो मदो मद्योपयोगजः ।

यथा—

प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥

श्रमः खेदोऽध्वगत्यादेर्निद्राश्वासादिकृन्मतः ।

यथा—

अलसवलितमुग्धान्यध्वसंजातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणाली दुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामुपेता ॥

श्रमादिजन्यमालस्यं पुरुषार्थेष्वनादरः ।

यथा—

चलति कथञ्चित् पृष्टा यच्छति वचनं कथञ्चिदालीनाम् ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥

दोर्गत्यादेर नौजस्यं दैन्यं मलिनतादिकृत् ।

यथा—

वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्तापि नो ।
यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजंवधूं श्वश्रूश्चिरं रोदिति ॥

इत्यत्र ।

ध्यानं चिन्ता हितानाप्तौ सन्तापादिकरी मता।

'पश्यामि त्वामित इतः पुरतश्च पश्चात्' इत्यादि।

मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः।

यथा—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव॥ इति॥

स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते।

यथा—

'करजुअगहि अजसोआत्थण मुहविणिवेसि आहरपुटस्स।
संमहिअप्पवचअरास्म णमहअ कण्हस्स रोमञ्चं॥

सन्तोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत्।

यथा—

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥ इति।

सङ्कोचखेदनैर्व्रीडा वैवर्ण्याधोमुखत्वकृत्।

यथा—

दर्पणेषु परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि च चकार लज्जया॥

वाक्पारुष्यकरीचेतोऽनवस्था चापलं मतम्।

वाक्पारुष्येत्युपलक्षणम्।

वधबन्धयोरनवस्थाऽविमृष्यकारिता।

यथा—

कश्चित् कराभ्यामुपगाढनालमालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तःपरिवेशशोभि लीलारविन्दं भ्रमयाञ्चकार॥ इति॥

मनःप्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः।

यथा—

**आगते दयिते बाला हर्षोत्कर्षवशंवदा।**
**उत्तरीयं न जानाति विभ्रष्टं स्तनमण्डलात्॥** इति।

आवेगः सम्भ्रमो राजगजवर्षादि सम्भवः।

यथा—

**अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः।**
**क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम्॥**

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनप्रकृतिः।

यथा—

**एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति।**
**सा सखीभिरुपदिष्टमाकुला नास्मरत् प्रमुखवर्तिनि प्रिये॥**

निन्दादितः परावज्ञा गर्वोऽसूयादिकृद् भवेत्। इति।

यथा—

**धृतायुधो यावदहं तावदन्यैः किमायुधैः।**
**यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति॥**

इत्यत्र।

सत्त्वभ्रंशो विषादः स्यात् सहायान्वेषणादिकृत्।

यथा—

**व्यर्थं यत्र हरीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा**
**प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि।**
**मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः**
**सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिये क्वासि मे॥** इति।

औत्सुक्यं वाञ्छितप्राप्तौ कालाक्षेपासहिष्णुता।

यथा—

**आलोकमार्गं सहसा व्रजन्त्या कथाचिदुद्वेष्टनवीतमाल्यः।**
**बद्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि हि केशपाशः॥**

इत्यत्र।

**मनःसंमीलनं निद्रा कलमश्रममदादिभिः ।**

संमीलनं विषयवैमुख्यम् । यथा—

**निद्रानिमीलितदृशो मदमन्थराणि**
**नात्यर्थवन्ति न च यानि निर्थकानि ।**
**अद्यापि चेन्मृगदृशो मधुरायताक्ष्या-**
**स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥**

मनः क्षेपस्त्वपस्मारो ग्रहावेशादि सम्भवः ।

व्याधित्वेनस्य प्राप्तावपि पुनरुपादानं बीभत्सभयानकसम्भवनियमाय । व्याध्यन्तरस्य तु विप्रलम्भादा-वपीति । यथा—

**आश्लिष्टभूमिं रसितारमुच्चैर्लसद्भुजाकारबृहत्तरङ्गम् ।**
**फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥**

सुप्तं निद्रामुपेतस्य विषयानुभवस्तु यः ।

विषयेत्यादि स्वाप्रज्ञानमित्यर्थः । यथा—

**एते लक्ष्मण जानकीविरहितं मां खेदयन्त्यम्बुदा**
**मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।**
**इत्थं व्याहृतपूर्वजन्मचरितो यो राधया वीक्षितः**
**सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः ॥**

निद्राशमनहेतुभ्यो विबोधश्चेतनागमः ।

यथा—

**प्रहरकर्मपनीय स्वं निदिद्रासतोच्चैः**
**प्रतिपदमुपहूतः केनचिज्जागृहीति ।**
**मुहुरविशदवर्णं निद्रया दीर्घदीर्घं**
**ददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥**
**कोप एव स्थिरतरो ह्यमर्ष इति कथ्यते ।**

यथा—

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।**
**सञ्चूर्णयामि गदया न सुयोधनोरुं**

**सन्धिं करोतु भवतां नृपतिः पणेन।**

अवहित्थं तु लज्जाद्यैर्हर्षाद्याकारगोपनम्।

यथा—

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।**
**लीलाकमलपत्राणि गणयामास पार्वती॥**

अधिक्षेपावमानादेश्चेतश्चण्डत्वमुग्रता।

यथा—

**प्रणयिसखीसलीलपरिहासरसाधिगतै-**
**र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।**
**वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः**
**पततु शिरस्ययम काण्डयमदण्ड इवैष भुजः॥**

शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणं गतिः।

यथा—

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकंरणप्रवृत्तयः॥**

विरहादेर्मनस्तापो व्याधिर्दुःस्थाङ्गतादिकृत्।

यथा—

**पाण्डु क्षामं वदनं हृदयं सरसं तवालसञ्च वपुः।**
**आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः॥**

सन्निपातग्रहादिभ्य उन्मादश्चित्तविभ्रमः।

तदुक्तम्—

**उत्तमानां विप्रलम्भो भवेत् प्रियवियोगतः।**
**नीचानां विभवभ्रंशात् सर्वेषां सन्निपाततः॥**

यथा मेघदूते।

**रोगाद्यैः प्रागवस्था तु मरणस्य मृतिर्मता।**

मुख्यस्य भावत्वायोगात्। यथा—"राममन्मथशरेण ताडिता" इत्यादि।

वस्तुतस्तु मूर्च्छाविशेष एव मरणम्, अन्यथाऽऽलम्बनोच्छेदेनभावत्वानुपपत्तेः। अत एवोक्तम् 'वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः।'इति।

**औत्पातिकैर्मनःक्षेपस्त्रासः कम्पादिकारकः।**
**पूर्वापरविचारोत्थं भयं त्रासात् पृथग्भवेत्॥**

यथा—

**परिस्फुरन्मीनविघट्टितो रवः सुराङ्गनास्त्रासविलोलदृष्टयः।**
**उपाययुः कम्पितपाणिपल्लवा सखीजनस्यापि विलोकनीयताम्॥**

तर्को विचारः सन्देहाद् भ्रूशिरोऽङ्गलिनर्तकः।

विचारो विमर्षः। यथा—

**अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः॥**

**इत्यसंभाव्यमथवा विचित्रा वस्तुशक्तयः।**

प्रयोजनवशादेषामुपनिबन्धः, न रसविशेषनियमेनेति पृथगुपादानम्। विभावनुभावौ तु लोकादनवगन्तुं शक्याविति न तयोरभिधानमिति भावः।

### सारबोधिनी

भावाभिव्यक्तेर्व्यभिचारिघटितत्वेन तानाह व्यभिचारिण इति। सामान्यलक्षणं प्रागुक्तम्। अथैषां विशेषलक्षणानि। यथा—

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।**
**बलस्यापचयो ग्लानिराधिव्याधिसमुद्भवः॥**

**चिन्ता वैक्लव्यजनिका शङ्कानिष्टासमुन्नयः।**

यथा—

**आनीतैव मया सीता किं नानीतं पुरुद्विषः।**
**स चेदायाति लङ्कायां न जाने किं भवेत्तदा॥**
**परोत्कर्षाक्षमाऽऽसूया शङ्कोपहसितादिकृत्।**
**संमोहानन्दसंभेदो मदो मद्योपयोगजः॥**
**श्रमः स्वेदोऽध्वगत्यादेर्निद्राश्वासादिकृन्मतः॥**
**श्रमादिजन्यमालस्यं पुरुषार्थेष्वनादरः॥**
**दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत्।**
**ध्यानं चिन्ताहिताप्राप्तिः सन्तापादिकरी मता॥**

मोहो विचित्तता भीतिदुःखवेगानुचिन्तनैः ।
स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ॥
अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।
सङ्कोचश्चेतसो व्रीडा वैवर्ण्याधोमुखत्वकृत् ॥
वाक्पारुष्यकरी चित्तस्यावस्था चापलं मता ।

वाक्पारुष्यकरीत्युपलक्षणं वधबन्धनयोः । अवस्था अविमृश्यकारिता ।

मनः प्रसादो हर्षः स्यादिष्टावाप्तिःस्तवादिभिः ।
अनर्थातिशयाच्चेतस्यावेगः संभ्रमो मतः ॥
क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ।
मनःक्षेपस्त्वपस्मारो ग्रहावेशादिसंभवः ॥

व्याधित्वेनास्य प्राप्तावपि पुनरुपादानं बीभत्सभयानकयोः संभवनियमाय । व्याध्यन्तरस्य विप्रलम्भादावपि संभवात् ।

सुप्तं निद्रामुपेतस्य विषयानुभवस्तु यः ।
निद्राशमनहेतुभ्यो विबोधश्चेतनागमः ॥
विषयेत्यादि । स्वोपज्ञानमित्यर्थः ।

कोप एव स्थिरतरो ह्यमर्ष इति कथ्यते ॥
अवहित्थं तु लज्जाद्यैर्हर्षाद्याकारगोपनम् ।
अधिक्षेपापमानादेश्चेतश्चण्डत्वमुग्रता ॥
शास्त्रोपदेशमन्त्राद्यैरर्थनिर्धारणं मतिः ।
विरहादेर्मनस्तापो व्याधिर्दुःखाङ्गतादिकृत् ॥
संनिपातग्रहादिभ्य उन्मादश्चित्तविभ्रमः ।
रोगादिभिः प्रागवस्था मरणस्य मृतिर्भवेत् ॥

मुख्यमरणस्य भावत्वायोगात् । वस्तुतस्तु मूर्च्छाविशेष एव मरणम् । अन्यथा आलम्बनोच्छेदे भावत्वानुपपत्तेः । अत एवोक्तम्—'वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरत'इति ।

औत्पातिकैर्मनःक्षेपस्त्रासः कम्पादिकारकः ।
पूर्वापरविचारोत्थं भयं त्रासात् पृथग् भवेत् ॥
तर्को विचारः सन्देहाद् भ्रूशिरोऽङ्गुलिनर्तकः ॥

विचारो विमर्शः । ग्रन्थविस्तरभयात् सुगमत्वाच्चेति नोदाहृताः ।

काव्यप्रदीपः

यद्यपि विभावानुभावप्रतिपाद्यव्यञ्जकत्वपुरस्कारेण व्यभिचारिभेदोपदर्शने न कश्चिन्न्यायः, तथापि व्यङ्ग्यविवेचनाय निर्वेदस्य स्थायित्वव्यवस्थापनाय च व्यभिचारिभेदानाह—

**निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।**
**आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ८ ॥**

**व्रीडा चपलता हर्ष आवेगो जडता तथा ।**
**गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ ९ ॥**

**स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १० ॥**

**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ११ ॥**

नामत एव समाख्याताः न तु लक्षणतः । लक्षणानामन्यैरेव सप्रपञ्चं दर्शितत्वात् । तद्यथा—

'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ।'

'चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ।' इति केचित् ।
'रत्यायासकलाभ्यासाद्ग्लानिर्निष्प्राणतेव या ।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः ॥'
'अनर्थप्रतिमा शङ्का परक्रौर्यात्स्वदुर्नयात् ।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत् ॥'
'परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः ॥'
'संमोहानन्दसंभेदः स्खलदङ्गवचोगतिः ।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ॥'
'उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः ।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥'
'श्रमः खेदोऽध्वरत्यादेः श्वासनिद्राभरादिकृत् ।
श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यतः ॥'
'श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे ।
बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ॥' इत्येके ।

'आलस्यं श्रमगर्भादेर्जैह्व्यं जृम्भाक्रियादिकृत्।
दौर्गत्यादेरनोजः स्याद्दैन्यं कार्श्यामृजादिकृत् ॥'
'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।
प्रयत्नपूर्विकान्वेष्यस्मृतिश्चिन्तेति केचन ॥'
'मोहो विचित्तता भीतिदुःखवेगानुचिन्तनैः ।
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥'
'सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः ।
भ्रूसमुल्लासकरजवादनादिस्तदुद्भवः ॥'
'अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥'
'दुराचारादिभिर्व्रीडा धाष्टर्याभावोऽभिधीयते ।
वस्त्राङ्गुलीयकस्पर्शभूरेस्वाधोमुखादिकृत् ॥'
'चेतोनिमीलनं व्रीडा न्यङ्गरागस्तवादिभिः ।' इति केचित्।
'मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः ।'
'आत्मप्रकाशनपरा चेष्टा चपलतोच्यते। इति केचित्।'
'तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥'
'मनः प्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ।
आवेगो राजविद्रावरत्यादेः संभ्रमो मतः ॥'
'तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ।'
'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र॥'
'क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ।' इत्येके।
'गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासङ्गवीक्षाविनयावज्ञादिकृत्तु सः ॥'
'प्रारब्धकार्यासिध्द्यदेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वाससंतापसहायान्वेषणादिकृत् ॥'
'कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसंभ्रमैः ।
'तत्रोच्छ्वासत्वराश्वासहत्तापस्वेदविभ्रमाः ॥'
'निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसनादयः ॥'

'विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यप्रमोहाधिपरितापादिकृत्तु सा ।'
'स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥'
'निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥'
'अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
तत्र स्वेदशिरःकम्पनेत्ररागाङ्गविक्रियाः ॥'
'लज्जाद्यैर्विक्रियागोपोऽवहित्थात्मन्यविक्रिया ।
व्यापारान्तरसङ्गित्ववदनानमनादयः ॥'
'द्विष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥'
'भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ।
स्मेरता धृतिसंतोषौ बहुमानस्तथात्मनि ॥'
'व्याधयः संनिपाताद्यास्तेषामन्यत्र विस्तरः ।
प्रस्वेदकम्पतापाश्चम अनुभावतयोदिताः ॥'
'उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ।
तस्मिन्नस्थानरुदितगीतहासासितादयः ॥'
'जीवस्योद्गमनारम्भो मरणं परिकीर्तितम् ।
संमोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् ॥'

अत्र च मरणस्थाने केचित्करुणां पठन्ति । सा च परदुःखप्रहाणेच्छारूपत्वाच्चित्तवैक्लव्यमयाच्छोकान्नातिरिच्यत इति तद्ग्रहणमत्रानुचितमित्येके । अन्ये तु तस्या दयावीरस्थायित्वमित्यत्र तद्ग्रहणनानौचित्यमित्याहुः । न चान्यत्र संचारित्वाद्ग्रहणं फलवदिति वाच्यम् । स्थाय्यन्तरसाधारणत्वात् । तेऽपि हि क्वचन संचारिणः । तदुक्तम्—

'शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ॥

इत्याद्यन्यत्समुन्नेयं स्वयं भावितबुद्धिभिः ।' इति ।
'गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पितादयः ।
ऊहो वितर्कः संदेहाभ्रूशिरोऽङ्गुलिनर्तकः ॥'

## काव्यप्रकाशखण्डनम्

व्यभिचारिणो ब्रूते—

निर्वेद-ग्लानि-शङ्काऽऽख्यास्तथाऽसूया-मद-श्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहो मदस्मृतिः ॥ (मू. का. ३१)
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्त्यं निद्रापस्मार एव च ॥ (मू. का. ३२)
सुप्तं विबोधोऽमर्षश्च अवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ (मू. का. ३३)
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्याः[प. १४.२] तास्तु नामतः ॥(मू. का. ३४)

बलस्यापचयो ग्लानिः । शङ्काऽनिष्टसमन्वयः, अनिष्टसंभावनम् । परोत्कर्षाक्षमाऽसूया । अनर्थातिशयाच्चेतस्याऽऽवेगः संभ्रमो मतः । कोप एव स्थिरतरोऽमर्ष इति कथ्यते । अवहित्थमाकारगोपनम् । अर्थनिर्द्धारणं मतिः ।

औत्पातिकैर्मनःक्षेप त्रासः कम्पादिकारकः ।

पूर्वापरविचारोत्थं भयं त्रासाद् पृथग् भवेत् ।

इति दिशा त्रासस्य व्यभिचारित्वम् । भयस्य स्थायित्वमिति बोध्यम् ।

### आदर्शः

समाख्यातास्त्विति । नामत एव संक्षेपेणोक्ता इत्यर्थः । असंक्षेपकथने तु एकरसस्थायिभावोऽपि अन्यरसे व्यभिचारिभाव इति सूचितम् । अत एव दूरादुत्सुकमागते इत्यादौ कोपोऽपि व्यभिचारिभावत्वेनोक्तः । नामत इत्यनेन च लक्षणान्यन्यत्रानुसन्धेयानीति सूचितम् । तत्र दर्पणे—

(१) निर्वेदस्य यथा—तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
दैन्य-चिन्ता-श्रु-निःश्वास-वैवर्ण्यो-च्छ्वसितादिकृत् ॥ इति

(२) ग्लानेर्यथा—रत्यायास-मनस्ताप-क्षुत्-पिपासादिसम्भवा ।
ग्लानिर्निष्प्राणाताकम्प-कार्य्यानुत्सा हितादिकृत् ॥ इति

(३) शङ्काया यथा—

परक्रौर्य्या-त्मदोषाद्यैः शङ्काऽनर्थस्य चिन्तनम् ।
वैवर्ण्य-कम्पं-वैस्वर्य्य-पार्श्वालोका-स्यशोषकृत् ॥ इति

(४) असूयाया यथा—असूयाऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता।
दोषेक्षण-भ्रूविभेदावज्ञा क्रोधे-ङ्गितादिकृत्॥ इति

(५) मदस्य यथा— सम्मोहानन्दसम्भेदो मदो मद्योपयोगतः।
अमुना चोत्तमः शेते मध्यो हसति गायति।
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति। इति

(६) श्रमस्य यथा—खेदो रत्यध्वगत्यादेः श्वास-निद्रादिकृच्छ्रमः। इति

(७) आलस्यस्य यथा—आलस्यं श्रमगर्भाद्यैः पुरुषार्थेष्वनादरः। इति

(८) दैन्यस्य यथा—दौर्गत्यादेरनौजस्यं दैन्यं मलिनतादिकृत्। इति

(९) चिन्ताया यथा—ध्यानं चिन्ता हितानाप्तेः शून्यता-श्वास-तापकृत्। इति

(१०) मोहस्य यथा—मोहो विचित्तता भीति-दुःखा-वेगा-र्थचिन्तनैः।
घूर्णता-गात्रपतन-भ्रमण-दर्शनादिकृत्॥ इति

विचित्तता ज्ञानाजननम्।

(११) स्मृतेर्यथा—सदृशज्ञान-चिन्ताद्यैर्भ्रूसमुन्नामनादिकृत्।
स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते॥ इति

(१२) धृतेर्यथा—ज्ञाना-भीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः।
सौहित्यवचनो-ल्लास-सहास प्रतिभादिकृत्॥ इति

(१३) व्रीडाया यथा—संङ्कोचश्चेतसो व्रीडा वैवर्ण्याधोमुखत्वकृत्।इति
संकोचः सहसा कार्येषु प्रवृत्त्यजननम्।

(१४) चपलता यथा—मात्सर्य्य-द्वेष-रागाद्यैश्चापल्यं त्वनवस्थितिः।
तत्र भर्त्सन-पारुष्य-स्वच्छन्दाचरणादयः॥ इति

(१५) हर्षस्य यथा—मनःप्रसादो हर्षः स्यादिष्टावाप्तिस्तवादिभिः। इति

(१६) आवेगस्य यथा—आवेगः सम्भ्रमो राज-गज-वर्षादिसम्भवः। इति

सम्भ्रमो महत्वेन अनवज्ञेयत्वेन वा ज्ञानम्, गजवर्षयोरपि अपकारसामर्थ्यात् तादृशं ज्ञानमस्त्येव।

(१७) जडताया यथा— अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः।
अनिमिषनयननिरीक्षण-तूष्णीम्भावादयस्तत्र॥ इति

अप्रतिपत्तिः कर्त्तव्यमूढता, अतो ज्ञानाजननरूपाद्विचित्ततात्मकान्मोहाद् भेदः ।

(१८) **गर्वस्य यथा—गर्वो मद-प्रभाव-श्री-विद्या-सत्कुलजन्मभिः ।**

**अवज्ञा-सविलासाङ्गदर्शना-ऽविनयादिकृत् ॥** इति

**अवज्ञा परस्मिन् ।**

(१९) **विषादस्य यथा—उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः ।**

**निःश्वासो-च्छ्वास-हृत्ताप-सहायान्वेषणादिकृत् ।** इति

**निष्प्राणताऽनौजस्य-सत्त्वसंक्षयाणां त्रयाणामपि बलहानिरूपत्वेऽपि विभिन्नकारणकत्वेन ग्लानि-दैन्य-विषादानां भेदः ।**

(२०) **औत्सुक्यस्य यथा— इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।**

**चित्ततापत्वरा-खेद-दीर्घनिःश्वसितादिकृत् ॥** इति

(२१) **निद्राया यथा— चेतःसम्मीलनं निद्रा श्रम-क्लम-मदादिजा ।**

**जृम्भा-क्षिमीलनो-च्छ्वास-गात्रभङ्गादिकारणम् ॥** इति

(२२) **अपस्मारस्य यथा—मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।**

**भूपात-कम्प-प्रस्वेद-फेन-लालादि कारणम् ॥** इति

**अपस्मारोन्मादयोर्व्याधित्वेऽपि शृङ्गारे एतावेव, भयानकादौ तु ज्वरादिरपीति प्रतिपादनार्थं पृथगुपादानम् ।**

(२३) **सुप्तस्य यथा— सुप्तं निद्रायमाणस्य विषयानुभवश्च यः ।**

**कोपा-वेग-भय-ग्लानिसुख-दुःखादि-कारणम् ॥** इति

(२४) **विबोधस्य यथा—निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।**

**जृम्भाऽङ्गभङ्ग-नयनोन्मीलना-ङ्गावलोककृत् ॥** इति

(२५) **अमर्षस्य यथा— निन्दाऽऽक्षेपापमानादेरमर्षोऽभिनिविष्टता ।**

**नेत्रराग-शिरःकम्प-भ्रूक्षेपो-त्तर्ज्जनादिकृत् ॥** इति

**अभिनिविष्टता तन्निर्यातनोपायभावना । तेनोत्कटापचिकीर्षारूपात् क्रोधादस्य भेदः ।**

(२६) **अवहित्थस्य यथा— अवहित्थं तु लज्जाद्यैर्हर्षाद्याकारगोपनम् ।** इति

(२७) **उग्रताया यथा—अधिक्षेपापमानादेश्चित्तचण्डत्वमुग्रता ।** इति

**चण्डत्वं साहङ्कारतदसहिष्णुत्वम् । तेन क्रोधामर्षाभ्यां भेदः ।**

**(२८) मतेर्यथा— नीतिशास्त्रानुसृत्यादेरर्थनिर्द्धारणं मतिः ।**

**स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः ॥ इति**

**(२९) व्याधेर्यथा—व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छाकम्पनादिकृत् ।** इति

**(३०) उन्मादस्य यथा—चित्तस्य भ्रम उन्मादः काम-शोक-भयादिभिः ।**

**अस्थानहास-रुदित-गीत-प्रलपनादिकृत् ॥** इति

**(३१) मरणस्य यथा—शस्त्राद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत् ।** इति

**इदन्तु मरणस्यैव लक्षणम्, व्यभिचारिभावत्वन्तु नेदृशस्य मरणस्य, किन्तु चित्ताकाङ्क्षितस्य जातप्रायस्य वा, तदुक्तम्—**

**रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।**

**जातप्रायन्तु तद्वाच्यं चेतसाऽऽकाङ्क्षितञ्च तत् ॥** इति

**(३२) त्रासस्य यथा—निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः इति । त्रासो दुःखहेतुर्मनःक्षोभः, भयन्तु भाविदुःखद्वेष इति भेदः । एष च भयानकस्यैव व्यभिचारिभावः अन्यत्रैतदसम्भवादिति बोध्यम् ।**

**(३३) वितर्कस्य यथा—तर्को विचारः सन्देहाद् भ्रूशिरोऽङ्गुलिनर्त्तकः ।** इति

एषां कस्यचित् क्वचित् स्थायिभावत्वं योग्यतावशात् स्वयमूह्यम् । अमङ्गलप्रायस्येति स्वावमाननरूपस्य तस्यामङ्गलत्वं नासंसारिणामित्यतः प्रायस्येत्युक्तम् । स्थायित्वाभिधानार्थमिति स्थायिभावसन्निहितपाठादिति भावः ।

## सुधासागरः

यद्यपि विभावानुभावावप्रतिपाद्य व्यञ्जकत्वपुरस्कारेण व्यभिचारिभेदोपदर्शने न कश्चिन्न्यायः तथापि वक्ष्यमाणव्यङ्ग्य-भावविवेचनाय निर्वेदस्य स्थायित्वप्रतिपादनाय च व्यभिचारिभेदा वक्तव्या इत्याशयेन वृत्तिकृदाह—व्यभिचारिणो ब्रूते इति ।

नामत एव समाख्याता नतु लक्षणतः । लक्षणानामन्यैरेव सप्रपञ्चं दर्शितत्वात् । तद्यथा [काव्यप्रदीपे—]

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।**
**तत्र चिन्ताऽश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ॥**
**चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ।** इति केचित् ।

**रत्यायासकलाभ्यासाद् ग्लानिर्निष्प्राणतेव या ।**
**तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादियो मताः ॥**
**अनर्थप्रतिभा शङ्का परक्रौर्यात् स्वदुर्नयात् ।**
**वैवर्ण्यकम्पवैमुख्यं पार्श्वालोकास्यशोषकृत् ॥**

परोत्कर्षाऽक्षमाऽसूया गर्वदौर्जन्यमन्युजा।
दोषोद्घोषभ्रूविभेदाऽवज्ञाक्रोधेङ्गितादयः ॥
संमोहानन्दसम्भेदः स्खलदङ्गवचोगतिः।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ॥
उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥
श्रमः खेदोऽधवरत्यादेः श्वासनिद्राभरादिकृत्।
श्रमग्लान्योर्विभेदन्तु चक्रे कारणकार्यता ॥
श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे।
बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ॥ इत्येके।
आलस्यं श्रमगर्भादिजैह्ल्यजृम्भक्रियादिकृत्।
दौर्गत्यादेरनौजः स्याद्दैन्यं कार्श्यमृजादिमत्।
ध्यानं चिन्ता हितानाप्तेः शून्यता श्वासतापकृत्।
प्रयत्नपूर्विकान्वेष्यस्मृतिश्चिन्तेति केचन ॥
मोहो विचित्तता भीतिर्दुःखावेगानुचिन्तनैः।
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥
सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः।
भ्रूसमुल्लास-करज-वादनादिस्तदुद्भवः ॥
अभीष्टार्थस्य सम्प्राप्तौ स्पृहा पर्याप्तता धृतिः।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥
दुराचारादिभिर्व्रीडा धाष्टर्याभावोऽभिधीयते।
वस्त्राङ्गुलीयकस्पर्शभूरेखाऽधोमुखादिकृत् ॥
चेतोनिमीलनं व्रीडा ह्यङ्गरागस्तवादिभिः। इति केचित्।
मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः।
आत्मप्रकाशनपरा चेष्टा चपलतोच्यते। इति केचित्।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः।
मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ॥
आवेगो राजविद्रावरत्यादेः सम्भ्रमो मतः।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ॥
क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः। इत्येके।

गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाऽविनयावज्ञादिकृत्तु सः ॥
प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादयः ।
कालाक्षमत्वमौत्सुक्यं रम्येच्छा-रतिसम्भ्रमैः ।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥
निद्रा व्यापार वैमुख्यमिन्द्रियाणां श्रमादिभिः
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसितादयः ॥
आधेश्चात्यन्तदुःखादेरपस्मारस्तस्तथाविधः ।
मनःक्षेपस्त्वपस्मारो ग्रहावेशादिसम्भवः ॥ इति केचित् ।

क्वचित्तु अपस्मारस्थाने विस्मृतिः पठिता । तल्लक्षणं तु—

विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यप्रमोहाधिपरितापादिकृत्तु सा ॥
सुप्तं निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकम् ॥
निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥
अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
तत्र स्वेदक्षिरःकम्पनेत्ररागाङ्गविक्रियाः ॥
लज्जाद्यैर्विक्रियायोगोऽवहित्थात्मन्यविक्रिया ।
व्यापारान्तरसङ्गित्ववदनानमनादयः ॥
द्विष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥
भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ।
स्मेरता धृतिसन्तोषौ बहुमानस्तथात्मनि ॥
व्याधयः सन्निपाताद्यास्तेषामन्यत्र विस्तरः ।
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः ॥
उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ॥
तस्मिन्नस्थानरुदितगीतहासासितादयः ॥

**जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम्।**
**सम्मोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत्॥**

अत्र च मरणस्थाने केचित् करुणां पठन्ति। सा च परदुःखप्रहाणेच्छारूपत्वाच्चितवैक्लव्यमयाच्छोकान्नातिरिच्यते इति तद्गणनमत्रानुचितमित्येके।

अन्ये तु तस्याः दयावीरस्थायित्वमित्यत्र तद्गणनानौचित्यमित्याहुः। न चान्यत्र सञ्चारित्वाद्गणनं फलवदिति वाच्यम्। स्थाय्यन्तरसाधारणत्वात् तेऽपि हि क्वचन सञ्चारिणः। तदुक्तम्—

**शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः।**
**शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।**
**इत्याद्यन्यत् समुन्नेयं स्वयं भावितबुद्धिभिः।** इति।
**गर्जितादेर्मनःक्षोभस्त्रासः कम्पादिकारकः।**
**ऊहो वितर्कः सन्देहे भ्रूशिरोऽङ्गुलिनर्त्तकः।** इति।

ननु 'अष्टौ नाट्ये रसाः स्मृताः' इति नाट्यस्य विशिष्योपादानेन श्रव्यकाव्ये रसान्तरमायाति। तत्कीदृगित्यपेक्षायां वृत्तिकृदाह—निर्वेदस्येत्यादि। अमङ्गलप्रायत्वं विषयवैराग्यस्वरूपत्वात्संसारिणां बोध्यम्।

## विवरणम्

नाट्ये नित्यव्यभिचारिणस्त्रयस्त्रिंशत्। तान् गणयति—निर्वेदेत्यादि। तत्र स्थायिसात्त्विकभावभिन्ना भावा व्यभिचारिणः। ते च द्विधा—आत्मनो वाभ्यन्तरशरीरस्य वा धर्माः।

अत्र निर्वेदः—

**'चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानापदादिभिः' इति महाराजः।**
**'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्' इति धनिकः।**

खेदोऽलंबुद्धिः, स्वावमाननं मां धिगिति बुद्धिः। तत्र प्रथमस्य—'प्राप्ताः श्रियः सकलकामदुधास्ततः किम्' इत्यादि। द्वितीयस्य—

**धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा**
**स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः।**
**न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः**
**सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः॥**

इत्युदाहरणम्। 'अत्रार्धयोर्व्यत्ययेन पाठः प्रामादिकः प्रथमं हेतुत्वार्थकहिकारप्रयोगानुपपत्तेः। 'किमेभिर्भुजैः' इत्यनन्तरं कुत इत्याकाङ्क्षायां युज्यते हिकारप्रयोगः' इति मन्त्रिमनोहरः।

अथ ग्लानिः। अत्र—

**'बलस्यापचयो ग्लानिराधिव्याधिसमुद्भवः' इति महाराजः ।**

**'रत्यत्यायासतृट्क्षुद्भिर्ग्लानिर्निष्प्राणता नृणाम्' इति धनिकः ।**

तत्र प्राणो बलं चौजसो नामाष्टमस्य धातोर्भैषज्यशास्त्रे प्रसिद्धस्य साम्यावस्था, तदपचयः शरीरधर्मोऽप्यान्तरत्वाद् व्यभिचारिमध्ये परिगणितः । यथा—

**लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा**
**रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः ।**
**तिमिरमिव दधाना स्रंसिनः केशपाशा-**
**नवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥**

अत्र सुरतं विभावः, वक्त्रक्षामतादयोऽनुभावाः, व्यभिचारिणां विभावानुभावविस्तरः सङ्गीतरत्नाकरेऽनुसन्धेयः ।

अथ शङ्का । तत्र—

'अनर्थप्रतिभा शङ्का' इति धनिकः ।

'अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः' इति महाराजः ।

'नीचेष्वनर्थसन्देहरूपाशङ्का तदा भवेत्' इति शाङ्र्गदेवः ।

प्रतिभोत्प्रेक्षासन्देहास्तुल्यार्थाः । तेन द्वेषविषयस्य वस्तुनोऽविद्यमानोत्कटकोटिकः सन्देह शङ्केति पर्यवस्यति । द्वेषो द्विविधः—प्रेष्ठवस्त्वभिलाषात् तत्प्रतिकूलार्थगोचरो बलवदनिष्टोपायगोचरश्च । तत्र प्रथमः शृङ्गारादेरङ्गम्, इतरस्तु भयानकादेः । तदुक्तम्—

**प्रियविप्रियजा शङ्का शृङ्गारे शार्ङ्गिणोदिता ।**
**चौर्यराजापराधादिप्रभवा तु भयानके** ॥ इति ।

तत्र प्रथमद्वेषमूलिका शङ्का यथा—

**ह्रिया सर्वस्याधो नयति विदिताऽस्मीति वदनं**
**द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।**
**सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं**
**प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधूरा** ॥ इति ॥

अत्र मुखाधोनयनादिभिरनुभावैर्वत्सराजसङ्गमप्रतिकूलत्वादनर्थभूतायाः प्रसिद्धेः शङ्का सागरिकायाम्, सागरिकासङ्गमप्रतिकूलस्य तदीयहृदयातङ्कस्य च वत्सराजे प्रतिभासते । द्वितीयद्वेषमूलिका शङ्का यथा—

**दूराद्दवीयो धरणीधराभं**
**यस्ताडकेयं तृणवद् व्यधूनोत् ।**

**हन्ता सुबाहोरपि ताडकारिः**
**स राजपुत्रो हृदि बाधते माम्॥** इति।

अत्र राक्षसक्षयसाधने रामोपनिपाते माल्यवतः शङ्का स्वदते।

अथासूया। तत्र—

**'परोत्कर्षाक्षमाऽसूया गर्वदौर्जन्यमन्युजा' इति धनिकः।**
**'असूयाऽन्यगुणादीनामौद्धत्यादसहिष्णुता' इति महाराजः।**

तेनान्यगुणद्वेष एवासूयापदार्थ इत्यध्यवसीयते। यत्तु—'दोषारोपो गुणेष्वपि' इत्यसूयास्वरूपममरसिंहेनोक्तम्, तदसूयाऽनुभावप्रदर्शनम्। यदाह शार्ङ्गदेवः—

**अनुभावास्त्वमर्षादिर्दोषोक्तिर्गुणनिह्नवः॥**
**गुणस्य दोषीकरणमवेक्षणमधोमुखम्।**
**अवज्ञाभ्रुकुटीत्याद्या यत्रासूयामिमां विदुः॥** इति।

यथा मदीयमदालसायाम्—

**निर्वाति क्रमशस्ततो मलिनतामासाद्य कालान्तरे**
**क्षिप्तस्तीक्ष्णरुचौ मयूखनलकैराध्माय सन्धुक्ष्यते।**
**काष्ठाङ्गारचयोऽयमिन्दुरधुना पूर्णश्चिरादर्चिषा**
**दुःस्पर्शाः कुरुते चकोररसनालेह्यैः स्फुलिङ्गैर्दिशः॥** इति।

अत्र दोषाख्यानानुभावितः कुवलयाश्वस्य विधावसूयाभावः स्वदते।

अथ मदः। तत्र—

**'हर्षोत्कर्षो मदः पानात्' इति धनिकः।**
**'सम्मोहानन्दसम्भेदौ मदिरादिकृतो मदः' इति भोजराजः।**

यथा—

**निद्रार्धमीलितदृशो मदमन्थराणि**
**नात्यर्थवन्ति न च यानि निरर्थकानि।**
**अद्यापि मे मृगदृशो मधुराणि तस्या-**
**स्तान्यक्षराणि हृदये किमपि ध्वनन्ति॥** इति।

अत्र निद्राद्यनुभावितः प्रमादमोहयोः सम्भेदः स्वदते।

अथ श्रमः—

**'श्रमः खेदोऽध्वरत्यादेः' इति धनिकः।**

**'मनश्शरीरयोः खेदः क्रियाऽतिशयतः श्रमः' इति महाराजः।**

मनःखेदो दुःखम्, शरीरखेदो धातुवैषम्यम्। यथा—

**अलसलुलितमुग्धान्यध्वसञ्जातखेदा-**
**दशिथिलपरिरम्भैर्दत्तसंवाहनानि।**
**मृदुमृदितमृणालीदुर्बलान्यङ्गकानि**
**त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता॥** इति।

अथालस्यम्। तत्र—

**'आलस्यं श्रमगर्भादिर्जैह्म्यं जृम्भा' सितादिकृत् इति धनिकः।**

श्रमगर्भादिर्विभावाज्जातं जैह्म्यं क्रियाविद्वेषः (आलस्यम्), 'क्रियाविद्वेष आलस्यं सुखसंविन्दादिभिः' इति भोजराजगणनात्, 'अतितृप्तिः स्वभावश्च गर्भव्याधिश्रमादयः। विभावा अनुभावास्तु निद्रा तन्द्रा समासनात्॥ ऋते सर्वक्रियाद्वेषो यत्रालस्यं तदुच्यते॥' इति शार्ङ्गिनिगदाच्च। यथा—

**चलति कथञ्चिद् पृष्टा गच्छति वाचं कथञ्चिदालीनाम्।**
**आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः॥** इति।

अथ दैन्यम्। तत्र—

**'दौर्गत्याद्यैरनौजस्यं दैन्यं कार्श्यमलादिकृत्' इति धनिकः।**

ओजसो मनोधर्मस्योत्साहपाटवस्य हानिरनौजस्यम्, ग्लानिस्तु शरीरस्यौजसो हानिरिति विवेकः। यथा—

**वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणाऽवशेषं गृहं**
**कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्तापि नो।**
**यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला**
**दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रुश्चिरं रोदिति॥** इति।

हितेषु कृत्यसाध्यताबुद्धिर्दैन्यमिति निष्कर्षः।

अथ चिन्ता। तत्र—

**'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्'** इति धनिकः।

**'प्रयत्नपूर्विकाऽर्थेषु स्मृतिश्चिन्तेति कथ्यते' इति महाराजः।**

तत्र स्मृते साक्षात्कृते वाऽभीष्टे वस्तुनि पौनःपुन्येनानुसन्धानं ध्यानम्, स्मृतिरनुभावन्यज्ञानम्। शार्ङ्गदेवस्तु—

**विभावा यत्र दारिद्र्यमैश्वर्यभ्रंसनं तथा।**
**इष्टार्थापहृतिश्चाथ श्वासोच्छ्वासावधोमुखम्॥**
**सन्तापः स्मरणं ध्यानं कार्श्यं देहानुपस्कृतिः।**
**अधृतिश्चानुभावाः स्युः सा चिन्ता परिकीर्त्तिता॥**

इति स्मरणं ध्यानं च चिन्ताऽनुभाव इत्याह। युज्यते चैतत्, 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इति चिन्तायाः स्मरणोद्बोधकमध्ये परिगणनात् स्मरणत्वानुपपत्तेः। तस्मात् सुस्मूर्षा जिज्ञासा वा चिन्तापदार्थः। स्मरणानुकूलः प्रयत्नश्चिन्ता, भोजस्यापि तत्रैव तात्पर्यम्। यदाह—'प्रयत्नविशेषश्चिन्ता, ज्ञानविशेषः स्मृतिः' इति 'मणिकण्ठः' इत्यन्ये। यथा—

**पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः**
**कुर्वत्या हरहासहारिहृदये हारावलीभूषणम्।**
**बाले बालमृणालनालवलयालङ्कारकान्ते करे**
**विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते॥** इति।

अत्र साक्षाच्चिकीर्षास्वरूपा जिज्ञासा स्मरणादिभिरनुभावैर्व्यज्यते।

अथ मोहः। तत्र—

**'मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः' इति धनिकः।**

विचित्तता चित्तस्य चैतन्यस्यापाटवम्। यथा—

**तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव॥** इति।

'इतिकर्तव्यतोपायादर्शनं मोह उच्यते' इत्यग्निपुराणम्। परस्परविरोधिनानाकर्तव्योपनिपाते किं कर्तव्यमित्यनिर्धारणं मोह इति तदर्थः। यथा—

**स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-**
**र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याऽद्य च।**
**इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञेन विज्ञापिते**
**देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः॥** इति।

यत्तु—

**इत्यादयोऽनुभावास्तं मोहमाहुर्मनीषिणः ।**
**पश्यतो भीतिहेतु तत् प्रतीकारमपश्यत ॥**

इति शार्ङ्गदेवेनोक्तम्, तदपि विचित्ततोपलक्षकमेव ।

अथ स्मृतिः । तत्र—

**'सदृशज्ञानचिन्ताद्यैः संस्कारः स्मृतिरुच्यते'** इति धनिकः ।

तत्र—'संस्कारः एव स्थूलरूपेण परिणतः स्मरणम्' इति देवपाणिः । 'संस्कारात् स्मृतिः' इत्येव पाठ इति श्रीधरः । अत्र वितर्कादिः पूर्वं निबध्यमानो विच्छित्तिविशेषकरः । यदाह—

**'वितर्काद्याः क्षणे पूर्वे पश्चाच्चिन्तोपनीयते' इति शार्ङ्गदेवः ।**

चिन्तास्मृतिर्यथोदात्तराघवे रावणः—

**मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं**
**शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि ।**
**तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं**

(सभ्रूभङ्गम्)

**आं ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥** इति ।

अथ धृतिः । तत्र—

**'सन्तोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत्'** इति धनिकः ।
**'अभीष्टार्थस्य सम्प्राप्तौ स्पृहापर्याप्तता धृतिः' इति भोजः ।**

सन्तोषः स्पृहापर्याप्तिः, निषेव्यमाणवस्तुमात्रविषयिणी स्पृहेति यावत् । 'आरप्स्यमानाद् वस्तुनो निवृत्तिरपि धृतिरेव' इत्येके । 'औत्सुक्यभावस्य प्रशमोऽयम्' इत्यपरे । यथा—

**राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः**
**सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।**

**प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति गन्ता धृतिं**
**काम काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥** इति ।

अत्र वत्सराजस्याधिगतवस्तुमात्रे स्पृहा पर्याप्यते ।

अथ व्रीडा—

**'दुराचारादिभिर्व्रीडा धाष्ट्याभावः' इति धनिकः।**
**'चेतोनिमीलनं व्रीडाऽस्तुत्यकार्यक्रियादिभिः' इति भोजराजः।**

निमीलनं स्वक्रियाविद्वेषः। स्वस्य क्रियया सह क्वचित् कर्तृत्वम्, क्वचित् कर्मत्वं सम्बन्धः। तत्रातीतायां स्वकर्तृकक्रियायां विद्वेषोऽनुतापो व्रीडेत्युच्यते, 'व्रीडाऽनुतापः, शुचिभिर्दृष्टेऽकार्ये कृते भवेत्' इति शार्ङ्गदेवस्मरणात्। यथा—

**निहत्य ताडकां स्त्रैणवधपापघृणावशात्।**
**न शशाक रघूत्तंसो गुरूनपि निरीक्षितुम्॥** इति।

भाविस्वकर्तृकक्रियाविद्वेषो यथा—

**पथि पथिकवधूभिः सादरं पृच्छ्यमाना**
**कुवलयदलनीलः कोऽयमार्ये तवेति।**
**स्मितविकसितगण्डप्रान्तविभ्रान्तनेत्रं**
**वदनमपहरन्ती स्पष्टमाचष्ट सीता॥**

इत्यत्र भाविवचनविषयको व्रीडः स्वदते।

स्वकर्मकपरकर्तृकक्रियाविद्वेषो यथा—

**पटालग्ने पत्यौ नमयति मुखं जातविनया**
**हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम्।**
**न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना**
**ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः॥**

अत्र स्वकर्मकोपभोगे विद्वेषः।

स्वसम्बन्धिनो दुश्चरितगोचराऽपि व्रीडा दृश्यते। यथा मदीयमदालसायाम्—'कुवलयाश्वः—अरे दनुवंशकरीर!

**आक्रन्दत्कुलकन्यकाजनभुजाभङ्गप्रगल्भे गृह-**
**द्वाराभ्यर्णविकत्थमानमनुजत्रासान्निलीने त्वयि।**
**स्मेरायामदितौ त्रपानतमुखी तप्ताभिरस्राम्भसां**
**सूचीभिः कदपत्यकन्दमुदरं देवी दनुर्विध्यति॥**

अत्र पातालकेतुदुश्चरितव्रीडा दनोरनुभूयते।

अथ चापलम् । तत्र—

**'मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः'** इति धनिकः ।

अनवस्थितिः परस्परविरुद्धार्थकबुद्धीनामव्यवधानेनोत्पत्तिः । यथा—

**विनिकषणरणत्कठोरदंष्ट्रा-**
**क्रकचविशङ्कटकन्दरोदराणि ।**
**अहमहमिकया पतन्तु कोपात्**
**सममधुना न किमत्र मन्मुखानि ॥**

अथवा प्रस्तुतमेव तावत् सुन्दरीहितं करिष्ये'अत्र सीताकवलने, तत्समीहित सम्पादने च कर्तव्यताबुद्ध्यो-रव्यवधानं रावणे प्रतिभाति । महाराजस्तु—

**आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ।**

इत्याह । चेष्टा तज्जनकप्रवृत्तिर्यथा—

**कश्चित् कराभ्यामुपगूढनाल-**
**मालोलपत्राभिहतद्विरेफम् ।**
**परिस्खलत्केसरचक्रवालं**
**लीलारविन्दं भ्रमयाञ्चकार ॥** इति ।

**'तच्चापलमनालोच्य कार्यकारित्वमुच्यते'** इति शार्ङ्गदेवः ।

अनालोच्येति—'हितसाधनतामप्रमायेत्यर्थः । हितसाधनताभ्रमजन्या इति यावत् । यथा—

**अन्यासु तावदुपमर्दसहासु भृङ्ग**
**लोलं विनोदय मनः सुमनोलतासु ।**
**एतामजातरजसं कलिकामकाले**
**व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥** इति ।

अथ हर्षः—

**'प्रसत्तिरुत्सवादिभ्यो हर्षः'** इति धनिकः ।

प्रसत्तिः सुखविशेषः । यथा—

**आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां**
**गेहिन्या परितोषबाष्पकलिलामासज्य दृष्टिं मुखे ।**
**दत्त्वा पीलुशमीकरीरकवलान् वस्त्राञ्चलेनादरा-**
**दुन्मृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः ॥**

अथावेगः । तत्र—

**'आवेगः सम्भ्रमोऽस्मिन्नभिसरजनिते शस्त्रनागाभियोगे'**इत्यादि धनिकः ।

**'आदरातिशयाच्चेतस्यावेगः सम्भ्रमो मतः'** इति महाराजः ।

तेनोत्साहहर्षशोकभयादिना क्रियासु त्वरिता प्रवृत्तिरावेग इति सङ्कलितार्थः ।

यथा—

**तनुत्राणं तनुत्राणं शस्त्रं शस्त्रं रथो रथः ।**
**इति शुश्रुविरे विष्वगुद्भटाः सुभटोक्तयः ॥**

अथ जडता । तत्र—

**'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः'** इति धनिकः ।

**'क्रियास्वपाटवं जाड्यम्'** इति महाराजः ।

**'कार्याविवेको जडता'** इति निश्शङ्कशङ्करः ।

तेन कर्तव्यविस्मरणं जाड्यमित्यवसीयते । अत एव—

**एवमालि निगृहीतसाध्वसं शङ्करो रहसि सेव्यतामिति ।**
**सा सखीभिरुपदिष्टमादरान्नास्मरत् प्रमुखवर्तिनि प्रिये ॥**

इति धनिकोक्तमुदाहरणमपि सङ्गच्छते ।

अथ गर्वः । तत्र—

**'गर्वोऽभिजनलावण्यबलैश्वर्यादिभिर्मदः'** इति धनिकः ।

**'गर्वोऽन्येषामवज्ञानमात्मसम्भावनादिभिः'** इति महाराजः ।

तेन परेष्वपकर्षबुद्धिर्गर्व इति पर्यवस्यति । यथा—

**धन्यास्ते कवयो यदीयरसनारङ्गस्थलीताण्डवे**
**नृत्यन्तीव सरस्वती लघुपदन्यासेन निष्क्रामति ।**
**अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदय-**
**त्पीनोत्तुङ्गपयोधरेव युवतिर्मन्थिर्यमालम्बते ॥ इति ।**

अत्र नीरसद्रुतकवीनालम्ब्यसरसकवेरवलेपः स्वदते ।

अथ विषादः । तत्र—

**'प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः'** इति धनिकः ।

**'विषादश्चेतसो ग्लानिः'** इति महाराजः ।

प्रारब्धं कर्म न सिद्धम्, शत्रुभिर्नाशितमस्मद्बलमित्यादिज्ञानादुत्पन्नो दुःखविशेषो विषादः । यथा—

'आर्ये ताडके ! किमेतत् ? अम्बुनि मज्जत्यलाबुनि ग्रावाणः प्लवन्ते—

**नन्वेष राक्षसपतेस्तुलितः प्रतापः**
**प्राप्तोऽद्भुतः परिभवो हि मनुष्यपोतात् ।**
**दृष्टः स्थितेन च मया स्वजनप्रमाथो**
**दौत्यं जरा च निरुणद्धि कथं करोमि ॥**

अथौत्सुक्यम् । तत्र—

**'कालाक्षमत्वमौत्सुक्यं रम्येक्षारतिसम्भ्रमैः'** इति धनिकः ।

महाराजेन त्वौत्सुक्यमुत्कण्ठेति व्यवहृतं लक्षितं च—

**'उत्कण्ठेष्टानवाप्तौ योऽभिलाषः स्यात् तदाप्तये'** इति ।

तेन त्वरितप्राप्त्यभिलाष औत्सुक्यं पर्यवस्यति । यथा—

**आत्मानमालोक्य च शोभमान-**
**मादर्शबिम्बे स्तिमितायताक्षी ।**
**हरोपयाने त्वरिता बभूव**
**स्त्रीणां प्रियालोकफलो हि वेषः ॥** इति ।

अथ निद्रा । तत्र—

**'मनस्सम्मीलनं निद्रा'** इति धनिकः ।
**'निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः'** इति महाराजः ।
**'निद्रेन्द्रियाणां प्रथमां निवृत्तिः स्वस्वगोचरात्'** इति शार्ङ्गदेवः ।

(प्रथमेत्यनेन) मिद्धासंयोगानुकूलमखिलेन्द्रियविमुखं मनः कर्म निद्रा, येन जनिते मनस्संयोगध्वंसे बहिरिन्द्रियाणां स्वस्वार्थनिवृत्तिरर्थतः सम्पद्यते । यथा—

**प्रहरकमपनीय स्वं निदिद्रासतोच्चैः**
**प्रतिपदमुपहूतः केनचिज्जागृहीति ।**
**मुहुरविशदवर्णा निद्रया शून्यशून्यां**
**ददपि गिरमुच्चैर्बुध्यते नो मनुष्यः ॥** इति ।

अत्र श्रोत्रेण संयुज्य मुहुर्विभज्यमानं मनः स्वदते ।

अथापस्मारः । तत्र—

**'आवेशो ग्रहदुःखाद्यैरपस्मारो यथाविधः'** इति धनिकः ।

यथाविध इत्यनेन समाख्याबलप्राप्तः स्मृतिभ्रंश इति फलति । निश्शङ्कशङ्करोऽपि—

**देवैर्नागैस्तथा यक्षैः पिशाचैर्ब्रह्मराक्षसैः ।**
**भूताद्यैश्च ग्रहैरुग्रैरावेशस्तत्स्मृतेस्तथा ॥**

इति विनायकाद्यावेशमपस्मारविभावेषु गणयति स्म । यथा ममैव—

**लुठति तटयोस्तारैराक्रोशति ध्वनिभिर्मना-**
**गुपनतरसाः प्रत्युद्गम्य प्रतीच्छति निम्नगाः ।**
**पिबति तरणीभूय ज्योत्स्नाकरम्भमतो मतो**
**मम दहनतो दीप्ताद् दूनोदरो वरुणालयः ॥** इति ।

अत्र जाठरज्वरविभावितोऽनार्यचेष्टानुभावितोऽपस्मारः स्वदते ।

अथ सुप्तम् । तत्र—

**'सुप्तं निद्राश्रयम्' इति धनिकः ।**

तेन सिद्धायां नाड्यां मनः प्रवेशः सुप्तमिति फलति । पुरीतति मनः प्रवेशः सुषुप्तिस्तदेव सुषुप्तम्, सिद्धायां मनस्संयोगो निद्रेति दार्शनिकाः यथा—

**लघुनि तृणकुटीरे क्षेत्रकोणे यवानां**
**नवकलमपलालस्रस्तरे सोपधाने ।**
**परिहरति सुषुप्तं हालिकद्वन्द्वमारात्**
**कुचकलशमहोष्माबद्धरेखैस्तुषारैः ॥** इति ।

अथ विबोधः । तत्र—

**'विबोधः परिणामादेः'** इति धनिकः ।
**परिणामोऽभ्यवहारजरणं (निद्रापगमे हेतुः ।)**

**'निद्राऽपगमहेतुभ्यः प्रबोधश्चेतनागमः'** इति महाराजः ।

शार्ङ्गदेवस्तु—

**सुप्तान्तनिद्राच्छेदाभ्यामाहारपरिणामतः ।**
**शब्दस्वप्नादिभिः स्पष्टस्मृतेर्वा जाग्रतः स्थितिः ॥** इत्याह ।

तेन स्वप्नसुषुप्त्योरन्ते मनसो बहिरिन्द्रियसंयोगो विबोधः इति फलति ।

यथा—

**चिरतररतखेदप्राप्तनिद्रासुखानां**
**चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥**

**अपरिचलितगात्राः कुर्वते न प्रियाणा-**
**मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥** इति ।

अथामर्षः । तत्र—

**'अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता'** इति धनिकः ।

अभिनिवेशः क्रोधः, 'क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते' इति महाराजस्य दर्शनात् । निश्शङ्कशङ्करस्तु—'विद्याधनबलैश्वर्याधिकैर्मध्ये समं नृभिः । अधिक्षेपादमर्षः स्यात् प्रतिकारस्पृहात्मकः ।' इति प्रतिकारस्पृहात्मकामर्षमूचे ।

यथा—

**युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं**
**प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।**
**क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-**
**नद्यैकः दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥** इति ।

अथावहित्थम् । तत्र—

**'लज्जाद्यैर्विक्रियागुप्तावहित्थाऽन्यविक्रिया'** इति धनिकः ।
**एकविक्रियानिह्नवतात्पर्यकं विक्रियान्तरमित्यर्थः ।**
**'अवहित्था तु हर्षादिर्लज्जाद्याकारगोपनम्'** इति भोजः ।

'अनुभावपिधानार्थोऽवहित्थं भाव उच्यते' इति निश्शङ्कशङ्करः । यथा—

**एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥** इति ।

अथोग्रता । सा चामर्षप्रयुक्तं चण्डत्वम् । तच्च हिंसाप्रवृत्तिः । यथा—

**उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसन्तानरोषा-**
**दुद्दामस्यैकविंशत्यवधि विशसतः सर्वराजन्यवंश्यान् ।**
**पित्र्यं तद्रक्तपूर्णह्रदवसनमहानन्दमान्दायमानं ।**
**क्रोधाग्निं कुर्वतो न खलु स विदितः सर्वभूतैः प्रभावः ॥** इति ।

अथ मतिः। तत्र—

**'भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः'** इति धनिकः।

**भ्रान्तिच्छेदः शरीरादिभ्य आत्मादेर्विवेकः, उपदेशः कर्तव्यबुद्धिः।**

**'शास्त्रार्थस्यानुसन्धानादर्थनिर्धारणं मतिः'** इति महाराजः।

**'अपूर्वप्रतिभानं स्यान्मतिः' इति शार्ङ्गः।**

यथा—

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥** इति।

अथ व्याधिः। तत्र—

**एकैकशो द्वन्द्वशो वा त्रयाणां वा प्रकोपतः।**
**वातपित्तकफानां स्युर्व्याधयोऽङ्गे ज्वरादयः॥ इति शार्ङ्गदेवः।**

**'विरहादेर्मनस्तापः शरीरातङ्कदो गदः' इति राजा।**

यथा—

**अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्तागुरुभ्योऽर्पिता**
**दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः।**
**अद्य श्वः परिनिर्वृतिं व्रजति सा श्वासैः परं खिद्यते**
**विश्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं त्वया॥ इति।**

अथोन्मादः। तत्र—

**'अप्रेक्षाकारितोन्मादः'** इति धनञ्जयः।

**'उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः'** इति महाराजः।

**उन्मादः पृथगुक्तोऽयं व्याधिष्वन्तर्भवन्नपि।**

**अयं हि विप्रलम्भादौ वैचित्र्यं कुरुतेतमाम्॥** इति शार्ङ्गः।

तद्विस्तरो मालत्यां नवमे, चतुर्थेऽङ्के चोर्वश्यामनुसन्धेयः।

अथ मरणम्। तत्र—

**मरणं सुप्रसिद्धत्वादनर्थत्वाच्च नोच्यते।**
**वीरादावुच्यते यद्वा शृङ्गारेऽध्यवसायिता॥** इति धनिकः।

अध्यवसायिमरणं यथा—

**सम्प्राप्तेऽवधिवासरे क्षणमनु त्वद्वर्त्मवातायनं**
**वारं वारमुपेत्य निष्क्रियतया निश्चित्य किञ्चिच्चिरम्।**
**सम्प्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-**
**र्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ।।** इति ।

अथ त्रासः । तत्र—

**'गर्जितादेर्मनः लोभस्त्रासः'** इति धनिकः ।
**'त्रासश्चित्तचमत्कार आकस्मिकभयादिभिः'** इति राजा ।
**'गात्रोत्कम्पी चमत्कारः सहसा त्रास उच्यते'** इति शार्ङ्गदेवः ।

पूर्वानुभूतदुःखसाधनताके वस्तुनि तत्स्मरणप्रयुक्तो द्वेषो भयम्, तत्कालानुभूयमानदुःखसाधनताके वस्तुनि द्वेषस्त्रास इति विवेकः । यथा—

**त्रस्यन्ती चलशफरीविघट्टितोरू-**
**र्वामोरूरतिशयमाप विभ्रमस्य।**
**क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतो-**
**र्लीलाभिः किमु सति कारणे तरुण्यः ।।** इति ।

अथ वितर्कः । तत्र—

**'तर्को विचारः सन्देहात्'** इति धनिकः ।
'ऊहो वितर्क इत्युक्तः पदार्थेषु यथामति' इति भोजः ।
**यत्र विप्रतिपत्तिः स्यात् संशयश्च विमर्शनम्।**
**पक्षयोरुभयोरुक्ते माने साधकबाधके ।।**
इत्यादि वितर्कविभावानाह निश्शङ्कशङ्करः ।

निर्णयोपायभूतोऽयमूहोऽनिष्टापादनरूपो वितर्कः । यथा—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुता गता किमथवा मातैव मे मध्यमा।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ।। इति ।

अथवा—

कः समुचिताभिषेकादार्यं प्रच्यावयेद् गुणज्येष्ठम्।
नूनं ममैव भाग्यात् सेवाऽवसरः कृतो विधिना ।। इति ।

त्रयस्त्रिंशदिति परिगणनं प्रायिकम्, करुणाकैतवादेरेष्वनन्तर्भावात्। तस्माज्ज्ञानेच्छाद्वेषप्रयत्नसु-खदु:खान्यान्तरशरीरधर्माश्च व्यभिचारिण इत्येव सारम्।

भावा इति। एते व्यक्ताः सन्तो भावा भवन्तीति भावनिरूपणायैतें निर्दिष्टा:, न तु विभावानुभावा इति सूच्यते।

नामत इति। निर्वेदादिनामसमाख्याबलाद् योगार्थ एवैषां लक्षणमिति भावः।

**(सू. ४७) निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।**

**यथा**

**अहौ वा हारे वा कुसुमशयने वा दृषदि वा**
**मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।**
**तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः**
**क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ४४ ॥**

---

**सङ्केतः**

तेनेति । तथा च—(९) वैराग्यतत्त्वज्ञानसर्वज्ञानुग्रहादिविभावः, यमनियमाध्यात्मशास्त्रेक्षणाद्यनुभावः, धृतिस्मृत्यादिव्यभिचारी निर्वेदस्थायिभावः शान्तो रसः । न च—अयं विषयजुगुप्सारूपत्वात् बीभत्से अन्तर्भावयितुं युक्तः । विषयजुगुप्सा ह्यस्य व्यभिचारिणी, न तु स्थायितामेति । तस्या निर्वाहे मूलोच्छेदात् । न च धर्मवीरे । 'अहं एवं विधः' इत्येवं प्राणोत्साहरूपतया तस्य गर्वमयत्वेन व्यवस्थानात्, अस्य च गर्वप्रशमैकरूपत्वात् । ईहामयत्वनिरीहत्वाभ्यां विरुद्धयोरपि तयोः ऐक्ये, क्रमेण कामार्थधर्मार्जनोपयोगेन तुल्यरूपत्वात्, अविरुद्धयोरपि रौद्रवीरयोः ऐक्यप्रसङ्गः । धर्मवीरादीनां चित्तवृत्तीनां सर्वथा निरहङ्कारत्वे शान्तरसः, इतरथा तु वीररसः, इति व्यवस्थायां तु न कश्चिद्दोषः ।

तस्मात्—यथा धर्मार्थकामेषु योग्याः रत्यादिचित्तवृत्तयः कविनटव्यापारेण आस्वाद्यतां नीताः तादृशहृदयसंवादवतः सभ्यान् प्रति रसत्वं यान्ति, तथा मोक्षाख्यपरमार्थोचिताऽपि निर्वेदरूपा चित्तवृत्तिः रसतां याति इति । तथाच—अस्य निर्वेदस्थायिनः लौकिकरत्यादिलोकोत्तरशृङ्गाररूपा चित्तवृत्तिः सर्वाऽपि व्यभिचारिणी, तदनुभावा एव च यमनियमाद्युपकृताः अनुभावाः विभावा अपि सर्वज्ञाद्यनुग्राह्याः । प्रक्षयोन्मुखाश्च रत्यादयः अत्र आस्वाद्यन्ते । परं—यथा विप्रलम्भे औत्सुक्यं, सम्भोगेऽपि वा प्रेम असमाप्तोत्सवमिति, यथा च रौद्रवीरभयानकाद्भुतेषु क्रमेण औग्र्यधृतित्रासहर्षाः व्यभिचारिणोऽपि प्राधान्येन भान्ति, तथा शान्ते जुगुप्साद्याः । सर्वथा रागविपक्षत्वात् । स्वात्मनि कृतकृत्यस्य परार्थ एवोद्यमः इति, उत्साहः अस्य परोपचिकीर्षाप्रयत्नरूपः दयाऽपरपर्यायः अभ्यधिकः अन्तरङ्गः । अत एव अन्ये दयाधर्मवीरत्वाभ्यां एनं ऊचुः ।

ननु—उत्साहः गर्वप्राणः, शान्तस्तु शैथिल्यात्मा ? ननु किमतः ? व्यभिचारित्वं हि विरुद्धस्यापि नायोग्यम्, रताविव निर्वेदादेः । परोपकारक्रियायां उत्साहस्यैव प्रकर्षः । न च उत्साहशून्या काऽप्यवस्था । इच्छाप्रयत्नव्यतिरेकेण पाषाणतापत्तेः । यत एव शान्तात्मा तत्त्वज्ञतया स्वात्मोद्देशेन कार्यविमुखः, अत एव परोपकाराय शरीरादि त्यजति, चिन्तयति चैवम्—'यथाकथञ्चित् त्याज्यं शरीरं यदि परार्थं त्यज्यते, तत्, किमिव नार्जिते स्यात् ?' इति ।

तदिदं तत्त्वज्ञतया शान्तात्मा परार्थे निराकाङ्क्षतया शरीरादि त्यजति । अत एव युद्धवीरः स्वदेहत्यागं पराजयोद्देशेन कुर्वाणः न शान्तात्मा । भृग्वादिपात्यपि शुभान्यदेहसाकाङ्क्षः पूर्वदेहत्यागेऽपि न तथा । तदत्र दयारूपः अभ्युत्साहः प्रधानम् । अन्येऽपि व्यभिचारिणः यथायोग्यं स्युः ।

ननु नायं सर्वस्य श्लाघास्पदम् । तत् कथं रसः ? तर्हि मुनीनां शृङ्गारोऽपि न श्लाघ्यः इति सोऽपि रसत्वात् च्यवताम् । यैरपि तृष्णाक्षयरूपस्थायी असौ उक्तः, तन्मते तृष्णाक्षयः भावः इत्यायातम् । तदभावेऽपि तु रत्यादि-चित्तवृत्तीनामप्यभावः, तृष्णाविकारत्वात् तासाम् । एतच्चित्तवृत्त्यभाव एव यदि शमः, तदा शमस्य चित्तवृत्तित्वाभावः । अभावस्य अवस्तुत्वात् । अथ यथा 'अधर्मः' इत्यत्र धर्मविरोधि पापं लभ्यते, न तु धर्माभावः, तथा अत्र तृष्णा रत्याद्यभावः रत्यादिचित्तवृत्तिविरोधी चित्तवृत्तिविशेषः इत्युच्यते, तदा अस्मन्मते तस्यैव निर्वेदः इति नाम, त्वन्मते तु शमः इति । अधिकत्वेन तु शान्तो रसः न निबध्यते इति चन्द्रिका ।

तदेवं नवैव रसाः । पुमर्थोपयोगेन रञ्जनाधिक्येन च उपदेश्यत्वात् । तेन—आर्द्रतास्थायी स्नेहः रसः, गर्भस्थायि लौल्यं रसः इत्यसत् । तयोः क्रमेण रत्यादौ हास्यादौ च अन्तर्भावात् । तथाहि—तरुणस्य मित्रे स्नेहः रतौ, लक्ष्मणादेः भ्रातरि स्नेहः धर्मवीरे, बालस्य मात्रादिषु, वृद्धस्य पुत्रादिषु च स्नेहः भये च विश्रान्तः । तदिदमत्र तात्पर्यम्—स्नेहः, भक्तिः, वात्सल्यं, मैत्री, आबन्धः इत्येते रतेरेव विशेषाः । तुल्ययोः या मिथो रतिः सः स्नेहः । प्रेमेति यावत् । तयोरेव निष्कामतया या मिथो रतिः सा मैत्री । अवरस्य वरे रतिः भक्तिः । सैव विपरीता वात्सल्यम् । सचेतनानां अचेतने रतिस्तु आबन्धः इति । एवमादि स्वयमूह्यम् । विस्तरविचारस्तु कोहललोचनादिग्रन्थात् ज्ञेयः ।

एवं 'सीदत्यस्मिन् मनः' इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात् साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वम् । अथवा अनुपहतं मनः सत्त्वम् । तत्र भवाः सात्त्विकाः भावाः—स्तम्भस्वेदरोमाञ्चस्वरभेदवेपथुवैवर्ण्याश्रुप्रलयाः अष्टौ । तत्र स्तम्भः निश्चेष्टता । स्वरभङ्गः गद्गदादिना स्वरान्यथात्वम् । प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः । एते च आन्तरालिकभावशंसनात्मकविकाररूपत्वात् शरीरधर्माः बाह्याः अनुभावाः । अत्र च—

**'पृथक् भावाः भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः'** । इति ज्ञेयम् ।

## सङ्केतः (रुय्यकः)

अहौ वा हारे वेति । अत्र शान्तरसोदाहरणे शमस्थायिभावात्मा शान्तरसः । शमस्तु वीतरागस्यैव भवतीति तदधिष्ठानः । तत्रानित्यत्वादिना सकलवस्तुनिस्सारत्वं परमार्थस्वरूपञ्चानुभूयमानमालम्बनविभावः, तपोवनाद्युद्दीपनविभावः, सर्वभूतशमत्वपरार्थकारित्वादयोऽनुभावाः, धृतिस्मृतिमतिप्रभृतयो व्यभिचारिणः । एभिर्विभावानुभावव्यभिचारिभिः शान्तरसाभिव्यक्तिर्भवति । अत्र प्रकृते शिव शिव शिवेति परमार्थस्वरूपमालम्बनम्, पुण्येऽरण्ये इत्युद्दीपनम्, साम्यदृष्टिरनुभावः, प्रार्थनारूपा चिन्ता व्यभिचारिभावः, एवं धृत्यादयोऽप्यन्ये । एषामत्र शान्तरसव्यञ्जकत्वमिति । अयञ्चात्रानुन्मीलितपूर्वो मार्गः शिक्षाप्रदानर्थमनूद्यत इति सहृदयैरत्र प्रयत्नतोऽवधेयमिति ।

## बालचित्तानुरञ्जनी

ननु निर्वेदस्यामङ्गलस्य प्रथमत उपादानमसङ्गतमित्याशङ्क्य शान्तरसं प्रति स्थायिभावत्वमप्यस्यास्तीति प्रथमतस्तस्योपादानमित्याह निर्वेदस्येत्यादिना । निर्वेदः स्थायिभावो यस्य ।

शान्तरसमुदाहरति यथेति । भर्तृहरिवचनम् । स्पष्टम् । अत्र वैराग्यादिविभावः यमाद्यनुभावः धृत्यादिव्यभिचारी निर्वेदस्थायिभावः शान्तो रसः । अत्र विरक्ता एवाधिकारिणः । न चैवं सर्वविषयत्वाभावाद्रसत्वाभाव इति वाच्यम् । शृङ्गारस्यापि सर्वविषयत्वाभावेनारसत्वप्रसङ्गात् ।

## काव्यादर्शः

शान्तोऽपीति । वैराग्यप्राक्तनपरिपाकपरमेश्वरानुग्रहाध्यात्मरहस्यपरमात्मपरिशीलनादिविभावो यमनियममोक्षशास्त्रचिन्तनाद्यनुभावो धृतिस्मृतिमत्स्यादिव्यभिचारी विषयाभिलापक्षय[:] सर्वतोनिवृत्तिरूपो निर्वेदः स्थायीभूतो रस्यमानताकृतपोषः शान्तो रसः

ननु, तत्र हृदयसंवाद[:] भावाद् रस्यमानता न युक्ता । निवृत्तविषयेच्छाप्रसरत्वकाले प्रतीयमानोऽपि न सर्वस्व श्लाघास्पदम् । नैवम्, वीतरागाणां शृङ्गारो न श्लाघ्य इति सोऽपि रसत्वाच्च्यवताम् । न च धर्मवीरेऽस्यान्तर्भावो युक्तः । वीरस्य ह्युत्साहोऽहमेवंविध इत्येवंरूपाभिमानमयोऽस्य चाहंकारप्रशम एवैकं रूपमितीहामयत्वनिरीहत्वाभ्यामत्यन्तं तयोर्विरोधः । आधिकारित्वेन तु शान्तो रसो न निबध्य इति चन्द्रिकाकारः । अन्ये तु चित्तवृत्तिशम एवास्य स्थायीति मन्यन्ते । तच्च असत्, अभावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात् । पर्युदासे त्वस्मत्पक्षं एवायम् । तच्च भट्टतोतेन काव्यकौतुकेऽभिनवगुप्तेन च तदवृत्तौ निर्णीतम् ।

एवं सीदत्यस्मिन् मन इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात् साधुत्वाच्च प्राणात्मकं वस्तुसत्त्वम् । अथवानुपहतं मनःसत्त्वम् । तत्रभवाः सात्त्विका भावाः स्तम्भस्वेदरोमाञ्चस्वरभेदकम्पवैवर्ण्याश्रुप्रलया अष्टौ । स्तम्भो विष्टब्धवेतनत्वम् । प्रकर्षेण प्राणनिलीनेष्विन्द्रियेषु लयः प्रलयः । ते चान्तरालिकभावशंसनात्मकविकाररूपत्वाच्छरीरधर्मा बाह्या अनुभावाः । अपीति पृथग् नोक्तः । यद् धनिकः—

**'पृथग् भावा भवन्त्यन्येऽनुभावत्वेऽपि सात्त्विकाः ॥'**

## विवेकः

ननु जुगुप्सा विस्मयश्चे'त्येतत्' (३० काः) तन्त्रतयाष्टानामेव स्थायिनां व्यवस्थापनात् स्थायिव्यभिचारिसात्त्विकभेदादेवमूना(न) पञ्चाशद्भावा इति भावाध्याये(७ ।१६२) मुनेः परिगणनात्, डिमलक्षणे च 'षड्रससंयुक्तो डिमस्तत्र च रौद्रः स्थायीत्युक्तयनन्तर 'शृङ्गारहास्यवर्जं' इति मुनेश्च(ना. शा. १८ ।८५) निश्चयाद्विभावादीनां कथञ्चिदपि शान्तेऽनुपलम्भात् सामाजिकजनान्तःकरणहरणमुद्रादारिद्र्याच्चाष्टावेव चेष्टाः शृङ्गारादयः (अ.भा. ६अ.), तत् ग(कु)तोऽयमभिनवो नवमः शान्तो नाम रस इत्याशङ्क्याह निर्वेदस्य व्यभिचारित्वेऽपीति व्यभिचारित्वादप्राधान्येऽपि पूर्वनिर्देशात् प्राधान्यप्रतिपादनेन स्थायित्वसूचनादुभयात्मकत्वम् । तेन निर्वेदस्तावदस्ति स्थायी । भावानामूल(न)पञ्चाशद्भेदताऽप्येतावतैवोपपद्यते । डिमलक्षणे शृङ्गारहास्यरसावपास्यौ, अन्यश्च कश्चिदभिमत एको निरसनीयो न पुनस्तत्र नियम इत्यखण्डितषड्रसो डिमः । तदिह तत्त्वज्ञानरूपो निर्वेदः स्थायी । तत्तु (यत्तु) 'सर्वचित्तवृत्तिप्रशम एवास्य स्थायी'त्युक्तम्, तदसद्, 'अभावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात्, पर्युदासत्वेऽस्मत्पक्ष एव' (ध्व.आ.लो. १७७ पृः) । एवं विधश्च निर्वेदो वीतरागस्यैव भवतीति [स एव] तदधिष्ठानः । तत्रानित्यत्वादिना सकलवस्तुनिःसारत्वं परमार्थस्वरूपञ्चानुभूयमानमालम्बनविभावः, तपोव-

नाद्युद्दीपनविभावः, सर्वभूतसमत्वपरार्थकरित्वादयोऽनुभावाः, धृतिमतिस्मृतिहर्षप्रभृतयो व्यभिचारिणः। एभिर्विभावानुभावव्यभिचारिभिः शान्तरसाभिव्यक्तिर्भवति। निरतिशयानन्दसन्दोहहेतुत्वञ्चास्य सहृदयानां श्लाघनीय[त्वं]मेव। यदाहुः—यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्। (महा. १२ ।१७१ ।५१ इति)। न च प्रतीतोऽप्ययं सर्वस्य श्लाघापदं न भवतीति रसात्वाच्च्यवतामिति वाच्यम्, एवं सत्यन्येऽपि रसानां(रसा ना-) स्तोकलोकश्लाघनीया इति तेषा मपि रसत्वं न स्यात्। तथाहि शृङ्गारः सर्वप्राणिषु कामभावनिष्ठानां कुचेलपामराधमानां नैव विषयः, भीरूणां च (न) धी(वी)र इत्यादि। तथाच मुनिः (नाः शाः १ ।१०९, ११०) 'तुष्यन्ति तरुणाः कामे मोक्षे चापि विरागिणः, 'धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्।' 'उत्साहः शूरमानिनां' विनीतानां दमक्रियेत्येदि। विषयजुगुप्सारूपत्वाद्बीभत्सेऽस्यान्तर्भाव इति चेन्न, जुगुप्साया अत्र व्यभिचारित्वेनास्थायित्वात्, पर्यन्तनिर्वाहे मूलत एव तस्या विच्छेदात्। तथाहि यत्रबीभत्समानो विरज्यते तत्र बीभत्स एव। यथा 'लालां वक्त्रासव'वेति मांसापिण्डौ पयोधरौ। मांसस्थिपिण्डं जघनं जनः कामग्रहातुर' (द.रू. ४ ।७३ वृ:) इति। वीरस्तु त्रिलोकीस्वीकारसन्तुष्टतेजः प्रसरज्वलदुत्साहस्थायित्वादभिमानमयत्वेन व्यवस्थानादस्माद्भिद्यत् एव। एवञ्च यत्रेदमहं करोमीत्यहङ्कारः, एतेन कृतेनेदं मम फलमिति स दयावीरः। यत्र पुनः फलानभिसन्धानेन कर्तव्यमेतदिति शास्त्रविहितकर्माचरणात् सर्वप्रकारमहङ्काररहितत्वं स शान्तः। ग्रन्थकर्तुस्तु दयावीर इति शान्तस्येवेदं नामन्तरकरणमिति भावः। यदुदाहरिष्यते 'यथा नागानन्दे शान्तस्येत्यादि' (७ ऊः)। एतच्च 'युद्धवीरं दानवीरं धर्मवीरं तथैव च। रसं वीरमिति प्राह ब्रह्मा त्रिविधमेव हि॥' (ध्व. आ. लो. १७८ पृ:) इति वीरस्य त्रैविध्यमभिदधता मुनिनाऽपि प्रदर्शितम्। अत्रापि यत्र दानधर्मवीरयोः सर्वाकारमहङ्कारादिशैथिल्यं प्रतीयते तत्र तयोरपि शान्तप्रभेदत्वमवगन्तव्यम्। तस्माद्बीभत्सादिभ्यः पृथग्भूतस्तत्त्वज्ञानसमुत्थनिर्वेदस्थायिभावप्रभव उत्तमप्रकृतिरहङ्कारशैथिल्यात्मकोऽस्ति शान्तो नाम रस इति व्यवस्थितम्। अयञ्च मोक्षफलत्वेन पर[म] पुरुषार्थनिष्ठत्वात् सर्वरसेभ्यःप्रधानतमः। महाभारते चास्यैव साम्राज्यम्। तथाहि तत्रानुक्रमण्यां शान्ताङ्गभूतस्य धर्मादेः पुरुषार्थस्य य उपनिबन्धः स सांसारिकव्यवहारस्य शान्तप्रतिपक्षीभूतस्यानादेयतामाविष्कर्तुम्। एतच्च 'स हि सत्यमृतञ्चैव पवित्रं पुण्यमेव च. शाश्वतं परमं ब्रह्म ध्रुवं ज्योतिः सनातनम्॥ (महाः १ अनुक्रः १९३-९४) इत्यादिभिः श्लोकैः परमेश्वरातिरिक्तानां सर्वेषामेव मिथ्याप्रपञ्चत्वमिति व्यञ्जयता महर्षिणैव प्रकाशितम्। अहौ वेत्यादि। स्त्रैणं स्त्रीसमूहः कदा यान्तीति 'विभाषा कदाकर्ह्यो'-(पाः ३ ।३ ।५)रिति भविष्यति वर्तमाने (न) प्रत्ययः, कदा यास्यन्तीत्यर्थः। तदिह 'शिव शिव शिवेति परमार्थस्वरूपमालम्बनविभावः, पुण्येऽरण्य इत्युद्दीपनविभावः, समदृष्टिरनुभावः प्रार्थनारूपा चिन्ता व्यभिचारिभावः, एवं धृत्यादयोऽप्याक्षिप्यन्ते। एषामत्र शान्तरसप्रकाशत्वम्। अयञ्च विभावादियोजना [या] सोऽनुन्मीलितपूर्वोमार्गः शिष्यशिक्षाप्रदानार्थमनूद्यत इति सहृदयैरत्रावधेयम्।' (रु. सं. २६)

## दीपिका

अहौ वेत्यादौ सम्भ्रमः (?) स्वल्पोऽनुभूयते, न चासौ शृङ्गारादिरिति निरवद्यो नवमरसवादः।

स्त्रैणं स्त्रीसमूहः। यान्तीति-'कदाकर्ह्योर्विभाषये'ति भविष्यति वर्त्तमाना। निर्वेदस्थायीति—चिरन्तनदिशा।

वस्तुतस्तु निरीहावस्थायामानन्दोत्तररूपः शम एवास्य स्थायी, निर्वेदस्तु सञ्चार्येव, तस्य स्वावमतिमात्रत्वात् विषयानां प्रत्ययमात्रत्वाद्वा( ?) शान्तेषु सुखातिशयरूपत्वात् । तदुक्तम्—

**यच्च कामसुखं लोके यच्च दिव्य महत्सुखम् ।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ।।** इति ।

अत्र चानित्यताऽऽदिना सर्वजगन्निःसारताभावने परमार्थस्वरूपमालम्बनं, पुण्यतीर्थादय उद्दीपनं, पुलकादयोऽनुभावाः, हर्षादयः सञ्चारिणः । तस्य वीभत्सेऽन्तर्भावस्तु नोचितः, तत्र विषयजुगुप्सायाः प्राधान्यात् । दयावीरदैवतरत्यादीनान्तुसाहङ्कारदशायामत्र नान्तर्भावः । नचायं सर्वजनावेद्यतया न रसः, शृङ्गारादीनामपि शुकादीनामवश्यत्वात् । तस्माद्विलक्षण एवायं नवमो रस इति सन्तोष्टव्यम् ।

## दर्पणः

यदिति । यच्च निर्वेदस्थायिभावतामवलम्ब्य ग्रन्थकृता अवान्तररसस्वीकारःकृतः तत्प्राचीनस्य कस्यचिदाचार्यस्यानुरोधेनैव । निर्वेदस्तु स्वावमाननमात्रत्वात् विषयालम्बनमात्रत्वाच्च सञ्चारी भवितुमर्हति । शान्तस्तु शमस्थायिभावो नवमो भवितुमर्हति । यदुक्तं तत्रैव—

**शमो निरीहावस्थायामात्मविश्रामजं सुखमिति ।**

तदुक्तं कृष्णद्वैपायनेन—

**यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ।।** इति

स्त्रैणं स्त्रीसमूहः ।

## साहित्यचूडामणिः

अथ कतमस्यायं रसस्य स्थायीत्यत्रह—तेनेति ।

निर्वेदः स्थायिभावो यस्य । शान्तोऽपीति । शृङ्गारवीरादिवदिति यावत् । ननु अष्टौ नाट्यरसा इति पर्यगण्यन्त, तत् कथं शान्तोऽपीति चेत्,

तत्राह—नवम इति । ननु नास्ति शान्तो रसः, तस्य मुनिना विभावाद्यप्रतिपादनाद्, अनादिकालप्रवृत्तयोश्च रागद्वेषयोरुच्छेत्तुमशक्यत्वात् । अस्तित्वेऽपि—

**न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा ।**
**रसस्तु शान्तः कथितो मुनिन्द्रैः सर्वेषु भावेषु शमप्रधानः ।।**

इति स्थित्या समस्तभावप्रविलयलक्षणस्य तस्यालङ्काराद्यभिनयानौचित्यात् । अथ च शक्यं वीरभयानकादावन्तःपातयितुम् । यदाह—

**निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम् ।** [दंशरू. ४.३६]

**शममपि केचित् प्राहुः पुष्टिर्नाट्येषु नैतस्य॥** [दशरू. ४.३५]

**शमप्रकर्षोऽनिर्वाच्यो मुदितादेस्तदात्मता।** [दशरू. ४.४५]

इति। तत् कथमस्य पृथग्गणनमिति चेत्।

उच्यते—विभावाद्यप्रतिपादनं तस्य परमपुरुषार्थतया लोकयात्रातिक्रान्तत्वात्। **शक्यं न तद्विचक्षणैः** स्वयमुत्प्रेक्षितुम्। तथाहि—परमेश्वरानुग्रहः प्राक्कालीनः कुशलपरिपाकः परिमलाद्यध्यात्मशास्त्रचर्चा महापुरुषपरिशीलनं चेति विभावाः, यमनियमादयोऽनुभावाः, मतिस्मृतिचिन्तावहित्थावितर्कादयो व्यभिचारिण इति। यदि चानादिसिद्धरागद्वेषवासनानामयं न चर्वणीयः तस्मात्र रस इत्युच्यते, तर्हि वीतरागाणां शृङ्गारो वीरो वा न चर्वणीय इति तावपि रसत्वात् परिच्यवेयाताम्। दयावीरं इति शान्तस्यैव नामान्तरकरणं, येन—

**दानवीरं युद्धवीरं धर्मवीरं तथैव च।**
**रसं वीरमपि प्राह ब्रह्मा त्रिविधसम्मितम्॥**

इति त्रैविध्यमेव मुनिना वीरस्याभ्यधायि। इतोऽपि न वीरादौ तस्यान्तःपातः वीरादेरभिमानमयत्वेनाध्यवसायात्, शान्तस्यतु सर्वाहङ्कारप्रशमैकरूपतयाप्रादुर्भावात्। एवं च तयोर्विशेषेऽपि यद्येकत्वं तत् करुणादीनामपि तथात्वप्रसङ्गः। तद्भावेपि दयावीरस्य सर्वाकारमहंङ्काररराहित्ये शान्तातःपातः। अथवा वीराप्रभेदत्वमिति न कश्चिद् विरोधः। तस्य च निर्वेदः स्थायीति केचित्। अन्ये तु सर्वचित्तवृत्तिप्रशम एव स्थायीति मन्यन्ते। यथोक्तमुद्भटेन—

**'जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिता।' इति**

तदसत्, अभावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तिरूपत्वाभावेन भावत्वायोगात्। पर्युदासाकारत्वे पुनरस्मत्पक्ष एव, यत्र निर्वेदस्थायिकत्वाविशेषपारिशेष्यम्। इतरे तु—

**स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः।**
**पुनर्निमित्तापाये तु तत्रैव प्रविलीयते॥**

इति न्यायादनुपजातविशेषां चित्तवृत्तिमेव तस्य स्थायिनं भावमातिष्ठन्ते। तत्रापि युक्तिचिन्तायां प्रागभावात् प्रध्वंस एव युक्तस्तृष्णानाम्। यथाहुः—

**यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥ इति।**

यच्च सूत्रं 'वीतरागजन्मादर्शनात्' इत्यलमलौकिकार्थप्रकटनपाण्डित्येन।

**सम्प्रादयप्रकाशिनी**

अहौ वेति। अहिहारसमदृक्तया परिकर्मनैरपेक्ष्यम्। दुषत्कुसुमशयनसमदृक्तया शरीरयात्रानपेक्षा। एवं मणिलोष्टयोः समदृक्ता नैराश्यमाविष्करोति। रिपुसुहृदोस्तु ममकारविरहम्। तृणस्त्रैणयोस्तु समदृक्तया सर्वप्र-

कारनिस्सारत्वनिर्ज्ञानात् पुरोवस्थितास्वपि स्त्रीषु रथ्यातृणत्वप्रतिपत्तिः। पुण्येऽरण्य इत्यपावननगरादिवासोद्वेग उद्घोष्यते। शिवशिवशिवेति त्रिरावर्तनेन प्रलापान्तरस्यावकाशो निर्लेशमुन्मूल्यते। दिवसा यान्त्वित्यनेन न मे दिवसयापने भरः अपि तु शिवशिवशिवेति प्रलापेन व्यवस्थिते मयि स्वस्वाभाव्याद् दिवसाः कदा यान्तीति कटाक्ष्यते। अत्रानित्यत्वदोषदर्शनात् सर्ववस्तुषु निस्सारत्वपरिछित्तितत्त्वज्ञानादिकमालम्बनविभावः। पुण्यमरण्यमुद्दीपनविभावः। अहिहारादिसमदृक्त्वं शिवशिवशिवेति प्रलपनं चानुभावः। धृतिमतिस्मृतिहर्षप्रभृतयो व्यभिचारिणः। एभिः शान्तरसाभिव्यक्तिः सहृदयसंवादसुखसाम्राज्यसाक्षिणो समिध्यते।

### मधुमती

नन्वेवं इतररसवत् शान्तरसस्याप्यभिनेयत्वे 'अष्टौ नाट्ये रसाः स्मृताः' इति विरुद्ध्येत इति चेन्न। शान्तस्य निवृत्तिप्रायतया, रसान्तरस्य प्रवृत्तिबहुलतया, अभिनयस्य प्रवृत्तिनियतत्वेन, शान्तः अनभिनेयः, इतरे त्वभिनेयाः इत्यभिप्रायात्। अत एव सकामशान्तस्य जीमूतवाहनस्य प्रवृत्तिसत्त्वात् प्रबन्धनायकत्वं उपपद्यते। यद्यपि-अनेन शान्तरसानुभावरूपं वनगमनादि अभिनेयमित्येव सिद्धयति। तथापि—तत् सकामशान्तानुकृतावेव अभिनेयम्, न तु निष्कामशान्तस्य न तु निष्कामशान्तस्य इति भाव्यम्, तथा सति बुद्धादेरपि अनुकरणीयत्वापातात्। एवं च क्वाचित्कनवरसत्व प्रसिद्धिः एतन्मूलैवेति सिद्धम्।

### विस्तारिका

ननु नाट्यस्य वैशिष्ट्योपादानेन श्रव्ये रसान्तरसत्त्वमायाति, तत् कीदृगित्याह—निर्वेद इत्यादि। अमङ्गलप्रायत्वं विषयवैराग्यस्वरूपत्वात् प्रथममुपादानमिति सम्बन्धः। उभयसन्निधिपाठादुभयरूपता। विसर्जनीयजिह्वामूलीययोरिव स्वरव्यञ्जनता। न च विरोधः, अवच्छेदभेदेन तदभावात्। तत्त्वज्ञानजन्यस्य तस्य स्थायित्वात्, कारणान्तरजन्यस्य च सञ्चारित्वात्। तदुक्तम्—

**स्थायी स्याद् विषयेष्वेव तत्त्वज्ञानाद् भवेद् यदि।**

**इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥इति।**

स्वावमतिरूपस्य विषयोपशमरूपस्य निर्वेदस्य दुःखरूपस्य कथं स्थायित्वमिति शोकवत् समाधेयत्वात्। अथ शम एव शान्तरसस्थायी। तदुक्तम्—'शमो निरीहावस्थायामात्मविश्रामजं सुखम्'इति। न निर्वेदः, तस्यासुखत्वात्। तदुक्तम्—

**यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।**

**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥** इति।

मैवम्, शोकवत् समाधानस्योक्तत्वात्। किञ्च, 'एकोनपञ्चाशदमूश्च भावायुक्त्या निबद्धाः परिपोषयन्तिः।' शमस्वभावस्याङ्गीकृतौ मुनिपरिगणितभावानामेकोनपञ्चाशदधिकत्वापत्तेः। अष्टौ स्थायिभावाः। सात्त्विका अष्टौ, त्रयस्त्रिंशद् व्यभिचारिण इत्येवं मुनिना गणनात्। क्वाचित्कशमप्रयोगस्तु निर्वेदपरत्वेन व्याख्येयः। तृष्णाक्षयसुखं तृष्णाक्षयेण निर्वेदेन यत् सुखं तन्नात्मविश्रामम्।

स्थायित्वाभिधानफलमाह—निर्वेदस्थायिभावोऽस्तीत्यादि । अस्ति, न त्वाधुनिकः ।'

अहौ वेत्यादि । स्त्रैणं स्त्रीसमूहः । क्वचिदमेध्ये तस्मिन्नेव पुण्यारण्ये द्वयोः समत्वात् । प्रलपत इति । शिव शिव शिवेत्यपि वचनमनर्थकम्, प्रकृतिशब्दादनधिकार्थत्वात् सर्वेषामेव ब्रह्मप्रतिपादकत्वात् ।

अत्र जीवन्मुक्त आलम्बनम् । साम्यदर्शनमनुभावः । मतिवृत्ता[धृत्या] दयः सञ्चारिणः ।

**सारबोधिनी**

ननु 'अष्टौ नाट्ये रसाः' इति नाट्यस्य विशिष्योपादानेन श्रव्यकाव्ये रसान्तरमायाति । तत् कीदृगित्यपेक्षायामाह निर्वेद इति । अमङ्गलप्रायत्वं विषयवैराग्यस्वरूपत्वात् । अत्र तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वं कारणान्तरजन्यस्य तस्य सञ्चारित्वम् । तदुक्तम्—

**स्थायी स्याद्विषयेष्वेव तत्त्वज्ञानाद्भवेद्यदि ।**
**इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ ॥** इति ।

शान्तस्यापि करुणादिवद्रसत्वं बोध्यम् । अहाविति । अत्र यथा अहिरनिष्टापादकस्तथा हारोऽपीति साम्यदृष्टिः । एवमुत्तरत्रापि यथायोगमूहनीयम् । स्त्रैणं स्त्रीसमूहः । प्रलपतोऽपि मम शिव शिवेति अनर्थकवाक्योच्चारणेऽपि भगवन्नामग्रहणमेव कुर्वतः । यद्वा, प्रशब्दः प्रकर्षार्थः । तथा च प्रवदत इत्यर्थः । अत्रानित्यत्वादिपरिभावित जगदालम्बनम् । तपोवनाद्युद्दीपनम् । सर्वसमत्वादयोऽनुभावाः । धृत्यादयः सञ्चारिणः ।

**काव्यप्रदीपः**

निर्वेदस्यामङ्गलप्रायस्य पश्चान्निर्देश्यत्वेऽपि प्राङ्निर्देशा मुख्यत्वप्रकाशनेन स्थायित्वप्रतिपादनाय तेन

**निर्वेदस्थायिभावाख्यः शान्तोऽपि नवमो रसः ।**

तत्प्रकृतिकत्वात् । यथा—

**'अहौ वा हारे वा कुसुमशमने वा दृषदि वा**
**मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।**
**तृणे वा स्त्रैणे का मम समदृशो यान्तु दिवसाः**
**क्वचित्पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः ॥'**

स्त्रैणं स्त्रीसमूहः । वाशब्दाभ्यां द्वयोर्द्वयोस्तुल्यता द्योत्यते । अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः । न चैतस्य स्थायी निर्वेदो युज्यते । तस्य विषयेष्वलंप्रत्ययरूपत्वादात्मावमानरूपत्वाद्वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तम्—

**'यच्च कामसुखं लोके यश्च दिव्यं महत्सुखम् ।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥'**

अत एव 'सर्ववृत्तिविरामोऽस्य स्थायी' इति निरस्तम् । अभावस्य स्थायित्वा योगा । तस्माच्छमोऽस्य स्थायी । निर्वेदादयस्तु व्यभिचारिणः । स च शमो निरीहावस्थायामानन्दः । स्वात्मविश्रामादिति ।

## आदर्शः

शान्तोऽपीति, तल्लक्षणादिकं तु उक्तं दर्पणे—

**शान्तः शमस्थायिभाव उत्तमप्रकृतिमेतः ।**
**कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥**
**अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या ।**
**परमात्मस्वरूपं वा तस्यालम्बनमुच्यते ॥**
**पुण्याश्रम-हरिक्षेत्र-तीर्थ-रम्यवनादयः ।**
**महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ॥** इति

अत्र च शमस्थायिभावत्वकथनं मतान्तर एव, ग्रन्थकृन्मते तु निर्वेद एवास्य स्थायिभावः । न च शमपदमेवात्र निर्वेदपरमिति वाच्यम्—

**शमो निरीहावस्थायामात्मविश्रान्तिजं सुखम् ।**

इति तत्रैव तल्लक्षणात् । अत एवालम्बनकथनमपि अत्र शमस्थायिभावपक्ष एव, निर्वेदस्थायिभावपक्षे तु अवमाननीयं स्वमेवावलम्बनम् । अनुभावव्यभिचारिणस्त्वाह—

**रोमाञ्चाद्याश्चानुभावास्तत्र स्युर्व्यभिचारिणः ।**
**निर्वेद-हर्ष-स्मरण-मति-भूतदयादयः ॥** इति

अत्र च ग्रन्थकृन्मते निर्वेदमपहायैव व्यभिचारिणो बोध्याः । स्मरणमती ईश्वरविषये । भूतदया दैन्यविशेष एव पर्य्यवस्यति, परदुःखेन स्वानौजस्यरूपाया दयाया उक्तदैन्यलक्षणाक्रान्तत्वादित्यतो व्यभिचारिभावत्वम् । अहौ वेति । अहिहारादिष्वेकं द्वेषार्हमन्यद्रागार्हम्, उभयत्रैव समदृशो मम शिव शिव शिवेति प्रलपतः क्वचित् पुण्येऽरण्ये दिवसाः कदा यान्ति यास्यन्तीत्यर्थः । कदाशब्दयोगे भविष्यदर्थे वर्त्तमाना । स्त्रैणं स्त्रीसमूहः । अत्र च रागद्वेषराहित्यात् शिवजपे प्रलापत्वारोपाच्च आत्मन उन्मत्तत्वसूचनेन स्वावमानरूपो वक्तुर्निर्वेदः प्रतीयते । तस्य स्वमालम्बनम्, पुण्यारण्यमुद्दीपनम्, इयमुक्तिः शिवजपे प्रलापत्वारोपश्चानुभावः, उक्तजपेन दिवसगामिताशंसा-व्यङ्ग्ययो हर्ष औत्सुक्यञ्च व्यभिचारिभावः । निर्वेदज्ञे सामाजिके रसोत्पत्तिः ।

## सुधासागरः

शान्तरसो यथा । अहावित्यादि । शिखरिणी छन्दः । लक्षणमुक्तं प्राक् । अयमर्थः । अहिः सर्पः तत्र वा हारे वा । कुसुमशयने पुष्पाकीर्णपल्यङ्के वा दृषदि शिलायां वा । मणौ रत्ने वा लोष्टे मृत्पिण्डे वा, बलवति रिपौ प्रबलशत्रौ वा । बलवति सुहृदि समर्थमित्रे वा, तृणे वा स्त्रैणे स्त्रीसमूहे वा समदृशः । उत्तरत्रापि वा शब्दानुषङ्गः । क्वचिदमेध्यदेशे वा, पुण्यारण्ये नैमिषारण्यादौ वा । शिव शिव शिवेति अर्थाच्छ्वेयस्करं वदतो वा प्रलपतोऽर्थकं वदतो वा । मम दिवसा यान्त्विति । जगतो मिथ्यात्वेन रागद्वेषयोरभावादिति भावः । वाशब्दाभ्यां द्वयोर्द्वयोस्तुल्यता

द्योत्यते। एवञ्च यथाऽहिरनिष्टापादकत्वेनानुपादेयस्तथा हारोपीति साम्यदृष्टिरिति श्रीवत्सलाञ्छनव्याख्यानमनादेयम्।

अत्रानित्यत्वादिपरिभावितं जगदालम्बनम्। सर्वसमत्वमनुभावः। धृत्यादयः सञ्चारिणः।

अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः। न चैतस्य स्थायी निर्वेदो युज्यते। तस्य विषयेष्वलंप्रत्ययरूपत्वाद्। आत्मावमाननरूपत्वाद्वा। शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात्। तदुक्तं कृष्णद्वैपायनेन—

**यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥**

इति। अत एव सर्ववृत्तिविरामोऽस्य स्थायीति निरस्तम्। अभावस्य स्थायित्वा योगात्। तस्माच्छमोऽस्य स्थायी। निर्वेदादयस्तु व्यभिचारिणः। स च शमो निरीहावस्थायामानन्दः स्वात्मविश्रामादिति। न चेतावता 'निर्वेदस्थायिभावाख्यः' इति वदतां श्रीवाग्देवतावतारवृत्तिकाराणां प्रमादः शङ्क्यः, तत्त्वज्ञानजन्यनिर्वेदस्यैव शमरूपत्वात्। आपदीर्ष्यादिकारणान्तरजन्यस्य तस्य स्वावमाननरूपत्वात्। अस्यैव च चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनतादिकार्योत्पादकत्वम्। न खलु ब्रह्मज्ञानजन्यनिर्वेदस्य वैवर्ण्योच्छ्वासादिकार्यजनकता स्वप्नेपि सम्भवतीति सूक्ष्मदृशाऽवधातव्यम्। एवञ्च तत्त्वज्ञानजन्यनिर्वेदस्य स्थायित्वं कारणान्तरजन्यस्य सञ्चारित्वमिति तत्त्वम्। उक्तं चान्यत्राचार्यैः—

**स्थायी स्याद् विषयेष्वेव तत्त्वज्ञानाद् भवेद् यदि।**
**अनिष्टेष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ॥**

## विवरणम्

अष्टावेव नाट्ये रसा इत्युक्तम्। शान्तस्य हि नाट्येऽभिनयो न सम्भवति, काव्यारोहस्तु सम्भवत्येव। यदाह धनिकः—

**'शमप्रकर्षो निर्वाच्यो मुदितादेस्तदात्मता'** इति।

तत्र शान्तरसे शमः स्थायिभावः। स च द्विविधः—अविद्यापरिहरेणात्मनश्चिदानन्दोल्लासः, अविद्यावच्छिन्नस्यात्मनः स्थूलसूक्ष्मशरीरपरिहारेण स्वस्वरूपोल्लासः। तत्राद्यो नाभिनेतु शक्यते, न च काव्यमारोहति, न वा सामाजिकैरास्वादयितु शक्यते, अननुभूतचरत्वात्। यदाह धनिकः—'श्रुतिरपि तं नेति नेत्यन्यापोहेनाह, न च तथाभूतस्य शान्तरसस्य सहृदयाः स्वादयितारः सन्ति' इति।

द्वितीयस्तु 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्मरणदर्शनात् सुषुप्तावनुभूयत इति निर्वक्तुमास्वादयितुं च शक्यत इत्येके।

धनिकस्तु मुदितामैत्रीकरुणोपेक्षाणां मोक्षोपायभूतानामास्वादनीयतामाह—**'अथ तदुपायभूतो मुदितामैत्रीकरुणोपेक्षालक्षणः'** इत्यादिना ग्रन्थेन।

ग्रन्थकृत्तु—मुदितादीनामपि मध्ये विषयोपेक्षैवास्वादनीया, स एव निर्वेदः ।

**यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥**

इत्यादिना ध्वनिकृदभिमतस्तृष्णाक्षयोऽप्युपेक्षैव, न तु ध्वंसः, तस्यानास्वादनीयत्वादित्याशयेन निर्वेदमेव रसान्तरस्थायित्वेन व्यवस्थापयितुमुपक्रमते—निर्वेदस्येत्यादिना । रागिणाममङ्गलत्वेनानाभिमतः, परमार्थतस्तु परममिदं मङ्गलमित्यावेदयितुं प्रायस्येत्युक्तम् । व्यभिचारित्वेऽपीति । रसान्तरे व्यभिचार्यपि, शृङ्गारे हासवदसौ निर्वेदः शान्ते स्थायी भवतीत्याशयः । 'स्थायिभावोऽत्र' इति पाठः । अत्र काव्ये । नाट्ये त्वभिनेयत्वाभावादेव न शान्तरससम्भव इति भावः ।

देवपाणिस्तु—

**मन्दस्पन्दं रहश्चित्तमानन्दाश्रुप्लुते दृशौ ।**
**रोमाञ्चकञ्चुका मुर्त्तिर्मोक्षशास्त्रार्थदर्शनम् ॥**
**ब्रह्मविद्योपदेशश्च सोऽहमित्यादिकीर्त्तनम् ।**
**नासाग्रसङ्गते नेत्रे ज्ञानमुद्राप्रदर्शनम् ॥**

इत्यादयोऽनुभावाः स्युः ।

इत्यादिना निश्शङ्कशङ्करेण शान्तरसप्रकाराणां दर्शितत्वात्, 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः । एते तव रसाः सृष्टा द्रुहिणेन स्वयम्भुवा ।' इति भरततन्त्राच्च शान्तो नाट्ये रसोऽस्तीत्याह ।

धनिकस्तु—

**रत्युत्साहजुगुप्साः क्रोधो हासः स्मयो भयं शोकः ।**
**शममपि केचित् प्राहुः पुष्टिर्नाट्येषु नैतस्य ॥**

इत्युक्त्वा त्रिवर्गफलके नाट्ये शमेन न निर्वहणसन्धिर्निर्वहतीत्यभिप्रैति ।

अहौ वेत्यादि । अत्र सर्वत्र समदृष्टिशिवशब्दप्रलापादिभिरनुभावैरुल्लासितो हर्षादिव्यभिचारी शमः स्थायिभावः ।

अथ भावः । साधारणीकरणव्यापारबलात् स्वान्तः करणवृत्त्यभेदेन सामाजिकैरास्वाद्यमानो रामादेरन्तःकरणवृत्तिर्भाव । रसस्तु तथाविधो भावः परिपोषापन्न उच्यते । परिपोषस्तु रतेरालम्बनरत्युपबृंहणम्, हासस्यालम्बनगतकैतवमौत्कण्ठ्याद्युपबृंहणम्, हासस्यालम्बनगतकैतवमौत्कण्ठ्याद्युबृंहणम्, करुणे त्वालम्बनस्य रतिविभावत्वप्रकर्ष इत्यादि प्रणिधेयम् । ते च भावाः परिपोषमनापन्नारत्यादयोऽष्टौ, निर्वेदादयस्त्रयस्त्रिंशत्, सात्त्विकाः स्वेदादयोऽष्टावित्यूनपञ्चाशत् । रत्यादिस्तु समुचितालम्बनकः, तटस्थालम्बनकः, अनुचितालम्बनक इति त्रिविधः । आद्यो रसः द्वितीयो भावः, तृतीयो रसाभास इति विवेक इति दिक् ।

**(सू. ४८) रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥ ३५ ॥**

भावः प्रोक्तः

आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः ।

उदाहरणम्

**कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् ।**
**अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥ ४५ ॥**

**हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥४६ ॥**

एवमन्यदप्युदाहार्यम् ।

---

### संङ्केतः

कान्तिदिविषया रतिः शृङ्गारः, देवादिविषया तु व्यक्ता सती, व्यक्तः व्यभिचारी च भावः इत्याह—रतिरिति ।

### सङ्केतः (रुय्यकः)

रतिर्देवादीति । रतिग्रहणमुपलक्षणत्वेन व्याख्येयम्, 'धिक् सानुजं कुरुपतिं धिगजातशत्रु' मित्यादौ जुगुप्सादीनामपि भावत्वोपलम्भात् । न हि निन्दात्मिका जुगुप्सा बीभत्सतां भजते, श्मशानाद्यधिष्ठानायास्तस्यास्तथाभावात् । तान्त्रिको हि रसशब्द इत्युक्तं प्राक् ।

### बालचित्तानुरञ्जनी

'रसभाव तदाभास' इत्यत्रासंलक्ष्यक्रमव्यङ्ग्यत्वेन भाव उद्दिष्टस्तस्येदानीं लक्षणमाह रतिरिति । देवादिविषया रतिरञ्चिता व्यञ्जिता सती भावः प्रोक्नः तथा व्यभिचारी सन् भावः प्रोक्तः 'अञ्जित' इति पाठे वर्णित इत्यर्थः । देवादीत्यत्रादिशब्दार्थमाह आदिशब्दादिति । ननु कान्तादिविषयेति वक्तव्यम् । कान्ताविषयरतेरपि भावत्वादित्याशङ्क्याह कान्ताविषयेति । तुशब्दः देवादिविषयरतेर्विशेषद्योतनार्थः । यद्यपि कान्ताविषयरतेर्भावत्वं तथापि विभावादिभिरुपचिता सा शृङ्गाररस इति प्रसिद्धा । देवविषयं भावमुदाहरति । किञ्चित् वचनम् भक्तस्य । हे ईश ! कण्ठकोणविनिविष्टं विषमपि मे महामृतम् । स्वीकृतममृतमपि भवच्छरीराद्भिन्नवृत्ति तदमृतं मे न रोचते ।

मुनिविषयं भावमुदाहरति हरत्यघमिति । यस्म प्रसाददहमेव विष्णुरित्वादिश्लोकेषु गुर्वादिविषयभावोदाहरणं द्रष्टव्यमित्याह एवमन्यदिति ।

### काव्यादर्शः

रसध्वनिमुक्त्वा भावध्वनिमाह—रतिर्देवेति । यदा रतिर्व्यभिचारी चोद्रिक्तावस्थां प्रतिपन्नौ चमतत्कारातिशये प्रयोजकौ स्यातां तदा तौ भावध्वनी इत्याह—अञ्जित इति । अङ्गित्वेन व्यञ्जितो भाव एव न पुना रसः ।

### विवेकः

एवमसंलक्ष्यक्रमं रसस्यरूपं निर्णीयाधुना यथाक्रमं तथाभूतान् भावादीन् दर्शयति रतिरिति । देवादिविषयतया भक्तिस्तुत्यादिरूपस्य रतिभावस्य स्थायित्वाभावाद्विशेषतो व्यभिचारित्वम्, अतो विभावादिभिरभिव्यज्यमानत्वेऽपि न रसत्वम् रतिग्रहणमुपलक्षणत्वेन व्याख्येयम्, धिक् सानुजं कुरुपतिं धिगजातशत्रु-(वेणी ३ ।१३) मित्यादौ जुगुप्साऽऽदीनामपि भावत्वोपलम्भात् । न हि निन्दाऽऽत्मिका जुगुप्सा बीभत्सतां भजते, श्मशानाद्यधिष्ठानायास्तस्यास्तथाभावात् । तान्त्रिको हि रसशब्द इत्युक्तं प्राक् । एवं व्यभिचारी निर्वेदादिरपि विभावादिभिरभिव्यक्तोऽलक्ष्यक्रमव्यङ्ग्यो भावः प्रोक्त इति सूत्रप्रतीकेन सम्बन्धः स्थायिव्यभिचार्यादिप्रकारेणोक्तः । देवादीत्यादिपदं व्याचष्टे मुनीत्यादि । क्व तर्हि रतेः शृङ्गारत्वमित्यत आह कान्तेति । तत्र दैवतविषया रतिर्यथा कण्ठेति । कालकूटं जगदन्तको विषविशेषः । भवद्वपुर्भेदवृत्ति भवच्छरीरात् पृथग्भूतम् । अत्र भगवद्विषयिणी-रतिरलक्ष्यक्रमा भक्तिरूपत्वाद्भाव एव । मुनिविषया यथा हरत्यघमित्यादि कृतं सफलितम् । शरीरिणां तव दर्शनं भूतभवद्भविष्यत्कालेऽप्यभीष्टार्थभाजनत्वं प्रकाशयति । 'योगोऽभीष्टार्थसमप्राप्तिध्यानसङ्गतियुक्तिष्वि'ति विश्वः । अत्र चाटुकाररूपा रतिः प्रतीयमाना भावः । पुत्रविषया यथा—एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम् । आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करद्वयं ते ॥ (म. वी.च. १ ।५५) इति वात्सल्यरूपा रतिः ।

### दीपिका

रतिर्देवादिविषयेति—परस्परावस्थाऽनुरूपपरिपोषबीजाभावान्न रसः । अव्यासङ्गेनात्यन्तपोषे तु दैवतरतेः शान्तावन्तर्भाव इत्युक्तप्रायं सर्वमिति ।

न च नायिकाविषयेऽपि रतेः क्वचित्तावन्मात्रताऽस्तु यथा 'स्तुमः क' मित्यादौ । तत्र हि प्रकरणपर्यालोचनयाऽन्योन्यजीवितसर्वस्वताविरहान्न रसता । विषयानौ चित्यादिविरहाच्च नाभासः । एवं हासादीनामप्यपुष्टौ भावमात्रता भावुकैर्बोद्धव्या । तत्रापि च वासनोद्बोधरूपत्वं समूहालम्बनात्मकत्वञ्च पूर्वप्रक्रियाऽनुसारेण ज्ञेयम् । स्वरूपमात्रभेदेन हि रसभावव्यपदेश इत्युक्तम् । व्यभिचारीति—कनकधूपामोदादौ मङ्गल्यादिभाग इव किञ्चिदाक्रान्त इव चमत्कृतिजीवातुत्वेन भावकैरपोह्य क्रियमाण इत्यर्थः । तथा चार्थे कान्ताविषया जीवितसर्वस्वाधिकतरत्वाभिमतनायिकाविषया दत्तस्त्रीमात्रविषया वा । व्यक्ता सामग्री माहात्म्येन प्राप्तप्रकर्षा । व्यक्त इति क्वचन पाठः । योग्यता माहात्म्यम् । एवमन्यदिति—गुरुषु त्रिकलिङ्गेन्द्रदेवश्रीनृसिंहदेवस्य कविराजश्रीमदुल्लासदासपादेष्वस्माकं ज्येष्ठतातेषु यथा—

**पाटवं वचसि तावकं स्मरस्त्वां विहास्यति सचेतनो हि कः।**
**पिञ्जरे सुखनियन्त्रितो वसन् राजकीर ननु मा स्म गाः शुचम्॥**

## दर्पणः

संप्रत्युद्देशक्रमप्राप्तान् भावादीन् निरूपयति रतिरिति। अञ्जितः मुख्यतया यद्यपि काव्यार्थस्याखण्डबुद्धिवेद्यतया आस्वादनदशायां गुणप्रधानभावाभासो नास्ति, तथाप्यास्वादोत्तरकालं विवेचकैरयमनुभूयते। तदुक्तं तत्रैव साहित्यदर्पणे—'यथा मरिचखण्डादेरेकीभावेऽपि पानके। तत्रैकं कस्यचित् क्वापि तथा सञ्चारिणो रस' इति। योग्यता माहात्म्यम्। देवताविषयरतेरपि सर्वाकारेणाहङ्काररहितत्वे शान्तेऽन्तर्भावः। क्वचित् स्थायिनामपि प्रकरणपर्य्यालोचनया परस्परानुरागप्रकर्षपरिपोषराहित्याभावतैव। यदाह-हरस्तु किञ्चित् परिवृत्तधैर्य इत्यादौ। अत्र विषयनौचित्यं विषयाभासः। अनौचित्यप्रवृत्तित्वञ्च भरतादिप्रणीतशृङ्गरादिरसलक्षणात्मकदेशमात्रयोगे बोद्धव्यम्। तच्चाधममात्रगतत्वे तिर्यगादिनिष्ठत्वे बहुनायकनिष्ठत्वं वा शृङ्गाराभासः, हासस्य गुर्वाद्यालम्बनत्वे हास्याभास इत्यादि।

## साहित्यचूडामणिः

इदानीं भावं प्रकटयति—रतिरिति। देवादिगोचरा रतिर्भावः।

पुत्रादीत्यादिग्रहणान्मित्रादि।

ननु कान्ताविषया रतिः कथं न भाव इत्यत्राह—कान्तेति। व्यक्तेति। व्यापारान्तरायोगात्।

शृङ्गारः इति। यः प्रपञ्चेन पर्यालोचितः। कण्ठेति। हे ईश। पारमैश्वर्यपात्रभूते। ते कण्ठकोणविनिविष्टं त्वदङ्गभङ्गितया स्थितं त्वदभेदेन प्रथमानं महाविषं हालाहलमपि मे धन्यजन्मनो महामृतं परमप्राप्तिप्रदानप्रावीण्यादनवच्छिन्नाह्लादहेतुः। यदुक्तं तत्रैव—

**दुःखान्यपि सुखायन्ते विषमप्यमृतायते।**
**मोक्षायते च संसारो यत्र मार्गः स शाङ्करः॥** इति।

अमृतं पुनरुपात्तमनायासलब्धमपि यदि भवद्वपुषः संकाशाद् भेदेन वर्तेत चिदद्वयसरणिमनधिरुह्य विजृम्भेत चेत्, तदा तदवास्तवत्वान्मह्यं न रोचते इति। अत्र देवमिन्दुमौलिमवलम्ब्य स्तोतुं महाकवेरुत्पद्यमाना रतिर्भावः।

एवमन्यदिति। तत्र नृपविषया यथा ममैव—

**सोऽयं नीलस्तुरङ्गो मम यवनपतिः प्राभृतं प्राणिणोद् यं**
**भद्रः सोऽयं गजो मे समिति विलुलिता येन सौवीरसेना।**
**सेयं मे वामनेत्रा समजनि समरो, यत्कृते राजपुत्रै-**
**रेवं कारागवाक्षे कुलतिलक! भवद्वैरिणो व्याहरन्ति॥** इति।

पुत्रविषया यथा—

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्ण-कमनीयवचः-प्रवृत्तीन्।**
**अङ्काश्रयप्रणयिनस्तनयान् वहन्तो**
**धन्यास्तदङ्गरजसा मलिनीभवन्ति॥** इति।

मित्रविषया यथा ममैव—

**रे रे कापुरुषापवादपटवः! पथ्यं कटु श्रूयता-**
**मित्थं हन्त पलायितुं किमु वयं पत्या प्रतिष्ठापिताः।**
**अप्यन्यत् कपयः! प्रियापरिभवप्रक्षालनादुद्धुरो**
**रामः क्रूरधनुर्धरो यदि वृथा वैक्लव्यमारभ्यते॥**

अत्र सुग्रीवस्य रामं प्रति मैत्रीरूपा रतिर्भावः।

### सम्प्रदायप्रकाशिनी

अथ भावं विवेचयति—रतिर्देवादीति। द्विरूपो हि भावः नायिकाव्यतिरिक्ते देव (मुनि) गुरुनृपपुत्रादौ या रतिः सा विभावादिभिरभिव्यञ्जिता सत्येको भावः। ये निर्वेदादयस्त्रयस्त्रिंशद्व्यभिचारिणस्तेऽभिव्यञ्जिता अन्यो भावः। सोऽयं विभागो दर्शितः—व्यभिचारी तथाञ्जित इति। देवादिविषया रतिर्व्यञ्जिता भावः। तथा व्यभिचारी च व्यञ्जिता भाव इत्यर्थः।

आदिशब्दसंग्राह्यानर्थान् विभज्योपन्यस्यति—आदिशब्दान्मुनीत्यादि। अपोढस्यास्य विषयान्तरत्वं दर्शयति—कान्ताविषया त्विति। रतिरित्यनुषज्यते, शृङ्गार इत्यत्र रस इति च। व्यक्तेति अव्यञ्जिताया लौकिकं स्थायित्वमेवेत्यभिप्रेति।

कण्ठकोणेति। कालकूटमपि कण्ठकोणमात्रविनिविष्टमपि भवद्वपुरभिन्नमिति मे महामृतम्। उपात्तममृतमपि भवद्वपुर्भिन्नं चेत् न रोचते इत्यद्वैताभिनिवेशातिशयः। अयं देवताविषयो रतिभावः।

मुनिविषयमुदाहरति—हरत्यघमिति। वर्तमानवृत्तश्लाघ्यतायाः प्रत्यक्षत्वात् प्रथमनिर्देशः—हरत्यघं सम्प्रतीति। अनुबन्धतोऽपि भद्रं दर्शयितुमुक्तं—हेतुरेष्यतः शुभस्येति। शुभस्येति, नैतदकृतपुण्यैर्लभ्यत इत्याह—पूर्वाचरितैः कृतं शुभैरिति। योगमर्हतीति योग्यम्।

**'योगोऽभीष्टार्थसम्प्राप्तिध्यानसङ्गतियुक्तिषु'**

इति। दण्डादित्वाद् यः।

एवमन्यदिति। गुरुनृपपुत्रादिविषयम्। तत्रगुरुविषयो यथा मम—

**संसारार्त्या विधुरविधुरो ब्रह्म यत्नाद् विचिन्वन्**
**नानारूपं जगदिदमहं दृष्टवानेव पूर्वम्।**

**हस्ते न्यस्ते सति तव गुरो साम्प्रतं मस्तकेऽस्मिन्**
**ब्रह्मैवैतत्सकलमभवन्नो जगन्नापि चाहम ॥**

नृपविषयो यथा ममैव—

**काष्ठाप्राप्तिरियं परा खलु परीपाकस्य भाग्योन्नतेः**
**श्रीबल्लालनृपाल यद् वयमिमौ पादौ तवोपास्महे।**
**यस्तिष्ठेत् प्रतिहारसीम्नि भवतो रुद्धप्रवेशश्चिरं**
**किं नासावपि चोलपाण्ड्यपृथिवीपालैः समं गण्यते ॥**

अन्यद् ज्ञेयम् ।

### मधुमती

देवादीति । मन्मथानुगता रतिः इत्यर्थः । तेन नाननुगमः, न वा परमेश्वरस्य पार्वतीविषया रतिः शृङ्गारत्वाभावं अवगाहते इति द्रष्टव्यम् । उपलक्षणमिदम्—रसताप्राप्तेः प्राक् कान्तादि विषया रतिरपि भाव एव न रसः इति । तदिदमुक्तम्—व्यक्तेति । कान्ताविषयेति वदता स्थाय्यन्तरस्य न भावतया व्यक्तिरिति सूचितम् । एतेन—ज्ञानसुखस्वरूपस्थायी एकः भिन्नविषयोपरागात् तत्तत्पदवाच्यतां भजन्नपि शृङ्गारात्मतयैव आविर्भवति, न तु रसान्तरात्मतया । तच्च भावतयैव । तत्रैव च हास्यादिव्यपदेशः—इत्यादि निरस्तम् । आविर्भावहेतुसत्त्वात् । अन्यथा शृङ्गारात्मतयाऽपि नाविर्भवेत् । विनिगमकाभावाच्च ॥

हरत्यघमिति । योगं अर्हति योग्यः । दण्डादित्वात् यत् । योगश्च अलब्धलाभः । तथा च योग्यतां अलब्धलाभार्हतां इत्यर्थः ।

एह्येहीति । यद्यपि वीरचरिते जनकस्येयमुक्तिः । तथापि दशरथोक्तित्वमारोप्य एतदुक्तम् । अत एव क्वचित् पुस्तके श्लोकोऽयं नास्त्येव ।

### विस्तारिका

क्रमप्राप्तं भावं लक्षयति—रतिरित्यादि । रतिः प्रेम, तथा चार्थे । अञ्जितो विभावादिभिः, प्रकाशितो व्यक्तो विभावादिभिः परिपूर्णः । तेनान्याङ्गत्वे पुष्टिराहित्येन रत्युद्बोधमात्रं न रसत्वम् । अत एव वक्ष्यति—'रसस्य पूर्णघनानन्दस्य स्वविश्रान्तस्य नाङ्गत्वम्, न वा बाध्यत्वम्' इति । रसपदेन स्थायिभावा उपलक्ष्यन्त इति । यत्तु विभावादिकृतपुष्टिरहित उद्बुद्धमात्रः स्थायी च भावः । यथा—

**हरश्च किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरौष्ठे व्यापारयामास विलोचनानि ॥**

इत्यत्र महादेवरत्युद्बोधस्य मदनदाहस्त्रीसन्निधिपरित्यागादिना परिपुष्टिरहितस्य भावमात्रत्वम्, न रसत्वमित्याहुः, तन्न, एतत्पद्याद् विभावादिपरिपूर्णात् स्वादस्यानुभवसिद्धत्वात् तत्र भविष्यतो मदनदाहादेः प्रतिबन्धकस्याकिञ्चित्करत्वात्, जातत्वात् तस्य । अथ प्रकरणविदुषः सामाजिकस्य तदानीमेव प्रतिबन्धकावतार इति चेत्,

पाणिग्रहणौत्सुक्याष्टमसर्गप्रतिपाद्यभोगसाम्राज्येन रतिपरिपुष्टेर्दुर्निवारत्वात् । वस्तुतस्तदुत्पाद्यप्रादुर्भूतास्वादानुभवेनैव प्रकरणानुसन्धानप्रतिनिबन्धात् । अन्यथा वीररसप्रधाने नाटके रसान्तराणामङ्गत्वं न स्यात् । प्रकरणपर्यालोचनेन वीरसामग्र्या बलवत्त्वात् ।

कण्ठेति । विनिविष्टं संलग्नम्, उपात्तं चन्द्रकलारूपम् । भेदवृत्तर्यदि भेदावभासस्तदा मह्यं न रोचते । अन्यस्य यथा तथाऽस्तु, मम तु न रुचिविषय इत्यर्थः ।

अत्र महादेव आलम्बनम्, 'ईश'पदप्रतिपाद्याव्याहतैश्वर्यमुद्दीपनम्, स्तवोऽनुभावः, धृतिमाहात्म्यादयः सञ्चारिणः । एभिरनुमितस्तावकरतीनां सामाजिकानां विभावादिभिरुद्बुद्धा रतिः स्वप्रकाशः समूहालम्बनो भावः ।

ननु कथमस्य न रसत्वम् ? अस्या रतेरसुखात्मकत्वादिति चेत्, न; प्रमाणाभावात् । सामग्रीसमत्वेनाविशेषात् । शुष्कनारिकेरचर्वणादिवात्र यथाकथञ्चिदास्वादः । तत्र रसालयष्टिचर्वणान्यायेनामूलतः पूर्णघनानन्द इति । अत्र सहृदयहृदयमेव प्रमाणमिति चेत्, भवन्तं विना 'अन्यसहृदयस्य दुर्लभत्वात् । वस्तुतस्तु स्वतन्त्रेण मुनिना रसानां नवत्वस्य गोतमेनेव हेत्वाभासानां पञ्चत्वस्योपगमात् । नव रसाः, अन्ये भावा इति मुनिनोक्तत्वात्; न चायं शान्तो रसः, भेदावभासान्महादेवविषयकभावोद्रेकेणात्ममात्रावलम्बनात् ।

मुनिविषयमाह—हरतीति । नारदं प्रति कृष्णस्य स्तुतिरियम् । कालत्रितये वर्तमाने भविष्यत्वतीते च । योग्यतां पुण्यवत्त्वम् सम्प्रति दर्शनं वर्तमानकालीनमघं पापम्, एष्यत आगमिष्यतः पुण्यस्य, पूर्वाचरितैः पूर्वजन्मार्जितैः, शरीरभाजां प्रकृष्टज्ञानवताम्, भवदीयस्य भवत्सम्बन्धिनो यस्य कस्यचित् । षष्ठ्यर्थो विषयत्वाख्यासम्बन्धः, भवद्दर्शनस्य तु मुक्तिहेतुत्वमेव ।

एवमिति । अन्यत्र पुत्रादिविषयकरतौ । तेन वत्सलो रसो नाङ्गीकृतः, भावेनैव गतार्थत्वात् । यथा—

**एह्येहि वत्स रघुनन्दन पूर्णचन्द्र**
**चुम्बामि मूर्धनि चिरञ्च परिष्वजे त्वाम् ।**
**आरोप्य वा हृदि दिवानिशमुद्वहामि**
**वन्देऽथवा चरणपुष्करकद्वयं ते ॥** इति ।

अत्र तु न यथा रसान्तरत्वं तथा प्रतिपादितमेव ।

## सारबोधिनी

क्रमप्राप्तं, भावं लक्षयति रतिरिति । व्यक्ता विभावादिभिः पूर्णा । तेनान्याङ्गत्वेन विभावादिकृतपुष्टिराहित्येन रत्युद्बोधमात्रं न रस इति ।

कण्ठेति । विनिविष्टं निबिड संलग्नम् । उपात्तं चन्द्रकलारूपं भेदवृत्ति भेदावभासविषयीभूतं, तदा मे मह्यं न रोचते । अत्र महादेव आलम्बनम्, ईशत्वमुद्दीपनम् । स्तवोऽनुभावः । धृतिमाहात्म्यादयः सञ्चारिणः । ननु कथमस्य न रसत्वमिति चेदुच्यते । स्वतन्त्रेच्छया मुनिना तथैव परिभाषाकरणात् । नव रसा अन्ये भावा इति ।

हरतीति। नारदं प्रति कृष्णस्योक्तिरियम्। एष्यतः आगमिष्यतः शुभस्य हेतुरिति संबन्धः। योग्यता इष्टसंपत्तिहेतुर्गुणयोगः। भवदीयस्य भवत्संबन्धिनो यस्य कस्यचित्। तव दर्शनस्य किं पुनर्वक्तव्यमिति केचित्।

### काव्यप्रदीपः

रसवद्भावोऽप्यलक्ष्यक्रमेषु पठितः स किंरूपः। रत्यादीनां रसरूपत्वात्, व्यभिचारिणां रसाङ्गतानियमे प्राधान्याभावात्, सात्त्विकानामव्यङ्ग्यत्वादित्वत आह—

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः।**

**भावः प्रोक्तः**

रतिरिति स्थायिभावोपलक्षणम्। देवादिविषयेत्यप्यप्राप्तरसावस्थोपलक्षणम्। तेन देवादिविषया कान्तादिविषयाप्यपुष्टा रतिः, हासादयश्चाप्राप्तरसावस्थाः, प्राधान्येन व्यञ्जितो व्यभिचारी च भाव इत्यवधातव्यम्— यदुक्तम्—

**'रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथवा।**
**अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक्॥'**

तदेतदाह वृत्तिकारः—'कान्तादिविषया तु व्यक्ता शृङ्गारः।'

तत्र देवविषया रतिर्यथा—

**'कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।**
**अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते॥'**

मुनिविषया यथा—

**'हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥'**

एवमप्राप्तपरिपोषा पुत्रादिविषया रतिः स्थाय्यन्तरं चापुष्टमुदाहार्यम्।

### काव्यप्रकाशखण्डनम्

अथ भावस्वरूपम्—

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। (मू. का. ३५, उ.)**

भावः प्रोक्तः।

आदिग्रहाणात् मुनि-नृप-पुत्रादिविषया। अञ्जितो व्यञ्जित इत्यर्थः।

तत्राऽऽदौ भावोदाहरणम्—

**कण्ठकोणविनिविष्टमीश ! ते कालकूटमपि मे महामृतम् ।**
**अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥**

ननु कथमस्य न रसत्वम् 'नवरसा अन्ये भावा' इति स्वतन्त्रेच्छेन मुनिना विभागकरणात् । असुरादौ कवेः रत्यभावेऽपि तत्प्रतापादिवर्णनं तज्जेतुरुत्कर्षप्रतिपादनाय ।

## आदर्शः

रसनिरूपणानन्तरं रसभावतदाभासेत्यादिक्रमप्राप्तं भावमाह—रतिरित्यादि । रतिरुक्तलक्षणैव, सैव च कान्ताकान्तविषयत्वे शृङ्गारः अन्यविषयत्वे तु भावः । परन्तु भक्तियोग्यदेवादिविषयत्वे भक्तिरूपा पुत्रादिविषयत्वे स्नेहरूपा बोध्या । व्यभिचारी तथेति । रतिरञ्जिता व्यभिचारी चाञ्जित इत्यन्वयः । 'अञ्जितः' व्यञ्जितः । व्यञ्जितत्वञ्च निराकाङ्क्षवाक्येनैवेति बोध्यम्, तदैव तस्य प्राधान्यात्, अन्यथा निराकाङ्क्षवाक्यव्यङ्ग्यं यत् तद्ध्वनित्वमेवास्य स्यात् । एवञ्च एकत्रैव पद्ये यत्र कान्तादिविषयरत्यादेर्व्यभिचारिभावस्य च व्यङ्ग्यत्वं तत्र निराकाङ्क्षवाक्यव्यङ्ग्यं यत् तेनैव तद्ध्वनित्वव्यवहारः, इतरस्य तु तद्धेतुतैवेति विनिगमना । अत एव 'शून्यं वासगृह' मित्यादौ व्यङ्ग्यस्यापि हर्षस्य निराकाङ्क्षवाक्यव्यङ्ग्ये शृङ्गारे हेतुतैव । यत्र तु द्वयमपि निराकाङ्क्षवाक्यद्वयव्यङ्ग्यं तत्रोभयसङ्करध्वनित्वमेव; यथा त्वामालिख्येत्यादौ विप्रलम्भासूययोः । व्यभिचारिणाञ्च यथासम्भवमेव भावत्वम्, न तु सर्वस्य व्याध्यादीनामतथात्वात् । पुत्रादीत्यादिपदाद् अनुरागपात्रमात्रपरिग्रहः । कान्तेत्येकशेषः तेन कान्ताकान्तद्वयं बोध्यम् । तद्द्वयञ्च उपनायिकोपनायकसाधारणं बोध्यम् । एवं शृङ्गारोऽप्याभाससाधारणः । व्यक्तः अञ्जित इति रूपद्वयं, रौधादिकचौरादिकाभ्यामञ्जिभ्यां सिद्धम् । देवादिविषयरतिर्व्यभिचारिभावस्य च स्वस्व विभावादिभिरेव व्यञ्जनं रसोक्तरीत्या स्ववासनायामारोपरूपम्, तद्रीत्यैव साक्षात्कारश्च बोध्यः । देवादिविषयरतिव्यभिचारिभावयोरेकस्य निराकाङ्क्षवाक्यव्यङ्ग्यत्वे अन्यस्तत्र व्यभिचारिभाव इत्यादि स्वयमूह्यम् । तत्र देवविषयां रतिमुदाहरति—कण्ठकोणेति । हे ईश मम कालकूटमपि महामृतं यतस्ते कण्ठस्य कोणे एकदेशे विनिविष्टं तज्जातीयमित्यर्थः त्वच्छरीरसम्बन्धान्महामृतमित्यर्थः । भेदेत्यत्र कृदभिहितभावत्वाद् भिन्नेत्यर्थः, तस्यापि तन्मात्रेत्यर्थः, तथाच तन्मात्रवृत्ति यदि तदा उपात्तम् उपस्थितम् अपि अमृतं न मे रोचते इत्यर्थः । भेदवृत्ति भेदव्याप्यमिति वा अर्थः । अत्र वक्तुर्भक्तिरूपाया रतेर्महेश आलम्बनम्, तदीयमांशत्वमुद्दीपनम्, विषामृतयो रुच्यरुची अनुभावौ, तत्सूचिते हर्षासूये व्यभिचारिणौ, रतिज्ञे सामाजिके भावोत्पत्तिः । अहौ वेत्यादौ तु शिवजपे प्रलापत्वारोपाद् न तद्विषयभाव इति बोध्यम् ।

मुनिविषयां रतिमाह—हरत्यघमिति । अभ्यागतं नारदं प्रति श्री कृष्णस्योक्तिरियम्, भवदीयदर्शनं कर्त्तृ कालत्रितयेऽपि शरीरभाजाम् अस्मादृशाम् अभीष्टभाजनत्वरूपां योग्यतां व्यनक्ति अनुमापयति, तत्र वर्त्तमानकालेऽघहरणम्, एष्यतः आगमिष्यतः शुभस्य हेतुत्वेन भाविकाले शुभवत्ताम्, अतीतकाले च भवद्दर्शनानुमेयां शुभवत्तां पूर्वार्द्धेनाह—हरत्यघमिति । कृतं जनितम् । अत्र मुनिरालम्बनम्, तद्दर्शनमुद्दीपनम्, श्रीकृष्णस्येयमुक्तिरेवानुभावः, अभीष्टवत्ताव्यङ्ग्यो हर्षो व्यभिचारी, मुनिविषयश्रीकृष्णरतिज्ञे सामाजिके भावोत्पत्तिः ।

एवमन्यदपीति । तत्र गुरुविषयरतौ यथा—

तत्र मन्त्रकृतो मन्त्रैर्दूरात् संयमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥

इति कुलगुरुं वशिष्ठं प्रति दिलीपस्योक्तिः । नृपविषयरतौ यथा—

अहो महीयो भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ इति

पुत्रविषयरतौ यथा—

यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलीम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥ इति

पितृ-मातृ-विमातृविषयरतौ यथा—

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥

इत्युत्तररामचरिते रामस्योक्तिः ।

भ्रातृविषयरतौ यथा—

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥ इति

कन्याविषयरतौ यथा—

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
नाऽऽदत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

इत्याश्रमवृक्षान् प्रति कण्वस्योक्तिः ।

सुहृद्विषयरतौ यथा मम—

दुःखे सुखे रहसि नर्म्मणि तुल्यधर्मा
मर्मान्तिकेऽपि किल कर्मणि शर्मदायी ।

**धर्मेऽप्यवैषि रुधिरं चलितो न धर्मे**
**त्वं मे सखे जगति कोऽस्ति तव द्वितीयः ॥** इति

उदासीनविषयरतौ यथा—

**यः पूयते सुरसरिन्मुखतीर्थ-सार्थ-**
**स्नानेन शास्त्रपरिशीलनकीलनेन ।**
**सौजन्यमानजनिरूर्ज्जितमूर्ज्जितानां**
**सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥** इति

**सुधासागरः**

रसभावतदाभासेति सूत्रे रसवद्भावोऽप्यलक्ष्यक्रमेषु पठितः । स किंरूपः ? रत्यादीनां रसरूपत्वात्, व्यभिचारिणां रसाङ्गतानियमेन प्राधान्याभावात्, सात्त्विकानामव्यङ्ग्यत्वादित्यत आह—रतिरित्यादि ।

रतिरिति स्थायिभावोपलक्षणं तेन देवादिविषया सर्वा कान्तादिविषयाप्यपुष्टा रतिः हासादयश्चाप्राप्तर-सावस्थाः प्राधान्येन व्यञ्जितो व्यभिचारी च भाव इत्यवधातव्यम् । यदुक्तम्—

**रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथवा ।**
**अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥** इति ।

तदेतदाह वृत्तिकारः कान्तातिविषया तु व्यक्ता शृङ्गार इति । तत्र देवविषयां रतिमुदाहरति—कण्ठकोणे-त्यादि । रथोद्धता छन्दः । 'रान्नाराविह रथोद्धता लगौ' इति लक्षणात् । शिवभक्तोक्तिरियम् । अयमर्थः । हे ईश ते तव कण्ठस्य कोणे एकदेशे विनिविष्ट नितरां संलग्नं कण्ठरूपतया परिणतमिति यावत् । कालकूटं विषमपि मे मम महामृतमुत्तमममृतम्, अतिप्रियत्वात्, उपात्तमपि मूर्ध्ना धृतमपि अमृतं चन्द्रकलारूपं यदि भवद्वपुषो भेदेन वृत्तिरवस्थितिर्यस्य तथाभूतं भेदेनावभासमानमिति यावत्, तदा मे मह्यं न रोचते । भवद्वपुर्ध्यानमेव ममानन्दप्रदमिति भावः ।

मुनिविषया यथा—हरत्यघमित्यादि । वंशस्थं वृत्तम् । लक्षणमुक्तं प्राक् । माघे नारदं प्रति श्रीकृष्णो-क्तिरियम् । अयमर्थः । हे मुने ! भवदीयस्य भवत्सम्बन्धिनो दर्शनं कर्तृ, भवदीयस्य कस्यापि दर्शनं तथागुणविशिष्टं किम्पुनर्भवत इति द्योतयितुं भवदीयेति, शरीरभाजां देहधारिणां मादृशाम्, कालत्रितयेऽपि वर्त्तमानादिकालत्रयेऽपि, योग्यताम् इष्टसम्पादकगुणवत्त्वरूपां, व्यनक्ति सूचयतीत्यर्थः । कथमित्याकाङ्क्षायामाह—हरतीत्यादि यतः सम्प्रति वर्तमानकालेऽघं पापं, हरति नाशयति, एष्यतः आगमिष्यतः शुभस्य श्रेयःसाधनस्य हेतुः सम्पादकम् । तत्त्वञ्चादृष्टद्वारा बोध्यम् । दर्शनस्यादृष्टद्वारा श्रेयःसाधनत्वाददृष्टस्य दृष्टसामग्रीसम्पादकत्वेन हेतुत्वात् । तथा पूर्वमाचरितैः पूर्वजन्मार्जितैः शुभैः सुकृतैः कृतं जनितम् । तथा च वर्तमानकाले पापनाशरूपा योग्यता इष्टसम्पाद-कगुणवत्तैव, निष्पापत्वस्य गुणस्य प्रतिबन्धकाभावत्वेन श्रेयःसम्पादकत्वात् । भाविनि तु श्रेयःसाधकादृष्ट सम्पत्ति-रिति तत्रापीष्टसम्पादकगुणवत्तैव योग्यता । भूते तु तथाविधं सुकृतमिति योग्यता तादृग्गुणवत्तैव । सूचकत्वं चाद्ययोर्जनकतया अन्त्यायास्तु जन्यतयेति बोध्यम् ।

चक्रवर्तिनस्तु योग्यतां पुण्यवत्तामिति व्याचख्युः । तन्नातिरमणीयम्, वर्तमानकाले तदसम्भवात्, निष्पापत्वस्यापुण्यरूपत्वात्, दर्शनस्य साक्षादेव पापनाशकत्वेन तज्जनकस्य दर्शनजन्यादृष्टस्याप्यभावात् भाविशुभहेतुभूतदर्शनजन्यादृष्टवत्तया प्रकारान्तरेण तावदङ्गीकारे तु हरत्यघं सम्प्रतीत्यस्य तद्प्रतिपादकत्वेना सङ्गतित्वापत्तेरिति सुधीभिर्ध्येयम् । एवमप्राप्तपरिपोषा पुत्रादिविषया रतिः स्थाय्यन्तरं चापुष्टमप्युदाहार्यम् ।

## विवरणम्

रतिरिति हासादीनामप्युपलक्षकम् । देवादीत्यनेनालम्बनस्याननुरक्तत्वलक्षणं ताटस्थ्यं द्योत्यते । व्यभिचारिति सात्त्विकभावानामप्युपलक्षणम् । आत्मत्वेनाध्यस्तस्य प्राणस्य पृथिवीतत्त्वाध्यसनं स्तम्भ इत्यान्तरत्वादसौ भाव एव । अञ्जित इत्यनेन काव्यस्य तत्र विश्रान्तिरुच्यते । तेन रसोपकरणभूतानामान्तराणां व्यभिचारिसञ्ज्ञैव, न भावसञ्ज्ञेति भावः । आदीत्यादि । अत्र मुन्यादयोऽप्यसञ्जातप्रीतय एवोपगृहीताः । कान्ताविषयेति प्रीतिमद्विषयेत्यर्थः । व्यक्ता अन्योऽन्यपोपबृंहितप्रीतिका । यथा—'शून्यं वासगृहं विलोक्य' इत्यादौ । एवञ्च—

**आ जानीया जननि चलितं मां वनायेति रामे**
**वध्वा चीरप्रतिवसनया सार्धमापृच्छमाने ।**
**स्तम्भः कण्ठग्रहमनिमिषं दर्शनं वाष्पपूरो**
**मन्यूत्पीडो वचनमरुणत् कोशलेन्द्रात्मजायाः ॥**

इत्यादौ रामभवत्युपबृंहितः कौशल्यावत्सलः,

**बाष्पदुर्दिननिगूढतारकं**
**शूरसेनतनयस्य पश्यतः ।**
**शृङ्खलाकिणकठोरगुल्फयो-**
**र्निष्पपात पदयोर्यदूद्वहः ॥**

इत्यादौ वसुदेववत्सलोत्सिक्ता भगवतो भक्तिः,

**आजन्मनः सह निवासितया मयैव**
**मातुः पयोधरपयोऽपि समं निपीय ।**
**त्वं पुण्डरीकमुख बन्धुतया निरस्त-**
**मेको निवापसलिलं पिबसीत्ययुक्तम् ॥**

इत्यादौ माधवप्रेमोन्मिषितो मकरन्दप्रणयरस एव प्रेयोनामनि प्रथमरसेऽन्तर्भूत इति स्मर्तव्यम् ।

कण्ठकोणेति । यत्र तु दैवतसमवेतो वत्सलो दैवतविषयायां रतौ गुणीभवति, तत्र रस एवासौ । यथा—

**भाले भस्मललाटिकाविघटकाजस्रप्रणामव्रण-**
**व्रातोद्भूतकिणावकीर्णचिकुरे विन्यस्तपाणेर्विभोः ।**

आधत्तार्घमनर्घमश्रुसलिलासारेण निर्णिक्तया
दृष्ट्या केवलया शिलादसुकृतक्षीरोदतारापतिः ।। इति ।

हरत्यघमित्यत्र यद्यपि नारदस्य भगवति प्रीतिरपि विद्यते, तथापि भगवद्भक्तिं सा नोपबृंहयति । नहि मुनेर्भक्तिमत्तया भगवत्समवेता भक्तिः प्रकृष्यते, न चापकृष्यत इति न रसो न वा रसाभास इति भाव एव । वत्सलां महाश्वेतामधिकृत्य वैशम्पायनस्य मन्मथानुगता रतिस्तु रसाभास एव अत्यन्तानौचित्यात् । इत्थं चालम्बनप्रीत्या प्रकृष्यमाणा प्रीतिः प्रेयान्नाम रसः, शृङ्गारभक्तिवत्सलप्रेमोदयास्तद्विशेषा इति सिद्धम् ।

अञ्जितव्यभिचारी यथा

**जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया**
**मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।**
**नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां**
**भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ४७ ॥**

अत्र विधिं प्रत्यसूया ।

---

**सङ्केतः**

जाने इति । अत्र गन्तुं प्रवृत्तेत्यौचित्यात् आश्वासयामिं इत्यत्र आशु इति भिन्नं व्याख्येयम् । गच्छन्त्या हि प्राक् आसनं, पश्चाच्च आश्वासनं युक्तमिति । शठेनेत्यर्थसाहाय्यात् अन्यपदार्थानां व्यञ्जकत्वम् ।

**बालचित्तानुरञ्जनी**

व्यभिचारिभावमुदाहरति । कस्यचित् कामुकस्य मित्रं प्रतिवचनम् । हे भ्रातः ! अद्य मया स्वप्ने प्रियतमा कोपपराङ्मुखी सती पाणिना मा स्पृश इत्युक्त्वा गन्तुं प्रवृत्ता सती दृष्टा । ततः अहं यावदालिङ्ग्य प्रियवाक्यशतैः प्रियतमामाश्वासयामीति जाने तावद्धूर्तेन दैवेन अहं निद्रादरिद्रः कृतः, बोधित इत्यर्थः । अत्र को वा व्यभिचारीत्यत आह अत्रेति । अत्रेर्ष्याहितुकस्य विप्रलम्भरसस्य सत्त्वेऽपि प्राधान्येनासूयाकृतस्य चमत्कारस्यैव प्रतीतेः तेन व्यपदेशः ।

**काव्यादर्शः**

प्रत्यसूयेति । विप्रलम्भरससद्भावेऽप्यसूयास्थितिचमत्कारकृत एवास्वादातिशयः ।

**विवेकः**

व्यभिचारिण्याः व्यङ्ग्यत्वेऽलक्ष्यक्रमव्यङ्ग्यभावो यथा—जाने कोपपराङ्मुखीति । जाने कोपेत्यादि-निश्चयगर्भमहं जाने इति वाक्यार्थस्य च कर्मत्वम् । अत्र यद्यपि रतिस्थायिभावेन स्वप्नदर्शनोद्दीपितेन विप्रलम्भः सुन्दरीभूतः प्रतिभातीति रसध्वनिर्व्यवस्थित एव तथापि मन्युजा विधिविषयिण्यसूयैव काव्यसर्वस्वम् ।

## दीपिका

जाने इति—तत्रास्वादकाले विवेक्तुमशक्यत्वेऽपि पश्चादन्वयव्यतिरेकाभ्यामसूयाप्राधान्यं व्यवस्थाप्यत[इति] तत्त्वम्।

## साहित्यचूडामणिः

अथान्यथाभावं लक्षयति—व्यभिचारीति।

अञ्जितो व्यञ्जितः न पुनर्वाच्यवाचकभावखलीकृतस्तथेति भावः।

जान इति स्वप्नवेदेन लोकोक्तिः। अत्राश्वासननाशकारिणं विधातारमुद्दिश्य व्यज्यमानासूयाभावः। अत्र शठादिशब्दाः व्यञ्जकाः। यथा वा 'एवं वादिनि देवर्षा'-वित्यत्र लज्जा भावः। यथा च ममैव—

**स्वैराटोपसहिष्णु हन्त विजहौ स्वं सल्लकीनां वनं**
**लेभे डिण्डिमपट्टबन्धललितां लक्ष्मीं न राजाङ्गणे।**
**वातव्याकुलिते जरत्प्रवहणे बद्धो विघूर्णन्मुहु-**
**र्मध्येवारिधि कुञ्जरेन्द्रकलभः कष्टां दशामश्नुते॥**

इत्यत्र निर्वेदग्लानिशङ्कासूयाश्रमालस्यदैन्य-चिन्तामोहव्रीडाजडताविषादावहित्थाव्याधित्रासवितर्कादयो बहवो व्यभिचारिणो व्यज्यन्ते।

## सम्प्रदायप्रकाशिनी

अथ व्यभिचारिभावः—जाने कोपेति। जाने इतिवाक्योपन्यासे। वाक्यार्थकर्मकमाख्यातं वा।

विधिं प्रत्यसूयेति। व्यज्यत इति शेषः। विप्रलम्भशृङ्गारस्य स्वप्नवृत्तात्मकस्य प्रबोधेन बाधितत्वाद् व्यभिचारिभावस्येह साम्राज्यम्।

## मधुमती

जाने इति। न च—अस्य 'त्वामालिख्य' इत्यनेन सह अविशेषात् उभयत्रापि असूयाव्यञ्जकत्वं विप्रलम्भव्यञ्जकत्वं वा स्यात्, न त्वत्र विशेषः इति वाच्यम्। रसध्वन्यसूयाख्यभावध्वन्यो एकव्यञ्जकानुप्रवेशलक्षणसङ्करसम्भवात् उभयसामञ्जस्यात्। वैपरीत्येन उदाहरणानुयोगस्य अशोकवनिकानिदेशकल्पत्वात्।

## विस्तारिका

जाने स्मरामि। स्मृत्वा च कथयामि, न त्वाहार्यः, अकर्मकत्वादात्मनेपदम्। मा मा संस्पृश पाणिनेति स्पर्शनिषेधः, पाणिकम्पेनैव, न वाचा; कोपेनालापत्यागात्। दृष्ट्वा ततो गन्तुं प्रवृत्तेत्यन्वयः भ्रातरिति सखिसम्बोधनम्। निद्रादरिद्रो निद्राशून्यः। शठेन पराहितकारिणा। विदधातीति विधिर्दुर्घटघटकः।

अत्रेति, असूया 'शठ' पदगम्या।

ननु त्वामालिख्येत्यादो क्रूरपदेनासूयाऽवगतौ तत्रापि भावध्वनित्वमेव, तत् कथं विप्रलम्भोदाहरणमिति चेन्न, समर्थनीयवाक्यार्थेन विप्रलम्भावगमादनन्तरं भावाभिव्यक्तेरकिञ्चित्करत्वात्, जातत्वात् तस्याः । न चैवं प्रकृतेऽपि, यावत्तावत्पदैकवाक्यत्वेनैवान्वयात् ।

अत्र नायको नायिका चालम्बनविभावौ । नायिकाकोप उद्दीपनम्, परिरम्भश्चाटुकशतं चानुभावौ । शठपदगम्याऽसूया च सञ्चारिणी । एतेषां रतेः समूहालम्बनविप्रलम्भे रसे असूयायाः शठत्वाभिधानानुभावव्यङ्ग्यत्वकृतचारुत्वेनापाततः प्राधान्यम्, पर्यन्ते तु रसस्येव; पानकरसे मरिचादेरुद्भटस्य यत्किञ्चिदङ्गस्येति भावध्वनित्वमिति ।

## सारबोधिनी

जाने इति । जाने स्मरामि । स्मृत्वैव कथयामि । न त्वाहार्यम् । वस्तुतस्तु जाने इत्यस्य 'शठेन विधिना' इत्यादिनान्वयः । एतादृशमकार्यं शठस्य विधेरेवेति । जाने इति क्रोधप्रकर्षः । मा मेति । विषादे वीप्सा । यद्वा-एकं मापदं द्वितीयान्तकर्मोपस्थापकम् । पाणिनेति । पाणिकम्पेनैव निषेधः । कोपे वचनायोगात् । नो यावदिति लोकोक्तौ । नो अस्माकं प्रियामिति वा संबन्धः । अत्रेति । असूया शठपदगम्या । यद्यपि रतिभावेन स्वप्नोद्दीपितेन विप्रलम्भः प्रतिभातीति रसध्वनिरेवायं तथापि विधिविषयिण्यसूयैव काव्यसर्वस्वत्वेनानुभूयत इति प्राधान्येन व्यपदेशात् भावव्यपदेश इति ।

## काव्यप्रदीपः

व्यभिचारी प्राधान्येन वर्णितो यथा—

'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥'

अत्र विधिं प्रत्यसूया प्राधान्येन प्रतीयते ।

## काव्यप्रकाशखण्डनम्

व्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।
नो यावत्परिचुम्ब्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥

अत्र रसेऽनुभूयमानेऽपि विधिं प्रत्यसूयैव काव्यसर्वस्वत्वेन अनुभूयत इत्यसौ भावध्वनिरिति व्यवह्रियते। 'प्राधान्येन व्यपदेशा भवन्तीति' न्यायात्। इयं भावस्थितिरुक्ता।

## आदर्शः

जाने कोपेति। स्वप्नवृत्तं सख्यौ कथयत उक्तिरियम्। जाने स्मरामि। पाणिना मां मा स्पृशेति कृत्वेत्यर्थः। यद्वा मां मा स्पृशेति पाणिनैव कृत्वेत्यर्थः। 'तथाचोत्तरमकृत्वा हस्तसंज्ञयैव निषिध्येत्यर्थः। शठेन खलेन। अत्रेति असूयाव्यञ्जकवाक्यस्यैव निराकाङ्क्षत्वादिति भावः। अतोऽत्र प्रतीयमानोऽपि विप्रलम्भः असूयाभावस्य व्यभिचारिभावतामेवापन्नः। त्वामालिख्येत्यादौ तु आलुप्यते इत्यन्तं न केनापि साकाङ्क्षीकृतम्। एवञ्च रसकाव्येऽपि भावो भावकाव्येऽपि रसो वर्त्तत एव। तत्तद्ध्वनित्वनियामकन्तु निराकाङ्क्षवाक्यव्यङ्ग्यत्वमेव।

अत एवान्यत्रोक्तम्—

**न भावहीनोऽस्ति रसो न भावो रसवर्जितः।**
**परस्परकृतासिद्धिरनयो रसभावयोः॥ इति**

न चैवमत्र रसस्य भावाङ्गत्वे वक्ष्यमाणमपराङ्गाख्यं गुणीभूतव्यङ्ग्यकाव्यमेव किमिदं न स्यादिति वाच्यम्, अत्र रसस्य असूयानिर्वाहकत्वेन स्वचमत्काराभावादपराङ्गत्वाभावात्; यत्र स्वस्यैव चमत्कारिता तदङ्गिनस्तु निराकाङ्क्षवाक्यव्यङ्ग्यत्वमेव तत्र स्वचमत्कारेणाङ्गिप्रकर्षकस्याङ्गस्यैव अपराङ्गत्वम्, तच्चाग्रे बोध्यम्।

## सुधासागरः

व्यभिचारी प्राधान्येन वर्णितो यथा—जाने इत्यादि। शार्दूलविक्रीडितं छन्दः। वियुक्तस्य सखायं प्रतीयमुक्तिः। अयमर्थः। हे भ्रातः अद्य मया स्वप्ने प्रियतमा कोपेन पराङ्मुखी सती पाणिना हस्तेन 'मां मा संस्पृश' इत्युक्त्वा रुदती रोदनं कुर्वती अन्यत्र गन्तुं प्रवृत्ता दृष्टा। ततस्तादृग्दर्शनोत्तरमहं यावत् प्रियां परिरभ्यालिङ्ग्य चाटुकानां प्रियवाक्यानां शतेन नाश्वासयामि नानुनयं करोमि तावज्जाने निश्चिनोमि शठेन वञ्चकेन विधिना निद्राया दरिद्रो रहितो निद्रादरिद्रः तथाभूतोप्यतथाकृतः, अत एव विधिर्दुर्घटविधायकः। जाने शठेनेति तापकारित्वेनासूयाप्रकर्षः। अत एव प्रदीपकारैरुक्तम्—'अत्र विधिं प्रत्यसूया प्राधान्येन प्रतीयते'इति।

## विवरणम्

जाने कोपेति। जाने स्मरामि। अत्र विधिमिति। अत्रातीतत्वेनोपनिबध्यमानः स्वाप्निको विप्रलम्भः, प्रधानतया सामाजिकाय न स्वदते, किन्तु 'अयं स रशनोत्कर्षी' इत्यादौ शृङ्गार इव गुणीभूय भासते। यः पुनरिदानीन्तन 'शठ'-पदप्रयोगादिभिरनुभावितो विधिं प्रत्यसूयाभावो ध्वननवृत्त्याऽनुभूयते, स एव प्रधानम्। 'त्वामालिख्य' इत्यादावप्यसूया प्रधानतया भासत एव, परन्तु तया चित्रविप्रलम्भोपबृंहितया कृतान्तं प्रत्यसूया वचनादिभिरनुभावैः शापविप्रलम्भः प्राधान्येनानुभाव्यते।

न च 'जाने कोप'इत्यादौ विधिं प्रत्यसूयया पृथगनुभूयमानविप्रलम्भास्वादः, इदानीं सम्भोगिनोऽपि स्मर्यमाणविप्रयोगहेतौ विधावसूयायाः सम्भवेन तत्रैव काव्यविश्रामात्।

अथैवं रसाङ्गतया भावस्य गुणीभूतव्यङ्ग्यकेष्विदमुदाहर्तुमुचितमिति चेत्, न, एवमपि प्रधानीभूतभावांशे ध्वनित्वानपायादिति दिक्।

परे तु—निराकाङ्क्षवाक्येन व्यञ्जनीयत्वमेव प्राधान्ये तन्त्रम्, 'त्वामालिख्य' इत्यादौ निराकाङ्क्षपादत्रयव्यङ्ग्यो विप्रलम्भः प्रधानमेव। 'जाने कोप' इत्यादौ पादत्रयं यावत्पदगर्भतया तावद्गर्भवाक्यंसाकाङ्क्षमिति तदभिव्यङ्ग्यप्रधानमेव, महावाक्यव्यङ्ग्योऽसूयाभाव एव प्रधानमित्याहुः।

(सू. ४९) तदाभासा अनौचित्यप्रवर्तिताः ।

तदाभासा रसाभासा भावाभासाश्च ।

तत्र रसाभासो यथा

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे का प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपः श्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ।। ४८ ।।

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

---

**सङ्केतः**

स्तुम इति । विलेभे व्ययितवान् । अत्र अनेकेति । स्तुमः कं इत्याद्यनुगतं एक स्त्रीविषयं रमण-मृगण-आलिङ्गन-ध्यानरूपं बहुव्यापारग्रहणं कर्तृ बहुकामिविषयं प्रेम व्यनक्ति । तच्च प्रेम अनुचितम् । अन्योन्यास्थाबन्धात्मिकायाः एव रतेः शृङ्गारत्वप्रतिपादनात् ।

**सङ्केतः (रुय्यकः)**

स्तुमः कमिति—केचित्तु बहुव्यापारादानमात्रात् किन्त्वेकरूपानेककर्मनिष्ठम् । यदि त्वेतदेकविषयं स्यात् सकृदेव कर्मनिर्देशं कुर्यात् ? । यं मृगयसे आलिंगसि ध्यायसि चेति पृथङ्निर्देशात्तु कामुकभेदप्रतीतिः । किञ्च 'स्तुम' इत्यादौ स्तुत्यादेः शाब्देनं वृत्तेन सत्यपि प्राधान्ये वस्तुनो 'विना यं न रमसे' इत्यादि प्रतिगुणत्वमेव, कामिनीव्यापारस्यैव वर्षयितुमिष्टत्वात् । एवन्तु यद् गुणभूतं स्तुतिपरत्वेन स्थितं तत् सकृदेव केनचित् प्रकारेणोपादाय बहुव्यापारोपादानं कर्तव्यं स्यात् । पृथगुपादानाच्च स्तोतव्यभेदः प्रतीयत इति रसाभासस्योदाहरणं युक्तमेव ।

**बालचित्तानुरञ्जनी**

एवं रसभावौ लक्षयित्वा क्रमप्राप्तं तदाभासं लक्षयति तदिति । 'तदाभास' इत्यत्र तच्छब्दार्थमाह तदिति । तत्र रसाभासभावाभासयोर्मध्ये रसाभासस्योदाहरणमाह स्तुम इति । पुंश्चलीं प्रति कामिवचनम् । हे शोभननेत्रे !

यं प्रियं विना क्षणमपि न रमसे कं स्तुमः ? यमन्वेषयसि युद्धयज्ञे प्राणान् को विलेभे दत्तवान् । यथा रणे प्राणत्यागे कृतार्थः तथान्वेष्यमाणे मृग्यमाणेऽपीत्यर्थः । हे चन्द्रानने बलात् यामालिङ्गसि सुलग्ने जातः स कः ? कामवसते यं ध्यायसि ? कस्यैषा तपः श्रीः ?

अत्र शृङ्गाररसस्याभासत्वमाह अत्रेति । एकस्याः रमणमृगणालिङ्गनध्यानरूपानुचितस्य वक्तृव्यापारस्योपादानं कर्तृ, बहुकामुकविषयं शृङ्गारप्रवृत्ताभासमिति भावः ।

## काव्यादर्शः

अभिलाषमिति । परस्परास्थाबन्धात्मिकाया हि रतेः शृङ्गारत्वमुक्तम् । अत्र तु कामनाभिलाषमात्ररूपा रतिर्व्यभिचारिभावो न स्थायी । एवं हास्याद्याभासोऽपि ।

## विवेकः

तदाभासा इति तच्छब्देन रसभावयोः परामर्श इति व्याचष्टे रसाभासा इति । आभासत्वस (म) विषयप्रवृत्याऽनौचित्यम् । स्तुमः कमित्यादि—अत्र 'बहुव्यापारोपादानस्यैकविषयत्वेऽप्यविरोधादयुक्तमेतदुदाहरणमिति केचिदाहुः । तदसारम्, नह्यत्र बहुव्यापारोपादानमात्रं किन्त्वेकरूपानेककर्मनिष्ठं'[तत्] । यदि त्वेतदेकविषयं स्यात् तदा सकृदेव कर्मनिर्देशं कुर्यात् । यं मृगयसे आलिङ्ग (६२a)सि ध्यायसि चेति पृथङ्निर्देशात्तु कामुकभेदप्रतीतिः । किञ्च 'स्तुम' इत्यादौ स्तुत्यादेः शाब्देन वृत्तेन सत्यपि प्राधान्ये वस्तुनो 'विना यं न रमसे' इत्यादि प्रतिगुणत्वमेव, कामिनीव्यापारस्यैव वर्णयितुमिष्टत्वात् । एवन्तु यद्गुणभूतं स्तुतिपरत्वेन स्थितं तत् सकृदेव केनचित् प्रकारेणोपादाय बहुव्यापारोपादानं वक्तव्यं स्यात् । पृथगुपादानाच्च स्तोतव्यभेदः प्रतीयत इति रसाभासस्योदाहरणमिदं युक्तमेव (रु. सं. २२ पृ:) । अतएव हि नगरीवत् सर्वजनसञ्चरणयोग्यताप्रकटनार्थं मदननगरीति पर्यन्त आमन्त्रणम् । तदिह येयं रतिश्चर्वणामारोहति नासौ तात्त्विकी परस्परसंबन्धाभावात् । ततश्च तत् (ततश्चासत्)-प्रभवत्वान्नायं वास्तवशृङ्गार 'उत्तमप्रकृतिरुज्ज्वलवेषात्मकः शृङ्गार'(ना.शा. ६ ।३०२ पृ:) इत्यभिधानात्, आभासो ह्यसौ शुक्तिकायां रजतवत्, अतएवोत्तरकालं तत्त्वप्रकाशे हास्यरसप्रादुर्भावात् । शृङ्गाराद्धि भवेद्धास्य-(ना. शा. ६)मिति मुनिर्मन्यते । महाकविरप्याह—'अण्णहि अअे उण हि अअं जं दिज्जइ तं जणो हसइ' (गा. स. १ ।४१) ।

## दीपिका

अत्रेति—नतु [रतिः], विविक्तताया एवात्र वरणीयत्वात् । अनौचित्यं लोकशास्त्रातिक्रमः । एतच्च शृंगारादिलक्षणैकदेशयोगोपलक्षणपरम् । तेनाधमपात्रतिर्यगादेरवबोधः । अत्रानेकेतियमित्यसकृत्कर्मनिर्देश एक विषयः । स च प्रसङ्गतः प्रकरणसाचिव्येन सोपहासोत्रासकाकुत्वबलेन स्तुम इत्यादीनां स्तुतिप्राधान्यं निरस्य खण्डास्वादरूपा रसाभासव्यक्तोराविष्कृत्य पर्यन्ते हास्यं परिपोषयति । सोपहासकाकुविरहे तु बह्वा काक्वा तद्गतां रति व्यनक्तीत्यर्थः । प्रसङ्गानुक्ते रसाभासो रसकाव्येषु वा द्रष्टव्यः । नह्यस्ति रससामग्री(१) तदुक्तं-शृङ्गारोऽनुकृ(हृ) तः, तु यत्राव्यक्तोऽपि जायते व्यक्त इति ।

## दर्पणः

स्तुम इत्यादि । अत्रैकस्या नायिकाया बहुविषया रतिः प्रतीयते । तदाह अत्रेति । 'स्तुम' इत्यनेनानुगतं 'यं विना न रमसे' इति रमणव्यापारोपादानम् । आदिशब्दात् कः प्राणान् विलेभ इत्यादिनानुगतं यं मृग इत्याद्यन्वेषणादिव्यापारोपादानं कर्तृ तस्या अनेककामुकविषयमभिलाषं व्यनक्ति । तथाहि । यदि ह्यत्र बहुव्यापारोपादानमेकविषयं स्याद्यच्छब्दस्यैकदैव निर्देशः स्यात् तदत्र स्तुत्यादिमुख्यार्थेन बाधितुं सोपहासः स काकुरनेनोचितमप्रवृत्तस्य [?] शृङ्गारस्याभासतामभिव्यनक्ति पर्यन्ते हास्यं परिपोषयन्तीति भावः ।

## साहित्यचूडामणिः

अथ रसाभासादिलक्षणमाह—तदिति । तद्वृत्तेन रसभावयोः परामर्श इत्याह—रसेति । अनौचित्यमन्ततः शास्त्रविरोधात् चमत्कारभङ्गः तेन प्रवर्तिता रसा भावाश्चाभासाः । आमुखे भासमानमाभासः शुक्तिरजतवत् । तच्च तल्लक्षणराहित्येऽपि तद्वद् विभासमानत्वम् ।

स्तुम इति । अत्रैकस्याम् अनेकपुरुषाभिलाषादनौचित्यम् । वैशिकेऽपि तत्तत्पुरुषस्वीकारे तं तमवधिं तस्या एकपत्नीव्रतं शास्त्रार्थः । अत्र स्तुत्यः कश्चिद् येन विना रत्यनुदयः, अन्यो युद्धशूरः यस्य मृग्यता, अपरः सुलग्नोत्पन्नो यस्य बलादालिङ्गनयोग्यता, इतस्तपःप्रभावाधिकः यस्य ध्येयत्वमिति शब्दशक्तिपर्यालोचने बहुनां व्यापाराणामुपादानं कर्तृ तस्या अनेककामुकविषयमनुरागं व्यनक्ति । अनेन संबद्धिभेदो व्याख्यातः । तत्र मदननगरीति सर्वप्रवेशयोग्यता ध्वन्यते । ध्यायसि त्विति तु शब्दोऽपि तत्र प्रमाणमित्येष शृङ्गाराभासः ।

## सम्प्रदायप्रकाशिनी

तदाभासा इति । अनौचित्यप्रवर्तितत्वमाभासभावे हेतुः ।

तच्छब्दपरामर्शनीयं प्रकृतार्थद्वयं दर्शयति—रसाभासभावाभासा इति ।

स्तुमः कमिति । यं विना न रमसे तं कं स्तुम इत्यादिषु वाक्येषु नानाकामुकविषयो व्यापारोऽस्याः स्तूयत इति रसाभासत्वम् । नानाकामुकोपभोग्यत्वेनाधमप्रकृतितां द्योतयितुं मदननगरीत्युक्तम् । 'उत्तमप्रकृतिरुज्ज्वलवेषात्मक'इति हि शृङ्गारस्य लक्षणम् । अन्यस्त्वाभास एव ।

## मधुमती

अनौचित्यप्रवर्तिताः इति । अत्र अनेककामुकविषयं अभिलाषं अनुचितं स्तुमः इत्यादिबहुव्यापारोपादानं तस्याः व्यनक्ति इत्यन्वयः । स्तुम इत्यादिति अतद्गुणसंविज्ञानो बहुव्रीहिः । तेन अन्वेषणादि लभ्यते । तस्य नायिका व्यापारत्वाभावादिति ध्येयम् । ननु—एकस्मिन्नेव यूनि बहुव्यापारोपादानं नानुचितमिति कथं आभासता ? इति चेन्न । बहुषु व्यापारोपादानं इत्यर्थात् । प्रकृते च यं यं इत्यनेन बहूनां आलम्बनत्वेन उपादानात् । अन्यथा यं इत्युपादाय—न रमसे, मृगयसे, तं कं स्तुमः—इत्येतावन्मात्रमुच्येत । मदननगरि !इति आमन्त्रणपदमपि सर्वसंवरणीयत्वं व्यञ्जयत् बहुविषयोपादानमेव व्यनक्ति ।

## विस्तारिका

सहृदयहृदयसाक्षिको रसभावयोर्भेदः। तदाभासा इत्यादि। तत्पदेन रसभावानुकर्षणम्। तदाह—रसाभासा भावाभासाश्चेति। अन्यथा सन्निकृष्टत्वेन भावानुकृष्टिशङ्का स्यात्।

तत्रेति। रसस्य प्राथमिकत्वेन तदाभासस्यापि प्रथमनिदर्शनम्।

स्तुमः किमिति। स स्तव्यो यत्र तव रत्यायोगव्यवच्छेदः। वामं सुन्दरं विरुद्धं च परमवशिनोऽपि वशीकरणाद्विरुद्धता। विलेभे ददौ। रण एव मखो यागः, तदन्वेषणमुग्रफलकत्वात्। अत एव स्वतः पुरुषार्थतया लभ्यविशेषणेन नायिकाया नात्र सम्बुद्धिः। सुलग्ने जीवाधिष्ठितसप्तमग्रहे इन्दुनिरीक्षिते सकलशुभग्रहे शशिमुखीति सम्बोधनं युक्तम्, चन्द्रेणापि क्रोडीकृतस्य शशस्यापरित्यागात्। सर्वावयवसौन्दर्यमाह—मदनेत्यादि। नगरी राज्यम्, अत्र स्थितस्यैव मदनस्य प्रभुत्वात्। ध्याननिष्पन्नत्वान्नगरीत्वम्। तपः सम्पत्त्यैव राज्यलाभः।

अत्रेति। अत्र रमणान्वेषणालिङ्गनध्यानानि। व्यापारा बहवः, ते च सर्वे वर्तमानकालीना नैकविषयत्वेन सम्भवन्ति। तदाह—अनेककामुकविषयाभिलाषमिति। वर्तमानध्यानविषये परिरम्भादेर्वर्तमानत्वायोगात्।

किञ्च, तपस्यादिकं विनैव सार्वकालिकनायिकाप्रीतिविषयस्य प्राणत्यागेन नान्वेषणपात्रता, तपसोत्कटेन लघुफलाजननात्। एवं च तस्यैव सुलग्नजन्मतपःसम्पत्तिभ्यां नालिङ्गनविषयत्वध्यानविषयत्वे। एकस्यैव लघुगुरूपायाभ्यां गुरुलघुफलाजननात्। तदाह—स्तुम इत्यादीति। आदिपदेन विलभनसुलग्नजन्मतातपः श्रीपरिग्रहः, अनुगतं पृष्ठलग्नं कृतमिति यावत्।

केचित्तु 'बहुषु व्यापारोपादनं यमित्यसकृत् कर्मनिर्देशः। स चैकविषयत्वे न सम्भवति' इत्याहुः, तन्न, यं जानाति, यमिच्छति, यत्र यतते स उत्पद्यत इत्यत्रैकविषयत्वस्यैव प्रकृतेऽपि तत्त्वे विरहात्। अत्रानेककामुकविषयत्वेन बलालिङ्गनगम्यत्वे तदुभयनिष्ठत्वेन च शास्त्रलोकातिक्रम इति रसाभासता। तदुक्तम्—उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च बहुनायकविषयायां रतौ तथानुभयनिष्ठायामाभासत्वं कथितमिति। एवं रसान्तरेऽप्याभासो मन्तव्यः।

## सारबोधिनी

तदाभासा इति। स्तुमः कमिति। विलेभे दत्तवान्। अत्रानेकेति। यद्यपि बहुव्यापारोपादनस्यैकविषयत्वमपि संभवत्यविरोधात् तथापि यं यमित्यसकृत् कर्मोपादानमनेकगतत्वमेव प्रकटयति। यद्येकविषयत्वमभिप्रेतं स्यात् तदा सकृदेव कर्मोपादानं कुर्यात्। अत एव नगरी वत्ससञ्चारणयोग्येति नगरीति संबोधनमपि सङ्गच्छते अथवा रमणान्वेषणालिङ्गनादिव्यापारा बहवस्ते च सर्व एव वर्तमानकालीनानेकत्वविषयत्वे संभवन्ति। तदाह अनेककामुकविषयमभिलाषमिति। वर्तमानध्यानविषये परिरम्भादेर्वर्तमानत्वायोगात्। अत्रानेककामुकविषयत्वेन बलादालिङ्गनम्यानुभयनिष्ठत्वेन च शास्त्रलोकातिक्रमात् रतेराभासता। तदुक्तम्—

**उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च।**
**बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम्॥**

आभासत्वं रतेः कथमित्यादि। नन्वेतावता लौकिकस्याभासत्वमागतं न तु सामाजिकनिष्ठस्येतिचेन्न, वर्णनीयतन्मयीभावेनैव तस्य रसत्वात् इत्यसकृदावेदितमिति। तथा वीरादीनां गुर्वादिविषयत्वेनाभासत्वम्।

### काव्यप्रदीपः

**तदाभासा अनौचित्यप्रवर्तिताः।**

अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः। तच्चैकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां (वा) द्रष्टव्यम्। एकविषया रतिरेव नेति तु प्रलापः। 'बन्दीकृत्य नृपद्विषाम्' इत्यादावुदाहरिष्यमाणत्वात्। रसाभासो यथा—

**'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे**
**विलेभे कः प्राणान्रणमखमुखे यं मृगयसे।**
**सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-**
**त्तपः श्रीः कस्यैषा मदननगरि ध्यायसि तु यम्॥'**

अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते। नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम्। एकत्रापि तादृशव्यापारसंभवात। यत्तु—'अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति। एकविषयत्वामिभप्राये त्वेकमेव कर्मपदमुपाददीत' इति। तत्तुच्छम्। स्तुमो विलेभे इत्यादिनां भिन्नवाक्यस्थानामेकविभक्त्यन्तपदोपस्थापितेनानन्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिपदैरुपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात्। अत्र ब्रूमः— तुशब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते। एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते। बहुपदमनेकपरं वा।

### काव्यप्रकाशखण्डनम्

**तदाभासा अनौचित्यप्रवर्त्तताः।** (मू. का. ३६, पू०)

तदाभासा रसाभासा भावाभासाश्च। यथा—

**स्तुमः कं वामाक्षि! क्षणमपि विना यं न रमसे,**
**विलेभे कः प्राणान् खलु रणमुखे यं मृगयसे।**
**सुलग्ने को जातः शशिमुखि! यमालिङ्गसि बलात्**
**तपः श्रीः कस्यैषा मदननगरि ध्यायसि तु यम्॥**

अत्र यं यमित्यसकृत्कर्मोपादानं अनेककामुकविषयमभिलाषं तस्याः व्यनक्ति। यद्येकविषयत्वमभिप्रेतं स्यात् तदासकृदेव कर्म्मोपादानं कुर्यात्। यद्वा रमणान्वेषणादिव्यापारा बहवस्ते च सर्वे एव वर्त्तमानकालीना नैकविषयत्वे संभवन्तीत्यनेककामुकविषयाभिलाषप्रत्ययाद् रतेराभासत्वम्। [प. १५.१] वस्तुतस्तु परस्परजीवितसर्वस्वयोरनुरागस्यैव रसत्वात् शास्त्रातिक्रमाद्यनौचित्यं रसत्वविरोधीति ध्येयम्।

## आदर्शः

तदाभासा इत्यत्र तत्पदस्य रसभावोभयपरामर्शकत्वमभिप्रेत्य व्याचष्टे—रसाभासा इत्यादि । अनौचित्येति शृङ्गारादौ यद् यदालम्बनं वर्जितं तत्तदालम्बनकत्वमेव अनौचित्यं बोध्यम् ।

'तत्र' शृङ्गारे । अत्र 'दक्षिणाद्याश्च नायका' इत्यनेनाधर्म्यनायकवर्जनात् तेषामनेकत्वेऽप्यधर्म्यत्वध्रौव्येण अनेकोपनायकविषयनायिकारतावुदाहरति—स्तुमः कमिति । हे वामाक्षि सुन्दरनयने, यं पुरुषं विना त्वं क्षणमपि न रमसे न हृष्यसि तं कं स्तुमः तवेदृशानुरागविषयत्वेन तस्य स्तुत्यत्वादिति भावः । तथा यं पुरुषं मृगवसे अन्विष्यसि कोऽसौ, अर्थाज्जन्मान्तरे रणरूपयज्ञस्य मुखे आदौ प्राणान् विलेभे त्यक्तवान् । विपूर्वो लभिस्त्यागेऽपि । त्वत्कर्तृकान्वेषणरूपं फलं जन्मान्तरे सम्मुखरणमरणस्यैवेति भावः । तथा हे शशिमुखि, यं पुरुषं बलादालिङ्गसि स कः सुलग्ने जातः, तथा हे मदननगरि, यं तु पुरुषं ध्यायसि कस्यैषा त्वद्ध्यानरूपा तपःश्री । अत्रेति स्तुम इत्यादि वाक्यचतुष्टये 'अनुगतं' सम्बद्धं 'बहुव्यापारोपादानं' कृदभिहितभावत्वात् उपात्ता बहुव्यापाराः सदा रमणमार्गणालिङ्गनध्यानरूपाः, तस्या अनेककामुकविषयमभिलाषं व्यनक्तीत्यर्थः । व्यक्तेनाभिलाषेण च स्वजनकेष्टसाधनताज्ञानधारारूपा रतिर्व्यज्यते इत्यर्थः । न त्वभिलाषरूपैवात्र रतिस्तस्या अभिलाषव्यङ्ग्यत्वस्यैव प्रागुक्तत्वात् । नन्वीदृशव्यापाराणां स्वीयैकनायकविषयत्वमपि सम्भवति तत् कथं कामुकानेकत्वलाभ इति । अत्र चक्रवर्ती—सर्वत्र वर्त्तमानानिर्देशादेककालत्वे लब्धे विभिन्नकालीनानामालिङ्गनान्वेषणादीनाम् एकदैकपुरुषेऽसम्भवात् तदनेकत्वलाभ इति व्याचष्टे, तन्न; हृष्टः स्वपिति गच्छतीत्यादाविव विभिन्नकालीनक्रियास्वपि तत्तत्कालवर्त्तमानत्वमादाय वर्त्तमानानिर्देशसम्भवादेककालत्वालाभात्, अन्यथा एकपुरुषालिङ्गनकाले अन्यपुरुषस्य कायिकान्वेषणासम्भवात्तद्दोषतादवस्थ्यात्; न ह्यत्र मानसमन्वेषणं विवक्षितं तस्य ध्यानेन गतार्थत्वात् । अत्रोच्यते—ध्यायसि तु यमित्यत्र पूर्वनिर्दिष्टक्रियाकर्मीभूतस्य पुरुषस्य 'तु' शब्देन ध्यानान्वये व्यवच्छिन्नत्वात् यत्पदचतुष्टयाच्च कामुकानेकत्वलाभः, न हि यं पटं क्षालयसि कोऽसौ यं तु परिधत्से कोऽसावित्युक्तिः पटैकत्वे सम्भवति, न वा प्रष्टव्यैकत्वे प्रतिप्रश्नं यत्पदनिर्देश उचितः । एवं मदननगरीत्यत्रापि अनेकपुरुषाश्रयनगरीरूपणादपि नानापुरुषविषयानेकमदनाश्रयत्वसूचनं बोध्यम् ।

## सुधासागरः

तत्पदेन रसभावयोः परामर्शः । न तु सन्निकृष्टत्वेन भावस्यैवेत्याह—रसाभासा भावाभासाश्चेति ।

अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः । तच्चैकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां वा द्रष्टव्यमिति प्रदीपकाराः । इदं च परिगणनं सम्प्रदायानुसरणमात्रम् ।

**हीनापात्रेषु तिर्यक्षु नायकप्रतियोगिषु ।**
**गौणेषु च पदार्थेषु तदाभासं विजानते ॥**

इति सरस्वतीकण्ठाभरणादिविसंवादात् ।

वस्तुतस्त्वनौचित्यमात्रमेवामीषां मनसाऽऽभासताप्रयोजकम् । तिर्यगादौ त्वनौचित्याभावाद्रस एव न तदाभासः । अत एव वृत्तिकारौ 'ग्रीवाभङ्गाभिरामम्'इत्यादौ तिर्यग्विषयतया भयानकं 'मित्रे क्वापि गते' इत्यादौ

विप्रलम्भमुदाजहार। अत एवान्यत्रानेककामुकविषयरतेराभासत्वेऽपि पाण्डवेषु द्रौपद्याः न तथा। स्वस्त्रियामपि शोकाद्याविष्टायां शृङ्गारवर्णनमाभासमौचित्यानौचित्याभ्यामेवावसेयम्।

यद्यपि काव्यनाट्यश्रवणदर्शनाभ्यां विभावादिसाधारण्यज्ञाने सति सामाजिकानां स्वीयस्थायिव्यक्तिरित्यलौकिकरसः स्वतो नाभासस्तथाप्यसाधारण्यप्रतीतिप्रयोजककाव्यवर्णिते यत्रानौचित्यप्रतिसन्धानं तत्र व्यङ्ग्ये रसेऽप्याभासव्यवहार इति ध्येयम्।

अत एव रविभट्टाचार्याः प्राहुः—यदपि पितृचरणैराभासपदस्य भ्रमार्थकत्वमुक्तं तदपि व्यञ्जकीभूतकाव्यानुचित एवौचित्यज्ञानात्मकभ्रममूलतया प्रकृतपर्यवसन्नमिति। एकविषया रतिरेव नेति तु प्रलापः, 'बन्दीकृत्य नृपद्विषाम्' इत्यादावुदाहरिष्यमाणत्वात्।

रसाभासो यथा—स्तुम इत्यादि। शिखरिणी छन्दः। लक्षणमुक्तं प्राक्। वारयोषितं प्रति कस्यचित्कामुकस्य चाटुक्तिरियमिति वैद्यनाथः। वयं त्वनौचित्या पादनाय परकीयां प्रति कामुकोक्तिरिति ब्रूमः। अयमर्थः। हे वामाक्षि! वामं सुन्दरं जितेन्द्रियाणामपि वशीकरणाद् विरुद्धं वाऽक्षि यस्याः सा तथाविधे! तं कं पुरुषं स्तुमः, यं विना क्षणमपि न रमसे क्रीडसि हृष्यसीति यावत्। तथा यं मृगयसे अन्विष्यसि। कोऽसौ रणः संग्राम एव मखस्त्वत्कर्तृकान्वेषणरूपस्वर्गफलकत्वात्। तस्य मुखे पुरतो यः प्राणान्विलेभे दत्तवान्, अर्थाज्जन्मान्तरे। हे शशिमुखि! चन्द्रानने! यं बलादालिङ्गसि स कः सुलग्ने शोभनग्रहाधिष्ठिते लग्ने जातः उत्पन्नः। हे मदननगरि! मदनस्यैवंवैभवात्, यं तु ध्यायसि तस्य कस्यैषा त्वत्कर्तृकध्यानरूपा तपःश्रीः तपःसम्पत्तिरिति। अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते।

नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम्। एकत्रापि तादृशव्यापारसम्भवात्। यत्तु अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति एकविषयत्वाभिप्राये तु एकमेव कर्मपदमुपाददीतेति, तत्तुच्छम्, स्तुमो विलेभे इत्यादीनां भिन्नवाक्यस्थानामेकविभक्त्यन्तपदोपस्थापितेनान्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिपदैरूपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात्।

अत्र ब्रूमः। तु शब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते। एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते। बहुपदमनेकपरं वा। तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्रानेककामुकेत्यादि।

**विवरणम्**

तदाभासा इत्यत्र तच्छब्देन रसमात्रस्य परामर्शो मा भूदतो व्याचष्टे—भावाभासाश्चेति। स्तुम इत्यादि। अत्र बहूनां यच्छब्दानामुपादानात्, 'मदननगरि'इत्यनेन बहूपभोग्यत्वध्वननात्, 'ध्यायसि तु यम्' इत्यत्र तुकारेण ध्यानकर्मणि पुरुषे पूर्वक्रियाणां व्यवच्छेदस्य ध्यानक्रियायां प्राचीनकर्मव्यवच्छेदस्य वा लाभादर्थतः पुरुषभेदसिद्धेश्च बहुपुरुषविषया रतिरभिव्यज्यते। तत्र चालम्बनस्य नीचत्वपशुत्वादिवद् बहुत्वमप्यनौचित्यावहमिति ध्येयम्।

मार्गणालिङ्गनादिक्रियाणामेकधर्मिकाणां वर्तमानता व सम्भवतीति तासां वर्तमानत्वनिर्देश एव कर्मभेदं गमयतीति चक्रवर्ती बभ्राम, भिन्नकर्मयोरप्यालिङ्गनमार्गणादिक्रिययोर्यौगपद्यासम्भवात्।

भावाभासो यथा

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।
तत् किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥ ४९ ॥

अत्र चिन्ता, अनौचित्यप्रवर्तिता। एवमन्येऽप्युदाहार्याः ॥

---

### सङ्केतः

राकेति। स्मेरयौवनेन तरङ्गितविभ्रमा आस्या अवस्थानं यस्याः सा तथा। न तु तरङ्गितविभ्रमं आस्यं, पौनरुक्त्यात्। त्यदो वा स्या इति रूपम्। अत्र चिन्तेति। अत्र नार्याः परपत्नीत्वात् चिन्तेयं अनौचित्यप्रवृत्ता। ननु—एकपाक्षिक्याः रतेः सद्भावात् रसाभासत्वं वक्तुं युक्तम्, न तु भावाभासत्वम्। न। चिन्ताविभावनां प्राधान्येन तस्या एव चमत्कारित्वात्। 'प्रधानेन च व्यपदेशो भवति' इति चात्र भावाभासत्वम्।

अयं भावः—यद्यपि रसेनैव काव्यं जीवति। तथापि तस्य रसस्यनानाद्रव्यजपानकस्येव एकघनास्वादात्मनोऽपि, यदा कुतश्चिदंशात् भावादिरूपात् उद्रिक्तावस्थामापन्नात् चमत्कारातिशयो भवति, तदा भावादिध्वनिरेव। यदा तु विभावाभासात् रत्याद्याभासः, तदा विभावानुभावाभासात् चर्वणाभासः इति रसाभासः। एवं भावाभासोऽपि। रसध्वनेरेव अमी रसभावाभासध्वनि प्रभृतयः निष्यन्दाः आस्वादप्रधानं प्रयोजकमंशं विभज्य पृथक् व्यवस्थाप्यन्ते, यथा—पानकयुक्तिज्ञैः एकसंमूर्छितरसोपभोगेऽपि 'सुपरिशुद्धद्राक्षायां प्रयुक्तोऽयं रसः' इति। तथा निरिन्द्रियलतातरुनदीशैलादेः सेन्द्रियपश्चादेश्च यत्र काव्ये कामादिव्यवहारः तत्र रसभावाभासतैवेति। एवमन्येऽपीति। रसाभासः भावाभासाश्चेत्यर्थः।

### बालचित्तानुरञ्जनी

भावाभासस्योदाहरणमाह राकेति। रावणवचनम्। सा सीता पूर्णचन्द्रनिभानना चञ्चलदीर्घनेत्रा प्रौढयौवनतरङ्गितविभ्रमस्थानम्। तत्तस्मात् किं करोमि? अत्र सीताविषये मैत्रीं कथं विदधे? तत्स्वीकृतिविषये उपायः कः? अत्र भावस्याभासत्वमाह अत्रेति।

### काव्यादर्शः

अत्र चिन्तेति। अन्योन्यानुरागादयभावेनानौचित्यम्। एतच्च शृङ्गारानुकृतिशब्दं प्रयुञ्जानो मुनिरपि सूचितवान्। आभासोऽनुकृतिरमुख्यतेति एको ह्यर्थः, तेन निरिन्द्रियेषु तिर्यगादिषु चारोपणात् तदाभासः,

यथा—

**'पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः ।**
**लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥'**

तिरश्चोर्यथा—'मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।' इत्यादौ । अत्र संभोगाभासः । भावाभासो यथा—

**त्वत्कटाक्षावली लीलां विलोक्य सहसा प्रिये ।**

**वनं प्रत्यात्यसौ व्रीडाजडदृष्टिर्मृगीजनः ॥**

## विवेकः

राकेत्यादि-अत्र तदीयनितान्तवैमुख्यान्मिथश्चित्तानुस्यूतिविरहमाकलयतोऽपि येयं चिन्ता सा भावाभासः । तथ्यं मृषासाधारणीभूतरसादिप्रकाशमात्रजीवितञ्च काव्य[त्वं] भूतगतिमपेक्षते । हंसमृगादीनान्तु शृङ्गाररसवर्णने रसाभासः स्फुट एव, यथा कुमारसम्भवादौ (३ सः) । तदेवमेकतरनिष्ठाभिलाषिके शृङ्गारशब्देन तत्र तत्र व्यवहारन्तदाभासतया गन्तव्यः । एवमन्येऽपि वीरादयो रसा अन्येऽपि व्यभिचारिणो रसाभासाङ्गभुता आभासत्वेनोदाहर्तव्या इति ।

## दीपिका

राका अखण्डपूर्णिमा । तरङ्गिता विभ्रमा यत्र तरङ्गितविभ्रमं, तथाभूतमास्यं यस्या इति विग्रहः । तस्याः स्वीकृतिः स्वाधीनकरणं तस्य व्यतिकरः सदातनतारूपं पौनः पुन्यम् ।

अत्रेति—अभियोज्यावैमुख्यदर्शिनो दुर्भगस्येयमुक्तिः प्रकरणादवसेयेति भावः ।

एवं हास्यादिरसानां लज्जाऽऽदिभावानाञ्चाभासा आकरेषु स्वयं बोद्धव्या इत्याह—एवमन्येऽपीति ।

## दर्पणः

राकेति । स्मेरमीषद्विकसितम् । अत्र प्रकरणवशात् कस्यचित् दुर्भगस्यार्थं [विना ?] निवर्त्यमानायां नयिकायां चिन्ताख्यो भावाभासः ।

## साहित्यचूडामणिः

भावाभासमाह—राकेति । बाल्यात् प्रभृति सखीत्वेन व्यवहृतायां कस्याञ्चिदनुरक्तस्येयमुक्तिः । अत्र चिन्तारूपस्य व्यभिचारिणो व्यज्यमानस्य भावत्वं सखीविषय-वृत्तित्वादनौचित्यं च । औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्या रसः व्यभिचारिण्या भावः, अनौचित्येन तु तदाभासः । न खलु रावणः सीतामभिलषितुमर्हति, ततश्चायमाभासः शुक्तौ रजताभास इतिवत् । नन्वत्र हास्यो रसः

'शृङ्गाराद्धि भवेद्धास्य'

'शृङ्गारानुकृतिर्या तु हास्य इति कथ्यते'

इत्युक्तत्वात् । न । तन्मयीभाववेलायां रतेरेवास्वाद्यत्वादसौ शृङ्गाराभासः । पश्चाद्भाविनी तु सामाजिकानां हास्यस्फुरत्ता न तादात्विकी ।

एवमन्येऽपीति । तत्र वीराभासो यथा—

**गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।**
**करोति महतीं प्रीतिमपकारोऽपकारिषु ॥**

इत्यत्रोत्साहस्यानौचित्येन प्रवृत्तिः । भावाभासो यथा—

**किं वा वक्ष्यति वैदेहः पिता मे मिथिलाधिपः ।**
**रामं जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥**

इति । अत्रासूयायाः प्रवृत्तिरनौचित्यात् । इत्थमन्यदुन्नेयम् ।

### सम्प्रदायप्रकाशिनी

राकासुधाकरेति । स्वीकृत्युपायत्वेन मैत्रीमनुचिन्तयतीत्यनौचित्याद् भावाभासता ।

अन्येऽपीति । वीरादयो रसाः भावान्तराणि चाभासत्वेनोदाहर्तव्यानीत्यर्थः ।

### मधुमती

अत्र चिन्तेति । परस्त्रीविषयतयेति शेषः । अत्र रसाभासत्वेऽपि व्यभिचार्याद्यसंवलनदशायां भावत्वात् भूतपूर्वगत्या भावाभासता ज्ञेया ॥

सम्प्रदायिकास्तु—

**'हीनपात्रेषु तिर्यक्षु नायकप्रतियोगिषु ।**
**गौणेषु च पदार्थेषु तमाभासं विजानते ॥'**

इतिकण्ठाभरणसंवादात् तेषां अस्यापि आभासत्वेन गणनं कुर्वन्ति । वस्तुतस्तु—अनौचित्यमात्रमेव अमीषां मते आभासताप्रयोजकम् । तिर्यगादौ तु— अनौचित्याभावात् रस एव, न तु रसाभासः । अत एव वृत्तिकारः 'ग्रीवाभङ्गे' त्यादौ तिर्यग्विषयतया भयानकम्, 'मित्रे क्वापि गते' इत्यादौ विप्रलम्भं च उदाजहार । अत एव च अन्यत्र अनेककामुकविषयरतेः आभासत्वेऽपि, पाण्डवेषु द्रौपद्याः न तथा । स्वस्त्रियामपि शोकाद्याविष्टायां शृङ्गारवर्णनं आभासं औचित्यानौचित्याभ्यां अवसेयम् । साम्प्रदायिकैस्तु—आविदग्धाश्रयत्वमपि अनौचित्यपक्षे निक्षिप्य तथा गणितम् । रसानौचित्यस्य रसावगमोत्तरमेव अवगमात् तदाभासताप्रयोजकत्वमेव, न चेत् वाच्यवाचकानौचित्यं रसभङ्गहेतुः इति विभावनीयम् ।

यद्यपि—काव्यनाट्यश्रवणदशायां विभावादीनां साधारणेन विज्ञाने सति सामाजिकानां स्वीयस्थाय्यभिव्यक्तिरिति, अलौकिक रसः स्वतो नाभासः । तथापि साधारण्यप्रतीति-प्रयोजके काव्ये वर्णिते, यत्र अनौचित्य-

प्रतिसन्धानं तत्रैव तद्व्यङ्ग्ये रसेऽपि आभासताव्यवहारः इति ध्येयम्। यदपि—पितृचरणैः आभासपदस्य भ्रमार्थकत्वं उक्तम्, तदपि व्यञ्जकीभूतकाव्यानुचिते एव औचित्यज्ञानात्मक भ्रममूलतया प्रकृतपर्यवसन्नमेव।

## विस्तारिका

भावस्याभासतामाह—राकेत्यादि। अखण्डचन्द्रा पूर्णिमा राका, मुखनयनसर्वावयवानां दर्शनक्रमेणोपन्यासक्रमः। स्मेरमीषत् प्रकाशितं यौवनं नवयौवनम्, तेन तरङ्गितो विभ्रमो यत्र, तथाविधमङ्गं यस्याः। पूर्वपूर्वेणोत्तरोत्तरतरङ्गायितत्वम्। मैत्रीमाश्वस्तताम्। तत्स्वीकृतिः, तस्या ममेति ज्ञानम्, तेन यो व्यतिकरः सम्बन्धः। नायिकानुराविषयस्य कस्यचिद् दुर्भगस्योक्तिरियम्। अत्रेति—अननुरक्तविषयत्वेन 'चिन्तायामनौचित्येन प्रवृत्तेः। एवमित्यादि। अन्ये रसान्तराभासा भावान्तराभासाश्चेत्यर्थः।

## सारबोधिनी

भावाभासमाह राकेति। रावणोक्तिः। स्मेरमीषत् प्रकाशितम्। तरङ्गितो विभ्रमो यत्र तथाविधमङ्गं यस्याः पूर्वपूर्वेणोत्तरोत्तराङ्गायितम्। विभ्रमा स्यादिति वा पाठः। क उपायः स्यादिति योजना। स्वीकृतिस्तस्यां ममेति ज्ञानम्। यद्वा स्वीकृतिर्वशीकृतिः। व्यतिकरः संबन्धः। अथवा व्यतिकरशब्दो विनार्थः। तेन तत्स्वीकृतिं विना क उपाय इत्यर्थः। तथा च तदीयस्वीकाराभावः स्फुट एवेत्यननुरक्तविषयत्वेन चिन्ताया अनौचित्यप्रवृत्तेः।

## काव्यप्रदीपः

भावाभासो यथा—

**'राकासुधाकरमुखी तरलायताक्षी।**
**सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।**
**तत्किं करोमि विदधे कथमत्र मैत्रीं**
**तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥**

अत्र रतेर्व्यभिचारिभूता चिन्ता अनौचित्यप्रवर्तिता। नायिकाया अननुरक्त तया रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणोऽपि तथात्वात्। एवमन्येऽप्युदाहार्याः।

## काव्यप्रकाशखण्डनम्

भावाभासो यथा—

**राकासुधाकरमुखी तरलायताक्षी सस्मेरयौवनतरङ्गितविभ्रमाङ्गी।**
**तत् किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥**

अत्र चिन्ता अनौचित्यप्रवर्त्तिता। एवमन्येऽप्युदाहार्याः।

### आदर्शः

भावाभासो यथेति । अत्र भावो व्यभिचारिभावः, तस्य चात्र शृङ्गारीयत्वेन शृङ्गारवर्ज्जिताननुरागिणीविषयत्वादाभासता बोध्या । राकेति । राका पूर्णिमा । तरङ्गितः तरङ्गवदुत्तरोत्तरं जायमानः । तथाच सा इत्थं सौन्दर्यादनुपेक्षणीया, तत् तस्मात् किं करोमिं, अत्र अस्यां कथं मैत्रीं विदधे, तत्कर्त्तृकस्वीकारसमूहे इह क उपाय इत्यर्थः । यत्किञ्चित् स्वीकारस्यानुद्देश्यत्वाद् व्यतिकर इत्युक्तम् । अत्र तत्स्वीकारोपायचिन्तया अननुरागित्वलाभात् तद्विषया चिन्ता अनौचित्यप्रवर्त्तितैवेत्याह—अत्रेति । एवमन्येऽपीति, रसाभासे निःशेषेत्यादिकं यः कौमारहरेत्यादिकञ्च । भावाभासे तु—

**गामारुहम्मि गामेबसामिनअरटिठइं न आणामि ।**
**णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥** इति

अत्र परपुरुषहरणाधीनो गर्वोऽनुचितः ।

### सुधासागरः

भावाभासमुदाहरति—राकासुधेत्यादि । वसन्ततिलका छन्दः । सीतामुद्दिश्य रावणस्योक्तिरियम् । अयमर्थः । राकासुधाकरः परिपूर्णचन्द्रस्तद्वन्मुखं यस्यास्तथाविधा, तरले चञ्चले आयते दीर्घे अक्षिणी यस्यास्तादृशी, स्मेरमीषत्प्रकाशं यौवनं नवयौवनमिति यावत्, तेन तरङ्गितास्तरङ्गवदुत्तरोत्तरारम्भशीलाः विभ्रमा येषु तथाविधान्यङ्गानि यस्याः सा तथाभूतेति दर्शनक्रमेण मुखादिगतप्रकर्षविभावनम्, तत्तस्मादुक्तसौन्दर्यातिशयिनोऽनुपेक्ष्यत्वात्, किङ्करोमि तल्लाभायेति शेषः, तया सह मैत्री क्रियतां तत्राह—तदिति । तया स्वीकृतिर्ममायमिति बुद्धिविषयीकरणं तस्य व्यतिकरे सम्बन्धेऽभ्युपायो हेतुः क इव न कोपि सम्भाव्यत इत्यर्थः ।

स्वीकृतिः स्वाधीनीकरणं तस्य व्यतिकरः सदातनत्वरूपं पौनःपुन्यमिति चण्डीदासाः ।

अत्र रतेर्व्यभिचारभूता चिन्ता अनौचित्यप्रवर्त्तिता । नायिकाया अननुरक्ततया तद्व्यभिचारिणोऽपि तथात्वात् । एवमन्येऽप्युदाहार्याः ।

### विवरणम्

राकेत्यादि । तरङ्गित उत्तरोत्तरं वर्धमानः । व्यतिकरः सम्पर्कः । अत्रेति । शृङ्गाराङ्गचिन्तायामननुरागित्वमालम्बनस्यानौचित्यावहमिति भावः । चिन्तेत्युपलक्षणम्, अनया चिन्तया ध्वनितो रतिभावोऽप्यालम्बनरतिप्रकृष्यमाणत्वाभावान्न रसः, किन्त्वनुचितालम्बनकत्वाद् भावाभास एव । 'स्तुमः कम्' इत्यादौ लेशतः कामुकानामपि रतिमत्ता प्रतीयत इति न रसाभास इति स्मर्तव्यम् ।

एवमन्येऽपीति ।

**गामारुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि ।**
**णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥**

इत्यादौ गर्वाभासादयः इत्यर्थः ।

**(सू. ५०) भावस्य शान्तिरुदयः संधिः शबलता तथा ॥ ३६ ॥**

क्रमेणोदाहरणम्

तस्याः सान्द्रविलेपनस्तटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्यते क्व तदित्युदीर्य सहसा तत् संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥ ५० ॥

अत्र कोपस्य ।

---

### सङ्केतः

तस्याः इति । स्तनतटस्य प्रश्लेषेण या मुद्रा प्रतिबिम्बं तया अङ्कितम् । अन्यदपि यद्वस्तु मुद्राङ्कितं तत् केनापि व्याजेन रक्ष्यते इति उक्तिलेशः । अप्र स्त्रीकोपस्य शान्तिः ।

### सङ्केतः (रुय्यकः)

आवेगहर्षयोरिति । यथाक्रममेव द्वयोः स्थितयोः (द्वयस्थितयोः) भावस्य शान्त्युदयावुक्तौ । स्थितिस्तु मध्यमावस्था कस्मान्नोक्तेत्युक्तं ।

### बालचित्तानुरञ्जनी

भावशान्त्यादिरुक्तमित्यत्रादिशब्दार्थमाह भावस्येति । भावशान्तिः, भावोदयः, भावसन्धिः, भावशबलः । तत्र शान्तेरुदाहरणम् तस्या इति । धृष्टनायकस्य वचनम् । तस्याः सपत्न्याः घनं श्रीखण्डादिविलेपनं यत् स्तनयुगं तस्य प्रकृष्टमालिङ्गनं, तेन विलेपनमयी मुद्रा तया लम्बितं वक्षः मम चरणानतिवृत्तेन किमिति गोपाय्यात् इति प्रियतमे उक्ते सति क्व, तद्विलेपनं नास्त्येवेत्यभिधाय तद्विलेपनं प्रमार्ष्टु मया सहसा रभसेन सा प्रियतमा आकृष्टा, तस्याश्चालिङ्गनसुखववशात् वक्त्रेऽधिकारिणं [?] विस्मृतमभूत् । चशब्दः आलिङ्गनकोपशान्त्योरेककालत्वद्योतनार्थः । अत्र कोपाख्यभावस्य शान्तिमाह अत्रेति । शान्तिरित्यनुषज्यते । अत्र रत्युत्पत्तौ कोपशान्तिवत् संभोगशृङ्गारोत्पत्तौ ईर्ष्याविप्रलम्भरसोऽप्यस्ति ।

### काव्यादर्शः

भावस्येति । व्यभिचारिणः । भावशान्तिभावोदयभावसंधिभावशबलताश्चालक्ष्यक्रमव्यङ्ग्याः ।

## विवेकः

तत् (तस्य) प्रशान्तिरिति तच्छब्दो भावपदोपस्थापितं व्यभिचारिभावं परामृशति । यद्यपि चाखण्डबुद्धिनिर्ग्राह्यः सर्व एव काव्यार्थो रसचर्वणःविश्रान्तस्तथाऽपि पानकादावुद्रिक्तः कर्पूराद्यंश इव सहृदयैरपोद्धृत्यास्वाद्यमानो भावप्रशमादिश्चमत्कारविशेषमर्पयति । तत्र क्वचिद्विरुद्धसामग्रीयोगेन प्रशाम्यद्दशाको भावस्तथा सम्पद्यते यथा 'तस्याः सान्द्रेति । तन्व्या च तद्विस्मृतमिति—तया तद्विस्मृतमिति नोक्तमस्वातन्त्र्यप्रतिपादनार्थम् । अत्रेर्ष्यारोषप्रकर्षात्मिकायाश्चित्तवृत्तेः परिरम्भजसुखाम्भोधिमज्जनजनितः प्रशम एव काव्यसर्वस्वम् । अत्र कोपस्य शान्तिरिति शेषः ।

## दीपिका

भावस्य सञ्चारिणो लौकिकदशायामुदयव्ययशालिनः क्वचिद्विरुद्धसामग्रीप्राधान्येन प्रशमावस्था स्वदते, क्वचित्स्वसामग्रीमाहात्म्येनोदयावस्था, क्वचनोभयसामग्रीयोगेन परस्परविमर्दः, क्वचन पुनः पूर्वविमर्देनोत्तरोदयपरम्परा । रत्यादेस्तु सततमविच्छेदिनो नेदं वैचित्र्यम् ।

तस्या इति—अत्रेर्ष्यारोषस्य परिरम्भसुखजनितजडिमनिमज्जनरूपप्रशम एव काव्ये सर्वस्वम् ।

## साहित्यचूडामणिः

अथ भावशान्त्यादिकं निश्चनोति भावस्येति । तस्या इति । विपक्षभूतायाः क्य तदिति तच्छब्देन यथोक्तं मुद्राङ्कनं परामृश्यते । सहसेति अपराधशङ्काकलङ्कक्षालनमङ्कपालीसुखानुभवश्चेति फलद्वयं साहसिकस्य । यथाह—

**'रससंत्राससहर्षादेः कोपभ्रंशो रसान्तरम्'** इति ।

कोपस्येति । अमर्षलक्षणो व्यभिचारी कोपः तस्य शान्तिरिति सम्बन्धः ।

## सम्प्रदायप्रकाशिनी

अथ भावशान्त्यादयः । तस्याः सान्द्रेति । क्व तदिति तत् सम्प्रमार्ष्टुमिति च तच्छब्दाभ्यां विलेपनप्रत्यवमर्शः । तद् विस्मृतमिति तच्छब्देन गोपनं प्रत्यवमृश्यते ।

अत्र कोपस्येति । शान्तिरित्यनुषज्यते ।

## मधुमती

भावस्य शान्तिरिति । विरुद्धभावोदयाविनाभूता शान्तिः, शान्त्य विनाभूतः विरुद्धभावोदयः भावशान्त्युदयौ, द्वयोः तुल्यविषयत्वेन सन्धिः । शान्त्युदययोः करम्बितत्वं शबलता । तच्च उदाहरणे एव स्फुटम् ।

## विस्तारिका

भावस्येत्यादिसूत्रे लिङ्गसंख्याकारकाणामेकत्वमविवक्षितम्, एकस्य सन्धिशबलत्वायोगात्। तथा चार्थे। शान्तिः प्रशमः, तुल्यावस्थयोर्भावयोः संवलनं सन्धिः। पूर्वपूर्वोपमर्देन परपरोदयः शबलता।

ननु भावप्रशमभावोदयस्थले भावान्तरोदयप्रशमाभ्यां भावशबलत्वमिति चेन्न, तत्र प्रशमोदयावस्थयोरेव चर्वणीयत्वात्। परत्र तु परस्परेणोपमर्दस्येति। यथा चैतत्तथा लक्ष्येषु दर्शयिष्यामः।

तस्या इति। तत्समीपे समस्थानं तत्पर्यन्तगामी। अत एव प्रगाढः श्लेषः। परिरम्भः। मुद्रा तदाकारं चिह्नम्, तेनाङ्कितं तदीयत्वेन ज्ञापितमित्यर्थः। तन्मुद्राङ्कं 'संप्रमाष्टुं' विलोपयितुम्, रभसेन त्वरया पूर्वेणान्वयः।

अत्रेति। कोपस्य भावस्य प्रशम इति। सौत्रभावप्रशमपदाभ्यामन्वयः। एवामुत्तरेष्वपि। अत्र कोपस्य प्रशम एव सूच्यते। सन्नपि न प्रसादोदयः, तदनुभावाद्यनुल्लेखात्।

## सारबोधिनी

भावस्येति। अत्रैकत्वमविवक्षितम्। एकस्य सन्धिशबलत्वायोगात्। शान्तिः प्रशमः। तुल्यावस्थयोः संबनलनं सन्धिः। पूर्वपूर्वोपमर्द्देन परस्परोदयः शबलता। ननु भावप्रशमभावोदयस्थले भावप्रशमभावोदयाभ्यां भावशबलत्वं स्यादिति चेन्न, तत्र भावप्रशमोदयावस्थयोरेव वर्णनीयत्वात्। अत्र तु पूर्वपूर्वोपमर्दस्येति। यथा चैतत्तथा लक्ष्येषु वक्ष्यामः।

तस्या इति। अन्यथा योगेनान्यत्र मुद्राङ्कस्तद्युक्तं मुद्राङ्कितम्। अत्रेति। कोपस्येति। पदस्य यथायोगं सौत्राभ्यां भावस्येति शान्तिरिति पदाभ्यामन्वयः। एवमुत्तरेष्वपि।

## काव्यप्रदीपः

भावशान्त्यादिरक्रम इत्यत्र भावशान्त्यादिपदप्रतिपाद्यमाह—

**भावस्य शान्तिरुदयः संधिः शबलता तथा ॥१३॥**

संचिरेककालमेव तल्यकक्षयोरास्वादः। शबलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दिनाम्। न च भावस्य शक्लतायाः शान्त्युदयाभ्यामविशेषः। शान्तेरुदयस्य वा एकैकस्यास्वादे तद्भेदद्वयोपगमात्।

तत्र भावस्य शान्तिर्यथा—

**'तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं**
**किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।**
**इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया**
**साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम्॥**

अत्र कोपस्य शान्तावेव चमत्कारविश्रामः।

**काव्यप्रकाशखण्डनम्**

**भावस्य शान्तिरुदयः सन्धिः शबलता तथा॥ (मू. का. ३६, उ.)**

क्रमेणोदाहरणानि—

**तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत्।**
**आस्वा(श्वा) सितस्तत्क्षणमंसकूटे वामेतरेण स्फुरता भुजेन॥**

अत्राऽऽवेगस्य।

**आदर्शः**

रसभावेत्यादिक्रमप्राप्तान् भावशान्त्यादीनुदाहर्त्तुमाह—भावस्य शान्तिरित्यादि। 'शान्तिः' नाशः। 'उदयः' उत्पत्तिः। 'सन्धिः' विरुद्धयोर्द्वयोरवच्छेदकभेदेन एकत्र एकदा स्थितिः। सबलता पूर्वपूर्वभावापेक्षया उत्तरोत्तरभावानां बलवत्ता बलवत्समूहो वा, न त्वत्र पूर्वभावस्य नाशप्रतीतिरतो भावशान्तितो भेदः। एतेषां निराकाङ्क्षवाक्यव्यङ्ग्यत्वे तत्तद्ध्वनित्वं बोध्यम्। तत्र भावशान्तिमुदाहरति—तस्या इति। स्वनायिकाकोपतच्छान्तिवृत्तं सख्यौ कथयत उक्तिरियम्। तत्र सम्भुक्तोपनायिकास्तनरागाङ्कितवक्षसं प्रणमन्तं स्वनायकं प्रति कुपिताया नायिकाया उक्तिः प्रथमार्द्धम्। तत्र च प्रश्लेष आलिङ्गनम्। मुद्राङ्कितं चिह्नितम्। इति पूर्वार्द्धे तया उक्ते, तन्मुद्राङ्कितत्वं सम्प्रमार्ष्टुं गोपायितुं मया 'क्व तत्' इत्युदीर्य्य सहसा सा आश्लिष्टा, तत्सुखवशात् तया तन्व्याऽपि तत् मुद्राङ्कितत्वं विस्मृतमित्यर्थः। कोपस्येति शान्तिरित्यनुसङ्गः। एवमुत्तरोत्तरमपि। कोपस्य च शृङ्गारे व्यभिचारिभावत्वं दर्शितमेव। कोपहेतोर्मुद्राङ्कितवस्य विस्मरणेन कोपस्य शान्तिर्व्यङ्ग्या विस्मृतमिति वाक्यस्य तद्व्यञ्जकस्य निराकाङ्क्षत्वात्।

**सुधासागरः**

भावशान्त्यादिरक्रम इत्यत्रादिपदप्रतिपाद्यमाह—

सन्धिरेककालमेव तुल्यकक्षयोरास्वादः शबलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दिनाम्। न च भावस्य शबलतायाः शान्त्युदयाभ्यामविशेषः। शान्तेरुदयस्य वा एकैकस्याऽऽस्वादे तद्भेदद्वयोपगमात्।

तत्र भावस्य शान्तिर्यथा—तस्या इत्यादि। शार्दूलविक्रीडितं छन्दः। अमरुकशतके खण्डितायाः स्वनायिकायाः कोपतच्छान्तिवृत्तान्तं वयस्यं प्रति कथयतो धृष्टनायकस्योक्तिरियम्। अयमर्थः। तस्याः सपत्न्याः असूयातिशयान्नामानिर्देशः। सान्द्रं घनं श्रीखण्डादि विलेपनं यत्र तथाभूतस्य स्तनतटस्य समस्थानस्य तत्पर्यन्तगामित्वेन प्रकृष्टो य श्लेषः परिरम्भस्तेन या मुद्रास्तदाकारं विलेपनमयं चिह्नं तेनाङ्कितं तदीयत्वेन ज्ञापितमित्यर्थः, वक्षः वक्षस्थलम् चरणयोरानतेः प्रणामस्य यो व्यतिकरः सम्बन्धः पौनःपुन्यं वा तद्व्याजेन छलेन किं किमिति गोपाय्यते आच्छाद्यते इत्युक्ते सति अर्थान्नायिकया, मया क्व तन्मुद्राङ्कणमित्युदीर्य उक्त्वा तन्मुद्राङ्कणं सम्प्रमार्ष्टुं विलोपयतु सहसाऽप्रसाद्यैव, रभसेन त्वरया आश्लिष्टाऽऽलिङ्गिता। तत्सुखवशादालिङ्गनानन्दपारवश्यात्तन्व्या

तन्मुद्राङ्कितत्वं विस्मृतमिति चकारेणालिङ्गनविस्मृत्योरेककालतारूपः समुच्चयालङ्कारो द्योत्यते। अत्र कोपस्य शान्तावेव चमत्कारविश्रामः।

## विवरणम्

भावस्येत्यादि। शान्तिः पूर्वं सतोऽनन्तरमसत्त्वम्। उदयः पूर्वमसतोऽनन्तरं सत्त्वम्। सन्धिर्विरोधिनोः सहावस्थितः। शबलता पूर्वमुपमृद्यापरस्य प्रादुर्भावः।

तस्या इत्यादि। प्रश्लेष आश्लेषः, मुद्रा लेषसङ्क्रान्तिः, तयाऽङ्कितम्, इत्युक्ते मम गृहिण्येत्याख्याते। तन्मुद्राङ्कितं वक्षः।

कोपस्येति। शान्तिरिति कारिकास्थेनान्वयः। कोपो नाम परापकारप्रतिकारस्पृहा, न तु क्रोधः, स्थायिभावः। स्थायिभावोऽपि वा रसान्तरे व्यभिचारी भवत्येव। अत्रेर्ष्याविप्रलम्भः साकाङ्क्षवाक्योपात्तत्वात् परिप्रोषाभावाच्च गुणीभूतः, कोपशान्तिः प्रधानम्। तेन प्रसादेन यदि सम्भोगो नाभिव्यज्यते, तदेदमुदाहरणमनुसन्धेयम्।

एकस्मिञ् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ५१ ॥

अत्रौत्सुक्यस्य ।

---

### सङ्केतः

एकस्मिन् इति । मानेन कोपेन पराङ्मुखी चासौ ग्लपिता च सुप्त इव प्रार्थनाविमुखः । अत्र स्त्रीगतौत्सुक्यस्य उदयः ।

### बालचित्तानुरञ्जनी

भावोदयमुदाहरति एकस्मिन्निति । कविवचनम् । एकस्मिन् शयने सपत्नीनामग्रहे सति खिन्नया कयाचिन्मुग्धया प्रियवाक्यानि कुर्वन्नपि प्रियतमः संभ्रमादिव ज्ञातः । ततस्तूष्णीं स्थितः सन् नाभून्म्लान इवेति द्रुतमेव वेगविवर्तितकन्धरं यथा तथा पुनरवलोकितः । अत्र भावोदय इत्यत आह अत्रेति । उदयः इत्यनुषज्यते ।

### काव्यादर्शः

उदयावस्थाप्रयुक्तश्चमत्कारो यथा—'एकस्मिन्निति । अत्र व्यभिचारिणः प्रशमावस्थापि । सुप्त इवेति प्रार्थनापराङ्मुखः ।

### विवेकः

क्वचित्तिरस्कारेऽपि पुनः कारणवशादुदीयमानावस्थो भावश्चमत्कारमावहति यथा एकस्मिन्नित्यादि । [मानपरिग्रहा] च ग्लपिता चेति कर्मधारयः । चाटुकारादिषु परिक्षीणेषु तूष्णीमवस्थितिः प्रसादनोपाय एव । तथाहीर्ष्याकृतरोपः स्त्रीणां त्रिधा [कृत] आनुमानिको दृष्टश्चेति । आनुमानिकोऽपि त्रिधैवोत्स्वप्रायितभोगाङ्क(ङ्कानुमित) गोत्रस्खलनकल्पित इति । एषां यथोत्तर गुरुः । षडुपचारोपाया यथोक्तम् 'साम्नाभेदेन दानेन नत्युपेक्षारसान्तरैरिति (द.रू. ४ ।५९-६१) । सुप्त इवेति—प्रार्थनापराङ्मुखस्तदिहावेगप्रकर्षे विरोधिनि सत्यपि यदौत्सुक्यस्यागमः स एवास्वादजीवितम् ।

### दीपिका

एकस्मिन्नति—अत्र क्रोधवेगेन तिरस्कृतस्याप्यौत्सुक्यस्य पुनः [सन्दर्शनादुन्मेष] एव चर्वणाबीजम् ।

**साहित्यचूडामणिः**

एकस्मिन्निति । तूष्णीं स्थितश्चाटुक्रियायामपि तस्या अप्रसादात् ।

यथाह—

**'सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्'इति ।**

औत्सुक्यस्येति । उदय इति यावत् ।

**सम्प्रदायप्रकाशिनी**

एकस्मिन्निति । मा भूदिति या शय्यायां सुप्तो भूदिति शङ्कित्वा वीक्षित इत्यर्थः ।

**विस्तारिका**

एकस्मिमिन्निति । विपक्षः सपत्नी । रमयतीति रमणी मुग्धाया अस्या मानरक्षणायोग्यत्वमजानत्याः । आवेग आवेशश्चेत्यपि पाठः । उभयोः कोप एवार्थः । तूष्णीमाहार्यमौनम्, न तु निद्रया स्थितस्तत्प्रसादज्ञानायावहितस्तत् क्षणं स्तूष्णीं स्थितिसमये पुनर्वीक्षितो वीक्षणानन्तरं वीक्षित इत्यर्थः । सुप्त इव निद्राण इव, न तु निद्राणः ।

अत्रेति, औत्सुक्योदयः, न तु कोपस्य प्रशमः, तदनुभावानुपादानात् ।

**काव्यप्रदीपः**

उदयो यथा—

**'एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया**
**सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।**
**आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं**
**मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥'**

अत्रौत्सुक्यस्योदयः ।

**काव्यप्रकाशखण्डनम्**

**विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥**

अत्रौत्सुक्यस्य भावस्योदयः ।

**आदर्शः**

भावोदयामुदाहरति—एकस्मिन्निति । शयने शय्यायाम् । विपक्षरमणी सपत्नी उपनायिका वा । सुप्त इव निद्रित इव निस्पन्दः चाटुकरणविमुखो मा भूदित्यर्थः । अमन्देति वलितक्रियाविशेषणाम् । न चात्र यदि पूर्वकोपः

प्रतीयते तदा सन्धिरेव यदि च तन्नाशः प्रतीयते तदा भावशान्तिरेवेति वाच्यं, पुनर्वीक्षणेन उत्सुक्यस्यैव प्रतीतेः, न तु कोपनाशसत्त्वयोरेकस्यापि नाप्यौत्सुक्योदयादेव कोपनाशध्रौव्यात् तन्नाशप्रतीतिः कोपसत्त्वेऽपि चाटुकरणार्थमौत्सुक्योदयसम्भवात् ।

## सुधासागरः

उदयो यथा—एकस्मिन्नित्यादि । शार्दूलविक्रीडितं छन्दः । अमरुककवेः पद्यमिदम् । अयमर्थः । एकस्मिन् शयने शय्यायाम् विपक्षभूता रमणी सपत्नी तस्याः नाममात्रग्रहे ग्रहणेऽर्थान्नायकेन कृते सति सद्यस्तत्कालमेव कोपेन पराङ्मुखं यथा स्यात्तथा ग्लपितया खिन्नया । मुग्धया स्यस्याधयमजानन्त्या कयाचिच्चाटूनि प्रियभाषणानि कुर्वन्नपि प्रियतमः आवेगात्कोपभ्रमादवधीरितोऽवज्ञातस्तूष्णीम् आलापरहितः स्थितः प्रसादज्ञानायावहितो न तु निद्रितः । तत्क्षणात्तूष्णींभावक्षणानन्तरमेव सुप्त इव प्रार्थनापराङ्मुखो माभूदित्यौत्सुक्येन अमन्दम् अतिशयितं बलिता वक्रीकृता ग्रीवा यत्र तद्यथा स्यात्तथा पुनर्वीक्षित इति । अत्रौत्सुक्यस्योदयश्चमत्करोति ।

## विवरणम्

'पराङ्मुखं शयितया'इति वा पाठः । 'पराङ्मुखग्लपितया' इति पाठे पराङ्मुखी च ग्लपिता चेति कर्मधारयः । आवेगान्मन्योः । सुप्त इव चाटुकारव्यापाररहितः ।

उत्सिक्तस्य तपः पराक्रमनिधेरभ्यागमादेकतः
सत्संगप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥ ५२ ॥

अत्रावेगहर्षयोः ।

---

### सङ्केतः

उत्सिक्तस्येति । गर्वात् तपोविक्रमयोः उत्कर्षसम्भावना । सत्सङ्गप्रियता तपोनिधित्वात् । वीररभसोल्लासश्च पौरुषनिधित्वात् । पूर्वस्मिन् अर्धे आवेगः, अपरस्मिन् हर्षः । तयोः सन्धिः । द्वयोः विरुद्धयोः स्पर्धिभावेन उपनिबन्धः । तुल्यतया मिथो न बाध्यतयाऽवस्थितिः । अत एव च प्रियता च उल्लासश्च इति चकारद्वयम् ।

### बालचित्तानुरञ्जनी

भावसन्धिमुदाहरति उत्सिक्तस्येति । रामस्य वचनम् । उत्सिक्तस्य तपसः पराक्रमस्य । पराक्रमस्य च निधिभूतस्य परशुरामागमनस्यान्तः संपर्के प्रियत्वं वीरस्यावेगाधिक्यञ्च एकतो मां कर्षतः । अनेनावेगाख्यो भावो दर्शितः । एष सीतापरिरम्भश्चान्यतो मां रुणद्धि ? कीदृशः ? मुहुश्चैतन्यमामीलयन्नित्यादि । अनेन हर्षाख्योभावः । अनयोरावेगहर्षायोरत्र सन्धिः ।

### काव्यादर्शः

व्यभिचारिणोः संधिरेव चर्वणास्पदम्, यथा—उत्सिक्तस्येति । स्थितिस्तूक्तेति, 'रतिर्देवादिविषया व्यभिचारी तथाञ्चितः' इत्यादौ 'जाने कोपपराङ्मुखी' इत्युदाहृता च ।

ननु, विभावमुखेनाप्यधिकश्चमत्कारो दृश्यत इति तद्ध्वनिरपि वाच्यः । नैवम्, विभावानुभावौ स्वशब्दावाच्यावेव, तच्चर्वणापि चित्तवृत्तिष्वेव पर्यवस्यतीति न रसभावेभ्योऽधिकं चर्वणीयम् ।

### विवेकः

क्वचित्पुनरेकस्य प्रशमत्वमपरस्योद्गम इति सन्धिरुद्रिक्तः स्वाद्यते । यथा उत्सिक्तस्येत्यादि । सीताविवाहसमनन्तरमेव परशुरामरामयोर्दर्शनम् । प्राप्तप्रतिष्ठतया स्वात्मन्यहङ्कार उत्सेकः । उत्सिक्तस्योद्धतस्येत्यर्थः । आमीलयन्नुन्मुखीकुर्वन् । आवेगहर्षयोरिति यथाक्रममेकस्य प्रशमत्वमपरस्योद्गम इति युगपदुपस्थितरेतयोः सन्धिश्चमत्कारस्थानम् ।

## दीपिका

उत्सिक्तस्य सत्वोत्कर्षवशाज्जगत्तृणाय मन्यमानस्य वीरतयां रभसोत्फाल उत्साहवेगेनाहङ्कारसमुद्यमप्रकर्षः ।

अत्रावेगहर्षयोरिति—खण्डयोर्वीरशृङ्गारयोरङ्गतामापन्नयोरितरेतरविरुद्धयोः सञ्चारिणोः सन्धिः । वस्तुतो ह्येवंविधे यद्यङ्गानुद्रेकस्तदा खण्डौ वीरशृङ्गारौ, विलक्षण एव वा चित्रनामा रसः, न तु पूर्ण शृंगारो वीरो वा ।

## साहित्यचूडामणिः

उत्सिक्तस्येति । उत्फाल औद्धत्यम् । एकतः बाह्यप्रदेशे अन्यतः शुद्धान्ते । आवेगहर्षयोरिति । सन्धिरित्यर्थः ।

## सम्प्रदायप्रकाशिनी

उत्सिक्तस्येति । आवेगः पूर्वार्धे हर्षश्चोत्तरार्धे व्यज्यते । तयोरिह सन्धिः ।

## मधुमती

उतिसक्तस्येति । लब्धप्रतिष्ठतया आत्मन्यहङ्कारः उत्सेकः । तद्वतः इत्यर्थः ।

## विस्तारिका

सन्धिमाह—उत्सिक्तस्येति । उत्सिक्तस्योद्रिक्तस्य ख्यातस्येत्यर्थः । तप इत्यादिधर्मयुद्धवीरस्येत्यर्थः । रभस उत्साहः उत्फाल उद्रेकः । विदेहो मैथिलो जनकस्तस्य पुत्री । एषोऽनुभूयमानः । शिशिरः शीतलः । उपमानगतरागमाधुर्यलाभः । स्निग्धः प्रेमसंवलितः । चैतन्यमामीलयन्, अनन्यविषयः कुर्वन् । आनन्दी आनन्दजनकः, अत एव रुणद्धि, स्निग्धेन युद्धमनिच्छता ।

अत्रेति । आवेगस्त्वरा पूर्वाधगम्यो हर्षस्त्वपरार्धप्रत्याय्यः । सत्सङ्गप्रियतोत्साहयोः संवलितयोर्द्वयोः परिरम्भेण तुल्यबलता, न त्वेकस्येत्यर्थः ।

## सारबोधिनी

संधिमाह उत्सिक्तस्येति । आत्मन्यहंप्रत्यय उत्सेकस्तद्युक्तस्य दृप्तस्येत्यर्थः । रभस उत्साहः । उत्फाल उद्रेकः । आवेगस्त्वराविशेषः । पूर्वार्द्धगम्यः । हर्षस्त्वपरार्द्धगम्यः ।

## काव्यप्रदीपः

संधिर्यथा—

**'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः**
**सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।**

**वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-**
**आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥'**

अत्र पूर्वार्धे संभ्रमात्मक आवेगः । उत्तरार्धे हर्षः । अनयोस्तुल्यमेवास्वादः' ।

## काव्यप्रकाशखण्डनम्

**तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेप एव पदमुद्धृतमर्पयन्ती ।**
**मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥**

अत्राऽऽवेग-हर्षयोः सन्धिः ।

## आदर्शः

भावसन्धिमुदाहरति—उत्सिक्तस्येति । परिरभ्यमाणवैदेहीकस्य भावनोपनीतवैदेहीकस्य वा रामस्य परशुरामागमे परामर्शोऽयम् । तपःपराक्रमोभयनिधेः अत एव उत्सिक्तस्य उद्दृप्तस्यार्थात् परशुरामस्य अभ्यागमात् सत्सङ्गे प्रियता इच्छा वीररभसे वीरोचितोद्यमे उत्फालः उत्कण्ठता च माम् एकतः एकस्यां दिशि कर्षतः, तपः-पराक्रमद्वयवशात् यथासङ्ख्यं तद्द्वयेनाकर्षणम् । अन्यतः अन्यस्यां दिशि एषः अनुभूयमानः भावनोपनीतः वा वैदेहीपरिरम्भः मां रुणद्धि मुनिपार्श्वगमनान्निवर्त्तयतीत्यर्थः । परिरम्भः कीदृशः ? हरिचन्दनं चन्दनविशेषः तद्वद् इन्दुवच्च शिशिरः स्निग्धः स्पृहणीयत्वमेव स्निग्धत्वम् । अत एव आनन्दी आनन्दजनकः । अत्रेति । 'आवेगः' मुनावनवज्ञेयत्वरूपः सम्भ्रमः, स च उभयाकर्षणव्यङ्ग्यः । हर्षस्तु परिरम्भरुध्यमानत्वव्यङ्ग्यः । अनयोर्विरुद्धयोरेकदा एकत्र स्थितिरूपः सन्धिरत्र निराकाङ्क्षवाक्यद्वयङ्ग्यः ।

## सुधासागरः

सन्धिर्यथा—उत्सिक्तस्येत्यादि । शार्दूलविक्रीडितं छन्दः । सीतालिङ्गनं भावयतो रामस्य भार्गवागमे परामर्शोऽयम् । अयमर्थः । तपश्च पराक्रमश्च तयोर्निधेः स्थानभूतस्य धर्मयुक्तोभयवीरस्येत्यर्थः । अत एवोत्सिक्तस्य दृप्तस्य अर्थात् परशुरामस्य, अभ्यागमादागमनादेकतः एकस्यां दिशि, सतः परशुरामस्य सङ्गे या प्रियता प्रेम च, वीरस्य रभसो हर्षस्तस्य उत्फालः उद्रेको वीरोचिते कौतुकोद्रेक इत्यर्थः । स च एतौ द्वावपि मां कर्षतः । अन्यतोऽन्यस्यां दिशि एषः भावनोपनतः वैदेहीपरिरम्भः सीताश्लेषश्च मां रुणद्धि मुनिपार्श्वगमने प्रतिबध्नाति । चकारः पूर्वोक्ताभ्यां तुल्यकालत्वस्य च सन्धिरूपस्य सूचनाय । एकस्य परिरम्भस्य सत्सङ्गप्रेमीत्साहाभ्यां तुल्यत्वसम्पादकं विशेषणमाह मुहुरित्यादि । मुहुर्वारंवारं चैतन्यं ज्ञाममामीलयन् विषयान्तराद् व्यावर्त्तयन् । हरिचन्दनं चन्दनभेदः इन्दुश्च तद्वच्छिशिरः शीतलश्चासौ स्निग्धश्च प्रेमसंवलितः । अतएव रुणद्धीति युक्तं, स्निग्धेन युद्धानिवर्त्तनात् । अत एवानन्दी आनन्दजनक इति ।

अत्र मुनावत्यादरणीयत्वज्ञानजन्यत्वराविशेषः पूर्वार्द्धगम्यः हर्षस्तूत्तरार्द्धगम्यः । अनयोस्तुल्यकालमेवास्वादः । तदेतदुक्तं वृत्तिकारैः—अत्रावेगहर्षयोरिति ।

## विवरणम्

औत्सुक्यस्येति उदय इत्यनेनान्वितम्। अत्र पूर्ववाक्याल्लब्धस्य कोपस्य न शान्तिः प्रतीयते, व्यञ्जकाभावात्। तस्या इत्यादौ परवनितासम्भोगचिह्नविस्मरणमसाधारणं कोपशान्तेर्व्यञ्जकम्। औत्सुक्यं तु न तथा, उत्सुकानामपि मनस्विनीनां कोपदर्शनात्। अतो नात्र कोपौत्सुक्ययोः शबलता, नापि सन्धिः, कोपसहभावस्यापि व्यञ्जकाभावादप्रतीतेः, इत्यौत्सुक्योदय एवायमिति भावः।

उत्सिक्तस्य दृप्तस्य। उत्फाल उत्कण्ठा अत्रेति आवेगो मुनिदर्शने त्वरान्वितो व्यापारः, हर्षः सीतालिङ्गनहेतुकः तयोर्विरोधिनोर्यौगपद्यं नाम सन्धिरिहाभिव्यज्यते। वीरचरिते सीतयालिङ्ग्य प्रतिरुध्ययानभार्गवाभिगमनस्य राघवस्येयमुक्तिः।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय न श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ।५३ ।

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ।

भावस्थितिस्तूक्ता उदाहृता च ।

---

### सङ्केतः

क्वाकार्यमिति । अत्र किंशब्दः कुत्सार्थः प्रश्नार्थश्च आवृत्त्या व्याख्येयः । तथा अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने च मिथो बाध्यबाधकतया तिष्ठन्ती, चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानम् । वितर्कादीनां शबलतेति योगः ।

भावस्थितिरिति । 'रतिर्देवादि' इत्यत्र भावस्य स्थितिरेव केवलोक्ता । न शान्त्यादिविशेषणविशिष्टा ।

### सङ्केतः (रुय्यकः)

भावस्थितिस्त्विति—भावसत्तायाः स्थितिरूपत्वात् भावग्रहणेनोक्तत्वात् ।

### बालचित्तानुरञ्जनी

भावशबलमुदाहरति क्वाकार्यमिति । उर्वशीविरहितस्य पुरूरवस इयमुक्तिः । केषां भावानां शबलत्वमाह अत्रेति । शबलतेत्यनुषज्यते । 'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इति वाक्यद्वयेन वितर्को दर्शितः । 'भूयोऽपि दृश्येत सा' इत्यनेन औत्सुक्यम् । 'दोषाणामुपशान्तये श्रुतम्' इत्यनेन मतिः । 'अहो कोपेऽपि कान्तं मुखम्' इत्यनेन स्मृतिः । 'किं वक्ष्यन्त्यपकल्मषाः कृतधियः' इत्यनेन शङ्का । 'स्वप्नेपि सा दुर्लभा' इत्यनेन तद्दैन्यम् । 'चेतः स्वास्थ्यमुपैहि' इत्यनेन धृतिः । 'कः खलु युवा धन्योऽधरं धास्यति' इत्यनेन चिन्ता । ननु भावस्य शान्त्यादिवत् स्थितिरपि किं नोक्ता, नोदाहृता चेत्यत आह । भावस्थितिरिति । 'व्यभिचारी तथाञ्जित' इत्यादौ उक्ता, जाने कोपपराङ्मुखीत्यादावुदाहृता च । यद्यपि तत्र साक्षात् भावस्थितिर्नोक्ता । तथापि भावसत्तायाः स्थितिरूपत्वात् भावस्वरूपोदाहरणेनैव स्थित्युदाहरणमुक्तमेवेति । भावः ।

### विवेकः

क्वचिदनेकेषां पूर्वपूर्वापवादेन स्थितौ सम्भूय प्रकाशः शबलत्वमास्वाद्यते यथा क्वाकार्यमित्यादि— अयं श्लोकः कस्यचित् कवेः क्वचिन्नाटकादौ कण्वाश्रमे शकुन्तलां दृष्ट्वा तां प्रति प्रवृद्धाभिलाषस्य दुष्यन्तस्य तस्यां ब्राह्मणीत्व तदिह वितर्कादिबाधन औत्सुक्यादीनामुत्तरोत्तरंस्थितौ सम्भूय प्रकाशाच्छबलत्वं चमत्कारस्थानम्। नन्वेवं विभावानुभावमुखेनाप्यधिकश्चमत्कारो दृश्यत इति विभावध्वनिरनुभावध्वनिश्च वक्तव्यः। नैवं. विभावानुभावौ तावत् स्वशब्दवाच्यावेव, तच्चर्वणाऽपि चित्तवृत्तिष्वेव पर्यवस्यतीति न रसभावेभ्योऽधिकं चर्वणीयम्। यदि तु विभावानुभावावपि व्यङ्ग्यो भवतस्तदा वस्तुध्वनिः किं न[प्र]सज्यत इति भावाशान्त्युदयावुक्तौ। स्थितिस्तु मध्यमावस्था कस्मान्नोक्ता इत्यत आह भावस्थितिस्त्विति—भावस्य सत्तायाः स्थितिरूपत्वात्, भावग्रहणेनोक्तत्वात्।

### दीपिका

क्वाकार्यमित्यनुशयदेवयानीनाटके ययातेरिति प्रवादः।

अत्र वितर्कादीनां चिन्तापर्यन्तानां व्यञ्जकभागाः स्पष्टाः। भाव(स्य)स्थितिरुदयव्ययवैशिष्ट्यरहितं स्वरूपं, न तु तद्विलक्षणा काचिदिति भावः।

### साहित्यचूडामणिः

क्वेति। क्वाकार्यमिति वितर्कः। भूयोऽपि दृश्येत सेत्यौत्सुक्यम्। दोषाणां प्रशमाय मे श्रुतमिति मतिः। अहो कोपेऽपि कान्तं मुखमिति स्मरणम्। किं वक्ष्यन्त्यपकल्मषाः कृतधिय इति शङ्का। स्वप्नेऽपि सा दुर्लभेति दैन्यम्। चेतः स्वास्थ्यमुपेहीति धृतिः। कः खलु युवा धन्योऽधरं पास्यतीति चिन्ता। एवं चैषां व्यज्यमानानां शाबल्यम्। इदमत्राकूतं—कदाचित् प्रक्रान्तायाश्चित्तवृत्तेः प्रशमो निमीलनदशा हृदयं विशेषेण ह्लादयति कदाचिदुदय उद्गमावस्था, एकदा द्वयोः सन्धिः स्पर्धीभावेनोपनिबन्धः, अन्यदा बहूनां शबलता पूर्वपूर्वोपमर्देनोपन्यास इति चर्वणावैचित्र्यादेतेषां पृथक् प्रपञ्चनमिति।

ननु भावस्योदयवत् शान्तिवच्च मध्ये स्थितिरित्यवस्था किं न समर्थितेत्यत्राह—भावेति। उक्ता च 'व्यभिचारी तथाऽञ्जित' इत्यत्र। उदाहृता च—'जाने कोपपराङ्मुखीत्यादौ।

### सम्प्रदायप्रकाशिनी

क्वाकार्यमिति। अत्र परिपाट्या वाक्यैर्वितर्कौत्सुक्यादयो व्यज्यमानाः शबलतयावतिष्ठन्ते।

ननु भावस्य शान्त्यादिदशावत् स्थितिदशापि किं न विचार्यत इत्यत आह—भावस्थितिरिति। भावध्वनिरेव हि भावस्थितिः।'

### मधुमती

ननु भावोदयादिवत् भावस्थितिः किमिति नोच्यते? इत्यत आह—

भावस्थितिरिति । 'रतिर्देवादि' इत्यत्र भावस्य स्थितिरेव केवलोक्ता । न शान्त्यादिविशेषणविशिष्टा ।

## विस्तारिका

शबलतामाह—क्वाकार्यमिति । इहानवस्थानप्रतिपादनाय क्वेति द्विरुपादानम् । अत्र शान्तसञ्चारिवितर्कावगमः । भूय इत्यादि । अपिना लिङा च संम्भावनोत्कटता । एतावतुल्येन शृङ्गारसञ्चार्यौत्सुक्येन शान्तसञ्चारिवितर्कबाधनम् । एवमुत्तरोत्तरं सङ्गमनीयम् । श्रुतं विद्याकृता मतिः । कोपेऽपीत्यतः स्मरणं कृते महात्मभिराचरिते धीर्यस्य कृतधियः पण्डिताः । इतः शङ्का । स्वप्नेऽपि अश्रुतादृष्टघटकेऽपि, एतस्माद् दैन्यं चेत इति—मनःस्वास्थ्येनैव सर्वनिर्वृतेरस्मादवृत्तिः । धन्यो नाहमिव खण्डतपाः । अमुष्माच्चिन्ता समुदेति ।

अत्रेति । वितर्कमतिशङ्काधृतीनां शान्तसञ्चारिणामौत्सुक्यस्मरणदैन्यैः शृङ्गारसञ्चारिभिरुपमर्दनं पार्यन्तिकचिन्तया शान्तोपमर्देन शृङ्गारस्य विश्रान्तिः । स च शत्रुविजयपूर्वकराज्यलाभ इव चमत्कारप्रकर्षनिदानमित्यर्थः ।

ननु भावस्य शान्त्युदयसन्धिशबलता इव स्थितिरप्यवस्थाऽन्तरं तन्निषिद्धनिदर्शनमुचितमित्याह—भावस्थितिरिति । उक्ता 'व्यभिचारी तथाञ्जितः इत्यनेनोदाहृता । 'जाने कोपपराङ्मुखी' इत्यनेन प्रशमाद्यवस्थाचतुष्ट्याऽनवस्थितो भावो भावस्थितिः ।

## सारबोधिनी

शबलतामाह क्वाकार्यमिति । देवयानिदर्शनानन्तरं ययातेरियमुक्तिः । 'क्वाकार्यम्' इत्यनेन शान्तसञ्चारिवितर्कावगमः । 'भूय' इत्यादिव्यङ्ग्येन शृङ्गारसञ्चार्यौत्सुक्येन शान्तसञ्चारिवितर्कबाधनम् । एवमुत्तरोत्तरं सङ्गमनीयम् । श्रुतमहो कोपेऽपीत्यादितः स्मृतिः । वक्ष्यन्तीत्यादितः शङ्का । स्वप्नेऽपीति दैन्यम् । चेतः स्वास्थ्यमिति धृतिः । कः खल्विति चिन्ता । अत्रेति पार्यन्तिकचिन्तया शान्तस्याप्युपमर्देन शृङ्गारस्य विश्रान्तिः । सा च शत्रुविजयपूर्वकराज्यलाभ इव चमत्कारप्रकर्षनिदानमिति भावः । ननु भावस्य शान्त्यादिवत् स्थितिरप्येकावस्था, सा कथं नोक्ता इत्यपेक्षायामाह भावस्थितिरिति । उक्ता 'व्यभिचारी तथाञ्जित' इत्यनेन । उदाहृता च, 'जाने कोपपराङ्मुखी' इत्यनेन । प्रशमाद्यवस्थाचतुष्टयानवस्थितो भावो भावस्थितिः ।

ननु विभावादिसमूहालम्बने रसोऽङ्गतां प्राप्तो भवतु तत्प्रशमादीनामुदासीनानां कथं प्राधान्यमित्यत आह मुख्ये रसेऽपीति । अङ्गित्वं प्राधान्यम् । आपातत इति शेषः ।

## काव्यप्रदीपः

शबलता यथा—

**'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा**
**दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।**
**किं वक्ष्यन्त्यपकलमषाः कृतधियः स्वप्नेऽपि सा दुर्लभा**
**चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥'**

अत्र क्वाकार्यमित्यादौ वितर्कः, भूयोऽपीत्यौत्सुक्यम्, दोषाणामिति मतिः, कोपेऽपीति स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेऽपीति दैन्यम्, चेतः स्वास्थ्यमिति धृतिः, कः खल्विति चिन्ता स्फुटं पूर्वपूर्वोपमर्देन प्रतीयमाना शबलताचमत्कारभूमिः ।

ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः संभवत्येव तत्कथं नोक्त इति चेत्, न । भावोक्त्यैव तदुक्तेः । भावस्थितेर्भावाभिन्नत्वात् ।

## काव्यप्रकाशखण्डनम्

**क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा**
**दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।**
**किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा**
**चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥**

विक्रमोर्व्वशीनाटके पुरूरवसो वाक्यमिदम् । अत्र वितर्क-औत्सुक्य-मति-स्मरण-शङ्का-दैन्य-धृति-चिन्तानां तिलतण्डुलवच्चर्वमाणता । अत्र क्वाकार्यमित्यादौ वितर्कः, भूयोऽपीत्यौत्सुक्यम्, दोषाणामिति मतिः, कोपेऽपीति-स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेऽपीति दैन्यम्, चेत इति धृतिः, कः खल्विति चिन्ता,—इति स्वयं बोध्यम् । वस्तुस्तु एतेषां पूर्वपूर्वोपमर्देन परपरोदयः शबलता ।

## आदर्शः

भावसबलत्वमुदाहरति—क्वाकार्यमिति । ऊर्वशीविरहात् स्वमरणमुपक्रम्य पश्चान्निवर्त्तमानस्य पुरूरवस उक्तिरियम् । अत्र कुलमित्यन्तेन चन्द्रकुले स्त्रीविरहादात्महत्या त्वकार्य्यमित्येवं विचाररूपो वितर्कः प्रतीयते । भूयोऽपि दृश्येत सेत्यनेन व्यङ्ग्यमौत्सुक्यं विरुद्धोत्तरज्ञानत्वात् ततोऽपि बलवत् । दोषाणामित्यादि-श्रुतमित्यन्तेन व्यङ्ग्या 'सर्वथा तदनुरागो दोषायैवे'त्यर्थनिर्द्धारणरूपा मतिस्ततोऽपि बलवती । श्रुतं वेदः । अहो इत्यादि—मुखमित्यन्तेन व्यङ्ग्यं मुखकमनीयत्वस्मरणं ततोऽपि बलवत् । किमित्यादि-कृतधिय इत्यन्तेन व्यङ्ग्या शङ्का ततोऽपि बलवती । स्वप्नेऽपि सा दुर्लभेत्यनेन व्यङ्ग्यं स्वानौजस्यरूपं दैन्यं ततोऽबलवत् । चेतः स्वास्थ्यमुपैहीत्यनेन व्यङ्ग्या धृतिस्ततोऽपि बलबती । कः खल्वित्यादिव्यङ्ग्या चिन्ता ततो बलवतीत्येवं सबलतेत्याह—अत्रेति । धास्यति पास्यति । बलवत्तो व्यञ्जने बलवत्ताऽपि व्यङ्ग्या । बलवत्समूह इत्यर्थे वा सबलतेति तद्धितान्तं पदम् । भावस्थितेरपि सम्भवात् किमत्र तदनुक्तिबीजमित्यत आह—भावस्थितिस्त्विति स्थितभावस्थितिः, सा च भावान्नातिरिच्यते इत्यंतो भावोक्तिरेव तदुक्तिः जाने कोपपराङ्मुखीत्यादिकमेव तदुदाहरणमित्याह—उक्ता उदाहृता चेति ।

## सुधासागरः

शबलतामुदाहरति—क्वाकार्यमित्यादि । शार्दूलविक्रीडितं छन्दः । 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् । शुक्रकन्यां देवयानीं दृष्टवतो राज्ञो ययातेरियमुक्तिः । अयमर्थः । अकार्यं

ब्राह्मणकन्यायामासक्तिरूपं क्व ! शशलक्ष्मणः चन्द्रस्य कुलं च क्व ! द्वयेनोभयोरत्यन्तवैधर्म्याद्विषमालङ्कारो ध्वन्यते, भूयोऽपीत्युक्तवितर्कोपमदर्देनौत्सुक्यम् अपिना सम्भावनोत्कटता सूच्यते । दृश्येत सा अद्भुतसौन्दर्या देवयानी दृश्येत कथञ्चिद् ग्गोचरा भवेत् । मे मम श्रुतं शास्त्रश्रवणं दोषाणां प्रमादावेशादीनां प्रशमाय आत्यन्तिकनाशाय अहो आश्चर्यम् कोपेऽपि मुखमर्थात्तस्याः कान्तं मनोहरम् अपगतं कल्मषं दुश्चरितं येभ्यस्तादृशाः । कृते महात्मभिश्चरिते पुण्यकर्मणि धीर्येषां ते तथाभूताः सत्पुरुषाः किं वक्ष्यन्ति इति निन्दाशङ्कया पूर्वोपमर्द्दः । स्वप्नेऽपि सा दुर्लभेत्यनेनाधिगताप्राप्तियुक्तदैन्यम् । हे चेतः स्वास्थ्यमुपैहि उपगच्छ । कः खलु धन्यो नाहमिव मन्दभाग्यो युवा तरुणोऽधरं धास्यति पास्यतीति ।

अत्र क्वाकार्यमित्यादौ वितर्कः । भूयोऽपीत्यौत्सुक्यम् । दोषाणामिति मतिः । कोपेपीति स्मृतिः । किं वक्ष्यन्तीति शङ्का । स्वप्नोऽपीति दैन्यम् । चेतः स्वास्थ्यमिति धृतिः । कः खल्विति चिन्ता । स्फुटं पूर्वपूर्वोपमर्देन प्रतीयमानेति शबलता चमत्कारभूमिः । तदेतदुक्तं श्रीवृत्तिकारैः—अत्र वितर्कौत्सुक्यमित्यादि ।

ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः सम्भवत्येव तत्कथं नोक्त इति चेत् । न । भावोक्त्यैव तदुक्तेः । भावस्थितेर्भावाभिन्नत्वात् । तदेतदुक्तं भावस्थितिरित्यादि ।

## विवरणम्

उर्वशीविरहितः पुरूरवा विप्रलपति—क्वाकार्यमित्यादि । अकार्यं वेश्यासङ्गमादि । तेन नाहमकार्यं करवै, सोमकुलोत्पन्नत्वादिति वितर्कः कुलमित्यन्तेन ध्वनितः । सेत्यन्तेन वितर्कोपमर्दिवेश्यादर्शनौत्सुक्यम् । यत्तु—अकार्यमुर्वशीविरहादुद्बन्धनादिना मरणमिति व्याख्यानम्, तन्न, तादृशवितर्कस्य दर्शनौत्सुक्योपमर्दनीयत्वाभावात् । श्रुतमित्यन्तेन मतिः, मुखमित्यन्तेन स्मृतिः, कृतधिय इत्यन्तेन शङ्का, दुर्लभेत्यन्तेन दैन्यम्, उपेहीत्यन्तेन धृतिः, धास्यतीत्यन्तेन चिन्ता व्यज्यते । ते च भावाः पूर्वापरयोरुपमर्द्योपमर्दकभावाच्छबलिता इति भावः ।

ननु भावस्य शान्त्युदयावुक्तौ, स्थितिरपि भावान्तरसहिता कथिता, केवला तु कुतो नोक्तेत्यत आह—भावस्थितिस्तूक्तेति । उक्ता भावोक्त्या, उदाहृता भावोदाहरणेन ।

## (सू. ५१) मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।

## ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत्॥

---

### सङ्केतः

ननु मुख्यस्य रसस्यैव अङ्गित्वं वक्तुं युक्तम्। तत् कथं भावप्रशान्त्यादीनां तदुक्तं इत्याह—मुख्ये रसेऽपीति।

### सङ्केतः (रुय्यकः)

नन्वनन्तरोदाहरणेषु रससद्भावात् कथं भावावस्थोदाहरणमित्याह—मुख्ये रसे इति।

### बालचित्तानुरञ्जनी

ननु भावशान्त्यादयो रसं प्रत्यङ्गानि। कथं तेषामङ्गित्वमत आह मुख्य इति। कदाचन रसापेक्षया सातिशयचमत्कारे सतीत्यर्थः। श्लोकगततच्छब्दार्थमाह भावेति।

नन्वेकस्यैवाङ्गित्वमङ्गत्वञ्च विरुद्धमित्याशङ्क्य दृष्टान्तमाह अङ्गित्वमिति। यथा राज्ञा अनुगतस्य पश्चाद्गतस्य विवाहप्रवृत्तस्य भृत्यस्य प्राधान्यं तथा।

### काव्यादर्शः

ननु, विभावानुभावव्यभिचारिसंयोजनोदितस्थायिप्रतिपत्तिकस्य प्रमातुः स्थाय्यंशवर्णकृत एवास्वादः, तत् कथं भावशान्त्यादीनामङ्गित्वमित्याहमुख्ये रसेऽपीति।

### विवेकः

नन्वनन्तरोदाहरणेष्वेव रससद्भावात् कथं भावोदाहरणत्वमित्याह मुख्ये रसेऽपीति। यदा कुतश्चिदङ्गादुद्रिक्तावस्थाप्रतिपत्तौ व्यभिचारी निरतिशयसुखास्वादप्रयोजको भवति तदा तस्यापि प्राधान्यं मन्यते। एतद्दृष्टान्तेनोपपादयति राजानुगतेति।

### दीपिका

रस्यते रसीक्रियते इति रसो रत्यदिः। यद्यपि पात्रापेक्षायामत्रान्योऽङ्गी तथाऽपि तदङ्गनामास्वादजीवातुतया काव्ये क्वचनाङ्गित्वं प्राधान्यम्। इतरे तु तन्मुखप्रेक्षिणो यथोक्तास्वत्रोदाहृतिषु। भावशान्त्यादय इति-भावा व्यभिचारिणतस्तेषां प्रशान्त्यादयश्चेति ज्ञेयम्। राजेति-भृत्यविवाहे राजगमनं हि भृत्यस्यैवोपकरणतां धत्ते।

## दर्पणः

भावेति। भावा व्यभिचारास्तेषां प्रशान्त्यादयश्चेति भावः। राजेति। यथा विवाहप्रवृत्तो भृत्यो राज्ञाऽप्यनुगम्यमानो लोकैरारब्धमुखे सुखतया [?] प्रेक्षत इत्यर्थः। इदं च व्यासवाल्मीकिकालिदासप्रभृतिमहाकविभिरनुगम्यजीवितभूतस्यासंलक्ष्यक्रमरूपस्य रसादेस्तावं परकीयग्रन्थ व्याख्याप्रसङ्गेन स्तोकस्तोकमुक्तम्। अल्पेनापि च प्रसङ्गेन सन्दर्भेण सशेषविशेषमवगन्तुकामा मदीयसाहित्यदर्पणमवलोकयन्तु विद्वांसः।

## साहित्यचूडामणिः

ननु रसं प्रति भावशान्त्यादेः कीदृगङ्गाङ्गिभाव इत्यत्राह—मुख्य इति। मुख्येऽपि रसे भावशान्त्यादयोऽङ्गित्वं प्राधान्यं प्राप्नुवन्ति। कदाचन तादृशि चमत्कारे लब्धे न सर्वदा।

ननु कथमिदमुक्तं रसोऽपि मुख्यः भावशान्त्यादीनामप्यङ्गित्वमिति, यस्मादेकतरप्राधान्यमन्यतरगुणीभावव्याप्तमित्यत्राह—राजेति। राज्ञानुगतो यो विवाहप्रवृत्तो भृत्यः तद्वत्। रसस्य हि सर्वकालानुस्यूता मुख्यता, भावशान्त्यादेस्तु तत्प्रसादपात्रीभावेन पूर्वापरविसंवादिन्या तादात्विकप्रतीतिबलोपकल्पितायामवस्थायामिति।

## सम्प्रदायप्रकाशिनी

ननु रसाङ्गभूतानां भावशान्त्यादीनां कथं पृथग् ध्वनित्वमित्यत आह—मुख्ये रसेऽपीत्यादि। कदाचन, न तु सर्वदा। यदैव प्राप्नुवन्त्यङ्गितामेते तदैव ध्वनय इति भावः।

अङ्गानां सतामपि कदाचिदङ्गित्वं भवतीति दृष्टान्तेन द्रढयति—राजानुगतविवाहप्रवृत्तेति।

## मधुमती

ननु उक्तोदाहरणेषु रसस्य सम्भवात् कथं भावोदाहरणत्वं? अत आह—मुख्ये इति। राजेति—विवहनक्रियायां प्रधानस्यापि राज्ञः अप्राधान्यं, अप्रधानस्यापि भृत्यादेः प्राधान्यं च यथेत्यर्थः।

## विस्तारिका

ननु विभावनादिसमूहालम्बने रसेऽङ्गताप्राप्तस्य सञ्चारिण भवतु कथञ्चन प्राधान्यम्, तत्प्रशमादीनामुदासीनानां कथं प्राधान्यतेमित्याह—मुख्ये रसेऽपीत्यादि। अङ्गित्वं प्राधान्यं रससान्निध्येनोद्भटीभूतस्य भावप्रशमादेरापाततः प्राधान्यम्। तदाह—राजानुगतेत्यादि। हस्त्यश्वरथपादातनृत्यगीतवादित्रादिभिरलङ्कृतः प्रेक्षकाणामापादितविस्मयो भृत्यो राजनि दृष्टे, एवमनुग्राहकोऽयमुपकरणीभूय भृत्यं विवाहयतीति यथा राजोत्कर्षे पर्यवस्यति, तद्वदस्य प्रशमादेः पार्यन्तिको रस इत्यर्थः। एतेन 'भावपरिग्रहोऽयं भावः शान्त्यादयश्चेति समासः' इति निरस्तम्। तस्य रसादन्यत्वेन प्राधान्यानपायात्।

## सारबोधिनी

ननुविभावादिसमूहालम्बने रसोऽङ्गतां प्राप्तो भवतु तत्प्रशमादीनामुदासीनानां कथं प्राधान्यमित्यत आह मुख्ये रसेऽपीति। अङ्गित्वं प्राधान्यम्। आपातत इति शेषः।

### काव्यप्रदीपः

ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथं भावोदाहः रणमेतत्, कथं वा भावध्वनित्वम्। रसाङ्गत्वेन तेषां गुणीभावादित्यत आह—

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।**

ते भावशान्त्यादयः। कदाचन यदा त एवाङ्गित्वेन विवक्ष्यन्ते। विवहनप्रवृत्तराजानुगम्यमानभृत्यवत्।

### काव्यप्रकाशखण्डनम्

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।(मू. का. ३७, पू.)**

राजानुगतविवाहप्रवृत्तभृत्यवत्। इदमयुक्तम्। तथा हि-रत्यादिसहचरणाद् व्यभिचारिणां भवतु कथञ्चन मुख्यत्वम्, सर्वथा उदासीनानां भाव-प्रशमादीनां [ प. १५.२] मुख्यत्वं न संभवति, मानाभावात्।

### आदर्शः

नन्वेषूदाहरणेषु सर्वत्रैव रससम्भवाद् रसध्वनय एव किं [illegible]ते इत्यत आह—मुख्ये रसेऽपीति, भावाद्यपेक्षया आस्वादाधिक्येन मुख्ये रसे सत्यपि ते कदाचन निराकाङ्क्षवा[illegible]व्यङ्ग्यत्वदशायां साकाङ्क्षवाक्यव्यङ्ग्यरसस्य अङ्गित्वं प्राधान्यं प्राप्नुवन्तीत्यर्थः। भावशान्त्यादय इत्यत्र भावतच्छान्त्यादय इत्यर्थः अन्यथा भावस्याङ्गित्वावाप्त्यनुक्तिरूपन्यूनतापत्तेः। राजानुगतेति विवाहप्रवृत्तो भृत्यो यथा राज्ञा तद्दिने अनुगम्यते तथा मुख्येनापि रसेन निराकाङ्क्षवाक्यव्यङ्ग्योभावादिः प्रधानीकृत्यानुगम्यत इत्यर्थः।

### सुधासागरः

ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथं भावोदाहरणमेतत् कथं वा भावध्वनित्वम्। रसाङ्गत्वेन तेषां गुणीभावादित्यत आह—

ते भावशान्त्यादयः कदाचन यदा त एवाङ्गित्वेन विवक्ष्यन्ते विवहनप्रवृत्तराजानुगम्यमानभृत्यवत्।

### विवरणम्

ननु 'भूयोऽपि दृश्येत सा' इत्यादिनाऽवान्तरवाक्येनौत्सुक्यमभिव्यज्य विप्रयोगशृङ्गारोऽभिव्यज्यत इति रसध्वनिरेवायम्। न च विप्रयोगोऽत्र भावशबलतायां गुणीभूतो भवितुमर्हति, शबलतयाऽप्युन्मादाभिव्यञ्जनद्वारा प्रबन्धसहकारेण विप्रयोगस्य प्राधान्येनाभिव्यञ्जनादत आह—मुख्य इति। कदाचन प्रबन्धानालोचनदशायां मुक्तकेनानेन श्लोकेन खण्डवाक्यारूढतया शृङ्गारं गुणीकृत्य भावशबलता महावाक्यारूढतया प्रधानीकृत्य प्रत्याय्यत इत्यर्थः।

भावशान्त्यादय इति। भावाश्च तच्छान्त्यादयश्चेत्यर्थः। प्रधानस्य गुणीभावे लौकिकं दृष्टान्तरमाह—राजेति।

इदमत्र चिन्तनीयम्—क्वाकार्यमित्यादौ समूहालम्बनात्मिका वाक्यार्थबुद्धिः, अथ वितर्कौत्सुक्यादीनां स्मरणम्, अनन्तरमेतैरुपलक्षितस्य पुरूरवसो वैयञ्जनिको बोधः, ततो न रतेराहत्य स्मरणम्, औत्सुक्यादेरनुकूलस्येव, वितर्कधृत्यादेः प्रतिकूलस्य व्यभिचारिणः काव्यारोहात्, किन्तु शबलतामासाद्य काव्यं विश्राम्यति । प्रबन्धसहकारे तु शबलतया चापल्योन्मादौ व्यभिचारिणावुत्थाप्य रतिरनुसन्धीयते । अन्यथा वितर्कौत्सुक्ययोः परस्परप्रतिषेधपरिहारासम्भवादिति दिक् ।

## (सू. ५२) अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ ३७॥
## शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः, अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः । तत्र

---

### सङ्केतः

एवं अलक्ष्यक्रमं उक्त्वा, लक्ष्यक्रमं त्रिधा ध्वनिमाह—अनुस्वानाभेति । वाच्योऽर्थः घण्टास्वानायते, व्यङ्ग्यार्थस्तु अनुरणनायते इति स्थित्या व्यङ्ग्यं अनुरणरूपं इत्युक्तम् ।

### सङ्केतः (रुय्यकः)

एवमसंलक्ष्यक्रमं निरूप्य संलक्ष्यक्रमं व्यङ्ग्यं लक्षयितुमाह—अनुस्वानेति । अनुस्वानोऽनुरणनम्, तदाभः क्रमप्रत्येयत्वात्तत्सदृशोऽत एव संलक्ष्यक्रमो यो व्यङ्ग्योऽर्थस्तस्य स्थितिर्यत्र । स च त्रिविधः, शब्दशक्तिमूलादिभेदात् । तत्र शब्दस्य शक्तिर्द्वितीयोऽभिधाव्यापारः । तथा हि प्रकृतोक्तापेक्षया या द्वितीयोक्ता यथा 'उल्लास्ये' त्यादौ मेघलक्षणः स प्रदेशान्तरे वर्णयितुं प्रस्तुतत्वादभिधेय एव । तत्र च शब्दस्याभिधा व्यापारस्तद्रूपा या शब्दस्य शक्तिः सा व्यंग्यस्यार्थस्य मूलम्, तां विना तस्यानुल्लासात् । अतश्च साऽभिधाशक्तिरेव व्यंजनशक्तितया परिणता । एवञ्च द्वितीयोऽर्थो व्यंग्य एवाभ्युपगम्यः, तस्य केवलस्य ध्वनिकारोक्तदिशाऽव्यंग्यत्वम् । (तत्र) उपमानोपमेयभावो व्यंग्यतया प्रतिपादितः । अर्थस्य (तु) शक्तिर्वक्तृवैशिष्ट्यादिसाचिव्यं सा मूलं यत्र, तन्माहात्म्याद् व्यंग्यार्थप्रतीतेः । एवमुभयोः शब्दर्थयोः शक्तिः शब्दगतो द्वितीयोऽभिधाव्यापारोऽर्थगतञ्च वक्तृवैशिष्ट्यादिसचिवत्वं सा मूलं यत्र । ग्रन्थकारस्य त्वन्यथाऽभिप्राय उदाहरणप्रसंगे विचारयिष्यते ।

### बालचित्तानुरञ्जनी

एवमसंलक्ष्यक्रममुक्त्वा संलक्ष्यक्रममाह अनुस्वानेत्यादिना । घण्टावादनानन्तरं यदनुरणनं सोऽनुस्वानः तदा तत्सदृशत्वेन संलक्ष्य क्रमो यस्य तस्य व्यङ्ग्यस्यावस्थितिर्यत्र यः संलक्ष्यक्रमध्वनिः घण्टावादवत् व्यङ्ग्य इति विवेकः । स त्रिविधः । शब्दार्थोभयशक्त्युत्थतवेन । तदेव त्रैविध्यं प्रकटयति शब्दशक्तीत्यादिना । तत्र तेषां मध्ये शब्दशक्त्युद्भवं ध्वनिसंभेदं लक्षयति तत्रेति ।

### काव्यादर्शः

एवं विवक्षितान्यपरवाच्यस्य ध्वनेरलक्ष्यक्रमव्यङ्ग्यं भेदं विचार्य लक्ष्यक्रममाह—अनुस्वानमिति । अनुस्वानोऽनुरणनम् । तत्सदृशीघण्टाया ह्यनुरणनमभिघातजशब्दापेक्षया क्रमेणैव भाति । आद्यमर्धमनुवादरूपम् । हेतुत्वेनोपात्तं । शब्दशक्तिमूलम् । अनुरणनेन रूपो रूपणासादृश्यं यत्र, तादृग् व्यङ्ग्यं यत्र ध्वनौ स तथा ।

## विवेकः

एवमसंलक्ष्यक्रमं निरूप्य संलक्ष्यक्रमव्यङ्ग्यं निरूपयितुमाह—अनुस्वानाभेति। अनुस्वानोऽनुरणनम्, तदाभस्तत्क्रमप्रत्येयत्वात्तत्सदृशोऽतएव संलक्ष्यक्रमव्यङ्ग्यो यो व्यङ्ग्योऽर्थस्तस्य स्थितिर्यत्र। 'स च त्रिविधः शब्दशक्तिमूलादिभेदात्।

## दीपिका

एवमलक्ष्यक्रमं रसादिरूपं निरूप्य सम्प्रति लक्ष्यक्रमस्य सामान्यानुवादेन विभागमाह—अन्विति। अनु पश्चात्स्वानः कथनं यस्य सोऽनुस्वानस्तदाभस्तत्सदृशः, अतएव सम्यक्लक्ष्यः क्रमः प्रतीतिपौर्वापर्य्यं यत्र व्यङ्ग्ये तत्र स्थितिर्यत्रेति विग्रहः। शब्दस्यार्थस्य तदुभयस्य शक्तेरुद्भवतीति शब्दार्थोभयशक्त्युत्थः। शब्दस्य शक्तिर्मूलं प्रतीतिप्रधानबीजं यस्य स शब्दशक्तिमूलः। तथाभूतोऽनुरणनरूपोऽनूदितसदृशोव्यङ्ग्योऽर्थो यत्रेत्यादिर्विग्रहः कार्यः।

## दर्पणः

संप्रति क्रमप्राप्तं विवक्षितान्यपरवाच्यभेदस्य लक्ष्यक्रमव्यङ्ग्यस्यार्थवादपूर्वकं विभागमाह अन्विति। अनुस्वानेऽनुरणनं तत्सदृशः। अत एव संलक्ष्यः क्रमः पौर्वापर्य यस्य तथाविधव्यङ्ग्यस्य स्थितिर्यत्र ध्वनौ काव्यभेदे स शब्दस्यार्थस्य तदुभयस्य च शक्त्या। उत्थानमुखोऽर्थात् व्यङ्ग्यो यत्रेति विग्रहः। वृत्तावपि शब्दशक्तिमूलं प्रतीतिप्रधानबीजं यस्य तथाविधोऽनुरणरूपी यत्रेति समासः। एवमन्ययोरपि। शब्दात् शक्तेः[अर्थ] शक्तेस्तु साचिव्यमिति भावः। प्रधानत्वेनेति। गुणीभूतव्यङ्ग्यनिरासः।

## साहित्यचूडामणिः

अथ संलक्ष्यक्रमस्कन्धं प्रकटयति—अनुस्वानेति। प्रथमस्वनपृष्ठभावी स्वनोऽनुस्वनः तदाभं तत्सदृशं कृत्वा यः संलक्ष्यक्रमो व्यङ्ग्यस्तस्य स्थितिर्यत्रेति। शब्दस्यार्थस्य तदुभयस्य च शक्तिरर्थप्रत्यायनसामर्थ्यं तस्या उत्थ उद्भूतः प्रधानत्वेन अन्यथानुपपत्तेः।

## सम्प्रदायप्रकाशिनी

एवमसंलक्ष्यक्रमव्यङ्ग्यं सप्रपञ्चं विविच्य संलक्ष्यक्रमव्यङ्ग्यं विवेचयितुमुपक्रमते—अनुस्वानाभेत्यादि। अनुस्वानः घण्टाद्यनुरणनं, तत्समकक्ष्यतया संलक्ष्यक्रमा व्यङ्ग्यस्थितिर्यत्र ध्वनौ स शब्दार्थोभयशक्तिमूलतया त्रिधा कथितो ध्वन्याचार्येण।

तदिदं विभज्य व्याचष्टे—शब्दशक्तिमूलेत्यादि।

तत्रेति। त्रिषु ध्वनिषु मध्याच्छब्दशक्तिमूलो निरुच्यत इत्यर्थः।

### मधुमती

अनुस्वानेति। अनुस्वानं अनुरणम्, तदाभः तत्सदृशः। तेन अविविक्षितवाच्यात् भेदः। तत्र बाधेन विच्छेदात् अनुरणनसादृश्याभावात्। शक्तिपदं शब्दादौ प्रत्येकं अन्वितम्। द्वन्द्वपरश्रुतत्वात्। अतः त्रैविध्यमित्यर्थः। यद्यपि—शब्दार्थयोः एकव्यञ्जकत्वे अपरव्यञ्जकत्वं ध्रुवमिति नायं विभागः उपपन्नः। तथापि प्राधान्याभिप्रायेण विभागोपपत्तिः इति द्रष्टव्यम्। तत्रापि—शब्दपरिवृत्त्यसहत्वे शब्दप्राधान्यम्, परिवृत्तिसहत्वे अर्थप्राधान्यम्, उभयसंवलने तु उभयप्राधान्यम्। अविवक्षितवाच्ये तु एषां प्रसङ्ग एव नास्ति। बाधेन शब्दशक्तेः अभिधायाः विच्छेदात्। यद्यपि च—वक्ष्यमाणलक्ष्यक्रमध्वन्युदाहरणेषु यत्र क्वचित् लाक्षणिकपदमप्यस्ति। तथापि 'भूम्ना व्यपदेशः' इति लक्ष्यक्रमत्वमुक्तम्।

### विस्तारिका

लक्ष्यक्रमं विभजते—अनुस्वानेत्यादि। अनुस्वानः प्रतिध्वनिः। तत्रैव संलक्ष्यक्रमो यत्र तस्य व्यङ्ग्यस्य स्थितिर्यत्र ध्वनिविशेषणम्। यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते, तद्वद् वस्त्वलङ्कृतितद्व्यञ्जकयोरित्यर्थः।

शब्दश्चार्थश्चोभयञ्च तेषां या शक्त्यस्तत उत्तिष्ठति प्रादुर्भवति स तथा, तदन्वयव्यतिरेकानुविधानेन तदुत्थता। यो यदन्वयव्यतिरेकानुविधायी स तदुत्थः, अवच्छेदभेदेनोभयान्वयव्यतिरेकानुविधानादुभयोत्थः।

त्रिविध इति। एतेन कस्यचिदर्थमूलत्वम्, कस्यचिच्छब्दमूलत्वमिति तृतीयप्रकारासम्भव इति निरस्तम्। एकस्यैव व्यङ्ग्यस्योभयशक्त्यनुविधानेन प्रकारान्तरत्वादिति विवेचयिष्यामः।

### सारबोधिनी

रस एव तु पार्यन्तिकोऽङ्गीति लक्ष्यक्रमं विभजते अनुस्वानेति। अनुस्वानः प्रतिध्वनिः। तदाभासस्तत्सदृशः। संलक्ष्यः क्रमः पौर्वापर्यमर्थात् व्यञ्जकेन सह यस्य एवंभूतस्य व्यङ्ग्यस्य स्थितिर्यत्र ध्वनौ काव्यभेदे स इत्यन्वयः। यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तथा वस्त्वलङ्कृतितद्व्यञ्जकयोरित्यर्थः। शब्दश्चार्थश्च उभयं च तेषां या शक्तयः तत उत्तिष्ठति प्रादुर्भवति यः स तथा।

### काव्यप्रदीपः

एवमसंलक्ष्यक्रमव्यङ्ग्यभेदं विचार्य संलक्ष्यक्रमव्यङ्ग्यप्रभेदानाह—

**अनुस्वनाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः॥ १४॥**

**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।**

घण्टायां हन्यमानायां मुख्यशब्दानन्तरं यथा क्षोदीयानपरोऽनुरणनरूपः शब्दः प्रतीयते तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्य स्थितिर्यत्र सः। शब्दश्चार्थश्चोभयं चेति द्वन्द्वः। तेन शब्दशक्तिमूलव्यङ्ग्यः, अर्थशक्तिमूलव्यङ्ग्यः, उभयशक्तिमूलव्यङ्ग्यश्चेति त्रिधेत्यर्थः। शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव शब्देन तदर्थप्रतीतिः, नतु पर्यायान्तरेणापि। एतद्वैपरीत्यं चार्थशक्तिमूलत्वम्। न त्वभिधया तत्प्रतीतिरिति। एतेन 'अभिधाया यत्र न नियमनं

तत्रैष भेदो द्रष्टव्यः। तन्नियमने तु नाभिधामूलत्वम्, किन्तु व्यञ्जनामूलत्वमेव 'भद्रात्मनः'-इतिवद्भवेत्' इति यत्केनचिदुक्तं तन्नादेयम्। 'भद्रात्मनः-इत्यादेरप्येतद्भेदत्वेनेष्टत्वात्। अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः। किंच प्रथमोदाहरणे प्राकरणिकाप्राकरणिकयोरिति व्याख्यानेन, द्वितीये भवानित्यनेन, तृतीयेऽसीत्यनेन, प्रकरणस्याभिधा-नियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुध्येत। तस्माद्यथोक्तमेव न्याय्यम्।

## काव्यप्रकाशखण्डनम्

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिः परः॥** (मू. का. ३७, पू.)

**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।** (मू. का. ३८, पू.)

अनुस्वानः अनुरणनं तदाभस्तत्सदृशः संलक्ष्यः क्रमः पौर्वापर्य्यम्, अर्थाद् व्यञ्जकेन सह, यस्य एवं विधस्य व्यङ्ग्यस्य स्थितिर्यस्य स इत्यन्वयः। यथा ध्वनि-प्रतिध्वन्योः क्रमो लक्ष्यते तद्वद् वस्त्वलङ्कृति-तद्व्यञ्जकयोरि-त्यर्थः। स च शब्दशक्त्युद्भवः, अर्थशक्त्युद्भवः, उभयशक्त्युद्भवश्चेति त्रिविधः। तत्र शब्दा यत्र परिवृत्तिं न सहन्ते स शब्दशक्त्युद्भवः। तदन्योऽर्थशक्त्युद्भवः। यत्र केचन शब्दाः परिवृत्तिसहिष्णवः केचिदन्यथा, उभयो-रपि काव्यसर्वस्वत्वं च तत्र उभयशक्तिमूलः। अत्रेदमवधातव्यम्—वस्त्वलङ्कृति-ध्वन्योः क्रमः संलक्ष्यते, रसभावादिषु क्रमो न लक्ष्यते इत्यलङ्कारशास्त्रयोगिन एव प्रष्टव्या इति। तत्र—

## आदर्शः

इत्थमसंलक्ष्यक्रमव्यङ्ग्यं समाप्य लक्ष्यक्रमव्यङ्ग्यस्य प्रपञ्चमाह—अनुस्वानेति। अनुस्वानः प्रति-ध्वनिः। तस्य खलु जनकीभूतज्ञानोत्तरजायमानत्वरूपः क्रमो लक्ष्यते। तदाभं तत्तुल्यं यथा स्यात् तथा संलक्ष्यक्रमा व्यङ्ग्यस्थितिः व्यङ्ग्यप्रतीतिर्यस्य तादृशस्तु यो ध्वनिः स शब्दसामर्थ्यार्थसामर्थ्योभयसामर्थ्योत्थत्वेन त्रिविध इत्यर्थः। शक्तिरत्र सामर्थ्यम्। उत्थत्वं व्यङ्ग्यत्वम्। तादृशव्यङ्ग्यसम्बन्धाच्चात्र काव्यमपि तथोपचर्य्यते। अनेकार्थस्य शब्दस्येत्यादिना यत्र शाब्दी व्यञ्जनोक्ता तत्र शब्दप्राधान्याच्छब्दाशक्त्युत्थम्, यत्र तु एकस्मिन् व्यङ्ग्ये परस्परनिरपेक्षस्य शब्दस्यार्थस्य च सामर्थ्यं तत्रोभयशक्त्युत्थम्। शब्दस्य शक्यार्थ एव व्यञ्जनायाः स्वीकृतत्वा-च्छाब्द्यां व्यञ्जनायां शक्तिसहकृतैव व्यञ्जना बोधिकेति मन्तव्यम्। संक्षिप्त व्याचष्टे—शब्दशक्तीति। 'अनुर-णनं' प्रतिध्वनिः इयमनुस्वानपदव्याख्या।

## सुधासागरः

एवमसंलक्ष्यक्रमव्यङ्ग्यभेदं विचार्य संलक्ष्यक्रमव्यङ्ग्यभेदानाह—

शब्दशक्तिमूलेत्यादि अयमर्थः। घण्टायां हन्यमानायां मुख्यशब्दानन्तरं यथा क्षोदीयानपरोऽनुरणनरूपः शब्दः प्रतीयते तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्य स्थितिर्यत्र सः शब्दश्चार्थश्चोभयं चेति द्वन्द्वः। तेन शब्दशक्तिमूलव्यङ्ग्योऽर्थशक्तिमूलव्यङ्ग्य उभयशक्तिमूलव्यङ्ग्यश्चेति त्रिधेत्यर्थः। शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव तदर्थप्रतीतिर्न तु पर्यायान्तरेणापि।एतद्वैपरीत्यं चार्थशक्तिमूलत्वं नत्वभिधया तत्प्रतीतिरिति।

एतेनाभिधाया यत्र न नियमनं तत्रैष भेदो द्रष्टव्यः। तन्नियमने तु नाभिधामूलत्वं किन्तु व्यञ्जनामूलत्वमेव 'भद्रात्मनः' इतिवद् भवेदिति यत्केनचिदुक्तं तन्नादेयम्। 'भद्रात्मनः' इत्यादेरपि एतद्भेदत्वेनेष्टत्वात्। अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः।

किञ्च—प्रथमोदाहरणे अप्राकरणिकप्राकरणिकयोरिति व्याख्यानेन, द्वितीये भवानित्यनेन, तृतीये असीत्यनेन प्रकरणस्याभिधानियामकस्य स्पष्टत्वात्तेषामुदाहरणत्वं विरुद्ध्येत। तस्माद्यथोक्तमेव न्याय्यम्। तत्र तेषु मध्ये।

## विवरणम्

एवमलक्ष्यक्रमव्यङ्ग्यप्रकरणं परिसमाप्य लक्ष्यक्रमं प्रपञ्चयति—अनुस्वानेति। अनुस्वानः प्रतिशब्दः। अनुस्वानाभा संलक्ष्यक्रमा व्यङ्ग्यस्थितिर्यत्रेति। विग्रहः। शब्दशक्त्युत्थोऽर्थशक्त्युत्थ उभयशक्त्युश्चेति त्रैविध्यम्।

अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।। ३८ ।।

(सू. ५३) प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भावो द्विधा ।

वस्त्वेवेति, अनलंकारं वस्तुमात्रम् । आद्यो यथा

उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ।। ५४ ।।

अत्र वाक्यस्यासंबद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः ।

---

सङ्केतः

तत्र तेषु मध्ये । शब्दमूलमाह—अलङ्कार इति । प्रधानत्वेनेति । शब्दस्य मुख्यतया व्यञ्जकत्वं, अर्थस्य तु सहकारितयेति भावः । वस्त्वेवेतीति । रसस्य अलक्ष्यक्रमत्वेन पूर्वमुक्तत्वात्, वस्तुनश्च लक्ष्यक्रमत्वेन अत्र 'अभिधीयमानत्वात्, अलङ्कार एव व्यवच्छेद्यतया अवशिष्यते । अतः अनलङ्कारं इत्युक्तम् ।

उल्लास्येति । शत्रुविषये सन्तापकृत् प्रसिद्धः प्रतापः । अत्रयदा राजवर्णनप्रस्तावात् नियमितभिधाः कालादिशब्दाः एकमेवार्थं उक्त्वा सार्थकाः, अनन्तरं तु अर्थान्तरप्रतीतिः शब्दोत्थध्वननादेवेति, तदा मेघवृत्तान्तरूपवस्तुध्वनित्वम् । यदा तु ध्वन्यर्थवाच्यार्थयोः वाक्यस्य असम्बद्धार्थाभिधायकत्वं इत्यादिनयेन मिथः सङ्गतिः स्यात्, तदा अलङ्कारध्वनित्वमपि ।

अयं भावः—सादृश्यरूपेण अर्थसामर्थ्येन द्वितीया अभिधैव प्रतिप्रसूयते । ततश्च द्वितीयोऽर्थः उच्यते एव, न तु ध्वन्यते । तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्रकृतेन साकं या रूपणा सा तावत् विभात्येव । न चान्यतः सा शब्दात् इति, तत्र च ध्वननव्यापारात् अभिधानशक्तेः कस्याश्चिदनाशङ्क्यत्वाच्चेति च, तत्र प्रकृताप्रकृतवाक्यार्थयोः साम्यं, देवो देव इवेति रूपं ध्वन्यते इति । अत्र पक्षे—पदैः प्रस्तावनियतैः मेघवृत्तान्तोचिताः पदार्था उच्यन्ते । ततः प्रस्तावस्य शब्दशक्त्या वाक्योपपत्तिसहायया न्यक्कृतिः जायते । ततः मेघवृत्तान्तोचितवाक्यार्थप्रतिपत्तिः । ततश्च वाक्यार्थद्वयस्य साम्यं व्यञ्जनव्यापारात् । यदा तु—पदसमूह एव शब्दशक्त्या मेघवृत्तान्तं व्यनक्तीति वाक्यार्थः तदा वस्तुध्वनिरेव । अलङ्कारध्वनिपक्षे—श्लेषः अर्थाक्षिप्तः, न तु शब्दोपारूढः इति साम्यध्वनिरेवेति न श्लेषविषयता । यदा तु—प्रस्तावादिनियमो न स्यात्, तदा द्वयोरप्यर्थयोः वाच्यत्वे श्लेषालङ्कार एव, न तु शब्दोत्थवस्त्वलङ्कारध्वनित्वं इति ।

देवेनेति। एकत्र प्रस्तावात् त्वयेति, अन्यत्र तु इन्द्रेणेति। 'इन्द्रो वै वर्षति' इत्युक्तेः। एवं 'भद्रात्मनः' इत्यादिष्वपि ऊह्यम्।

**सङ्केतः (रुय्यकः)**

वस्त्वेवेति। नन्वलङ्कारोऽपि वस्तु, अतः कथमलंकारद्वस्तुनः पृथक्त्वेनोक्तिरित्याशङ्क्य (एवशब्दं) निष्पादयति। अलंकारमिति—अलंकारो हि विचित्रं वस्तु, इदन्तु शुद्धमेवेत्यर्थः।

उल्लास्येति—कालो वैरिणां संहर्त्ता यः करालरूपो महाम्बुवाहो महदम्बु धाराजलरूपं वहति तमुल्लास्येत्यर्थः। अम्बुवाहानां शक्रादीनामपि (चक्रादीनामपि) सम्भवात् करवालेन विशेषणं, करवालस्य त्वम्बुवाहेन रूपेण ध्वनेरुदाहरणं न स्यात्, रूपकेणैव तत्कार्यसिद्धत्वात्। एतत्तु कष्टकल्पनाप्रायमित्यन्यथा व्याख्येयम्। करवालस्य यन्महदम्बु विपुलं धाराजलं तस्य वाहं प्रवाहमुल्लास्येति द्वितीयेऽर्थे कालकरः कृष्णरश्मियों बालः प्रत्यग्रोद्गतो महाम्बुवाहो महामेघस्तमिति व्याख्येयम्। देवेन राज्ञा मेघाधिष्ठात्रा च। गर्जितं झंकारो मेघध्वनिश्च। सकल एव रणे सर्वस्मिन्नेव रणे सकल (एव) प्रतापः। निर्वापितः शमितः, धाराजलमसृग्गतः स्वच्छत्वविशेषः, नभःपाति प्रवाहसलिलम् (च)। प्रतापः शौर्य्योष्मप्रभाव आतपोष्मा च। नन्वत्र श्लेषमाहात्म्यादेव द्वितीयोऽर्थः प्रतीयते, तत्र चाभिधाव्यापार एव प्रगल्भते। तथा हि तन्त्रेण न्यायेन तादृशं शब्दद्वयमुच्चारितं यत् प्रत्येकमभिधाशक्तियोगान्निजमर्थमभिधत्ते, एक एव वा शब्द उच्चारितो यतः शब्दान्तरं प्रतिशब्दन्यायेन निःसरति यन्निःसरद्रूपं निजमर्थ प्रत्याययति। सर्वत्राभिधाशक्त्यैवार्थान्तरप्रतीतिः, इति किं तत्र व्यञ्जनव्यापाराभ्युपगमनेन? उच्यते। इह यदेव वर्णनार्हं तदेवाभिधेयं, अवर्णनार्हस्याभिधेयत्वेऽतिप्रसङ्गात्। वर्णनार्हञ्च यत् प्राकरणिकमप्राकरणिकमपि वा यदुपमानत्वादिना प्रयोजनवत्। एवञ्च प्रकृते विषयेऽर्थान्तरं न प्राकरणिकम्, नाप्युपमानत्वादिनोपयोगवदुपनिबद्धत्वम्। ततश्चाभिधेयत्वाभावाद् व्यापारान्तरविषयत्वेनोपगन्तव्यम्। एवमपि प्रकृतत्वाभावात् प्रकारान्तरोपयोगविरहाच्च व्यापारान्तरविषयत्वमपि कथमिति चेत्, एवं तर्हि यथोपयोगं...... तथा प्रतीयते। सा चोपमानत्वेनेति, तेन सह प्रकृतस्यौपम्यं कल्पयितव्यमित्युपमाऽलंकारोऽत्र व्यंजनाव्यापारविषयो नार्थान्तरमात्रम्, अन्यथा असम्बद्धार्थाभिधायिता स्यात्। तदाह—अत्र वाक्यस्येति।

एवञ्च यथाऽविवक्षितवाच्ये ध्वनौ यत्र धर्मा लक्ष्यन्ते तथाऽत्रौपम्येऽपि व्यंग्य उपमानमपि व्यंग्यतया प्रतिपाद्यते, तत्संलग्नत्वादौपम्यस्य, तस्यचाप्रकृतत्वेनानुक्तत्वात्। यद्येवमसम्बद्धार्थत्वभयादुपमा व्यज्यते तर्हि विरोधव्यतिरेकाद्यलंकारान्तरं कथं व्यंगं स्यात्, न हि तेनासम्बद्धार्थत्वं परिह्रियते। नैतत्। यत्र वस्तुमात्ररूपस्यार्थान्तरप्रतीतिस्तत्र तस्य वाच्यं प्रत्यसम्बद्धत्वभयादौपम्याख्यः सम्बन्धः कल्प्यते। यत्र तु विरोधादेरलंकारस्य प्रतीतिस्तत्र तस्यालंकारत्वादेव वैचित्र्यात्मकत्वाद्वैचित्र्यस्य च विचित्रवस्तुसंलग्नत्वाद्विचित्रेणालंकार्येण वाच्यभूतेनार्थेनाव्यभिचरित एव सम्बन्धः। एवञ्चात्रासम्बद्धार्थत्वसम्भावना नास्ति। केवलमत्रालंकारस्य प्रतीयमानत्वादात्मत्वेऽपि ब्राह्मणश्रमणन्यायेनाज्ञातपूर्वगत्याऽलंकारत्वम्। एवं तर्हि यत्र शब्दशक्त्या वस्तुमात्रं प्रतीयते यद्वस्त्वेवेति लक्षितं तत्र कथमुपमामन्तरेणासम्बद्धार्थपरिहारः? अथोपमाया अत्राङ्गीकारः कथं तर्हि वस्तुमात्रं व्यंग्यं स्यात्? सत्यं यत्र शब्दशक्त्या वस्त्वन्तरस्य प्रतीतिस्तत्र यदि नासम्बद्धार्थत्वेनोपम्यं नालंकारान्तरं तर्हि वाच्यप्रतीयमानयोरन्यत् किञ्चित् ज्ञातेयं अभ्युपगन्तव्यम्, अन्यथाऽसम्बद्धार्थस्य परिहारो न स्यात्। ज्ञातेयञ्च चिन्त्यमानं

व्यग्यं प्रति वाच्यस्यार्थस्यामामर्थ्यविशेषे पर्यवस्यति । स च वक्त्रौचित्यादिरूपः । एवं शब्दशक्त्या वाच्यगतेन च सामर्थ्यविशेषणार्थान्तरप्रतीतौ कार्यायामुभयशक्तिमूलत्वमेवात्र पर्यवस्यति, न केवलं शब्दशक्तिमूलत्वम् । अत एव ध्वनिकृता 'आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते' इत्यादिकारिकयाऽलंकारध्वनिरेव शब्दशक्तिमूलो लक्षितः, न वस्तुमात्रध्वनिः । उभयशक्तिमूलस्तु 'शब्दार्थशक्त्याक्षिप्तोऽपी' त्येतत्कारिकावृत्तिग्रन्थे प्रकाशितः । अयन्तु ग्रन्थकार उभयशक्तिमूले भ्रान्तः शब्दशक्तिमूलं वस्तुध्वनिमभ्युपगतवान् । 'पंथिअ ण एत्थे' त्युदाहरणद्वये क्रमेण वक्त्रौचित्यं प्रतिपाद्यौचित्यञ्चाश्रित्य शब्दशक्त्याऽर्थान्तरप्रतीतिरित्युभयशक्तिमूलत्वात् केवलशब्दशक्तिमूलत्वं चिन्त्यम् । यत्तु ध्वनिकृता 'दृष्ट्या केशवे' त्यादिशब्दशक्तिमूले प्रत्युदाहरणत्वेनोदाहृत्योभयशक्तिमूल उदाहृतं तत् 'यो ह्युभयोर्भवति लभतेऽसावन्यतरतोऽपि व्यपदेश' मिति न्यायेन मुख्यतयोभयशक्तिमूलत्वेऽप्यन्तरव्यपदेशेन शब्दशक्तिमूले प्रकाशनात्। एतद्ग्रन्थकृता तूभयशक्तिमूलोऽन्यादृशः प्रदर्शित इति प्रकृते शब्दशक्तित्वमुक्तमिति चिन्त्यतया प्रतिपादितम् ।

## बालचित्तानुरञ्जनी

अलङ्कारव्यङ्ग्यमुदाहरति उल्लास्येति । राजस्तुतिः । येन देवेन राज्ञा जवेन गर्जितेन सिंहनादेन कालकरवालस्य कृष्णखड्गस्य महाम्बुधाराजलं तस्य वाहः प्रवृत्तिः तमुल्लास्य रणे युद्धे, धाराभिः त्रिजगति प्रज्वलितरिपुणां प्रतापः निवारितः । देवादिशब्दानां परिवृत्त्यसहिष्णत्वात् अन्योऽर्थः कालः कृष्णः करः कान्तिर्यस्य स चासौ वालो बालश्च, वबयोरभेदात् देवेन इन्द्रेण, रणध्वनिः धाराजलापेक्षया रिपूणां तेजसां रणे शब्दे सति महानातप इति । तेजोविषये जनकोलाहले सतीत्यर्थः । प्रतापः सन्तापः । अत्रोपमालङ्कारस्य व्यङ्ग्यत्वं प्रतिपादयितुमाह अत्रेति । राजवर्णनं प्रस्तुतमिति प्रथमोऽर्थः प्राकरणिकः । द्वितीयोऽप्राकरणिकः । अन्योरुपमानोपमेयभावः कल्पनीयः । अन्यथा द्वितीयवाक्यस्यासंबद्धार्थाभिधायकत्वं नाम दोषः स्यात् । अतोऽत्रोपमालङ्कारो व्यङ्ग्य इत्यर्थः । ननु असंबद्धार्थत्वादेव द्वितीयोऽर्थः परत्यज्य तदौपम्यं च न कल्पनीयमिति केचन द्वितीयार्थप्रत्यायनार्थमेव विना तारदंशपदानां[?] प्रयोगात् अस्य व्यङ्ग्यस्य शब्दान्वयव्यतिरेकाभ्यां शब्दशक्तिमूलत्वं ज्ञातव्यम् ।

## काव्यादर्शः

तत्रेति । त्रिषु । यद्यपि शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्यापि सहकारिता अस्त्येव, अन्यथा अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात् । शब्दशक्तेस्तु केवलं व्यञ्जकत्वे मुख्यत्वमित्याह— प्रधानत्वेनेति । अनलंकारमिति । अलंकाररूपाभावेनोपलक्षितं वस्तुमात्रम् । मात्रग्रहणेन हि रूपान्तरं निराकृतम् । यस्तु स्वप्नेऽपि न स्वशब्दवाच्यो, न च लौकिकः, किं तु शब्दसमर्प्यमाणहृदयसंवादिविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणाव्यापाररसनीयो रसः काव्यव्यापारैकगोचरो रसध्वनिरेव । 'उल्लास्ये'ति । शत्रुविषये संतापकारिणो प्रसिद्धिः प्रतापः । अत्र गर्जितादयः शब्दाः प्रकरणान्नियन्त्रिताभिधानशक्तय एकमेवार्थमभिधाय कृतकृत्या एव । तदनन्तरं त्वर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात् । तत्र केचिद् मन्यन्ते 'यत एतेषां शब्दानां पूर्वपर्थान्तरं चित्रं दृष्टं, ततस्तथाविधेऽर्थान्तरेऽदृष्टतदभिधाशक्तेरेव प्रतिपत्तुर्नियन्त्रिताभिधाशक्तिकेभ्य एव तेभ्यः प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं च व्यङ्ग्यत्वं च' इत्यविरुद्धम् । अन्ये तु 'अर्थसामर्थ्येन सादृश्यात्मकेन द्वितीयाऽभिधैव प्रतिप्रस्तूयते, ततश्च द्वितीयोऽर्थोऽभिधीयत एव, न

ध्वन्यते । तदनन्तरं तु तस्य द्वितीयस्यार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा सा तावद् भात्येव । न चान्यतः । शब्दादिति सा ध्वननव्यापारात् । तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वादिति प्रकृताप्रकृतयोर्वाक्यार्थयोः साम्यं ध्वन्यत इत्यलंकारध्वनिरित्याह—वाक्यस्यासंबद्धार्थाभिधायकत्वमिति । यथा वा 'गावो वः पाव[मा]ना[:] परमपरिमितां प्रीति मुत्पादयन्तु' इत्यादौ गावो रश्मयः सुरभय इवेति साम्यं ध्वन्यते । सुरभिवृत्तान्तस्तूच्यत एव । पदैर्हि प्रकरणनियन्त्रितैः पदार्था रश्मिसमुचिता उच्यन्ते । ततः प्रकरणस्य शब्दशक्त्या वाक्योपपत्तिसहायया न्यक्करणं जायते, तेन सुरभिवृत्तान्तोचितवाक्यार्थप्रतिपत्तिस्ततो द्वयोर्वाक्यार्थयोरुपमानोपमेयभावो ध्वननव्यापारात् । यदा तु पदसमूह एव शब्दशक्त्या सुरभिवृत्तान्तं ध्वनतीति पक्षास्तदा वस्तुध्वनिरेव ।

ननु, यदि शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स ध्वनेर्विषयस्तर्हि श्लेषस्य विषयो नास्ति । नैवम्, यत्र सामर्थ्याक्षिप्त एवालंकारो न वस्तुमात्रं शब्दशक्त्या प्रकाशते स शब्दशक्त्युद्भवो ध्वनिः, वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः । अत्र चार्थाक्षिप्तः श्लेषो न शब्दोपारूढ इत्यनुस्वानोपमव्यङ्ग्ये ध्वनौ न श्लेषविषयत्वम् ।

## विवेकः

तत्र शब्दस्य शक्तिर्द्वितीयोऽभिधाव्यापारः । 'तथाहि प्रकृतोक्तापेक्षया यो द्वितीयोक्तो (द्वितीय उक्तो) यथा उल्लास्येत्यादौ मेघलक्षणः, स प्रदेशान्तरे वर्णयितुं प्रस्तुतत्वादभिधेय एव । तत्र च शब्दस्याभिधाव्यापारस्तद्रूपा या शब्दस्य शक्तिः सा व्यङ्ग्यस्यार्थस्य मूलम्, तां विना तस्यानुष्ठानात् । (ल्लासात्), [अतश्च साऽभिधाशक्तिरेव व्यञ्जनशक्तितया प्रतिपादिता]' (रु. सं. २६ पृः) । तदयमर्थः । यत्र प्रकरणादिनियन्त्रिताभिधाशक्तिकानां शब्दानामेकार्थकथनानन्तरं स्थानान्तरनिरूपिताभिधायकत्वेनाभिमतार्थान्तरस्मरणकारणाद्व्यञ्जकत्वं तत्र द्वितीयाभिधाशक्तिर्मूलम् । अतस्तत्र शब्दशक्तिमूलता । येषाञ्च शब्दानां स्थानान्तरेऽप्याह (ऽप्यर्थे) व्यज्यमानार्थान्तराभिधानसम्बन्धो नाधिगतचरस्तत्रार्थशक्तिमूलता, द्वाभ्याञ्चोभयशक्तिमूलतेति । वस्त्वेवेति—'नन्वलङ्कारोऽपि नावस्तु, तत् कथमलङ्काराद्वस्तुनः पृथक्त्वेनोक्तिरित्याशङ्क्य 'एव' शब्दं निष्पादयति अनलङ्कारमिति । अलङ्कारो हि विचित्रं वस्तु इदन्तु शुद्धमेवेत्यर्थः । उल्लास्येति—कालो वैरिणां संहर्त्ता यः करवालरूपो महाम्बुबाहो महदम्बुधाराजलरूपं वहति तमुल्लास्येत्यर्थः। 'महाम्बुवाहानां शक्रादीनामपि सम्भवात् करवालेन विशेषणं, करवालस्य त्वम्बुवाहेन रूपणे रूपकेणैव तत्कार्यस्य सिद्धत्वान्नोपमाध्वनेरिदमुदाहरणमिति यत् कैश्चिदुक्तं तत्तु (रु. सं. २७) श्लोकार्थमपरामृश्य । तथाहि करवाले यन्महदम्बु विपुलं धाराजलं तस्य वाहं प्रवाहमुल्लास्येति द्वितीयेऽर्थे कालकरः कृष्णरश्मिर्यो बालः प्रत्यग्राद्गतो महाम्बुवाहो महामेघस्तमिति व्याख्येयम्' । देवेन राज्ञा मेघाधिष्ठात्रा च जरठेनोर्जितं तेजोमु(यु)क्तं गर्जितं झङ्कारो मेघध्वनिश्च । सकल एव रणे सर्वस्मिन्नेव रणे सकलः प्रतापो निर्वापितः शमितः, धाराजलमसृग्गतः स्वच्छत्वविशेषः, नभःपाति प्रवाहसलिलं [च] । प्रतापः शौर्योष्मप्रभाव आतपोष्मा च । नन्वेवं श्लेषमाहात्म्यादेव द्वितीयोऽर्थः प्रतीयते, तत्र चाभिधाव्यापार एव प्रगल्भते । तथाहि तन्त्रेण न्यायेन तादृशं शब्दद्वयमुच्चारितं सत् प्रत्येकमभिधाशक्तियोगान्निजमर्थमभिधत्ते, एक एव वा शब्द उच्चारितो यतः शब्दान्तरं प्रतिशब्दन्यायेन निःसरति यन्निःसरतिरू(सरद्रू)षं निजमर्थं प्रत्याययतीति सर्वत्राभिधाशक्त्यैवार्थान्तरप्रतीतिरिति किं तत्र व्यञ्जन व्यापाराभ्युपगमेन ? उच्यते । इह यदेव वर्णनार्हं तदेवाभिधेयम्, अवर्णनार्हस्याभिधेयत्वेऽतिप्रसङ्गात् । वर्णनार्हञ्च यत् प्राकरणिकमप्राकरणिकमपि वा यदुपमानत्वादिना प्रयोजनवत् । एवञ्च प्रकृते

विषयेऽर्थान्तरं न प्राकरणिकं, नाप्युपमानत्वादिनोपयोगवत्परिबद्धम् (वदुपनिबद्धम्), ततश्चाभिधेयत्वाभावाद्व्या-पारान्तरविषयत्वेनोपगन्तव्यम् । एवमपि प्रकृतत्वाभावात् प्रकारान्तरोपयोगविरहाच्च शब्दशक्त्या प्रकाशते (ध्व. आ. २।२२) इत्यादिकारिकयाऽलङ्कारध्वनिरेव शब्दशक्तिमूलोऽभ्युपगतो न वस्तुध्वनिः उभयशक्तिमूलस्तु 'शब्दार्थशक्त्याक्षिप्तोऽपी' त्येतत् (ध्व. आ. २।२४) कारिकावृत्तिग्रन्थे प्रकाशितः । 'एवञ्च पंथिअण एत्थ' इत्याद्युदाहरणद्वये क्रमेण वक्त्रौचित्यं प्रतिपाद्यौचित्यञ्चाश्रित्य शब्दशक्त्याऽर्थान्तरप्रतीतिरित्युभयशक्तिमूल-त्वात् केवलशब्दशक्तिमूलत्वमसमीचीनमिति ध्वनिकृतोऽभिप्रायः । यत्तु तेनैव—दृष्ट्या केशव गोपरागहृतया किञ्चिन्न दृष्टं मया तेनैव स्खलिताऽस्मि नाथ पतितां किं नाम नालम्बसे । एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥ (ध्व. आ. २।२२ वृः) इति शब्दशक्तिमूलप्रत्युदाहरणत्वेनोदाहृत्योभयशक्तिमूलत्वेनोदाहृतम् (ध्व. २।२४ वृः) न तदयुक्तम् 'यो ह्युभयोर्भवति लभतेऽसावन्यतरतोऽपि व्यपदेश'मिति न्यायेन मुख्यतयोभयशक्तिमूलत्वेऽप्यन्तरव्यपदेशेन शब्दशक्तिमूलत्वप्रकाशनात् । एतद्ग्रन्थकृता तूभयशक्तिमूलोऽन्यादृशः प्रदर्शितः' (रु. सं. ३०) । तत्र चास्याभिप्रा-यमुदाहरणप्रसङ्गेन दर्शयिष्यतीति प्रकृते मुख्यमेव शब्दशक्तिमूलत्वं युक्तमिति ।

## दीपिका

अथ विकल्पे । प्रधानत्वेनेति-काकनयनन्यायेन—शब्दात् अवभासत इति पदाभ्यां सम्बध्यते । प्रधान-त्वेनोत्कटतया शब्दाच्छब्दशक्तेरवभासते, अर्थस्य साचिव्यमात्रम् । प्रधानत्वेनावभासत इति गुणीभावनिरासः । शब्दशक्त्युद्भवं व्यङ्ग्यं विद्यत अत्र काव्य इति अर्शआदित्वादच् । एवमुत्तरत्रापि । मात्रमित्येवार्थः । तद्व्यवच्छे-द्यकथनमनलङ्कारमिति । अलङ्कृतिरलङ्कार इति भावे घञ् । न विद्यतेऽलङ्कारोऽलङ्कारकत्वमस्येत्यनलङ्कारम् ।

उल्लास्येति-कालः शत्रुसंहर्त्ता करवालः खड्गः स एव महाम्बु धाराजलं वहतीति महाम्बुवाहः करवाल एव महाम्बुनो धाराजलस्य वाहः वहनं प्रसरणं कम्फिण-नृपतिपक्षे पक्षान्तरे तु कालकरः कृष्णकान्तिः (कृष्णरश्मिर्यो) बालः प्रत्यग्र इति श्रीधरः कष्टं सृष्टवान् ।

वस्तुतस्तु रूपक उपमासमास एव । न च स्फुटीभावान्नेदं ध्वनिः स्यादिति वाच्यं, यत्र हि अस्फुटसादृ-श्यभागिनि रूपणं वाच्यं तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यादिति तस्याक्षेपः स्फुटः-यथा जलदभुजगजं विषमिति । खड्गमेघयोस्तु सादृश्यं व्यक्ततया न परसाचिव्यमपेक्षते, ततश्च स्वमात्रविश्रान्तमिति न रूपणान्तरा-क्षेपः । देवः प्रभुर्मेघाधिकारी च । धाराजलं धारायाः स्वच्छकान्तिःधाराऽऽकारं जलञ्च । अत्रेति तन्त्रन्यायेन तादृशमुच्चारणं, पदार्थद्वयाभिधायकशब्दप्रतीतेः । प्रतिप्रसवन्यायेन वा कल्पितस्य द्वितीयशब्दस्य द्विती-यार्थोऽभिधेयः । तस्य चासम्बन्धभीत्या उपमाऽऽख्यः सम्बन्धः कल्प्यते । स एव मुख्यतो व्यङ्ग्यः । अर्थान्तरे तु ताद्विशिष्ट्या व्यङ्ग्यताव्यवहारमात्रमिति केचित् ।

अत्र व्यङ्ग्योपमावैशिष्ट्येन व्यङ्ग्यव्यवहारः प्रकृतेऽपि न दण्डवारितः । असम्बन्धभीरुणा चोपमैव कल्पनीयेति किमियं राजाज्ञा, उपमैव तत्र प्रतिभासत इति, किमिति तर्हि कल्पना, उपमैव तत्रास्तीति वरम् यथा चार्थान्तरस्य नाभिधेयत्वं तथोक्तमेवास्माभिः ।

तस्माद्व्यङ्ग्य एव द्वितीयोऽर्थः—अत्र च शब्दशक्तिरेव। वाक्यस्येति—तदुत्थापितेऽलङ्कारेऽपि तस्या एव प्राधान्यं नृपतिपर्यायाच्च[देवशब्दात्] सादृश्यमात्रं प्रतीयते, नाभेद इति न रूपकध्वनिव्यवहारः। वृत्तिस्तु रूपकध्वन्यङ्गीकारेऽसम्बद्धः प्रकृतेऽसङ्गतो योऽर्थः अभेदावगमलक्षणः तदभिधायकत्वं तद्बोधकत्वमतिप्रसञ्जकं मा प्रसाङ्क्षीत्. नात्र प्रसञ्जनीयं भवतीति प्राकरणिकाप्राकरणिकयोर्नृपतिमहेन्द्रयोरुपमानोपमेयभावः सादृश्यमात्ररूपः कल्पनीयो निर्णयनीय इति। अत्रेति काव्ये उपमालङ्कारो व्यवहर्त्तव्य इति शेषः।

## दर्पणः

उल्लास्येति। अत्र किं रणनृपतिर्ग्रथनीयः तेनाभिधेयोऽयमर्थः। येन देवेन राज्ञा कालो विप्रसंहर्ता करवालः खड्गः स एव महदम्बु धाराजलं वहतीति महाम्बुवाहः तमुल्लास्येत्यादिरिति केचित् व्याचक्षते। अन्ये तु करवाल एव महाम्बुवाहो मेघ इति रूपकसमासं स्वीकुर्वन्ति। नन्वेवमेकदेशविवर्तिरूपकमिति द्वितीयार्थस्य स्फुटाभावात् कथमिहोपमाध्वनिरिति चेन्न, तथाहि यत्र 'जलदभुजगजं विषम्' इत्यादौ गरलत्वारोपणं विना जलदभुजगयोः सादृश्यमस्फुटम् तत्रैव रूपकाङ्कारो न्याय्य इति। इह तु खड्गमेवयोः सादृश्यं व्यक्ततया परसाचिव्यमपेक्ष्य स्वमात्रविश्रान्तमिति न रूपान्तरापेक्षम्। यश्चात्र कालकरं कृष्णरश्मिं बालमभिनवमम्बुवाहमुल्लास्य देवेन मेघाधिकारिणा धाराकारैर्जलैरित्यादि द्वितीयोऽर्थः स्फुरति। तस्याप्तु भवसिद्धस्याशक्यापल्लवस्याभिधया नियन्त्रणाद्व्यञ्जनयैव बोद्धुमुचितस्यासंबद्धत्वं मा प्रसाङ्क्षीदितिफणिमेवाधिकारिणोरुपमानोपमेयभावः कल्प्यत इति भावः।

## साहित्यचूडामणिः

एवकारव्यावर्त्यमाह—अनलङ्कारमिति। उल्लास्येति। अत्र देवेनेति सुगृहीतनाम्ना श्रवणपरुषप्रचुरक्ष्वेलितेन येन रणे कालस्य श्यामलस्य साक्षादन्तकभूतस्य वा करवालस्य खड्गस्य योऽयं महानम्बुवाहः अम्बु वहति पीतपूर्वमिति व्युत्पत्त्या धाराप्रदेशः तमुल्लास्य खड्गस्य नैशित्यशालिनं धाराप्रदेशमवगूर्य धाराजलैरिति कार्ये कारणोपचारः अश्रिदेशवर्तिभिर्नैशित्यादिभिर्धर्मैः शत्रूणां प्रतापः प्रणाशित इत्यभिधया प्रकाश्यते। यः पुनरत्र देवेन गम्भीरविकटस्तनितेन कालकरं श्यामलकान्तिम् अथ च बालं प्रवृद्धयुन्मुखं महाम्बुवाहं पुष्कलावर्तकादि मेघमुद्भाव्य त्रिजगति ज्वलितः प्रतापो दावानलादिसन्तापः प्रध्वंसित इति पर्जन्यविषयोऽर्थः, तत्र प्रकरणवर्तिनीमभिधामवलम्ब्य व्यञ्जनं प्रवर्तत इति व्याख्येयम्। अन्यथा अम्बुवाह इव करवाल इति व्याघ्रादिसमासेन साधर्म्यसिद्धेरुपमानोपमेयभावस्य वाचनिकत्वं स्यात्।

ननु वर्णनीयवृत्तान्ते वाच्ये पर्जन्यवृत्तान्तस्मरणमिति वस्तुमात्रध्वनिरयमस्तु, कथमलङ्कारध्वनिरित्याह—अत्रेति। औपम्यप्रतीतिमपहाय पर्जन्यवृत्तान्तमात्रे द्वितीयस्य वाक्यस्य पूर्ववाक्यपर्यालोचनायामघटितार्थाभिधायित्वं प्रसज्येत। नहि कश्चिदुन्मत्तो राजा खड्गविद्याविदग्ध इति प्रस्तावे पर्जन्यो ववर्षेति ब्रूयात्। तदनयोरप्राकरणिकप्राकरणिकयोः पर्जन्यवर्णनीययोरुपमानोपमेयभावः कल्पनीयः। ततश्च यथा पर्जन्येन मेघमुद्भाव्य दावपावकादिसन्तापः परिह्रियते एवं वर्णनीयेन करवालमुत्कृष्य शत्रुप्रताप इत्युपमालङ्कारो व्यङ्ग्यः। अन्यथा वाक्यवर्तिनी तदुभयसाधारणी गुम्फना निष्फला स्यात्। ननु साधारणी शब्दरचनेति श्लेषालङ्कार एवास्तु यत्राभिधैव व्यापारः कृतं व्यञ्जनाव्यापारेणेति न। न खलु रणे रिपूणामित्यत्र श्लेषशङ्का। अन्यत्रापि यत्र यस्य

वर्णनौचित्यं स एव तत्राभिधेयः, नान्यः । न च राजवर्णने पर्जन्यवर्णनस्यौचित्यम् । नन्वस्ति तदुपमाद्वारेणेति चेत्, न तर्हि श्लेषः, औपम्यव्यतिरिक्तो हि विषयः श्लेषस्य । औपम्यं तु ध्वनिरेव । यदाह—

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रतीयते ।**
**यस्मिन्नुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥** [ध्व. २.२१]

इति । भविष्यति चैतदित्यलमतिक्षोदेन ।

## सम्प्रदायप्रकाशिनी

अलङ्कारोऽथेति ।

वस्त्वेवेत्येवकारमपोह्य दर्शयति—अनलङ्कारमिति । अलङ्कारो विच्छित्तिः । इत्येव खलु वस्त्वलङ्कारयोर्विभागकक्ष्या—यदा जातिगुणादिकोऽर्थो वैचित्र्यविरहाल्लौकिकभावेन व्यवस्थितस्तदा वस्तुमात्रमुच्यते । तदेव सविच्छित्तिकमलङ्कार इति ।

उल्लास्येति । अत्र विशेषणानां श्लेषमाहात्म्यात् प्राकरणिकाप्राकरणिकोभयार्थप्रतीतिः ।

अत्रालङ्कारस्य व्यङ्ग्यतां सोपपत्तिकं दर्शयति—अत्र वाक्यस्येति । अप्राकरणिकार्थस्य प्राकरणिकार्थानभिसम्बन्धे हि वाक्यस्यासङ्गतार्थता प्रसजेत् तथा मा प्रसाङ्क्षीदित्युपमानोपमेयभावो यस्मादवश्यकल्प्यस्तस्मादुपमालङ्कारो व्यङ्ग्य इत्यर्थः ।

## मधुमती

शब्दशक्तिमूलं विभजते—तत्रेति । प्रधानत्वेन—उपसर्जनीकृतशब्दार्थत्वेन । अन्यथा यथाश्रुते—वस्त्वलङ्कारयोः यत्र अभिधया प्रतिपादनं, तत्र अतिव्याप्तेः । ननु अलङ्कारोऽपि वस्त्वेव, वस्तुत्वस्य केवलान्वयित्वात्, अत आह—अनलङ्कृतमिति । तथाच—चित्राचित्ररूपवस्तुभेदात् भेदः इत्यर्थः ।

उल्लास्येति । कालकरवाले महदम्बुधारारूपं जलं, तस्य वाहं प्रवाहं उल्लास्य, देवेन राज्ञा जरठोर्जितगर्जितेन तेजोयुक्तसिंहनादेन सकले एव रणे सर्वस्मिन्नेव सङ्ग्रामे रिपूणां ज्वलितः प्रतापः शम्मितः इत्येकः । कालकरः श्यामरुचिः बालः नवोदितः महाम्बुवाहः महामेघः, तं उल्लास्य देवेन इन्द्रेण ऊर्जितगर्जितेन रिपूणां—जलस्य शीततया उष्णः आतप एव तस्य रिपुः, तेषाम् । रणे—शब्दे—'महानयं आतपः' इति जनकोलाहले सति । सः प्रतापः प्रकृष्टतापः शमितः इति द्वितीयोऽर्थः । कालसमः वैरिसंहर्ता यः करवालरूपः महाम्बुवाह, तं उल्लास्य इत्यादि तु नार्थः । तथासति पृथक् अर्थद्वयाप्रतीत्या, रूपकेणैव प्रकृतार्थसिद्धेः, उपमोदाहरणं न स्यात् । असम्बद्धेति । अविवक्षितार्थपरत्वमित्यर्थः ।

इदमत्राकूतम्—राजरूपार्थे तात्पर्यात् अभिधानियमनेन, महेन्द्ररूपार्थस्य व्यञ्जनया प्रतीतिः, नृपस्य तु अभिधयेति, अनयोः स्वातन्त्र्येण प्रतीतौ वाक्यभेदापत्तिभयेन अङ्गाङ्गिभावे कल्पनीये, रूपकपक्षे 'राजैव महेन्द्रः' इत्यर्थप्राप्तौ, अविवक्षितमहेन्द्रप्राधान्यात् तद्रतेरेव व्यङ्ग्यतापत्तौ असम्बद्धार्थाभिधायकत्वप्रसङ्गः । उपमाकल्पने तु 'महेन्द्र इव राजा' इत्यर्थप्राप्तौ विवक्षितराजगोचरा रतिः प्रतीयते इति ।

नन्वत्र श्लेषसत्त्वात् नोपमाकल्पनम्, अत आह—प्राकरणिकेति । उभयतात्पर्यग्रह एव श्लेषसम्भवात्, अत्र च तदभावात् न श्लेष: इति भाव: ।

## विस्तारिका

विभजत अलङ्कारेत्यादिना । अथ विकल्पे । प्रधानत्वेनेति, अतथात्वे गुणीभूतव्यङ्ग्यत्वात् । शब्दशक्त्युद्भवत्वेनैव शब्दप्राधान्यलब्धे: प्रधानत्वेनेति शब्देऽपि सम्बध्यत इति निरस्तम् ।

नन्वलङ्कारोऽपि वस्तु, तत् कथं भेद इत्याह—अनलङ्कारमित्यादि ।

उल्लास्येत्यादि । उल्लास्यानि पातनायोद्यम्य ऊर्ध्वं प्रकाश्य च महाम्बुवाहमिव करवालं खड्गम्, तमिव तञ्च देवो नृपति: संघाधिकारी च । जरठं कठिनं मध्यवर्ति च । ऊर्जितं बलवद्दूरप्रसारि च । गर्जितं सिंहनादो मेघनादिकञ्च, निर्वापितो विलोपितो विध्मापितश्च । सकल इति रणविशेषणम् । जलैरिव धाराभिस्तदाकारैर्जलैश्च ज्वलित: प्रकाशमापन्न ऊर्ध्वशिखश्च प्रतापो वीरत्वख्यातिराग्नेयास्त्रं ज्वाला च ।

अत्र दर्शितन्यायेन द्वितीयार्थे व्यञ्जनैव, तस्याश्चोपमाख्यसम्बन्धेऽपि प्रसरणम्, तावतैव पर्यवसानात् ।

नन्वेवमर्थयोरसम्बन्धे वाक्यभेद: स्यादित्याह—वाक्यस्येत्यादि । व्यङ्ग्येन सहासम्बद्धो य: प्रकृतो नृपतिस्तदभिधायकत्वमभिधया तद्बोधकत्वम्, मा प्रसाङ्क्षीत् प्रसक्तं मा भवत्विति हेतोरेप्राकरणिकप्राकरणिकयोर्महेन्द्रनृपत्योरुपमानोपमेयभाव:, सादृश्यं सम्बन्ध: कल्पनीय: ।

इदं वाक्यं स्वप्रतिपाद्यार्थद्वयसम्बन्धबोधकमर्थद्वयबोधकत्वे सत्येकत्वात् । स च सम्बन्ध उपमाविवक्षितसम्बन्धान्तराभावे सति सम्बन्धत्वादिति प्रमाणाद्वयगम्य इत्युपमेत्यादीत्यर्थापत्तिगम्यमुपमासादृश्यमलङ्कार: सन् व्यङ्ग्य: ।

अयमर्थ:—अनुमानादिगम्याया उपमाया नास्वादप्रकर्षकत्वमलङ्कारत्वम्, अनुपलब्धिबाधात्; किन्तु शब्दबोध्याया एव तस्यास्तत्त्वम्, शब्देन व्यञ्जनयैव प्रतिपाद्य इति ग्रन्थ: सङ्गमनीय: ।

केचित्तु—'उपमानोपमेयभाव: सादृश्यरूप: कल्पनीयो निर्णयनीयो न इत्यत्र काव्य उपमालङ्कारो व्यङ्ग्य इति व्यवहर्तव्य:' इति कष्टं कल्पयन्ति, तन्न; यथाश्रुतेनैवोपपत्तौ नानालक्षणाकल्पनानौचित्यात् । रूपके व्यङ्ग्ये तु वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यता स्यात् । तथाहि-नृपे महेन्द्रत्वारोपं विना खड्गे मेघत्वारोपो न पर्यवस्यति, साधर्म्यान्तरस्याविवक्षितत्वात् । तथा च वाच्यसिद्ध्यङ्गताप्रसङ्ग: । न च कृष्णत्वं साधर्म्यमादाय पर्यवसितस्य मेघत्वारोपस्यारोपान्तरनिराकाङ्क्षता जलदभुजगजनितेत्यादावपि प्रसङ्ग: स्यात् । जलदस्य गरलत्वारोपं विना कृष्णत्वेनैव जलदे भुजगत्वारोपसम्भवात् । कवितात्पर्यगम्यस्य मानार्थपदोपन्यासस्य द्वयो: समत्वात्, अन्यथा परम्परितरूपके वैरिकमलासङ्कोचदीप्तद्युत इत्यत्र तेजस्वित्वेन नृपतौ सूर्यत्वारोपसम्भवे कमलाया: सङ्कोचे कमलस्फुटत्वस्य यत्रारोपस्तदपेक्षा न स्यात्, आरोप्ययोर्हेतुहेतुमत्त्व एव परम्परितत्वादिति ।

न चैवमुपमायामपि तत्प्रसङ्ग:, खड्गमेघसादृश्ये नृपतीन्द्रसादृश्यस्याप्रयोजकत्वात् । सत्यपीन्द्रसादृश्यभाने खड्गजलदसादृश्यस्य समानधर्मसाकाङ्क्षत्वादिन्द्रसदृशोल्लास्यत्वस्याम्बुवाहावृत्ते:, न तु समानधर्मत्वमित्युपमाध्वनिरेवायमिति सर्वमवदातम् ।

**सारबोधिनी**

प्रधानत्वेनेति । तेन शब्दस्य यत्र प्राधान्यं अर्थस्यापि तत्र साचिव्यमिति । यद्वा प्रधानत्वेनेत्यनेन गुणीभूतव्यङ्ग्यनिरासः । नन्वलङ्कारोऽपि वस्तु, तत् कथं भेद इत्यत आह अनलङ्कारमिति ।

उल्लास्येति । अत्र द्वितीयोऽर्थः शक्त्योपस्थाप्यत इति केचित् । वस्तुतो व्यञ्जनयैवोपस्थाप्यते ।

ननु तर्हि 'भद्रात्मन' इत्यादिरप्यस्योदाहरणं स्यात्, इष्टापत्तेः । वाच्यपक्षे उल्लास्य तीक्ष्णीकृत्य उद्यम्य वा कालो वैरिसंहर्ता । मह उत्सव एवाम्बु तस्य वाहः । ननु महाम्बुवाहमिव करवालं तमिव तमित्यर्थः किं न क्रियत इति चेन्न, तथा सति शब्दस्य परिवृत्तिसहिष्णुत्वे शब्दशक्तिमूलत्वानापत्तेः । देवेन राज्ञा धाराजलैः खड्गधाराकान्तिभिः, अतएव लोके रत्नादौ पानीयत्वव्यवहारः । जरठं प्रौढं गम्भीरं वा उर्जितं बलपूर्वं गर्जितं सिंहनादः । सकल एव रणे सर्वस्मिन्नेव युद्धे यद्वा सकल इति प्रतापविशेषणम् । व्यङ्ग्यपक्षे कालकरः श्यामरश्मिः । वालो नूतनः महानंबुवाहो महामेघः । देवेन इन्द्रेण रणः शब्दः अर्थात् कुलिशाघातात् । रिपूणाम् अर्थाज्जलशत्रूणाम् तेजसां प्रकृष्टस्तापो निर्वापितो विध्मापितः । धाराजलैरविच्छिन्नपानीयैरित्यर्थः ।

नन्वेवमर्थयोरसंबन्धे वाक्यभेदः स्यादित्यत आह वाक्यस्येति । व्यङ्ग्येन सहासंबद्धो यः प्रकृतो नृपतिस्तदभिधायकत्वं मा प्रसाङ्क्षीत्, मा प्रसक्तं भवत्विति प्राकरणिकाप्रकराणिकयोयोरुपमानोपमेयभावः । सादृश्यं संबन्धः कल्पनीयो निर्णेतव्य इत्यत्र काव्ये उपमालङ्कारो व्यङ्ग्य इति व्यवहर्तव्य इत्यध्याहार्यम् । ननु रूपकं किमति संबन्धतया न कल्पत इति चेन्मैवम् । भावानवबोधात् ।

**'तद्रूपकमभेदो य उपमानोपमेययोः'**

**'उपमैव तिरोभूतभेदा रूपकमिष्यते'**

तथा

इत्यस्य च दर्शनाद्रूपकस्योपमाघटितत्वेनोपमाज्ञानाधीनज्ञानविषयत्वेन प्रथमोपस्थितत्वेन तस्या एव संबन्धत्वं कल्पयितुं युज्यत इति ।

**काव्यप्रदीपः**

तेषु मध्ये—

**अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ १५ ॥**

**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।**

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा । अलंकृतस्यानलंकृतवस्तुमात्रस्य वा प्राधान्येन प्रकाशादित्यर्थः । तत्राद्यो यथा—

**'उल्लास्य कालकरवालमहाम्बुवाहं**
**देवेन येन जरठोर्जितगर्जितेन ।**

**निर्वापितः सकल एव रणे रिपूणां**
**धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥'**

कालो वैरिसंहर्ता यः करवालः स एव महदम्बु धाराजलं वहतीति महाम्बुवाहः । यद्वा मह उत्सवः स एवाम्बु तद्वाहः । गर्जितं सिंहनादः । अत्र करवालमुल्लास्य एतावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्यासंबद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कवेस्तात्पर्यमित्युपमालंकारो व्यङ्ग्यः । स च शब्दशक्ति मूलः । पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ तदप्रतीतेः । एवमग्रेऽप्यूह्यम् ।

**काव्यप्रकाशखण्डनम्**

**अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते ॥** (मू. का. ३८, उ.)

**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।** (मू. का. ३९, पू.)

वस्त्वेवेत्यनलङ्कारं वस्तुमात्रम् । तत्राद्यो यथा—भद्रात्मन इत्यादि । अत्र मिथोऽसम्बन्धार्थद्वयबोधकत्वेन वाक्यभेदो मा भूदिति प्रकृताप्रकृतयोरुपमाऽलङ्कारः कल्पनीय इति उपमाऽलङ्कारो व्यङ्ग्य इति व्यवहर्त्तव्यम् । वस्तुमात्रं यथा—

**शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।**
**यस्य प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥**

अत्र विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते ।

**आदर्शः**

तत्र व्यङ्ग्यद्वैविध्याच्छब्दशक्त्युद्भवद्वैविध्यमाह—अलङ्कारोऽथेति । वस्तुअथवेत्यर्थः । शब्दात् प्रधानत्वेनेत्यन्वयः । शाब्द्यां व्यञ्जनायामर्थस्यापि व्यञ्जकताया उक्तत्वात् प्राधान्यमात्रं शब्दस्येति भावः । अनलङ्करणमिति अलङ्कारभिन्नमित्यर्थः । अनलङ्कारमिति क्वचित् पुस्तके पाठस्तु प्रामादिक एव पुंलिङ्गस्यालङ्कारशब्दस्य नञ्तत्पुरुषे नपुंसकलिङ्गत्वानुपपत्तेः, बहुव्रीहिणा त्वलङ्कारभिन्नत्वालाभात् ।

शब्दशक्त्युत्थमलङ्कारमुदाहरति—उल्लास्येति, येन देवेन प्राकरणिकेन राज्ञा कालकरवालं कृष्णायसखड्गं महाम्बुवाहमिव उल्लास्य तस्य धाराभिः जलैरिव रिपूणां त्रिजगति ज्वलितः सकल एव प्रतापो निर्वापितः । करवालमहाम्बुवाहमित्यत्र धाराजलैरित्यत्र च पुरुषव्याघ्रादिवदुपमासमासः, नतूभयत्रैव रूपकं राज्ञि इन्द्ररूपणाभावे तस्य महाम्बुवाहोल्लासकत्वस्य प्रतापे वह्निरूपणाभावे जलानां तन्निर्वापकत्वस्य चासम्भवात् । न च राज्ञ इन्द्रत्वं प्रतापस्य वह्नित्वञ्च गुणसिन्धुरित्यत्र गुणस्य जलत्वमिव व्यङ्ग्यमिति वाच्यम् उपमासमाससम्भवे धर्म्मिणि व्यङ्ग्यरूप्यबोधानुदयस्य ग्रन्थकृतसम्मतत्वात् । अन्यथा दशमोल्लासे—

**पादाम्बुजं भवतु वो विजयाय मञ्जु-**
**मञ्जीरसिञ्जितमनोहरमम्बिकायाः ।**

इत्यत्र अम्बुजे मञ्जीरबाधात् पादः अम्बुजमिवेत्युपमासमासस्यैव परिग्रहो वक्ष्यमाणोऽनुपपन्नः स्यात्, मञ्जीरे व्यङ्ग्यभ्रमररूपणे रूपकसमासस्यापि सम्भवात्; उपमासमासासम्भवे तु भवत्येव गुणसिन्धुरित्यत्र गुणे व्यङ्ग्यजलरूपणम्। अत एव इन्द्रोपमाध्वन्युदाहरणमेवेदं न त्विन्द्ररूपकध्वनिः। देवेन कीदृशेन ? जरठं कठिनम् ऊर्ज्जितञ्च गर्ज्जितं यस्य तादृशेन। अत्र इत्थं प्रकरणाद् राजान्वयिन्यर्थेऽवगते इन्द्ररूपोऽप्यर्थः शब्दशक्त्या व्यञ्जनया प्रतीयते। तथाहि येन देवेन इन्द्रेण प्रकृष्टस्तापो यस्य सः, अर्थाद् रिपूणामस्त्राग्निः वृष्टिधाराजलैर्निर्वापितः, किं कृत्वा ? कालकरं कृष्णरश्मिं बालं नवीनं महाम्बुवाहमुल्लास्य; येन कीदृशेन ? कठिनोर्ज्जस्वलगर्ज्जितेन, तत्प्रयोज्यमेघगर्जनस्यैव तदीयत्वात्। तथाच तद्व्यञ्जकश्लिष्टपदप्रयोगाद् राज्ञीन्द्रोपमायां वक्तुस्तात्पर्य्यमुन्नीयते तत इन्द्रोपमाऽपि अत्र व्यङ्ग्या, अन्यथा प्रकृतासम्बद्धेन्द्रप्रत्यायकशब्दप्रयोगोऽनुपयुक्तः स्यादित्याह—अत्रेति। 'अभिधायकत्वं' प्रत्यायकत्वम्। 'मा प्रसाङ्क्षीत्' मा प्रसक्तं भूत्। प्राकरणिकः राजा, अप्राकरणिकः इन्द्रः; 'उपमानोपमेयभावः' उपमा। 'कल्पनीयः' व्यङ्ग्यः। दर्शितानिष्टप्रसक्त्या तत्कल्पने वक्तुस्तात्पर्य्यस्य ग्राहितत्वादिति भावः। उपमाया अलङ्कारत्वादलङ्कारव्यञ्जनासिद्धिरित्याह—इत्युपमालङ्कार इति। अत्र चक्रवर्त्ती—व्यङ्ग्यबोधे अनिष्टप्रसक्तिबोधस्याहेतुत्वादर्थापत्तिमूलकानुमान एव तस्य हेतुत्वाच्च कल्पनीय इत्यत्र अनुमेय इत्येवार्थः। तदनुमानानन्तरञ्च उपमालङ्कारो व्यङ्ग्य इत्युक्तोपमालङ्कार इति व्याचष्टे, तन्न, दर्शितानिष्टप्रसञ्जनस्य कवितात्पर्य्यग्राहकतयैव दर्शितत्वात्, न तु व्यङ्ग्यबोधकतया। तथा कल्पनीय इत्यत्र अनुमेय इति व्याख्याने उपमानोपमेयभावात्मिकाया उपमाया अनुमेयतृव्यङ्ग्यत्वद्वयकथनानुपपत्ते 'न ह्यनुमेयस्य वह्यादेर्व्यञ्जनया पुनर्बोधः'।

## सुधासागरः

नन्वलङ्कारोऽपि वस्तु तत्कथं भेद इत्यत आह—अनलङ्कारमिति। अतएव प्रदीपकारैर्व्याख्यातम्—शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा। अलङ्कृतस्यानलङ्कृतवस्तुमात्रस्य वा प्राधान्ये प्रकाशनादित्यर्थ इति।

तत्राद्यो यथा—उल्लास्येत्यादि। वसन्ततिलका छन्दः। अत्र वाच्यपक्षे येन प्राकृतेन देवेन नृपतिना। जरठं कठोरमूर्जितं बलवद् गर्जितं सिंहनादो यस्य तथाविधेन। कालो वैरिसंहर्त्ता यः करवालः खड्गस्तत्र यन्महदम्बु धाराजलं तस्य वाहः प्रवाहः प्रसरणमुल्लास्य तीक्ष्णीकृत्य धाराजलैः खड्गधाराकान्तिभिः खड्गरत्नादिकान्तौ पानीयपदप्रयोगात् रिपूणां शत्रूणाम् त्रिजगति त्रिभुवने ज्वलितो विख्यातः सकल एव प्रतापः शौर्यख्यातिरूपो रणे सङ्ग्रामे निर्वापितः विलोपित इत्यर्थः। यद्वा महः उत्सव एवाम्बु वहतीति तथा कालकरवालः कृष्णायसखड्गश्चासौ स चेति कर्मधारयः तमुल्लास्य निपातनायोद्यम्येत्यर्थः।

सकल इति सप्तम्यन्तं रणविशेषणमिति केचित्।

व्यङ्ग्यपक्षे तु येन देवेन मेघाधिपतिना इन्द्रेण, कालकरं कृष्णरश्मिं बालं नवीनम्, बवयोरभेदात्, महाम्बुवाहं मेघमुल्लास्य प्रकाश्य, रणे तेजोविषयजलकोलाहले सति, धाराकृतिभिर्जलैः त्रिभुवने रिपूणामर्थाज्जलशत्रूणां तेजसाम्, सकलः प्रकृष्टस्तापः औष्ण्यम्, निर्वापितः शमितः। कीदृशेन देवेन जरठोर्जितगर्जितेन तत्प्रयोज्यमेघगर्जितस्यैव तदीयत्वात्। उपलक्षणार्थकतृतीयाङ्गीकारेण गर्जितेनोपलक्षितं मेघमुल्लास्येति वाऽर्थः।

चक्रवर्त्तिनस्तु महाम्बुवाहमिव कालकरवालं तमिव च महाम्बुवाहमिति पक्षद्वये क्रमेणोपमितिसमासाङ्गीकरेणार्थः। एवं धाराजलैरित्यत्रापि जलैरिव धाराभिरिति राजपक्षे। तथा व्यङ्ग्यपक्षे ज्वलितः ऊर्द्ध्वशिखः प्रकृष्टस्तापो यस्यार्थाच्छत्रूणामस्त्राग्निरिति विशेषमाहुः। तत्र कालकरवालेत्यादेः परिवृत्तिसहत्वेन तदंशे शब्दशक्तिमूलत्वाऽनुपपत्तिः। कालकरवाल एव महाम्बुवाहः मेघ इति रूपकं त्वसङ्गतमेव। तथा सति उत्तरपदार्थस्य मेघस्य प्राधान्यापत्त्या तदुल्लासकत्वस्य राज्ञि इन्द्रारोपं विनाऽसङ्गतत्वापत्तेः। एतदर्थं व्यङ्ग्यत्वाङ्गीकारे च तस्य वाच्यसिद्ध्यङ्गत्वेन ध्वनित्वानुपपत्तेः। उपमायास्तु नेतरोपमासाधकत्वम्। नृपे इन्द्रसाम्यावगतावपि खड्गे मेघसादृश्यसमानधर्मसाकाङ्क्षत्वादिन्द्रसदृशोल्लास्यत्वस्य मेघावृत्तित्वेन समानधर्मत्वाभावादिति विशेषः।

किञ्च—नानार्थशब्दोपनिबन्धेन प्रतीयमानार्थे तात्पर्यग्रहाद्वाक्यभेदपरिहाराय तेनैकवाक्यताकल्पेऽपि वर्णनीयस्य राज्ञः प्राधान्यमितरस्य गुणभाव इत्युचितं न तु वर्णनीयस्य गुणत्वम्। एवं रूपके राजैव महेन्द्र इत्युत्तरपदार्थस्याप्रकृतस्य प्राधान्ये तद्रहितरतेरेव व्यङ्ग्यत्वापत्त्याऽसम्बद्धार्थाभिधायकत्वप्रसङ्गः। उपमायान्तु प्रकृतप्राधान्यलाभान्न तथेति तस्या एव व्यङ्ग्यत्वं युक्तम्। तदेतदुक्तम् असम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदित्यादि।

अत एव प्रदीपकारैर्व्याख्यातम्—अत्र 'करवालमुल्लास्य' एतावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्याऽसम्बद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कवेस्तात्पर्यमित्युपमालङ्कारो व्यङ्ग्यः। स च शब्दशक्तिमूलकः पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ तदप्रतीतेरिति।

## विवरणम्

तत्र शब्दशक्त्युत्थत्वं शब्दाभिधामूलव्यञ्जनाव्यापारारूढत्वम्। तत्र व्यङ्ग्यद्वैविध्यात् प्रथमस्य द्वैविध्यमाह—अलङ्कार इति। प्रधानत्वेन शब्दादवभासत इत्यन्वयः। शब्दस्य व्यञ्जकतायमर्थस्यापि सहकारित्वं प्रागभिहितमिति कथमस्यार्थशक्त्युत्थत्वं नोच्यत इत्याशङ्कामपनेतुं सहकारित्वं प्रागभिहितमिति कथमस्यार्थशक्त्युत्थत्वं नोच्यत इत्याशङ्कामपनेतुं शब्दस्य प्राधान्यव्यपदेशबीजमुक्तम्—वस्त्वेवेति। अत्रेतिकारपरामृष्टं पदं बोध्यतासंसर्गेण वस्तुमात्रेऽन्वेति। तत्रापि मात्रपदमनलङ्करणमितिपदेन विवृतम्। 'अनलङ्कारम्' इति त्वपपाठः, तत्पुरुषे लिङ्गहानासम्भवात्, बहुव्रीहिणा चालङ्कारभेदाप्राप्तेः।

उल्लास्येति। महाम्बुवाह इव कालकरवालः, जलानीव धारा इत्युपमितसमासः। तेन येन देवेन राज्ञा बलवद्गर्जितेन महाम्बुवाहसदृशं करवालमुल्लास्य, जलैरिव खड्गधाराभिः, समरे सकल एव रिपूणां प्रतापो निर्वापित इत्यन्वबोधः। ततो यथायथं समासभेदाश्रयणेन कालकरवालसदृशमहाम्बुवाहस्येन्द्रस्य जलधाराणां देवादिपदैरुपस्थितिः। तत्रेन्द्रेण धाराभिरग्नीनां प्रतापो निर्वापित इति वैयञ्जनिको बोधः। तत्रापि बोधे शक्यवाक्यार्थोऽपि विषयीभवति, तत इन्द्र इव राजेति बोधः। तत्र राजधर्मः पिण्डीभूत इन्द्रधर्मतया भासत इति प्रक्रिया।

अत्रेति। अत्रोपमानोपमेयभावो व्यङ्ग्य इत्यन्वयः।

नन्वत्रेन्द्रवृत्तान्तभिव्यज्यैव काव्यं विश्राम्यति, न पुनरिन्द्रेण सह राज्ञ उपमानोपमेयभावोऽपि प्रतीयत इति शब्दशक्त्युत्थवस्तुध्वनेरेवेदमुदाहरणमित्यत आह—वाक्यस्येति। प्राकरणिकासम्बद्धः प्राकरणिकविषयकरति-

भावानुपकारी, योऽर्थ इन्द्रलक्षणः, तदभिधायकत्वं स्वातन्त्र्येण तद्बोधकत्वम्, मा प्रसाङ्क्षीद् न युज्यत इति हेतोः, प्राकरणिकगोचररतिभावोपकारी, तयोरुपमानोपमेयभावो व्यङ्ग्य इत्यर्थः ।

यत्तु—अप्राकरणिकं यदि प्राकरणिकोपमानं न स्यात्, तत्सम्बद्धमेव न स्यात्, सम्बन्धाभावादिति प्रसङ्ग-सहकृतेनानुमानेनोपमानोपमेयभावः प्रतीयत इत्यर्थः । अन्यथा व्यञ्जनायां दर्शिततर्कस्यानुपयोगादिति चक्रवर्तिव्याख्यानम्, तदसत्, उपमाया अनुमेयत्वेऽलङ्कारध्वनित्वासम्भवात् ।

ननु 'उल्लास्य कालकरवाल' इत्यादौ नोपमाध्वनिः, किन्त्वेकदेशविवर्तिरूपकम् । 'कालकरवाल' इत्यादौ 'धाराजलैः' इत्यत्र च मयूरव्यंसकादिसमासः । देवपदवद् धारापदमप्यासारव्यञ्जकं वा । तथा च देवपद-धारापदाभ्यां शब्दशक्तिमूलिकया व्यञ्जनयेन्द्रासारयोः, रणपदरिपुपदप्रतापपदानामर्थशक्तिमूलिकयाऽरण्यदवानलसञ्ज्वराणामनुसन्धाने, येन राजशक्रेण खड्गमेघमुल्लास्य रणारण्ये रिपुदवानलानां खड्गधारासारजलैः प्रतापसञ्ज्वरो निर्वापित इति बोधः ।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ।। ५५ ।।

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

---

**सङ्केतः**

तिग्मेति । अत्र समासे सति ऐकपद्यं विरोधत्यागश्च, असमासे तु द्विपदत्वं विरोधश्च । तथाहि—यः तिग्मरुचिः सूर्यः, सः कथं अप्रतापः ? । यो विधुः चन्द्रः स कथं अनिशाकृत् ? । यश्च मधुः चैत्रः, कथं अलीलः ? । यश्च मतिमान्, सः कथं अतत्ववृत्तिः ? । या च प्रतिपत्, सा कथं अपक्षाग्रणीः—पक्षस्यानादिः ?—इति विरोधः । तत्र—जनं विधुरयन्तीति विधुराः रिपवः, तेषां निशाकृत्—मृत्युकृत् । मतौ माने तत्त्वे च वा, मतिमानतत्त्वानि वा, मतिमाने तत्त्विकी वा वृत्तिः यस्य सः तथा । प्रतिपदं प्रतिप्रयोजनम् । पक्षस्य निजस्य । अन्यत् स्पष्टम्—इति विरोधत्यागः ।

**सङ्केतः (रुय्यकः)**

तिग्मरुचिरिति । तिग्मस्तीक्ष्णः रुचिरश्च प्रतापो यस्य, विधुराणां वैरिणां निशाकृदान्ध्यहेतुः, मधुरा लीला यस्य, मतिमानयोस्तत्त्वेन वृत्तिर्यस्य प्रतिपदं पक्षाणां समुख्यानाम्, अग्रणीः प्रधानम्; तथा तिग्मरुचिरादित्योऽप्यात-परह्वितो विधुश्चन्द्रोऽप्यनिशाकरः मधुर्वसन्तोऽपि लीलारहितः, मतिमान् प्राज्ञोऽप्यतत्त्ववृत्तिरवस्तुनिष्ठः, प्रतिपत् पक्षपूर्वदिवसोऽपि पक्षस्य मासार्द्धस्य नाग्रणीर्नारम्भकः इति विरोधः ।

**बालचित्तानुरञ्जनी**

अत्रे वोदाहरणन्तरमाह तिग्मेति । हे विभो तिग्मरुचिरप्रतापः तीक्ष्णमनोज्ञप्रतापः विधुराणां रिपूणां निशाकृत् क्षयकारी मधुरा लीला यस्य मतौ माने तत्त्वे वृत्तिर्यस्य प्रतिपदं स्थाने स्थाने पक्षाणामात्मीयानामग्रणीः एवंविधो भावान् विभाति । अत्र को वा अलङ्कारो व्यङ्ग्यः कथं च तस्य वाक्याद्भेद इत्याह अत्रेति । तिग्मरुचिः सूर्यः स कथं प्रतापः । विधुश्चन्द्रः स कथमनिशाकृत् ? मधुर्वसन्तःस कथमलीलः ? मतिमान् कथमतत्त्ववृत्तिः ? प्रतिपत् अपक्षाग्रणीः कथमिति एकपदस्य पदद्वये क्रियमाणे विरोधाभासः प्रतीयते । एकपदत्वेन परिहारसंभवादस्य विरोधस्य भासत्वं प्राकरणिकत्वात् प्रथमं वाच्यार्थः प्रतीयते । पश्चाद्विरोधवाचकानामप्यादीनाम् अभावेऽपि पदच्छेदमात्रेण विरोधाभासः प्रतीयत इति विरोधालङ्कारो व्यङ्ग्य इत्यर्थः ।

**काव्यादर्शः**

एवमन्येऽपि शब्दशक्तिमूला अलंकारा व्यङ्ग्या यथा 'तिग्मे'ति । तिग्मो रुचिरश्च प्रतापो यस्य । विधुराणां द्विषां निशाकृन्मारकः । मधुरा मनोज्ञा लीला यस्य । मतौ माने तत्त्वे च वृत्तिर्यस्य । प्रतिपदं प्रतिप्रयोजनं पक्षस्याग्रणीः न मीयते स्म ।

## विवेकः

तिग्मरुचिरिति—'तिग्मस्तीक्ष्णः रुचिरश्च प्रतापो यस्य, विधुराणां वैरिणां निशाकृदान्ध्यहेतुः, मधुरा लीला यस्य, मतिमानयोस्तत्त्वेन वृत्तिर्यस्य, प्रतिपदं पक्षाणां स्वमुख्यानाम् अग्रणीः प्रधानम्, तथा तिग्मरुचिरादित्योऽप्यातपरहितः, विधुश्चन्द्रोऽप्यनिशाकरः, मधुर्वसन्तोऽपि लीलारहितः, मतिमान् प्राज्ञोऽप्यतत्त्ववृत्तिरवस्तुनिष्ठः, प्रतिपत् [पक्ष]-पूर्वदिवसोऽपि पक्षस्य मासार्धस्य नाग्रणीर्नारम्भक इति विरोधः ।

## दीपिका

तिग्मः शत्रुषु, रुचिरो मनोहरः स्वजनेषु, प्रतापो दण्डादिजनितं तेजो यस्य । विधुराणां [निशाकृत्] निशा मोहान्धकारस्तं कृन्ततीति । विभो स्वामिन् । मधुरलीलः, न च मलिनचेष्टः । मतिस्तत्त्ववित्तिः, मानश्चित्तोन्नतिः, तयोस्तत्त्वेन सारेण वृत्तिर्यस्येति । प्रतिपदं पक्षाणां सहायानामग्रणीः । तिग्मरुचिः सूर्यः अप्रतापः शीतलप्रायः, विधुश्चन्द्रो न निशाकृत् विभो विगतप्रभः, मधुरलीलो रमणीयचेष्टः मधुर्वसन्तः अलीलः युवजनविविधचेष्टारहितः—इत्येके । मतिमान् अतत्वेऽवस्तुनि प्रवर्त्तते । प्रतिपत् पक्षस्याग्रणीः प्रथमतिथिर्न ।

अत्रेति—द्विपदत्वेऽभिधेये विरोधाभास एकैकस्य पदस्य व्यङ्ग्य इति योजना । न तु द्विपदत्वेऽप्रतीत इति, तत्कारणाभावात् । अर्थान्तरप्रतीतिरेव कारणमिति चेन्न, परस्पराश्रयप्रसङ्गात् वैयर्थ्याच्च । एवमन्यत्राप्येवंविधस्थले मृग्यम् ।

## साहित्यचूडामणिः

तिग्मेति । तिग्मस्तीक्ष्णो रुचिरो हृद्यश्च प्रतापो यस्य । विधुराणां शत्रूणां निशामन्धकारमयीं करोति । मधुरा रमणीया लीला यस्य । मतिमानयोर्बुद्धिचित्तसमुन्नत्योस्तत्त्वं प्रामाणिकोऽर्थः तत्र प्रवृत्तिर्यस्य । प्रतिपदं प्रतिक्षणं पक्षस्य बलस्याग्रणीनिर्वोढा ।

एकस्येति । तीक्ष्णतेजिष्ठप्रताप इत्येतदर्थाभिधायकस्य पदस्य द्विपदत्वे तिग्मरुचिस्तीक्ष्णकिरणः अप्रतापः प्रतापशून्यः इति विरुद्धार्थद्वयौचित्येन पदच्छेदे तेनैव व्यञ्जकेन विरोधो व्यङ्ग्यः आदित्यः कथमप्रतापः स्यादिति । एवं विधुश्चन्द्रमाः कथमनिशाकृद् रजनिकरः । मधुश्चैत्रः कथमलीलः उत्सवरहितः मतिमान् बुद्धिमान् कथमतत्त्ववृत्तः अपरमार्थप्रवृत्तिः । प्रातपत् प्रथमा तिथिः कथमपक्षाग्रणाः पक्षमुख्या न स्यात् । ननु कथं वाक्यस्यासंबन्धार्थताप्रसंगः । उच्यते । विरोधप्रतीत्यभावे तदनुकूलायाः साधारण्येन शब्दरचनायाः प्रयासे वैयर्थ्यप्रसङ्गात् । न खलु तिग्मविमलप्रताप इत्यादौ विरोधः । अयं भावः—तिग्मरुचिरप्रतापस्य तत एव तिग्मरुचेरादित्यस्य सता भूपतेरप्रतापत्व विरुद्धमिति । एवमुत्तरत्रापि ।

## सम्प्रदायप्रकाशिनी

तिग्मरुचिरेति । तिग्मरुचिरप्यप्रता[illegible] इति, विधुरप्यनिशाकृदिति, मधुर्वसन्तोऽप्यलीलो लीलारहित इति, मतिमानप्यतत्त्ववृत्तिरतत्त्वार्थवर्तीति, प्रतिपत् प्रथमा तिथिरप्यपक्षाग्रणीः सितासितयोः पक्षयोर ग्रेन वर्तत इति

प्रतिवाक्यं विरोध आभासते। तिग्मश्च रुचिरश्च प्रतापो यस्येति, विधुराणां विद्विषां निशामवसानं करोतीति, मधुरलील इति, मतिमानयोस्तत्त्वे वर्तत इति, प्रतिपदं पक्षस्य स्ववर्गस्याग्रणीरित्यविरोधः।

## मधुमती

न केवलं श्लिष्टपदैरेव उपमैव व्यज्यते इति नियमः। अपि तु अश्लिष्टपदैरपि अलङ्कारान्तरमयि व्यज्यते इति दर्शयितुमाह—तिग्मेति। नन्वत्र विरोधाभासः वाच्य एव न कथम्? अत आह—अत्रेति। तथा च प्रथमं ऐकपद्येन प्राकरणिकार्थप्रतीतौ सत्यां, ततः द्विपदताऽऽभासेन विरोधाभासव्यञ्जनमिति। अत एव पदपरिवृत्त्यसहत्वेन शब्दशक्तिमूलकताऽपि। न हि तिग्मरुचिरप्रतापः इत्यत्रेव 'तीक्ष्णशोभनप्रतापः' इत्यत्रापि द्विपदताप्रतिसन्धाने विरोधाभासो वा स्फुरति इति तात्पर्यम्।

## विस्तारिका

पदभङ्गे व्यङ्ग्यमाह—तिग्मरुचिरित्यादि। तिग्मस्तीक्ष्णः शत्रुषु, रुचिरो मनोज्ञो मित्रेषु, तिग्मरुचिः सूर्यप्रतापशून्यश्च विधुराणां शत्रूणां निशेव निशा मरणं तत्करोति विधुर्न निशाकृत् च। विभो इति सम्बुद्धिः। मधुरा मनोज्ञा लीला चेष्टा यस्य। मधुर्वसन्तः। अलीलः क्रीडाया अहेतुश्च। मतिः शास्त्रतत्त्वज्ञानम्, मानश्चेतःसमुन्नतिः, तयोस्तत्त्वस्य यथार्थ्यस्य वृत्तिर्यत्र। मतिमान् पण्डितः। तत्त्वेन न वर्तते च। प्रतिपदं पदे पदे। स्वपक्षविपक्षयोः श्रेष्ठः। प्रतिपत् प्रथमातिथिः, पक्षस्य शुक्लकृष्णान्यतरपञ्चदशात्मकतिथिप्रचयस्याग्रणीराद्यो न भवति च।

अत्रेत्यादि। द्विपदत्वे ज्ञात इति शेषः। न च द्विपदत्वज्ञानोपायाभावात् कथं ज्ञानमिति वाच्यम्? सामाजिकानुसन्धानस्यैवोपायत्वात्। विरोधाभास इति द्वितीयार्धेन विरोधः, प्रथमार्धेन समाधानम्। आभासतायाः प्रयोजकस्य पूर्वत्वे परत्वे वा विशेषविरहात्।

## सारबोधिनी

अलङ्कारान्तरमपि व्यङ्ग्यमित्याह तिग्मरुचिरित्यादि। तिग्मः शत्रुषु रुचिरो मित्रेषु विधुराणां शत्रूणां निशेव निशा मरणं तत्करोति। विभो स्वामिन्। मधुरा लीला चेष्टा यस्य। मतिः शास्त्रतत्त्वमानम्। मानश्चित्तवृत्तिसमुन्नतिः। तयोस्तत्त्वेन वृत्तिर्यस्य। प्रतिपदं प्रतिस्थानम्। पक्षाणां स्वीयानामग्रणीः। विरोधाभासस्तु तिग्मरुचिः सूर्यः स चाप्रतापः। विधुश्चन्द्रः। स च न निशाकर्ता मधुर्वसन्तः स च लीलारहितः। मतिमान् तत्त्वज्ञः। स चातत्त्ववृत्तिः। प्रतिपत् पक्षाधिभूता तिथिः। सा न पक्षासन्तः स च लीलारहितः। मतिमान् तत्त्वज्ञः। स चातत्त्ववृत्तिः। प्रतिपत् पक्षाधिभूता तिथिः। सा न पक्षाग्रणीः। न पक्षादिभूतेति। अत्रेति। द्विपदत्वे ज्ञात इति शेषः। अत्र सामाजिकानुसंधानमेव द्विपदत्वज्ञानोपायोऽस्तु तथापि 'मृणालवलयादि दवदहनराशिरित्यादिवद्विरोधस्य वाच्यतैव भवितुमर्हति। तस्मादेकैकस्य पदस्य द्विपदत्वे वाच्यो विरोधाभास एकैकस्य पदस्य व्यङ्ग्य इत्यध्याहार्यः वस्तुतोऽप्रकृतत्वेन।

## काव्यप्रदीपः

एषमलंकारान्तराण्यपि। यथा—

'तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।
मतिमानतत्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥'

अत्र तिग्मरुचिः, अप्रतापः, एवं क्रमेणैकैकपदस्य द्विपदत्वे विरोधाभासः ।

## आदर्शः

शब्दशक्तिमूलमलङ्कारान्तरमाह—तिग्मरुचिरेति । हे देव भवान् विभाति । कीदृशः ? शत्रूणां तिग्मो मित्राणां रुचिरश्च प्रतापो यस्य तादृशः; विधुराणां शत्रूणां निशाकृत् चिन्तया दिनस्यापि निशारूपकरणात्, निशा कालरात्रिर्वा । तथा मधुरा लीला यस्य (सः), मत्या मानतत्त्वे प्रमाणत्त्वे वृत्तिः व्यवसायो यस्य तादृशः । प्रतिपदे प्रतिस्थाने पक्षाणां सपक्षाणाम् अग्रणीः श्रेष्ठः ।

## सुधासागरः

एवमलङ्कारान्तराणि व्यङ्ग्यानि बोध्यानीति ध्वनयन्नुदाहरति—तिग्मरुचिरेत्यादि । अयमर्थः हे विभा प्रभा ! भवान्विभाति शोभत इत्यन्वयः । कीदृशः तिग्मस्तीक्ष्णश्चासौ रुचिरो मनोज्ञः शत्रुमित्रपक्षयोः प्रतापो यस्य सः । खलसुजनयोस्तिग्मरुचिरः प्रतापो दण्डदिजानतं तेजो यस्येति दीपिकायाम् । विधुराणां शत्रूणां निशेव निशा मरणं करोतीति । तथा मधुरा मनोज्ञा लीला चेष्टा यस्य सः । मतिः शास्त्रतत्त्वज्ञानं मानश्चित्तसमुन्नतिस्तयास्तत्त्वेन सारेण वृत्तिवेतनं यस्य सः । तयोस्तत्त्वन यथार्थेन वृत्तिर्यत्रेति चक्रवर्ती । प्रतिपदं पक्षाणां सहायानामग्रणीरग्रेसरः ।

अत्र तिग्मरुचिः सूर्योऽप्रतापोऽनुष्णः । विधुश्चन्द्रो न निशाकृत् । मधुर्वसन्तोऽलीलः क्रीडाशून्यः मतिमान्प्रशस्तबुद्धिः अतत्त्वेऽवस्तुभूते वृत्तिर्व्यवसायो यस्य तादृशः, प्रतिपत् तिथिः पक्षाग्रणीः पक्षादिभूता नेति विरोधाभासो व्यङ्ग्यः द्वितीयार्थस्याप्रकृतत्वात् । अत्रैकैकपदस्य द्विपदत्वे विरोधाभासः ।

## विवरणम्

न चासावलङ्कारध्वनेर्विषयः, पदार्थस्मरणमात्रोपक्षीणत्वाद् व्यञ्जनाया वाक्यभूमिकायामेव रूपकावगमात् । अन्यथा 'विद्वन्मानसहंस' इत्यादावपि रूपकध्वनित्वापत्तेरत उदाहरणान्तरमाह—तिग्मेत्यादि । द्विषां तिग्मः सुहृदां रुचिरः प्रतापो यस्य सः, तथा विधुराणामहितानां निशाऽप्रतिपत्तिस्तत्कर्ता, हे विभो ! मधुरा लीला यस्य सः, मतिमानयोस्तत्त्वे वृत्तिर्यस्य सः, प्रतिपदं सर्वव्यवसायेषु पक्षाणामग्रणीर्भवान् विभातीत्यर्थः ।

अत्रेति । एकस्य पदस्य समासस्य द्विपदत्वे तद्भ्रमे विरोधाभासः समभिव्याहृतपदार्थयोर्विरोधः शब्दशक्तिमूलव्यञ्जनागम्यः । तथा हि—तिग्मरुचिः अप्रतापः, विधुः अनिशाकृत्, मधुः अलीलः, मतिमान् अतत्त्ववृत्तिः, प्रतिपत् अपक्षाग्रणीरिति द्वैपद्ये विरोधः परस्फुरति ।

ननु तिग्मरुचिरप्रताप इति समासस्य शब्दशक्तिमूलध्वननव्यापारः पदद्वये वा स्यात्, तदर्थयोर्वा, तयोर्विरोधे वा ? नाद्यः, तस्य श्रोत्रादिगम्यत्वात् । नापि द्वितीयः, तत्र हि प्रकरणेन समासस्याभिधा नियम्येत, तिग्मरुच्यादिपदस्य वा ? प्रथमे नास्त्येव समासस्य तत्राभिधा । द्वितीये नियतार्थस्य तिग्मरुचिशब्दस्य प्रकरणसहस्रेणापि

रवावभिधा न कुण्ठयितुं शक्यते । अत एव न तृतीयः, पदार्थयोरभिधामूलध्वननागम्यत्वे तयोर्विरोधस्य सुतरामतथात्वात् । अलङ्कारान्तरप्रतियोगिपदार्थयोरभिधामूलध्वननागम्यत्वादेव ह्यलङ्कारे तथा व्यपदेशः । तस्मात् समाससमुदायस्येव व्यासस्यापि श्रोत्रोपस्थितत्वात् तदर्थोऽभिधयैव गम्यते, अर्थशक्तिसमुत्थध्वननेन तयोर्विरोधः परिस्फुरतीत्यभ्युपेयम् । एवमेव पेलवादिपदान्तर्गतपेलादिशब्दादश्लीलार्थपरिस्फुरणम्, पेलशब्दस्यानेकार्थत्वाभावेन तदभिधाया नियन्तुमशक्यत्वात् ।

**अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो।**
**अहितः सहितः साधुयशोभिरसतामसि ॥ ५६ ॥**

**अत्रापि विरोधाभासः ।**

---

### सङ्केतः

अमित इति । समितः—सङ्ग्रामात्, प्राप्तैः उत्कर्षैः अहितानां हर्षदः—प्रीतिच्छेदी । अत्र दृष्टान्तद्वयेऽपि द्योतकस्य 'अपि' शब्दादेः अभावात् विरोधः व्यङ्ग्यः । अत्र पदयोः भिन्नयोरेव तदर्थयोः विरोधः इति पूर्वोदाहरणात् भेदः ।

### सङ्केतः (रुय्यकः)

(अमित इति) एवमभितः पारिमित्यरहितः समितः संग्रामात् प्राप्तैरुत्कर्षैरतिशयैर्हर्षं ददातीति यः स सम्बोध्यते । तथा यशोभिः सहितः सन्नसतां महितः कल्याणनिवर्त्तकः । विरोधपक्षे त्वमितोऽपि समितः, अहितोऽपि सहित इति योजना । सभङ्गाभङ्गश्लिष्टपदगतविरोधभेदेनोदाहरणद्वयम् । चित्रं नानाप्रकारमालेख्यम् । अत्र विरोध-व्यतिरेकावलङ्कारत्वाद्वाच्यासंलग्नत्वेऽपि प्रतीयमानत्वादात्मत्वेनालंकार्यौ ।

### बालचित्तानुरञ्जनी

एवमेकस्य पदस्य छेदं विरोधाभासमुदाहृत्य भिन्नयोर्विरोधाभासमुदाहरति अमित इति । समितः सङ्ग्रा-मात् प्राप्तैरुत्कर्षैः हर्षद हे प्रभो त्वम् अमितः मितवस्तुरहितः असतामहितोऽसि । साधुयशोभिः सहितोऽसि । अत्रालङ्कारव्यङ्ग्यत्वमाह अत्रापीति । अमितोऽपि कथं समितः । सहितः अहितोऽपि कथं हितः हितसहितः इति विरोधाभासः । परिहारस्तु प्राकरणिकार्थाश्रयणात् ।

### काव्यादर्शः

समितः संग्रामात् । अहितः शत्रूणां यशोभिश्च सहितः । व्यतिरेक इति । शम्भोरितरचित्रकराद् आधि-क्यमिति वाक्ये व्यतिरेकोऽलंकारो व्यङ्ग्यः ।

### विवेकः

एवममितः पारिमित्यरहितः समितः संग्रामात् प्राप्तैरुत्कर्षैरतिशयैर्हर्षं ददातीति यः स सम्बोध्यते । तथा यशोभिः सहितः सन्नसतामहितः कल्याणनिवर्तकः । विरोधपक्षे त्वमितोऽपि समितः, अहितोऽपि सहित इति (इत्यादि) योजना । सभङ्गाभङ्गश्लिष्टपदगतविरोधभेदेनोदाहरणद्वयम् ।

## दीपिका

समितः संग्रामात्प्राप्तैरुत्कर्षैरमितः पारिमित्यरहितः । यशोभिः सहितो युक्तः, असतामहितः श्रेयश्छेत्ता । मितं मानं, तेन हीनोऽमितः । अहितो हितेन रहितो हितसहित इति विरोधः । अत्रापीति—विरोधस्याभासताप्रतीतिः । पूर्वोक्तरीतिरत्रापि प्रतिपत्तव्या ।

## साहित्यचूडामणिः

अमितः अनवच्छिन्नः । समितः सङ्ग्रमात् प्राप्तैरुत्कर्षैः अहितः अननुकूलः असतां खलानाम् सहितो यशोभिः संयुक्तः । अमितो मितरहितः कथं समितः स्यात् । एवम् अहितः कथं सहित इति विरोधः ।

## सम्प्रादायप्रकाशिनी

अमित इति । प्राप्तैर्योग्यैः । अमितोऽपि समित इति, अहितोऽपि सहित इति शब्दतो विरोधाभासः । पूर्वमर्थतः । उत्कर्षैः सम्यगितः, यशोभिः सहितः असतामहित इत्यविरोधः ।

## मधुमती

अमित इति । अत्र अमित-समितयोः अहित-सहितयोश्च विरोधाभासः ।

## विस्तारिका

अत्र केचित्—द्विपदत्वं ज्ञानोपायाभावान्न तज्ज्ञानम्, सति च तस्मिन् विरोधस्य वाच्यतैव स्यान्मृणालवलयादिदवदहनराशिरित्यादिवत् । तस्मादेकैकस्य पदस्य द्विपदत्वे वाच्यो विरोधाभास एकैकस्य पदस्य व्यङ्ग्य इत्यध्याहारेण ग्रन्थो व्याख्येय इत्याहुः, तन्न, अध्याहारं विनाऽप्युपपादितत्वात् । द्विपदत्वज्ञानेऽप्यप्रकृतत्वेन द्वितीयार्थस्य तत्सम्बन्धस्य व्यङ्ग्यत्वानपायाद् द्विपदत्वज्ञाने विरोधस्य वाच्यत्वमिति भ्रमनिरासायाह—अमित इति ।

समितो युद्धात् प्राप्तैरुत्कर्षैरमितोऽपरिच्छन्नः । मानं मितं तद्रहितस्तत्सहितश्च । हर्षं शत्रुमित्रयोर्द्यति ददाति चेत्यादि सम्बुद्धिः । असतामहितः साधुयशोभिः सहितः । पक्षे हितशून्यो हितसहितश्च । अत्रापीति । भिन्नपदत्वेऽप्यप्रकृतत्वेनेत्यर्थः ।

## सारबोधिनी

अमित इति । समितः सङ्ग्रामात् अमितोऽपरिमित इत्यर्थः । वस्तुतोऽमित इति । क्विबन्तस्य पञ्चम्यन्तं रूपम् । तेनापरिमितात् सङ्ग्रामादित्यर्थः । अन्यथा विषयभेदे विरोधप्रसङ्गस्याभावात् । अहितोऽसतामिति । सम्बन्धः । अत्रापीति । भिन्नपदत्वेऽपि अप्रकृतत्वेनेति । बोध्यम् ।

## काव्यप्रदीपः

पदाभेदेऽपि विरोधाभासो यथा—

**'अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो**
**अहितः सहितः साधुयशोभिरसतामसि ॥'**

ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव नेत्युच्यते तत्कियती सीमा । अपि शब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वं तदभावे व्यङ्ग्यत्वमिति ।

## आदर्शः

अत्रेति, एकपदमत्र समासैकपदम्, तस्य भङ्गेन विभक्त्यन्ततया द्विपदत्वज्ञाने इत्यर्थः । तथाच द्विपदत्व-ज्ञानसाहाय्यादखण्डपदस्यैव स्वशक्तिमूलो विरोधालङ्कार इत्यर्थः । तथाहि तिग्मरुचिः सूर्य्यः अप्रतापः प्रकृष्टताप-शून्यः, विधुः चन्द्रः अनिशाकरः भाशून्यश्च. मधुः वसन्तः लीलाशून्यश्च, मतिमान् तत्त्वव्यवसायशून्यश्च; प्रतिपत् तिथिः पक्षानादिभूता च, इति विरोधो व्यङ्ग्य एव, शक्तेः प्रकरणनियन्त्रित्त्वेन स्वातन्त्र्याभावात् ।

द्विपदत्वज्ञानाभावेऽप्यखण्डपदव्यङ्ग्यं विरोधमाह—अमित इति । हे विभो त्वम् असताम् अहितोऽसि । कीदृशः ? समित् युद्धं ततः प्राप्तैरुत्कर्षैः अमितः अपर्य्याप्तः, साधुयशोभिः सहितश्च । अत्र अमितः मितशून्यः समितः मितसहितश्चेति अहितः हितशून्यः सहितः हितयुक्तश्चेति विरोधः ।

## सुधासागरः

पदाऽभेदेऽपि विरोधाभासो यथा—अमित इत्यादि । अयमर्थः । हर्षं शत्रुमित्रयोर्द्यति खण्डयति ददाति चेति तथाभूत हे प्रभो त्वं समितः सङ्ग्रामात् प्राप्तैरुत्कर्षैरमितोऽपरिच्छिन्नः । असतां खलानामहितो दण्डकृत् । एवं साधुभिरुत्कृष्टैर्यशोभिः सहितो युक्तोऽसीत्यन्वयः । साध्विति क्रियाविशेषणं वा ।

अत्र मितं मानं तद्रहितस्तत्सहितश्च । तथा अहितः सहितश्चेति विरोधो व्यङ्ग्योऽप्रकृतत्वात् ।

ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव । नेत्युच्यते । तत्कियती सीमा । अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वम् । तदभावे व्यङ्ग्यत्वमिति ।

## विवरणम्

अथ समुदायस्यार्थवत्तया तदेकदेशस्यैकस्याभिधा कुण्ठिता भवति, नहि कमलशब्दान्तर्गतो मलादिशब्दोऽपि कस्यचिदभिधायक इति सार्थकसमाससमुदायान्तर्गतैकदेशस्य स्वार्थे व्यञ्जना स्वीकार्येति चेत्, न एवमपि समुदायेन वाचकानामवयवपदानामनुसन्धानम्, तेन स्वस्वार्थस्मरणमिति पक्षे विरोधाभासस्याभिधामू-लध्वननगम्यत्वानुपपादनादत उदाहरणान्तरमाह—अमित इति ।

अत्रापि पूर्वार्धे पञ्चम्यन्तसमिच्छब्दव्यञ्जितेन श्रोत्रोपस्थितेन वा समितशब्देन यद्यभिधयैव मितसहित-स्योपस्थानम्, तथापि द्वितीयार्धे निस्संशयमभिधामूलव्यञ्जनाव्यापारगम्यत्वं विरोधाभासस्येति भावः ।

**निरुपादानसंभारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥ ५७॥**

अत्र व्यतिरेकः।

अलंकार्यस्यापि ब्राह्मणश्रमणन्यायेनालंकारता।

---

**संङ्केतः**

निरुपादानेति। उपादानं वर्णकादि। अभित्तो निराश्रयत्वात् चित्रं विचित्रं आलेख्यं च। कला शिल्पं चान्द्री च। अत्र 'तु' शब्दादेः द्योतकस्य अभावात् व्यतिरेकः व्यङ्ग्यः।

अलमिति। अन्यत्र अलङ्कारतया दृष्टत्वात्, व्यङ्ग्यत्वे अलङ्कार्याणामपि अलङ्काराणां अलङ्कारव्यपदेशः पूर्वप्रत्यभिज्ञाबलात्।

**बालचित्तानुरञ्जनी**

अलङ्कारान्तरमुदाहरति निरुपादानेति। निर्गतोपकरणसामग्रीकजगच्चित्रमभित्तौ कुर्वते कलया ज्ञानेन चन्द्रलेख्यया श्लाघ्याय शम्भवे नमः। अत्रालङ्कारान्तरमाह अत्रेति। अत्रोपमानभूतादन्यस्माच्चित्रकारादुपमेयरूपस्य शम्भोराधिक्यमिति व्यतिरेकालङ्कारो व्यङ्ग्य इत्यर्थः। अलङ्कार्यालङ्कारयोर्भेदात् अलङ्कारस्योपमादेः अलङ्कारव्यङ्ग्य इत्यत्र अलङ्कारशब्दव्यपदेशः कथमत आह अलङ्कार्यस्यापीति। यथा ब्राह्मणः सन् श्रमणो भवति पश्चात् भूतपूर्वगत्या ब्राह्मण इत्युच्यते तथा अलङ्कारोऽप्यङ्गितया प्रधानव्यङ्ग्यपदवीमधिरोहते। अत्रालङ्कारत्वेन दृष्टवात् प्रकृतेऽप्यलङ्कार इत्युच्यत इत्यर्थः।

**काव्यादर्शः**

ननु, व्यतिरिक्तोऽलंकारोऽलंकार्याद्, यथा गुणिव्यतिरिक्तोगुणः, अलंकारव्यवहारश्चालंकार्येऽङ्गिनि सति युक्त इत्याह—अलंकार्यस्यापीति। यः क्वापि वाक्यार्थे पूर्वमुपमाद्यलंकारतामन्वभूत्, संप्रति त्वलंकार्यत्वाद् अनलंकाररूप एव सोऽन्यत्र गुणीभावात् पूर्वप्रत्यभिज्ञानबलाद् अलंकारध्वनिरिति व्यपदिश्यते, यतो ब्राह्मण एव सन् यः श्रमणः स्यात् स उच्यते ब्राह्मणश्रमण इति।

**विवेकः**

निरुपादानेति सम्भारपदोपादानादुपादानपदमत्र निमित्तमात्रपरं चित्रं नानाप्रकारमालेख्यं च। कला शक्तिः। प्रतियोगिनोऽनुपादानाद्व्यतिरेको व्यङ्ग्यः।

## दीपिका

उपादानसम्भार उपकरणसञ्चयः । चित्रं नानाकारमालेख्यञ्च । अत्र निखिलशिल्पिभ्य उत्कर्षः प्रतीयते । स एव व्यतिरेचनमुत्कर्षणमिति व्युत्पत्त्या व्यतिरेक उच्यते ।

अत्र विरोधेन-व्यतिरेचनमात्रस्यैव हृदयङ्गमत्वं युक्तं, न तु विरोधिव्यतिरेक्यादीनामित्यलङ्करणांशमात्रस्य प्राधान्यं सर्वत्रैवालङ्कृतिध्वनौ मन्तव्यम् ।

ननु अलङ्क्रियते कश्चित्प्रधानभूतोऽर्थोऽनेनेति अलङ्कारपदार्थपर्यालोचनयैव तस्यार्थप्राधान्यमवसीयते । नचाप्रधानं व्यङ्ग्यमुपधाय ध्वनिव्यपदेश इत्याह—अलङ्कार्यस्येति-वाच्यापेक्षया मुख्यस्येत्यर्थः ।

अयमभिसन्धिः-वाच्याङ्गभूतव्यतिरेकादिसाजात्यमात्रेणालङ्कारव्यवहारो भाक्तः, न पुनः पारमार्थिकः, तस्य व्यङ्ग्यभावेनाप्रतीतेः । रसाद्यपेक्षया पुनरप्राधान्येपि न काचित्क्षतिरिति पूर्वमेवोक्तम् । ये तु रसाद्यपेक्षयाऽलङ्कारत्वं मन्यन्ते ते तिमिरपटलपिहितदृशो न वस्तुतत्वं प्रेक्षन्ते । वाच्यवाचकालङ्करणद्वारा हि रसोत्कर्षकमलङ्करणं रसाद्युत्कर्षणामात्रेण [यद्य- ?] लङ्कारतयाऽङ्गीक्रियते वाच्यादिष्वपि तत्प्रसङ्गः कस्य गुरोराज्ञया निवार्य इत्यलं शुष्कचर्वणाभिः ।

## दर्पणः

उपादानमुपकरणत्वं चित्रम् । नानाप्रकारकमालेख्यं च कलाशक्तिः । अत्र शिल्पिभ्य उत्कर्षप्रतीतेर्व्यतिरेकालङ्कारः । ननूक्तव्यङ्ग्यस्य प्राधान्ये ध्वनिरिति । इह च व्यङ्ग्यानामलङ्काराणां प्राधान्येऽलङ्कारत्वमेव । तत् कुतः ? अलङ्कारत्वात् । यदाहुः—'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इति । अत आह अलङ्कार्यस्यापीति । श्रमणः पाखण्डविशेषः । न च रसाद्युत्कर्षमात्रेणालङ्कारता । वाच्यवाचकालङ्कारणरसाद्युत्कर्ष एव हि तथाङ्गीकारात् । रसाद्यपेक्षया पुनरप्राधान्येऽपि न काचित् क्षतिरित्युक्तमेव ।

## साहित्यचूडामणिः

निरुपादानेति । स्वव्यतिरिक्तस्य कस्यचिदभावात्, एवकारेण परमेश्वरस्य विश्वसृष्टावनन्यमुखप्रेक्षित्वलक्षणं स्वातन्त्र्यमासूत्र्यते—

कलाभिः इच्छाज्ञानक्रियाभिः श्लाघ्याय शूलने नमः । व्यतिरेकोऽन्येभ्यश्चित्रकरेभ्यो वैलक्षण्यमाधिक्यरूपम् ।

नन्वलङ्कारश्चेन्न व्यङ्ग्यः व्यङ्ग्यश्चेन्नालङ्कारो यावदलङ्कार्य इति व्याहतमेतदित्यत्राह—अलङ्कार्यस्यापीति । सत्यमलङ्कार्योऽसौ नालङ्कारः । केवलं पूर्वप्रत्यभिज्ञाबलादलङ्कारध्वनिरिति व्यपदिश्यते । यथा ब्राह्मण्यश्रमणत्वयोर्विरोधेऽपि ब्राह्मणश्रमण इति व्यपदेशः तद्वत् ।

## सम्प्रदायप्रकाशिनी

निरुपादानेति। वर्णरेखाद्युपादानं संभृत्य भित्तौ हि चित्रं तनोति लौकिकश्चित्रकृत्। अयं तु शक्तिमायादिकमुपादनत्वेनासम्भृत्यैव जगच्चित्रमभित्तावेव चिद्दर्पणप्रतिफलिततया वितनोति। अद्वयदर्शने हि न शक्त्यादिकमुपादानं पृथगस्ति, अपि तु शिव एव तत्तन्नाम्ना कारणतां प्रतिपद्यते। अत्र व्यतिरेकालङ्कारो व्यङ्ग्यः।

ननु व्यज्यमानदशायामलङ्कार्य एव, कथमसावलङ्कार इत्यत आह—अलङ्कार्यस्यापीति। श्रमणत्वनिष्पत्तौ हि अवसितमेव ब्राह्मण्यम्, अथापि भूतपूर्वगत्या भवति व्यपदेशो ब्राह्मणश्रमणोऽयमिति। इयमेव नीतिरलङ्कारध्वनावपि।

## मधुमती

व्यतिरेक इति। व्यङ्ग्यः इति शेषः। उपमानात् कारोः उपमेयस्य शूलिनः वैलक्षण्यप्रतीतेः। शूलि-कला-भित्तिशब्दानां च श्लिष्टत्वात् परिवृत्त्यसहत्वम्। तत्र शूलं-विक्रय्यवस्तु, शस्त्रविशेषश्च। कला-चतुष्षष्टिकलाः, चन्द्रकला च। भित्तिः—कुड्यं, चित्रपटश्च।

ननु-अलङ्कारो व्यज्यते इत्यनुपपन्नम्, तस्यैव अलङ्कार्यत्वात् अत आह—अलङ्कार्यस्यापीति। यथा हि उत्पाददशायां श्रमणत्वं ब्राह्मणत्वं च नैकत्र विरुद्धं, तथा अत्रापि अनुप्रासाद्यलङ्कारापेक्षया अलङ्कार्यत्वं, प्रतीयमानराजादिविषयरत्यपेक्षया अलङ्कारत्वमपि न विरुद्धम्। न त्वत्र भूतपूर्वगतिः। ब्राह्मणश्रमण (क) न्यायेन इत्याकरविरोधात्। श्रमणत्वदशायामपि ब्राह्मणात्वापरित्यागात्। भूतपूर्वगतेस्तु साम्प्रतिकासत्त्वमादाय प्रवृत्तेः। प्राञ्चस्तु अत्रापि भूतपूर्वगतिमेव वदन्ति। तच्च प्रतीत्यनुरोधेन। उपमाव्यञ्जनदशायां तदलङ्कारत्वाननुभवात्, किन्तु तदनन्तरमेव, राजादिरतिव्यञ्जनदशायामनुभवादिति तात्पर्यात्।

## विस्तारिका

निरुपादानेत्यादि। उपादानमुपकरणं तूलिकादिकम्। अभित्तौ शून्ये, चित्रं नानाकारमालेख्यञ्च कला चन्द्रषोडशांशः, आलेख्यक्रियाप्रावीण्यञ्च।

ननु प्रतियोग्यनुयोग्युपादान एव व्यतिरेकः प्रतीयते, तस्य तन्निरूपणाधीननिरूपणात्, तेन प्रतियोग्युपादाने तद्व्यतिरेकस्य वाच्यतैव न व्यङ्ग्यतेत्याह—अत्रेति। चित्रेणालेख्येनाप्रकृततया व्यङ्ग्येनानुभवेन व्यङ्ग्यस्य तत्कर्तुरप्रकृतस्य प्रकृतस्य शूलिनश्च व्यतिरेकः सम्बन्धः प्रतीयते। तत्र न वृत्त्यन्तरमित्याह—व्यङ्ग्य इति।

एवञ्च व्यतिरेकस्य वाच्यतामात्रभ्रमनिरसनमेव शब्दशक्तिमूलालङ्कारध्वनावुदाहरणान्तरोपादाने बीजमिति सूचितम्।

## सारबोधिनी

निरुपादानेति। उपादानम् उपकरणं तूलादि। अभित्तौ शून्ये। चित्रं नानाकारमालेख्यम्। कला चन्द्रषोडशांशः। लेख्यक्रियायां कौशलञ्च। अत्र व्यतिरेक इति व्यङ्ग्य इत्यकषञ्जनीयम्। अत्र हि चित्रेणालेख्येनाप्रकृततया व्यङ्ग्येनानुभावेन व्यङ्ग्यस्य तत्कर्तुरप्रकृतस्य शूलिनश्च व्यतिरेकः सम्बन्धः प्रतीयते। तथाहि अन्ये

शिल्पिनः अधारभित्त्याद्युपादानेन चित्रं कुर्वन्ति, अयं त्वन्यथैवेति तेभ्यः शूलिन उत्कर्षः प्रतीयते इति । न च तत्र वृत्त्यन्तरमित्यत आह व्यङ्ग्य इति । ब्राह्मणेति । श्रमणे बौद्ध संन्यासिनि यथा ब्राह्मणव्यपदेशस्तथाऽलङ्कार्यस्याप्यलङ्कारत्वव्यपदेश इत्यर्थः । वस्तुतो वाच्यापेक्षया प्राधान्येऽपिरसापेक्षया गुणीभावादलङ्कारत्वमेवेति ।

## काव्यप्रदीपः

**'निरुपादानसंभारमभित्तावेव तन्वते ।**
**जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'**

चित्रं नानाकारमालेख्यं च । कला चन्द्रस्य षोडशो भागः कौशलं च । अत्रोपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्यः शूलिनो व्यतिरेको व्यङ्ग्यः । तस्य चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता ।

ननूदाहृतेषूपमादीनां प्राधान्यम्, न वा । आद्ये कुतस्तेषामलंकारत्वम् । अन्यानलंकरणात् । द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वम् । व्यङ्ग्यस्याप्राधान्यादिति चेत्, न । पूर्वमयमलंकार आसीदित्येतावता अलंकारव्यपदेशात् । यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः । नन्वेवं व्यपदेशसमर्थनेऽप्यलंकारध्वनित्वं न समर्थितमिति चेत्, न । अलंकारपदेन तद्योग्यताया विवक्षितत्वात् । न चैवं रसादिध्वनावप्यलंकारध्वनित्वप्रसङ्गः । संलक्ष्यक्रमवैव तादृशस्य तथाभिप्रेतत्वात् । वस्तुतस्तु प्राधान्याप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव, नतु रसापेक्षयापि । तदपेक्षया सर्वत्र गुणीभावात् । तथा चोपमादीनां रसाङ्गतयालंकारत्वं वाच्यपेक्षया प्राधान्यं चेति न दोषलेशावकाशः ।

## आदर्शः

शब्दशक्तिमूलं व्यतिरेकालङ्कारमाह—निरुपादानेति, तस्मै शूलिने नमः । कीदृशाय ? उपादानस्य समवायिकारणस्य सम्भारं विना चित्रं नानाकारं जगद् अभित्तौ अनाश्रय एव तन्वते । शुक्रशोणितादिसमवायिकारणमातृजठराद्याश्रयसापेक्षत्वेऽपि स्तुतित्वादारोप्येदमुक्तम् । कला चन्द्रकला तया श्लाघ्याय । अत्रेति शिल्पचातुरीबोधककलाशब्दस्य आलेख्यबोधकचित्रशब्दस्य च सामर्थ्याद् हरितालाद्युपादानसापेक्षभित्त्याद्यधिकरणकचित्रलेखकाद्वैलक्षण्यरूपो व्यतिरेकालङ्कार इत्यर्थः । ननु वाच्यस्य व्यङ्ग्यस्य वा प्रकर्षकत्वे सत्येवालङ्कारत्वमिति हारादिवदलङ्कारा इत्यग्रे वक्ष्यति तेषां व्यङ्ग्यत्वे त्वास्वादपात्रतया प्राधान्यात् परप्रकर्षकत्वाभावेन कथमलङ्कारत्वमित्यत आह—अलङ्कार्य्यस्यापीति । श्रमणः सन्यासी, तस्य तद्दशायां ब्राह्मणयाभावेऽपि यथा दशान्तरीयब्राह्मण्यमादाय तथा व्यपदेशः तथा वाच्यतादशीयमलङ्कारत्वमादाय तथा व्यपदेश इत्यर्थः ।

## सुधासागरः

व्यतिरेको यथा—निरुपादानेत्यादि । अयमर्थः । तस्मै शूलिने महादेवाय नम इत्यन्वयः कीदृशः निर्गतः उपादानसम्भारः उपकरणसम्पत्तिर्यत्र तद्यथा स्यात्तथा अभित्तावनाधारे शून्ये इति यावत् । चित्रं नानाकारं जगत्तन्वते विस्तारयते ।

यद्यप्युपादानसम्भारं विना न सृष्टिसम्भवस्तथा ऽप्युपकरणसम्पत्तेरपि भगवदिच्छापन्नत्वेन तत्पारवश्याभावे तन्निरपेक्षत्वमुपचरितं बोध्यम् ।

एवं कलया—चन्द्रषोडशांशरूपया श्लाघ्यायेति प्रकृतोऽर्थः । व्यञ्जनया तु चित्रकलाशब्दाभ्यामालेख्ये तत्प्रावीण्योपस्थित्या मषीतूलिकाद्युपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्य उत्कर्षः प्रतीयत इति । अत्र चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता बोध्या ।

ननूदाहृतेषूपमादीनां प्राधान्यं न वा । आद्ये कुतस्तेषामलङ्कारत्वम्, अन्यानलङ्करणात् । द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वम्, व्यङ्ग्यस्याप्राधान्यादिति चेन्न । पूर्वमयमलङ्कार आसीदित्येतावता ऽलङ्कारव्यपदेशात् । यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः ।

नन्वेवं व्यपदेशसमर्थनेऽपि अलङ्कारध्वनित्वं न समर्थितमिति चेन्न । अलङ्कारपदेन तद्योग्यताया विवक्षितत्वात् । नचैव रसादिध्वनावप्यलङ्कारध्वनित्वप्रसङ्गः । संलक्ष्यक्रमस्यैव तादृशस्य तथाभिप्रेतत्वात् । एवं च प्राधान्याऽप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव न तु रसापेक्षयापि, तदपेक्षया सर्वत्र गुणीभावात् । तथा चोपमादीनां रसाङ्गतयाऽलङ्कारत्वे वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अलङ्कार्यस्यापीत्यादि ।

## विवरणम्

शब्दशक्त्या वस्तुध्वननपरम्परामुखेनालङ्कारध्वननस्थलमुदाहरति—निरुपादानेति । उपादनं कर्मेन्द्रियं करचरणादि । चित्रं नानास्वभावकम् । कलया चन्द्रकलया श्लाघ्याय । अत्र कलापदेन शिल्पस्य, चित्रपदेनालेख्यस्य ध्वननम्, ताभ्यां हरस्य शिल्पिनः । तत्र चाक्षिप्ताया उपादानभित्त्याद्यपेक्षाया अन्वयः । अथ चित्रकराच्छूलिनो व्यतिरेकावगम इति दिक् ।

एकत्र ध्वनिव्यवहारमलङ्कारव्यवहारं च समर्थयते—ब्राह्मणेति ।

**वस्तुमात्रं यथा**

**पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।**
**उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥ ५८ ॥**

**अत्र यद्युपभोगक्षमोऽसि तदा, आस्स्वेति व्यज्यते ।**

---

**सङ्केतः**

पन्थिअ इति । तृणादिशय्या—स्रस्तरम् । मणं—मनागपि । उन्नतं पयोधरं मेघं प्रेक्ष्य स्रस्तराद्यभावेऽपि यदि वससि तत् वस । अत्र स्रस्तरनिषेध—प्रस्तरोन्नतपयोधरादिशब्दशक्तिजं—'प्रहरचतुष्टयोपभोगात् नात्र निद्रातुं लभ्यते' इति, 'सर्वे ह्यत्र अविदग्धाः' इति, 'तत् उन्नत पयोधरां मां आलोक्य उपभोक्तुं यदि वससि तदा आस्व' इति च वाक्यव्यङ्ग्यं उपभोगक्षमोऽसि इत्यनेन क्रोडीकृत्य दर्शयति—अत्र यद्युपभोगेति । वाच्यबाधेन च व्यङ्ग्यस्य स्थितत्वात्, तयोः मिथः असङ्गत्या नोपमानोपमेयभावः इति नालङ्कारो व्यङ्ग्यः, किन्तु वस्त्वेव ।

'पंथिअ ! ण एत्थ सत्थरअं ।'

[पथिक ! नात्र शास्त्ररतम् (शस्त्ररतम्) ।]

इति पाठे तु सत्थरअं—शस्त्ररतम् । यदि वा—शास्त्रोक्तं च तत् रतं च शास्त्ररतम् । तच्च नास्ति, ग्राम्याणां अविदग्धत्वात् इति । अस्मिन् पाठे च अयं गुणः—श्लिष्टशब्दानां बहुत्वात् वाक्यत्वेन वाक्यप्राकाश्यत्वमिति । पत्थरत्थले इत्युक्त्या एकान्ततासूचनाऽपि ।

**सङ्केतः (रुय्यकः)**

**पथिक नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे ।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तद् वस ॥**

संस्तरस्तृणादिशय्या, प्रस्तरः पाषाणः । एवमपि चेन्मेघभयं तद्वस । व्यंग्यन्तु प्रहरचतुष्टयमप्युपभोगेन नात्र निद्रां कर्त्तुमुपलभ्यते, सर्वे ह्यत्राविदग्धाः, तदुन्नतपयोधरां मामुपभोक्तुं यदि वससि तदाऽऽस्स्वेति वस्तु । अत्र वाच्यबाधनेन व्यंग्यस्य स्थितित्वात्तयोर्नोपमानोपमेयभावः ।

**बालचित्तानुरञ्जनी**

एवमलङ्कारव्यङ्ग्यमुदाहृत्य वस्तुमात्रव्यङ्ग्यमुदाहरति वस्तुमात्रम् इत्यादि । मा पथिक रात्र्यन्धक इह पत्थरत्थले ग्रामे । सत्थरं स्रस्तरं तृणादितुल्यमाणं मनाक्, एत्थि नास्ति । उण्णअपओहरं उन्नतपयोधरे मेघान्

पश्येदित्येत्वम् । स्तनपक्षे द्विवचनस्य बहुवचनमिति बहुवचनम् । किं च पेख्खिऊण यदि वससि तदा वस । प्रस्थरस्थलमित्यनेन तत्रत्याना स्त्रीणां दारुणसंभोगत्व प्रतिपाद्यते ।

## काव्यादर्शः

संस्तरस्तृणादिशय्या । मणं मनागपि । प्रस्तराः पाषाणाः । एवमपि चेन्मेघभयं तद् वस । उन्नयेति, उन्नतं मेघं प्रेक्ष्येत्यर्थः । व्यङ्ग्यं तु प्रहरचतुष्टयमप्युपभोगेन नात्र निद्रा कर्तुं लभ्यते । सर्वे ह्यत्राविदग्धाः, तदुन्नतपयोधरां मां दृष्ट्वा उपभोक्तुं यदि वससि तदास्स्वेति वाक्ये वस्तुमात्रम् । अत्र वाच्यबाधेन व्यङ्ग्यस्य स्थितत्वात्तयोर्नोपमानापमेयभाव इति नालंकारो व्यङ्ग्यः ।

## विवेकः

अत्र विरोधव्यतिरेकावलङ्कारत्वाद्वाच्यासंलग्नत्वेऽपि प्रतीयमानत्वादात्मत्वेनालङ्कार्यौ" (रि. सं. ३० पृ) वस्तुध्वनिर्यथा पंथिअ इति । पथिक नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे । उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥ संस्तरस्तृणादिशय्या, प्रस्तराः पाषाणाः । एवमपि चेन्मेघभयं तद्वस । व्यङ्ग्यन्तु प्रहरचतुष्टयमप्युपभोगेनात्र निद्रादारिद्र्यमस्ति । सर्वे ह्यत्र प्रस्तरप्राया अविदग्धाः, तदुन्नतपयोधरां मामुपभोक्तुं यदि वससि तदा तिष्ठेति वस्तु । अत्र वाच्यबाधनेन व्यङ्ग्यस्य स्थितत्वात्तयोर्नोपमानोपमेयभावः । किञ्च यत्र शब्दशक्त्या वस्त्वन्तरस्य प्रतीतिस्तत्रोपमानमन्तरेणापि सम्बद्धार्थत्वं दृश्यते यथा (अ. स. श्लेषप्रः)— 'सद्यः कौशिकदिग्विजृम्भणवशादाकाशराष्ट्रं रसात्त्यक्त्वा धूसरकान्तिवल्कलधरो राजाऽस्तशैलं ययौ । तत्कान्ताऽप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा ॥ इति हरिश्चन्द्रचरिते प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुषि चन्द्रे रोहिताश्वाख्यतनयसहितया औशीनर्या वध्वा युक्तस्य राज्ञो विश्वामित्रसंपादितोपद्रववशात् प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसीं प्रति प्रस्थानं सूचितम् । तथाच कौशिकशब्दः प्रकृते इन्द्रोलूकयोर्वर्तते, सूचनीयार्थविषयत्वेन तु विश्वामित्रवृत्तिः । वल्कलसुताभ्यां त्वौपम्यं सूचनीर्थनैरपेक्ष्येण सादृश्यसंभवमात्रेण विश्रमणीयम्, अतश्च प्रकृतेन सूचनीयस्य संबन्धाच्छब्दशक्तिमूलो वस्तुध्वनिरेवायम्' । एवमन्यत्रापि यत्रोपमापरिहारेण प्रकारान्तरेणापि सम्बन्धो घटते तत्रोपमाध्वनावभिरेशा[निवेशा] न कर्तव्यः किन्तु तत्र शब्दशक्तिमूलो वस्तुध्वनिरित्यवगन्तव्यम् ।

## दीपिका

सत्थर स्रस्तरं शास्त्रपूर्वज्ञानोपदेशश्च । मणं मनाक् । पयोधराः स्तना मेघाश्च ।

अत्र वाच्यव्यङ्ग्ययोः सादृश्यादिविरहान्नलङ्कारध्वनिः । सादृश्यादिहीनयोरपि च स्वरूपमात्रेण ज्ञानेऽपि व्यञ्जनं नियामकमित्युक्तम् । अत्र यदीति पर्यवसानकथनं न तु प्रस्तुतम् ।

## दर्पणः

**पथिक नात्र प्रस्तरोऽस्ति मनाक् प्रस्थरस्थले ग्रामे ।**
**उन्नतपयोधरां प्रेक्ष्य यदि वससि तद्वस ॥**

प्रस्तरणस्तृणादिशय्या । प्रस्तराः पाषाणाः । पयोधरो मेघः । व्यङ्ग्यपक्षे सस्तरं शास्त्रं रत्याद्यनुशासकम् । उन्नतपयोधरां माम् इत्यर्थः । न चेह स्रस्तरशब्दस्य शास्त्रार्थत्वे उपमाध्वनिः, सादृश्यस्याविवक्षितत्वात् । रहस्यसङ्गोपनार्थमेव द्व्यर्थप्रयोगः ।

## साहित्यचूडामणिः

पंथिअ णेति—

**पान्थ नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे ।**
**उन्नतपयोधरान् प्रेक्ष्य यदि वससि तदा वस ।।**

इति वर्षतौ वासार्थिनं पथिकयुवानमुद्दिश्य कस्याश्चिदुक्तिः । मनागिति शयनीयसापेक्षशयनत्वमव्युत्पन्नम्, अत्र ग्रामे, यतोऽयं प्रस्तरस्थलः पाषाणपट्टप्रायभूमिकः अरसिकजनबहुलश्च । उन्नतान् पयोधरान् नभसि प्रेक्ष्येति स्पष्टम् उन्नतौ पयोधरावुरसि प्रक्ष्येति बोद्धव्यमात्रे । यदि निद्रालस्यव्युदासात् सम्भोगे सन्नद्धोऽसि तदा वस नान्यथा, स्वभर्तृसाधारण्येन स्पृष्टास्पृष्टिमात्रं चेत् तदलं परपुरुषस्पर्शपातकेन । अत्र पयोधरशब्दशक्तिः प्राधन्यान्मूलम् ।

## सम्प्रदायप्रकाशिनी

अथ वस्तुमात्रध्वनिरुदाह्रियते—पन्थीति ।

**पथिक नात्र संस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे ।**
**उन्नतं पयोधरं प्रेक्ष्य यदि वससि तद् वस ।।**

संस्तरः तृणादितल्पम् । अत्र किं संस्तरान्वेषणेन गजकुम्भकल्पावुन्नतौ स्तनौ यद्युपभोक्तुं क्षमोऽसि तदास्स्वेति वस्तु व्यज्यते ।

## मधुमती

ननु वाक्यव्यञ्जकतोदाहरणप्रकरणे श्लिष्टपयोधरपदमात्रव्यञ्जकत्वोदाहरणं अयुक्तं इति अस्वरसादाह—शनिरिति । अत्रेति । विरुद्धावपि विरुद्धतया प्रतीतावपि ।

## विस्तारिका

स्वयं दूती द्व्यर्थशब्देनाच्छाद्य पथिके रहस्यमाह—पथिअ इति ।

**पथिक नात्र स्रस्तरमस्ति मनागपि प्रस्तरस्थले ग्रामे ।**
**उन्नमतः पयोधरान् प्रेक्ष्य यदि वससि तद्वस ।।**

पक्षान्तरे सत्थरं शास्त्रम्, पत्थरत्थले मूर्खबहुले ग्रामे, न तु नगरे; उन्नमतः, न तु उन्नतान्, उन्नतेर्वृद्धावितरवर्तमानता । पयोधरान् स्तनान् । प्राकृते द्विवचनस्थाने बहुवचनम् ।

अत्र शास्त्रभावादाकारेङ्गितभावज्ञानानधिष्ठिते ग्रामे सति चैवंविधोद्दीपने मेघे उन्नतस्तनदर्शनेन को नाम क्षम:, नान्यत्र गच्छतीति वक्त्र्यभिप्राय: प्रकाशत इति वस्तुन्यपि व्यङ्ग्ये शब्दशक्तिमूलता।

नानार्थशब्दानुपादाने प्रदर्शिते व्यङ्ग्यानवगतेस्तदाह—यदीति। एतेन द्वितीयार्थेष्वेव शब्दशक्तिमूलता, उपभोगक्षमत्वे न स्थितौ पुनरर्थमूलत्वमेव। न च व्यङ्ग्यं वस्तूपमादय इव वाच्यव्यङ्ग्ययो: सम्बन्ध:, येन तस्यापि तन्मूलता स्यात्; वस्तुनि व्यङ्ग्ये वस्तुतो वाच्यव्यङ्ग्ययोरसम्बन्धादिति निरस्तम्। शास्त्राभावोन्नतमेघस्तनदर्शनहेतुकगतिनिवृत्तौ शब्दान्वयतिरेकानुविधानस्य स्फुटत्वात्।

न चात्र वाच्यव्यङ्ग्ययोरसम्बन्ध:, आच्छादकाच्छाद्यभावस्यैव तत्त्वात्, अन्यथा वाक्यभेदप्रसङ्गात्। कुव्याख्यान्तराण्युपेक्षितानि।

न चात्र मेघा एव स्तना इत्युपमासाधर्म्यस्याप्रतीते: 'विद्वन्मानस'इत्यादाविव शब्द एव समानधर्मतेति चेत्, उच्यते। असम्बन्धभयात् सम्बन्धत्वेन कल्पनीयाया उपमाया आच्छाद्यच्छादक रूपसम्बन्धान्तरे सत्यप्रसरात्।

किञ्च, तद्वति समानधर्मेण प्रतीयमानायामुपमायामपि वस्तुव्यङ्ग्योत्थापकत्वेन तन्मुखप्रेक्षितया न तेन, किन्तु प्रधानेन वस्तुनैव व्यपदेश:। वस्तुनि चानलङ्कारत्वमिति वस्तुमात्रोदाहृति:।

अथ यद्युपभोगक्षमोऽसि तदास्स्वेति विशिष्टव्यङ्ग्य उपभोगांशे शब्दशक्ते: स्थित्यंशे चार्थशक्तेरुद्भटत्वमित्युभयशक्तिमूलतेति चेन्न, अत्रोपभोग एव वक्तृतात्पर्यात् तद्भावे स्थितेरकिञ्चित्करत्वात्। अत एवोक्तं क्षमोऽसीति। तदाऽऽस्स्वेति हेतु:, तिष्ठ गच्छ वेति नाग्रह इति। उपभोगे च शास्त्राभावोन्नमन्मेघोन्नतस्तनदर्शनान्येव प्रभवन्तीति शब्दशक्तिमूलोत्थध्वनि:।

ये तु कष्टसृष्टया शब्दान्तरस्यार्थान्तरत्वं व्याख्याय शब्दमूलत्वमामनन्ति तद्वद् दर्शितरीत्या तदर्थकपदान्तरोपादानेऽपि सत्थरादिपदस्य तदर्थव्यञ्जकत्वात्, तत्सत्त्वे सत्थराद्यसत्त्वे वा व्यञ्जना। न सत्थरादिशब्दशक्तिरेव प्राधान्यावमतेरिति न काचिदनुपपत्ति:। एवञ्च न्याय: सर्वत्रैवावधेय इति।

## सारबोधिनी

वस्तूदाहरति पंथिअ इति। स्वयं दूती-द्व्यर्थशब्देनाच्छाद्य रहस्यं पथिनं कथयति।

**पथिकः नात्र स्रस्तरमस्ति मनाक् प्रस्थरस्थले ग्रामे।**
**उन्नमतः पयोधरान् दृष्ट्वा यदि वससि तद्वस॥**

पक्षान्तरे सत्थरं शास्त्रम् पत्थरत्थले मूर्खवत्कुले ग्रामे, न तु नगरे। पयोधरान् स्तनान्। प्राकृते द्विवचनस्थाने बहुवचनम्। अत्र शास्त्राभावादाकारेङ्गितज्ञानानधिष्ठिते ग्रामे सति चैवंविधोद्दीपने उन्नतस्तनदर्शनेन को नाम क्षमोऽन्यत्र गच्छतीति वदन्त्या: अभिप्राय: प्रकाशत इति वस्तुन्यपि व्यङ्ग्ये शब्दशक्तिमूलता। नानार्थशब्दानुपादाने प्रदर्शितव्यङ्ग्यानवगते:। तदाह यदीति। एतेन द्वितीयार्थेष्वेव शब्दशक्तिमूलता। उपभोगक्षमत्वेन स्थितौ पुनरर्थशक्तिमूलत्वमिति निरस्तम्। तत्रापि शब्दशक्त्युपयोगस्य दर्शितत्वात्। न च वाच्यव्यङ्ग्ययोरसम्बन्धे वाक्यभेद: स्यादिति वाच्यम्। आच्छाद्याच्छादकभावस्यैव संबन्धत्वात्। अत्र वाच्यमभिभूयैव व्यङ्ग्यस्य स्थितत्वात् न तयोरुपमानोपमेयभाव: संबन्ध:। द्वयो: समप्राधान्य एव तदवकाशादिति।

## काव्यप्रदीपः

वस्तुमात्रं यथा—

**'पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।**
**उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु॥'**

अत्र यद्युपभोगक्षमोऽस्ति तदा आस्वेति व्यज्यते। तच्च पओहरेति शब्दशक्तिमूलमिति।

## आदर्शः

पन्थिअ ण एत्थेति—

**पथिक नात्र संस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।**

**उन्नतपयोधरं प्रेक्ष्य यदि वससि तद् वस॥ इति संस्कृतम्।**

निवासार्थिनं पथिकं प्रति स्वयं दूत्या उक्तिरियम्। संस्तरं शयनीयकटम् मनाग् अल्पमपि तन्नास्ति। प्रस्तर एव वयं स्वपिम इति दर्शयति प्रस्तरस्थल इति। पयोधरं मेधम्। शयनीयोपकरणादिकं निवासोपकरणं नास्त्येव मेघप्रतिरुद्धगतिकतया यदि वस्तुमिच्छसि तद्वसेत्यापाततोऽभिप्रायः। शब्दशक्तिमूलमत्र गूढं व्यङ्ग्य-माह—अत्रेति। इदञ्च परदारगमननिषेधकशास्त्रार्थकस्य प्राकृतश्लिष्टसत्थरपदस्य, स्तनार्थकसंस्कृतश्लिष्टपयोध-रपदस्य, प्रस्तरस्थं स्त्रीजनं पुमान् लाति सम्भोगार्थमत्र गृह्णातीत्येवमर्थकप्रस्तरस्थलपदस्य च सामर्थ्याल्लब्धम्।

## सुधासागरः

वस्तुमात्रमुदाहरति—पंथिएत्यादि। जघनविपुला छन्दः। उक्तञ्च वृत्तरत्नाकरे—

**संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।**
**यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥**

इयं विपुला चपलावन्मुखजघनभेदभिन्ना भवति। प्रथमेऽर्द्धे मुखविपुला उत्तरार्द्धे जघनविपुलेति व्याख्यातारः। स्वयं दूती 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रमनुसृत्य पथिकं प्रत्याह—

**पथिक नात्र संस्तरमस्ति मनाक् प्रस्तरस्थलं ग्रामे।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तद् वस॥**

इति संस्कृतम्। अयमर्थः। हे पथिक! प्रस्तराणां पाषाणानां स्थले अत्रास्मिन् ग्रामे मनागल्पमपि स्रस्तरं कटाद्यास्तरणम् नास्ति। पाषाणबाहुल्येन तृणदुर्लभतासूचनम्। तत्तस्माच्छयनसामग्र्यभावात्कारणादुन्नतपयोधरं प्रेक्ष्य वार्षुकं जलदं बलवत्प्रतिबन्धकं विचार्य यदि वससि तदा वस। न तु विश्रामार्होऽयं ग्राम इति यथाश्रुतोऽर्थः।

व्यङ्ग्यार्थस्तु प्रस्तराणां मूर्खाणां स्थानेऽत्र ग्रामे। सत्थरं शास्त्रम् मनागपि नास्ति। किं पुनः साहित्यम्। ततश्चाकृतीङ्गिताद्यभिज्ञविरहान्निःशङ्कतया उन्नतमनुपभुक्तं स्तनं तादृशोद्दीपनं मेघं च प्रेक्ष्य यदि वससि उपभोग-

क्षमोऽसि तदाऽऽस्स्वेति । प्रस्तरस्थले इत्यनेन शय्यापेक्षाऽपि नास्तीति ध्वन्यते । शब्दशक्तिमूलत्वं परिवृत्त्यसहनानार्थशब्दप्रयोगादवसेयम् ।

**विवरणम्**

पंथिअ इति

**पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥** इति च्छाया ।

अत्रेति । पओहरशब्देनाप्राकरणिकौ स्तनौ व्यज्येते, सत्थरशब्देन शास्त्रम् । तेन नास्त्यत्र निषेधकं शास्त्रम्, उन्नतस्तनौ प्रेक्ष्य वसेति प्राथमिको ध्वनिः । ततः स्तनप्रेक्षणेनोपभोगः, शास्त्रविरहेण च निर्भयतया क्षमता स्मार्यते । अथ व्यङ्ग्यवाच्यपदार्थकरम्बितो यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति बोधः ।

**शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।**

**यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ५९ ॥**

अविरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

---

**सङ्केतः**

व्यत्ययेनेति । शनिरशनिः इत्यादिरूपेण शब्दद्वारकेणैव 'कार्यं निहनन-भानात्मकं त्वदनुवर्तनार्थमेव' इति उत्प्रेक्षानुगृहीतं वस्तुस्वभावं कुरुते इति व्यज्यते । अशनिः वज्रम् । अनुदारः अनुगतदारोऽपि ।

चकारश्चात्र विरोधवाचीति विरोधो वाच्य एव, न तु व्यङ्ग्यः इत्याहुः । तेन नेदं वस्तुध्वनौ द्वितीयार्धमुदाहरणम् ।

**सङ्केतः (रुय्यकः)**

शनिरशनिश्चेति । न चात्र विरोधालंकारः शंकनीयः, एकविषयत्वाभावात् । अन्यो हि शनिरन्यश्चाशनिरिति । उदारोऽनुदारश्चेत्यत्रैकविषयत्वात् सत्यपि विरोधालंकारे शनिरित्यादि वस्तुध्वन्युदाहरणम् । उदार उद्धृताङ्गारकोऽपि तद्विपरीतोऽप्यनुदारः ।

**बालचित्तानुरञ्जनी**

अत्रै वोदाहरणान्तरमाह शनिरिति । भो नरेन्द्र त्वं यस्मै कुप्यसि तं शनिः शनैश्चरः अशनिर्वज्रञ्च उच्चैर्निहन्ति । यत्र पुनः पुरुषविषये प्रसीदसि स पुरुषः उदारः अनुदारः अनुगता दारा यस्य एवंविधश्च सन् भवति । अत्र पूर्वार्द्धमेवोदाहरणम् । उत्तरार्द्धे उदारः अनुदार इति विरोधालङ्कारसद्भावेन अलङ्काररहितवस्तुमात्रव्यङ्ग्यस्यानुदाहरणत्वात् । न च पूर्वार्द्धेऽपि विरोधालङ्कारसद्भावात् कथमुदाहरणत्वमिति वाच्यम् ? शनिरन्यः अशनिरन्यः इति विषयभेदेन विरोधाभावात् । अत एवात्र विषयभेदप्रदर्शनपूर्वकं वस्तुमात्रव्यङ्ग्यं दर्शयति अत्रेति । शब्दतः शनित्वाशनित्वरूपेण, विरुद्धौ हनन लक्षणमेकं कार्यव्यत्ययेन, [कुरुतः] कदाचिच्छनिः कदाचिदशनिरित्यादिक्रमेण ।

**काव्यादर्शः**

अशनिर्वज्रमपि । अनुदारो अनुगतदारोऽपि । चकारश्चात्र विरोधद्योतक एवेति विरोधालंकारो वाच्यो, न तु व्यङ्ग्य इत्यभिप्रायेण वस्तुध्वनावुदाहरणान्तरम् । एकं कार्यं 'निहन्ति' इत्यत्र निहननलक्षणं, 'भाति' इत्यत्र भानलक्षणम् । व्यत्ययेति, शनिरशनिः—इत्यादि रूपेण ।

## विवेकः

शनिरित्यादि । अशनिर्वजम् । शनिरशनिश्चेति—'न चात्र विरोधालङ्कारः शङ्कनीयः, एकविषयत्वाभावात् । अन्यो हि शनिरन्यश्चाशनिरिति । उदारोऽनुदारश्च—इत्यत्रैकविषयत्वात् सत्यपि विरोधालङ्कारे शनिरित्यादि वस्तुध्वन्युदाहरणम् । उदार उद्गतारकोऽपि तद्विपरीतोऽनुदारोऽनुगतदारश्च ।

## दीपिका

शनिग्रहः, अशनिर्वज्रः । उदारो महान् । अनुदारोऽमहान् अनुगतदाराश्च । अत्र पूर्वार्धे विरोधिनोः सामानाधिकरण्यविरहान्न विरहावगतिरिति वस्तुध्वनिः । अत एव विरुद्धावपीति द्विवचनं वृत्तौ । उत्तरार्धे च सामानाधिकरण्यमिति विरोधध्वनिरेव । न च पूर्वत्रापि तच्छङ्का, एकविषयताऽभावात् । चकारबलेन वाच्य एवात्र विरोध इति चेन्न, चकारस्यात्र समुच्चयमात्रेणैव पर्यवसन्नतया तत्कृतस्फुटत्वाभावात् । 'कुपतिमपि कलत्रवल्लभ' मित्यादौ तु पृथिवीपतित्वस्य समुच्चयासङ्गत्या कुपतिपदबोध्यत्वाप्रसिद्धतया चापाततोऽपिना विरुद्ध एवार्थ आक्षिप्यते, पश्चात्प्रकरणाद्यालोचनया समाधिरिति वाच्यालङ्कारता । अत एव पूर्वं प्राकरणिकार्थावभासः, पश्चादेव विरोधेन प्रतीतिरिति( ?) । एतदेवाभिसन्धायास्माभिः पूर्वं विरोधाभास इति वृत्तौ विरोधस्याभासः प्रतीतिरिति व्याख्यातम् ।

## दर्पणः

शनिग्रहः । अशनिः कुलिशम् । अत्रैकयोरेकविषयत्वाभावात् न विरोधालङ्कारः । उदारो महान् अनुगता दारा यस्येत्यनुदारः । अत्र तु विरोधालङ्कार एव । चकारस्य समुच्चयार्थत्वेनापि गतार्थत्वान्न विरोधालङ्कारस्य वाच्यत्वम् । अत्रेति । विरुद्धौ शन्यशनी ।

## साहित्यचूडामणिः

शनिरिति । शनिः शनैश्चरः अशनिर्निघातः शब्दशक्त्या तद्विरुद्धश्च । उदारः स्थूललक्षः अनुदारोऽनुकूलकलत्रः तद्विपरीतश्च । यत्र तव कोपः तत्र ग्रहपीडानिर्घातादिर्दैविकी विपत्तिः । यत्र तु तव प्रसादः तत्रौदार्यकुटुम्बानुकुलत्वादि लौकिकी सम्पत्तिः ।

विरुद्धावपीति । शन्यशनी उदारानुदारौ च । एकं कार्यं त्वत्कोपपात्रस्य निहननस्वरूपं कुरुतः । एवं त्वत्प्रसादभाजनस्यौदार्यदारानुकूल्ये भवतः । पूर्वत्र श्लेषानुबन्धिनी शब्दशक्तिर्मूलम् । अत्र तु विरोधशालिनीति विवेकः । प्रतिपत्तिसौकार्यायोदाहरणप्रपञ्चः ।

## सम्प्रदायप्रकाशिनी

शनिरशनिरिति । अशनिर्वज्रम् ।

शन्यशन्योर्वस्तवन्तरत्वान्न विरोधालङ्कारता, अपि तु वस्तुकोटिप्रवेश एवेत्याह—अत्र विरुद्धावपीति । उदारोऽनुदार इत्यत्र तु विरोधालङ्कार एवेति न तदिहोदाहरणम् ।

## विस्तारिका

सालङ्कारवस्तुनो वस्तुमात्रव्यञ्जकत्वमाह—शनिरशनिश्चेत्यादि। अशनिः शनिविरोधी वज्रञ्च। असुरवन्नञो विरोधित्वमर्थः। उदारो महान्, अनुदारस्तदितरोऽनुगतदारश्च। नृपप्रसादादेव धनवत्तया प्रवासाद्यभावादनुगतदारत्वम्।

अत्र केचित्—अत्र द्वितीयार्ध एव विरोधः, विरुद्धधर्मद्वयस्योदारत्वानुदारत्वयोरेकत्र धर्मिणि प्रतीतेः, न तु पूर्वार्धे, शन्यशन्योर्हननक्रियायां समुच्चयेनैवान्वयात्। तेन पूर्वार्धं प्रसङ्गादेवोक्तम्, प्रकृतोदाहरणं तु परार्धमेवेत्याहुः, तन्न; एकस्मिन्नेव नृपविद्वेषिशनितद्विरोधिहन्यमानत्वेन विरोधिद्वयकर्तृकहननयोर्विरोधात् शत्रुशत्रोर्मित्रत्वात्। वज्रकर्तृकत्वेन च समाधानम्। यच्च 'विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत' इत्यत्र विरुद्धाविति द्विवचनेनैकस्यैव विरोधस्य सूचनम्। विरोधद्वये विरुद्धानाञ्च चतुष्ट्वेन बहुवचनं विदध्यादिति तैरुक्तम्, तदप्ययुक्तम्; हननस्य भानस्य चैकैकस्य कार्यस्य पृथक्त्वाद् द्वाभ्यां द्वाभ्यां निष्पाद्यत्वेन द्विवचनस्यैव न्याय्यत्वात्। अत एवोक्तम्—एकं कार्यमिति, एकत्र कार्ये चतुर्भिर्विरोधिभिरनिर्वाहनात्।

## सारबोधिनी

उदाहरणान्तरमाह शनिरिति। अशनिः शनिविरोधी वज्रञ्च। असुरवन्नञो विरोधित्वमर्थः। उदारो महान् अनुदारस्तदितरः। पक्षे न विद्यते उदारो यस्मात् अनुगतदार इति वा। नृपप्रसादेन धनवत्तया प्रवासाद्यनुभवात् अनुगतदारत्वम्।

अत्र केचित्—अत्र द्वितीयार्थ एव विरोधः। विरुद्धयोर्द्वयोर्धर्मयोरुदारानुदारत्वयोरेकत्र धर्मिणि प्रतीतेः। न तु पूर्वार्द्धे, शन्यशन्योर्हननक्रियायां समुच्चयेनैवान्वयसंभवात्। तेन पूर्वार्द्धं प्रसङ्गादुक्तम्। प्रकृतोदाहरणं परार्द्धमेव। अत एव विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इत्यत्र विरुद्धाविति द्विवचनेनैकस्यैव विरोधस्य सूचनम्। विरोधद्वये विरुद्धानां चतुष्टयेन बहुवचनं विदध्यादित्याहुः। तन्न। यत एकस्मिन्नेव नृपतिविद्विषि विरोधिद्वय हन्यमानत्वेन विरोधिद्वयहननत्योः शत्रुशत्रुत्वेन मित्रत्वात्। यच्चोक्तं नैविरुद्धाविति द्विवचनेनैकस्यैवा विरोधस्य सूचनमिति तदपि न चारु। हननस्य भानस्य चैकैकस्य कार्यस्य पृथक् पृथक् द्वाभ्यां निष्पादनेन द्विवचनस्यैव न्याय्यत्वात्। अत एवोक्तम्, एकं कार्यमिति। एकत्र कार्ये चतुर्भिर्विरोधिभिरनिर्वाहात्।

## काव्यप्रदीपः

तथा—

**'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।**
**यस्मै प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥'**

अत्र प्रथमार्धे शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते, नतु विरोधालंकारः। शनिरशनिरित्यनयोः सामानाधिकरण्याभावात्। विरोधस्य च तत्रैव विश्रान्तेः। द्वितीयार्धं तु नोदाहरणम्। तत्र चशब्दस्याप्यर्थत्वे विरोधस्य वाच्यत्वात्। समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति।

## आदर्शः

शब्दशक्त्या साक्षाद्व्यङ्ग्यं वस्तूदाहृत्य तद्व्यङ्ग्यालङ्कारद्वारा व्यङ्ग्यं वस्तूदाहरति—शनिरशनिश्चेति। हे नरेन्द्र त्वं यस्मै कुप्यसि शनिर्ग्रहः अशनिर्वज्रश्च तम् उच्चर्निहन्ति, यत्र जने पुनः प्रसीदसि स उदार अनुगतदारश्च भाति। अत्र पूर्व्वार्द्धे अशनिशब्दस्य शक्त्या शनिविरुद्धे व्यञ्जिते तद्दारा व्यङ्ग्यं वस्तु दर्शयति—अत्रेति। परार्द्धे तु विरोधालङ्कारमात्रं न तु तद्द्वारा दर्शितवस्तुव्यञ्जनम् तत्रैककार्य्यकरणाप्रतीतेः।

## सुधासागरः

संस्कृते वस्तुमात्रव्यञ्जकत्वमुदाहरति—शनिरित्यादि। गाथा छन्दः। लक्षणमुक्तं प्राक्। अयमर्थः। हे नरेन्द्र ! यस्मै त्वं कुप्यसि तं शनिर्ग्रहः अशनिर्वज्रश्च उच्चैरतिशयेन निहन्ति। यस्मै पुनः प्रसीदसि, पुनस्त्वर्थे, स पुरुषः उदारो दाता महान्वा अनुगता दारा यस्य प्रवासाद्यभावात् स तथाभूतश्च भातीति।

अत्र प्रथमार्द्धे शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते। न तु विरोधालङ्कारः। शनिरशनिरित्यनयोः सामानाधिकरण्याभावात्। विरोधस्य च तत्रैव विश्रान्तेः। द्वितीयार्धं तु नोदाहरणम् तत्र चशब्दस्याऽप्यर्थत्वे विरोधस्य वाच्यत्वात्। समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति।

## विवरणम्

एवमलङ्कारप्रधानकानि वस्तुमात्रप्रधानकानि चोदाहरणान्युक्त्वाऽलङ्कारोपरक्तस्य वस्तुनोऽभिधामूलव्यञ्जनागम्यत्वमुदाहरति—शनिरिति। अनुदारः अनुगतदारः। अत्र पूर्वार्धव्यञ्जनीयमाह—अत्रेति। अशनिपदेन शनिविरोधी व्यञ्जनयाऽनुसन्धीयते। ततश्च विरोधेन सहैककार्यजनकत्वस्य विरोधान्तरं परिस्फुरति। तत्समाधानाय त्वदनुवर्तनार्थमिवेति फलोत्प्रेक्षाऽभिव्यज्यते। ततो विरोधाभ्यामुत्प्रेक्षया च विशेषितस्यैककार्यकारित्वस्य वस्तुनोऽभिव्यक्तिरिति भावः। द्वितीयार्धे तु विरोधाभास एव व्यङ्ग्यः, विरोधस्य प्ररूढमात्रस्य प्रकृतबुद्धावननुप्रवेशे विरोधाभासः, तत्प्रवेशे विरोध इति स्पष्टमुपरिष्टात्।

(सू. ५४) अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ ३९ ॥
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।
वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ ४० ॥
वस्त्वलंकारमथ वा तेनायं द्वादशात्मकः ।

स्वतःसंभवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः । कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः । वस्तु वालंकारो वासाविति षोढा व्यञ्जकः । तस्य वस्तु वालंकारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः ।

---

सङ्केतः

तेनोम्भितस्यवेति । तेन कविना उम्भितस्य निबद्धस्य वक्तुः । इदं प्रथमकल्पित इति । अयं प्रथमः, स चासौ कल्पितः इति—इदंप्रथम कल्पितः । कविब्रह्मसृष्टः इत्यर्थः । तत्र स्वतः इति । प्रागनुक्तोऽपि स्वतस्सम्भवी व्यापकत्वात् पूर्व व्याख्यातः । सूत्रक्रमापेक्षया वा प्रथमं व्याख्यातः । अपरः—इदं प्रथमकल्पितः । अत्र प्रौढोक्तिनिमित्तत्व मात्रेणैव साध्यसिद्धेः अन्यभेदद्वयकथनं प्रपञ्चार्थम् । यतः स्वतस्सम्भव्यप्यर्थः कविप्रौढोक्त्यैव जीवति, कविप्रौढोक्तिरेव च तन्निबद्धप्रौढोक्तिः इति ।

सङ्केतः (रुय्यकः)

एवं शब्दशक्तिमूलं निर्णीयार्थशक्तिमूलं वितत्य निर्णेतुमाह—अर्थशक्त्युद्भवोऽपीति । तत्र द्वादशप्रकारत्वेऽयमभिप्रायः—इह व्यंजनव्यापारमूलं ध्वनिस्वरूपं व्यंजनञ्चोभयत्र व्यंजके व्यंग्ये च दत्तपादम् । तत्र व्यञ्जकाश्रयेण प्रकारषट्कं—तथा हि व्यञ्जकस्यार्थस्य भणितिमार्ग इव यद्वा बहिरसम्भवेऽपि प्रौढोक्त्या निष्पन्नत्वम् । साऽपि प्रौढोक्तिः क्वचित् कविनिबद्धस्य सम्बन्धिनी यत्र रसाद्याविष्टो वक्ता । एवञ्च व्यञ्जकस्यार्थस्य त्रैविध्यम्, तत्रापि प्रत्येकं वस्तुमात्रत्वादलंकारत्वाच्चेति द्वैविध्यम् । एवञ्च व्यञ्जकस्य षट् प्रकाराः । व्यङ्ग्यस्यापि वस्तुमात्रत्वालंकाररूपत्वाभ्याञ्च द्वैविध्यम् । प्रकारषट्कस्य द्वाभ्यां गुणने द्वादश भेदा भवन्ति ।

ननु स्वतः सम्भविप्रभृतयो यदि व्यञ्जकार्थगतत्वेन भेदा उच्यन्ते तत् केवलयोर्वाच्यलक्ष्ययोरपि भेदत्वेन किमिति ते न कल्प्यन्तेऽविशेषात् ? अथ व्यञ्जकोपयोगिताया तेषां भेदत्वं तर्हि व्यञ्जकस्योभयत्र दत्तपादत्वादव्यंग्यार्थगतत्वेनापि किमिति नाभिधीयन्ते ? उच्यते निमित्ताभिप्रायेणोक्तत्वात् । व्यञ्जकत्वं हि तन्निमितम्, न व्यंग्यत्वम् । तथाहि कश्चिदर्थः कविनिबद्धेन वक्त्रा प्रौढोक्त्या प्रतिपादित इति व्यञ्जको न कविप्रतिपादितो नापि स्वतः-

सम्भवेन यथा **'शिखरिणि क्व नु नामे'**त्यादौ रागित्वमन्तरेण तस्यार्थस्यावचनानर्हत्वादर्थान्तरं प्रति व्यञ्जकत्वाभावाच्च। कश्चित्तु कविनिबद्धोक्तिमनपेक्ष्यैव कविप्रौढोक्तिप्रतिपादित इत्येव व्यञ्जको न स्वतःसम्भवेन यथा **'सज्जेइ सुरहिमासो'** इत्यादावुदाहृतौ बहिःसम्भवाभावे, न स्वतःसम्भवी, नापि कविनिबद्धं वक्तारमपेक्षते, वक्तुरावेशाभावात्। कविप्रजापतिः प्रौढिनिर्मितत्वेन त्वर्थान्तरं व्यनक्ति। कश्चित् पुनर्बहिरपि भावात् स्वतःसम्भवेन व्यञ्जको यथा **'एवं वादिनी'** त्यादौ स्वयंकृतप्रचुरं लोकव्यवहारे स्थितः, तथाविधश्च व्यञ्जकत्वेन प्रतीयते। लज्जा चात्र व्यभिचारिभावभूताऽपि विभावानुभावयोरतिचारुत्वेन प्रतीतिविश्रान्तिस्थानत्वात् प्रतिपाद्यप्रतिपन्ना सती वस्तुत्वेन व्यवहृता, न भावत्वेन। तेनार्थशक्तिमूलस्य वस्तुध्वनेरिदमुदाहरणम्, नासंलक्ष्यक्रमव्यंग्यस्य भावध्वनेः। तस्माद् व्यञ्जकस्यैवार्थस्य व्यञ्जने निमित्तत्वात् स्वतःसम्भविप्रभृतयो भेदा उक्ता न व्यंग्यार्थगतत्वेनापीति।

## बालचित्तानुरञ्जनी

एवं द्विविधं शब्दशक्तिमूलानुरणनरूपं ध्वनिमुदाहृत्यार्थशक्तिमूलानुरणनरूपं सभेदमाह अर्थेति। अर्थशक्त्यद्भवा द्वादशात्मक इत्युपरिष्टात् संबन्धः। ध्वनेर्द्वादशविधत्वं व्यञ्जकार्थभेदाद्वक्तुं व्यञ्जकस्यार्थस्य द्वादशविधत्वमाह। अर्थो व्यञ्जक इत्यादिना। श्लोकद्वयं व्याकरोति अर्थ स्वतःसंभविनः प्रतिपक्षभूतं इत्यादिना। प्रौढोक्त्यादिविशेषणानुगतं किमप्यन्तरमाह। इदं प्रथमकल्पित इति।

ननु स्वतःसंभविनोऽपि कविनिबद्धत्वेनानयोः को भेदोऽत आह तत्रेति। यद्यप्युभयत्र कविनिबद्धत्वं तथापि एकत्रौचित्येन हि संभावितत्वं अन्यत्र तदभाव इति भेद इत्यर्थः। इदं प्रथमकल्पस्य द्वैविध्यं प्रौढोक्तिमात्राद्यर्थव्याख्यानेन दर्शयति कविनेत्यादिना कवेः। प्रौढौक्तिमात्रसिद्धः, तेन कविना निबद्धः कल्पितो यो वक्ता तस्य प्रौढोक्तिमात्रसिद्धश्चेति द्विविधः। वेति त्रिविध इत्यर्थः। सूत्रगतौ वाशब्दौ चकारद्योतकौ।

एवं प्रथमश्लोकं व्याकृत्य द्वितीयं व्याकरोति वस्तु वेति। त्रिधा व्यञ्जकोऽसावर्थः प्रत्येकं वस्त्वलङ्कार भेदेन द्विविध इति षोढा भवति। अर्थस्य द्वादशविधत्वेन तद्गतध्वनेरपि द्वादशविधत्वमाह इति द्वादशेति।

## काव्यादर्शः

शब्दशक्तिमूलानुरणनपव्यङ्ग्यं द्विभेदमुक्त्वार्थशक्तिमूलानुरणनरूपव्यङ्ग्यं वाक्यप्रकाशमाह—अर्थशक्त्युद्भवेऽपीति। अपि-शब्दो भिन्नक्रमे, तेन व्यञ्जकोऽर्थोऽपि त्रिधा। न केवलमनुस्वानोपमः शब्दशक्तिमूलः संलक्ष्यक्रमो द्विधा, यावत्तद्भेदो द्वितीयोऽपि व्यञ्जकार्थत्रैविध्यद्वारेण त्रिधेत्यपिशब्दार्थः। प्रौढोक्तीति। प्रकर्षेण ऊढः संपादयितव्येन वस्तुना प्राप्तः, ततः कुशलः प्रौढः। उक्तिरपि समर्पयितुव्यवस्त्वर्पणोचिता प्रौढोच्यते। बहिरिति लोकवृत्ते। अपर इति। इदंप्रथमकल्पितः। अयं प्रथम इति रचितः। स्वतः संभवी। कवेः प्रौढोक्तिमात्रान्निष्पन्नः, तेन कविना निबद्धो यो वक्ता तत्प्रौढोक्तिमात्रनिष्पन्नशरीरोवेति। त्रिधा।

## विवेकः

एवं शब्दशक्तिमूलं वस्तु निर्णीयार्थशक्तिमूलं विभज्य (वितत्य) निर्णेतुमाह-- अर्थशक्त्युद्भवोऽपीति। तत्र द्वादशप्रकारत्वेऽयमभिप्रायः—इह व्यञ्जनव्यापारमूलं ध्वनिस्वरूपं व्यञ्जनश्चोभयत्र व्यञ्जके व्यङ्ग्ये च दत्तपदम्। तत्र व्यञ्जकाश्रयेण प्रकारषट्कं तथाहि व्यञ्जकस्यार्थस्य भणितिमार्ग इव बहिरपि सम्भवात्

स्वतः सम्भवित्वम्, यद्वा बहिरसम्भवेऽपि प्रौढोक्त्या निष्पन्नत्वम् । 'प्रकर्षेणोढः सम्पादयितव्येन वस्तुना प्राप्तस्तत् कुशलः प्रौढः । उक्तिरपि समर्पयितव्यवस्त्वर्पणोचिता प्रौढेत्युच्यते । प्रौढोक्तिः क्वचित् कविसम्बन्धिनी यत्र ताटस्थ्येन वर्णनम् । क्वचित्तु कविनिबद्धस्य सम्बन्धिनी यत्र रसाद्याविष्टो वक्ता । एवं व्यञ्जकस्यार्थस्य त्रैविध्यम्, तत्रापि प्रत्येकं वस्तुमात्रत्वादलङ्काररूपत्वाच्चेति त्रैविध्यम् । एवं व्यञ्जकस्य षट्प्रकाराः व्यङ्ग्यस्यापि वस्तुमात्रत्वादलङ्काररूपत्वाच्च द्वैविध्यम् । प्रकारषट्कस्य द्वाभ्यां गुणने द्वादश भेदा भवन्ति ।' (रु. सं. ३१ पृ:) सम्भवी स्वतः स्वतः सम्भवेन सम्भवीत्यर्थः । न केवलमिति—उक्तिवैचित्र्यं तावत् सर्वथोपयोगि भवतीति भावः । स चार्थो यथा यथा वर्ण्यते तथा तथा स्वदत इत्यास्तां तावद्वर्णना यावद्वहिरपि पिण्डौचित्येन तत्समयोचितत्वेन प्रत्यक्षादिनाऽऽलोक्यमानः सुतरां सौभाग्यमावहतीति । 'ननु स्वतः सम्भविप्रभृतयो यदि व्यञ्जकार्थगतत्वेन भेदा उच्यन्ते तत् केवलयोर्वाच्यलक्ष्ययोरपि भेदत्वेन किमिति न वक्ष्यन्तेऽविशेषात् ? अथ व्यञ्जनोपयोगितया तेषां भेदत्वं तर्हि व्यञ्जनस्योभयत्र दत्तपादत्वाद्व्यङ्ग्यार्थगतत्वेनापि किमिति नाभिधीयन्ते ? उच्यते—निमित्ताभिप्रायेणोक्तत्वात् । व्यञ्जकत्वं हि तन्निमित्तम्, न व्यङ्ग्यत्वम् । तथाहि कश्चिदर्थः कविनिबद्धेन वक्ता प्रौढोक्त्या प्रतिपादित इति व्यञ्जको न कविप्रतिपादितो नापि स्वतः सम्भवेन 'यथा—शिखरिणि क्व नु नाम कियच्चिरं' किमभिधानमसावकरोत्तपः । तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥ (ध्व. आ. १ ।१६ वृ:) इत्यत्र रागित्वमन्तरेण तस्यार्थस्यावचनाहेत्वात् प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटुविरचनात्मकविभावोन्मीलनरूपमर्थान्तरं प्रति व्यञ्जकत्वाभावाच्च ।' (रु. सं. ३१-३२ पृ:) न हि लोहितबिम्बफलमयं शुको दशतीत्येतावता कविनिबद्धं साभिलाषं वक्तारमनपेक्ष्य व्यञ्जकता सम्भवति । कश्चित्तु कविनिबद्धोक्तिमनपेक्ष्यैव कविप्रौढोक्तिप्रतिपादित इत्येव व्यञ्जको न स्वतःसम्भवित्वेन यथा—सज्जेइ सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे । अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे ॥ (ह. वि.) (ध्व. आ. २ ।२५ वृ:) इति । 'अत्र वसन्तोऽचेतनोऽनङ्गस्य सखा सज्जयति न केवलं तावदर्पयति । अस्या गाथाया अर्थो बहिःसम्भवाभावात् न स्वतः सम्भवी, नापि कविनिबद्धं वक्तारमपेक्षते, वक्तुरपेक्षाया अभावात् । एवं विधया स्वतः कविप्रजापतिनिर्मितेन तु मन्मथोन्मादकस्य समर्पयितव्यवस्त्वर्पणकुशलयोक्त्या सहकारोद्भेदिनी वसन्तदशा यत उक्ता ततो ध्वन्यमानं मन्मथोन्माथकस्य संरम्भ (स्यारम्भ) क्रमेण गाढगाढीभवन्तमारब्धं व्यनक्ति' (ध्व. आ. लो. १०६ पः) कश्चित् पुनर्वहिरपि भावात् स्वतः सम्भवेन व्यञ्जको यथा—(कु. स. ६ ।८४) एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥ (रु. स. ३२ पृ:) 'अयं ह्यर्थः प्रचुरं लोकव्यवहारे स्थितः, तथाविधश्च लज्जा व्यञ्जकत्वे [न] प्रतीयते । लज्जा चात्र व्यभिचारिभावभूताऽपि विभावानुभावयोरतिचारुत्वेन प्रतीतिविश्रान्तिसारत्वात् प्रतिपाद्यते । प्रतिपन्ना सती वस्तुत्वेन व्यवहृता, न भावत्वेन । तेनार्थशक्तिमूलस्य वस्तुध्वनेरिदमुदाहरणम्, नासंलक्ष्यक्रमव्यङ्ग्यस्य भावध्वनेः । तस्माद्व्यञ्जकस्यैवार्थस्य व्यञ्जने निमित्तत्वात् स्वतः सम्भविप्रभृतयो भेदा उक्ताः, न च व्यङ्ग्यार्थगतत्वेनापीति ।

## दीपिका

स्वतः—कविवर्णनासाचिव्यं बिना सम्भवी तया विनाऽर्थप्रकाशकतया स्वरूपेण वा सम्भवी । प्रौढा चमत्काराधाननिर्वर्णनास्वलौकिकार्थोक्तिः प्रौढोक्तिः । तेन कविना उम्भितस्यान्योक्तौ विनिवेश्य भावकहृदयसंवादयोग्यतया पूरितस्य । कवितुर्हि रामाद्यनुकार्यवन्न रागाद्याविष्टता । ततश्च तदुक्तोपनिबन्धेऽधिकं चमत्करणं संवित्तिसाक्षिकमिति कवितन्निबद्धप्रौढोक्तिभेदानादरिणः परास्तव्या महिमखण्डनकृदादयः । द्वादशात्मकः-प्रधा-

नव्यञ्जकव्यङ्ग्ययोः स्वरूपभेदोपधानात्। अप्रधानव्यञ्जकस्य तु पदादेर्वैचित्र्याद् भेदान्तराणि वक्ष्यन्ते। न केवलमिति प्रौढोक्तिसाहचर्यप्रकटनम्। न खलु तामन्तरेण प्रकाशमानोऽप्यर्थश्चमत्करणयोग्यः, न वा तथाभूतस्य काव्याङ्गता। असन्नप्रसिद्धः। अपरः समनन्तरमेवोक्तः। यद्यपि व्यङ्ग्यस्वरूपेऽपि सम्भवन्ति स्वतः सम्भवादिभेदाः, तथाप्यलौकिकरूपेणैव तस्य काव्योपयोग इत्यगणनम्।

**दर्पणः**

अर्थस्य शक्त्या उद्भवः। अर्थव्यङ्ग्यस्य यत्र काव्येति। न कविना उत्थितस्य काव्ये पूरितस्य विरुद्धस्येति वाच्यम्। न खलु न कवेस्तन्निबद्धस्येव रागाद्याविष्टता। तेन प्रौढोक्तेस्तन्निबद्धवक्तृप्रौढोक्तिरधिकं सहृदयचमत्कारिणीति पृथगुक्ता।

**साहित्यचूडामणिः**

अर्थेति। अपिः प्रमेयशय्यापूरणाय। व्यञ्जकः षड्विध इति प्रकटयितुं त्रैविध्यं तावदाह—अर्थो व्यञ्जक इति। स्वतःसंभवी कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति त्रिविधा। यदाह—

**अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः संप्रकाशते।**
**यस्तात्पर्येण वस्त्वन्यनद् व्यनक्त्युक्तिं विना स्वतः॥** ध्व. २.२२॥

**प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः।**
**अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः॥** ध्व. २.२४॥ इति।

प्रौढोक्तेर्द्वैविध्यं वृत्तिकार [ध्व. २.२४ कारिकावृत्तौ] आह—यथा 'अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थः तस्यापि द्वौ प्रकारौ कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीरः' इति। समर्पणीयवस्तुसमर्पणप्रावीण्यं प्रौढिः प्रकर्षेण ऊढिः प्राप्तिरिति। अत्र त्रिविधस्य पुनर्द्वैविध्यमाहवस्तु वेति। एवं षड्भेदेऽसौ। व्यङ्ग्यस्याप्यर्थस्य द्वैविध्यमाह—व्यनक्ति यदिति। व्यङ्ग्योऽपि कदाचिद् वस्तुमात्रम् एकदा विचित्रो वाक्यार्थ इति द्विधा। यदिति हेतौ। तेनायं ध्वनिर्द्वादशविधः।

न केवलमिति। सारस्वतसृष्टिलक्षणेन भणितिमात्रेणैव निष्पन्नः, किं तर्हि, बहिरपि ब्रह्मसृष्टावपि। प्रतिभामात्रेणेति। कविगतं प्रतिभानमेव रसपरिपूर्णकुम्भोच्चलनवत् प्रौढोक्तितया परिस्फुरति। कविना तन्निबद्धेन वा केनचिन्निष्पन्न इति। द्विविधोऽपर इति। त्रिविध इति स्वतः सम्भवी, द्विविधः प्रौढोक्तिसिद्धश्चेति। अलंकारो वेति।

**अर्थशक्तेरलङ्कारो यत्र व्यङ्ग्यः प्रतीयते।**
**अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः॥** ध्व. २.२५॥

इति ध्वनिदृशा रूपकादिरलङ्कारः क्वचिद् वाच्यकक्ष्यामनुप्रविष्टोऽप्यन्यत्र व्यङ्ग्यतयोपलभ्यते।

**सम्प्रदायप्रकाशिनी**

अथार्थशक्तिमूलं प्रस्तौति—अर्थशक्तीति । उम्भितस्य निबद्धस्य । अयमर्थशक्तिमूलो व्यञ्जकवैचित्र्याद् व्यङ्ग्यवैचित्र्याच्च प्रतिस्वं षोढा भवन् द्वादशविधो भवति । अत्र व्यञ्जकोऽर्थः स्वतः सम्भवी, कविप्रौढोक्तिमात्रनिष्पन्नः, कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नश्चेति त्रिविधः सन् प्रत्येकं वस्तुरूपोऽलङ्काररूपश्चेति षड्भेदः । षड्विधस्यापि च व्यङ्ग्यार्थो वस्तुरूपोऽलङ्काररूपश्चेत्यस्य द्वादशात्मकता ।

तदेतद् व्याचष्टे—स्वतः सम्भवी न केवलमित्यादिना । बहिरपीति । लोक इत्यर्थः । कविप्रौढोक्तिमात्रनिष्पन्नं विवेचयति—कविना प्रतिभामात्रेणेति । तृतीयं विवेचयति—कविनिबद्धेन वेति । वक्त्रेति । निर्मित इत्यनुषज्यते अपरः स्वतस्सम्भविनोऽन्यः । असाविति त्रिविधस्य परामर्शः । अथ व्यङ्ग्यवैचित्र्यं दर्शयति—तस्य च वस्तु वालङ्कारो वेति ।

**मधुमती**

इदानीं अर्थशक्तिमूलं विभज्यते—अर्थेति । तथा च त्रिप्रकारके अर्थे प्रत्येकं वस्त्वलङ्कारयोः व्यञ्जकतया षट् व्यञ्जकानि । तेषां च प्रत्येकं सजातीयविजातीयव्यङ्ग्यभेदात् द्वादशविधत्वमित्यर्थः । ननु स्वतस्सम्भवी तदन्यश्चेति द्विविध एवार्थः, तत् कुतः त्रैविध्यम्? अत आह—द्विविधोऽपरः इति । तथाच स्वतस्सम्भव्यन्यत्वेन एकोऽपि, विवक्षावशात् उक्तरूपद्वयवत्तया द्विविधः इति, त्रिविधः इत्यर्थः ।

ननु—कविनिबद्धभणितिनिष्पन्नोऽपि कविभणितिनिष्पन्न एव-इति चेत्—सत्यम् । प्राधान्याप्राधान्याभ्यां कविभणितेः भेदं विवक्षित्वा त्रित्वाभिधानात् । स्वतन्त्रेच्छायाः अपर्यनुयोज्यत्वात् एतेन—कविनिबद्धवक्तृभणितिनिष्पन्नवत् कविनिबद्धनिबद्धवक्तृभणितिनिष्पन्नस्यापि—

**'हृदये वससीति मत्प्रियं यदवोचः तदवैमि कैतवम् ।**
**उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥'**

इत्यादौ चमत्कारित्वात्, तदपि कुतो नोक्तम्? इत्यनुपयोगः निरवकाशो द्रष्टव्यः । कविनिबद्धफणितिनिष्पन्नत्वेन अस्वतन्त्रकविफणितिनिष्पन्नत्वस्य उक्तत्वात्, तस्य च तत्रापि भावात् । एवं—अर्थस्य अयोनित्वं अन्यच्छायायोनित्वं च कविप्रौढोक्तिनिष्पन्नत्व—स्वतस्सम्भवित्वाभ्यां नातिरिच्येति । यतः प्रमाणान्तरानवगतं कविप्रतिभासिद्धमेव अयोनीत्युच्यते, प्रमाणान्तरावगतं स्वतस्सम्भव्येव च अन्यच्छायायोनीति । अतः न तदादाय आधिक्यं शङ्क्यम् ।

क्वचित्तु—'तेनायं द्वादशात्मकः' इत्यन्तरं 'अर्थो द्विविधः—इदंप्रथमकल्पितः स्वतस्सम्भवी चेति' इति वृत्तौ अधिकः पाठः दृश्यते ।

यद्यपि काव्यस्य सालङ्कारत्वात् वस्त्वलङ्कारयोः एकसत्वे अपरस्यापि तथात्वं आवश्यकम् । तथापि प्राधान्यमाश्रित्य अयं विभागः इति बोद्धव्यम् ।

इदं पुनरत्रावधातव्यम्—कविसमयसिद्धं असत्यमपि कविप्रौढौक्तिसिद्धमित्यादरणीयम्, कीर्तौ शौक्ल्यवितरणवत्, अकीर्तौ श्यामत्ववत्, नृपप्रयाणे रजसा दिशो व्याप्तिवत्, भूकम्पे भयादिवच्च । व्यवहारस्तु

समुचित एव वर्णनीयः । अन्यथा असत्यताप्रतिभासेन 'नायकवत् वर्तितव्यम्' इत्याद्युपदेशे काव्यं न पर्यवस्येत् । अत एव व्यवहारे कविसमयोऽपि नास्त्येव । तत्र च स्वरूपायोग्यता निबन्धनः असत्यताप्रतिभास एव उपदेशविरोधी । तेन—वीरचरिते अन्यर्थ वर्णनेऽपि, बालिवधे असत्यताप्रतिभासेऽपि न दोषः । प्रत्यक्षतो युध्यमानस्य बालिनो वधेऽपि दाशरथेः स्वरूपयोग्यतासत्त्वात् इति ।

## विस्तारिका

अर्थशक्त्युद्भवमाह—अर्थेत्यादि । अर्थशक्त्युद्भवे ध्वनौ तेन कविना उम्भितस्य स्वकाव्ये निबद्धस्य अयमर्थशक्त्युद्भवो ध्वनिः । स्वतःसम्भवी लोकेऽपि दृष्टः । चमत्कारानुगुणोक्तिः प्रौढोक्तिः । मात्रपदेन बहिः सम्भववारणं कविनिबद्धवचनं कविवचनादधिकरागप्रकटकमिति द्वयोर्भेदः, तदाह—अपरो द्विविध इति । षड्भिर्व्यञ्जकैः प्रत्येकं वस्त्वलङ्कृत्योर्व्यञ्जना द्वादशविधो व्यङ्ग्यः क्रमेणेत्यतः पूर्वं स्वतःसम्भवीत्यादीति शेषः ।

यद्यपि व्यङ्ग्यस्य स्वतःसम्भवित्वादिभेदः सम्भवति, तथापि न तन्मुखेन भेदगणनम्, व्यङ्ग्यस्यार्थस्य लोकोत्तरत्वेनैव चमत्कारित्वात् ।

## सारबोधिनी

अर्थशक्त्युद्भव इति । ध्वनाविति शेषः । स्वतः संभवी लोकेऽपि दृष्टः । प्रौढोक्तिश्चमत्कारनुगुणोक्तिः मात्रपदेन बहिः संभववारणम् । तेन कविना उम्भितस्य पूरितस्य वर्णनया उम्भितो नायकादिः । उभ उम्भ पूरण इति धात्वनुसारात् । कविनिबद्धवचनं कविवचनादधिकरागप्रकटकतयाऽधिकचमत्कारकमिति द्वयोर्भेदः । अन्यथा स्वतःसंभवित्वं प्रौढोक्तिनिष्पन्नत्वं चेति द्वैरूप्यमेव विदध्यात् । तदाह अपरो द्विविध इति । असौ त्रिरूपोऽप्यर्थो वस्त्वलङ्काररूपेण प्रत्येकं व्यङ्ग्योऽपि वस्त्वलङ्काररूपाभ्यां द्विरूप एवेति । तेन हेतुनाऽयमर्थशक्त्युद्भवो ध्वनिर्द्वादशात्मको द्वादशविधः ।

## काव्यप्रदीपः

अर्थशक्तिमूलानुरणनरूपं व्यङ्ग्यं विभजते—

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ १६ ॥**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।**

**वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ १७ ॥**
**वस्त्वलंकारमथवा तेनासौ द्वादशात्मकः ।**

स्वतः संभवी न केवलं भणितिनिष्पन्नशरीरः । अपि तु बहिरण्यौचित्येन संभाव्यमानः । प्रौढोक्तिमात्रात्सिद्धः बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा निर्मितः । अयमर्थः—व्यञ्जकोऽर्थस्त्रिधा । स्वतःसंभवी, कविप्रौढोक्तिमात्रसिद्धः, कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्च । स त्रिविधोऽपि वस्तुमात्रमलंकृतिर्वेति षड्विधो व्यञ्जकः । षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वालंकृतिर्वेति द्वादश भेदा भवन्ति ।

**काव्यप्रकाशखण्डनम्**

**अर्थशक्त्युद्भवेऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ।।** (मू. का. ३९, उ.)

**प्रौढोक्तिमात्र(त्रात् ?) सिद्धो वा कवेस्तद्वर्णितस्य च ।**

**वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ।।** (मू. का. ४०)

**वस्त्वलङ्कारमथवा तेनासौ द्वादशात्मकः ।** (मू. का. ४१, पू.)

इति । तत्र स्वतः संभवी, न केवलं भणितिमात्रनिष्पन्नो बहिरौचित्येनापि संभाव्यमानः, प्रौढोक्तिमात्राद् बहिरसन्नपि निर्म्मितः कविना कविनि[ब]द्धवक्त्रेत्यन्यत् । अत्र अर्थशक्त्युद्भवस्य द्वादशभेदा इति यदुक्तं तदनुपपन्नम् । यतः—कविनिबद्धकवित्वात् । तेनायमर्थः—स्वतः सम्भवी प्रौढोक्तिमात्रसिद्ध [प. १६. १] इति द्विविधोऽपि प्रत्येकं वस्त्वलङ्काररूपत्वेन चतुर्विधो व्यञ्जकः । तस्य प्रत्येकं वस्त्वलङ्कारो व्यङ्ग्य इत्यष्टविधो ध्वनिः । अन्यत् तु सर्वं स्वबुद्धिसौष्ठवप्रकटनम् ।

**आदर्शः**

अर्थशक्त्युद्भवमाह—अर्थशक्त्युद्भवोऽपीति । अर्थशक्त्युद्भवोऽप्युच्यत इति शेषः । तत्र अर्थो व्यञ्जक इत्यर्थः । अर्थशक्त्युद्भवेऽपीति क्वचित् पाठः सुगम एव । व्यञ्जकः सोऽर्थस्त्रिविध इत्याह—सम्भवीति । स च वाच्यो व्यङ्ग्यो वेत्यनियम इति बोध्यम् । प्रौढोक्तिमात्रात् सिद्धो वेत्यत्र प्रौढोक्तिः कवेः तेन कविना उम्भितस्य निबद्धस्य जनस्य वा इत्याह—कवेस्तेनोम्भितस्य वेति । मात्रपदात् स्वतः सम्भवित्वव्यवच्छेदः । तथाच वक्तृद्वैविध्याद् द्विविध इत्यर्थः । स्वतःसम्भविना सह तु त्रिविध इति । प्रौढोक्तिश्च अलीकार्थकत्वेऽपि प्रतिभामात्राधीनार्थिका उक्तिः । स्वतःसम्भविपदार्थे व्याचष्टे—अत्रेति । अपित्वित्यर्थे यावदिति । बहिरपीति तादृशशब्दाद् बहिः, प्रमाणेनापीत्यर्थः । औचित्येनेति अनेनेदमुक्तं निर्दिष्टविशेषणविशेष्यव्यक्तयोः संसर्गस्यालीकत्वेऽपि तत्सदृशविशेष्यान्तरे तादृशविशेषणसंसर्गे दृष्टे सत्यपि निर्दिष्टव्यक्तयोरपि तथात्वस्यौचित्येन सम्भावनया स्वतःसम्भवित्वमिति निर्दिष्टव्यक्तिसदृशेऽपि तद्विशेषणादर्शने तु प्रौढोक्त्यैव त्सिद्धिः । एवञ्च अधरो म्लानकमलमिति रूपकं स्वतःसम्भवितया वक्ष्यमाणमुपपत्स्यते शोणत्वसाधर्म्येण अधरसदृशे कमलदल एव म्लानकमलदलाभेददर्शनात् । तथा धम्मिल्लः श्यामलाङ्गः समर इति प्रौढोक्तिसिद्धतया वक्ष्यमाणं रूपकञ्चोपपत्स्यते, बहूद्दीपकतया धम्मिल्लसदृशे उद्दीपकान्तरे श्यामलाङ्गस्मराभेदादर्शनेन प्रौढोक्त्यैव तत्सिद्धेः श्यामलाङ्गस्मरस्यैवाप्रसिद्धेः । परन्तु सादृश्याधीनविशेष्यविशेषणभावरूपकस्थले एव सदृशं विशेष्यान्तरं ग्राह्यम्, अन्यत्र तु निर्दिष्टव्यक्त्योरेव स्वतःसम्भवित्वासम्भवित्वे ग्राह्ये इति मन्तव्यम् । एवमुक्तत्रिविधार्थस्य वस्तवलङ्कारभेदेन षड्विधत्वं कारिकोक्तं व्याचष्टे—वस्तु वाऽलङ्कारो वाऽसाविति । षड्विधानां तेषां व्यङ्ग्या अपि वस्त्वलङ्कारभेदेन द्वादशविधा इति कारिकोक्तं व्याचष्टे —तस्य वस्तु वेति । द्वादशभेद इति द्वादशव्यङ्ग्यवत्वेन काव्यस्यापि द्वादशत्वम् । एवञ्च स्वतःसम्भविनोर्वस्त्वलङ्कारयोरेकैकस्य वस्त्वलङ्कारौ द्वौ द्वौ व्यङ्ग्याविति स्वतःसम्भविव्यङ्ग्याश्चत्वार एवमपरद्वयव्यङ्ग्या अपि चत्वारश्चत्वार इति द्वादशत्वं बोध्यम् ।'

## सुधासागरः

ध्वनाविति शेषः । स्वतःसम्भवी लोकेऽपि दृष्टः । प्रौढाक्तिश्चमत्कारानुगुणोक्तिः । मात्रपदेन बहिःसम्भववारणम् । तेन कविना उम्भितस्य पूरितस्य वर्णनयोम्भितो नायकादिस्तस्येत्यर्थः । 'उभ उम्भ पूरणे' इति धात्वनुसारात् । कविनिबद्धवचनं कविवचनादधिकरागप्रकटकतयाऽधिकचमत्कारकमिति द्वयोर्भेदः । अन्यथा कविनिबद्धभणितिनिष्पन्नः कविभणितिनिष्पन्न एवेति स्वतःसम्भवित्वं प्रौढोक्तिनिष्पन्नत्वं चेति द्वैरूप्यमेव विदध्यात् । अत एवोक्तं वृत्तिकारैर्द्विविधोऽपर इति त्रिविध इति ।

असौ त्रिरूपोऽप्यर्थो वस्त्वलङ्काररूपेण प्रत्येकं द्विधा भूत्वा यतो व्यनक्ति ततः षट्प्रकारो व्यञ्जकस्तेषां प्रत्येकं व्यङ्ग्योऽपि वस्त्वलङ्काररूपाभ्यां द्विरूप एवेति । तेन हेतुनाऽयमर्थशक्त्युद्भवो ध्वनिर्द्वादशात्मको द्वादशविध इत्यर्थः ।

अत एव प्रदीपकारैर्व्याख्यातम्—'स्वतःसम्भवी न केवलं भणितिनिष्पन्नशरीरः अपि तु बहिरप्यौचित्येन सम्भाव्यमानः' प्रौढोक्तिमात्रात्सिद्धो बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा निर्मितः । अयमर्थः । व्यञ्जकोऽर्थस्त्रिधा । स्वतःसम्भवी, कविप्रौढोक्तिमात्रसिद्धः कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्च । स त्रिविधोऽपि वस्तुमात्रमलङ्कृतिर्वेति षड्विधो व्यञ्जकः । षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वाऽलङ्कृतिर्वेति द्वादशभेदा भवन्ती'ति । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह तत्र स्वतःसम्भवीत्यादि ।

## विवरणम्

अर्थेति । 'अर्थशक्त्युद्भवोऽप्ययम्, तेन द्वादशात्मकः' इति सम्बन्धः । तेन केनेत्याकाङ्क्षायां यदसौ षड्भेदो वस्त्वलङ्कारं वा व्यनक्तीत्युक्तम् । व्यञ्जकस्य षड् भेदानुपपादयति—अर्थ इत्यादिना वेतीत्यन्तेन । भणितिमात्रेत्यनेन काव्यतदुपजीविप्रमाणातिरिक्तप्रमाणानिष्पाद्यं शरीरं विशिष्टबुद्धिर्यस्येति लभ्यते । यावत् किन्तु । बहिः प्रमाणान्तरेणापि । सम्भाव्यमानो बोधयितुं योग्यः । योग्यतामेव विवृणोति—औचित्येनेति । धर्मितावच्छेदकावच्छेदेन धर्मस्य बाधनिर्णयाभावेनेत्यर्थः ।

'अधरः कमलदलम्' इति रूपके कमलदलादिपदस्य तत्साधर्म्यवति लक्षणया, शक्यार्थ एव वा गुणाभेदसंसर्गेणाधरेऽन्वेति । न केवलं स्वरूपाभेदः, यावत् सैवेयं गुर्जरी' इत्यादौ जात्यभेद इव 'गौर्वाहीकः' इत्यादौ सम्भवति गुणाभेदोऽपि वाक्यार्थ इति स्वतः सम्भवित्वमेव, 'धम्मिल्लः श्यामलाङ्गः स्मरः' इत्यादौ धम्मिल्लस्मरगुणाभेदो लोके बाधित इति प्रौढोक्तिसिद्धत्वमेव ।

परे तु रूपकादिस्थल उपमानस्योपमेयस्य च निर्दिष्टसाधारणधर्मदर्शनमेवौचित्यम् । तच्च 'अधरः कमलदलम्' इत्यत्राधरे कमलदले च सम्भवत्येव । 'धम्मिल्लः स्मरः' इत्यादौ स्मरे उपमाने श्यामलाङ्गत्वादिसाधारणधर्मसम्बन्धो न दृष्ट इति प्रौढोक्तिसिद्धतैव । रूपकादिभिन्नस्थले तूद्देश्यजातीये क्वचिद् विधेयधर्मसम्बन्धदर्शनमेवौचित्यमित्याहुः ।

कविनेति। प्रतिभा उत्प्रेक्षाख्यज्ञानस्य करणम्, तन्मात्रेण प्रथमतो निर्मित उत्प्रेक्षाज्ञानेन विषयीकृतः, पश्चाच्छ्रोतॄणां कविप्रौढोक्त्या सिद्ध इत्यर्थः। कविनिबद्धेन वेत्यनेनोम्भित पदार्थो व्याख्यातः। कविरपि रघूणामन्वयं वक्ष्ये' इत्यादिना कविनिबद्ध एवेति तद्वारणाय—वक्त्रेत्युक्तम्। प्रवक्त्रेत्यर्थः। अपरः स्वतः सम्भवी। त्रिविध इति व्यञ्जक इत्यत्रान्वेति। द्वादशेति। स्वतः सम्भविनो व्यञ्जकस्य वस्त्वलङ्कारभेदाद् द्वैविध्यम्, तयोश्च वस्त्वलङ्कारव्यङ्ग्यद्वैविध्याच्चातुर्विध्यम्। एवं कविनिबद्धप्रौढोक्तिसिद्धयोरपि व्यञ्जकयोः प्रत्येकं चातुर्विध्यमिति द्वादश भेदा इत्यर्थः।

क्रमेणोदाहरणम्—

**अलसशिरोमणि धुत्ताणं अग्गिमो पुत्ति धणसमिद्धिमओ।**
**इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ॥ ६० ॥**

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते।

---

### सङ्केतः

अलसेति। समिद्धिमओ समृद्धिमयः समिद्धमदो वा। अन्यासां अप्रौढस्त्रीणां नीरसोऽपि, मम चातुर्यात् वशीभूतः इत्यभिप्रायः। अत्र गाथावस्तुना 'ममैव भोग्यः' इति वस्तु व्यज्यते।

### सङ्केतः (रुय्यकः)

**अरसशिरोमणिर्धूर्त्तानामग्र्यः पुत्रि धनसमृद्धिमयः।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता॥**

अरसा अरोचकिनः। प्रफुल्लविलोचनत्वं सुन्दरपदार्थदर्शनेन समर्थं सदात्मैकभोग्यत्वं व्यनक्ति। अस्य वाच्यस्य कविना प्रतिपादितत्वेऽपि बहिरपि सम्भवात् स्वतःसम्भवित्वम्।

### बालचित्तानुरञ्जनी

तत्र वस्तुरूपव्यङ्ग्यस्योदाहरणमाह अलसेति। पुत्ति हे पुत्रि अलससिरोमणि अलसशिरोमणिः। धुत्ताणं अग्गिमो धूर्तानामग्रिमः। धणसमिद्धिमओ धनसमृद्धिमयः। इअ भणिएण इति भणितेन, णअङ्गी नताङ्गी, पप्फुल्लविलोअणा प्रफुल्लविलोचना, जाआ जाता। व्यङ्ग्यमाह अत्रेति। अलसत्वादस्यान्यत्र गमनाभावः। धूर्तत्वेन संभोगे रतिसम्पादकत्वम्। धनिकत्वेन धनदातृत्वमित्यादिना वाक्यार्थरूपेण वस्तुना ममैवायमुपभोगयोग्यः। अहमेव चातुर्यात् एनमावर्जयिष्यामीति व्यज्यत इत्यर्थः।

### काव्यादर्शः

असाविति व्यञ्जकोऽर्थः। 'इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता। अत्र वाक्यार्थेन वस्तुमात्ररूपेण धनसमृद्धिमयत्वेन ममैव भोग्य इति वस्तु व्यज्यते।

### विवेकः

अरसेत्यादि—अरसशिरोमणिर्धूर्तानामग्रणीः पुत्रि धनसमृद्धिमयः। इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता। अरसा अरोचकिनः प्रफुल्लविलोचनत्वं सुन्दरपदार्थदर्शनेन समन्वितं सदात्मैकभोगत्वं व्यनक्ति। अस्य वाक्यस्य कविना प्रतिपादितत्वेऽपि बहिरपि सम्भवित्वात् स्वतः सम्भवित्वम् (रु. सं. ३२ पृ:)।

## दीपिका

अरसाः कौतुकानिविष्टाः, धूर्त्ता वञ्चकाः । अत्रेति—प्रफुल्लविलोचनत्वेन ममैवोपभोगयोग्य इति वस्तु व्यज्यत इत्यर्थः ।

## दर्पणः

**अलसशिरोमणिः धूर्तानामग्रणीः पुत्रि धनसमृद्धिमयः ।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥**

नताङ्गीति वेश्याया विशेषणम् । अत्रेति । वाच्येन वस्तुना मयैवोपभोग्य इति वस्तु व्यज्यत इति संबन्धः । अहं तु धन्या उक्तप्रकाररागावेशदायिवल्लभतयेति भावः ।

## साहित्यचूडामणिः

अरसेति ।

**अरसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥**

अरसतया रस्यविषयमरोचकित्वं लक्ष्यते, संभोगविचक्षणत्वं व्यङ्ग्यम् । अथवा तदरोचकित्वमेव व्यङ्ग्यं तु संभोगवैचक्षण्यं, यत्र संशयलक्षणः सङ्करो वक्ष्यते । वस्तुना यथोक्तेन । वस्तु ममैवोपभोगयोग्य इत्येवंरूपम् ।

## सम्प्रदायप्रकाशिनी

अरससिरोमणीति ।

**अरसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥**

भणितेनेति तृतीया प्रफुल्ललोचनतायां हेतुः । अत्र प्रचुरधनसमृद्धिकस्य यूनो नीरसत्वधूर्तमूर्धन्यत्वश्रवणेन यदेतन्नयनविकासलक्षणं वस्तु तेन स्वतस्सम्भविना ममैवोपभोग्य इति वस्तु व्यज्यते ।

## विस्तारिका

स्वतःसम्भविनो वस्तुनो वस्तु व्यञ्जकतामाह—अरस इत्यादि ।

**अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।**
**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥**

अलसत्वेनाप्रवासित्वम्, धूर्तत्वेन विदग्धत्वम्, धनसमृद्ध्या सुखित्वम्, नताङ्गीत्वेन नमस्कारः, प्रफुल्लविलोचनत्वेन हर्षः । अथवा अलसानां कौतुकानाविष्टानां वस्त्वन्तरानाकृष्टानामित्यर्थः ।

अत्रेति। वस्तुना प्रफुल्लविलोचनत्वरूपेण स्वतः सम्भविनाऽलङ्कृतिशून्यत्वेन वस्तुव्यङ्ग्यम्।

### सारबोधिनी

स्वतः संभविनो वस्तुव्यञ्जकतामाह अलसेति।

**अलसशिरोमणिः धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः।**

**इति भणितेण नताङ्गी प्रफुल्लविलोचना जाता॥**

अलसत्वेनाप्रवासित्वम्। धूर्तत्वेन विदग्धत्वम्। धनसमृद्ध्या सुखित्वम्। प्रफुल्लविलोचनत्वेन हर्षो व्यज्यते। अत्रेति। वस्तुना प्रफुल्लविलोचनत्वादिरूपेण।

### काव्यप्रदीपः

तत्र स्वतः संभविन्यर्थभेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—

**'अलससिरोमणिधुत्ताणमग्गिमो पुत्ति धणसमिद्धिमओ।**

**इअ भणिएण णअङ्गी पप्फुल्लविलोअणाजाआ॥'**

अलसत्वेनान्यत्र गन्तुमनिच्छुः धूर्तत्वेन रतेष्वनादृतगुणः। धनसमृद्धिमत्तया कृपण इति निर्धार्य यत्प्रफुल्लनयनत्वं वस्तु तेनान्यासामनाकर्षणीय इति ममैवोपभोग्य इति वस्तु व्यज्यते।

### काव्यप्रकाशखण्डनम्

स्वतः संभव्यर्थशक्तिमूलध्वनिर्यथा—

**अलससिरमणी धुत्ताणमग्गिमो पुत्ति धनसमिद्धिमओ।**

**इय भणिएण नअंगी पफुल्लविलोअणा जाआ॥**

[अलसशिरोमणिः धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः।

इति भणितेन नताङ्गी प्रोत्फुल्लविलोचना जाता॥]

अलसत्वेन अप्रवासित्वम्, धूर्तत्वेन विदग्धत्वम्, प्रोत्फुल्लविलोचनत्वेन हर्षो व्यज्यते। अत्र ममैवायं उपभोगयोग्य इति वस्तु स्वतः संभविनार्थेन व्यज्यते।

### आदर्शः

क्रमेणेति स्वतःसम्भविव्यङ्ग्यवस्त्वलङ्कारचतुष्कादिक्रमेणेत्यर्थः।

तत्र स्वतः सम्भाविवस्तुव्यङ्ग्यं वस्त्वाह—अलसेति—

**अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि धनसमृद्धिमयः।**

**इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता॥** इति संस्कृतम्।

पतिंवरायां धात्र्याः प्ररोचनोक्तिरियम् । अत्रायमिति प्रकरणगम्यो विशेष्यः । अत्र अलसशिरोमणित्वेनाप्रवासित्वं धूर्त्ताग्रिमत्वेन रतिचातुर्य्यं धनसमृद्धिमयत्वेन अदरिद्रत्वञ्च व्यङ्ग्यं वस्तु स्वतःसम्भवि, तद्व्यङ्ग्यञ्च कुमारीबोधरूपं वस्तु सामाजिकबोध्यमाह—अत्र ममैवोपभोग्य इति, एतन्नितविशिष्टो वरो मयैवान्विष्यते नान्ययेत्येवकारार्थः । वस्त्विति कुमारीबोधरूपं वस्तित्वत्यर्थः । कुमारीहर्षोऽपि परार्द्धव्यङ्ग्यो बोध्यः, तदंशे व्यभिचारिभावध्वनित्वमेवेति । बोध्यम् ।

## सुधासागरः

तत्र स्वतः सम्भविन्यर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा-अलसेत्यादि । मुखविपुला छन्दः । विवाहप्रसङ्गे यौवनाक्रान्तकुमारीं प्रति उपमात्रा सम्भावितवरगुणवर्णने सा प्रसन्नाऽप्रसन्ना वेति कुमारीप्रसूप्रश्नं काचिदुत्तरयति ।

**अलसशिरोमणिर्धूर्त्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।**
**इति भाणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥**

इति संस्कृतम् । स्पष्टम् ।

अत्रालसत्वेनान्यत्र गन्तुमनिच्छुः धूर्तत्वेन रतेष्वनावृतगुणः, सम्भोगेनातृप्त इति यावत्, धनसमृद्धिमत्तया कृपण इति निर्धार्य प्रफुल्लनयनत्वं वस्तु तेनान्यासामनाकर्षणीय इति ममैवोपभोग्य इति वस्तु व्यज्यते ।

## विवरणम्

अलसेति । 'अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः । इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥' इति (छाया) । अत्र शिरोमणिपदस्य तत्सधर्मणि, प्रफुल्लपदस्य विस्तारिणि लक्षणा । तेन न स्वतःसम्भवित्वहानिः । अत्र च पूर्वार्धमात्रं ध्वनेरुदाहरणम् । तत्र हि आलस्येनाप्रवासित्वम्, धनसमृद्ध्याऽनाकुलत्वम्, ताभ्यां चोपभोगयोग्यत्वम्, धूर्ततयाऽविदग्धाभिरप्रलोभनीयत्वम्, तेन मदितरयोषिदनुपभोग्यत्वं कुमार्या व्यज्यते । यदाह—ममैवोपभोग्य इति । सामाजिकस्य पूर्वार्धपरार्धाभ्यां मिलित्वा ममैवोपभोग्य इति मतिस्वरूपं व्यङ्ग्यम् । तच्च प्रफुल्लविलोचनत्वे वाच्ये गुणीभूतमिति न ध्वनिप्रस्थानस्यायं विषयः ।

**धन्यासि या कथयसि प्रियसंगमेऽपि विस्रब्धचाटुकशतानि रतान्तरेषु ।**
**नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥६१ ॥**

**अत्र त्वमधन्या, अहं तु धन्येति व्यतिरेकालंकारः ।**

---

**सङ्केतः**

धन्यासीति । हे सख्यः ! शपामि शपेऽहम् । अत्र शपामिशपेवाचरामि इति व्युत्पत्तिः । यद्वा—'स्वं' इत्यध्याहारेण आक्रोशामि इत्यर्थः । अन्यथा परस्मैपदं चिन्त्यम् । रतान्तराणि रतविशेषाः । धन्याऽसि, सख्यः इत्यनयोः अर्थासङ्गत्यालोचने 'सख्याः शपामि' इत्येव युक्तः पाठः स्यात् । अत्र च—'सख्याः' इति च षष्ठ्यन्तम् । यदि वा 'सखि आः ।' इति भिन्नं व्याख्येयम् ।

**सङ्केतः (रुय्यकः)**

धन्याऽसीत्यादि । अत्र चाटुकवर्णनात् प्राज्ञत्वेन धन्याऽहञ्च मोहितत्वान्न किञ्चित् स्मरामीत्येतावद्वाच्यं, न तु त्वं धन्याऽहमधन्येत्येवंरूपम्; ततश्च वाच्यो व्यतिरेकेणाशंकनीयः ।

**बालचित्तानुरञ्जनी**

वस्तुरूपस्वतःसंभविनः अलङ्कारव्यङ्ग्यस्योदाहरणमाह धन्यासीति । हे सखि त्वं धन्यासि ! या त्वं रतान्तरेषु रतिविशेषेषु प्रियसङ्गेऽपि विश्वस्तप्रियवचनशतानि कथयसि । अहं तु प्रियेण करे नीवीं प्रति प्रणिहिते सति यदि किञ्चिदपि स्मरामि तर्हि सख्यः शपामि । न स्मराम्येव सुखपारवश्यादित्यर्थः । अत्र शपो नात्मनेपदम् । अत्रालङ्कारव्यङ्ग्यमाह अत्रेति । त्वमधन्या संभोगवृत्तान्तस्मरणभावात् । अहं धन्या सुखातिशयेन तदानीन्तनवृत्तान्तस्मरणाभावात् । उपमानादुपमेयस्याधिक्ये व्यतिरेक इति व्यतिरेकालङ्कारो व्यज्यते ।

**काव्यादर्शः**

अहं तु धन्येति । उपमानोपमेयभावप्रतीतौ निधुवनविलासोत्कर्षादभिनन्दनीयत्वेनाधिक्यम् ।

**विवेकः**

धन्येत्यादि—वाचा शरीरस्पर्शनं न विवक्षितमिति शपामीति परस्मैपदम् (पा.१/३/२९वृ.) । अत्र चाटुकारवर्णनात् प्रियतमरतोपक्रमे मध्यादिसमयानुभवमेवावेदयन्ती भवती प्राज्ञत्वेन धन्याऽहन्तु नीवीदेश एव

जातकरस्पर्शमात्रेण मोहितत्वान्न किञ्चित् स्मरामीत्येतावद्वाच्य 'न तु त्वं' धन्याऽस्यहमधन्येत्येवंरूपम्। ततश्च वाच्यो व्यतिरेको नाशङ्कनीयः।

## दीपिका

धन्येति वैपरीत्येनाधन्यता लक्ष्यते, तदतिशयश्च व्यज्यते। न किञ्चदपि स्मरामीत्यनेन च रागावेशवशंवदतयाऽकृत्रिमप्रेमरूपं धन्यत्वं व्यज्यत इत्युभयसङ्कलनया व्यतिरेकपर्यवसानम्। धन्याऽसीत्यत्र तु वाच्यव्यतिरेको नाशङ्कनीयः, त्वं धन्या नाहमित्याद्याकारवाच्यविरहात्।

## साहित्यचूडामणिः

धन्येति। अत्र सखीसकाशात् कस्यश्चिद् व्यतिरेकस्य प्रतीयमानत्वाद् वस्तुना व्यतिरेकालङ्कारो व्यज्यते। तत्स्वरूपमाह—स्वमधन्येति। संभोगावस्थायामप्रस्तुतार्थव्यापृतत्वात्। अहं धन्या, तदेकतानतया सुखसागरान्तरालमग्नत्वात्।

## सम्प्रदायप्रकाशिनी

धन्यासीति। रतान्तरेषु जातानि विस्रब्धचाटुकशतानीत्यर्थः। तेषां कथनं धन्यत्वे हेतुः। नीवीं प्रति करप्रणिधानमात्रेण यदेतत् सर्ववृत्तान्तविस्मरणं ततोऽहमधन्येति वाच्यकक्ष्यायां प्रतीतिः।

व्यङ्ग्यप्रतीतिस्तु तद्विलक्षणेत्याह—अत्र त्वमधन्येत्यादिना। अत्र स्वतस्सम्भविना वस्तुनालङ्कारः।

## विस्तारिका

स्वतःसम्भविनो वस्तुनोऽलङ्कारव्यञ्जकतामाह—धन्यासीत्यादि। प्रियसङ्गमे आलापादिषु। तत्रापि रतमध्येषु भवतु, कथञ्चिदादावन्ते वा सप्तम्याश्चाटुकशताधिकरणत्वम्। प्रणिहिते नीव्यां करोऽर्पयितव्य इति प्रणिधानाविषये मनसि सङ्कल्पिते, न त्वर्पिते, अवाचकत्वाद् भावलघुत्वापाताच्च करे प्रणिहिते न किञ्चिदपि स्मरामीति वाक्यमध्ये सख्यः शपामीति गर्भितोऽपि गुण एव, विवक्षितार्थस्य सत्यत्वप्रत्यायनात्। शपामीति मिथ्यानिरसनमात्रार्थत्वेन वर्तमानपदम्, मिथ्यानिरसनहेतुशरीरस्पर्शस्यैव शपथत्वात् सखीषु मध्ये सौभाग्याभिमानगर्विताया एकस्याः सम्बोध्यत्वे धन्याऽसीत्येकवचनं बहुनामप्रतार्यत्वप्रतिपादनाय सख्य इति बहुवचनम्, तेन नासङ्गतिः। वैदग्ध्यतदभावाभ्यां धन्याधन्यत्वे, इत्यहं धन्या त्वमधन्या इति सखीं प्रति धन्योत्वोक्तिर्विप्रलिप्सया। तेन 'विवक्षितान्वयानुपपत्त्या। धन्याऽसीत्यत्राधन्यत्वलक्षणे'ति निरस्तम्, विप्रलिप्सया धन्यत्वस्य विवक्षितत्वात्। अत्र वस्तुनो वाक्यार्थस्य स्वतःसम्भवित्वं स्फुटमेव।

## सारबोधिनी

स्वतःसंभविनो वस्तुनोऽलङ्कारव्यञ्जकतामाह धन्यासीति। प्रणिहिते नीव्यां करोऽर्पयितव्य इति प्रणिधानविषयीकृते मनसि सङ्कल्पिते न त्वर्पिते। अवाचकत्वापातात् भावलघुत्वापाताच्च शपामीति। अत्र मिथ्या निरसनमात्रार्थत्वान्न 'शपथे शप' इत्यात्मनेपदम्। तद्धेतुशरीरस्पर्शस्यैव शपथत्वात्। वैदग्ध्यतदभावाभ्यां धन्या-

धन्यत्वे इत्याह अहं धन्या त्वमधन्येति । अत्र सखीं प्रति धन्योक्तिर्विप्रलम्भाय न विवक्षिता । अन्वयानुपपत्या धन्यासीत्यत्राधन्यत्वे लक्षणेति निरस्तम्, विप्रलिप्सयापि धन्यत्वस्यैव विवक्षितत्वात् ।

## काव्यप्रदीपः

वस्तुनालंकारस्य यथा—

'धन्यासि या कथयसि प्रियसंगमेऽपि विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥

अत्र वाच्येन वस्तुना त्वमधन्या, अहं तु धन्येति स्वस्य व्यतिरेकालंकारो व्यज्यते । ननु व्यञ्जको धन्यासीति त्वत्पदार्थस्य व्यतिरेकालंकार एव । तत्कथं वस्तुव्यञ्जकोदाहरणमेतदिति चेत्, न । संबोध्यव्यतिरेकस्तावन्न वाच्यः । आत्मनि कथनाभावस्याशाब्दत्वात् । व्यङ्ग्यस्तु यद्यपि भवत्येव, तथापि तमनपेक्ष्यैव वाच्येन वस्तुमात्रेण यथोक्तव्यतिरेकव्यञ्जनादिति ।

## आदर्शः

(२) स्वतःसम्भवितवस्तुव्यङ्ग्यमलङ्कारमाह—धन्यासीति । रात्रिवृत्तान्तालापिनीनां सखीनां मध्ये रतिकाले बाह्यकथालापिनीं काञ्चित् सखीमुपहसन्त्या अतादृश्याः सख्या उक्तिरियम् । विश्रब्धं विश्वासः निःशङ्कत्वं तेन रत्यनुपयुक्तचाटुकशतानि या त्वं रतान्तरेषु रतिमध्यकालेष्वपि कथयसि सा त्वं धन्याऽसीत्यर्थः । रतान्तरेष्विति बहुवचनात् प्रतिदिनमेवं भावः सूचितः । अन्तरं मध्यम् । एतेनोपहासाधिक्यम्, ईदृशकालेऽत्यन्तरतावेशस्यैवौचित्यात् । स्वोत्कर्षं सूचयति—नीवीमिति । तत्सूचने च बह्वीनामवधानाय सख्य इति बहुवचनम् । शपामि शपथं करोमि । अत्र पूर्वापरार्द्धवाक्यार्थद्वयव्यङ्ग्यं वस्तु उपहसनीयनायिकायाः सामाजिकानाञ्च बोध्यमाह—अत्रेति । व्यतिरेकः उपमानीभूतामुपहसनीयनायिकामपेक्ष्य उपमेयीभूताया वक्तृत्या आधिक्यरूपः । अत्र चण्डीदासः—उक्तालापेनोपहसनीयनायिकाया 'अधन्यत्वे तात्पर्य्यग्रहात् धन्यत्वबाधात्तदधन्यत्वं लक्षणागम्यमेव, अतः अहन्तु धन्येत्यशों व्यतिरेकैकदेश एव व्यङ्ग्य इत्याह, तन्न; प्रागेवाधन्यत्वस्य ग्रहे आहार्य्यस्य पश्चात् तद्ग्रहे त्वनाहार्य्यस्य धन्यत्वबोधस्य सम्भवात् तेनाधन्यत्वस्य व्यञ्जनेऽनुपपत्त्यभावात् ।

## सुधासागरः

वस्तुनाऽलङ्कारस्य यथा—धन्येत्यादि । वसन्ततिलका छन्दः । मित्रस्त्रीगोष्ठ्यां विदितवृत्तान्ता काचिद् विदग्धा विश्वस्तामाह । अयमथः । त्वं धन्याऽसि या प्रियस्य सङ्गमे गाढालिङ्गनादावपि रतान्तरेषु सुरतमध्येष्वपि विस्रब्धानि विश्वासयुक्तानि चाटुकशतानि रिरंसोद्दीपकवाक्यानि कथयसि, स्पष्टमुच्चारयसि करं, प्रसार्य सखीस्पर्शरूपशपथपूर्वं स्ववृत्तान्तमावेदयसि । अहं तु प्रियेण करे नीवीं नाभीतलवसनग्रन्थिं प्रति प्रणिहिते नीव्यां करोऽर्पयितव्य इति प्रणिधानविषयीकृते मनसि सङ्कल्पितेऽपीति यावत्, न त्वर्पिते, अवाचकत्वापाताद् भावलघुत्वापाताच्च, किपुनः सङ्गमादावित्यपिशब्दार्थः । दृढप्रत्ययोत्पादनायाह सख्यः शपामि भवदङ्गं स्पृशामि, अत्र शपथस्यामुख्यत्वादात्मनेपदाभावः । यदि किञ्चिदपि स्मरामि किं पुनरतादृशवाक्यमित्यपिशब्दार्थ इति ।

अत्र वाच्येन वस्तुना स्वस्य महानन्दाप्तिसूचनद्वारा त्वमधन्या अहं तु धन्येति व्यतिरेकालङ्कारो ध्वयन्ते ।

## विवरणम्

स्वतः सम्भविना वस्तुना वस्तुव्यञ्जनमुदाहृत्यालङ्कारव्यञ्जनमुदाहरति—धन्याऽसीति । प्रियसङ्गमे रतान्तरेष्वपीति सम्बन्धः । शतानीति शतसङ्ख्यानिष्ठबहुत्वविवक्षया साधु । एकामुद्दिश्य वचने वक्ष्यमाणेऽवधानदानाय सर्वा अप्युल्लिखति—सख्य इति । सुरतकथाप्रसङ्गे सम्बोध्यसख्या एकत्वं विस्मृत्य 'सख्यः' इति बहुत्वोपन्यास इत्यपि वदन्ति । अत्रेति । अत्र धन्यापदस्याधन्यायां लक्षणैव, अहं धन्येत्येतावदेव व्यङ्ग्यम्, मिलित्वा व्यतिरेकाभिव्यक्तिः सखीं प्रतीति चण्डीदासः । सामाजिकस्य तु स्वनिष्ठोत्कर्षबोधनेन गर्वभावो व्यज्यत इति ध्येयम् ।

**दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तिनिघ्नघनशोणितशोणशोचिः। वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः ॥ ६२ ॥**

अत्रोपमालंकारेण सकलरिपुबलक्षयः क्षणात् करिष्यते, इति वस्तु।

---

### सङ्केतः

दर्पान्धेति। कुम्भाः एव कपाटानां कूटः समूहः कूटा इव उन्नतप्रदेशः वा। तस्मिन् तेषु वा सङ्क्रान्तेन सङ्क्रमणेन यत् निघ्नं खङ्गस्य परवशं घनशोणितं तेन शोणशोचिः। उपमाऽलङ्कारेणेति। विशेषणबलसमुत्थेनेति शेषः। तेन वाक्यवाच्यत्वं लभ्यते।

### सङ्केतः (रुय्यकः)

गन्धगजा ये परगजगन्धं न सहन्ते। निघ्नं परतन्त्रम्। कालीकटाक्ष इवेति। अत्रोत्प्रेक्षाशंका न कार्या, उत्प्रेक्षा हि प्रकृतगतत्वेनाप्रकृतवस्तुसम्बन्धहेतुका सम्भावना कथ्यते। सा च न कवेः, तेन शोणत्वाख्यास्य धर्मस्योपमानोपमेयगतत्वेन वस्तुप्रतिवस्तुतयोपनिबन्धात्। नापि कविवर्णितानां वीराणाम्, न हि तैः कालीकटाक्ष-सम्भावनया कृपाणः प्रतिपन्नोऽपि तु कृपाणत्वेन। अथ व्यलोकीति सम्बन्धबलात् सम्भावना व्यवस्थाप्यते, न व्यलोकीति बलात् सम्भावनाप्रतीतिः, अपितु सादृश्यमेव गम्यते, इह शब्दमाहात्म्यात् कटासदृशः कृपाणो दृष्ट इति प्रतीतेः। तस्मादुपमैवेयं नोत्प्रेक्षेति निश्चयः।

### बालचित्तानुरञ्जनी

स्वतः संभविनोऽलङ्कारवस्तुव्यञ्जकस्यार्थस्योदाहरणमाह दर्पान्धेति। यस्य करे कृपाणः खड्गः, युधि युद्धे, कोपेन कषायकान्तिः महाकाल्याः कटाक्ष इव वीरपुरुषर्व्यलोकि दृष्टः। कीदृशः? दर्पेणान्धो यो गन्धगजः तस्य कुम्भ एव कपाटं तस्य कूटः शिखरं तत्र सङ्क्रान्तेर्निघ्नं प्रधानं घनं यच्छोणितं [तद्वत] शोणशोचिः रक्तकान्तिः। अत्र व्यङ्ग्यमाह अत्रेति। वाच्येनोपमालङ्कारेण रिपुक्षयकरणलक्षणं वस्तु व्यज्यत इति शेषः।

### काव्यादर्शः

उमालंकारेणेति, सकलवाक्यंवाच्येन।

### विवेकः

दर्पान्धेति—गन्धगजा ये परगजगन्धं न सहन्ते। निघ्नं परतन्त्रम्। [कोपकषायकान्तिः] कालीकटाक्ष इवेति—उपसंहारकारिण्यत्र काली। अत्रोत्प्रेक्षा [शङ्का न कार्या] उत्प्रेक्षा हि प्रकृतगतत्वेनाप्रकृतवस्तुसम्बन्धहेतुका

सम्भावना कथ्यते । सा च न कवेः, तेन शोणत्वाख्यस्य धर्मस्योपमानोपमेयगतत्वेन वस्तुप्रतिवस्तुतयोपनिबन्धनात् । नापि कविवर्णितानां वीराणाम् । नहि तैः कालीकटाक्षसम्भावनया कृपाणः प्रतिपन्नोऽपि तु कृपाणत्वेन । अथ व्यलोकीति सम्बन्धबलात् सम्भावना व्यवस्थाप्यते ? न, व्यलोकीति सम्बन्धबलान्न सम्भावना प्रतीतिरपि तु सादृश्यम(मे) व गम्यते, इह शब्दमाहात्म्यात् कटाक्षसदृशः कृपाणो दृष्ट इति प्रतीतेः तस्मादुपमैवेयं (६८) नोत्प्रेक्षेति निश्चयः ।

## दीपिका

निघ्नमत्यन्तसंश्लिष्टम् । कोपेन कषाया रक्तसितासितरूपा कान्तिर्यस्य । काली महामारी । अत्र सादृश्यमात्रप्रतीतौ नोक्तंरूपव्यङ्ग्यनिष्पत्तिः । न हि तत्सदृशं वस्तु तत्कार्यं करोति, तस्मात्कालीकटाक्षतया सम्भाव्यमानः कृपाणो दृष्टः, न तत्सादृश्यमात्रविशिष्टः, प्रतीतेर्बहिरङ्गत्वाप्रसङ्गादित्युत्प्रेक्षैव वरं नोपमा । वृत्तौ तूपमापदप्रयोग औपम्यसम्भावनायामपि विद्यमानतया सङ्गमनीयः ।

यत्तु श्रीधरेण विकल्पितं, 'कस्य सम्भावना कवेर्वीराणां वा ? नाद्यः, तेन शोणत्वाख्यधर्मस्य कृपाणकटाक्षगततया बिम्बप्रतिबिम्बभावेन निर्देशात् । न द्वितीयः, तेषां कृपाणस्वरूपमात्रप्रतीतेरिति, तद्विकल्पमात्रमेव । न हि बिम्बप्रतिबिम्बभावः सम्भावनां प्रतिवैरी । दृश्यतेऽपि हि यथा मम—

**कण्ठे लसत्-(कण्ठोल्लसत्-) काञ्चनयज्ञसूत्रः**
**संवीज्यमानः सितचामरैर्यः ।**
**श्यामो बभासे तडितोपगूढ**
**श्चलद्बलाकः किमु वारिवाहः ॥'**

अत्र हि किमुना स्फुटैव सम्भावना । वीरणाञ्च स्वरूपमात्रेणैव प्रतीतिरिति किं ते कुलपरम्परोपदेशः ? तस्माद्व्यङ्ग्यप्रतीतेरन्यथाऽनुपपत्या वीराणां सम्भावना कवितरि भावकेषु च प्रतिफलतीत्यत्र न कार्यो दुर्ग्रहः । ईदृश्याश्च सम्भावनया न लोकेऽप्यसम्भव इति स्वतःसम्भवित्वम् ।

## दर्पणः

दर्पेति । गन्धगजो मत्तगजः । निघ्नमिति । शिष्टं दत्ता । अत्र हि यस्य कस्यचित् सदृशं वस्तु तस्य कार्यं करोति । तेन कालीकटाक्षतया संभाव्यमानः कृपाणः इष्ट इति संभावनोत्थापनादुत्प्रेक्षैवेयमिति चण्डिदासपण्डितः । एतच्चिन्त्यम् । तथाहि कालीकटाक्षदर्शिनां भयक्षयो भवति तयैव त्वत्कृपाणदर्शिनामपि वैरिणामुपमाया युगत्वात् । इह च साधारणधर्मं बिम्बप्रतिबिम्बभावो नोत्प्रेक्षायां घटत इति वादिनां श्रीधरसान्धिविग्रहिकमधिक्षिपन्ते ।

यदात्मनो विरचितं—

**कण्ठे लुठत् काचन यक्षसूत्रं संवीक्षमाणः शितराम धैर्यः ।**
**श्यामोपभासेतडितोपगूढ लसद्बलाङ्कः किमु वारिवाहः ॥**

इति श्लोकं दर्शमन्ति तदप्ययिचाररिताभिधानम् ।

## साहित्यचूडामणिः

दर्पान्धेति। काल्याश्चण्डिकायाः कटाक्षोऽऽपाङ्गदर्शनं स इवेत्युपमालङ्कारेण सर्वविपक्षक्षयः क्षणेन करिष्यत इति वस्तु व्यज्यते।

## सम्प्रदायप्रकाशिनी

दर्पान्धेति। कुम्भकवाटकुटे संक्रान्तिः सम्मूर्छना तन्निघ्नेन तद्वशादुदञ्चितेन घनेन स्त्यानेन शोणितेन शोणशोचिरित्यर्थः।

उपमालङ्कारेण कालीकटाक्ष इवैत्येवंरूपेण। क्षणात् करिष्यत इति सद्यः सकलजगदुपसंहारकारिकाली-कटाक्षसाधर्म्यात् संहारस्याविलम्बत्वप्रतीतिः। अत्र स्वतस्सम्भविनालङ्कारेण वस्तु।

## विस्तारिका

स्वतः सम्भविनोऽलङ्कारस्य वस्तुव्यञ्जकतामाह—दर्पेत्यादि। यन्मदमूत्रपुरीषगन्धेनान्ये गजाः पलायन्ते, स गन्धगजः। कुम्भयोर्मध्यभागः कपाटः, तदाकारत्वात्, तस्य कूटमग्नं तद्वद् दुर्भेदम्। निघ्नमायत्तं दृढं यन्नब्धं घनं निविडं शोणितस्य शोणा शोचिर्यत्र। कषायो रक्तः शोणशोचिः कषायकान्त्योः प्रतिबिम्बानुबिम्बभावेन समानधर्मता। अत्रोपमाऽलङ्कारेण स्वतःसम्भविना सादृश्यस्य बहिरपि सत्त्वात्।

अत्र केचित्—क्षणात् सकलासुरकुलक्षयकारित्वं कालीकटाक्षधर्मसादृश्यावगमे तदवगमो न स्यात्, तत्तत्सादृश्यात् तत्तत्कर्मानुपपत्तेः, तस्मादुपमापदेनोत्प्रेक्षाभिधानमित्याहुः, तन्न; आशु रिपुकुलक्षयकारित्वस्य कृपाणकटाक्षोभयवृत्तेर्न कालीकटाक्षमात्रगमिता, असुरकुलक्षयकारित्वस्यैव तत्त्वात्। काली महामारिस्तस्या रिपवोऽसुरा नृपस्य नृपजाते रिपुत्वेन द्वयोरनुगमेन समानधर्मत्वात्। किञ्च, कालीकटाक्षत्वेन सम्भावनायां सजातीयधर्मस्याप्रयोजकत्वादेकधर्मस्यैव तत्त्वात्, यथा 'लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः' इत्यत्र। अत्र चेति धर्मयोः प्रतिबिम्बानुबिम्बभावेन निर्देश इत्युक्त्वात्, अपि चास्या उत्प्रेक्षायाः केवलकविप्रौढोक्तिनिष्पन्नत्वात् स्वतःसम्भवित्वविरहेण लक्ष्यता न स्यात्।

मिश्रास्तु साम्यावगमानन्तरमुपमानगतधर्मान्तरमुपमेये प्रतीयत इति यथोक्तव्यङ्ग्यावगमेन बाधः। तदुक्तम्—धर्मयोरेकनिर्देशेऽन्यसंवित्साहचर्यत' इत्याहुः, तन्न; उपमागतधर्माणामुपमेयगतत्वेन निर्देशस्यैवान्यसंवेदकत्वात्। यथा 'कैलासगौरम्' इत्यत्र गौरत्वनिर्देशेनोच्छ्रायस्य नात्र तथोपमानगतधर्मस्योपमेयगतत्वेनानिर्देशादिति।

## सारबोधिनी

स्वतः संभविनोऽलङ्कारस्य वस्तुव्यञ्जकतामाह दर्पेति। यस्य गन्धमाघ्रायान्ये गजाः पलायन्ते स गन्धगजः। निघ्नमापन्नं, कषाया रक्ता। अत्रेति। उपमालङ्कारेण स्वतःसंभविना। सादृश्यस्य बहिरपि सत्त्वात्।

अत्र केचित्—क्षणात् सकलरिपुक्षयकारित्वं कालीकटाक्षधर्मः। तत्सादृश्यावगमे तदवगमो न स्यात् तत्सदृशात्तद्धर्मावगमानुपपत्तेः। तस्मादुपमापदेनात्रोत्प्रेक्षाभिधानमित्याहुः। तन्न। तत्सादृश्यावगमात् तद्धर्मस्य

तन्मात्रवृत्तिरूपस्यावगमानुपपत्तिर्नतूभयसाधारणस्य । तेन रिपुबलक्षयकारित्वस्य कालीकटाक्षकृपाणो भयसाधारणस्य कृपाणेऽवबोधे न काचिदनुपपत्तिः । किञ्च, यदुक्तमुपमापदेनोत्प्रेक्षाभिधानं तदपि न, तथा सत्युत्प्रेक्षायाः कविप्रौढोक्तिनिष्पन्नत्वेन स्वतःसंभवित्वविरहेण तल्लक्ष्यता न स्यात् ।

मिश्रास्तु—साम्यावगमानन्तरं उपमानगतधर्मान्तरमुपमेये प्रतीयत इति यथोक्तव्यङ्ग्यावगमे न बाधः । तदुक्तम्—' धर्मयोरेकनिर्देशेऽन्यसंवित्साहचर्यतः ।' यथा—'कैलासगौरं वृषमारुरुक्षोः' इत्यत्र गौरत्वनिर्देशेनोच्छायस्येत्याहुः ।

## काव्यप्रदीपः

अलंकारेण वस्तुनो यथा—

**'दर्पान्धगन्धगजकुम्भकपाटकूट-**
**संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।**
**वीरैर्व्यलोकि युधि कोपकषायकान्तिः**
**कालीकटाक्ष इव यस्य करे कृपाणः ॥'**

अत्र कालीकटाक्ष इव कृपाणो व्यलोकीत्युपमा । न पुनरुत्प्रेक्षा । संभावनाविरहात् । तया च सकलरिपुक्षयः क्षणात्करिष्यत इति वस्तु प्रकाश्यते ।

## आदर्शः

(३) स्वतः सम्भव्यलङ्काराव्यङ्ग्यं वस्त्वाह—दर्पान्धेति । यस्य राज्ञः करे कृपाणः वीरैः कालीकटाक्ष इव व्यलोकिः । कृपाणः कीदृशः ? दर्पान्धस्य गन्धगजस्य स्वीयमदगन्धेन अन्यगजत्रासकगजस्य कुम्भ एव स्फारत्वेन कपाटः तस्य कूटे अग्रभागे संक्रान्त्या पतनेन निघ्नैः सम्बद्धैः घनशोणितैः शोणकान्तिः । कालीकटाक्षःकीदृशः ? कोपेन कषाया शोणा कान्तिर्यस्य तादृशः । अत्रेति, शोणत्वसाधर्म्येण उपमितस्य खड्गस्य उपमानकटाक्षगतं धर्मान्तरं व्यञ्जनागम्यमित्याह—सकलेति ।

## सुधासागरः

अलङ्कारेण वस्तुनो व्यक्तिर्यथा—दर्पान्धेत्यादि । वसन्ततिलका छन्दः । अयमर्थः । यस्य राज्ञः करे कृपाणः खड्गः युधि सङ्ग्रामे कोपात् कषाया रक्ता कान्तिर्यस्य तथाभूतः, काल्याः कटाक्ष इव, वीरैः साधारणभटानां भयप्रदत्वादत्यन्तशूरैरेव व्यलोकि विशेषेण दृष्टः । रक्तत्वसम्पादनाय कृपाणं विशिनष्टि दर्पेणान्धाः उच्छृङ्खला ये गन्धगजाः 'यस्य गन्धं समाघ्राय पलायन्तेऽन्यदन्तिनः' इत्युक्तलक्षणाः, तेषां कुम्भात्मककपाटानां कूटे मध्यभागे या सङ्क्रान्तिः सम्यक् प्रवेशनं तन्निघ्नं दृढप्रहारायत्तं यद् घनशोणितं गाढरुधिरं तेन शोणिता शोचिः कान्तिर्यस्य तथाभूत इति ।

अत्र केचित् उपमया वर्णसाम्यं प्रत्याय्यते न तु कालीकटाक्षनिष्ठं सकलरिपुक्षयकारित्वमिति तादृशवस्तुव्यञ्जकत्वमनुपपन्नमिति ।

अत्र ब्रूमः । न खलु रिपुकुलनाशकत्वमुपमानमात्रवृत्ति किन्तूभयसाधारणम् । अस्तु वोपमानधर्मः तथाप्युपमाने व्यञ्जनयोपमेये तदवगमे बाधकाभावः । न चात्रोत्प्रेक्षाऽऽशङ्क्या, सम्भावनाविरहात्, न च शब्दव्यापारेणैव तथा प्रतीतिरिति शङ्क्यम्, वर्णसाम्योपस्थापकत्वेनोपरतत्वात्तस्य, किन्त्वर्थशक्तिमूलेनैव तथा व्यञ्जनम् । उक्तञ्च मिश्रैः—'साम्यावगमनानन्तरमुपमानगतधर्मान्तरमुपमेये प्रतीयत इति यथोक्तव्यङ्ग्यावगमे न बाधः' तदुक्तम्—'धर्मयोरेकनिर्देशेऽन्यसंवित्साहचर्यतः' । यथा—'कैलासगौरं वृषमारुरुक्षोः' इत्यत्र गौरत्वनिर्देशेनोच्छ्रायस्येति । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्रोपमालङ्कारेणेत्यादि ।

## विवरणम्

दर्पान्धेति । निघ्नमत्यन्तसंश्लिष्टम् । अत्रोपमेति । उपमाशब्द उत्प्रेक्षापरः । कृपाणस्य कालीकटाक्षसादृश्यमात्रावगतौ रिपुक्षयकर्तृत्वं व्यङ्ग्यमेव न प्रतिभासेत, नहि तत्सदृशस्य तत्कार्यकारित्वनियमः । न चेवशब्दस्य तत्तादात्म्यसम्भावनावचनत्वेनोत्प्रेक्षास्वीकारे, शोणितशोणतायाः कोपकषायतायाश्च बिम्बप्रतिबिम्बाभावेन निर्देशो नोपपद्यते, उत्प्रेक्षायामनुगामिन एव साधारणधर्मस्य निर्देश्यत्वमिति वाच्यम्, 'कण्ठे लुठत्काञ्चनयज्ञसूत्रः संवीज्यमानः सितचामरैर्यः । श्यामो बभासे तडितोपगूढश्चलद्बलाकः किमु वारिवाहः ॥" इत्यादौ यज्ञसूत्रतडिदादेबिम्बप्रतिबिम्बभावेन निर्देशेऽपि किमुशब्दोपात्तया सम्भावनयोत्प्रेक्षादर्शनात् । कृपाणे कालीकटाक्षतादात्म्यसम्भावना तु वर्ण्यमाना तत्कार्यकारित्वं तत्सम्भावनां वा वीरसमवेतां कविसमवेतां वा व्यञ्जयितुं प्रभवतीति चण्डीदासः । वस्तुतस्तु सहजश्यामस्यौपाधिकशोणतया साधर्म्येणोपमायां निर्दिश्यमानायामितरकटाक्षास्याप्युपमानता सम्भवतीति कालीकटाक्षस्योपमानता वर्ण्यमाना तदसाधारणधर्मवत्तामपि गमयतीत्युपमापदं यथाश्रुतमेव ज्यायः ।

अत्रोपमानोपमेयसाधारणधर्माणां पारमार्थिकतासम्भवात् स्वतः सम्भवित्वमवसेयम् ।

**गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।**
**ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् । ६३ ।**

अत्र विरोधालंकारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यते, इत्युत्प्रेक्षा च । एषूदाहरणेषु स्वतःसंभवी व्यञ्जकः ।

---

**सङ्केतः**

गाढेति । अत्र यो हि निजमपि अधरं दशति स कथं परेषां अधरान्मोचयति ? इति विरोधः । परं तु विरोधद्योतकाभावात् अस्य वाच्यता चिन्त्या । केचित्तु-निजाधरं इत्यत्र अपिशब्दगर्भितं विग्रहं कुर्वाणाः विरोधस्य वाच्यतामाहुः । परं अयं समासः स्यान्न वा ? इति स्वयमूह्यम् । व्याख्यान्तरमप्यस्ति ।

अत्र अधरमोचनोक्तिभङ्ग्या 'शत्रवो व्यापादिताः' इति पर्यायोक्त्यलङ्कारो वाच्यः । विरोधस्तु व्यङ्ग्यः । मम क्षत्याऽपीति । अत्र अपिशब्दः प्रश्नार्थे, युक्तमेतदित्यर्थे, लेशार्थे वा व्याख्येयः । निवर्ततां इति इत्यादौ—एकः इतिशब्दः स्वरूपे, द्वितीयः समाप्तौ, तृतीयः प्रकारे इति ध्येयम् ।

**सङ्केतः (रुय्यकः)**

गाढकान्तेति । अत्र य एवाधरं निर्दशति स एवोन्मोचयतीति विरुद्धयोः क्रिययोरेककर्तृकत्वादेकविषयत्वेन विरोधालंकारो वाच्यः । स च स्वतःसंभवी, शीतोष्णादिवदस्य विरोधस्य बहिरपि सम्भवात् । तुल्ययोगिता त्वत्रायुक्ता, क्रियाभेदात् साम्याभिधानाभावात् । एकत्र दशनक्रियाऽपरत्र व्यापादनक्रियेति क्रियाभेदः । तस्मात्कार्यकारणभूतयोर्व्यापादनदशनक्रिययोः पूर्वापरत्वेन स्थितयोरप्येककालप्रतीतेरतिशयोक्तिरेवैषेति युक्तम् ।

मम क्षत्येतु । उत्प्रेक्ष्यमाणोऽत्र हेतुर्गम्यते । अर्थाधिगम इति कीर्त्तेर्गुणोदीरणरूपत्वादस्ति तत्रार्थो न च गजैरधिगम्यते, तिर्यग्रूपत्वात् ।

**बालचित्तानुरञ्जनी**

अलङ्काररूपस्वतःसंभविनोऽलङ्कारव्यङ्ग्यस्योदाहरणमाह गाढकान्तेति । यो राजा युद्धे कोपेन स्वकीयाधरं निर्दशन् गाढप्रियदन्तक्षतदुःखं कथयन् शत्रुस्त्रीजनस्य ओष्ठविद्रुमदलान्यमोचयत् ।

**काव्यादर्शः**

तद्बुद्धिरिति, राजबुद्धिः ॥

## विवेकः

गाढेति—'अत्र य एवाधर' निर्दशति स एवोन्मोचयतीति विरुद्धयोः क्रिययोरेककर्तृकत्वादेकविषयत्वेन विरोधालङ्कारो वाच्यः। स च स्वतः सम्भवी, शीतोष्णादिवदस्य विरोधस्य बहिरपि सम्भवात्। तुल्ययोगिता ये आयुक्ता (त्वत्रायुक्ता), क्रियाभेदात् साम्याभिधानाभावात्—एकत्र दशनक्रियाऽपरत्र व्यापादनक्रियेति क्रियाभेदः। तस्मात् कार्यकारणभूतयोर्व्यापादननिर्दशनक्रिययोः पूर्वापरत्वेन स्थितयोरप्येककालप्रतीतेरतिशयोक्तिरेवैपेति युक्तम्' (रु. सं. ३३)। यथाकर्तुस्तु विभिन्नयोरपि किययोरेककालत्वे तुल्ययोगितेति मतम्। यदि वा दशनं व्यापादनरूपं [क्षतं ततो या व्यथा] तयाऽध्यवसितगताऽतिशयोक्तिरत्र मूलम्, अधरेण च शत्रूणामौपम्यं गम्यमानमिति तुल्ययोगिता। मम क्षत्येत्युत्प्रेक्षमाणेऽत्र हेतुर्गम्यते।

## दीपिका

गाढेति—अत्रौष्ठविषयो निर्दशनमोचनक्रिययोर्वर्त्तमानातीतापदेशाद्विपरीतकालयोर्विरोधः कार्यकारण-व्यत्ययातिशयोक्तिरूपो वाच्यः। स च प्रसिद्ध एवेति स्वतःसम्भवी। तुल्यश्चमत्काराणां योगः करणं ययोस्तौ तुल्ययोगिनौ, तयोर्भावः समुच्चयाभिधानं, ततश्चाधरो निर्दिष्टः शत्रवो व्यापादिताश्चेति समुच्चालङ्कृतिर्व्यज्यते। प्रकृतयोरप्रकृतयोर्वा समानगुणक्रियासम्बन्धरूपायास्तुल्ययोगिताया गन्धोऽप्यत्र नास्ति।

अत्र विरोधालङ्कृतस्यार्थस्य व्यङ्ग्यालङ्कृतिर्विरोधव्यङ्ग्याऽपि भवति। ममेति—निर्दशरूपनिष्ठुरपि-शाचाय एकं मदधरं बलिमुपकल्प्यान्येऽधरास्तद्विनिर्मुक्ताः सुखिनो निवसन्त्विति बुद्धयेवासौ निजाधरं पुनः पुनर्दष्टवानित्युत्प्रेक्षा तु सम्भाव्यते। ततश्चानयोरेकव्यञ्जकार्थप्रवेशलक्षणः सङ्कर इत्यभिसम्पन्नः।

## दर्पणः

गाढेति। विरोधालङ्कारेणेति। विरोधमूलेन कार्यकारणपौर्वापर्यविपर्ययरूपेणातिशयोक्त्यलङ्कारेणे-त्यर्थः। तथाहि। स्वाधरनिर्दशनं कारणम्। वैरिस्त्रीणामोष्ठानां च कान्तदन्तक्षतमोचन कार्यभूतं समकालतया निर्दिष्टम्। अधरेति। अधरो निर्दष्टः शत्रवो व्यापादिताश्चेति बुल्यमेव कालं योगो ययोस्तौ तुल्ययोगिनौ तयोर्भावस्तुत्ययोगितेति व्युत्पत्त्या समुच्च्यालङ्कारो व्यज्यत इति भावः। न तु प्रकृताप्रकृतसमानगुणक्रियासंबन्ध-तुल्यरूपा योगिता। ममेति निदर्शनरूपः। क्रूरपिशाचैः ममाधरं बिलरूपं प्राप्यं अन्यान् धन्यान् सुखिनः करोत्विति बुद्ध्येव मुहुर्निजाधरं दष्टवानिति तस्य राज्ञो भूतिरुत्प्रेक्ष्यते। ततश्चात्र समुच्चयोत्प्रेक्षणयोरेकत्राश्रयान्नात्र प्रवेश-लक्षणः सङ्करः।

## साहित्यचूडामणिः

गाढेति। विद्रुमदलानीवौष्ठान्। 'उपमितं व्याघ्रादिभि'-रिति समासः, व्याघ्रादेराकृतिगणत्वात्।

विरोधेति। केनचित् स्वाधरे निर्दश्यमाने तदन्येषां दन्तखण्डनपरिहारो विरुध्यते। निजाधर—निर्दशन-लक्षणायाः शत्रुवधूजनौष्ठव्यथापरिहाररूपायाश्च क्रियाया मिथो विरोधात्। तथा वक्ष्यति [दशमे] 'क्रिया

द्वाभ्या'मिति । एकस्याः काले तदन्यस्या अपि क्रियायास्तुल्यो योग इति विवक्षणादियं तुल्योगिता, न पुनर्नियतानां सकृद् धर्म इति दशमे लक्ष्यमाणा । न च—

**'न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया'**

इत्यादिग्रन्थान्तरानुरोधात्, तल्लक्षणायोगाद् इत्यलं व्याख्येयग्रन्थपौर्वापर्यविपर्ययव्यलीकोद्घाटनेन । तद्बुद्धिरिति अधरस्याभिप्रायः । तत्र चेतनाचेतनविचारो निरुपयोगः ।

यथाहुः—

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥** इति ।

अत्राप्युपमेयस्योपमानतया संभावनाकारं वक्ष्यमाणमुत्प्रेक्षालक्षणं न संघटते ।

### सम्प्रदायप्रकाशिनी

गाढकान्तेति । निजाधरं निर्दशन अरिवधूजनस्याधरान् कान्तदशनक्षतदुःखादमोचयदिति विरोधाभासः । समकालमित्यनेन निर्दशन्निति लडर्थ उद्घाटितः । अधरनिर्दशनमोचनेनासां भर्तृव्यापादनं व्यञ्जितम् । अलङ्कारान्तरमपि व्यज्यत इत्याह—मम क्षत्येत्यादि । तद्बुद्धिरिति तच्छब्देन वर्ण्यनायकाधरप्रत्यवमर्शः । अत्र स्वतस्सम्भविनालङ्कारेणालङ्कारः । स्वतस्सम्भविनस्ता वन्निगमयति—एषूदाहरणेष्विति ।

### मधुमती

अत्रेति । विरोधालङ्कारेण । वास्तविकविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः । स्वाधरनिर्दशनवैरिवनितोष्ठमोचनयोः कार्यकारणयोः वैयधिकरण्येन निर्देशात्, विरोधस्य स्फुटत्वात् ।

तुल्ययोगितेति । अत्र तुल्ययोगितापदेन समुच्चयालङ्कारः अभिमतः । अधरनिर्दशन-वैरिव्यापादनक्रिययोः यौगपद्यप्रतीतेः ।

पितुचरणास्तु—तुल्ययोगितापदेन कार्यकारणयोः तुल्यकालता प्रतीतेः 'कार्यकारणयोर्यश्च' इत्यनेन लक्षिता अतिशयोक्तिः अत्र अभिमता । न च कार्यस्य पूर्वकालाभिधानेन भाव्यमिति वाच्यम् । समानकालाभिधानेऽपि अविरोधात्, कारणगतकार्यशीघ्रकारित्वबोधलक्षणप्रयोजनस्य अविशेषात् इति वदन्ति ।

### विस्तारिका

स्वतः सम्भविनोऽलङ्कारस्यालङ्कारव्यञ्जकतामाह—गाढेति । विद्रुमो नवपल्लवस्तस्य दलानि । अत्रौष्ठविषयकदंशनतन्मोचनक्रिययोर्विरोधः प्रतियोगिभेदेनाभासः । एष च स्वतःसम्भाव्येव ।

तुल्ययोगितेति—अत्र केचित् 'तुल्ययोगितापदेनाधरो निर्दिष्टः शत्रवश्च व्यापादिता इति सम्भूयाभिधानम् । अप्रकृतानां प्रकृतानां चैकधर्मसम्बन्धस्य तुल्ययोगिताया अत्र गन्धस्याप्यभावादित्याहुः, तन्न; अधरनिर्दशनशत्रुव्यापादानयोर्द्वयोरपि वीरानुभावत्वेन प्रकृतयोरेककालरूपैकधर्मसम्बन्धेन तदनपायात् । न च धर्मस्य

गुणक्रियाऽन्यतरत्वेन कल्पितत्वभावादनुपपत्तितादवस्थ्यमिति वाच्यम्, कालोपाधेः सूर्यपरिस्पन्दत्वेन क्रियातोऽनन्यत्वात्। ममेति—तद्बुद्धिर्नृपबुद्धिः। चकारेण संसृष्टिसंसूचनम्।

ननु गाढेत्यादौ कोपकृतकामकृतयोरधरदंशनयोरतयन्तवैजात्येन कथं विरोधः? एकविषयदंशनमोचनयोरेव तत्त्वात्। अथैकस्याध्यवसाय इति चेत्तस्य कविप्रोढोक्तिरूपस्य व्यञ्जकत्वे कथं स्वतः सम्भविव्यञ्जकतेत्याह—एष्विति।

अयमर्थः—विरोधस्य स्वतःसम्भविन एव व्यञ्जकताभेदाभेदरूपाया अतिशयोक्तश्च विरोधस्यैव निर्वाहकत्वम्, न तु प्राधान्यम्। प्रधानेनैव च व्यवहारं इति स्वतः सम्भवी व्यञ्जकः। न खलु स्वतः सम्भवीत्यादिकं गोत्वादिवद् विरुद्धम्, येन विरोधः स्यात्। एवमन्यत्राप्यूह्यम्।

## सारबोधिनी

स्वतःसंभविनोऽलङ्कारस्यालङ्कारव्यञ्जकतामाह गाढेति। विरोधेति। अत्रेष्ठविषयकदशनमोचनयोर्विरोधः। प्रतियोगिभेदेनाभास इति। यद्वा विरोधपदेनात्र कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारोऽभिधीयते। यतः स्वाधरनिर्द्दशनं कारणभूतं वैरियोषिदोष्ठानां कान्तदन्तक्षतमोचनं कार्यभूतं समकालतया निर्दिष्टमिति तुल्ययोगितेति।

अत्र केचित् अधरो निर्द्दष्टश्च, शत्रवो व्यापादिताश्चेति। तुल्यकालमेककालं योगो ययोस्तौ तुल्ययोगिनौ। तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चयालङ्कारो व्यज्यत इत्यर्थः। न तु प्रकृतानामप्रकृतानां वा गुणक्रियान्यतरैकरूपधर्मसंबन्धात्मकायास्तुल्ययोगिताया प्रसङ्गोऽपीत्याहुः।

अन्ये तु अधरदशनशत्रुव्यापादनयोर्वीरानुभावत्वेन प्रकृतयोः सूर्य [?] क्रियारूपैककालोपाधिसंबन्धेन तुल्ययोगितैवेति वदन्ति। तद्बुद्धिर्नृपबुद्धिरित्यर्थः। चकारेण संसृष्टिसूचनम्।

## काव्यप्रदीपः

अलंकारेणालंकृतेर्यथा—

**'गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः।**
**ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम्॥'**

अत्र निजाधरदशनवैरिवधूजनौष्ठदशनव्यथामोचनयोः कारणकार्ययोः पौर्वापर्वभावलक्षणया अतिशयोक्त्या अलंकारेण दशनसमकालमेव शत्रवो व्यापादिति इति 'समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रिया' इत्युक्तलक्षणः समुच्चयालंकारो द्योत्यते। एष एव च तुल्यकालं योगितेति व्युत्पत्त्या तुल्ययोगितेति कैश्चिदुच्यते। मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति बुद्धेरुत्प्रेक्षणादुत्प्रेक्षाप्यत्र व्यङ्ग्या। एषु व्यञ्जकोऽर्थः स्वतःसंभवी।

## आदर्शः

(४) स्वतःसम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह—गाढकान्तेति। यो राजा युधि निजाधरं निर्दशन् अरिवधूजनस्य ओष्ठरूपाणि विद्रुमस्य प्रवालस्य दलानि पत्राणि गाढस्य कान्तदशनक्षतस्य व्यथारूपात् सङ्कटात् अमो-

चयत्, क्रोधेन स्वाधरं निर्दश्य निहते शत्रौ तद्वधूनां रतिकालीनः कान्तकर्तृकोऽधरदंशो निवृत्त इत्यर्थः। अत्रेति अधरदंशकत्वाधरदंशमोचकत्वयोरापाततो भातेन विरोधेनेत्यर्थः। दृश्यमानमोच्यमानभेदात् न विरोधः। समकालमेवेति निर्दशन्निति वर्त्तमाननिर्देशात् तत्कालीनमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्कालीनत्वलाभ इति भावः। कार्यकारणयोः शत्रुव्यापादनाधरदंशनयोः समकालत्वन्तु बाधितमप्याहार्य्यप्रतीतिविषय एव कारणस्य शीघ्रकारिताव्यञ्जकमित्यवधेयम्। तुल्ययोगितेति, यद्यपि द्वयोः समकालत्वबोधनं समुच्चयालङ्कार एव 'धुनोति चासिं तनुते च कीर्त्तिं' मित्यादिषु वक्ष्यते न तु तुल्ययोगिता तस्याः प्रकृतानामेवाप्रकृतानामेव वा सकृदेकधर्मान्वयरूपत्वस्य वक्ष्यमाणत्वात् तथाऽपि तुल्यमेककालं योगितेत्येवं योगार्थेन समुच्चयालङ्कार एवार्थः। उत्प्रेक्षाऽप्यत्र व्यङ्ग्येत्याह—मम क्षत्येति। तद्बुद्धिरिति, एतादृशबुद्धिरेव निर्दशन्निति वक्तुरुत्प्रेक्षा सामाजिकैः प्रतीयते इत्यर्थः।

## सुधासागरः

अलङ्कारेणालङ्कारव्यक्तिमुदाहरति—गाढकान्तेत्यादि। रथोद्धता छन्दः। 'रान्नराविह रथोद्धता लगौ' इति लक्षणात्। यो नृपो युधि निजाधरं निर्दशन् क्रोधात् खण्डयन् सन् वैरिवधूजनस्योष्ठविद्रुमदलानि गाढा तीव्रा या कान्तदशनक्षतव्यथा प्रियदन्तव्रणार्त्तिः सैव सङ्कटोऽसह्योपद्रवस्तस्मादमोचयदित्यर्थः।

अत्र विरोधालङ्कारेणेत्यादि। उक्तमत्र मिथिलेशसचिवैरच्युतभट्टाचार्यैः 'विरोधालङ्कारोऽत्र चिन्त्य' इति। अच्युतात्मजरत्नपाणिभट्टाचार्यास्तु—'विरोधपदेनात्र कार्यकारणपौर्वापर्यविपर्ययरूपविरोधात्मकातिशयोक्त्यलङ्कारोऽभिधीयते' इति काव्यदर्पणाख्यटीकायां व्याचख्युः। तत्सूनवो रविभट्टचार्यास्तु—'विरोधालङ्कारेण वास्तवविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः स्वाधरनिर्दशवैरिवनितोष्ठमोचनयोः कार्यकारणयोर्वैयधिकरण्येन निर्देशाद् विरोधस्य स्फुटत्वात्' इति मधुमत्यां व्याचख्युः।

तुल्ययोगितेति! अत्र न्यायविद्यावागीशनृसिंहठक्कुराः प्राहुः—अधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यकालमेककालं योगिनौ तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चयालङ्कारो व्यज्यत इत्यर्थः। न तु प्रकृतानामप्रकृतानां वा गुणक्रियान्यतरैकरूपधर्मसम्बन्धात्मिकायास्तुल्ययोगितायाः प्रसङ्गोऽपीति।

मधुमतीकारास्तु 'अत्र तुल्ययोगितापदेन समुच्चयालङ्कारोऽभिमतः, अधरनिर्दशनवैरिव्यापादनक्रिययोर्यौगपद्यप्रतीतेः। पितृचरणास्तु तुल्ययोगितापदेन कार्यकारणयोस्तुल्यकालताप्रतीतेः 'कार्यकारणयोर्यश्च' इत्यनेन लक्षितातिशयोक्तिरत्राभिमता। न च कार्यस्य पूर्वकालाभिधाने सा, समकालाभिधानेऽप्यविरोधात्। कारणगतशीघ्रकार्यकारित्वबोधलक्षणप्रयोजनस्याविशेषादिति वदन्ति' इत्याहुः।

प्रदीपकारस्तु—'अत्र निजाधरदशनवैरिवधूजनोष्ठदशनव्यथामोचनयोः कारणकार्ययोः पौर्वापर्याभावलक्षणयाऽतिशयोक्त्याऽलङ्कारेण दशनसमकालमेव शत्रवो व्यापादिता इति 'स त्वन्यो युगपद् या गुणक्रियाः' इत्युक्तलक्षणः समुच्चयालङ्कारा द्योत्यते। एष एव च तुल्यकालं योगितेति व्युत्पत्त्या तुल्ययोगितेति कैश्चिदुच्यते। मम क्षत्याप्यन्यस्य क्षतिर्निवर्त्तनामिति बुद्धेरुत्प्रेक्षणादुत्प्रेक्षाप्यत्र व्यङ्ग्या' इति व्याचख्युः।

वयं तु अत्रोष्ठविषयकदशनमोचनयोर्विरोधः ओष्ठत्वेन सामानाधिकरणयस्य विवक्षितत्वात्। 'प्रतियोगिभेदेनाभास' इति विरोधालङ्कारो निर्बाधः। अधरदशनशत्रुव्यापादनयोर्वीराऽनुभावत्वेन प्रकृतयोः सूर्याक्रियारू-

पैककालोपाधिंसम्बन्धेन तुल्ययोगितापि निर्बाधैव। तद्बुद्धिनृपबुद्धिरित्यर्थः। चकारेण तुल्ययोगितोत्प्रेक्षयोः संसृष्टिः सूचितेति ब्रूमः।

एषु व्यजकोऽर्थः स्वतः सम्भवी।

## विवरणम्

निर्दशन्नमोचयदिति क्रिययोर्यौगपद्यं शत्रा प्रत्याय्यते। निर्दशनतन्मोचनयोश्च सामान्यतो विरोधः, (कर्मभेदाच्चाविरोध) इत्यलङ्कारस्य स्वतःसम्भवित्वम्। तत्रारिवधूनामधरनिर्दशनमोचनेनारीणां व्यापादनमाक्षिप्यते। तत्रारिव्यापादनरूपे व्यङ्ग्यार्थे शत्रन्तोपात्तं निजाधरनिर्दशनसमानकालिकत्वमप्यवसीयत इति क्रियाद्वययौगपद्यरूपः समुच्चय एव तुल्ययोगितापदेन वृत्तावुपन्यस्तः, प्राकरणिकानामप्राकरणिकानामेव वा सकृद्धर्मसम्बन्धरूपायास्तुल्ययोगिताया इहासम्भवादिति ध्येयम्।

व्यङ्ग्यमलङ्कारान्तरमाह—ममेति। बुद्धिरिच्छा, निवर्ततामित्याकारेणाभिलापात्। उत्प्रेक्ष्यत इति निजाधरनिर्दशनहेतुत्वेनेति। तथा च हेतूत्प्रेक्षेयं स्वतः सम्भविना विरोधेनाभिव्यज्यत इति भावः। एवमेकव्यञ्जकानुप्रविष्टयोः समुच्चयोत्प्रेक्षयोः सङ्कर एवायम्, न तु व्यङ्ग्ययोर्विकल्प उत्प्रेक्षा चेत्यत्र चकारश्रवणादिति चण्डीदासः।

**कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः**
**श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।**
**स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का**
**दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ।। ६४ ।।**

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

---

**सङ्केतः**

कैलासस्येति । प्रथमे प्रधाने । स्रस्तापाङ्गाः वक्रीकृतनेत्रोपान्ताः । एवमादिबुद्धीति । न हि गजाः कीर्तिं बिसिनीत्वेन शङ्कन्ते, पशुत्वात् । परं कविना प्रौढोक्त्या 'त्वत्कीर्तिं तथा शङ्कन्ते इत्युक्तम् । त्वत्कीर्तिः इत्यत्र त्वच्छब्दो न युक्तः । पश्चात् आमन्त्रणपूर्वं राज्ञः अस्तूयमानत्वात् । अयं चार्थः यदीयां इति पदेन प्रतिष्ठितः । 'तत्कीर्तिः' इति तु युक्तः पाठः ।'

**सङ्केतः (रुय्यकः)**

अयञ्चार्थो न बहिः सम्भवति, कवेश्च प्रौढोक्त्या वक्तुं न वोचित इति तथा व्यवह्रियते ।

**बालचित्तानुरञ्जनी**

वस्तुव्यङ्ग्यस्योदाहरणमाह कैलासस्येति । कैलासभागशृङ्गे वेणुसंमूर्च्छनाभिः स्त्रीभिर्गीयमानां यस्य कीर्तिं श्रुत्वा दिग्गजाः सरसबिसिनीकाण्डमिति सञ्जातभ्रमाः सन्तः श्रवणमेव पुलिनं तत्र हस्तमावर्तयन्ति पुलिने विधानासाद्भावात् ।

व्यङ्ग्यमाह अत्रेति । यद्यपि श्रवणपुलिन इत्यत्र रूपकालङ्कारसद्भावेऽपि भागस्य व्यञ्जकत्वाभावात् वस्तुना वस्तु व्यज्यत इत्यस्य न काचित् क्षतिः । अर्थाधिगमः गीताभिधेयज्ञानमेवमादिबुद्धिजननेन बिसदण्डबुद्धिजननेन ।

**काव्यादर्शः**

प्रथमशिखरे प्रधानशिखरे येषां दिग्मातङ्गानामर्थाधिगमो नास्ति, कीर्तिरित्युल्लेखेन ।

### विवेक:

कैलासस्येति । प्रथमं प्रधानम् । अर्थाधिगम इति—कीर्तेर्गुणोदोरणरूपत्वादस्ति तत्रार्थो, न च [स] गजैरधिगम्यते, तिर्यग्रुपत्वात् । अयञ्चार्थो न बहिः सम्भवति; कवेश्च प्रौढोक्त्या वक्तुं न वोचित इति तथा व्यवह्रियते ।

### साहित्यचूडामणि:

अर्थावगम इति । विजयगाथारूपा कीर्त्तिरित्यर्थवत्त्वनैयात् ।

### सम्प्रदायप्रकाशिनी

कैलासस्येति । प्रथमशिखर इति दिङ्मातङ्गनेदिष्ठता सूचिताः । वेणुशब्देन वेणुवादो लक्ष्यते । सम्मूर्छना सम्भेदः । तानकल्पवेणुनादसम्मूर्छनोपलक्षिततया गीयमानामित्यर्थः । स्रस्तापाङ्गः कर्णजाहाभिमुखोच्चलितकटाक्षाः । तथा कटाक्षक्षेपेण श्रुता कीर्त्तिः कर्णपरिसरे धवलोज्जवला दृष्टेति सिद्धवत्कृत्याह—सरसबिसिनीकाण्डसञ्जातशङ्का इति । श्रवणपुलिन इति श्रवणस्य पुलिनत्वेन रूपणं शङ्कितविसिनीकाण्डयोगात् हस्तमावर्तयन्तीति । जातिस्वाभाव्यान्मृणालगृध्नुतैषामाविष्कृता । अत्र परिपाण्डुकीर्त्तिसन्दर्शनादिना कविप्रौढोक्तिमात्रनिष्पादितेन वस्तुना तिरश्चामप्येवंबुद्धिजननेन चमत्कारिणी कीर्त्तिरिति वस्तु ।

### विस्तारिका

कविप्रौढोक्तिनिष्पन्नानां व्यञ्जकतामाह—कैलासस्येत्यादि । प्रथमशिखरे मूलशिखरे, वेणुसंमूर्छनाभिः, वेणूत्थापितरागैः । तदुक्तम्—

**स्वरः संमूर्छितो यत्र रागत्वं प्रतिपद्यते ।**
**मूर्छनामिति तां प्राहुर्गीततत्त्वविदो जनाः ॥** इति ।

पुलिने समीपे, पुलिनत्वेन श्रवणस्य सरसीत्वम्, अत एव मृणालत्वभ्रमः ।

अत्रेति—वस्तुना कविप्रौढोक्तिनिष्पन्नेन मृणालवद् यशः कर्णप्रवेशरूपेण । एवमादि मृणालादि ।

### सारबोधिनी

कविप्रौढोक्तिनिष्पन्नं यथाक्रममुदाहरति कैलासस्येति । संमूर्च्छना रागः । तदुक्तम्—

**'स्वरः संमूर्च्छितो यत्र रागतां प्रतिपद्यते ।**
**संमूर्च्छनेति तं प्राहुर्गीततत्त्वविदो जनाः ।'**इति

अत्रेति । अयञ्चार्थो बहिरसन् कविभिरेवं वर्ण्यत इति भवत्यस्य तथात्वम् ।

### काव्यप्रदीप:

कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—

'कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥'

अत्र यद्यपि बिसिनीकाण्डसंजातशङ्का इति भ्रान्तिमान्, ससंदेहो वालंकारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वोदाहरणमयुक्तम्। तथापि तद्भागनैरपेक्ष्येणापि किंचिच्छुक्लं कर्णे प्रविशतीत्येतावतापि वस्तुमात्रेण येषामप्यर्थाधिगमो नास्ति तेषामप्येवं श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्करोतीति व्यक्तिसंभवाद्वस्तुमात्रोदाहरणत्वमुक्तम्। अत्र च कीर्तिश्रवणानन्तरं कर्णे हस्तावर्तनं हस्तिनो न स्वतःसंभवि। किन्तु कविसंप्रदायात्कविना वर्णितमिति कविप्रौढोक्तिसिद्धत्वम्। एवमग्रेऽपि द्रष्टव्यम्।

## आदर्शः

(५) कविप्रौढोक्तिसिद्धवस्त्वलङ्कारव्यङ्ग्यचतुष्के उदाहर्त्तव्ये कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तूदाहरति—कैलासस्येति। कैलासस्य मुख्यशिखरे वेणुसंमूर्च्छनाभिः वेणुना रागपर्य्यापणैः सह विबुधरमणीभिर्गीयमानां यदीयां कीर्तिं श्रुत्वा सरसबिसिनीकाण्डत्वेन संजातशङ्काः दिङ्मातङ्गाः श्रवणस्य समीपदेशरूपे पुलिने धर्त्तुं हस्तमावर्त्तयन्तीत्यर्थः। कीर्त्तिवद् धावल्योपपादनाय विसिन्याः काण्डस्य सरसत्वमुक्तम्। धावल्यस्य श्रोत्राग्राह्यत्वादाह—स्रस्तापाङ्गा इति, तथाच अपाङ्गेनैव धावल्यग्रह इति भावः। अत्रेति, 'वस्तुना' उक्ताशङ्कया हस्तावर्त्तनरूपेण, स्वतोऽसम्भवात् कविप्रौढोक्त्यैव सिद्धेन। येषामिति हस्तिनामपि तथात्वात्।

## सुधासागरः

अथ कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिमुदाहरति—कैलासस्येत्यादि। मन्दाक्रान्ता छन्दः। लक्षणमुक्तम्। राजवर्णनमिदम्। कैलासस्य प्रथमशिखरे हिमगिरेः श्रेष्ठशृङ्गे वेणूनां वंशवाद्यानां संमूर्च्छनाभी रागविशेषैः करणभूतैः। उक्तञ्च—

स्वरैः संमूर्च्छना यत्र रागतां प्रतिपद्यते।
मूर्च्छलामिति तां प्राहुर्गीततत्त्वविदो जनाः ॥ इति।

विबुधरमणीभिर्देवाङ्गनाभिः कर्तृभूतैर्गीयमानां त्वदीयां त्वत्सम्बन्धिनीं कीर्तिं श्रुत्वा। सरसबिसिनीकाण्डेषु धवलतमकमलिनीकदम्बेषु सञ्जाता शङ्का येषां तथाभूताः, अत एव स्रस्तापाङ्गा, चलितनेत्रप्रान्ताः, दिङ्मातङ्गाः ऐरावणादयः, श्रवणपुलिने कर्णतटे, हस्तं शुण्डादण्डमावर्त्तयन्ति मुहुर्व्यापारयन्तीत्यर्थः।

अत्र यद्यपि विसिनीकाण्डसञ्जातशङ्का इति भ्रान्तिमान् सन्देहो वाऽलङ्कारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वोदाहरणमयुक्तम्, तथापि तद्भागनैरपेक्ष्येणापि किञ्चिच्छुक्लं कर्णे प्रविशतीत्येतावतापि वस्तुमात्रेण येषामप्यर्थाधिगमो नास्ति तेषामप्येवं श्वैत्यमूर्त्तत्वादिबुद्धिजननेन त्वत्कीर्त्तिश्चमत्करोतीति व्यक्तिसम्भवाद्

वस्तुमात्रोदाहरणत्वमुक्तम् । अत्र च कीर्तिश्रवणानन्तरं कर्णे हस्तावर्त्तनं हस्तिनो न स्वतःसम्भवि, किन्तु कविप्रौढोक्तिसिद्धम् । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह अत्र वस्तुनेत्यादि । एवमग्रेऽपि द्रष्टव्यम् ।

## विवरणम्

कविप्रौढोक्तिनिष्पन्नशरीरकेण व्यञ्जकेन वस्तुना वस्तुनो व्यञ्जनमुदाहरति—**कैलासस्येति** । **प्रथमशिखरे**ऽत्युच्चशिखरे । तेन दिग्गजानां दिगन्तवासित्वेऽपि श्रवणयोग्यता सूचिता । यद्वा कैलासत्वेन हरोपासनार्थमागमनं तेषां सूच्यते । सम्मूर्च्छना रागपर्याप्तिः । **स्रस्तापाङ्गा** इत्यनेन चाक्षुषी शङ्का लभ्यते । **श्रवणपुलिने** श्रवणतटे पुलिनाकारे श्रवणे वा । **वस्तुनेति**, श्रोत्रग्राह्यकीर्तिधर्मिकचाक्षुषशङ्का तद्धेतुकहस्तावर्तनादिस्वरूपेण कविप्रतिभानिष्पन्नशरीरेणेति शेषः । **येषामपीत्यादि** । अयं भावः—विदग्धैरर्थावगमशालिभिरर्थनिष्ठमौज्ज्वल्यसारस्यादिकं कीर्त्तावारोप्यते । एतदीयकीर्त्तेस्तु स्वाभाविकमेवौज्ज्वल्यादि । कथमन्यथा पशुभिरपि तत् प्रतीयते । ते खलु नार्थनिष्ठमौज्ज्वल्याद्यारोपयितुमर्हन्तीति व्यङ्ग्यशरीरमिति । एवमादिबुद्धिर्बिसिनीकाण्डत्वादिशङ्का, तज्जननानुकूलं चमत्कारं सारल्यौज्ज्वल्यादेरारोपं करोतीति वाक्यार्थः ।

अत्र व्यञ्जकशरीरे पुलिनरूपकबिसिनीकाण्डभ्रान्तिमतोः, व्यङ्ग्यशरीरे चार्थापत्त्यादेः सत्त्वेऽपि, तेषामलङ्काराणां वस्तुनि गुणीभावात् प्रधानं वस्त्वेवात्र निर्दिष्टमिति ध्येयम् ।

**केसेसु बलामोडिअ तेण अ समरम्भि जअसिरी गहिआ।**
**जह कन्दराहिँ विहुरा तस्स दढं कंठअम्मि संठविआ ॥६५ ॥**

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्ति, इत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलंकारः। न पलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च।

---

**सङ्केतः**

केसेसु इति। बलामोडी बलात्कारः। विधुरः रिपवः।काव्यहेतुरिति। काव्यलिङ्गं नाम अलङ्कारः। अत्र हि—एकत्र रणे विजयदर्शनं रिपुणां गुहावस्थानवाक्यार्थतया हेतुः। ततः राज्ञः सकाशात्। कन्दराः इति। गुहाभिः ते अङ्गीकृताः, न तु नष्टाः इति भावः। अत्र वस्तुना उत्प्रेक्षाकाव्यहेत्वपह्नुतिरूपालङ्कारत्रयं ध्वन्यते इति योगः।

**सङ्केतः (रुय्यकः)**

**केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥**

तस्य विधुरा इति सम्बन्धः। अत्रोत्प्रेक्षायाः समासोक्तिर्मूलमवगन्तव्यम्। अन्यथा मदनोद्दीपनस्य निर्विषयत्वात्। जअसिरि गहि (आ)। एतैर्विधुरैर्जयो दृष्ट इति वाक्यार्थः प्रतीयते, तस्य च पलायनहेतुत्वेन प्रतीतेर्हेतोर्वाक्यपदार्थतेति काव्यलिंगता। न त्यजन्तीत्यपह्नुतेर्दृढं कण्ठे संस्थापितेति व्यञ्जकम्।

**बालचित्तानुरञ्जनी**

केशेष्विति। केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता। यथा कन्दराभिर्विबुधास्तस्य दृढ कण्ठे संस्थापिताः। तस्य विधुरा इति संबन्धः। कण्ठे सन्निवेशो इह चोत्प्रेक्षाव्यञ्जकत्वं समासाक्तेरेककन्दरा स्वस्त्रीव्यवहार समारोपं विना उद्दोपितमदना इवेत्युत्प्रेक्षाया असंभवात्। तदेवं वस्तुव्यञ्जकमुदाहरणमिति प्रकारान्तरेण व्याचष्टे एकत्रेति। काव्यहेतुः काव्यलिङ्गम्। तस्य हि समक्षं जयश्रीग्रहणात् भीता शत्रवः पलायिता इत्येवं रूपं दृढ कण्ठे स्थापिता इति [भागश्चापद्रुतैर्व्यञ्जकः ?] किं चात्रोत्प्रेक्षायाः ससन्देहेन सह काव्यलिङ्गमेकव्यञ्जकानुप्रविष्टम्।

वस्तुरूपकविप्रौढोक्तिसिद्धस्यालङ्कारव्यङ्ग्यस्योदाहरणमाह केसेस्विति। तेण तेन, समरम्भि समरे, जअसिरी जयश्री, केशेषु च अमोडिअ बलात्कारेण, गहिआ गृहीता, जंहा यथा, कंदराहि कन्दराभिः, तस्स तस्य, विहुरा विधुराः शत्रवः दढं दृढं यथा तथा, कण्ठअम्मि कण्ठे, सठविआ संस्थापिताः।

अत्र व्यङ्ग्यमाह अत्रेति। वाक्यार्थो न वस्तुरूपेण एकस्याः केशग्रहावलोकनेनान्यस्या अपि कामोद्बोध इति आलिङ्गनस्योत्प्रेक्षा व्यज्यत इत्यर्थः।

अत्रैवालङ्कारान्तरमाह एकत्रेति। जयश्रीग्रहणेन वाक्यार्थभूतेन हेतुना जातभयाः शत्रवः पलाय्य गुहासु गता इति काव्यहेतुः काव्यलिङ्गाख्योऽलङ्कारो व्यज्यत इत्यर्थः।

पुनरप्यत्रालङ्कारान्तरमाह न पलाय्येति। तद्वैरिणः पलाय्य न गता अपि तु तस्मात् सकाशात् कन्दराः तेषां पराभवं संभाव्य तान् न त्यजन्ति। कंदराभिः शरणं दत्तमित्यर्थः। प्रस्तुतस्य पलायनस्यापह्नुवात् अपह्नुत्याख्योऽलङ्कारोऽत्र व्यञ्जक इत्यर्थः।

## काव्यादर्शः

केशेष्विति। बलामोडिए ति, बलात्कारवाची देश्यः। तस्य विधुरा वैरिण इति संबन्धः। अत्र वाक्यार्थेन वस्तुरूपेणैकस्याः केशग्रहावलोकनम्, अन्यस्या अपि मन्मथोन्माथं करोतीत्यालिङ्गनस्योत्प्रेक्षा, जयश्रीग्रहणेन च वाक्यार्थीभूतेन हेतुना जातभयाः शत्रवो नंष्ट्वा गुहासु गता इति काव्यलिङ्गं प्रस्तुतस्य च पलायनस्यापह्नवाद् अपह्नुतिश्च व्यज्यते, कविप्रजापतिवाचोऽस्याः कामधेनुत्वात्।

## विवेकः

केसेसु इत्यादि—केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता। यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥ तस्य विधुरा इति सम्बन्धः। अत्रोत्प्रेक्षायाः समासोक्तिर्मूलमवगन्तव्यम्, अन्यथा मदनोद्दीपनस्य निर्विषयत्वात्। जअसिरी गहिआ—एतैर्विधुरैर्जयो दृष्ट इति वाक्यार्थः प्रतीयते, तस्य च पलायनहेतुत्वेन प्रतीतेर्हेतोर्वाक्यपदार्थतेति काव्यलिङ्गता। [न] त्यजन्तीत्यपङ्क्तेर्दृढं कण्ठे संस्थापितेति व्यञ्जकम्।

## दीपिका

पुलिने तटे। बलामोडिअ बलात्कारेण। तस्य विधुरा इति सम्बन्धः। [दढं] कण्ठस्य सन्निवेशेन।

अत्र यद्यपि समासोक्त्यलङ्कृत एवार्थो व्यञ्जकस्तथापि विशेषणतया [यस्य] प्राधान्यविरहेणागणनम्। अतएव [वृत्तिकृत] तदनपेक्षया व्यङ्ग्यं काव्यलिङ्गं सारतया मध्ये लिखितवान्। तस्य हि जयश्रीग्रहणाद्भीताः शत्रवः पलायिता इत्येव शरीरम् (बीजम् ?)। दृढमित्यादिभागोऽपह्नुतिदीपकः। अत्रोत्प्रेक्षाऽपह्नवसम्भेदेन सह काव्यहेतुरेकव्यञ्जकानुप्रविष्टः रहसुज्जुअम्मि रभसोद्यते। लहु आशु।

## साहित्यचूडामणिः

'केसेसु' इति।

**केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥** इति।

कण्ठगतप्राणाः सन्त उज्जीविताः कण्ठालिङ्गनेनोपलक्षिताश्च। केशग्रहणं विपक्षसम्बन्धिजयलक्ष्म्यामारोप्यते समासोक्त्या नायिकाकेशग्रहो व्यज्यते। तथा च सह नायकस्योपभोगः। तदवलोकनादुद्दीपितमदना इत्युत्प्रेक्षा। काव्यहेतुरिति काव्यलिङ्गं, यद् वाक्यार्थरूपम्, एकत्र सङ्ग्रामे विजयदर्शनादित्युक्तत्वात्। अपह्नुतिश्चेति। उत्प्रेक्षानुग्रहादियं व्यङ्ग्या। अन्यथा कन्दरास्तान् न त्यजन्तीति वक्तुमशक्यत्वात्। अलंकाराणां व्यङ्ग्यत्वं चमत्कारायेति बह्वलंकारप्रदर्शनप्रयासः। यदाह—

**रूपादिरलंकारवर्गो यो वाच्यतां गतः।**
**स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः** ॥ध्व. २.२६ ॥इति।

**शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्।**
**तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः** ॥ध्व. २.२९ ॥इति।

### सम्प्रदायप्रकाशिनी

केसेसु बलेति।

**केशेषु बलात्कारेण तेन (च) समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥**

समरे जयश्रीस्तेन तथा केशेषु गृहीता, यथा विद्विषो गिरिकन्दराभिः कण्ठे इति।

अत्र केशग्रहेति उद्दीपितमदनत्वे हेतुः। एकत्रेति। इतरथा कन्दरा सम्बन्धासम्भवात्। काव्यहेतुः काव्यलिङ्गालङ्कारः।

### विस्तारिका

वस्तुनोऽलङ्कारव्यञ्जकतामाह—केसेस्विति।

**केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥**

एकस्या नायककर्तृककेशाकर्षणदर्शनेनापरस्याः कामोद्रेकः स्यादेव। समासोक्तितः पुनरुत्प्रेक्षाया एवात्र सङ्कीर्णमाह—काव्यहेतुरिति। चकारेणैकव्यञ्जकानुप्रवेशसङ्करसूचनमत्र वाक्यार्थैः; न लोकसिद्ध इति न स्वतः सम्भवी।

### सारबोधिनी

केसेस्विति।

**केशेषु बलादामोक्ष्य तेन च समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥**

एकस्या नायककर्तृककेशाकर्षणदर्शनेनापरस्याः कामोद्रेकः स्यादेवेति समासोक्तिः । पुनरुत्प्रेक्षाया एवाङ्गम् । असङ्कीर्णमाह काव्यहेतुरिति । चकारेण एकव्यञ्जनानुप्रवेशसङ्करसूचनम् ।

## काव्यप्रदीपः

अत्रैव वस्तुनालंकारस्य यथा—

**'केसेसु बलामोडिअ (मोडि) [तह] तेण समरम्मि जअसिरी गहिआ ।**

**जह कंदराहिं विहुरा तस्स दढं कण्ठअम्मि संठविआ ॥'**

अत्र तेन तथा समरे केशेषु जयश्रीर्गृहीता यथा तस्यारयः कंदराभिः कण्ठे स्थापिता इति वस्तुना एकत्रैव सङ्ग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यलिङ्गम् । न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं संभाव्य कंदरा एव न तास्त्यजन्तीत्यपह्नुतिश्च व्यज्यते । यत्तु केशग्रहावलोकनोद्दीपितमदना इव कंदरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षा व्यज्यत इति तद्भवेदेवम्, यदि पूर्वं कंदरादीनां नायिकात्वाद्यारोपः स्यात् । अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात् । तदभ्युपगमे च न वस्तुमात्रस्य व्यञ्जकत्वम् । किन्तु समासोक्तेरलंकारस्य ।

## आदर्शः

(६) कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह—केसेसु इति ।

**केशेषु बलात्कृत्य तेन समरे जयश्रीर्गृहीताः ।**

**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ।**इति संस्कृतम् ।

तस्य विधुराः शत्रवः कन्दराभिर्यथा स्वकण्ठे संस्थापिता भवन्ति तथा जयश्रीः समरे तेन केशेषु बलात्कृत्य गृहीतेत्यर्थः । तेन पराजिताः शत्रवो गुहासु पलाय्य तिष्ठन्तीत्यर्थः । अत्रेति, केशेषु ग्रहणं चुम्बनार्थमित्यभिप्रायेणेदम् । जयश्रियः केशग्रहणं कन्दराभिः स्वकण्ठेऽरिस्थापनञ्चालीकत्वात् कविप्रौढोक्त्यैव सिद्धमत्र व्यञ्जकम् । अत्र च श्लोके केशग्रहणस्य चुम्बनार्थत्वप्रापकाभावादन्यदाह — एकत्रेति । 'काव्यहेतुः' हेत्वलङ्कारः । अत्र च कण्ठग्रहणस्य प्रकृतानुपयुक्त्वादन्यदाह—न प्रपलाय्येति, स्वरक्षणार्थं स्वकण्ठे नायकग्रहणमिति भावः । 'अपह्नुतिः' पलायनस्य । चकारः अत्र वाऽर्थे समुच्चयस्य उक्तयुक्त्या बाधात् ।

## सुधासागरः

अत्रैव वस्तुनाऽलङ्कारस्य यथा—केसेत्यादि । गीतिश्छन्दः ।

**आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवदुभयोः ।**
**दलयोः कृतयतिशोभां तां गीतिं गीतावान् भुजङ्गेशः ॥**

इति लक्षणात् ।

**केशेषु बलादामोठ्य तेन समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥**

इति संस्कृतम्। अयमर्थः। तेन राज्ञा नायकेन च, समरे युधि सुरतसङ्गरे च, जयश्रीर्विजयलक्ष्मीरामोठ्य भोगाभिमुखीकृत्य, बलात्केशेषु तथा गृहीता यथा कन्दराभिः स्त्रीलिङ्गेन नायिकात्वारोपो ध्वन्यते, तथा च दरीभिर्नायिकाभिश्च तस्य राज्ञो नायकस्य च विधुराः शत्रवः सम्भोगासहिष्णवश्च, कण्ठे तटे कण्ठदेशे च, दृढं संस्थापिता इति।

अत्र केशग्रहणेत्यादिना प्रदर्शितव्यङ्ग्यालङ्कारत्रयेऽन्यतमपरिग्रहे साधकबाधकाभावादनिश्चयसङ्करः श्रीवाग्देवतावतारैरपह्नुतिश्चेति चकारेण सूचित इति बोध्यम्।

यत्तु सारबोधिनीकारैरुक्तम्—चकारेणैकव्यञ्जकानुप्रवेशसङ्करसूचनमिति, तत्रामादिकम्। 'स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम्' इति लक्षणात्।

काव्यप्रदीपकारास्तु—यत्तु केशग्रहावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्तीत्युत्प्रेक्षा व्यज्यत इति, तद् भवेदेवम्, यदि पूर्वं कन्दरादीनां नायिकात्वाद्यारोपः स्यात्, अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात्, तदभ्युपगमे च न वस्तुमात्रस्य व्यञ्जकत्वं किन्तु समासोक्तेरलङ्कारस्येति प्राहुः।

अत्र ब्रूमः। यथेति यच्छब्देनोत्तरवाक्यगतेन तच्छब्द आक्षिप्यते, तेन च पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद् वाक्यैकवाक्यमिदम्, तत्र तेनेति कन्दराभिरिति च पदद्वयं विशेष्यसमर्पकं श्लिष्टञ्च। तथा च न समासोक्तिः, विशेष्यविशेषणवाचिनां सर्वेषां श्लिष्टत्वे तत्स्वीकारात्। किञ्च—यत्रोभयतात्पर्यवशादभिधयैवार्थद्वयोपस्थितिस्तत्रैव श्लेषः। प्रकृते तु व्यञ्जनया द्वितीयार्थस्य प्रतिभामात्रमिति न तादृशाचार्यवचनस्य प्रामाण्यशङ्का कथञ्चिदुदेतीति दिक्।

एवं चैकस्या नायककर्तृककेशाकर्षणदर्शनेनान्यस्याः कामोद्रेकः स्यादेवेति समासोक्तिः पुनरुत्प्रेक्षाया एवाङ्गमिति श्रीवस्तसलाञ्छनभट्टाचार्याणां समाधान मनादेयम्।

## विवरणम्

केसेसु इति। **'केसेषु बलात्कृत्य तेन समरे जयश्रीर्गृहीता। यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥'** इति च्छाया। अत्रेति। जयश्रीरिति स्त्रीत्वेन, तेनेति पुंस्त्वेन निर्देशात् तत्कर्तृकं जयश्रीकेशग्रहणं नायककर्तृकनायिका केशग्रहणत्वेनाध्यवसीयते। तेन तदवलोकनाधीना मदनदीप्तिरभिव्यज्यते। सा च स्त्रीत्वेनाध्यवसितया कन्दरया कृते विधुरस्य पुंसः कण्ठग्रहे हेतुत्वेनोत्प्रेक्ष्यत इत्युत्प्रेक्षालङ्कारो व्यङ्ग्य इत्यर्थः। दीप्तमदना इव गृह्णन्तीत्यत्र सिद्धसाध्यसमभिव्याहारलभ्यस्य कार्यकारणभावस्य सम्भावनमिवशब्देनोच्यत इति ध्येयम्।

ननु 'जह कन्दराहिं' इत्यत्र यथाशब्देन कन्दराकण्ठग्रहे जयश्रीकेशग्रहणस्य हेतुहेतुमद्भाव उच्यते। अत एवैतादृशस्थले 'यथा येन कारणेन' इति विवृण्वते। तस्य वाच्यस्योपकारको व्यापारीभूताया मदनदीप्तेर्हेतुहेतुम-

द्भावादिरिति न ध्वनिप्रस्थानस्यायं विषय इत्यतो व्यङ्ग्यान्तरमाह—एकत्रेति। अस्मिंश्च हेत्वलङ्कारे व्यङ्ग्ये जयश्रीपदादीनां समासोक्तिर्नापेक्ष्यत इति वस्तुमात्रव्यङ्ग्यताऽपि युज्यते।

नन्वेवं कन्दराभिर्दृढं संस्थापिता इत्यत्र कन्दरायाः कर्तृत्वस्य दाढर्यादेश्च कथनं न व्यञ्जनायामुपयुज्येतेत्यतो व्यङ्ग्यान्तरमाह—न 'प्रपलाय्येति। गता इत्यनन्तरमनिशं निलीय तिष्ठन्तीति शेषः। तथा च कन्दराणामपरित्यागेन निलीयावस्थानमेवापह्नवहनीयम्। मातृत्वादिनाऽध्यस्तायाः कन्दरायास्तदपरित्याग आरोप्य इत्यपह्नुतिशरीरम्। तत्र चारोप्ये कन्दराकर्तृकापरित्यागे हेतुत्वेन ततः पराभवसम्भावनं पूर्वार्धाभिव्यङ्ग्यमुत्प्रेक्ष्यत इत्युत्प्रेक्षाऽप्यत्र गर्भिता निर्दिष्टेति प्रणिधेयम्। यथाश्रुते तु पलाय्य गमनमपह्नवनीयं प्रतीयते, न च तत्स्थाने कन्दराभिरपरित्याग आरोपयितुं युज्यत इति ध्येयम्।

**गाढालिंगणरहसुज्जुअम्मि दइए लहुं समोसरइ ।**
**माणंसिणीण माणो पीलणभीअ व्व हिअआहिं ।। ६६ ।।**

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भते, इति वस्तु ।

---

### सङ्केतः

अत्र उत्प्रेक्षयेति । हृदयात् पीडनभीतः इवेतिरूपया इत्यर्थः । अयं भावः—यदि कामिनी प्रत्यालिङ्गनादि न कुरुते, तदा कथं पीडनम् ? तदभावे च न भीतत्वोत्प्रेक्षणम् । प्रत्यालिङ्गनादेश्च तस्याः मानः अपसृतः—तत्र तावत् एतौ मत्तत्वात् मिथः स्वं पीडयतः, ततः अहं किमिति अन्तराक्रियः ? इति मानापसरणकार्यत्वात् तस्य—इति भावः ।

### सङ्केतः (रुय्यकः)

अत्रालिङ्गनमात्रेणापि पीडनस्य सम्भवः, प्रत्यालिङ्गनेन तु सौष्ठवमिति न तस्य वाच्यसिद्ध्यङ्गत्वम् ।

### बालचित्तानुरञ्जनी

अलङ्काररूपकविप्रौढोक्तिनिमित्तवस्तुव्यङ्ग्यस्योदाहरणमाह गाढालिङ्गनेति । माणंसिणीण मनस्विनीनां, माणो मानः, दइए, दयिते, गाढालिंगणरहसुज्जुअम्मि गाढालिङ्गनरभसोद्यते सति, पीलणभीअ व्व पीडनभीत्येव, हिअआहि हृदयात् ।

अत्र व्यङ्ग्यमाह अत्रेति । पुरुषेणालिङ्गने कृते सति स्त्रीकृतप्रत्यालिङ्गनमन्तरेण गाढालिङ्गनकृतभयासंभवात् प्रत्यालिङ्गनलक्षणं वस्तु व्यज्यत इत्यर्थः ।

### काव्यादर्शः

लघु यथा भवति । एवं समन्ताद् अपसरति मनस्विनीनां मानः । अत्र कविप्रौढोक्तिमात्रनिष्पन्नेन पीडनभीत इवेत्युत्प्रेक्षालंकारेण मानं मुक्त्वालिङ्गनचुम्बनादि कुर्वन्तीति वाक्ये वस्तु व्यङ्ग्यम् ।

### विवेकः

गाढेति—गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति । मनस्विन्या मानः पीडनभीत इव हृदयात् । अत्रालिङ्गनमात्रेणापि पीडनस्य सम्भवः, प्रत्यालिङ्गनेन तु सौष्ठवमिति नैतस्य वाच्यसिद्ध्यङ्गता ।

### दीपिका

अत्र प्रत्यालिङ्गनप्रसादहसितादीनां प्रधानसन्निकर्षाधिक्यान्न वाच्याङ्गता । वाच्यसिद्ध्यङ्गत्वं विद्यत एवेति चेति, न आलिङ्गनोद्यममात्रेणैव वाच्यसिद्ध्यसम्भवात् ।

### दर्पणः

**गाढालिङ्गनरभसोद्यते दयिते लघुसमपसरति।**
**मनस्विनीनां मानः पीडनभीत इव हृदयात्॥**

लघु शीघ्रम्। तत्र चालिङ्गनोद्यममात्रेणैव वाच्यस्य सिद्धे प्रत्यालिङ्गनप्रसादहसितादीनां न तदङ्गत्वम्।

### साहित्यचूडामणिः

गाढेति।

**गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**
**मनस्विन्या मानः पीडनभीत इव हृदयात्॥** इति।

उत्प्रेक्षया मानः पीडनभीत इव पलायत इत्याकारया।

### सम्प्रदायप्रकाशिनी

गाढालिङ्गणेति।

**गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**
**मनस्विन्या मानः प्रेरणभीत इव हृदयात्॥**

अत्र कविप्रौढोक्तिनिष्पादितेनोत्प्रेक्षालङ्कारेण मानप्रेरणसूचितं प्रत्यालिङ्गनादि वस्तु।

### मधुमती

प्रत्यालिङ्गनेति। एककर्तृकालिङ्गने पीडायाः अभावात् इति भावः।

### विस्तारिका

अलङ्कारस्य वस्तुव्यञ्जकतामाह—गाढेत्यादि।

**गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**

**मनस्विन्या मानः पीडनभीत इव हृदयात्॥**

अत्रेत्यादिपदेन प्रसादहसितादिग्रहणम्, गाढालिङ्गनमात्रेणैव पीडनभयमिति प्रत्यालिङ्गनस्य वाच्यसिद्ध्यङ्गता। मानस्याचेतनस्य पीडनभयं न स्वतःसम्भवि।

### सारबोधिनी

गाढेति।

**गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**
**मनस्विन्या मानः पीडनभीत इव हृदयात्॥**

अत्रेति। आदिपदेन प्रसादहसितादिग्रहणम्।

## काव्यप्रदीपः

अत्रैवालंकारेण वस्तुनो यथा—

**'गाढालिङ्गणरहसुज्जुअम्मि दइए लहुं समोसरइ।**
**माणंसिणीण माणो पीलणभीरु व्व हिअआहिं ॥'**

अत्र पीडनभीत इवेत्युत्प्रेक्षयालंकारेण प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु ध्वन्यते।

## आदर्शः

(७) कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह—गाढालिङ्गणेति।

**गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**
**मनस्विनीनां मानः पीडनभियेव हृदयात्॥ इति संस्कृतम्।**

रभसोद्यते बलादुद्यते। अत्रेति, मानस्य भयाभावात् उत्प्रेक्षायाः प्रौढोक्त्यैव सिद्धिः। अत्र यद्यपि मानापसरणस्यैवेदं व्यङ्ग्यं तथाऽपि तत्सहकृताया उत्प्रेक्षाया अपि इदं व्यङ्ग्यमित्यभिप्रायः।

## सुधासागरः

अलङ्कारेण वस्तुनो यथा—गाढेत्यादि। गाथा छन्दः। लक्षणमुक्तम्।

**गाढालिङ्गनरभसोद्यते दयिते लघु समुपसरति।**
**मनस्विन्या मानः पीडनभीत इव हृदयात्॥**

इति संस्कृतम्। स्पष्टम्।

अत्र पीडनभीत इवेत्युत्प्रेक्षालङ्कारेण प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु ध्वन्यते।

## विवरणम्

गाढेति।

**'गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**
**मनस्विनीनां मानः पीडनभीत इव हृदयात्॥'**

इति च्छाया। रभसो बलात्कारः। अत्र पीडन भयहेतुकत्वेनोत्प्रेक्ष्यमाणं मानस्याचेतनस्यापसरणं कविप्रौढोक्तिमात्रनिष्पन्नशरीरं व्यञ्जकम्। मानापसरणकार्याणि प्रत्यालिङ्गनादीनि व्यङ्ग्यानीत्याह—अत्रेत्यादि।

जा ठेरं व हसन्ता कइवअणंबुरुहबद्धविणिवेसा।
दावेइ भुअणमंडलमण्णं विअ जअइ सा वाणी ॥ ६७ ॥

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगत् अजडासनस्था निर्मिमीते, इति व्यतिरेकः। एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः।

---

**सङ्केतः**

व्यतिरेकः इति। ब्रह्मा हि जडे जलजे स्थितः सन् अचमत्कारि पुराणं जगत् निर्मिमीते। वाणी तु सचेतनकविवक्त्राब्जस्थिता पूर्वोक्तविपरीतं तत् दर्शयति इति भावः।

**सङ्केतः (रुय्यकः)**

**या ब्रह्माणमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।**
**दर्शयति भुवनमण्डलमन्यदेव जयति सा वाणी॥**

थेरं स्थविरमपि। अत्र निर्मातृत्वात्तव गर्वो मा भून्ममापि निर्मातृत्वादिति हसनस्योपपत्तेर्हसन्तीति वाच्ये समर्थिते गम्यमानव्यतिरेकाभिप्रायेण हसनं योजनीयम्।

**बालचित्तानुरञ्जनी**

अलङ्काररूपकविप्रौढोक्तिनिर्मितस्यालङ्कारव्यङ्ग्यस्योदाहरणमाह जा ठेरमिति। वाणी ठेरं स्थविरम् ब्रह्माणं हसन्ती कइवअणं बुरुहबद्धविणिवेसा कविवदनांबुरुहबद्धविनिवेशा भुअणमण्डलं, अण्णं विअ अन्यदिव, दावेइ दर्शयति। सा वाणी जअइ जयति।

व्यङ्ग्यमाह अत्रेति। ब्रह्मासने हे पद्मे! प्रविश्य अचमतकारकारि जगन्निर्मिमीते इति उपमानभूतात् ब्रह्मसर्गात् उपमेयभूतस्य कविसर्गस्याधिक्यमिति व्यतिरेकालङ्कारो व्यङ्ग्य इत्यर्थः।

**काव्यादर्शः**

थेरं ब्रह्माणं स्थविरं च। दावेइ दर्शयति। भुवमन्यदेव। तत्प्रसादाद् हि कविगोचरोऽर्थश्चमत्कारकारी निरवधिः संपद्यते। एषा च कवेरेवोक्तिः प्रौढा।

**विवेकः**

जा इत्यादि—या ब्रह्माणमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा। दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥ ठेरं स्थविरमपि। अजडासनस्थेति—'ब्रह्मस्थानाम्बुजस्य जडता व्यक्तैव। अत्र निर्मातृत्वात्तव

गर्वोऽभून्ममापि निर्मातृत्वादिति हसनस्योपपत्ते'र्हसन्तीति वाच्ये समर्थिते गर्वोऽतिरिक्तातिशयत्वाद्यभि-(गम्यमानव्यतरेकाभिः) प्रायेण हसनं योजनीयम् ।'

## दीपिका

ठेरं स्थविरं प्रजापति दाशेइ दर्शयति च्चिअ एव । अत्र 'हसन्ती'त्यनेन प्रजापतितो व्यतिरेको, 'जअइ'इत्यनेन च स एव नवजगन्निर्मितेर्व्यङ्ग्यः ।

## साहित्यचूडामणिः

जा थेरमिति ।

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।**
**दर्शयति भुवनमण्डलमन्यदेव जयति सा वाणी ।।** इति ।

उत्प्रेक्षया स्थविरमिव हसन्तीत्याकारया । व्यतिरेक इति । सृज्यस्य जगतश्चमत्कारैककारणत्वादिर्व्यतिरेचको धर्मः ।

## सम्प्रदायप्रकाशिनी

जा थेरं वेति ।

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।**
**दर्शयति भुवनमण्डलमन्यदेव जयति सा वाणी ।।**

स्थविरो ब्रह्मा । हसन्तीवेतीवशब्दो भिन्नक्रमः ।

अत्रोत्प्रेक्षयेति । उत्प्रेक्षया कविप्रौढोक्तिकल्पितया हसन्तीवेति हासक्रियासम्भावनरूपयेत्यर्थः । चमत्कारैककारणं नवं नवमित्यन्यदेवेति पदस्य तात्पर्योद्घाटनम् । अजरठाब्जासनस्थेति कविवदनाम्बुरुहेत्यस्य विवृतिः । स्थविरासनाम्बुजं हि जरठम् । चतुष्टयमिदमुपसंहर्तुमाह—एषु कविप्रौढेति ।

## मधुमती

कविवदनेति । कविवदने अम्बुरुहे बद्धः विनिवेशः यया सा तथा इति विग्रहः ।

## विस्तारिका

अलङ्कारस्यानलङ्कारव्यञ्जकतामाह—जा ठेरमिति ।

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ।।**

कविवदनाम्बुनि जगदन्यदर्शनात् ।

न स्वतःसम्भविनौ स्वल्पचित्ता इत्यादिगम्यो व्यतिरेकः ।

## सारबोधिनी

जा ठेरमिति ।

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥**

अण्णं विअ इत्यादिगम्यो व्यतिरेकः ।

## काव्यप्रदीपः

अत्रैवालंकारेणालंकारस्यं यथा—

**आ ठेरं व हसन्ती कइवअणम्बुरुहबद्धविणिवेसा।**
**दावेइ भुअणमण्डलमण्णं विअ जअइ सा वाणी[1]॥**

अत्र जा ठेरं व हसन्तीत्युत्प्रेक्षालंकारेण चमत्कारैककारणं नवनवं वदनम्बुजासना निर्मिमीत इति वाण्या ब्रह्मणो व्यतिरेकः प्रकाश्यते । यद्यप्युत्प्रेक्षां विनापि व्यतिरेकोऽयं प्रकाशते 'नियतिकृतनियम—' इत्यादिवत्, तथापि व स्फुटो भवतीति । यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽप्युत्प्रेक्षाव्यञ्जकत्वं न विहन्यत इति ।

## आदर्शः

(८) कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह—जा ठेरमिति ।

**या वृद्धमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥** इति संस्कृतम् ।

ठेरः वृद्धे देशी । वृद्धम् अत्र अर्थात् ब्रह्माणम् । तदीयभुवनान्यत्वप्रदर्शनेन तस्यैवोपहसनीयत्वौचित्यात् । ब्रह्मणोऽपि पद्मासनत्वादत्र कविवदने अम्बुरुहरूपणम्, तदैव तस्योपहसनयोग्यतासम्भवात् । वाणी चात्र कवित्व-रूपैव तस्या एव कविवदनस्थितेः, अतस्तत्कर्तृकोपहासोत्प्रेक्षाया भुवनान्यत्वदर्शनोत्प्रेक्षायाश्च कविप्रौढोक्त्यैव सिद्धिरित्यभिप्रेत्याह—अत्रेति । नवमिवेत्यन्तं भुवनान्यत्वोत्प्रेक्षाया अजलजाब्जेत्यादिकमुपहासोत्प्रेक्षाया व्यङ्ग्यम् । अजलजं यदब्जं मुखात्मकं पद्मं तदासनस्थेत्यर्थः । 'व्यतिरेकः' वाण्या उपमेयाया उपमानब्रह्मापेक्षया आधिक्यरूपः ।

## सुधासागरः

अत्रैवालङ्कारेणालङ्कारस्य यथा—जा ठेरमित्यादि । गाथा छन्दः ।

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ।**

इति संस्कृतम् । स्पष्टम् ।

अत्र जा ठेरं व हसन्तीत्युत्प्रेक्षालङ्कारेण चमत्कारैककारणं नवनवं जगदनम्बुजासना निर्मिमीते इति वाण्या ब्रह्मणो व्यतिरेको व्यज्यते ।

यद्यप्युत्प्रेक्षां विनाऽपि व्यतिरेकोऽयं प्रकाशते, नियतिकृतनियमेत्यादिवत्, तथापि न स्फुटो भवतीति । यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽपि उत्प्रेक्षाव्यञ्जकत्वं न विहन्यत इति ।

## विवरणम्

जा ठेरमिति ।

**'या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥'**

इति च्छाया । स्थविरं प्रजापतिम् । अत्र जडायाः कविवदनवृत्तेः शब्दात्मिकाया वाण्या हासादिकमसम्भावितमिति कविप्रौढोक्तिनिष्पन्नशरीरत्वम् । अत्रोत्प्रेक्षयेति । जातावेकवचनम्, इवशब्दद्वयेन द्वयोरुत्प्रेक्षयोरभिधानात् । तथा हि—'लिम्पतीव तमोऽङ्गानि' इत्यादाविव वाणीकर्तृकं बाधितार्थबोधनमन्यभुवनमण्डलप्रदर्शनाभेदेनोत्प्रेक्ष्यते । तत्र च स्थविरोपहासः फलत्वेनोत्प्रेक्ष्यत इति व्यतिरेकालङ्कारोपपादकमुपमेयोत्कर्षमुत्तरार्धभिव्यङ्ग्यमाह—नवमित्यादि । क इव अणेत्यादिव्यङ्ग्यमाह—अजडासनस्थेति । ब्रह्मा जडे कमले वसतीति निष्कर्षः । क्वचित् 'अजलासन' इति, क्वचित् 'जलजासन' इति पाठस्तथा न चमत्करोति

जे लंकागिरिमेहलासु खलिआ संभोगखिण्णोरई—
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम्।
ते एहिंण मलआनिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ ॥६८ ॥

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

---

**संङ्केतः**

'किं किं न कुर्वन्ति' इति वस्तु वस्तुना वृत्तोक्तेन व्यज्यते इत्यर्थः ।

**सङ्केतः (रुय्यकः)**

ये लङ्कागिरिमेखलायाश्चलिताः संभोगखिन्नोरगी
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झगिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

अत्र ते ए (इ) ण्हिं त इदानीमर्थस्य निर्देशाद्बहिश्चास्य वाक्यार्थस्यासम्भवाद् वाच्यस्य कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नत्वं विद्यते ।

**बालचित्तानुरञ्जनी**

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितस्य वस्तुरूपस्य वस्तुव्यङ्ग्यस्योदाहरणमाह जे लङ्केत्यादिं । जे ये मलयानिलाः, लंकागिरिमेहलाहिं लङ्कागिरिमेखलायां, खलिआ स्खलिताः सन्तः संभोगखिन्नोरगी, स्फारोत्फुल्लफणावलीकवलनात् प्राप्ता दरिद्दत्तणं दरिद्रत्वम्। पत्ता प्राप्ताः । ते मलयानिलाः, एहिंण इदानीं, सिसुत्तणे वि शिशुत्वेऽपि विरहिणीणीसाससंपक्किणो निःश्वाससंपर्किणः सन्तः, तारुण्णपुण्णा विअ तारुण्यपूर्णा इव, बहला बहुलाः जादा जाता ।

अत्र व्यङ्ग्यमाह अत्रेति । यद्यपि तारुण्यपूर्णा इवेत्यत्रोत्प्रेक्षालङ्कारोऽस्ति तथापि तस्य व्यञ्जकत्वं नास्ति । अत एव विरहिणीनिःश्वाससंपर्किणः इत्येनेन वस्तुना निःश्वासैः प्राप्तैश्वर्याः किं किं न कुर्वते इत्येतद्वस्तु व्यज्यत इत्यर्थः ।

## काव्यादर्शः

फणावलीकवलनात् प्राप्ता दरिद्रत्वम् । मम मानस्य धीरत्वेन आश्वासं विरचय्य प्रियदर्शनविशृङ्खलक्षणे, तेन धीरत्वेनापसृतम् ।

## विवेकः

जे लङ्केत्यादि—'ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगीस्फारोत्फुल्लफणावलीकवलनात् प्राप्ता दरिद्रत्वम् । त इदानीं मलयानिला विरहिणीनिःश्वाससंसर्गिणो जाता झगिति शिशुत्वेऽपि वहलास्तारुण्यपूर्णा इव ॥ अत्र एणहिं (इ) तीदानीमर्थस्य निर्देशाद् बहिश्चार्थे (श्चास्य) वाक्यार्थस्यासम्भवाद्वाच्यस्य कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नत्वां 'विद्यते' (रु.सं. ३१ पृ:) वसन्तसमयवर्णनावस्थाऽऽरम्भेऽत्र दक्षिणानिलो मन्मथास्त्रार्थदायित्वेन विरहिणां दीर्घनिःश्वासमयीमवस्थां मूर्च्छादात्रीं तनुते । किञ्चोरगीरिव (खिन्नोरगीस्फार) फूत्कारविनिर्गततयेत्युत्प्रेक्षाऽपि प्रतीयमाना मन्तव्या ।

## दीपिका

झीणा खिन्ना । खिण्णेति तु व्यक्तम् । फारुप्फुल्लेति—विस्तीर्णोल्लसितेत्यर्थः । झत्ति तत्क्षणम् ।

अत्रेति—वस्तुना वाक्यार्थेन । इति (वस्तु) व्यज्यत इति योजना । अत्र कविनिबद्धो वक्ता कर्पूरमञ्जर्याम् ।

## साहित्यचूडामणिः

जे इति ।

**ये लङ्कागिरिमेखलायाश्चलिता सम्भोगखिन्नोरगी-**
**स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।**
**त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो**
**जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥** इति ।

किं किमिति । अघटितमपि कार्यं घटयन्ति, यतस्ते शैशव एव तरुणिमानवमवलम्बितवन्तः, किमन्यदेषामसाध्यम् ।

## सम्प्रदायप्रकाशिनः

जे लङ्कागिरीति ।

**ये लङ्कागिरिमेखलातश्चलिताः सम्भोगखिन्नोरगी-**
**स्फारोत्फुल्लफणावलीकवलनात् प्राप्ता दरिद्रत्वम् ।**
**त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो**
**जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥**

अत्र व्यञ्जकं वस्तु कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नम् ।

**मधुमती**

निःश्वासैरिति । प्रकृताभिप्रायमिदम्, न तु व्यङ्ग्यप्रविष्टम् । क्वचितु 'निस्स्वाः' इति पाठः । स तु युक्तः ।

**विस्तारिका**

कविवदनाम्बुनि जगदन्यदर्शनात् ।

**न स्वतः सम्भविनौ स्वल्पचित्ता इत्यादिगम्यो व्यतिरेकः ।**

कविनिबद्धवक्तृप्रौढोक्तिसिद्धानां व्यञ्जकतामाह—जे लङ्केत्यादि ।

**ये लङ्कागिरिमेखलासु स्खलिता सम्भोगखिन्नोरगी**

**स्फारोत्फुल्लफणावलीकवलनात् प्राप्ता दरिद्रत्वम् ।**

**त इदानीं मलयानिला विरहणीनिःश्वाससंसर्गिणो**

**जाता झगिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥**

लङ्कासन्निकृष्टो गिरिर्लङ्कागिरिर्मलयः । सम्भोगः स्वभोक्तृसर्वेभ्यसस्त्रासेन स्खलनं स्फारा वितता उत्फुल्ला ऊर्ध्वप्रसृता, तेन श्वा (त्रा) सस्य स्थूलता स्त्रीणामाहारद्वैगुण्येन उरगीति विशेषाभिधानम् । बहुलाः प्रचिताः । कर्पूरमञ्जर्यां सट्टके कर्पूरमञ्जर्या इयमुक्तिः ।

वस्तुना मलयानिलस्खलनयौवनरूपेण बहिरसम्भाव्येन वस्तुनो वस्तुव्यञ्जकत्वम् ।

**सारबोधिनी**

कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नं यथाक्रममुदाहरति जे लंकेति ।

**ये लङ्कागिरिमेखलायाः स्खलिताः संभोगखिन्नोरगी-**
**स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।**
**त इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणः**
**जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥**

अत्र पूर्णा इवेत्युत्प्रेक्षायाः सत्त्वेऽपि सा न व्यञ्जिका । तथा निःश्वाससंपर्कस्य बहुलत्वहेतोरुपादानात् संभवदपि काव्यलिङ्गं न व्यञ्जकम् । तदविवक्षायामपि तथाभिव्यक्तिसंभवात् । वस्तुतो वस्तुनः प्राधान्याद्वा वस्तुव्यञ्जकतोदाहरणतया तदत्तमिदम् । निःश्वासैरित्यत्र निःश्वास इति क्वचित्पाठः ।

**काव्यप्रदीपः**

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेर्भेदचतुष्टवे वस्तुना वस्तुनो व्यक्तिर्यथा—

'जे लङ्कागिरिमेहलासु खलिआ संभोगखिण्णोरई-
फारप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम्।
ते एहिंण मलआणिला विरहिणीणीसाससंपक्किणो
जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विअ॥'

अत्र यथोक्तेन वस्तुना निःश्वासेन प्राप्तैश्वर्याः किं किं न कुर्वन्तीति वस्तु व्यज्यते। तारुण्णपुण्णा विअ इत्यस्य व्यक्तावनुपयोगात् न चेवमस्याप्रयोजकत्वम्। उक्तिविशेषपरिपोषकत्वात्। निःश्वाससंपर्कस्य बहलत्व-हेतोरुपादानात्काव्यलिङ्गस्यैव व्यञ्जकतेति चेत्, न। तस्य हेतुत्वाविवक्षयापि तथा व्यक्तेः।

## आदर्शः

(९) कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्त्वलङ्कारव्यङ्ग्यचतुष्के उदाहर्त्तव्ये तादृशवस्तुव्यङ्ग्यं वस्त्वाह—जे लङ्केति।

ये लङ्कागिरिमेखलाभिस्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।
ते इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव॥ इति संस्कृतम्।

कविनिबद्धाया विरहिण्या उक्तिरियम्। अत्र वाता इति विशेष्यं पूरणीयम्, मलयानिला इति तु विशेष-णपदमेव न विशेष्यपदं तेषां लङ्कागिरिमेखलातोऽभिस्खलनाभावात्। तथाहि—ये वाताः लङ्कागिरेः सुवेलस्य मेखलातः अभिस्खलिताः, मलयागमने सति मलयानिलाः, सम्भोगखिन्नानामुरगीणां स्फाराभिरुत्फुल्लफणाव-लीभिः कवलने सति दरिद्रत्वं क्षीणत्वं प्राप्ताः, ते इदानीं विरहिणीनां निःश्वाससम्पर्किणः सन्तः शिशुत्वेऽपि बहला निविडाः सन्तः तारुण्येन पूर्णा इव जाता इत्यर्थः। सुवेलतो मलयागमने समुद्रलङ्घनात् शैत्यम्, मलयानिलत्वेनैव चन्दनसौरभम्, क्षीणत्वप्राप्त्या मान्द्यं वायोरत्र बोध्यम्। आहारो द्विगुणः स्त्रीणामित्यतो भक्षणाधिक्यलाभाय उरगीत्वोपादानम्, सम्भोगखिन्नत्वेन तत्राप्याधिक्यम्। अत्रेति, अस्थार्थस्य अलीकत्वेन वक्तृयाः प्रौढोक्त्यैव सिद्धिः, तद्व्यङ्ग्यमाह—निःश्वासैरिति। 'ऐश्वर्य्यं' बलम्। अत्र च तारुण्यपूर्णत्वोत्प्रेक्षाया अपीदं व्यङ्ग्यं बोध्यम्।

## सुधासागरः

एवं कविप्रौढोक्तिमात्रनिष्पन्नभेदचतुष्टयमुदाहृत्य कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेर्भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिमुदाहरति—जे लङ्केत्यादि। शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजस्तताः सुगरवः शार्दूलविक्रीडितम्' इति लक्षणात्।

ये लङ्कागिरिमेखलायाः स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।

त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटेति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

इति संस्कृतम् । ये लङ्कासन्निकृष्टो गिरिर्मलयस्तन्मेखलायाः सकाशात् स्खलिता उरगीभयादिति भावः, सम्भोगेन खिन्नानां क्षुत्पीडितानामुरगीणां सर्पिणीनां स्फारा वितता ऊत्फुल्ला उर्ध्वप्रसृता ये फणास्तेषामावलयः पङ्क्तयस्ताभिः कवलने भक्षणे सति दरिद्रत्वं प्राप्ताः स्वल्पावशिष्टाः, उरगीति स्त्रीत्वेनाहारद्वैगुण्यं व्यज्यते । तेन मलयानिलाः इदानीं विरहिणीनिःश्वाससम्पर्किणः प्राप्तैश्वर्याः सन्तः झटिति शीघ्रमेव शिशु त्वेऽपि तारुण्यपूर्णा इव बहला बहुतरा जाता इत्यर्थः ।

अत्र यथोक्तेन वस्तुना निःश्वासैः प्राप्तैश्वर्याः किं किं न कुर्वन्तीति वस्तु व्यज्यते, तारुण्णपुण्णा विअ इत्युप्रेक्षायाः व्यक्तावनुपयोगात् । न चैवमस्या अप्रयोजकत्वम्, उक्तिविशेषपरिपोषकत्वात् । निःश्वासम्पर्कस्य बहलत्वहेतोरुपादानात् काव्यलिङ्गस्यैव व्यञ्जकतेति चेत्, न, तस्य हेतुत्वाविवक्षयाऽपि तथाऽभिव्यक्तेः । तदेतत्सर्वमभिप्रेत्य वृत्तिकृदाह—अत्र निःश्वासैरित्यादि ।

## विवरणम्

कविनिबद्धप्रौढोक्तिनिष्पनिष्पन्नशरीरेषु व्यञ्जकेषु वस्तुना वस्तुव्यक्तिरित्यादि-क्रमेणोदाहरति—जे लंकागिरित्यादिना ।

"ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिश्श्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥"

इति च्छाया । स्फारा विस्तृताः । उत्फुल्ला उच्छूनाः ।

अत्र तारुण्यपूर्णत्वोत्प्रेक्षा सत्यपि नालङ्कारः, न ह्यालम्बनगतमिवोद्दीपनगतमपि तारुण्यं चमत्कुरुते, अचमत्कारिण्यास्तु सम्भावनायाः 'नूनं देवदत्तोऽयम्' इत्यादेरनलङ्कारत्वादिति वस्तुव्यञ्जकतायामेवेदमुदाहरणं बोध्यम् । किं किं न कुर्वन्ति कां कां कामिदशां न जनयन्ति, निश्श्वासैः प्राप्तैश्वर्या इति व्यञ्जकवस्तुनोऽनुवादमात्रम् ।

**सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम्।**
**पिअदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअम्॥ ६९ ॥**

अत्र वस्तुनाकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते, इत्युत्प्रेक्षा वा।

---

### सङ्केतः

सहीति। धैर्येण कर्त्रा मानविषयं आश्वासनं मे कृत्वा कम्पादिना विशृङ्खलयीति विशृङ्खले प्रियदर्शनक्षणे तेन विश्वासघातिना अप्रसृतम्। अकृतेऽपीति। प्रसन्नत्वस्य हेतौ प्रार्थने अकृतेऽपि तदुत्पत्तिः इति विभावना।

### सङ्केतः (रुय्यकः)

**सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम्।**
**प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम्॥**

अत्र प्रार्थनरूपायाः क्रियाया अभावेऽपि मानस्य निष्पन्नत्वात् प्रसादलक्षणस्य कार्यस्योत्पत्तौ विभावना, तस्याश्च सहसत्ति तेण ओसरिअं इति व्यञ्जकं, तेनेति च निर्दिष्टस्य धैर्यस्य विह्वलत्वेनापसरणे समर्थितं सौभाग्यफलं हेतुत्वेनोत्प्रेक्ष्यमाणं गम्यते।

### बालचित्तानुरञ्जनी

वस्तुरूपकविनिबद्धवक्तृप्रौढोक्तिनिर्मितस्यालङ्कारव्यङ्ग्यस्योदाहरणमाह सहीति। सहि सखि! धीरत्तणेण धैर्येण, मज्झ मम, मानस्स माणस्य, आसासं आश्वासम्, न अवस्थितमिति शेषः। तेण तेन, धैर्येण पिअदंसणविहलंखलखणम्मि, प्रियदर्शनविशृङ्खलक्षणे सहसत्ति सहसैव, ओसरिअं अपसृतम्।

अत्र व्यङ्ग्यमाह अत्रेति। वाक्यार्थरूपेण वस्तुना प्रार्थनालक्षणकारणाभावेऽपि स एवार्थः प्रसन्नतोत्पत्तिरिति विभावनालङ्कारो व्यज्यत इत्यर्थः।

### काव्यादर्शः

विभावनेति। कारणाभावे कार्यस्य प्रसादस्य सद्भावात्। तवार्द्रार्द्रनखरदनक्षतैर्मम लोचनयो रक्तांशुकं प्रसादो दत्तः, कोपेन पुनरिमेनाक्रान्ते। प्राकृते द्विवचनस्य बहुवचनम्।

## विवेकः

'सहित्यादि—सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम्। प्रियदर्शविशृङ्खलत्वक्षणे सहसेति तेनापसृतम्॥ अत्र प्रार्थनारूपायाः क्रियाया (अ) भावेऽपि मानस्य निम्भन्नत्वात् प्रसादनरूपस्य कार्यस्योत्पत्तो विभावना, तस्याश्च सहसत्ति तेण ओसरिअं इति व्यञ्जकं, तेनेति च निर्दिष्टस्य धैर्यस्य विह्वलत्वेनापसरणेन समर्पितं सौभाग्यफलं हेतुत्वेनोत्प्रेक्ष्यमाणं गम्यते।

## दीपिका

विहलङ्खलेति—कौतुकोत्तरलेत्यर्थः। सहसत्ति सहसैव। अत्रेति-वंस्तुना 'सहसत्ति' पदबोध्येन। उत्प्रेक्षेति—ओसरिअमिति व्यङ्ग्या चेति संसृष्टिसूचनं, परस्परसाचिव्यापेक्षया त्वेकव्यञ्जकत्वमेव।

## दर्पणः

**सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम्।**
**प्रियदर्शनविशृङ्खलक्षणे सहसा तेनापसृतम्॥**

अत्र विभावनोत्प्रेक्षयोः संसृष्टिः।

## साहित्यचूडामणिः

सहीति।

**सखि! विरचय्य मानस्य मम धीरत्वेनावकाशम्।**
**प्रियदर्शनविह्वलं क्षणे सहसेति तेनापसृतम्॥**

इति। इतीति अनुभूतेन प्रकारेण। अकृतेऽपीति। प्रार्थनाक्रियाप्रतिषेधेऽपि।

**"क्रियाया प्रतिषेधेऽपि फलव्यक्तिर्विभावने"**-ति (दशमे)

वक्ष्यते। प्रियदर्शनस्य नायकत्वं मानस्य प्रतिनायकत्वं धैर्यस्य तत्सामन्तत्वमिति व्यवस्थायामुत्प्रेक्षा चेति पक्षान्तरम्।

## सम्प्रदायप्रकाशिनी

सहिविरइउणेति

**सखि विरच्य मानस्य मम धीरत्वेनावकाशम्।**
**प्रियदर्शनविह्वलं क्षणे क्षणे झटिति तेनापसृतम्॥**

मम धैर्यं मानस्यावकाशं विरच्य प्रिये दृष्टे सति स्वयं वैह्वल्येन पलायिष्टेत्यर्थः।

अत्र वस्तुनेति। वस्तुना मानपलायनरूपेण। प्रियदर्शनस्येति। अत्रापि मानपलायनमेव वस्तु व्यञ्जकम्।

### विस्तारिका

वस्तुव्यञ्जकतामुक्त्वाऽलङ्कारव्यञ्जकतामाह—सहीति ।

**सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।**
**प्रियदर्शनविशृङ्खलत्वक्षणे सहसेति तेनापसृतम् ॥**

विशृङ्खले कौतुकोत्तरलिते वस्तुना सहसा प्रियदर्शनादिशब्दबोध्येनस्वतःसम्भविना चकारेण सङ्करसूचनम् ।

### सारबोधिनी

सहीति ।

**सखि विरचय्यमानस्य मम धीरत्वेनाश्वासम् ।**
**प्रियदर्शनविशृङ्खलक्षणो सहसेति तेनापसृतम् ॥**

विशृङ्खले कौतुकोत्तरले ।

### काव्यप्रदीपः

तत्रैव वस्तुनालंकारस्य यथा—

**'सहि विरइऊण माणणस्स मज्झ धीरत्तणेण आसासम् ।**
**पिअदंसणविहलत्तणखणम्मि सहसत्ति तेण ओसरिअम् ॥'**

अत्र प्रियदर्शनविह्वलत्वक्षणे धीरत्वेनापसृतमिति वस्तुना अकृतेऽपि प्रार्थने सा प्रसन्नेति विभावना, नूनं प्रियदर्शनसौभाग्यवलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा च व्यज्यते ।

### आदर्शः

(१०) कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह—सहीति ।

**सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।**
**प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् ॥** इति संस्कृतम् ।

सख्याः सख्यां स्वमानभ्रंशकथनमिदम् । मानस्य स्थाने विशृङ्खलः व्याकुलः, स्वव्याकुलत्वस्य क्षणेऽप्ययमारोपः । तेन धीरत्वेन । अपसृतं पलायितम् । सहसेतीत्यत्र 'इति'शब्दस्य अपसृतमिति इत्येवं योजना । तथाच—वाक्यसमाप्तावेव अत्र इतिशब्दः "इति हेतुप्रकरणप्रकाशादिसमाप्तिषु" इति कोषात् । अत्रेतति, 'वस्तुना' मानाश्वासनपूर्वकधैर्य्यपलायनरूपेण, कविनिबद्धाया वक्त्र्याः प्रौढोक्त्यैव सिद्धेन । विभावनेति प्रसादकारणस्य प्रार्थनस्याभावात् । उत्प्रेक्षाऽत्र स्पष्टैव । 'प्रियदर्शनस्य' धैर्य्यविरोधिनः सौभाग्यबलमवस्थानविरोधि ।

## सुधासागरः

अत्रैव वस्तुना ऽलङ्कारव्यक्तिमुदाहरति—सहीत्यादि । उद्गीतिश्छन्दः ।

**आर्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः ।**
**सोद्गीतिः किल कथिता तद्वद् यत्यंशभेदसंयुक्ता ॥**

इति लक्षणात् ।

**सखि ! विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।**
**प्रियदर्शनविशृङ्खलक्षणे सहसैव तेनापसृतम् ॥**

इति संस्कृतम् । काचिन्मानभङ्गपकारं सखीमाह—हे सखि ! मम धीरत्वेन मद्धैर्येण मानस्याश्वासं समाधानं विरचय्य कारयित्वा प्रियदर्शनविशृङ्खलक्षणे प्रियतमालोकनकौतुकतरलितकाले । विंहलमित्यत्र विहत्त-नमिति पाठे विह्वलत्वक्षणे इत्यर्थः । सहसैव अकस्मादेव तेन प्रयोजकेण धीरत्वेनापसृतं पलायितमिति वाक्यार्थः ।

अत्र वस्तुनेत्यादि । अयमर्थः । प्रियदर्शनविशृङ्खलक्षणे अकस्माद्धीरत्वेनापसृतमिति वाच्येन वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना, नूनं प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा च व्यज्यते । चकारेण संसृष्टिः सूचितेति ।

## विवरणम्

सहीति ।

**"सखि विरचय्य मानस्य मम धीरत्वेनाश्वासम् ।**
**प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् ॥"** इतिच्छाया ।

प्रियेति । प्रियदर्शनप्रयुक्तविशृङ्खलताधिकरणे क्षण इत्यर्थः । विशृङ्खलत्वमुत्तरलता । सहसेतीत्यत्रेति-कार एवपर्यायः । अचेतनस्य मानस्याश्वासनम्, धैर्यस्य तत्कर्तृत्वम्, अपसरणं च बाधितमिति न स्वतः सम्भवि-त्वम् । अत्रेत्यादि । धैर्यापसरणेन मानक्षयरूपः प्रसादः सहसापदार्थेन प्रार्थनादिस्वकारणनिरपेक्षत्वमुच्यते । तयोर्व्यञ्जनवैशिष्ट्यावगमाद् विभावनायां पर्यवसानमिति भावः । प्रियदर्शनेत्याद्युपादानस्य व्यङ्ग्यमाह—प्रिये-त्यादि । इत्युत्प्रेक्षेति । इतीति लुप्तषठ्यन्तम् । तथा चास्य प्रियदर्शनसौभाग्यसहनाशक्तत्वस्यापसरणहेतुत्वेनो-त्प्रेक्षेत्यर्थः । चकारादनयोरलङ्कारयोः संसृष्टिरिति लभ्यते ।

**ओल्लोल्लकरअरअख्खएहि तुह लोअणेसु मह दिण्णम् ।**
**रत्तंसुअं पआओ कोवेण पुणो इमे ण अक्कमिआ ।। ७० ।।**

अत्र किमिति लोचने कुपिते वहसि, इति, उत्तरालंकारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु ।

---

### सङ्केतः

ओल्लोल्लेति । आर्द्रार्द्रैः करजादिक्षतैः । अक्कमिआ इति प्राकृतत्वात् पुंस्त्वम् । वहसि इत्येवंरूपस्य प्रश्नस्य स्वयंगम्यस्य यत् गाधोक्तं वस्तु तदुत्तरतयोक्तं इति उत्तरालङ्कारः ।

### सङ्केतः (रुय्यकः)

**आर्द्रार्द्रकरजदशनक्षतैस्तव लोचनयोर्मस दत्तम् ।**
**रक्तांशुकं प्रसादं कोपेन पुनरिमे नाक्रान्ते ।।**

अत्रोत्तरश्रुतिमात्रेण प्रश्नस्योन्नयनादुत्तरालंकारः । केवलं कोपेन न रक्तत्वमपि तु रक्तांशुकबलादित्यपह्नुत्यलंकारसचिवेनोत्तरालंकारेणेति वाच्यम्, तस्यैव मुख्यतयाऽत्र व्यञ्जकत्वप्रतीतेः ।

### बालचित्तानुरञ्जनी

अत्रैव व्यङ्ग्यान्तरमाह ओल्लेति । नायकं प्रति नायिकावचनम् । हे प्रिय ! तुह तव । ओल्लोल्लकरअरअख्खखएहि आर्द्रार्दकरजरदनखक्षतैः मह मम लोअणसु लोचनयोः रक्तं सुअं रक्तसुकं पसाआ प्रसादः । दिण्णं दत्तः, कोवेण कोपेन, इमे लोचने, इमे लोचने ण न अक्कमिआ नाक्रान्ते ।

अत्र व्यङ्ग्यमाहं अत्रेति । प्रतिवचनालिङ्गनात् प्रश्नमध्याहरति किमितीति प्रश्ने कृति सति उत्तररूपालङ्कारेण वाच्येन केवलं कृत्स्नं यथा स्यात् । आर्द्राणि यानि नखदन्तक्षतानि तावन्ति गोपायसि । भावादयो यावत् तेषां तत्कृतानाम् अहं प्रसादपात्रं जाता तददर्शनेन उत्पन्नकोपास्मि, अतस्त्वमतिदुष्ट इति वस्तु व्यज्यत इत्यर्थः ।

### काव्यादर्शः

अत्र प्रतिवचनवशाद् भर्तृप्रश्नवाक्यं कल्पत इत्युत्तरालंकारेण वाच्येन । अमायन्ता आवर्तमाना । हेत्वलंकारेणेति । कविना निबद्धा या वक्त्री तत्प्रौढोक्त्या निष्पन्नेन ।

## विवेकः

आल्लेत्यादि आर्द्रार्द्रकरजदशनक्षतैस्तव लोचनयोर्मम दत्तम्। रक्तांशुकं प्रसादं कोपेन पुनरिमे नाक्रान्ते ॥ रक्तांशुका (रक्ता अंशुका) रश्मयो रक्तं वस्त्रं (च) । अत्रोत्तरश्रुतिमात्रेण प्रश्नस्योन्नयनादुत्तरालङ्कारः । केवलं नेत्रयोः कोपेन न रक्तत्वमपि तु रक्तांशुकवलादित्यपह्नुत्यलङ्कारसचिवेनोत्तरालङ्कारेणेति वाच्यम् ग्रन्थकृता तु तस्यैव मुख्यतयाऽनुरञ्जकत्वान्निर्देशः कृतः ।

## दीपिका

अत्रार्द्रार्दकरजरदनक्षतैस्तव मम लोचनयो रक्तांशुकं प्रसादो दत्तः कोपेन पुनरिमे नाक्रान्ते । अत्रेति प्रश्नत्वेनोन्नीयमानस्य यदुत्तरवाक्यं तस्य योऽलङ्कारः उत्तराख्यस्तेनापह्नुतिसचिवेनेत्युपस्कारः । नखेति रदनोपलक्षणम् । क्वचित्तु नखरदनेति पाठः । प्रसादपात्रमिति तैर्मम प्रसन्नैरिव स्वात्मप्रकटनेनाविनयसूचनया वञ्चके त्वयि प्रणयो विच्छिन्नप्राय इति भावः ।

## दर्पणः

**आर्द्रार्द्रकरजरदनखक्षतैस्तव लोचनयोर्मम दत्तः ।**
**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते ॥**

तवार्द्रार्द्रकरजरदनसक्षतैर्मम लोचनयोरिति संबन्धः । रक्तोंऽशुरेव रक्तांशुकम् । अत्रेति । उत्तरालङ्कारेण मम लोचने कोपेन न रक्ते अपि तु रक्तांशुकवती ।

## साहित्यचूडामणिः

ओल्लोलेति ।

**अर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।**
**रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ॥**

इति रक्तांशुकमेव प्रसादः पारितोषिकम् । प्राकृतत्वान्नपुंसकत्वम् ।

उत्तरेति । प्रश्नवाक्योन्नयनानुकूलेन । न केवलमिति । अभिनवानां नखदशनक्षतानामगोपनमित्येतावदेव न, अपितु तेषामहं प्रसादपात्रं जातेति ।

## सम्प्रदायप्रकाशिनी

ओल्लोल्लेति ।

**आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।**
**रक्तांशुकप्रसादः कोपेन पुनरेते नाक्रान्ते ॥**

तव यान्येतान्यार्द्रतराणि करजरदनक्षतानि तैर्मम लोचनाभ्यां रक्तांशुकं प्रसादत्वेन दत्तम्। तत्परिधान-वशादेवानयोरारुण्यं न पुनः कोपेनाक्रान्ते। इह रक्तांशुरित्यपि विवक्षितम्।

## विस्तारिका

अलङ्कारस्य वस्तुव्यञ्जकतामाह—अल्लोलेति

**आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम्।**
**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥**

अत्रेति। किमितीत्यादेः प्रश्नस्य यदुन्नायकमुत्तरं कोपेनेत्यादिरुपमालङ्कार इत्यन्वयः।

अत्रापह्नुतेर्वाक्यार्थस्याप्रसङ्गे प्रतिषेधानुपपत्त्या प्रश्नमाक्षिप्य विश्रान्तावुत्तरालङ्कारस्यैव व्यञ्जकत्वम्, नापह्नुतेः, तस्यास्तन्मुखनिरीक्षकत्वात्, सत्प्रतिपक्षोत्थापकस्योपाधेर्हेत्वाभासाभाववत्।

## सारबोधिनी

ओल्लोल्ल इति।

**आर्द्रार्दकरजरदनखक्षतैस्तव लोचनयोर्मम दत्तः।**
**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥**

नखक्षतैर्मम लोचनयोर्दत्त इति संबन्धः। अत्रेति। किमित्यादिप्रश्नस्य यदुन्नायकमुत्तरं "कोपेन" इत्यादिरूपमलङ्कार इत्यन्वयः।

अत्रापह्नुतेर्वाक्यार्थस्याप्रसङ्गे प्रतिषेधानुपपत्या प्रश्नमाक्षिप्य विश्रान्तावुत्तरालङ्कारस्यैव व्यञ्जकत्वं नापह्नुतेः, तस्यास्तन्मुखनिरीक्षकत्वात्। सत्प्रतिपक्षोत्थापकस्योपाधेर्हेत्वाभासत्वाभाववत्।

केचित्तु—अपह्नुतिसाचिव्येनोत्तरालङ्कारस्य व्यञ्जकत्वमित्याहुः।

## काव्यप्रदीपः

अत्रैवालंकारेण वस्तुनो यथा—

**'ओल्लोल्लकरअरअणक्खएहिं तुह लोअणेसु मह दिण्णम्।**
**रक्तंसुअं पसाअं कोवेण पुणो इमे ण अक्कमिआ॥'**

अत्र किमिति कुपिते लोचने वहसीति प्रश्नोन्नयनादुत्तरालंकारेण कोवेण इमे ण अक्कमिआ इत्यपह्नुत्यलंकारसहितेन न केवलमार्द्रक्षतानि गोपयसि, किं तु तेषामहं प्रसादपात्रमपि जातेति वस्तु व्यज्यते।

## आदर्शः

(११) कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह—ओल्लोल्लेति।

**आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः।**

**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥** इति संस्कृतम्।

आर्द्रार्द्रकरजरदनक्षतैः अर्थात् परनायिकाकृतैः मम लोचनयोः रक्तांशुकं प्रसादो दत्तः कोपेन पुनरिमे नाक्रान्ते इत्यर्थः। अत्रेति। वहसीत्यन्तः प्रश्नाकारः, तदाक्षेपकमुत्तरं श्लोकार्थः उत्तरालङ्काररूपः। स च क्षतकर्तृक-रक्तांशुकदानालीकत्वेन कविनिबद्धाया नायिकायाः प्रौढोक्त्यैव सिद्धः, तद्व्यङ्ग्यमाह—न केवलमिति, 'न गोपा-यसि' मम दुःखजननार्थं दर्शयसीत्यर्थः। न केवलं तत्, अपि तु मम दुःखजननार्थं दर्शितानां तेषां प्रसादपात्रमहमेव जाता मम दुःखन्तु तैर्न जनितमिति भावः। अत्र लोचनयोः प्रसाददानस्य वाच्यत्वेऽपि लोचनवत्याः प्रसादपात्रत्वं व्यङ्ग्यमेवेति नानुपपत्तिः।

## सुधासागरः

अत्रैवालङ्कारेण वस्तुना व्यक्तिमुदाहरति 'ओल्लोल्ले'-त्यादि। उद्गीतिश्छन्दः। लक्षणमुक्तम्।

**आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम्।**

**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥**

इति संस्कृतम्। भर्तरि सपत्न्या कृतमभिनवनखक्षतादि दृष्ट्वा कोपरक्तनयना काचिद् विदग्धा भर्तुः प्रश्नमुत्तरयति—हे प्रिय! तवार्द्रार्द्रकरजरदनक्षतैः अर्थात् तत्सपत्न्या रागातिशयात् त्वयि कृतैः नखक्षतदन्तक्षतैर्मम लोचनयोर्दत्तं रक्तांशुकं प्रसादः, पुनरिमे मल्लोचने कोपेन नाक्रान्ते इत्यर्थः।

अत्र किमितीत्यादि। अयमाशयः। किमिति कुपिते लोचने वहसीति प्रश्नोन्नयनादुत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि किन्तु तेषामहं प्रसादपात्रं जातेत्यपि गोपायसि आच्छादयसीति वस्तु व्यज्यते। अत्र कोवेण इमे ण अक्कमिआ इत्यपह्नतेर्वाक्यार्थप्रसङ्गे प्रतिषेधानुपपत्या प्रश्नमाक्षिप्य विश्रान्तावुत्तरालङ्कारस्यैव व्यञ्जकत्वं, नापह्नुतेः, तस्यास्तन्मुखनिरीक्षकत्वात् सत्प्रतिपक्षोत्थापकस्योपाधेर्हेत्वाभासत्वाभाववदिति। अत एव प्रदीपकारैः 'अपह्नुत्यलङ्कारसहितेन' इति तृतीये तदप्राधान्यं सूचितमिति दिक्।

## विवरणम्

ओल्लोल्लेति।

**"आर्द्रार्द्रकरजदशनक्षतैस्तव लोचनयोर्मम दत्तम्।**
**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥"** इति च्छाया।

अत्र क्षतेन लोचनयोः प्रसाददानमचेतनत्वादसम्भवीति न स्वतः सम्भवित्वम्। वहसीत्युत्तरेति। वहसीति प्रश्नोन्नायकश्रुतिविषयोत्तरस्वरूपोत्तरालङ्कारेणेत्यर्थः। इदमुपलक्षणम्—कोपरागमपह्नुत्य लोचनयोर्नखक्षतप्रति-बिम्बारोपादपह्नुतिः। तत्रारोपविषये प्रतिबिम्बे 'साधु युवाभ्यामहं निह्नूयमानमपि लक्षितमिति प्रीत्या नखक्षतेन

प्रसाददानतादात्म्यं सम्भाव्यत इत्युत्प्रेक्षा च सम्भवतीति ध्येयम् । गोपयसीत्यनन्तरं मया लक्षितमिति शेषः । यावत् अपि तु । तथा च मयि न केवलमार्द्रनखक्षतोपलक्षणं वर्तते, किन्तु तेषां प्रसादपात्रताऽपीति वाक्यार्थः पर्यवस्यति ।

यथाश्रुते तु त्वत्कर्तृके नखक्षतकर्मके गोपने कैवल्यं निषिध्यते । स च निषेधश्चतुर्धोपपद्यते—कर्तरि कर्मणि वा गोपनातिरिक्तक्रियाकारकत्वेन, गोपनक्रियायां तदन्यकर्तृकर्मसम्बन्धेन च । यावदित्यादिवाक्यार्थो निरुक्तकैवल्यव्यतिरेकोपपादकः । यावदित्यव्ययस्य तु पूर्ववाक्यनिषेध्यकैवल्यव्यवच्छेद्यस्य सजातीयान्तरसम्बन्धसमुच्चयस्य विशेषरूपेणोपपादकत्वमेव द्योतनीयम् । न च मन्निष्ठप्रसादपात्रता तथा सम्भवतीत्यसङ्गतिरनुसन्धेया । यावदादिपदस्य द्वेधा वृत्तिः—क्वचित् पूर्ववाक्यविधेयेन सह विरोधो द्वितीयवाक्यविधेयान्वयी तदर्थः, 'न वायू रूपवान्' 'यावद् घटो रूपवान्' इत्यादौ रूपाभावरूपयोर्विरोधावगमात् । क्वचित्तु पूर्ववाक्यनिषेध्येन सह विरोधः, तथाविधस्तदर्थः, 'आकाशे न रूपम्, अपि तु शब्दः' इत्यादौ रूपशब्दयोरेव विरोधावधारणात् । 'न जले गन्धः, अपि तु पृथिव्यामेव गन्धः' इत्यादौ जलवृत्तित्वविरोधः पृथिव्यन्ययोगव्यवच्छेदे भासते ।

अथैवं 'न गच्छति चैत्रो यावत् पचति' इत्यादिवत् 'न गच्छति चैत्रोऽपि तु मैत्रः पचति' इत्यपि प्रयुज्येत, पाकगमनक्रिययोर्विरोधाविशेषात् । एवं 'न तेजसि रसोऽपि तु पृथिव्यामेव गन्धः, 'न पृथिव्यामेव रसोऽपि तु तेजसि रूपम्' इत्यपि प्रयुज्येत, तद्योगतदन्ययोगाभावयोः सामान्यत एव विरोधादिति चेत्, न, एवंविधे स्थले पूर्ववाक्योपपादकत्वस्य यावदादिनिपातार्थत्वात् । उपपादकत्वं च पूर्ववाक्योपात्तनिषेधव्याप्यत्वे सति, तदुद्देश्यवृत्तित्वम् । 'न केवलं चैत्रो भुङ्क्ते, किन्तु श्वसित्यपि' इत्यादौ चैत्रान्वितं यदि भोजनेतरक्रियासमुच्चयव्यवच्छेदात्मकं कैवल्यं निषेध्यम्, तदा तदुपपादकत्वमव्याहतमेव पाकादिक्रियासमुच्चयस्य । यदि पाकान्वितं चैत्रेतरकर्तृसमुच्चयव्यवच्छेदात्मकं कैवल्यं निषिध्यते, तदा 'न केवलं चैत्रः पचति, किन्तु मैत्रोऽपि' इत्यादौ पाके चैत्रमात्रकर्तृकत्वोपपादकत्वमप्रतिहतमेव मैत्रादिकर्तृसमुच्चयस्य । एवमन्यत्रापीयं सूक्ष्मदृष्टिः सञ्चारणीयेति । दिक् ।

प्रसादपात्रमिति । यदि न प्रसन्नानि मयि नखक्षतानि स्युः, तदा तानि लक्षयन्त्या ममेर्ष्यानलज्वालया सपदि भस्मीभाव एव भवेदिति । भावः ।

**महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।**
**अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ॥ ७१॥**

अत्र हेत्वलंकारेण 'तनोस्तनूकरणेऽपि तव हृदये न वर्तते' इति विशेषोक्तिः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः। एवं द्वादश भेदाः।

---

**सङ्केतः**

विशेषोक्तिरिति। अत्र मानहेतुभूते तन्नोः तनूकरणेऽपि सा यत् तव हृदये न वर्तते न माति, तत्कारणे सत्यपि कार्यानुत्पत्तिः इति विशेषोक्तिः व्यङ्ग्या।

**सङ्केतः (रुय्यकः)**

**महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।**
**अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति॥**

अत्र "महिलासहस्रभरिते; इति पदार्थरूप एव "अमान्ती'त्यत्र हेतुरिति हेत्वलंकारः काव्यलिंगम्। इदन्तु वक्तव्यं यथाऽत्र तनूकरणलक्षणस्य कारणस्य सद्भावेऽपि हृदयवर्तनलक्षणस्य कार्यस्यानुत्पत्तेविशेषोक्तिः प्रतीयते, तथा अमान्तीव करोतीत्युत्प्रेक्षाऽपि चारुतया प्रतीयत एव, तनूकरणेऽमानस्य हेतुत्वोत्प्रेक्षणात्। एवञ्चोत्प्रेक्षाध्वनेरपीदमुहरणम्। इत्थमर्थशक्तिमूलस्य द्वादशापि भेदाः शोधिताः।

**बालचित्तानुरञ्जनी**

कविनिबद्धवक्तृनिर्मितस्यालङ्कारव्यङ्ग्यस्योदाहरणमाह महिलेति। सुहअ सुभंग, तुह तव, महिलासहस्सभरिए महिलासहस्रभरिते, हिअए हृदये, अमाअन्ती अमान्ती, सा स्त्री, अणुदिणं अनुदनं, अनन्यकर्मा सती अङ्गं तणुअं वि तणुएइ तनुते, तनूकरोति।

अत्र व्यङ्ग्यमाह अत्रेति। अत्र कविना हि निबद्धया प्रौढोक्त्या निष्पन्नेन 'महिलासहस्रभरित' इत्येत्पदं हृदये अवर्त्तमानत्वे हेतुत्वेनोक्त इति हेत्वलङ्कारेण वाच्येन तनोस्तनुत्वलक्षणे कारणे सत्यपि हृदयावर्त्तनकार्येणोक्तमिति विशेषोक्त्यलङ्कारो व्यज्यत इत्यर्थः।

**काव्यादर्शः**

महिलासहस्रभृते इति हृदयेऽवर्तमानत्वे। हेतुत्वेनोक्तमिति हेत्वलंकारेण। तनोस्तनुत्वलक्षणे कारणे सत्यपि हृदयवर्तनं कार्यं नोक्तमिति विशेषोक्त्यलंकारोऽर्थशक्त्युद्भवानुरणरूपो वाक्यप्रकाशो व्यङ्ग्यः।

## विवेकः

महिलासहस्सेत्यादि। महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती। अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति। अत्र महिलासहस्सभरिए इति पदाद्य(र्थ) रूप एव अमाअंतीत्यत्र हेतुरिति हेत्वलङ्कारः काव्यलिङ्गम्। इदन्तु वक्तव्यं यथाऽत्र तनूकरणलक्षणस्य कारणस्य सद्भावेऽपि हृदयवर्तनलक्षणस्य कार्यस्यानुत्पत्तौ विशेषोक्तिः प्रतीयते, तथाऽमान्तीव करोतीत्युत्प्रेक्षाऽपि चारुतया प्रतीयत एव, तनूकरणेऽमानस्य हेतुत्वोत्प्रेक्षणात्। एवश्चोत्प्रेक्षाध्वनेरपीदमुदाहरणम्। इत्थमर्थशक्तिमूलस्य द्वादशापि भेदा उदाहृताः' (रु.स. ३६ पृः)।

## दीपिका

विशेषोक्तिरितिसम्मातुमिवेत्युप्रेक्षा चेत्यपि द्रष्टव्यम्। व्यञ्जक इति-व्यङ्ग्यार्थोपहित एव हि तथा। ततश्च सहीत्यादौ सहसाऽपसरणादिरूपप्रधानव्यञ्जकस्वरूपमात्रस्य स्वतः सम्भवित्वेऽपि न क्षतिः। अलसेत्यादौ तु द्वयोरपि स्वतः सम्भविता। यत्र यत्र चोक्तरूपविषयाशङ्का तत्र तत्र व्यङ्ग्यवैविध्यं दर्शयता वृत्तिकृता सूचितं (तत्), यत्र तु व्यञ्जकस्वरूपस्य लोकोत्तरत्वं तत्र व्यङ्ग्यस्य स्वतस्त्वप्रत्याशा दुर्बला। एतदभिसन्धायैव स्वतःसम्भवित्वेऽपि न क्षतिः (?)। अरसेत्यादौ तु द्वयोऽपि स्वतः सम्भवित्वादिव्यङ्ग्यवैचित्र्यं पृथक् न गणितमिति सर्वं निस्तुषम्। उपसंहरति—एवमिति।

## साहित्यचूडामणिः

महिलेति।

> **महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती।**
> **दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति॥** इति।

हेत्वलंकारेणेति। तव चेतस्यवकाशलाभाय शरीरस्य तनूकरणमिति काव्यलिङ्गेन। शरीरतनूकरणरूपे कारणे पूर्णेऽपि प्रियहृदयस्यान्तर्वृत्त्यभावाद् विशेषोक्तिः। यद् वक्ष्यति (दशमे)—विशेषोक्तिरखण्डेषु कारणेषु फलावचः इति।

## सम्प्रदायप्रकाशिनी

महिलेति।

> **महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।**
> **दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति॥**

हेत्वलङ्कारेणेति। यतो न मान्ती, अतस्तनयतीत्येवंरूपेण। अर्थशक्तिमूलमुपसंहरति—एवं द्वादशभेदा इति। स्वतस्सम्भविना वस्तुना वस्तु, स्वतस्सम्भविना वस्तुनालङ्कारः, स्वतस्सम्भविनालङ्कारेण वस्तु, स्वतस्सम्भ-

विनालङ्कारेणालङ्कार इति चत्वारः। अनयैव प्रक्रियया कविप्रौढोक्तिनिष्पन्नेन वस्तुना वस्तित्वत्यादयश्चत्वारः कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नेन वस्तुना वस्त्वित्यादिकाश्चत्वार इति द्वादशभेदता।

## विस्तारिका

अलङ्कारमूलमलङ्कारमाह—महिलेति।

**महिलासहस्रभृते तव हृदये सुभग साऽमान्ती।**
**अनुदिवसमनन्यकर्माङ्गं तनुकमपि तनयति॥**

अत्रेति। तनोस्तनूकरणे हृदये स्थानाप्राप्तिर्हेतुः। तदाह—हेत्वलङ्कारेणेति। एवमिति कविनिबद्धकत्व-तन्निबद्धवक्तृकत्वयोर्भेदादित्यर्थः।

## सारबोधिनी

महिलेति।

कविनिबद्धवक्तृप्रोक्तमुपसंहरति एष्विति। प्रकृतमुपसंहरति एवमिति।

**महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।**
**दिवसमनन्यकर्मा अङ्गं तनुकमपि तनयति॥**

दिवसं व्याप्येत्यर्थः। अत्र 'अमान्ती' इत्यत्र महिलासहस्रभृतत्वं हेतुः। तनूकरणेऽमितत्वं हेतुरिति हेत्वलङ्कारः।

## काव्यप्रदीपः

अत्रैवालंकारेणालंकारस्य यथा—

**'महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।**
**अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ॥**

अत्र महिलासहस्रभरितत्वात्तव हृदि स्थानं लभते, ततोऽङ्गं तन्वपि समयतीति हेत्वलंकाराभ्यां तनोस्तनू-करणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः। अत्र कविनिबद्धा सखी वक्त्री। एवमर्थशक्त्युद्भवस्य द्वादश भेदाः।

## काव्यप्रकाशखण्डनम्

प्रौढोक्तिमात्रनिष्पन्नार्थशक्तिमूलध्वनिमाह

**महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअंती।**

**अनुदिणमणण्णकम्मा अंगं तणुअं पि तणुएइ॥**

**(महिलासहस्रभृते तव हृदये सुभग सा अमान्ती ।**

**प्रतिदिनमनन्यकर्म्मा अङ्गं तनुकमपि तनूकरोति ।।)**

अत्रामान्तीत्यत्र महिलासहस्रभृतत्वं हेतुः (तनु)नू करणे अमितत्वादिहेतुरिति हेत्वलङ्कारः । अत्र हेत्वलङ्कारेण प्रौढोक्तिमात्रनिष्पन्नेन तनोस्तनु(नू) करणेऽपि तव हृदये सा न वर्तत इति विशेषोक्तिर्ध्वन्यते ।

**आदर्शः**

(१२) कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह—महिलेति ।

**महिलासहस्रभृते तव हृदये सुभग सा अमान्ती ।**
**अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ।।** इति संस्कृतम् ।

नायकस्यानेकनायिकाभावनादुःखेन कृशाया नायिकाया अवस्थां तस्मिन्नावेदयन्त्या दूत्या उक्तिरियम् । अमान्ती अवकाशमलभमाना । दिवसं व्याप्य । तनयति तनूकरोति, तनुशब्दात् करोत्यर्थे नामकारितान्तमिदम् । अत्रेति, बहुनायिकाक्रान्तहृदये स्थानाप्राप्तिरङ्गतनूकरणे हेतुर्हेत्वलङ्कारः स च अलीकत्वादृत्याः प्रौढोक्त्यैव सिद्धः । तदव्यङ्ग्यमाह—तनोरिति । 'न वर्त्तते' इति तनयतीति वर्त्तमाननिर्देशसाहाय्यादव हेत्वलङ्कारव्यङ्ग्यमिदं बोध्यम् । विशेषोक्तिरित तनोस्तनूकरणं कारणं तत्सत्त्वेऽपि हृदयवासरूपफलाभावात् ।

**सुधासागरः**

अत्रैवालङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति-महिलेत्यादि । गाथा छन्दः ।

**महिलासहस्रभृते तव हृदये सुभग साऽमान्ती ।**
**अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ।।**

इति संस्कृतम् । काचिद् विदग्धा सखी नायकं प्रति नायिकावृत्तान्तमावेदयति—'साऽकृत्रिमस्नेहा साध्वी, महिलासहस्रभृते धूर्त्तस्त्रीसहस्रसङ्कीर्णे तव हृदयेऽमान्ती अवकाशमलभमाना सती, अनुदिनं दिवसं व्याप्यानन्यकर्मा त्यक्तान्यकार्या सती अङ्गं शरीरं तन्वपि स्वतः कृशमपि तनयति कथमपि प्रवेशनाय कृशतरं करोतीत्यर्थः ।

अत्र हेत्वलङ्कारेणेत्यादि । एकवचनं जात्यभिप्रायम् । तथा च महिलासहस्रभरितत्वात् तव हृदि स्थानं न लभते ततोऽङ्गं तन्वपि तनयतीति हेत्वलङ्काराभ्यां तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते इति विशेषोक्तिर्व्यज्यत इत्यर्थः ।

अत्र प्रथमचतुर्थोदाहरणयोः कविनिबद्धा सखी द्वितीयतृतीययोस्तु तन्निबद्धा नायिका वक्त्रीति वृत्तिकृदाह-एषु कविनिबद्धेत्यादि । एषु चतुर्ष्वित्यर्थः । एवं द्वादशभेदाः अर्थशक्त्युद्भवध्वनेतिति शेषः ।

## विवरणम्

महिंलेति ।

**"महिलासहस्त्रभृते तव हृदये सुभग साऽमान्ती ।**
**अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥"**

इति च्छाया ।

तनयति तनूकरोति । हृदयस्य महिलासहस्राधारत्वादेर्बाधान्नायमर्थः स्वतः सम्भवी । **हेत्विति । नायक-हृदयभूमाववकाशालाभस्तनोस्तनूकरणे हेतुरिहोक्तः । इति विशेषोक्तिरिति । सत्यपि कारणानामखण्डत्वे फला-भाववचनमित्यर्थः ।**

(सू. ५५) शब्दार्थोभयभूरेकः

यथा

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।
तारकातरला श्यामा सानन्दं न करोति कम्॥ ७२ ॥

अत्रोपमा व्यङ्ग्या ॥

---

**सङ्केतः**

अतन्द्रेति। चन्द्रौ स्वर्णकर्पूरावपि। समुत् सहर्षा। तारका कनीनिकाऽपि। श्यामे रात्रिस्त्रियौ। सानन्दं समुदम्। कं पुरुषम्। सा श्यामा कं अनिर्वचनीयं आनन्दम्। अत्र यदि स्त्री प्रस्तुता रात्रिर्वा, तदा द्वितीयार्थः वस्तुरूपः व्यङ्ग्यः। ध्वन्यवाच्ययोः मिथः सङ्गत्या उपमानोपमेयभावे तु उपमाऽपि। द्वयोः वाच्यत्वे तु श्लेष एव वाच्यः, न किञ्चित् व्यङ्ग्यम्। अत च अतन्द्रचन्द्रादिशब्दानां एकानेकार्थानां परावृत्तिसहासहत्वेन क्रमेण अर्थशब्दशक्ति-प्राधान्यम्। तेन च उभयमूलत्वम्।

तथाच अत्र—यद्यप्यर्थोऽपि व्यञ्जकः, तथापि श्लिष्टशब्दशक्तिरेव व्यङ्ग्यं उन्मीलयति, न तु अर्थशक्तिः इति, शब्दोत्थध्वनिरेव, न द्व्युत्थः इति तत्त्वम्।

**सङ्केतः (रुय्यकः)**

अतन्द्रचन्द्रेति। चन्द्रः कर्पूरमपि, समुत् सहर्षा, तारकाभ्यां कनीनिकाभ्यामपि, श्यामा रात्रिः कान्ता च। अत्र ग्रन्थकृता उभयशक्तिमूलत्वमित्थमभिप्रेतम्। श्लिष्टशब्दमाहात्म्याच्छब्दशक्तिमूलत्वम्, तद्वर्जितसाधारण-शब्दमाहात्म्यादर्थशक्तिमूलत्वमित्युभयशक्तिमूलत्वम्। एवञ्च शब्दशक्तिमूले यान्युदाहरणानि तान्युभयशक्ति-मूले स्युः। अवश्यं हि तत्र केनचित् साधारणशब्दप्रयोगेण भवितव्यम्। अथ सति श्लिष्टशब्दप्रयोगे वक्त्रौचित्याद्यर्थशक्तिमाश्रित्योभयशक्तिमूलत्वमत्र वर्ण्यते, तद्युज्यत एतत्। किन्तु "पन्थिअ" इत्याद्युभयशक्ति-मूलस्यैवोदाहरणं वाच्यम्, अर्थशक्तेरपि व्यापारात्। अन्यथा केवलशब्दशक्तेर्वस्तुमात्रं ध्वन्यं न स्यात्। अनेनै-वाशयेन शब्दशक्तिमूलं वस्तुध्वनिं ध्वनिकृन्नाङ्गीकृतवानित्युक्तप्रायम्।

**बालचित्तानुरञ्जनी**

संलक्ष्यक्रमव्यङ्ग्यस्य शब्दशक्तिमूलत्वेनार्थशक्तिमूलत्वेन भेदद्वयं प्रदर्श्य उभयशक्तिमूलत्वेन तृतीय भेदमाह शब्देति। तमुदाहरति यथेति। श्यामा रात्रिः कस्यानन्दं न करोति? कथंभूता? अतन्द्रचन्द्राभरणं यस्या समुद्दीपितकामा नक्षत्रैस्तरला पक्षे श्यामा, योऽयं चन्द्रः शिरोभूषण विशेषः, कं हर्षं स करोति तारका तरला। इह

चन्द्रेति तारकेति वा शब्दो व्यञ्जकः। चन्द्रादिशब्दं परित्यज्य इद्वादिशब्दप्रयोगे अर्थान्तरप्रतीतेः समुद्दीपितेति सानन्दमिति चार्थोऽपि व्यञ्जकः।

## काव्यादर्शः

अनुस्वानोपमसंलक्ष्यक्रमव्यङ्ग्यस्य सप्रभेदं प्रकारद्वयं निरूप्योभयशक्तिमूलानुरूपव्यङ्ग्यं तृतीयं प्रकारमाह—शब्दार्थेति। चन्द्रः कर्पूरमपि। समुत् सहर्षा। तारका कनीनिकापि। श्यामा रात्रिः। कान्ता च। अत्र 'चन्द्र' इति तारका' इति च शब्दो व्यञ्जकः। "समुद्दीपित' इति 'सानन्दम्' इति चार्थोऽपि व्यञ्जक इति शब्दार्थयोरुभयोः शक्त्या रात्रियोषितोः प्रकृताप्रकृतयोरुपमा वाक्ये व्यङ्ग्या।

## विवेकः

अतन्द्रेति निर्मलकर्पूरनिर्मितालङ्कारवती समुत् सहर्षा दीपितकामा तारकाभ्यां कनीनिकाभ्यां तरला श्यामा कान्ता कं वलि (मुनि) मर्प्यं सानन्दं न करोति; अपि तु (सर्वं) करोत्येवेत्येकोऽर्थः। द्वितीयस्तु श्यामा रात्रिः पूर्णचन्द्रशोभिता समुद्दीपितकामा तारासङ्कुला। अत्र 'श्लिष्टशब्दमाहात्म्याच्छब्दशक्तिमूलत्वम्, तद्वर्जितसाधारणशब्दमाहात्म्यादर्थशक्तिमूलत्वमित्युभयशक्तिमूलत्वम्। नन्वेवं शब्दशक्तिमूले यान्युदाहरणानि तान्युभयशक्तिमूलत्वेनाभ्युपगतानि स्युः। अवश्यं हि तत्र केनचित् साधारणशब्दप्रयोगेन भवितव्यम्। अथ श्लिष्टशब्दप्रयोगं वक्त्रौचित्यादर्थसाचिव्यं वाऽऽश्रित्योभयशक्तित्वमित्युच्यते तर्हि 'तिग्मे'ति 'पन्थिअ ण एत्थे' त्युदाहरणद्वये क्रमेण वक्त्रौचित्यं प्रतिपाद्यौचित्यञ्चाश्रित्य शब्दशक्तयाऽर्थान्तरस्य प्रतीतिरित्युभयशक्तिमूलत्वात् कथं केवलशब्दशक्तिमूलत्वमित्युक्तम्?" (रु.सं. ३६ पृः द्रः) सत्यं, स्यादेतद् यद्येतावन्मात्रमस्य ग्रन्थकर्तुरुभयमलत्वे निमित्तत्वेनाभिमतं स्यात्। नचैवं, तथाहि यत्रैकदेशस्था यथोक्तरूपा शब्दशक्तिरेकदेशान्तरस्था च वक्त्रौचित्यादिसहकृताऽर्थशक्तिर्व्यङ्ग्यं' प्रतिं व्याप्रियते तत्रोभयप्राधान्ये सत्युभयशक्तिमूलत्वमित्यस्याभिप्रायो यथा प्रकृतोदाहरणे। अत्र हि निशानायिकयोरुद्दीपनालम्बनविभावयोरौपम्यपर्यन्तप्रतीतिः श्लिष्टब्दमाहात्म्यात्। विप्रलब्धस्येयं चिन्तेति सानन्दमित्यादिना जगदपि सानन्दं करोति, न मामेव, तथा करोतीत्यादि स्वाभिप्रायस्याभिव्यक्तिरर्थशक्तिमाहात्म्यादिति। नचैतं त्तिग्मे'ति 'पन्थिअ ण एत्थे'त्यादौ च सम्भवति।

## दीपिका

शब्दार्थयोरुभयोर्भूरुभयं मिलिताभ्यामप्युद्‌भटशक्तिभ्यां प्रतीतिविषयो भवति व्यङ्ग्यः। यद्वा तद्‌भूस्तदाश्रय इति शब्दार्थोभयभूर्व्यङ्ग्योऽर्थः। तादात्म्यात्काव्यमपि तथा।

अतन्द्रेति—चन्द्रः कर्पूरशशिनोः। समुत् सहर्षेति। नायिकापक्षे भिन्नपदमित्येके। तारका ऋक्षुः नेत्रमध्यञ्च। श्यामा रात्रिः बाभ्रव्यादितन्त्रप्रसिद्धसितासितादिवर्णवती सकलवसनाभरणसुभगा (नायिका च)। अत्र रात्रिवर्णने प्रकृते श्यामाऽऽदिपदबलादर्थान्तरावगतिद्वारोपमानोपमेयता व्यङ्ग्या। तदपेक्षयाऽपि चाययर्थः पर्य्याप्नोत्येव प्रत्याययितुम्। तथाहि श्यामाऽऽदिपदस्थाने रजन्यादिपदनिक्षेपे कं सानन्दं न करोतीत्युक्ते कान्तासादृश्यं प्रतीयत एव, ततश्च द्वयोरपि शक्तिदार्ढ्यम्।

## साहित्यचूडामणिः

उभयशक्तिमूलमाह—शब्दार्थेति । एक इति । प्रकारवैचित्र्यस्य कल्पयितुम शक्यत्वात् । शक्यते वा तदर्थभागं शब्दभागं वा मनाक् प्राधान्यादनुप्रविशति, न पुनस्तुलाधृतवदुपलभ्यत इति । यथा वक्ष्यति—'वाक्ये द्व्युत्थ' इति ।

अतन्द्रेति । तन्द्राऽऽलस्यं तदभावेनौज्ज्वल्यं लक्ष्यते । श्यामा युवतिर्निशा च । तत्र कामिनी यामिनी वा काचिद् वर्णनीय । तत्र प्रस्तुतायाम् अभिधा, अन्यत्र व्यञ्जनम् । अत्र शब्दार्थयोरुभयोरपि शक्तिर्निबन्धनम् । एतेनास्य श्लेषाद् भेदो व्याख्यातः, यत्रोभयत्रापि वाचकत्वम् । उज्ज्वलहेमाभरणालोचनकनीनिकास्फुरणशालिनी कामिनी, उज्ज्वलेन्दुबिम्बाभरणा नक्षत्रस्फुरणयोगिनी च यामिनी । समुद्दीपितमन्मथत्वं कदाचिदालम्बनतया कदाचिदुद्दीपनत्वेन । अत्र चन्द्रादिशब्दानां परिवृत्त्यक्षमत्वात् प्राकरणिकतत्तादृगर्थद्वयप्रतिपादनप्रवृत्तत्वाच्च शब्दार्थशक्त्योर्द्वयोरन्यूनत्वानतिरेकेण सामान्यम् ।

## सम्प्रदायप्रकाशिनी

अथोभयशक्तिमूल एक एवोदाह्रियते—अतन्द्रचन्द्रेति । चन्द्रः शिरोभूषणविशेषः इन्दुश्च । तारका कनीनिका नक्षत्रं च । श्यामा यौवनमध्यस्था निशा च । अत्रातन्द्रेत्यादावनेकार्थत्वाच्छब्दशक्तिमूलता, समुद्दीपितमन्मथेत्यादौ त्वर्थशक्तिमूलता प्राधान्येन प्रतीयत इत्युभयशक्तिमूलोऽयम् ।

## मधुमती

अतन्द्रेति । अत्र—चन्द्र-तारका-श्यामादिपदानां श्लिष्टत्वात् परिवृत्त्यसहत्वम् । मन्मथानन्दादिपदानां च परिवृत्तिसहत्वमिति उभयमूलत्वम् । यद्यपि—उभयशक्तिमूलेऽपि प्रागुक्तभेदाः संभवन्ति, तथापि शब्दार्थोभयशक्त्युत्थत्वेन ऐक्यमुक्तम् ।

## विस्तारिका

उभयशक्तिमूलमाह—शब्देत्यादि । एकोऽलङ्काररूपः ।

अतन्द्रोऽनाच्छन्नोऽनल्पश्च चन्द्रः शशी कर्पूरश्च । तारका नक्षत्रं नेत्रमध्यञ्च । श्यामा रात्रिर्वर्णविशेषवती सितासितामितादिसकलवसनाभरणानुलेपनसुभगा च ।

अत्र चन्द्रतारकाश्यामापदानां नानार्थत्वाच्छब्दशक्तिरुद्भटा । पदान्तरेऽर्थशक्तिरिति । स्त्रीविशेष एव रात्रिरित्युपमायामुभयशक्तिमूलतांऽशभेदेन शब्दपरिवृत्त्यसहत्वासहत्वात् ।

अत्र केचित्—'श्यामा' पदस्थाने 'रजनी' पदप्रक्षेपेऽपि स्त्रीसाम्यमवगम्यते । एवं सति च तस्मिन् सम्भेदेनान्यतरवैयर्थ्यमित्युभयशक्तिमूलोऽयमलङ्कार इत्याहुः, तन्न, तत्परिवृत्तिसहत्वेऽपि तन्मूलकत्वे शब्दार्थशक्तिमूलकत्वविभागो न स्यात्, नियामकाभावात् । किञ्च, श्यामापदपरिवर्तने विवक्षिते स्त्रीविशेषसाम्याप्रतिपत्तिप्रसङ्गात् । न च 'श्यामा' पदपरिवर्तने सहत्वासहत्वाभ्यामुभयमूलत्वे 'वाक्ये द्व्युत्थम्' इति नियमभङ्गः स्यादिति

वाच्यम्, पदान्तरसाचिव्येनैव श्यामापदस्य व्यञ्जकत्वात् । यत्तु शब्दशक्तिं विना अर्थशक्तेरनुत्थानादुभयशक्तिमूलो न पृथगित्याहुः, तदसत्; श्यामेव श्यामा सर्वमानन्दयतीति विशिष्टव्यङ्ग्यस्योभयशक्तिं विनाऽनुत्थानात् ।

ननु वस्तुनोऽपि व्यङ्ग्यस्योभयशक्तिमूलत्वे सम्भवति कथमेक इत्युक्तम् ? मैवम् रहस्ये वस्तुनि व्यङ्ग्य एव गोपनाय नानार्थपदोपादानम्, तद्गोपने च शब्दशक्तय एव प्रभवन्तीत्युभयशक्तिमूलताविरहात् । अत एव शब्दशक्तिमूले 'पंथिअ एत्थ' इत्याद्युदाहृतम् ।

## सारबोधिनी

शब्दार्थोभयेति । यद्यपि शब्दशक्तिमूलेऽपि अर्थस्य, अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीत्युभयशक्तिमूलत्वं सर्वत्रैवास्ति तथापि तत्र तयोर्गुणप्रधानभावेन, अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्तिमूलत्वं सर्वत्रैवास्ति तथापि तत्र तयोर्गुणप्रधानभावेन, अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्तिमूलत्वम् । तथाहि । शब्दस्यार्थस्य वा प्राधान्ये शब्दस्य यत्र परिवृत्त्यसहिष्णूत्वं तत्र पदप्राधान्यन्, अन्यत्रार्थप्राधान्यम् ।

अतन्द्रेति । प्रकृते चन्द्रसमुद्दीपिततारकाशब्दाः परिवृत्त्यसहिष्णवः, पर्यायन्तरोपादानेऽपरार्थासंभवात् । अत एवैतेषां शब्दप्राधान्यम्, अन्ये न तथेति तेषामर्थप्राधान्यमित्युभयोरेकत्र प्राधान्यसत्त्वादुभयशक्तिमूलत्वम् ।

नन्वेवं "उल्लास्यकालकरवाल" इत्यादावप्युभयशक्तिमूलत्वं स्यादिति चेन्न, तत्र परिवृत्त्यसहिष्णूनां शब्दानां बाहुल्येनातथात्वात् ।

इदं त्ववधातव्यम् । यत्र यस्य काव्यसर्वस्वत्वमनुभूयते तत्र तस्य प्राधान्यमिति । अन्यथा अतिप्रसङ्गात् । तथा चोभाभ्यां रात्रिनायकयोरुपमानोपमेयभावो व्यङ्ग्यः । अक्षरार्थस्तु श्यामा नायिका, अथ च रात्रिः; चन्द्रः शशी कर्पूरम् । तारका नक्षत्रम् अक्षि कनीनिका च । तरलो हारमध्यभागः ।

## काव्यप्रदीपः

**शब्दार्थोभयभूरेकः**

यथा—

**'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।**
**तारकातरला श्यामा सानन्दं न करोति कम् ॥'**

अत्र श्यामारूपकामिनीविशेषरजन्योरुपमा व्यङ्ग्या । सा चातन्द्रचन्द्रेत्यादेः परिवृत्त्यसहतया, समुद्दीपितेत्यादेस्तत्सहतया उभयस्यापि व्यञ्जकत्वेन शब्दार्थोभयशक्तिमूला ।

## काव्यप्रकाशखण्डनम्

उभयशक्तिमूलध्वनिर्यथा—

**अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।**
**तारका तरला श्यामा सानन्दं न करोति कम् ? ॥**

अक्षरार्थस्तु—श्यामा नायिका रात्रिश्च, चन्द्रः शशी कर्पूरं च, सुवर्णं वा। 'चन्द्रः सुधांशुकर्पूरकम्पिल्लस्वर्णवारिषु' इति विश्वः। तारका नक्षत्रं अक्षिकनीनिका च। यद्यपि शब्दशक्तिमूलेऽर्थस्य, अर्थशक्तिमूले शब्दस्य व्यञ्जकत्वं संभवतीति उभयशक्तिमूलत्वं सर्वत्रास्ति, तथापि तत्र गुणप्रधानभावेन। अत्र तु द्वयोरेव प्राधान्ये व्यञ्जकत्वमिति उभयशक्तिमूलत्वम्। अयं निष्कर्षः—यत्र पदं परिवृत्त्यसहिष्णु तत्र पदप्राधान्यम्, अन्यत्रार्थप्राधान्यम्। (प. १६.२) प्रकृते चन्द्रसमुद्दीपिततारकाशब्दाः परिवृत्त्यसहिष्णवः, पदान्तरोपादानेऽपरार्थप्रत्ययो न स्यात्। अत एव एषां शब्दप्राधान्यम्। अन्ये न तथेति तेषां अर्थप्राधान्यम्। उभयोरेकत्र प्राधान्यादुभयशक्तिमूलत्वम्। अत्रेदमवधातव्यम्—यस्य यत्र काव्यसर्वस्वत्वमनुभूयते तत्र तस्य प्राधान्यम्। तथा चात्र रात्रिनायकयोरुपमानोपमानभावो व्यङ्ग्यः। अत्रेदमवधातव्यम्—अविवक्षितवाच्यप्रभृतयो यावन्तो ध्वनिभेदाः कथिताः ते सर्वे वाक्ये भवन्ति। उभयशक्तिमूलं विना पदे स्युरिति प्राञ्चः। सोऽपि पदे भवतीति नवीनाः। यत्र सर्वाणि पदानि समकक्षतया व्यञ्जकानि प्रकृतार्थोपकारे पर्यवस्यन्ति तत्र वाक्यगतत्वेन व्यवहारः, यत्र त्वेकमेव प्राधान्येन व्यञ्जकं तत्र पदगतत्वेनेति वाक्य-पदगतत्वेन ध्वनीनां विवेकः।

तत्र वाक्ये पूर्वमुदाहृताः। पदे किञ्चित् उदाह्रियते यथा—

**बहवस्ते गुणा राजन्नेकस्तु सुमहान् गुणः।**
**मित्राणि तव मित्राणि नान्यथा स्युः कदाचन॥**

एवं अन्यदपि स्वयं बोध्यम्।

## आदर्शः

शब्दार्थोभयेति, कुत्रचिद्विशेषणांशे स्वातन्त्र्येण शब्दशक्त्या क्वचिद्विशेषणांशे तु स्वातन्त्र्येणार्थशक्त्या एकस्यैव व्यङ्ग्यस्यार्थसमाजसिद्धमुभयव्यङ्ग्यत्वमित्यर्थः। अतः शब्दशक्त्युद्भवस्यार्थशक्त्युद्भवस्य च प्रपञ्चेनैवास्य प्रपञ्चो गतार्थ इत्यभिप्रायेणाह—एक इति। चक्रवर्त्ती तु उपमालङ्काररूप एवायं सम्भवतीत्यत उक्तम् एक इतीत्याह, तत्र। व्यञ्जकार्थस्य स्वतःसम्भवित्वादिभेदेन भेदप्रसक्तेर्दुर्वारत्वात्। अतन्द्रेति। प्राकरणिकाऽत्र श्यामा रात्रिः कं जनं सानन्दं न करोति। कीदृशी? अनलसचन्द्राभरणा तारकास्तरला यस्यां तादृशी, मन्मथोद्दीपिका च। अत्रोभयशक्तिव्यङ्ग्याया नायिकाया उपमा उभयशक्त्युत्था। तथाहि समुद्दीपितमन्मथेत्यत्र अर्थशक्त्यैव नायिका व्यङ्ग्या नायिकाया व मन्मथोद्दीपने प्राधान्यात्; तथा नायिकाविशेषवाचक श्यामापदशक्त्या अनल्पकर्पूराभरणेत्येवमर्थकातन्द्रचन्द्रपदशक्त्या तारकावत् तरलो हारमध्यगो (मणिः) यस्यास्तादृशीत्येवमर्थकतारकातरलापदशक्त्या च स्वातन्त्र्येऽण नायिका व्यङ्ग्या, तत्प्रतीतौ च नायिकेव रात्रिरिति नायिकोपमाऽपि प्रतीयते इति। निरुपादानेत्यादौ तु चित्रपदकलापदसाहाय्यं विना निरुपादन इत्यादेरर्थस्य न चित्रकरव्यञ्जकत्वमिति तत्र शब्दशक्तिमात्रोद्भवत्वम्।

## सुधासागरः

यद्यपि शब्दशक्तिमूलेऽप्यर्थस्य अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीत्युभयशक्तिमूलत्वं सर्वत्रैवास्ति, तथापि तत्र तयोर्गुणप्रधानभावेनेति प्राक् प्रतिपादितम्, अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्ति मूलत्वम्। तथा हि—शब्दस्य परिवृत्त्यसहिष्णुतत्सहिष्णुते शब्दार्थयोः प्राधान्ये मूलम्।

यत्र पदं परिवृत्यसहिष्णु तत्र पदप्राधान्यमन्यत्रार्थप्राधान्यमिति तदुदाहरति—अतन्द्रेत्यादि। अतन्द्रं जाग्रद्रूपं चन्द्राभरणमाभूषणविशेषो यस्याः, रात्रिपक्षे तादृशश्चन्द्र एवाभरणं यस्यास्तथाभूता, अत एव समुद्दीपितः प्रबलीकृतो मन्मथः कामो ययेति साधारणविशेषणम्, तथा तारकाभिः अक्षिकनीनिकाभिस्तरलाः चञ्चला रात्रिपक्षे तारकाः नक्षत्राण्येव तरला हारमध्यवर्त्तिनो रत्नविशेषा यस्यास्तथाभूता 'तरलो हारमध्यगः' इत्यमरः, 'श्यामा षोडशवार्षिकी' नायिका रात्रिश्च सानन्दं कं न करोत्यपि तु सर्वमेवानन्दयतीत्यर्थः।

चन्द्रः कर्पूरमिति सारबोधिनीकाराः।

अत्र श्यामारूपकामिनीविशेषरजन्योरुपमा व्यङ्ग्या तत्र चन्द्रतारकातरलश्यामाशब्दाः परिवृत्त्यसहिष्णवः पर्यायान्तरोपादानेऽपरार्थबोधा-सम्भवात्। अतन्द्राभरणसमुद्दीपितमम्मथशब्दाश्च परिवृत्तिसहिष्णवः, अनिद्राभूषणसमुत्तेजितकामादिपर्यायान्तरैरपि तदर्थप्रतीतेरित्युभयशक्तिमूलत्वं द्रष्टव्यम्।

एवञ्च 'अतन्द्रेत्यादेः परिवृत्त्यसहतया' इति प्रदीपकारोक्तं 'चन्द्रसमुद्दीपिततारकाशब्दाः परिवृत्त्यसहिष्णवः अन्ये न तथेति' सारबोधिनीकारोक्तं च विद्वद्भिर्नादरणीयम्।

## विवरणम्

शब्दार्थेति। शब्दशक्तिमूलव्यञ्जनानिरपेक्षेणार्थव्यञ्जनेन शब्दशक्तिमूलव्यञ्जनव्यापारेण च यत्रैकोऽर्थः प्रतीयते, स ध्वनिरुभयशक्त्युत्थोध्वनिरित्यर्थः।

अतन्द्रेत्यादि। अत्र प्राकरणिक्यां रात्रौ, उन्मिषितचन्द्रभूषिता, मन्मथोद्दीपनकरी, चञ्चलनक्षत्रा रात्रिः कं पुरुषं नानन्दयतीति मुख्यवृत्तिजनितो बोधः। स एव श्यामादिपदे स्त्रीलिङ्गसमभिव्याहारेण कमित्यत्र पुंस्त्वनिर्देशेन च समुद्दीपितमन्मथत्वरूपेणानुगामिना धर्मेण, चन्द्रपदातिशयोक्त्युपस्थापितस्य मुखस्य तारकापदातिशयोक्त्युपस्थापितमुक्तामणीनां च वाच्याभेदाध्यवसायेन च कामिनीव रात्रिरिति व्यङ्ग्यमुपस्थापयितुं शक्यते। तदेव च चन्द्रपदस्य कर्पूरे, तरलपदस्य हारमणौ, तारकापदस्य कनीनिकायाम्, श्यामापदस्य स्त्रीविशेषेऽभिधामूलया व्यञ्जनया प्रथममनुपस्थिताया निर्दोषकर्पूराभरणाया मन्मथोद्दीपिकाया नक्षत्रसदृशहारमध्यमणेश्चञ्चलकनीनिकाया ऋत्वनुरूपाङ्गस्पर्शायाः स्त्रियाः सादृश्यं निरुक्तरात्रौ बोध्यत इत्युभयशक्तिसमुत्थत्वं द्रष्टव्यम्।

'निरुपादानसम्भारम्' इत्यादौ चित्रपदाभिधामूलकव्यञ्जनया यावदालेख्यं नोपतिष्ठते, तावच्चित्रकर एव नोपस्थितो भवतीति तदपेक्षया व्यतिरेको भगवति न गम्येत। 'निरुपादानसम्भारमभित्तौ जगत् तन्वते' एतावन्मात्राभिधाने तु न चित्रकर एवोपस्थितः स्यात्, वेश्मनिर्मातुरपि तथोपस्थितिसम्भवादिति विशेषोऽवसेयः।

अत्रोभयशक्त्युत्थो वस्तुध्वनिर्न सम्भवतीति शब्दशक्त्युत्थवदुभयरूपता नास्तीत्याशयेन कारिकायाम् 'एकः' इत्युक्तमिति चक्रवर्ती। व्यञ्जकानामर्थानां स्वतःसम्भवित्वादिभेदेन भिन्नतया तद्भेदप्रयुक्तो भेदो गणितप्राय इति स्वतन्त्रेच्छेन ग्रन्थकृतैकधैवोभयशक्त्युत्थो गणित इति तत्त्वम्।

**(सू. ५६) भेदा अष्टादशास्य तत् ॥ ४१ ॥**

अस्येति ध्वनेः ।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह ।

**(सू. ५७) रसादीनामनन्तत्वाद्भेद एको हि गण्यते ।**

अनन्तत्वादिति । तथाहि—नव रसाः । तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलम्भश्च । संभोगस्यापि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदयषड्ऋतुवर्णनादयो बहवो भेदाः । विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्यानन्त्यम् । का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

**(सू. ५८) वाक्ये द्व्युत्थः**

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः ।

---

**सङ्केतः**

भेदाः इति । अविवक्षितवाच्यस्य—अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यौ द्वौ भेदौ । विवक्षितवाच्यस्य अलक्ष्यक्रमः एकः । तथा अस्यैव विवक्षितवाच्यस्य शब्दोत्थौ लक्ष्यक्रमौ द्वौ, अर्थोत्थाः द्वादश, द्व्युत्थः एकः । एवं आहत्य अष्टादशेति भावः ।

नायकयोः—नायकश्च नायिका य तयोः । अन्येषां हास्यादीनाम् ।

द्व्युत्थः इति । द्वाभ्यां उत्था—उत्थानं यस्य सः तथा ।

**'बाधकेऽसति सर्वं हि वाक्यं स्यात् सावधारणम् ।'**

इति न्यायेन वाक्ये एव द्व्युत्थः इत्यवधार्यम् ।

## सङ्केतः (रुय्यकः)

अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेत्यविवक्षितवाच्यस्य द्वौ भेदौ। **असंलक्ष्यक्रमव्यंग्यः** क्रमद्योतितव्यंग्यश्चेति विवक्षितान्यपरवाच्यस्य द्वौ। असंलक्ष्यक्रमव्यंग्योऽनन्तभेदोऽप्येकः, **क्रमद्योतिते तु शब्द-शक्तिमूलौ द्वौ, अर्थशक्तिमूला द्वादश, उभयशक्तिमूल एक इत्यष्टादश।**

**वाक्य इत्यादि। अत्रैकदेशस्था शब्दशक्तिरेकदेशान्तरस्था चार्थशक्तिर्व्यङ्ग्यं प्रति व्याप्रियत इति वाक्य एवोभयशक्तिमूलत्वमिति ग्रन्थकृतोऽभिप्रायः। वस्तुतस्तु शब्दशक्तिः कामं पदगताऽपि सम्भवति, अर्थशक्तिस्तु** वक्त्राद्यौचित्यादिर्वाक्ये एव भवतीति वाक्य एवोभयशक्तिमूलत्वमिति ध्वनिविदो मन्यन्ते।

## बालचित्तानुरञ्जनी

सूत्रगतेदंशब्दार्थमाह अस्येति। लक्षणामूलाविवक्षितवाच्यस्याऽर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृत-वाच्यलक्षणौ द्वौ भेदौ। अभिधामूलविवक्षितान्यपरवाच्यस्यासंलक्ष्यक्रमो रसादिरेको भेदः। **शब्दशक्तिमूलौ वस्त्वलङ्कारलक्षणौ द्वौ भेदौ। अर्थशक्तिमूला वस्त्वादयो द्वादशभेदाः। उभयशक्तिमूल एको भेद इत्यष्टादश भेदा इत्यर्थः। उक्ताष्टादशसंख्याक्षेपोत्तरत्वेनोत्तरसूत्रमवतारयति। नन्विति। रसादीत्यादिशब्देन भावादिः। हेत्वसिद्धि-माशङ्‌ग्य असिद्ध इत्याह अनन्तत्वादिति। सिद्धमिति शेषः। तदेव प्रतिपादयति तथाहीति। तयोः संयोगविप्रल-म्भयोः। नायकश्च नायिका च नायकौ तयोः। एकस्यैव शृङ्गारस्येति अन्येषां हास्यादीनां भावादीनां वा ततस्त्वेक धर्मे कथं भेदः(?) अत आह असंलक्ष्येति। उक्तानं `दानां मध्ये कस्य वाक्ये व्यञ्जके पदे वा व्यञ्जके सति भवति** (?) वृत्तिरित्याकाङ्क्षायां विभागमाह वाक्य इति। काव्यरूपसमुदाये द्वाभ्यां शब्दार्थाभ्यामेकत्र भान यस्य स द्व्युत्थः। द्व्युत्थशब्दार्थमाह द्व्युत्थ इति। उभयशक्तिमूल एको भेदो वाक्य एव। व्यञ्जके सति भवति। यथा-अतन्द्रचन्द्रेत्यादि।

## काव्यादर्शः

भेदा इति। तथा हि लक्षणामूलस्याविवक्षितवाच्यस्यार्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यौ द्वौ भेदौ। अभिधामूलस्य तु विवक्षितान्यपरवाच्यस्यालक्ष्यक्रमो रसादिध्वनिरेकः, लक्ष्यक्रमस्तु अनुरणनरूपः शब्द-शक्तिमूलोऽर्थशक्तिमूलश्चेति द्विधा। तत्राद्योऽलंकारवस्तुव्यञ्जकत्वेन द्विधा, द्वितीयोऽपि स्वतः संभवी कविप्रौ-ढोक्तिकृतशरीरः कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरश्चेति त्रिधा। त्रयोऽपि प्रत्येकं व्यङ्ग्यव्यञ्जकयोर्वस्त्वलंकाररूपत्वाच्चतुर्विधा इति द्वादशभेदोऽर्थशक्तिमूलः। उभयशक्तिमूलस्त्वेकः, इत्यष्टाद-शभेदा वाक्यप्रकाशः। तयोरपीति। संभोगविप्रलम्भयोः। तथा हि सुखमयस्त्रीपुंसमाल्यर्तुहर्म्यादिविभावः पुल-कस्वेदकम्पाश्रुमाल्यादिसम्यग्निवेशनकटाक्ष चाटुप्रभृतिवाचिक कायिक व्यापारलक्षणानुभावो धृतिमतिलज्जा-दिव्यभिचारी संभोगः। सुखलब्धस्त्रीपुंसमाल्यादिविभावोऽङ्गनेत्रक्षामतावचोवक्रतासंतापदीनसंचरण प्रलापलेख

लेखनवाचनसंदेशदानस्नेहनिवेदनमरणोद्यमाद्यनुभावश्चिन्ताशङ्काग्लानिनिद्रासुप्तप्रबोधासूयाश्रमस्वप्नजडताव्याध्यपस्मारमरणादिव्यभिचारी विप्रलम्भः।

## विवेकः

'यतश्चार्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेत्यविवक्षितवाच्यस्य द्वौ भेदौ, असंलक्ष्यक्रमव्यङ्ग्योऽनन्तभेदोऽप्येकः, क्रमद्योतिते तु शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला द्वादश, उभयशक्तिमूल एकः' (रु.सं. ३६ पृ:) ततः स्पष्टाऽस्याष्टादशप्रकारतेत्यह—भेदा इति। इदं शब्देनोभयत्वपरामर्शेऽसङ्गतिः, अत आहअस्येति ध्वनेरिति। सूत्रनिरसनीयामाकाङ्क्षामवतारयति नन्विति। यस्मादसंलक्ष्यक्रमव्यङ्ग्योऽनन्तभेदस्तत एक एव गण्यते। आनन्त्यस्य दिङ्मात्रमाह—तथाहीति। तत्र रसानां शृङ्गारः सम्भोगविप्रलम्भभेदभाक् प्रत्येकं वाङ्नेपथ्यक्रियाऽऽत्मकतया षट्प्रकारः तत्र सम्भोगस्य परस्परावलोकनादयोऽन्तरङ्गा बहिरङ्गास्तु कुसुमावचयादय इति यथाक्रमं निर्दिशति। तत्र परस्परदर्शनेन यथा (ध्व. आ. ३१४ वृ:) स्मरनवदनदीपूरेणोढाः पुनर्गुरुसेतुभिर्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः। तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा नयननलिनीनालानीतं पिबन्ति रसं प्रियाः॥ अत्रोत्कलिकाबाहुल्येन 'स्मर एव नवो नदीपूरः प्रावृषेण्यप्रवाहः सरभसमेव प्रवृद्धत्वात् (ध्व. आ. लो.) तेनोढा' अनिर्यन्त्रणं कृताः पुनर्गुरव एव सेतवस्तैर्यद्यपि धृतास्तत्सन्निधौ लज्जावशान्नियन्त्रिताः सन्तोऽपूर्णसमागममनोरथा दुःखं तिष्ठन्तीति तदपि प्राणननयन (लक्षण ?) मात्रजीवितत्वाल्लिखितप्रख्यैरङ्गैरुपलक्षिता अनिवार्यप्रसराभिलाषबलान्नयने एव नलिनीनाले ताभ्यां परस्परं प्रेमामृतरसं पिबन्त्यास्वादयन्तीति रूपकेनाङ्गत्वेनानुगुण्येन प्रसाधितः परस्परदर्शनात्मा सम्भोगशृङ्गारः प्रकाशते। एवमन्येऽपि। उत्तममध्यमाधमप्रकृतित्वमुत्तममध्यमाधमपात्राश्रयत्वम्। शृङ्गार इति नियमादन्यत्र शृङ्गारशब्देन तदाभासो मन्तव्य इत्युक्तमेव। मनुष्यपशुपक्षिप्रभृतीनां नगरग्रामारण्यसलिलादिसमवेतानां परस्परमतितरां भेद इति। देशभेदः प्रसिद्ध एव। ऋतुभेदादिभ्यो न सलिलादीनामचेतनानां विशेषः, चेतनानाञ्चौत्सुक्यादय इति कालभेदः। बाल्ये नैव प्रमदा शृङ्गारस्य विभावः, यौवने तु विभाव एवेत्येवमादिरवस्थाभेदः। विभावानुकल्पे न पुनरनुभावव्यभिचारिणी। प्रकर्षमन्दत्वमध्यत्वाद्यवस्थाजनको देशादिभेदः स्थित एव इत्येक एव रसः परिसंख्यातुं न शक्यते किं पुनरन्य इति। तथाहि हास्यस्यात्मस्थपरस्थभेदवतः (प्रत्येकं) पृथक् पृथक् विकाशिनयनं स्मितं, किञ्चिल्लक्ष्यदशनं हसितं, मधुरस्वनं विहसितं, स्वाङ्गशिरःकम्पनमुपहसितं, साश्रूपूर्णाक्षमतिहसितमिति षड् भेदाः। (इत्थं) द्वादशभेदस्य (प्रभेदे) ष्वङ्गनेपथ्यवाक्यभेदेन षट्त्रिंषत्प्रकारता। धर्मोपघातार्थापचयशोकसम्भवः करुणस्त्रिधा। अङ्गनेपथ्यवाक्यभेदाद्रौदस्त्रिधा। दानधर्मयुद्धभेदाद्वीरस्त्रिप्रकारः। व्याजापराधत्रासससम्भवो भयानकस्त्रिधा। क्षोभणोद्वेगभेदाद्वीभत्सो द्विधा। दिव्यदर्शनहर्षोद्भवत्वाददद्भुतोऽपि द्विभेदः। शुभसंस्कारजो देवताऽनुग्रहजश्च शान्तो द्विविध इति भरतमुनिनोदीरिता ये स्वगताः प्रभेदास्तेषां प्रत्येकं तदाभासादिभेदा एकचत्वारिंशतस्थायिसञ्चारिभावानाञ्च स्वरूपभेदाश्चाभासशान्त्यादिभेदानाञ्च सर्वेषामनन्ताः पूर्ववदुत्तमादिरूपस्वाश्रयापेक्षया देशकालावस्थानभेदाद्वि भावानुभावा निरवधयः। तेषामन्योन्यमङ्गाङ्गिभावेन सम्बन्धपरिकल्पने क्रियमाणे निरवधित्वं स्फुटमित्याह का गणनेति। कथं तर्ह्येकरूपतेत्याह—असंलक्ष्येति।

## दीपिका

अष्टादश उक्ता इति शेषः । उक्तेन क्रमेण अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ अलक्षक्रमव्यङ्ग्यः । शब्दमूले वस्त्वलङ्कृती, अर्थमूला द्वादश उभयमूलश्चेत्यष्टादश । अस्येत्यनन्तराकृष्ट्या सङ्गतिरित्याह—ध्वनेरिति ।

परिचुम्बनादीत्यादिपदमन्तरङ्गरतपरिग्राहकम् । बहव-इति उक्तानामितरेषाञ्च विभावानुभावसञ्चारिणां स्वरूपनिर्णेयानाञ्च लोष्टप्रस्तारेणानन्त्यादिति भावः । नायकयोरित्येकशेषः । उत्तमेत्यादि वृषमृगादिरूपतया स्मरतन्त्रप्रसिद्ध्या नेयम्, अन्यथाऽनुत्तमप्रकृताबाभासतानियमेन रसभेदगणनायामप्रवेशात् । देशकालभेदौ देशादिभेदत्वारोपयोगिनौ वसन्तादिनदीतीरादिरूपौ वा साक्षात्त्वदीपकौ, विशेषेण विप्रलम्भे अथ ? अवस्था बाल्यादिकाः । एकस्यैव रसस्येति-अन्येषां रसानां तदाभासानाञ्च विचित्रतागणने किं पुनर्वाच्यमिति भावः । एतदेवाह—केत्यादिना । ननु यद्यानन्त्यं कथं तर्हि एकधा गणनमित्याह—असंलक्ष्येति ।

वाक्य इति—यत्रैकैकपदस्य नासाधारणी शक्तिः, तत्र समग्रमेव वाक्यमाश्रित्य व्यङ्ग्योऽवस्थित इत्युच्यते । द्व्युत्यश्च व्यङ्ग्यस्तथा नियत एव लक्ष्ये प्रसिद्धः । तेन—

**त्वदनुगतवतीश सा मदर्थे त्वमपि मया सदृशीकृतोऽसि धात्रा ।**
**वहति वपुरिदं गतागतैस्तेऽनवरतखेदमवाप्य यत्कृशत्वम् ॥**

इत्यत्रानवरतेति प्रकरणाद्वाच्यपर्यवसायित्वेऽनवरतेति पदेन वाक्यार्थेन्न च व्यङ्ग्यस्य तत्कान्तसम्भोगस्योभयमूलत्वेऽपि प्रायिकत्वाभावादनादरः ।

वस्तुतस्तु यथादर्शनं भेदगणना कार्या ।

## साहित्यचूडामणिः

निगमयति—भेदा इति । एतावति पर्वणि अष्टादश भेदाः । तथाहि—अविवक्षितवाच्यस्य द्वौ अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति । विवक्षितान्यपरवाच्यस्य रसादिरसंलक्ष्यक्रम एकः, अनुस्वानोपमव्यङ्ग्ये शब्दशक्तिमूलौ द्वौ, अर्थशक्तिमूला द्वादश, उभयशक्तिमूल एक एवेति ।

विप्रकृष्टार्थपरामर्शार्थमिदंशब्दप्रयोग इत्याह—अस्येति ध्वनेरिति ।

वाक्य इति । उभयशक्तिसमर्थो (ध्वनिः) वाक्य एव, अत्र शक्तिद्वयस्य तुलाधृतवदवस्थानात् ।

## सम्प्रदायप्रकाशिनी

तानिमान् समष्टिभूतान् भेदान् राशीकृत्य संचष्टे—भेदा अष्टादशेति ।

अस्येति सर्वनाम्ना सन्निहितस्योभयशक्तिमूलस्य परामर्शभ्रमो मा भूदित्याह—अस्येति ध्वनेरिति । अविवक्षितवाच्योऽपि अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विरूपः, विवक्षितान्यपरवाच्यस्त्वर्थशक्तिमूलो रसादिरसंलक्ष्यक्रम एकः, संलक्ष्यक्रमस्तु शब्दशक्तिमूलोऽलङ्कारध्वनिर्वस्तुध्वनिश्चेत्युभयविधः, अर्थशक्तिमूलस्तु द्वादशात्मा, उभयशक्तिमूलस्त्वेक इति अष्टादश भेदाः ।

एषूभयशक्तिमूलो वाक्यैकप्रकाश्य इत्याह—वाक्ये द्व्युत्थ इति ।

## विस्तारिका

अष्टादशेति । अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यालक्ष्यक्रमव्यङ्ग्ये (द्वौ) (विवक्षितान्यपरवाच्ये रसादिरेकः लक्ष्यक्रमव्यङ्ग्ये) शब्दशक्तिमूले वस्त्वलङ्कृती । अर्थशक्तिमूले द्वादश । उभयशक्तिमूलश्चैकः ।

अनन्तराकृष्ट्याऽसङ्गतिरित्याह—अस्य ध्वनेरिति ।

परिचुम्बनादीत्यादिपदेनान्तराङ्गान्तरग्रहणम् । नायकयोरित्येकशेषः ।

उत्तमेत्यादि । प्रकृतिः स्वभावः । स्वापेक्षकोत्तमस्वजातीयनिकृष्टानुरागित्वेनोत्तमप्रकृतित्वादि । देशो विजनादिः । कालो वसन्तादिः । अवस्था बाल्यादिका । अन्येषां रसानां तदाभासानाञ्चेत्यर्थः । तर्ह्येकत्वगणने किं बीजमित्याह—असंलक्ष्येत्यादि । सामान्यं रसादिषु भावादिष्वप्यनुगतो धर्मः । एकोऽसंलक्ष्यक्रमः ।

'वाक्य' इत्यादि । ननु द्व्युत्थनामको भेद इत्याह—शब्दार्थोभयेत्यादि । एकत्र पदेऽन्वयव्यतिरकानुविधानानुविधानविरहाद् वाक्यगामितानियमः । केचित्तु प्रायिकमेतत् ।

**तमनुगतवती शठस्तदर्थे त्वमपि च मम सदृशी कृतासि धात्रा ।**
**वहति वपुरिदं गतागतैस्तेऽनवरतखेदमवाप्य यत् कृशत्वम् ॥**

इत्यत्र 'नवरत' स्थाने 'गुरुपरी' ति पाठे वक्तृबोद्धव्यवैशिष्ट्यैः सद्यः कामुकसम्भोगस्य प्रकाशेनार्थशक्तिमूलत्वम्, सति च तस्मिन् वक्त्रादिवैशिष्ट्यमनपेक्ष्यैव शब्दशक्तिरेव प्रभवतीति पदेऽप्युभयशक्तिमूलतादर्शनादित्याहुः, तन्न, तत्पदान्वयव्यतिरेकानुविधानेन तन्मूलताविरहात् । गुरुपरीति पाठे प्रथमरताप्रतीतेः ।

## सारबोधिनी

अष्टादेशेति । अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यालक्ष्यक्रमव्यङ्ग्या इति त्रयः । शब्दशक्तिमूले वस्त्वलंकृति द्वे । अर्थशक्तिमूलाः द्वादश । उभयशक्तिमूलश्चैक इत्येकतया अष्टादश ध्वनयः स्युरिति ।

द्व्युत्थ इति । अत्र केचित्—प्रायिकमेतत् । तथाहि ।

**तमनुगतवती शठं मदर्थे त्वमपि च मत्सदृशीकृतासि धात्रा ।**
**वहति वपुरिदं गतागतैस्ते नवरतखेदमवाप्य यद्दुकूलम् ॥**

इत्यत्र नवरतेत्यत्र गुरुपरीति पाठे वक्तृबोद्धव्यवैशिष्टयेन दूत्याः कामुकसंभोगप्रकाशेनार्थशक्तिमूलत्वम् । सति च तस्मिन् पाठे वक्त्रादिवैशिष्ट्यमनपेक्ष्यैव शब्दशक्तिरेव तत्र प्रभवतीति पदेऽप्युभयशक्तिमूलत्वदर्शनादित्याहुः ।

## काव्यप्रदीपः

**भेदा अष्टादशास्य तत् ॥ १८ ॥**

अस्य ध्वनेः । नतु शब्दार्थोभयभुवः ।

ननु रसभावादीनां बहुत्वादष्टादशत्वमनुपपन्नमित्यत आह—

**रसादीनामनन्तत्वाद्भेद एको हि गण्यते।**

कथमनन्तत्वम्। इत्थम्—नव रसाः। तत्र शृङ्गारस्यैव द्वौ भेदौ, संभोग विप्रलम्भौ। तत्र संभोगस्यापि परस्परालिङ्गनादयो बहवो भेदाः। विप्रलम्भस्यामिलाषादय उक्ताः। तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम्। तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम्। तत्रापि देशकालावस्थाभेद इत्येकस्यैव रसस्यानन्त्यम्। का गणना सर्वेषाम्। कुतस्तर्ह्येकत्वेन गणनम्। असंलक्ष्यक्रमत्वरूपमेकं सामान्यमाश्रित्य।

**वाक्येव्द्युत्थः**

शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्य एव। ननु नायं नियमः। शिशुपालवधे तद्दूतोक्तौ प्रबन्धेऽपि दर्शनादिति चेत्, न। तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात्तुल्यप्राधान्यभावात्। 'ब्राह्मणातिक्रमत्यागः' इतिवत्। अन्यत्राप्येवं संभाव्यत इति चेत्संभाव्यताम्। नतु क्वापि निश्चीयते येन तदादाय विभागः स्यादिती।

## आदर्शः

अष्टादशेति। लक्षणामूलौ द्वौ, असंलक्ष्यक्रमव्यङ्ग्य एकः, शब्दशक्त्युद्भवौ द्वौ, अर्थशक्त्युद्भवा द्वादश, उभयशक्त्युद्भवश्चैव इत्यष्टादश।

अनुभावभेदादपि रसादीनां भेदसम्भवमाह—परस्परेति। उद्दीपनविभावभेदादपि भेदसम्भवमाह—कुसुमोच्चयेति। वर्णनादय इति, ऋतुषट्कादिवद् वन्द्यादिना तद्वर्णनस्याप्युद्दीपकत्वमित्यभिप्रायः।

वाक्ये इति। वाक्यव्यङ्ग्य एवेत्यर्थः व्यञ्जकशब्देन सह व्यञ्जकार्थवाचकशब्दस्य वाक्यत्वप्राप्तिध्रौव्यात् द्व्युत्थस्य पदव्यङ्ग्यत्वासम्भावात्।

## सुधासागरः

तदेवमस्य ध्वनेर्, न तु शब्दार्थोभयभुवः अष्टादश भेदा भवन्ति। तथाहि—अविवक्षितवाच्यस्य द्वौ भेदौ—अर्थन्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति। विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्य एक एवेति त्रयो भेदाः। लक्ष्यक्रमव्यङ्ग्येषु शब्दशक्तिमूलो द्विधा अलङ्कारोऽथ वस्त्वेवेति। अर्थशक्त्युद्भवस्य द्वादश भेदाः। शब्दार्थोभयभूरेक इति पञ्चदश भेदाः। पूर्वोक्तैस्त्रिभिर्भेदैः सहाष्टादशेति।

ननु रसभावादीनां बहुत्वादष्टादशत्वमनुपपन्नमित्यत आह—'रसादीनामि' ति

द्व्युत्थः—शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विविधो ध्वनिर्वाक्ये इति भ्रमं निराकुर्वन् वृत्तिकृदाह—द्व्युत्थ इत्यादि।

अत्रेदं बोध्यम्। शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्य एव। ननु नायं नियमः, शिशुपालवधे उद्धवोक्तौ प्रबन्धेऽपि दर्शनादिति चेन्न। तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात्, तुल्यप्राधान्यात् 'ब्राह्मणातिक्रमत्यागः' इतिवदन्यत्रापि सम्भाव्यत इति चेत्, सम्भाव्यतां, न तु क्वापि निश्चीयते येन तदादाय विभागः स्यादिति।

## विवरणम्

अष्टादशेति । अर्थान्तरसङ्क्रमितवाच्यकात्यन्ततिरस्कृतवाच्यकौ द्वौ, अलक्ष्यक्रम एकः, शब्दशक्त्युद्भवौ द्वौ, अर्थशक्त्युद्भवा द्वादश, उभयशक्त्युद्भव एक इति ।

चुम्बनाद्यन्ता अनुभावाः, वर्णनाद्यन्तान्युद्दीपनानि, ऋत्वादीनां स्वरूपेणेव तद्वर्णनस्याप्युद्दीपनत्वमित्यभिप्रायः । भेदाः भेदकाः । तयोः सम्भोगविप्रलम्भयोः विभावानामालम्बनानां वैचित्र्यं धीरोदात्तत्वादिना, अनुभावानामालोकनादीनां वैचित्र्यमलसवलितत्वादिनां, व्यभिचारिणां वैचित्र्यं निर्वेदत्वादिना । तत्रापि विभावानां मध्ये देशः शून्यगृहादिः, कालो वसन्तादिः, अवस्था नवयौवनादिः ।

वाक्य इति । वाक्य एवेत्यर्थः । प्रायशोऽनुगामिसाधारणधर्मप्रयोगं विना नानार्थपदमात्रेण द्व्युत्थो नोत्थापयितुं शक्यत इति भावः ।

## (सू. ५९) पदेऽप्यन्ये

अपिशब्दाद्वाक्येऽपि। एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्यापि भारती भासते। तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि—

**यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा।**
**अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥७३ ॥(१)**

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वादि-संक्रमितवाच्याः।

---

### सङ्केतः

अन्ये इति। अन्ये सप्तदश। ननु—भारती काव्यरूपा, सा च 'वाक्यात् व्यङ्ग्यं यस्याः' इति व्युत्पत्त्या वाक्यव्यङ्ग्या सती, क्रियासमाप्त्या वाक्यपूर्णत्वे एव भाति। यतः काव्यविशेषो नाम विशिष्टार्थप्रतीतिहेतुः सन्दर्भविशेषः। पदप्रकाश्यत्वे तु न काव्यविशेषता घटेत, पदानां स्मृतिहेतुत्वेन अवाचकत्वात्। तथाच कथं पदद्योत्येन व्यङ्ग्येन भासते इत्युच्यते ? इत्यत आह—एकावयवेति। अत्र—यथा दीपः एककोणस्थोऽपि सर्वं गृहं प्रकाशयति तथैवेदमित्यपि भाव्यम्। तथाच—यथा श्रुतिदुष्टपेलवादिपदानां असभ्यार्थं प्रति न वाचकत्वम्, किन्तु केवलं स्मारकत्वम्, तद्वशाच्च चारुरूपं काव्यमपि श्रुतिदुष्टमिति अन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते, तथा—प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनित्वव्यवहारः। न च ध्वनित्वव्यवहारे वाचकत्वं प्रयोजकम्, व्यञ्जकत्वेन व्यवस्थानात् इति भावः।

यस्येति। अत्र द्वितीयमित्रशब्दः अनुपयुज्यमानत्वात् बाधितस्वार्थः स्वाभिधेयभूतार्थगामित्वरूपसम्बन्धात् विश्वसनीयतां लक्षयन् सर्वस्वरहस्यार्पणाख्यानादि ध्वनयति। इयं शुद्धा सारोपा साध्यवसाना वा लक्षणा। तद्युक्तिश्च पूर्वोक्तमेघनादशब्दवत्। एवं द्वितीयशत्रुशब्दोऽपि नितरां यन्त्रणीयत्वं लक्षयन् निरुच्छ्वासतादि ध्वनयति। अनुकम्प्यशब्दोऽपि स्नेहपात्रत्वं लक्षयन् सम्पत्प्रसादसम्पादनादि ध्वनयति। अत्रापि लक्षणापूर्ववत्। एषः अर्थान्तरसङ्क्रमितभेदः।

### सङ्केतः (रुय्यकः)

पदेऽपीति। ननु काव्यविशेषो ध्वनिः काव्यञ्च न पदमात्ररूपम् अपि तु वाक्यस्वभावम्। एवञ्च कथं पदप्रकाश्यत्वं वाक्यविशेषरूपस्य ध्वनेः स्यादित्याह—एकावयवेति। एकदेशमुखेन वाक्यमेव तथा व्यपदिष्टमित्यर्थः।

यस्य मित्राणीति। अर्थान्तरसंक्रमितवाच्यस्येदमुदाहरणं, "खलव्यवहारा" इति त्वत्यन्ततिरस्कृतवाच्यस्य।

## बालचित्तानुरञ्जनी

उभयशक्तिमूलादन्येऽर्थान्तरसंक्रमितवाच्यादयः, अन्ये सप्तदश पदव्यञ्जकेऽपि शब्दाद्वाक्येऽपि संभवन्तीत्यर्थः।

ननु 'इदमुत्तममतिशयिनि' इत्यादौ समुदायरूपकाव्यविशेषप्रदर्शितस्य ध्वनेर्वाक्यव्यङ्ग्यत्वेन कथं व्यङ्ग्यत्वमत आह एकेति। वाक्यात् व्यङ्ग्यश्चेति विग्रहः। यथा सर्वावयवस्थितनानाभरणजातेन भासमानाया युवतेरेकावयवस्थितेनाभरणेनाभासमानत्वं तथा वाक्यव्यङ्ग्यस्यापि पदव्यङ्ग्यत्वमविरुद्धमित्यर्थः। तथा चोक्तं ध्वनिकारेण—

**'विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी।**
**पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥** इति।

वाक्यप्रकाश्यत्वे उदाहरणान्युक्तानि। अथ पदप्रकाश्यत्वेनोदाहरणानि प्रतिजानीते तत्रेति। तत्रानुपयुज्यमानार्थान्तरसंक्रमितवाच्यपदद्योत्योदाहरणमाह यस्येति। यस्य नायकस्य मित्राणि सर्वदा मित्राण्येव नान्यानि। इत्यादिस्वभावः स नायको जातः। सफलजन्मवान् सफलजीवितश्च भवति। द्वितीयमित्रादिशब्दानामनुपयुज्यमानत्वेनाश्वस्ताद्यर्थान्तरेषु सङ्क्रमितवाच्यत्वमाह अत्रेति। अत्र द्वितीयमित्रादिशब्दानामनुप्रयोगात्मनो मुख्यार्थबोधः सामान्यविशेषभावः संबन्धः। अतो मित्रादिशब्दा आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वादि यथासंख्यं लक्ष्यन्ति। प्रकाशसंशयसंपादनानि व्यञ्जयन्ति। अत एव शुद्धस्यार्थस्याविवक्षितत्वादविवक्षितवाच्यत्वम्।

## काव्यादर्शः

द्व्युत्थ इति। काव्यरूपसमुदायापेक्षया द्वाभ्यां शब्दार्थाभ्यां उत्था उत्थानं यस्य स तथा। वाक्य एव द्व्युत्थो, न पदे, यथा उदाहृतं 'अतन्द्र' इति। अन्य इति। द्व्युत्थापेक्षया। तेनार्थान्तरसंक्रमितवाच्यादयः सप्तदश भेदाः पदेऽपिस्युः। तथा हि अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेत्यविवक्षितवाच्यस्य द्वौ भेदौ, असंलक्ष्यक्रमव्यङ्ग्यो लक्ष्यक्रमव्यङ्ग्यश्चेति विवक्षितान्यपरवाच्यस्यापि द्वौ। असंलक्ष्यक्रमोऽनन्तभेदोऽप्येकः। क्रमव्यङ्ग्ये तु शब्दशक्तिमूलौ द्वौ। एवं पञ्च। अर्थशक्तिमूलाद्वा दशेति पदप्रकाशाः।

ननु, 'इदमुत्तममतिशयिनि' इत्यादौ समुदाय एव काव्यविशेषो ध्वनिः, तत्कथं तस्य पदप्रकाशता? काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः संदर्भविशेषः, काव्यविशेषत्वं च न पदप्रकाशत्वे उपपद्यते, पदानां स्मारकत्वेनावाचकत्वाद्, इत्याशङ्क्याह—एकावयवेति। यदुक्तम्—

**विच्छित्तिशोभिनैकेन भूषणेनैव कामिनी।**
**पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥**

यथा श्रुतिदुष्टानां पेलवादिपदानामसभ्यार्थं प्रति न वाचकत्वं, तद्वशाच्च आचाररूपं काव्यं श्रुतिदुष्टम्। तच्च श्रुतिदुष्टत्वमन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते, तथा प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनिव्यवहारः। न च ध्वनिव्यवहारे वाचकत्वं प्रयोजकं, व्यञ्जकत्वेन तस्य व्यवस्थानात्। मित्रादि शब्दा इति। अनुपयोगात्मिका मुख्यार्थबाधास्तीति लक्षणामूलत्वं शुद्धस्यार्थस्य अविवक्षितत्वाद् अविवक्षितवाच्यत्वम्। ततो द्वितीयमित्रादि-शब्दा आश्वस्तत्वादि लक्षयन्तो धर्मान्तराण्यन्यशब्दावाच्यान्यादरास्पदत्वादीनि व्यञ्जन्ति।

## विवेकः

उभयशक्तिमूलो वाक्य एव सम्भवतीति तं विहायान्ये सप्तदश प्रकाराः पदवाक्ययोर्ज्ञेया इत्याह पदेऽप्यन्य इति। "ननु काव्यविशेषो ध्वनिः, काव्यञ्च न पदमात्ररूपमपि तु निराकाङ्क्षप्रतिपत्तिकारि विशिष्टवाक्यप्रभवम्, एकञ्च कथं पदप्रकाश्यत्वं वाँक्यविशेषरूपस्य ध्वने"—(रु.सं. ३७ पृ.) रित्याशङ्क्य दृष्टान्तमुखेन परिहरति एकावयवेति। तदिह पदेऽपीत्याधारसप्तमी सहकारिताऽऽत्मकनिमित्तत्वाभिप्रायेण मन्तव्या।

यस्य मित्राणीत्यादि—अत्र नियमेनानुपयोगात्मिकया बाधया बाधितत्वाद्द्वितीयपद एव लक्षणा, प्रथमे धर्मिण एवाकाङ्क्षितत्वात्। तेन चाश्वस्तादयो ये मित्रादिधर्मा लक्ष्यन्ते तेषां सातिशयत्त्वाद्व्यङ्ग्यत्वम्।

## दीपिका

पदेऽप्यन्य इति—अत्र वाक्ये पदे इति व्यङ्ग्यविषयविभागेन ध्वनिरेवार्थाद्विभक्तो बोद्धव्यः। अन्य व्यङ्ग्यभेदा इत्यर्थः।

ननु चमत्काराविष्कारक्षमः शब्दः काव्यं, चमत्कारश्च नैकपदसाध्यः। ततश्च तद्व्यङ्ग्यं क्षुद्रप्रायकमेवेति कथं तेनोपाधिना काव्यभेदनमित्याह—एकेति। पदद्योत्येन व्यङ्ग्येन व्यञ्जनावृत्तया पदबोध्येन वस्तुमात्रादिना। वाक्यव्यङ्ग्याऽपीतिं—अर्शआदित्वादच्।

अयमर्थः—नखलु केवलस्य पदस्य तथाविधं सामर्थ्यं, किन्तु तत्पदव्यङ्ग्याश्रयपदान्तरन्तु तस्य सहकारीति। तेन च व्यङ्ग्येन सर्वमेव स्वीयं प्रधानाप्रधानरूपं हेतुजातमुपजीव्यते। ततश्च तन्मुखेन वाक्यस्यातिशयः समीचीन इति न किञ्चिदप्यशिवम्। पदात् प्रकाशः प्रतीतिरस्येति पदप्रकाशो व्यङ्ग्यस्तस्य भावस्तत्त्वम्। तत्र क्रमेणेत्यतः पूर्वं लक्षणेति शेषः।

उदाहरणनीति—लक्ष्यदर्शनेन लक्षणानि स्फुटानि भवन्तीति भावः। मित्रादिशब्दा इति—मित्रशत्र्वनुकम्प्यजातजीवतिपदानि। स्नेहपात्रत्वादीति—सौजन्यसुश्लाध्यजीवनत्वपरिग्रहः। अत्र पद्येऽनेकावान्तरवाक्यवर्ति वाक्यैकदेशिनामेव लाक्षणिकता, न तु पदसमभिव्याहाररूपस्य वाक्यस्य। प्रथममित्रादिपदानां हि सुहृदादिसंज्ञिबोधकानां मुख्यानुपयोगविरहेण न लाक्षणिकत्वम्।

## साहित्यचूडामणिः

अथान्येषां पदविषयत्वमप्यस्तीत्याह—पदेऽपीति। अन्ये एकैकशक्तिमूलाः सप्तदश। यदाह—

**अविवक्षितवाच्यस्य पदवाक्यप्रकाश्यता।**
**तदन्यास्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥ (ध्व. ३.१ ॥)**

अपिरुक्तसम्मुच्चय इत्याह—अपिशब्दादिति। ननु कथमेकदेशिकः पदविषयो ध्वनिर्महावाक्योपयोगीत्यत्राह—एकेति। दृष्टान्तबलादेतदङ्गीकार्यम्। यदाह—

**विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी।**
**पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥**
**अनिष्टस्य स्मृतिर्यद्वदापादयति दुष्टताम्।**
**श्रतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणः** ॥(ध्व. ३.१. परि) इति

**"सामानाधिकरण्यं हि रूपभेदमपेक्षते।"**

इति नीत्या द्वितीयमित्रादिशब्दाः स्खलद्गतित्वादर्थान्तरपरिणमिताः। मित्रशत्र्वनुकम्प्यशब्दाः क्रमेण विस्रब्धत्वरूप आश्वस्तत्वे कदर्थनाशून्यत्वाकारे निर्यन्त्रणत्वे सौजन्यभाजनत्वलक्षणे स्नेहपात्रत्वे च संक्रमितवाच्याः। अप्रच्युतस्वभावत्वं नाम सादृश्यं सर्वत्र सम्बन्धः। वर्णनीयस्य महापुरुषलक्षणसम्पन्नत्वं व्यङ्ग्यम्। आदिपदात् सम्पन्नत्वाचकतित्वसंवर्धनीयत्वादिस्वीकारः। मित्रादीनामेकवाक्यवर्तिनामप्येकार्थीभावसमन्वयाभावात् पदप्रकाश्यता।

## सम्प्रदायप्रकाशिनी

अन्यत् सप्तदशकं पदप्रकाश्यतयापि सम्भवतीत्याह—पदेऽप्यन्य इति।

अपिशब्दस्योक्तसमुच्चयपरतां दर्शयति—अपिशब्दाद् वाक्य इति। एते समनन्तरमुदाहृताः। पदप्रकाश्यास्तूदाहरिष्यन्ते। नन्वेकपदद्योत्येन व्यङ्ग्येन कियती शोभा भवतीत्यत आह—एकावयवस्थितेनेत्यादि। वाक्यद्योत्यापीति। यथा हि सर्वालङ्कारपरिष्कर्तव्यापि कामिनी एकेनैवैकावलीप्रमुखेन भूषणेन भूयसा भासते, तथा वाक्यप्रकाश्यापि भारती पदप्रकाश्येन व्यङ्ग्येन। क्रमात् पदप्रकाश्यानुदाजिहीर्षु राह—तत्र पदप्रकाश्य इति।

यस्य मित्राणीति। वाक्यत्रयेऽपि स्थिरप्रकृतित्वमस्य व्यज्यते। चतुर्थपादवाक्यद्वयेन त्वन्यवैलक्षण्येन धन्यता।

आश्वस्तेति। अत्र द्वितीयमित्रशब्दस्य व्यङ्ग्यम्। आदिशब्देनानाश्वस्तत्वादि द्वितीयशत्रुशब्दस्य। अवश्यरक्ष्यत्वसर्वप्रकारनिरपराधत्वादयस्तु द्वितीयानुकम्प्यशब्दस्य। इह मित्रादिशब्दाः प्रत्येकमुदाहरणं, प्रतिस्वं वाक्यपरिपूर्तेः। अतः पदप्रकाश्यत्वेनोदाहृतम्।

## मधुमती

पदद्योत्येनेति। यद्यपि—यत्र एकं पदं व्यञ्जकम्, तत्र पदान्तराण्यपि तथा। तथापि प्राधान्याभिप्रायेण इदं द्रष्टव्यम्। तदिदमुक्तं पूर्वम्—'प्राधान्येन अधमपदेन व्यज्येत' इति।

अत्रेति। सर्वत्र सामान्यविशेषभावः सम्बन्धः। सहृदयत्वनिर्जितत्वसम्पत्तिमत्त्वप्रतीतयश्च यथाक्रमं प्रयोजनानि। यद्यपि अत्र अनेकानि पदानि सन्ति। तथापि तेषां प्रत्येकमेव व्यञ्जकत्वात् पदव्यङ्ग्यत्वं उक्तम्।

## विस्तारिका

पदेऽपीति—अन्ये सप्तदश 'अपि' शब्दस्यानुक्तपदांशादिसमुच्चायनं बोधयति।

'अपि' शब्दादित्यादि। अलङ्कारादीनां पदांशादिव्यङ्ग्यत्वासम्भवात्। एकावयवेत्यादि। द्योत्येन बोध्येन, व्यङ्ग्येन व्यञ्जनाविषयेण, भारती काव्यता, भासते चमत्कुरुते। वाक्यव्यङ्ग्येत्यर्श आदित्वादच्। वाक्यस्य व्यङ्ग्यं यत्रेति बहुव्रीहिर्वा। यद्वा भारती चमत्कारः, स च यत्किञ्चिदेकपदसाध्यत्वाद् वाक्यस्यैव व्यङ्ग्यः, तथापि पदस्य शक्तिरुद्भटत्वेन तद्व्यङ्ग्येन भासते प्रतीतिपथमवतरति।

पदप्रकाश्यत्व इति पदात् प्रकाशत 'इत्युक्तऽर्धाद् यस्य। पदप्रकाशत्व इत्यपि पाठः।

अत्रेति। एकेनादिपदेन शत्रवनुकम्प्यजातजीवतिपदानि। द्वितीयेन च सुजन्मत्वश्लाध्यजीवनत्वे परिगृह्येते, विश्वासस्यातिशयो यावज्जीवस्थिरत्वं व्यङ्ग्यम्। एवं निर्यन्त्राणाद्यतिशयाश्च।

अत्र वाक्यार्थानां प्रत्येकविश्रान्तत्रेन नैकवाक्यता, तेन पदानामेव (न) वाक्यस्य व्यञ्जकतेत्यवधेयम्।

एवं, सर्वत्र प्रथममित्रादिपदार्थानां नानुपयोगित्वबाध इति न तेषु लक्षणेत्याह—द्वितीयेत्यादि। अर्थान्तरसंक्रमितवाच्यलक्षणाया व्यञ्जकत्वमुक्तम्।

## सारबोधिनी

पदेऽपीति। अन्ये सप्तदशप्रकाराः अपिशब्दस्यानुक्तसमुच्चयं वारयति अपिशब्दादिति। अलङ्कारादीनां पदांशव्यङ्ग्यत्वासंभवात्। एकावयवेत्यादि। वाक्यस्य व्यङ्ग्यं यत्रेति वाक्यव्यङ्ग्या, भासते चमत्कुरुते। तथा चैकस्य पदस्य प्राधान्येनोपयोगोऽन्येषां पदानां सहकारित्वेनेति भावः।

अत्रेति। एकेनादिपदेन शत्रु अनुकम्प्य-जात-जीवतीतिपदानि द्वितीयेन च जन्मत्वश्लाघ्यजीवितत्वे परिगृह्यन्ते। विश्वासातिशयो नियन्त्रणातिशयः। नायकस्य स्थिरप्रकृतित्वं च व्यङ्ग्यम्। अत्र वाक्यार्थानां प्रत्येकविश्रान्तत्वेन नैकवाक्यता। तेन पदानामेव व्यञ्जकता न वाक्यस्येत्यवधेयम्। अत्रार्थान्तरसङ्क्रमितवाच्याया लक्षणाया व्यञ्जकत्वमुक्तम्।

## काव्यप्रदीपः

**पदेऽप्यन्ये---**

अन्ये सप्तदश ध्वनिभेदा वाक्ये पदेऽपि। ननु पदस्य व्यञ्जकत्वे किमायातम् वाक्यरूपस्य काव्यस्य ध्वनित्वे। कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत्, उच्यते। पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया, किंतु तस्य प्राधान्येन। अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्युपगमान्न कश्चिद्दोषः। एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति। कामिनीवैकावयवस्थेन भूषणेन।

तदुक्तं ध्वनिकृता—

'एकावयवसंस्थेन भूषणेनेव कामिनी।

पदव्यङ्ग्येन सुकवेर्ध्वनिना भाति भारती ॥' इति ।

तत्र वाक्यव्यङ्ग्यमुदाहृतम्, पदव्यङ्ग्यमुदाह्रियते । तत्राविवक्षितवाच्यभेदयोरर्थान्तरसंक्रमितवाच्यं यथा—

'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा।

अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥'

अत्र द्वितीयो मित्रशब्द आश्वस्तत्वे, शत्रुशब्दो नियन्त्रणत्वे, अनुकम्प्यशब्दः स्नेहपात्रत्वे संक्रमितवाच्यः । नायकस्य दृढप्रकृतित्वं व्यङ्ग्यम् । ननु 'त्वामस्मि वच्मि—' इति वाक्यप्रकाश्ये पूर्वमुदाहृतम्, तस्मादस्य पदप्रकाश्यस्य को भेद इति चेत्, न । अनवबोधात् । तद्धि प्रत्येकपदव्यङ्ग्याभिन्नं समस्तपदवाक्यव्यङ्ग्यम् । तस्मादत्र सर्वथा सावधानेन भाव्यमित्येवंरूपं यत्तत्परम् । इदं तु केवलमित्रादिपदव्यङ्ग्याभिप्रायमिति ।

आदर्शः

पदेऽपीति, पदव्यङ्ग्या अपीत्यर्थः । द्व्यत्यादिपदञ्चात्र व्यङ्ग्यपरमेव न तु तत्सम्बन्धिकाव्यपरं काव्यस्य व्यङ्ग्यत्वाभावात् । अपि शब्दस्योक्तसमुच्चयपरत्वमाह—अपिशब्दादिति । अत्र 'क्रिया वा कारकान्विता' इति यद्वाक्यलक्षणमुक्तं तादृशवाक्यभिन्नमेव पदं विवक्षितम्, तथाच न चलति विमुह्यतीत्यनयोरग्रे पदत्वकथनं नानुपपन्नम्, नञर्थव्युपसर्गार्थयोः कारकत्वाभावात्, असमासे तदन्वयेऽपि कारकान्वितक्रियात्वाभावात् । नन्वेषां पदव्यङ्ग्यत्वे महावाक्यव्यङ्ग्येन रसादिना तत्रावश्यं स्थातव्यम्, तथाच महास्वादपात्रे तस्मिन् सत्येषामकिञ्चित्करत्वमित्याशङ्क्य निरस्यति—एकावयवेति नासिकास्थमुक्तादिनेत्यर्थः । वाक्यव्यङ्ग्यमहावाक्यव्यङ्ग्यरसभावादिरूपा भारती अर्थात्मककाव्यरूपा । 'पदव्यङ्ग्येन' लक्षणामूलादिसप्तदशात्मकेन । अत्र च वस्त्वलङ्काररूपा ये पदव्यङ्ग्यास्ते महावाक्यव्यङ्ग्यरसाद्यवृत्तय एव तदुपकारकाः । पदव्यङ्ग्यो रसादिस्तु रसभावादिप्रकर्षरूप एवेत्यसौ तद्द्वारैव रसाद्युपकारकः । न च स्वप्रकर्षः स्वोपकार एव कथमसौ स्वोपकारक इति वाच्यं प्रकृष्टत्वेन ज्ञायमानत्वस्यैव उपकारत्वाज्ज्ञातेन प्रकर्षेण प्रकृष्टत्वज्ञानजननात् । 'पदप्रकाश्यत्वे' इति पाठः शोभनः, 'पदप्रकाशत्व' इति पाठे तु पदात् प्रकाशो येषामिति बहुव्रीहिः । क्रमेणेति लक्षणामूलादिक्रमेणेत्यर्थः ।

यस्य मित्राणीति । अत्र द्वितीयमित्रादिपदानां पौनरुक्त्यापत्त्या अर्थान्तरसंक्रमितवाच्यत्वं लक्षणेत्याह—अत्रेति । तथाच यस्य मित्राणि आश्वस्तानि शत्रवश्च नियन्त्रणीयाः अनुकम्प्यश्च स्नेहपात्रं स जातः प्रकृष्टजन्मा स जीवति प्रकृष्टजीवन इत्यर्थः ।

तदपकारे द्वेषः अनुकम्पा, उपकार्यत्वेन सदैव ज्ञानं स्नेह इत्यनुकम्पास्नेहयोर्भेदः । आश्वस्तत्वादिरूपेण मित्रादेरेव उपस्थापनाद् अर्थान्तरसंक्रमितवाच्यलाक्षणिका एते शब्दाः, तद्व्यङ्ग्यश्च मित्रादिषूचितव्यवहारित्वेन तस्य महत्त्वं तच्च महावाक्यव्यङ्ग्यस्य तादृशपुरुषविषयभावस्य उपकारकं महत्त्वेन ज्ञाने तत्र भावातिशयात्

तेनएकावयवेत्याद्युक्तेरुपपत्तिः । अत्र च मित्रादिपदानां प्रत्येकैकवाक्यस्थत्वात् परस्परानन्वितत्वेन पदत्वम्, त्वामस्मीत्यादौ तु वच्मीति पदस्य पृथक्वाक्यस्थत्वेऽपि तत्कर्मभूतलाक्षणिकविद्वदादिपदार्थे तदन्वयाद् वाक्यतैक।

## सुधासागरः

अपिशब्दस्यानुक्तसमुच्चयार्थकत्वं वारयन् वृत्तिकृदाह—अपिशब्दाद् वाक्य इति । अन्ये सप्तदशभेदा वाक्ये पदेऽपीत्यर्थः ।

एकावयवेत्यादि । अयमाशयः—

ननु पदस्य व्यञ्जकत्वे किमायातं वाक्यरूपस्य काव्यस्य ध्वनित्वे कथं वा पदमात्रस्थे व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत्, उच्यते—पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया, किन्तु तस्य प्राधान्येन । अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्त्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्यभ्युपगमान्न कश्चिद्दोषः । एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति कामिनीवैकावयवस्थेन भूषणेन । तदुक्तं ध्वनिकृता—

**एकावयवसंस्थेन भूषणेनेव कामिनी ।**
**पदव्यङ्ग्येन सुकवेर्ध्वनिना भाति भारती ॥** ध्व. ३.१. सं. ॥

इति ।

तत्र वाक्यव्यङ्ग्यमुदाहृतम् । पदव्यङ्ग्यमुदाह्रियते । तत्राविवक्षितवाच्ययोरर्थान्तरसङ्क्रमितवाच्यं यथा—यस्येत्यादि । वाच्योऽर्थः स्पष्टः । अत्र द्वितीयेत्यादि । द्वितीयमित्रशब्द आश्वस्तत्वे शत्रुशब्दो नियन्त्रणत्वे अनुकम्प्यशब्दः स्नेहपात्रत्वे सङ्क्रमितवाच्य इत्यर्थः । नायकस्य दृढप्रकृतित्वं व्यङ्ग्यमुपादानलक्षणायाः फलमिति भावः ।

ननु 'त्वामस्मि वच्मि' इति वाक्यप्रकाश्ये पूर्वमुदाहृतम्, तस्मादस्य पदप्रकाश्यस्य को भेद इति चेत्, न, अनवबोधात् । तद्धि प्रत्येकपदव्यङ्ग्यभिन्नं समस्तवाक्यव्यङ्ग्यं तस्मादत्र सावधानेन भाव्यमित्येवंरूपं यत्तत्पदम् । इदन्तु केवलमित्रादिपदव्यङ्ग्याभिप्रायमिति ।

## विवरणम्

अपिरुक्तसमुच्चयार्थक इत्याह—अपिशब्दादिति ।

नन्वलक्ष्यक्रमस्य रसादेः पदव्यङ्ग्यत्वं न सम्भवति, तस्य विभावानुभावव्यभिचारिपरामर्षप्रभवत्वात्, तेषां चैकपदेनोपस्थापयितुमशक्यत्वादत आह—एकावयवेत्यादि । पदद्योत्येन एकपदार्थध्वननप्रत्यायितेन । व्यङ्ग्येन व्यभिचारिभावेन । वाक्यद्योत्या भारती रसादिस्वरूपा । तथा च—रसोपकारिणो व्यभिचार्यादेः प्रत्यायनमेव रसादेः पदवृत्तित्वमिति भावः ।

क्रमेण अर्थान्तरसङ्क्रमितवाच्यादिक्रमेण ।

अत्रेति । आश्वासस्तज्जनितानिष्टशङ्काविरहः, नियन्त्रणं 'वशीभूतत्वम्, स्नेहस्तत्सुखेच्छा, अनुकम्पा तु तद्दुःखहानेच्छा मुख्योऽर्थः । अत्र लक्ष्याणां धर्माणामतिशयो व्यङ्ग्यः । 'त्वामस्मि वच्मि' इत्यादौ वच्मीति क्रियापदस्योपदेशे, अस्मीति कर्तृकारकपदस्य हितैषिणि, त्वामिति कर्मपदस्यानुशासनीये लक्षणेति कारके च क्रियायां चाजहत्स्वार्थलक्षणासत्त्वात् कारकान्वितक्रियारूपवाक्यस्यैव व्यञ्जकत्वम् । इह तु जीवतिक्रियाया लक्षकत्वेऽपि तत्कारकपदं न लक्षकमिति पदवृत्त्येवेदमिति भावः ।

**खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम्।**
**हिअअवअस्सवहुमआ ण हु ववसाआ विमु-**
**ज्झन्ति ।।७४ ।।(२)**

अत्र विमुह्यन्तीति ।

---

**सङ्केतः**

हिअअ इति । हृदयमेव वयस्यः, तस्य बहुमताः । अत्र विमोहस्य चेतनधर्मत्वात् विमुह्यन्तीति पदं बाधितस्वार्थं, चेतनगतास्खलितत्वादिसादृश्यात् व्यवसायान् लक्षयत् आरब्धकार्यनिर्वहणादि ध्वनयति । इयं गौणी लक्षणा, अत्यन्ततिरस्कृतभेदश्च ।

**सङ्केतः (रुय्यकः)**

**खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्।**
**हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ।।**

अत्राकार्यराहित्यप्रकर्षो ध्वन्यते । युक्ततेति । भयस्य कृत्रिमत्वप्रकाशनात् । भुक्तिः कान्तोपभोगोऽपि, मुक्तिरुद्वेगादव्यापारादपि । एकान्तः संकेतस्थानमपि । सतः सुन्दरस्यागमनं शोभन आगमश्च । अत्रार्थयोर्वैसादृश्यान्नोपमा । क्षणदा रात्रिः, अक्षणोऽनुत्सवः । अवनं रक्षणहेतुः । अवीनां मेषाणामसनं चारणमव्यसनम् ।

**बालचित्तानुरञ्जनी**

अनुपपद्यमानार्थान्तरतिरस्कृतवाच्यपद्योदाहरणमाह खलेति । हिअअवअस्स बहुमआ हृदयवयस्यबहुमता यद्यपि खलव्यवहाराः दारुणाः, दीसन्ति दृश्यन्ते । तहवि तथापि, धीराणां बहुमआ बहुमताः ववसाआ व्यवसायाः ण(न)हु खलु, विमुज्झन्ति विमुह्यन्ति । अत्र व्यञ्जकं पदमाह अत्रेति । व्यञ्जकमिति शेषः । मुह्यतीत्येतत्पदं व्यवसायानामचेतनत्वेनासंभवात् स्वार्थबाधितमोहात्मकं मुख्यार्थमनुपपद्यमानत्वादेवात्यन्ततिरस्कृतवाच्यं कार्यकारणभावसंबन्धादप्रवृत्तिं लक्षयत् अभिमतकार्यकारित्वादिप्रारब्धनिबर्हणादि धर्मान्तरं व्यनक्तीति भावः ।

**काव्यादर्शः**

'हृदयवयस्यबहुमता न व्यवसाया विमुह्यन्ति ।' विमुह्यन्तीति व्यवसायानामचेतनत्वेन एतत्पदमसंभवत्स्वार्थं बाधितमोहात्मकमुख्यार्थमनुपपद्यमानत्वादेव अत्यन्ततिरस्कृतवाच्यं विसंस्थुलत्वादिभवनसादृश्याद् व्यवसायांल्लक्ष्यत् प्रेक्ष्यपूर्वकारित्वादिधर्मान्तरं ध्वनति । प्रसिद्धं चैतल्लक्ष्येषु, यथा वाल्मीकेर्हेमन्तवर्णने रामस्यौक्तौ—

रविसंक्रान्तसौभाग्यस्तुषाराविलमण्डलः।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशति॥

'अन्धः' इति उपसंहतदृष्टिः। ननु, जन्मान्धस्य दृष्ट्युपसंहारो नास्ति। नैवम्, जातान्धस्यापि गर्भे दृष्ट्युपघातात्। ततोऽन्धशब्दो बाधितमुख्यार्थोऽनुपपद्यमानत्वाद् अत्यन्ततिरस्कृतवाच्योऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं सादृश्यं निमित्तीकृत्यादर्शं लक्षयन्नसाधारणविच्छायित्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति। 'अन्धोऽयं पुरोऽपि न पश्यति' इत्यत्र तु अस्ति तिरस्कारो, न त्वत्यन्तम्। इह तु आदर्शस्य आन्ध्यमारोप्यमाणमपि न सह्यम्।

## विवेकः

खलेत्यादि खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्। हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति॥ व्यवसायानामचेतनानां विमोहनकर्तृत्वं योग्यताविरहादनुपपद्यमानमिति विमुह्यन्तीति पदमत्यन्ततिरस्कृतवाच्यं सद्धीराणां नित्योद्योगित्वेऽनन्यसामान्यमुत्साहप्रकर्षं प्रकाशयति।

## दीपिका

दारुणाः श्रेयःप्रतिबन्धकाः। हृदयमेव वयस्यः सखा, तेन बहुमता अनुमोदिताः। विमुह्यन्तीति—अत्र विमोहश्चांशमात्रेणान्वयानुपयुक्तोऽत्यन्ततिरस्कृतः।

## साहित्यचूडामणिः

खलेति।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति॥

हृदयमेव वयस्यः सुहृत्। मोहो हि न सर्वेषां यावदनधिगतपरमार्थानां तत्रापि केषाञ्चिदेवेति, व्यवसायसम्बन्धिनो विमुह्यतेरत्यन्ततिरस्कारः। न खल्वत्रानुपयुक्तिमात्रं यावदनुपपत्तिरेव। ततश्चासम्यक्त्वं लक्ष्यते। सामान्यविशेषभावः सम्बन्धः असम्यग्ज्ञानविशेषत्वाद् विमोहस्य। व्यवसितकार्यनिर्वहणं व्यङ्ग्यम्।

## सम्प्रदायप्रकाशिनी

खलववहारेति।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति॥

धीरेषु व्यवस्यत्सु खलानां व्यवहारा यद्यपि तद्व्यवसायदूषणपरतया लोके वर्धन्ते तथापि तेषां ते व्यवसाया न विमुह्यन्ति न व्याकुलीभवन्ति। अविमोहेन फलादप्रच्यावो व्यज्यते। दारुणं खलेषु दूषयत्स्वपि स्वेन हृदयेन वयस्यैश्च बहुमतत्वमविमोहने हेतुः।

अत्र पदप्रकाश्यमत्यन्ततिरस्कृतवाच्यं दर्शयति अत्र विमुह्यन्तीति ।

### मधुमती

अत्रेति । आकुञ्चितप्रवृत्तिः लक्ष्यते । कार्यकारणभावो सम्बन्धः । तन्निषेधेन अभिमतकारित्वं व्यज्यते ।

### विस्तारिका

अत्यन्ततिरस्कृतवाच्याया आह—खलेत्यादि ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

दारुणाः प्राणानामपि द्वेषकाः, हृदयमेव वयस्यः, सदर्थग्राहकत्वात् ।

अत्रेत्यादि । मोहस्य चेतनधर्मस्य व्यवसायेषु बाधात् विमुह्यन्तीति त्यागाभावे लक्षणामाह । अत्र मोहपदेन स्थगितत्वे लक्षणया धीराणां सदाशयत्वं व्यज्यते इत्यत्यन्ततिरस्कारः । अत्र व्यवसाया इति बहुवचनेन प्रकाशितस्य महाशयत्वस्य भावप्रकर्षकत्वम् सर्वत्रैवमवधेयम् ।

### सारबोधिनी

खलेत्यादि ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।
हृदयवयस्य बहुमता न खलु व्यवसाया विमुह्यन्ति ॥

हृदयस्य वयस्यता सदर्थग्राहकत्वात् । तेन बहुमताः अनुमोदिताः । अत्राचेतनस्य व्यवसायस्य मुख्यार्थान्वयो बाधित इति स्थगितत्वं लक्ष्यते । अभिमतकार्यकारित्वं च व्यज्यते ।

### काव्यप्रदीपः

अत्यन्ततिरस्कृतवाच्यं यथा—

'खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअअवअस्सबहुमआ ण हु ववसाआ विमुज्झन्ति ॥'

अत्र विमोहेनाप्रवृत्तिर्लक्ष्यते । नच तत्र वाच्यस्य कथमपि प्रवेशः । इष्टकार्यकारित्वं व्यङ्ग्यम् । यद्यपि व्यवसाये विमोहाभावो नान्वयायोग्य इति कुतो लक्षणा, तथापि धीराणामधीरेभ्यो वैलक्षण्यं प्रतिपाद्यम् । नच तल्लक्षणां विना संभवति । अधीरव्यवसायेऽपि मोहाभावादित्यवश्यं लक्षणा स्वीकार्या ।

### आदर्शः

अत्यन्ततिरस्कृतवाच्यलाक्षणिकपदव्यङ्ग्यमाह—खलेति ।

**खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथाऽपि धीराणाम्।**
**हृदयवयस्यबहुमता न हि व्यवसाया विमुह्यन्ति॥** इति संस्कृतम्।

कृतसङ्केतनायकानागमनोत्कण्ठिताया नायिकाया स्वहृदयाश्वासनमिदम्। न हि विमुह्यन्ति न हि विपरीता भवन्ति। अत्रेति, विमुह्यन्तीति पदम् अत्यन्ततिरस्कृतवाच्यलाक्षणिकमित्यर्थः। प्राणिधर्मस्य विमोहस्य व्यवसाये बाधेन विपरीतलक्षणया अत्यन्ततिरस्कृतत्वात्। तथा च खला एव विपरीतव्यवसाया न तु धीरा इति वाक्यार्थे धीराणां महत्त्वं व्यङ्ग्यं तच्च महावाक्यव्यङ्ग्यस्य उपनायकविषयशृङ्गाररसाभासस्य प्रकर्षकम्, धीरे तस्मिन् महत्त्वेन रत्यतिशयात्। उपकृतं बहु तत्रेत्यादौ तु लाक्षणिकपदानामेकवाक्यत्वेनैव व्यञ्जकत्वं बोध्यम्। विमुह्यन्तीत्यत्र व्युपसर्गेण समासाभावेऽपि पदत्वमुपपादितमेव प्राक्।

## सुधासागरः

क्रमप्राप्तमत्यन्ततिरस्कृतवाच्यमुदाहरति—खलेत्यादि। मुखविपुला छन्दः।

**खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्।**
**हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति॥**

इति संस्कृतम्। अयमर्थः। यद्यपि खलानां धूर्तानामधीराणामिति यावत्, व्यवहाराश्चरितानि, दारुणा दुःखदाः अन्येष्टप्रतिबन्धका इति यावत्, दृश्यन्ते प्रसिद्धा इति भावः, तथापि धीराणां महतां हृदयस्य वयस्याः सदर्थग्राहकत्वात् स्निग्धास्ते च ते बहुमताः शिष्टसम्मताः व्यवसाया विचाराः खलु न विमुह्यन्ति। खलानां दारुणा व्यवहारा इति जानन्तोऽपि धीरास्तेषामप्युपकारमेव कुर्वन्तीत्याशयः।

अत्र विमोहेनाप्रवृत्तिर्लक्ष्यते। न च तत्र वाच्यस्य कथमपि प्रवेशः। इष्टकार्यकारित्वं व्यङ्ग्यं लक्षितलक्षणाफलम्। यद्यपि, व्यवसाये विमोहाभावो नान्वयायोग्य इति कुतो लक्षणा, तथापि धीराणामधीरेभ्यो वैलक्षण्यं प्रतिपाद्यम्। न च लक्षणां विना तत् सम्भवति अधीरव्यवसायेऽपि मोहाभावादित्यवश्यं लक्षणा स्वीकार्येति। तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्र विमुह्यन्तीति।

## विवरणम्

पदव्यङ्ग्यमत्यन्ततिरस्कृतवाच्यकध्वनिमुदाहरति—खलव्ववहारा इति।

**"खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम्।**
**हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति॥"**

इति च्छाया।

इतीति। अत्यन्ततिरस्कृतवाच्यकमिति शेषः। विमोहस्य प्राणिधर्मस्य व्यवसायेष्वसम्भवाद् विमुह्यतेर्विघ्नोपघातो लक्ष्यः, फलानुपधानं व्यङ्ग्यमिति। यद्यपि विमुह्यन्तीति नैकं पदम्, उपसर्गस्य पृथक्पदत्वात्, तथापि नेयं लक्षणा क्रियाकारकसमुदायस्वरूपवाक्यवृत्तिः, उपसर्गस्याकारकत्वादिति। एवमेव 'न चलति' इत्यादिसमुदायव्यञ्जनाऽप्यग्रेतनी न वाक्यवृत्तिरित्यवसेयम्।

**लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।**
**तदा सुधास्पदमभूदधुना तु ज्वरो महान् ।। ७५ ।।**

**अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते ।**

---

### सङ्केतः

अलक्ष्यक्रमं भेदं वृत्तद्वयेनाह—लावण्यमिति । अत्र अनुभवैकगोचराः तदादिस्मारिताः विभ्रमरूपाः अर्थाः रसं व्यञ्जयन्ति । स्मरणोल्लिखितं तल्लावण्यादि सातिशयं रसस्य विभावतां याति इति भावः । तदा सम्भोगे । अधुना विरहे । ज्वरोपमं सन्तापहेतुत्वात् । 'ज्वरो महान्' इति वा पाठः ।

### बालचित्तानुरञ्जनी

विवक्षितान्यपरवाच्यस्यासंलक्ष्यक्रमव्यङ्ग्यस्य रसस्योदाहरणमाह लावण्यमिति । तत् आह्लादकारि लावण्यं करचरणाद्यवयवातिरिक्तं धर्मान्तरं, सकलशरीराधायिका कान्तिः शरीरशोभा । तद्वत् सोऽप्यगोचररूपं सः, पूर्वकर्मः वचनपरिपाटी, तदा संभोगसमये अमृतोपमम् । अधुना विरहावस्थायां क्रूरोपमम् । अत्र पदप्रकाश्यमाह अत्रेति । तदसौ इत्यादिपदानि आह्लादकारित्व दृश्यातिमात्रशरीराणि व्यापकत्वादीणि अर्थान्तरागि व्यञ्जयन्तीत्यर्थः । यद्यपि वाक्येन विप्रलम्भरसस्य प्रतीतिः तथापि घटादिपदद्योत्याह्लादकारित्वादिविशिष्टस्यैव लावण्यादेरनुभवत्वमिति रसस्यापि पदप्रकाश्यत्वमविरुद्धम् । अत एव विशिष्टलावण्याद्यनुभावप्रतीतिसमय एव रसस्यापि प्रतीतिरित्यसंलक्ष्यक्रमत्वम् विरुद्धम् ।

अलक्ष्यक्रममुदाहरति लावण्यमिति । लावण्यादयोऽनुभवैकगोचरा न तु निर्वक्तुं शक्या इति । अत्र तदादीनां बुद्धिविषयतावच्छेदकादिप्रकारेण शक्त्युपगमे लावण्याद्यतिशयो व्यङ्ग्यः । अत्र विप्रलम्भप्रतीतेर्विभावादिसामग्रीसत्त्वेऽपि तदादिपदानां प्राधान्यमिति पदव्यञ्जकता ।

### काव्यादर्शः

विवक्षितान्यपरवाच्यस्यालक्ष्यक्रमव्यङ्ग्यो यथा 'लावण्यम्' इति । लावण्यं संस्थानमुग्धिमा, अवयवव्यतिरिक्तं धर्मान्तरमेव । कान्तिः प्रभा । तदाह्लादकारि लावण्यम् । असावपि आप्यायिका कान्तिः । तद्रूपं वचसोऽप्यगोचरम् । स वचः क्रमः सातिशयविभ्रमैकास्पदमिति लावण्यादिगतस्वसंवेद्यानन्तगुणगणस्मारकाणि तदादिपदानि सातिशयविप्रलम्भावेगविभावतां व्यञ्जन्ति । यद्यपि सर्वेणानेन वाक्येन विप्रलम्भरसो व्यज्यते, तथापि स्मरणोल्लिखितं तल्लावण्यादि सातिशयं विभावत्वमेतीति पदप्रकाशता ।

### विवेकः

यद्यपि विभावादिसंयोगाद्रसनिष्पत्तिरित्युक्तं बहुशस्तथापि ते विभावादयो यदा विशिष्टेन केनापि पदेनार्प्यमाणे रसचमत्कारकारिणो भवन्ति तदा पदस्यैवासौ महिमेति व्यवह्रियत इत्यभिप्रेत्यालक्ष्यक्रमो रसादि-

ध्वनिर्यः सोऽपि पदे द्योतके भाति प्रकाशत इति । उदाहरति लावण्यमित्यादि । समुदायगामिधर्मान्तरं लावण्यं सौन्दर्यमित्यर्थः । कान्तिरुज्ज्वलता । पृथक्पृथगवयवाश्रितं रामणीयकं रूपम् । तच्छब्दसमानार्थश्चादःशब्दः । हृदयनिहितार्थस्मरणवशात् प्रत्यक्षभाविताम् कान्ति कृत्वेयमुक्तिः । ये पूर्वं लावण्यादयो रतिविभावतामालम्बते स्म त एव विप्रयुक्ताः सन्तो विप्रलम्भमुज्जृम्भयन्तीति स्थितम् । तदित्यादिना सर्वनाम्ना लावण्यादिगततत्कालसुलभसंवेद्याव्यपदेश्यानन्तलोकोत्तररूपतास्मरणोद्दीपनाद्विप्रलम्भः परां काष्ठामानीयत इति तदादिसर्वनामपदानां रसमयत्वं सहृदयानां स्वसंवेदनसिद्धं स्फुटमेवेति ।

---

## दीपिका

सर्वावयवगतो विदग्धनयनोत्सवसेतुः कोऽप्यतिशयो लावण्यं, प्रत्येकमवयवानां संस्थानसौभाग्यं कान्तिः । अनुभवैकगोचरास्तत्कालचमत्कारकारिणो निर्वक्तुमशक्या अर्थाः सर्वस्वव्ययप्राणपातादिभिरपि प्रार्थनीयाः । अत्र च विभावादिसामग्रीसाध्यामपि रसप्रतीतौ 'तदा' दिपदबोध्यतद्विशेषाणामेव प्राधान्यमनुभूयत इति पदप्राधान्यमन्वयव्यतिरेकगम्यम् ।

## साहित्यचूडामणिः

लावण्यमिति । तदा सम्भोगसमये । अधुना विप्रलम्भवेलायाम् । ज्वरो महानिति साध्यवसाना तदादीत्यदसः स्वीकारः ।

## सम्प्रदायप्रकाशिनी

एवं लक्षणामूलौ पदप्रकाश्यतयोदाहृत्यासंलक्ष्यक्रममुदाहरति—लावण्यं तदसावित्यादि । तल्लावण्यमसौ कान्तिस्तद्रूपं स वचःक्रमः तदा तत्सन्निधावानन्दहेतुः अधुना तु तद्विरहे ज्वरायत इत्यत्र तदादिभिः सर्वनामपदैरनुभवैकगोचराः प्रतीतिविशेषाः प्रथन्ते । अतः पदप्रकाश्या असंलक्ष्यक्रमध्वनयोऽमी ।

## मधुमती

अत्रेति । प्रकाश्यन्ते । एवं च तत् इतिपदेन प्राधान्येन सम्भोगविप्रलम्भशृङ्गारः व्यज्यते ।

## विस्तारिका

अलक्ष्यक्रमव्यङ्ग्यमाह—लावण्यमित्यादि । अवयवानां प्रत्येकमकृत्रिममनोहारित्वम् । लावण्यरूपनिष्ठोऽनुभावकत्वातिशयः कान्तिः । अनुभवस्मरणाभ्यां सुधाऽऽस्वादत्वज्वरत्वे । तदादीत्यादिपदादसाविति ।

तदिति । तदादिपदानां परिग्रहः । अनुभवैकगोचरा, न तु निर्वक्तुं शक्या । अस्य व्यङ्ग्यस्य विप्रलम्भे प्रकर्षकत्वम्, नालक्ष्यक्रमत्वम्, तन्मुखेनैव विप्रलम्भस्य सहृदयहृदयोदयत्वात् । तदादीनां बुद्धिविषयताऽवच्छेदकप्रकारेण शक्तौ लावण्यातिशये व्यङ्ग्यः ।

अत्र तदादिपदानामन्वयव्यतिरेकाभ्यां तन्मूलता । ननु 'तदा सुधाऽस्पदमभूत्' इत्यादिवाक्यसहकारेणैव तदादिपदानां विवृतार्थव्यञ्जकत्वम्, अन्यथाप्रसिद्धिपरामर्शकत्वमपि स्यात् । ततश्च वाक्यस्यैव व्यञ्जकत्वानुप्रवेशः, न पदानामित्याह—यथा वेति ।

## काव्यप्रदीपः

अलक्ष्यक्रमव्यङ्ग्यं यथा—

**'लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।**
**तदा सुधास्पदमभूदधुना तु ज्वरो महान्॥'**

अवयवस्य संस्थानसौष्ठवं रूपम् । अवयविनस्तदेव लावण्यम् । कान्तिरुज्वलता । अत्र विप्रलम्भार्थे वाक्येऽनुभवैकगोचरमर्थं प्रकाशयतां तत्पदादीनां प्राधान्यम् । एवमग्रेऽपि । न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किं त्वन्येषामपि ।

## आदर्शः

असंलक्ष्यक्रमं पदप्रकाश्यमाह—लावण्यं तदिति । अत्रेति, प्रकाश्यन्ते शक्त्यैवेति शेषः तदादीनां तथैव शक्तेः, तद्व्यङ्ग्यश्चात्र महावाक्यव्यङ्ग्यविप्रलम्भनिष्ठःप्रकर्ष एव पूर्वानुभूतसुखहेतुस्मरणे विप्रलम्भप्रकर्षात् तस्य तत्प्रकर्षकत्वञ्च उपपादितमेव प्राक् तदादीनाञ्चात्र प्रत्येकैकवाक्यस्थत्वात् पदत्वमेव । न च तदा सुधास्पदमभूदित्यत्रैव सर्वेषामन्वयाद् वाक्यत्वेनैव व्यञ्जकत्वमिति वाच्यं तल्लावण्यमित्यनेनैव पूर्वानुभूतज्ञाने विप्रलम्भप्रकर्षोदयेन तादृशपदेन तद्व्यञ्जने सुधास्पदमित्यत्रान्वयस्यानपेक्षणीयत्वात् । अत्र च अनुभवैकेत्यादिना व्यङ्ग्यप्रदर्शनमेव कृतं घटत्वादिनैव तदादीनां शक्तेरिति केचिद्व्याचक्षते तन्न, अनुभवैकगोचरत्वस्य वस्तुरूपत्वेन तद्व्यञ्जनायां असंलक्ष्यक्रमव्यञ्जकत्वोदाहरणानुपपत्तेः स इत्युक्ते बोद्धुरननुभूतार्थस्य अनुभूतलुप्तसंस्कारस्यार्थस्य वा घटत्वादिना बोधाभावाच्च ।

## सुधासागरः

अलक्ष्यक्रमव्यङ्ग्यमुदाहरति—लावण्यमित्यादिना। कस्यचिद् वियोगिनः परामर्शोऽयम् । अवयवस्य संस्थानसौष्ठवं रूपम् । अवयविनस्तदेव लावण्यम् । कान्तिरुज्वलता । स्पष्टमन्यत् । अत्र विप्रलम्भार्थे वाक्येऽनुभवैकगोचरमर्थं प्रकाशयतां तत्पदानां प्राधान्यम् । एवमग्रेऽपि पदप्राधान्यं द्रष्टव्यम् । तदेतद्वृत्तिकृदाह—अत्र तदादीत्यादि ।

## विवरणम्

पदवृत्तिरसध्वनिमुदाहरति—लावण्यमित्यादि । अत्रेत्यादि । अनुभूतार्थकेन तच्छब्देनातीतानुभवविषयोऽर्थः शक्त्यैव प्रत्याय्यते, साम्प्रतिकी स्मृतिस्तु व्यज्यते । तेन स्मृतिव्यभिचारिभावेन विप्रयोगो व्यज्यत इति भावः । अत्र बहुषु तच्छब्देषु स्मरणव्यञ्जकत्वेऽपि क्रियाया न तथात्वमिति न वाक्यवृत्तिरियं व्यञ्जनेति ध्येयम् ।

**यथा वा**

**मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते**
**मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि।**
**सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना**
**नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ ७६ ॥ [३]**

अत्र भीताननेति । एतेन हि नीचैःशंसनविधानस्य युक्तता गम्यते ।

भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते ।

---

### सङ्केतः

मुग्धे ! इति । धृतिः धरणं, संवननमिति यावत् । प्रतिबोधिता प्रतिकूलं मानादिकारणं ज्ञापिता । भीतानना ससम्भ्रमं भ्रमितानना । भयकार्यस्य नेत्रभ्रमसङ्कोचशोषाधोभावसम्भ्रमवैवर्ण्यादेः मुखे दर्शनात् तदेवं भीतत्वमुक्तम् । नीचैः शंस, न तु मौनं कुरु । 'मौनं कुरु' इत्युक्ते—सखी मनसि दूयते—अहं किमिति निषिद्धा ? इति । तां प्रति तस्याः प्रीत्यभावः उक्तः स्यात् । प्रियश्च शङ्कते—'यदेषा निषिद्धा, तत् आभ्यां मन्ये किमपि विरुद्धं पर्यालोच्यते' इति । एतेन हीति । भयस्य अकृत्रिमत्वदर्शनेनेत्यर्थः । एतद्दृष्टान्तद्वये रसस्य पदप्रकाश्यत्वं उक्तम् । एकत्र तदादीति शब्दैक्ये पदत्वमुक्तम्, अन्यत्र तु भीताननेति शब्दद्वयैक्ये पदत्वम् । अत एव यथा वा इत्युक्तम् । भावादयस्तु वाक्यप्रकाश्यत्वे एव वैचित्र्यभाजः इत्याह—भावादीनामिति ।

### बालचित्तानुरञ्जनी

अस्यैवोदाहरणान्तरमाह । यथा-हे मुग्धे त्वया मुग्धतया बाल्यदुर्ललितेनैव सकलः कालवाहि किमारभ्यते ? तदृष्ट्या कारणं विनापि मानं धारय । धैर्यं स्थापय । अत्र प्रेयसि ऋजुतां दूरे कुरु । एवं सख्या प्रतिबोधिता नायिका भीतानना सती तां सखीं प्रति वचनमाह किमिति । ननु सखि नीचैः कथय । हि यस्मात् हृदि स्थितः प्राणेश्वरः श्रोष्यति ।

अत्र पदप्रकाशमाह अत्रेति । भयकार्यस्य नेत्र भ्रमसङ्कोचशोषाधोनयनभ्रमवैवर्ण्यादिर्मुखे दर्शनान्मुखमेव भीतमित्युक्तम् । अत एवैतत्पदत्रयस्याकृतिमत्वप्रकाशनात् नीचैः शंसनविधानस्य युक्तत्वं व्यञ्जकम् । तत्तु असंलक्ष्यक्रमपदप्रकाश्यम् । भावतदाभासादीनामुदाहरणानि वाच्यानीत्यत आह भावादीनामिति वाक्य प्रकाश्यानामपि भावादीनां रसापेक्षया निकृष्टचमत्कारत्वम् । पदप्रकाश्यानां तु ततोऽपि निकृष्ट चमत्कारत्वमिति भावः ।

## काव्यादर्शः

भीताननेति पदं व्यञ्जकम् । युक्ततेति भयस्य अकृत्रिमत्वप्रकाशनात् । भावादीनामिति भावतदाभासभावशान्तिभावोदयादीनाम् ।

## विवेकः

न केवल तदादिसर्वनामपदानामेव रसद्योतकत्वं किन्त्वन्येषामपीत्युदाहरणान्तरं दर्शयति—यथा वेति । मुग्ध इत्यादि । बधान ऋजुतामिति ऋत्यकः (पा. ६ ।१ ।१२८) इति प्रकृतिभावात् । युक्ततेति भयस्य कृत्रिमत्वप्रकाशनात् ।

## दीपिका

सर्वनामपदानामेवासाधारण्येन रसपोषकता नान्येषामिति भ्रमं निरस्यति—यथा वेति । धृतिर्धैर्यं, बधान गृहाण, ऋजुतां सततप्रसन्नताम् । युक्तेति—भयस्याकृत्रिमयतया मौग्ध्यातिशयप्रकटनेन रागवत्त्वदार्ढ्यं प्रत्ययाच्चमत्कारोत्कर्ष इति भावः । अधिकं न वैचित्र्यमिति—रसध्वनिस्थले तावत्प्रायशो व्यभिचारिणां पदप्रकाश्यत्वम्, एवं व्यभिचारिप्राधान्ये । दैवतादिरत्यादि रसाभासादीनाञ्च पदप्रकाश्यत्वं रससाधारणमेवेति तदुदाहृतिसजातीयास्तदुदाहृतयोऽप्याकरसुलभा इति न पृथक् दर्शिता इत्यर्थः ।

## साहित्यचूडामणिः

मुग्धे इति । भीताननेत्येतत् प्राधान्येन रसद्योतकपदम् । तदेवोपपादयति—एतेनेति । प्राणेश्वरस्य स्वहृदयावस्थानद्योतकेन । युक्तता औचित्यम् । नन्वलक्षक्रमो रस इव भावादिरपि पदप्रकाश्यतायामुदाहार्य इत्यत्राह—भावादीनामिति । अधिकं वाक्यप्रकाश्यत्वातिरिक्तं न वैचित्र्यम् । ग्रन्थगौरवचाकित्येन न तदुदाह्रियते विदग्धैः स्वयमुन्नेयमिति यावत् । यथा—एवंवादिनि देवर्षावित्यत्र लज्जायां व्यज्यमानायामधोमुखीति पदम् ।

## सम्प्रदायप्रकाशिनी

मुग्धे मुग्धतयेति । इदं भीताननेत्यसर्वनामपदप्रकाश्यतयोदाहरणम् ।

भावादीनामिति । भावरसाभासभावाभासादयो हि वाक्यप्रकाश्यतायामपि रसापेक्षया निकृष्टचमत्कारा इति पदप्रकाश्यत्वमेषां नोदाह्रियत इति भावः ।

## मधुमती

मुग्धे ! इति । बधान ऋजुतां इत्यत्र 'ऋत्यकः' इति प्रकृतिभावः । भीतानना भीत्युन्नायकचेष्टाविशिष्टानना । अत्रेति । यद्यपि—नीचैः शंसनविधानस्य युक्तता वस्तुरूपा । न च तस्याः अलक्ष्यक्रमत्वं इति तत्प्रकरणे तद्व्यङ्ग्यत्वं उदाहर्तुं नोचितम् । तथापि तया विप्रलम्भशृङ्गारः अनुरणनन्यायेन व्यज्यते । तदानीं अन्यहेतुकभयस्य अभावात्—इति ।

## विस्तारिका

वस्तुतस्तु विप्रलम्भसम्भोगभेदेन पूर्वापरमतयोर्भेदत्वात् 'यथा वा' इत्युक्तम् ।

मुग्धे उपदेशग्राहिणी । एवकारोऽयोगव्यवच्छेदार्थः । अखिलोऽतीतो वर्तमानो भविष्यश्च । आरम्भेणोत्साहातिशयः । धत्स्व बलाद् धारय । बधानेति बन्धनेनापसरणाशक्यताप्रतीतिर्वीप्सायां मुहुर्मुहुर्बोधिता । प्रतिकूलं वचनं प्रतिवचः ।

अत्रेति । नीचैः शंसनस्य विधानमप्राप्तप्रापकत्वं हि प्रत्ययप्रतिपाद्यम् । भीतं भयाज्जन्यं विच्छायं वैक्लव्यवदाननं यस्याः । प्रवर्तनाया अनाहार्यत्वेन युक्तत्वम्, तच्च तनुगतविच्छायत्वलक्षितभयगम्यमित्याह—भीताननेत्यनेनेत्यादि । भयप्रतिपाद्याकृत्रिमानुरागेण सम्भोगः प्रकृष्यत इति तस्य भीताननपदमूलता ।

भावादीनामित्यादि । रसापेक्षया अपकृष्टानाममीषां पदव्यङ्ग्यत्वे रसवन्न वैचित्र्यमित्याह—नाधिकमिति । पदप्रकाश्यत्वे इति—पदात् प्रकाशो यस्येति विग्रहः ।

## सारबोधिनी

संभोगेऽप्युदाहरति यथा वेति । मुग्धे उपदेशग्राहिणि । बधानेति बन्धनेनापसारणाशक्यता व्यज्यते नीचैरिति । नीचैः शंसनस्य विधानमप्राप्तप्रापणं हि प्रत्ययप्रतिपाद्यं भीतं भयजन्यविच्छायातियुक्तमाननं यस्याः, प्रवर्तनाया अनाहार्यत्वेन युक्तत्वम् । तच्चाननगतविच्छायत्वलक्षितभयगम्यमित्याह भीताननेति । भयप्रतिपाद्यकृत्रिमानुरागेण संभोगः प्रकृष्यत इति तस्य प्राधान्येन भीताननपदमूलता ।

## काव्यप्रदीपः

यथा

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते<br>
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि ।<br>
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना<br>
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥

अत्र भीताननेतिपदं नीचैः शंसनविधानस्य योग्यतां प्रकाशयत्प्राधान्येन रागातिशयं व्यञ्जयति ।

भावादीनां तु वाक्येऽपि न तादृशं चारुत्वम् । पदप्रकाश्यत्वे सुतराम् । अतस्तत्प्रभेदा नोदाह्रियन्ते ।

## आदर्शः

विप्रलम्भमुदाहृत्य सम्भोगेऽप्युदाहरति—यथा वा मुग्धे इति । पत्यावक्रभावा सखी वक्रभावाचरणायाद्रियन्त्याः सख्या उक्तिः पूर्वार्द्धं मुग्धे मुग्धतयेत्यादिकम् । सख्या एवं प्रतिबोधिता नायिका भीतानना सती तां सखीं नीचैरित्यादिकं प्रतिवचः प्रत्युत्तरमाहेत्यन्वयः । यद्वा मानं धत्स्वेत्यादि वचः प्रतिवचः, नीचैः शंसेत्याहेत्यर्थः । प्रतिबोधनीयमर्थमाह—मुग्धे इत्यादि । मुग्धे उपदेशाग्राहिणि मुग्धतया यथोचिताचरणमूढतया नेतुमित्यादि । तर्हि

किं करोमीत्यत्राह—मानमित्यादि । धत्स्व गृहाण । बधान बन्दीकुरु, प्रियस्त्वत्तोऽन्यधीनो मा भूरित्यर्थः । ऋजुताम् अवक्रताम् । अत्रेति, नायिकायाः सम्भोगशृङ्गारोऽत्र महावाक्यव्यङ्ग्यः । भीताननेत्यनेन तु तत्प्रकर्षो व्यज्यते तद्-प्रीतिजनकवाक्येन भयात्तदनुसरणात्मिकाया रतेः प्रकर्षलाभात्, अन्यथा नीचैः शंसनाभिधानस्य प्रतारणरूपताया अपि सम्भवात् । तदेवाह—अनेन हीति । 'युक्तता' अनुरागाधीनत्वेन अप्रतारणरूपता । 'शून्यं वासगृहम्' इत्यादौ तु नेदृशं किमपि पदमित्यतो वाक्यमेव तत्र व्यञ्जकम् । भावादीनामिति, भावादीनां प्रकर्षस्येत्यर्थः, भावादीनां महावाक्यव्यङ्ग्यत्वेन पदप्रकाश्यत्वाभावात् । 'नाधिकं' न इतोऽधिकम् । तथाच एतदुदाहरणेनैव तद् गतार्थमिति भावः । चक्रवर्ती तु—अमृततुल्यस्य रसस्य कणाऽप्यास्वाद्या मधुतुल्यस्य भावादेस्तु कणा नाऽऽस्वाद्या, अतो रसकणायामिव भावादिकणायां नाधिकं वैचित्र्यमिति व्याचष्टे, तन्न; रसादिप्रकर्षस्यैव प्रकाश्यत्वात् व्यञ्जकाल्पत्वेन व्यङ्ग्याल्पत्वाभावेन रसादेः कणस्यैवासम्भवाच्च; न हि महाप्रदीपाल्पप्रदीपाभ्यां व्यङ्ग्यत्वेन घटादेर्महत्त्वाल्पत्वे ।

## सुधासागरः

न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किन्त्वन्येषामपीति ध्वनयन् सम्भोगेऽप्युदाहरति—मुग्धे इत्यादि । शार्दूलविक्रीडितं छन्दः । विदितरहस्या काचित् स्वसखीमाह—हे मुग्धे ! उपदेशाग्राहिणि, मुग्धतयैवाविचारेणैवाखिलः कालः सर्वं वयो, नेतुं गमयितुं किमारभ्यते, प्रेयसि भर्त्तरि, मानं धत्स्व, धृतिं बधान, ऋजुतां दूरीकुरु, ऋत्यकः इति प्रकृतिभावः, सख्या वयस्यया एवमुक्तप्रकारेण प्रतिबोधितोपदिष्टा काचिदकृत्रिमानुरागा नायिका भीतानना सती प्रतिवचः उत्तरं तां सखीं प्रत्याह नीचैः शंस मन्दमुच्चारय, ननु हृदि संस्थितोऽतिसंन्निकृष्टो हि मे प्राणेश्वरः श्रोष्यतीत्यर्थः ।

अत्र भीताननेति पदं नीचैःशंसनविधानयोग्यतां प्रकाशयत् प्राधान्येन रागातिशयं व्यञ्जयति । तदेतदाह वृत्तिकारः—अत्र भीताननेत्यादिना ।

भावादीनामित्यादि । भावादीनां तु वाक्येऽपि न तादृशं चारुत्वं पदप्रकाश्यत्वे सुतरामिति तत्प्रभेदा नोदाहर्तव्या इति भावः ।

## विवरणम्

ननु पूर्वानुभूतविस्मृते वस्तुनि तच्छब्दप्रयोगाभावदधुना स्मर्यमाण एव तच्छब्दार्थ इति न स्मृतिरत्र तदादिपदव्यङ्ग्येत्यत उदाहरणान्तरमाह—यथा वेति । भीताननेत्यत्र भीधातोः कम्पादौ लक्षणा । तेन च नीचैः शंसनस्य यद् विधानं प्रवर्तना, तस्या युक्ततरता, युक्ततरं कारणं स्वविप्रियं प्रियो मा श्रौषीदिति शङ्का व्यज्यते ।

सा च शङ्का शृङ्गाराङ्गम्, "प्रियविप्रियजा शङ्का शृङ्गारे शार्ङ्गिणोदिता" इति स्मरणादित्याह—अत्रेत्यादि । एवञ्च वाक्यव्यङ्ग्यरसोपकारकभावाभिव्यञ्जकत्व (मेव पदस्य रसव्यञ्जकत्व) मिति स्मर्तव्यम् ।

नन्वेवं भावस्यापि पदाभिव्यङ्ग्यत्वं सम्भवत्येव । तथा हि—

**प्रसरति विषयेषु येषु रागः**
**परिणमते विरतेषु तेषु शोकः ।**

**त्वयि रुचिरुचिता नितान्तकान्ते**
**शुचिपरिपाक शुचामगोचरोऽसि ॥**

इत्यत्र परिपाके सर्वनिर्वाणेऽपि तव शौचं भावविकाराणां षण्णामभाव इत्यर्थकेन शुचिपरिपाकेति सम्बोधनपदेन बह्मैव नित्यमिति मतिमभिव्यज्य भगवति भक्तिः परिपुष्यत इति भावादिध्वनेरपि पदधर्मत्वं कुतो नोदाहृतमत आह—भावादीनामिति । अधिकं पदवृत्यलक्ष्यक्रमध्वनित्वरूपोपाधिबहिर्भूतं वैचित्र्यमुपाधिः । तथा चालक्ष्यक्रमत्वेनैव विभजनात् तथाविधो भावोऽपि सङ्गृहीत इति भावः ।

रुधिर विसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।

झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीम ॥ ६६ ॥ [४]

अत्र भीषणीयस्य भीमसेन उपमानम् ।

---

### सङ्केतः

द्विधा शब्दोत्थध्वनौ पदप्रकाश्यत्वमाह—उपमानमिति । प्रकृताप्रकृतयोः भीमशब्दार्थयोः असम्बद्धत्वं मा प्रसाङ्क्षीत् इति न्यायेन तयोः उपमानोपमेयभावः इति उपमा व्यङ्ग्या ।

### बालचित्तानुरञ्जनी

विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यभेदे शब्दशक्तिमूलौ द्वौ भेदो । अलङ्कारध्वनिः वस्तुध्वनिश्चेति । अलङ्कारध्वनेः शब्दशक्तिमूलस्य पदद्योत्यस्योदाहरणमाह रुधिरेति । रक्तसमूहपूतकरवालरुचिरभुजपरिघः रुचिरभ्रूभङ्गविद्धललाटपट्टो नृपभीमो विभाति । व्यङ्ग्यमलङ्कारमाह अत्रेति । भीषयते इति भीमः । इदं पदं प्रकृतायाः शक्तेः सामर्थ्यात् सादृश्यमापादयतीत्युपमालङ्कारो व्यङ्ग्यः ।

### काव्यादर्शः

तस्यैव लक्ष्यक्रमव्यङ्ग्यभेदे शब्दशक्तिमूलौ द्वौ अलंकारवस्तुध्वनी । क्रमाद् यथा 'रुधिर' इति । विटङ्कितं संबद्धम् । 'उपमानम्' इति । भीम इति पदं वर्णनीयसमानाधिकरणतया प्रयुक्तमनुरणनरूपतया प्रकृताप्रकृतयोः साम्यं प्रतिपादयतीति उपमालंकारो व्यङ्ग्यः ।

### विवेकः

शब्दशक्तिमूलो द्विविधः । तद्यथा रुधिरेत्यादि—करालो भयानकः । रुचिरो दीप्तः । भीमपदोपस्थापितयोः प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्प्यत इति शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योपमाऽलङ्कारः । अत्र भीषणीयस्येति—कातरत्रासदायिनः ।

### दीपिका

विसरः क्षारः । अत्र तु ईशार्थनियतेन भीमपदेन स्वशक्त्या वृकोदरार्थे व्यक्ते तयोः सादृश्यसम्भवादुपमा प्रतीयत इति पदशक्तिमूलोऽलङ्कृतिध्वनिः ।

### साहित्यचूडामणिः

रुधिरेति । हे नृप ! त्वं भीमोऽसि भीषणस्योक्तयुक्त्या भयानकस्वभावस्य राज्ञो वृकोदर उपमानम् ।

### सम्प्रदायप्रकाशिनी

अथ शब्दशक्तिमूलानुरणनरूपं ध्वनिद्वयं क्रमेणोदाहरति—रुधिरविसरेति ।

अत्र भीषणस्येति, रुधिरप्रसाधितकरवालत्वादिना । भीमसेन उपमानं भीमपदेन द्योत्यत इति शेषः । अतोऽयं पदप्रकाश्योऽलङ्कारध्वनिः ।

### विस्तारिका

शब्दशक्तिमूलालङ्कारमाह—रुधिरेति । विसरो धारा । उत्कर्षकत्त्वेन प्रसाधम्, मित्रशत्रुविषमभेदेन करवालरुचिरता । परिधा तत्कृतजयलक्ष्मीनिरोधकत्वात् । विटङ्कितस्तदाकाररेखान्वितः । विस्तीर्णत्वात् पट्टता ।

अत्रेति । भीषयतीति भीषणीयः, कर्तर्यनीयः । कृत्यमतोऽन्यत्रापि इति वचनात् । हेतुभये भियोण्यन्तता । भीमसेनः पाण्डवभेदः । विभासीति मध्यमपुरुषान्वयान्न रूपकम्, तत्र विधेयप्राधान्येनैवान्वयात्, अत एव 'मुखचन्द्रो हसति' इत्यत्र हसनस्य रूपके बाधकम्, उपमायां साधकमिति वक्ष्यति ।

### सारबोधिनी

शब्दशक्तिमूलालङ्कारमाह रुधिरेति । बिसरः प्रसरः । विटङ्केति । "कपोतपालिकायां तु विटङ्कं पुनंपुंसकमित्यमरः । भ्रुकुट्यां विटङ्कवदाचरति ललाटपट्टो यस्य तादृक् भृकुट्या विटङ्कित तरङ्गवत् भङ्गिभेदवत्त्वात् । अत्रेति । भीषयतीति भीषणीयः । कर्तरि अनीयर् । कृत्यल्युटोऽन्यत्रापीति वचनात् । भीमो भयङ्कर इति वाच्यः । भीमसेनः पाण्डवभेदो व्यङ्ग्यः । तयोरुपमापि व्यङ्ग्या । विभासीति मध्यमपुरुषान्वयात् न रूपकम् । तत्र विधेयप्राधान्येनैवान्वयात् ।

### काव्यप्रदीपः

लक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदेषु शब्दशक्तिमूलेऽलंकारव्यक्तिर्यथा—

**'रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः ।**
**झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृपभीम ॥'**

अत्र भीमेति भीषणीयार्थेन नृपसंबोधनविशेषणेन भीमसेनोपमा व्यज्यते ।

### आदर्शः

शब्दशक्तिमूलमलङ्कारं पदप्रकाश्यमाह—रुधिरेति । हे नृप भीमः भीषणीय भवान् विभातीत्यन्वयः । "विसरः" क्षरणम्, "प्रसाधितः" मण्डितः, "करालः" भीषणः, "करवालः" खड्गः, "परिघः" मुद्गरः, "विटङ्कितम्" उच्चनीचीकृतम्, "पट्टः" स्फारदेशः । अत्र अनेकार्थकभीमपदसामर्थ्यात् राज्ञि भीमसेनोपमा व्यङ्ग्या वीरत्वं व्यञ्जयन्त्या तया च महावाक्यव्यङ्ग्यस्य राजविषयभावस्य प्रकर्षो व्यङ्ग्य वीरे भावातिशयात् । उल्लास्य कालेत्यादौ तु एकवाक्यस्थानेकपदानां वाक्यत्वेनैव व्यञ्जकत्वम् ।

## सुधासागरः

अथ लक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदेषु शब्दशक्तिमूलेऽलङ्कारव्यक्तिमुदाहरति रुधिरेत्यादि। गीतिश्छन्दः। लक्षणमुक्तम्। हे नृप ! हे भीम भयङ्कर रुधिरस्य विसरः प्रसरस्तेन प्रसाधितः प्रकर्षेणाऽऽरक्तीकृतः अत एव करालो भयङ्करो यः करवालः खड्गस्तेन रुचिरो वीरश्लाघ्यः परिघ इव विपुलो भुजो यस्य स तादृशः, तथा झटिति द्रुतं भ्रुकुट्या विटङ्कितस्तरङ्गितो ललाटपट्टो भालफलको यस्य तथाभूतस्त्वं विभासि शोभसे इत्यर्थः।

अत्र भीमेति भीषणीयार्थेन नृपसम्बोधनविशेषेण भीमसेनोपमा व्यज्यते।

## विवरणम्

पदप्रकाश्यं शब्दशक्त्युत्थालङ्कारध्वनिमुदाहरति—रुधिरेति। विसरः क्षरणम्। परिघो मुद्गरः। विटङ्कित उच्चावचीकृतः।

अत्रेत्यादि। भीषणीयस्य भीमपदेनाभिधया बोधितस्य भीमसेनो व्यञ्जनागम्य उपमानमिति। तथा च भीमसेन इव भीषण इत्युपमालङ्कारोऽभिधामूलव्यञ्जनया पदप्रकाश्य इति भावः। 'उल्लास्य कालकरवाल' इत्यादौ देवपदधारापदादिनानापदवृत्तित्वादभिधामूलव्यञ्जनाया वाक्यगतत्वमेवेति भावः।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥ ७८ ॥ [५]

काचित् संकेतदायिनमेवं मुख्यया वृत्त्या शंसति ।

---

### सङ्केतः

भुक्तीति । भुक्तिः कान्तोपभोगोऽपि । मुक्तिः उद्वेगव्यापारादपि । एकान्तः सङ्केतस्थानं निश्चयश्च । सन् शोभनः आगमः सिद्धान्तः, सतः शुभस्य (सुभगस्य) आगमनं च । मुख्ययेति । प्रकृतेन अर्थेन 'सङ्केतदं काचित् आशंसति' इति वस्तु सदागममुखेन व्यज्यते । अत्र अर्थयोः वैसादृश्यात् न उपमा ।

### बालचित्तानुरञ्जनी

शब्दशक्तिमूलानुरणरूपस्य पदप्रकाश्यस्य वस्तुध्वनेरुदाहरणमाह भुक्तिमुक्तीति । भुक्तिं मुक्तिं च करोतीति भुक्तिमुक्तिकृत् एकान्तेन नियमेन समादेशे उपदेशे तत्परः श्रवणः संश्चासौ, आगमाख्यं वैदिकं शास्त्रं कस्यानन्दप्रवाहं न करोति अपि तु सर्वस्यापि करोतीत्यर्थः । अत्र व्यङ्ग्यमाह क्वचिदिति । सङ्केतदायिनं प्रकरणेन समागमव्याजेन स्तौतीत्यर्थः । तथाहि । सतः कान्तस्यागमनं भुक्तेर्हेतोः मुक्तिं कृन्तति नाशयति । मुक्तिविरह-भुक्तिं च करोतीति नायकोक्ते सङ्केतस्थाने समादेशनमाहतम् । तत्परः स्तुतिरूपं समागमनं पदद्योत्यवस्तुव्यङ्ग्यम् । न चात्रोपमालङ्कारो व्यङ्ग्य इति वाच्यम् । द्वयोरर्थयोर्विसदृशत्वात् ।

### काव्यादर्शः

शब्दशक्तिमूलानुरणनरूपो वस्तुध्वनिः पदप्रकाशो, यथा 'भुक्ति' इति । भुक्तिः कान्तोपभोगोऽपि, मुक्तिरुद्वेगव्यापारादपि । एकान्तः संकेतस्थानमपि । सतः सुन्दरस्य आगमनं शोभन आगमश्च । अत्र काचित् संङ्केतदायिनमेवं मुख्यया वृत्त्या शंसतीति वस्तु सदागमपदेन प्रकाश्यते । अत्र अर्थयोर्वैसादृश्याद् नोपमा ।

### विवेकः

भुक्तिरित्यादि । भुक्तिः कान्तोपभोगोऽपि । मुक्तिरुद्वेगदव्यापारादपि । एकान्तं संकेतस्थानमपि । सतः सुन्दरस्यागम [आगमन] शोभन आगमश्च । मुख्यया वृत्त्येति—प्रकरणनियन्त्रिताया अभिधाया एव व्यञ्जनव्यापारेणोन्मुद्रणादनयोश्चार्थयोर्वैसादृश्यान्नोपमानोपमेयभावः ।

### दीपिका

भुक्तिर्विभवप्राप्तिः, सम्भोगश्च । मुक्तिः कैवल्यं, गृहभवव्यासङ्गपरित्यागसुखश्च । एकान्तं परमार्थरूपं, सङ्केतस्थानञ्च । [सदागमः] सच्छास्त्रं महाभारतादि, सतः सुन्दरस्यागमनञ्च । अत्र प्रकृतयोः सादृश्यादिविवक्षा-

विरहान्नालङ्कारध्वनिः। सादृश्यसम्भवे तु तद्विवक्षायामुपमाध्वनिरेव। वृत्त्या मुख्यप्रकारेण अभिधावृत्तिबोध्यप्राकरणिकार्थेन रहस्यसङ्गोपनार्थम्, एवं विदग्धोक्त्या। अत्र च कस्येत्यादिप्रधानभागस्य शब्दान्वयव्यतिरेकानुविधानविरहान्न वाक्यप्रकाश्यत्वम्। 'पन्थिअ' इत्यादौ तु प्रेक्षणं दर्शनमभिसन्धानञ्च, वसनं विश्रामो नायिकाऽऽगमनप्रतीक्षणञ्चेत्येकैकक्रियाकारकपदव्यङ्ग्यतेत्यभिसन्धाय वाक्यप्रकाश्यतोक्ता।

## साहित्यचूडामणिः

भुक्तीति। सदागमः सत्पुरुषस्य प्रियतमस्य प्राप्तिः अथ च सत्पुरुषाऽर्थोपयुक्त आगमः शास्त्रम्। प्रियतमागमनरूपोऽर्थ उच्यते। शास्त्रानुकूलो ध्वन्यते। तत्राभिधायां भुक्तिमुक्ती सङ्केततद्विघातौ, एकान्तसमादेशनं सङ्केतदानम्, आनन्दनिष्यन्दः क्रीडासौख्यम्। व्यञ्जने तु भुक्तमुक्ती प्रवृत्तिनिवृत्तिकर्मप्रतिपाद्ये फले, एकाग्तसमादेशनं विविक्तिदेशोपदेशः, आनन्दनिष्यन्दः परमपुरुषार्थोन्मेषः।

## सम्प्रदायप्रकाशिनी

भुक्तिमुक्तीति। भुक्तिं मुक्तिं च करोतीति, यदेतदेकान्तसमादेशनमात्यन्तिक उपदेशस्तत्र तत्पर इति सज्जनसमागमापेक्षार्थः। भुक्तिं सम्भोगं मुक्तिं विरहदुःखोपशमं च करोतीति, यदेतदेकान्तसमादेशनमुपह्वराह्वानं तत्र तत्पर इति प्रच्छन्नकामुकापेक्षः।

मुख्यया वृत्त्येति। सदागमपदेन सदागमपदव्यपदेशरूपयेत्यर्थः। सङ्केतदायिनः स्तुतिः सदागमपदद्योत्यं वस्त्विति यावत्।

## मधुमती

भुक्तिमुक्तिकृदिति। भुक्तिः स्वर्गादिभोगः कान्तादिभोगश्च। मुक्तिः अपवर्गः, खेदाभावश्च। एकान्तः अद्वैतं, विविक्तदेशश्च। समादेशनं 'यजेत' इत्यादिनियोगः, आह्वानं च। संश्चासौ आगमश्च इति सदागमः वेदः, सतः आगमनं च। काचिदिति। सङ्केतस्तुतिरूपं वस्तु इति शेषः। मुख्यया। व्यञ्जनयेत्यर्थः। एवं च—अप्रस्तुतनेतृप्रशंसया सङ्केतदायिनः प्रस्तुतस्य स्तुतिः व्यङ्ग्या। अभिधानियमनात् न श्लेषः इति द्रष्टव्यम्। यत्तु—पितृचरणैः—'मुख्यया—शक्त्या' इत्युक्तम्, तत् प्रकृतव्यञ्जनायाः अभिधामूलत्वात् परम्परया तत्प्रयोजकत्वं अभिप्रेत्य।

## विस्तारिका

शब्दशक्तिमूलवस्तुव्यङ्ग्यम् आह—भुक्तीत्यादि। मुक्तिः सुखोपभोगः सम्भोगश्च; मुक्तिश्चरमदुःखध्वंसो गृहकर्मत्यागश्च। एकान्तो निश्चयो विजनञ्च। समादेशो विधिः कथनञ्च। आनन्दो नित्यसुखं रतिसुखञ्च। सदागमः सच्छास्त्रं सतः सुन्दरस्यागमनञ्च।

काचिदित्यादि। सङ्केतदायिनमिति। णिनिस्ताच्छील्यावगमः। एवं श्लिष्टशब्देन। नन्वत्र सुन्दरागमनमिव सच्छास्त्रमित्युपमा कथं न स्यादित्याह—मुख्ययेत्यादि। मुख्यया वृत्त्या उद्देश्यत्वेन सुन्दरागमनस्य वस्तुतः प्रकृतस्य नोपमानता, न चोपमेयता, सच्छास्त्रस्यैव प्रकरणावतारात्। रहस्यभङ्गभयेन सच्छास्त्रेणाच्छाद्याभिधानात्। तेन वस्तुध्वनिरेवेत्यर्थः। अत्र सुन्दरागमनस्य वस्तुनो व्यञ्जने सदागमपदमेव प्रभवतीति पदमूलता।

## सारबोधिनी

शब्दशक्तिमूलवस्तुव्यङ्ग्यमाह भुक्तीति। भुक्तिः स्वर्गादिभोगः संभोगश्च। मुक्तिर्निश्रेयसमितरव्यासङ्गत्यागश्च। एकान्तः परमार्थस्वरूपं विजनञ्च। समादेशो नियोग आह्वानञ्च। सदागमः सच्छास्त्रम्। सतः सुन्दरस्यागमनञ्च। मुख्यया वृत्त्या मुख्यप्रकारेण सदागमव्यपदेशरूपेणेत्यर्थः। द्वितीयार्थस्य रतिरूपस्य सङ्गोपनार्थमेव परार्थस्याभिधानान्नोपमाध्वनिः। द्वयोः समप्राधान्य एव तस्याः प्रवृत्तेरित्युक्तं प्राक्। किन्तु शब्दशक्तिमूलवस्तुध्वनिरेवायम्।

## काव्यप्रदीपः

अत्रैव वस्तुनो व्यक्तिर्यथा—

**'भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।**
**कस्य नानन्दनिःस्यन्दं विदधाति सदागमः॥'**

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसति। तत्र सदागमपदेन स्तुतिर्व्यज्यते। उभयोश्चैतयोः शब्दप्राधान्यम्। परिवृत्त्यसहत्वात्।

## आदर्शः

शब्दशक्तिमूलं पदप्रकाश्यं वस्त्वाह—भुक्तिमुक्तीति। जनान्तरसन्निधावुपनायके उपस्थिते पुराणाद्यागमप्रशंसाव्याजेन तदागमनाधीनं हर्षं व्यञ्जयन्त्या नायिकाया उक्तिरियम्। सदागमः सच्छास्त्रं पुराणादिकं कस्य जनस्य आनन्दनिस्यन्दं न विदधाति। कीदृशः? भुक्तिमुक्त्योः स्वर्गापवर्गयोः कर्त्ता, एकान्तसमादेशनं तत्त्वोपदेशः तत्परः तत्कारी। व्यङ्ग्यार्थस्तु सदागमः सत्पुरुषस्यागमनं कस्य मद्विधजनस्य आनन्दनिस्यन्दं न विदधाति। कीदृशः? भुक्तिमुक्त्योः सुरतोपभोगगृहकर्म्म त्यागयोः कर्त्ता, एकान्तसमादेशनं रहस्यलीलोपदेशः तत्परः। एवंविधस्त्वर्थोऽनेकार्थकसदागमपदप्रकाश्यः, तदभावे एकार्थकभुक्त्यादिपदेभ्य ईदृशार्थबोधानुदयात्, स च उपनायकप्रशंसारूपत्वान्महावाक्यव्यङ्ग्यतद्विषयरसाभासप्रकर्षकः प्रशस्ते रत्याधिक्यात्। पन्थिअ ण एत्थेत्यादौ तु एकवाक्यस्थितानेकपदानां वाक्यत्वेनैव व्यञ्जकत्वम्। न च व्यञ्जकपदानामेकवाक्यस्थितत्वेऽपि एकैकव्यङ्ग्यव्यञ्जकत्वं विवक्षितम्, अन्यथा वक्ष्यमाणे तदप्राप्तिमहादुःखेत्यादौ एकवाक्यस्थयोरपि अशेषचयपदयोर्व्यङ्ग्यद्वयबोधकत्वात् पदत्वेन व्यञ्जकतोदाहरणमनुपपन्नं स्यात्; तथाच 'पन्थिअ ण एत्थे' त्यत्र शास्त्रादिविभिन्नव्यङ्ग्यव्यञ्जकानां सत्थरादिपदानां कथं वाक्यत्वेन व्यञ्जकत्वमिति वाच्यम्, प्रत्येकतत्तद्व्यञ्जनद्वारा यद्युपभोग इत्याद्येकव्यङ्ग्यव्यञ्जकत्वेन वाक्यत्वात्। अत्रेति उद्देश्यनिर्वाहकत्वेन व्यञ्जनाया एवात्र मुख्यत्वमुक्तम्। अमुख्ययेति पाठस्तु क्वचित् सुगम एव।

## सुधासागरः

अत्रैव वस्तुना वस्तुव्यक्तिमुदाहरति—'भुक्तीत्यादि। काचिद् विदग्धकुलटा सन्मन्त्रोपदेशव्याजेन सङ्केतदायिनमत्युज्जवलशिष्टवेषधारिपाखण्डिनं प्रति एवं श्रोतृषु स्वसाधुतां सूचयितुमभिधाख्यप्रसिद्धव्यापारेण

शास्त्रं स्तुवत्याह—भुक्तिमुक्तीत्यादि। अक्षरार्थस्तु—'भुक्तिः स्वर्गादिभोगः सम्भोगश्च, मुक्तिरपवर्गः स्मरसन्तापत्यागश्च, एकान्तः परमात्मस्वरूपं विविक्तस्थानञ्च, समादेशे नियोगः आह्वानञ्च, सदागमः सन्मन्त्रशस्त्रं सतः सुन्दरतरुणस्यागमनञ्च। एवञ्च भुक्तिमुक्तिकारकं यदेकान्तसमादेशनं तत्र तत्परो दक्षः। सदागमः सच्छास्त्रमानन्दनिष्यन्दंप्रमोदप्रस्रवणम्। 'स्यन्दू प्रस्रवणे' धातुः निःस्पन्दमिति पाठे जाड्यमित्यर्थः। तदेतत् सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसतीति।

अत्र वक्तृबोद्धव्यवैशिष्ट्यबलात् सदागमपदेन प्राधान्येनोपपतिस्तुतिरूपं वस्तु व्यज्यते। अत एवोक्तं प्रदीपकारैः 'काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति तत्र सदागमपदेन स्तुतिर्व्यज्यते' इति। एवञ्च मधुमतीकारैर्यद्व्याख्यातं 'मुख्यया व्यञ्जनयेत्यर्थः' इति तत्प्रामादिकमेव, 'तत्र मुख्योव्यापारोऽस्याभिधोच्यते' इति सूत्रेणैवाभिधाया मुख्यत्वप्रतिपादनात्। यच्च स्वजनकरलपाणिभट्टाचार्यकृतकाव्यदर्पणाख्यटिप्पणसमर्थनम्—'यत्र पितृचरणैरुक्तं मुख्यया शक्त्येति, तत्प्रकृतव्यञ्जनाया अभिधामूलत्ववत् परम्परया तत्प्रायत्वमभिप्रेत्येति तद्वृथैवेति ध्येयम्'। एतयोरुदाहरणयोः शब्दप्राधान्यं परिवृत्त्यसहत्वाद् द्रष्टव्यम्।

## विवरणम्

पदप्रकाश्यमभिधामूलव्यञ्जनागम्यं वस्तूदाहरति—भुक्तीति। भुक्तिः स्वर्गादिः सुरतसुखस्य वा भोगः। मुक्तिरपवर्गो गृहव्यापारपरित्यागश्च। एकान्तसमादेशनमव्यभिचरितविधानं रहोगमनेङ्गितं च। सन्नागमो वेदादिः, सतः सुन्दरस्यागमनं च। अत्र सदागमशब्दस्य केवलमभिधामूलव्यञ्जना, अन्येषां पदानां तु योगादिनैव निर्वाहः। तत्र प्रकृत आगमः शास्त्रमेवाभिधागम्यं सत आगमनं तु व्यञ्जनागम्यम्। वैयञ्जनिकबुद्धावुद्देश्यस्त्वत्रोपपतिः। स च शास्त्रस्य स्वागमनस्य चोपमानोपमेयभावं न बुध्यते, किन्तु स्वैरिण्यां स्वागमनस्य श्लाघामवगत्यैव विश्राम्यतीत्याह—काचिदिति। सङ्केतदायिमुपपतिं प्रति व्यङ्ग्यार्थबुबोधयिषया वक्ति। अमुख्यया वृत्त्या व्यञ्जनया। मुख्ययेति पाठेऽपि—अत्र शास्त्रे प्रधानीभूतयेत्यर्थः। तेनापि व्यञ्जना लभ्यते। 'पन्थिअ ण एत्थ' इत्यादौ यद्यपि नैकवाक्यगतयोः पदयोर्व्यञ्जकत्वम्, तथाप्येकव्यङ्ग्यार्थबोधानुकूलमभिधामूलव्यञ्जनं यत्र नानापदविश्रान्तं तत्रैव वाक्यगतत्वम्। 'पन्थिअ' इत्यादौ यद्युपभोगक्षमोऽसि तदास्स्वेति व्यङ्ग्यं द्वाभ्यामपि पदाभ्यामभिधामूलव्यञ्जनया प्रकाश्यत इति मन्तव्यम्।

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्त्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ।। ७९ ।। [६]

अत्र वस्तुना कृतपुरुषपरिचया क्लान्तासीति वस्तु, अधुनापदद्योत्यं व्यज्यते ।

---

### सङ्केतः

अथ अर्थोत्थं द्वादशधा ध्वनिं पदप्रकाश्यमाह—सायमिति । अत्र स्नान-विलेपन-अर्कास्त-मन्दागमनैः क्लमहेत्वभावः उक्तः । एवं 'कारणाभावेऽपि क्लमः तव' इति वस्तुना 'पुरुषसङ्गं कृत्वा स्नाताऽसि' इति वस्तु अधुनापदेन व्यज्यते । अन्यदाऽप्यागमने क्लमाभावात् ।

### बालचित्तानुरञ्जनी

अर्थशक्तिमूलस्य ध्वनेर्द्वादशप्रकाराणां मध्ये स्वतःसंभविना वस्तुना वस्तुव्यङ्ग्यपदप्रकाश्यमुदाहरति सायमिति । काञ्चित् सखीं प्रति कस्यचिदुक्तिः । सन्ध्यायां स्नानमाचरितम् । चन्देननाङ्गं समालिप्तम् । अत एवाविस्रब्धं यथा तथा अत्रागमनम् ।

हे सखि ! तव सौकुमार्यमाश्चर्यं येन कारणेनाभितः क्लान्तासि । अधुनानुकरणाभावेऽपि क्लान्तासीति ।

### काव्यादर्शः

अर्थशक्त्युद्भवे प्रभेदे स्वतःसंभविना वस्तुना वस्तुव्यङ्ग्यत्वे पदप्रकाशता, यथा 'सायम्' इति । अत्र 'अधुना' इति पदं वस्तुस्वभावं स्वतःसंभावितशरीरार्थशक्त्या नायिकायाः संभोगखेदरूपं वस्तुमात्रं ध्वनति ।।

### विवेकः

अथार्थशक्त्युद्भवः स्वतःसम्भविप्रभृतिभेदेन द्वादशप्रकारः पदप्रकाश्यो यथा—सायमित्यादि । अभितो बहिरन्तश्च । व्यतिकरः सम्भेदः । अमीलनव्यतिकरं स्पष्टम् । वक्तृप्रतिपाद्यसचिवेनाधुनापदार्थेन प्रागनुभूतावस्था-वैलक्षण्याद्युक्तरूपं वस्तु द्योत्यते ।

## दीपिका

सम्प्रति द्वादशविधार्थशक्तिमूलस्य पदप्रकाश्यतोदाहृतयः । अभितो बहिरन्तश्च । अधुना क्लान्ताऽसि न तु पूर्वं, कदाचिदपि तवैवंविध क्लमो न दृष्ट इति भावः । व्यतिकारः पौनःपुन्यं सम्भेद इत्येकः । वस्तुनाऽधुनापदार्थप्रधानेन वाक्यार्थेन । 'अधुना' पदद्योत्यमिति—तदर्थस्येतरपदार्थोत्कर्षस्तस्यापि पदान्तरापेक्ष्या वैशिष्ट्यमित्यर्थः । एवरमुत्तरत्रापि योज्यम् ।

## दर्पणः

अर्थशक्तिमूलेषूदाहरति सोऽयमिति । न विद्यते मिलनव्यतिकरः संपर्को यस्य तदमीलनव्यतिकरं यथा स्यात्तथा आसितुं स्थातुमित्यर्थः ।

## साहित्यचूडामणिः

सायमिति । उपासितम् आदरेणानुष्टितम् । विस्रब्धं, न पुनरावेगयुक्तम् । येन हेतुना । तव नेत्रद्वन्द्वं मीलनव्यतिकररहितम् आसितुं स्थातुं न शक्नोति मीलितमेव वर्तते । पूर्वार्धेन श्रान्त्यतिशयस्य धर्मकालप्रयुक्तत्वशङ्का प्रतिक्षिप्यते । उत्तरार्धेन च परपुरुषोपभोगानन्तरं स्नातासीति व्यज्यते । अत्र प्राधान्यमधुनापदस्य, नेत्रद्वन्द्वविकारस्य वासनावशेन तत्कालेऽपि विद्यमानत्वात् ।

## सम्प्रदायप्रकाशिनी

अथार्थशक्तिमूलस्य द्वादशकस्य पदप्रकाश्यतायाः प्रस्तावः—सायं स्नानमुपासितमिति । अत्र सायंस्नानोपास्तिमलयजालेपनसूर्यास्तमयविस्रब्धागतयः क्लमानुदयहेतवः । तथापि यदभितः क्लान्तसि, तदेतदाश्चर्यम् ।

अत्र वस्तुनेति । वस्तुना अहेतुकक्लमरूपेण स्वतस्सम्भविना ।

## विस्तारिका

अर्थशक्तिमूलवस्तुना वस्तुव्यङ्ग्यमाह—सायमित्यादि । सायं स्नानं श्रमनाशकमुपासितं यत्नतः कृतम् । अम्बरमाकशं वस्त्रञ्च । वस्त्रस्थमणिरिवाम्बरमणिः सूर्यः । तेन प्रकाशाभावो मणेः मौलिगामित्वं युक्तमेव । विस्रब्धा भीता । अमितो ब्राह्याभ्यन्तरतः । मीलनं मुद्रणम् । व्यतिकरः सम्बन्धः ।

अत्रेति । वस्तुना पदार्थेन । अधुना, न तु कालान्तरे । एवं क्रमो दृष्ट इत्याकारेण तेनाधुना पदार्थस्योद्भटशक्तिकता ।

## सारबोधिनी

सायमित्यादि । सायं स्नानं श्रमनाशकमुपासितं यत्नतः कृतम् । विश्रब्धा अभीता विश्वस्ता वा अभितो बाह्यतोऽभ्यन्तरतश्च । मीलनं मुद्रणं व्यतिकरः संबन्धः ।

अत्रेति । वस्तुना अधुनापदार्थेन । अधुना न कालान्तरे, एवं एवंविधः क्लमो दृष्ट इत्याकारेण । येनाधुनापदार्थस्योद्भटशक्तितया प्राधान्यम् ।

## काव्यप्रदीपः

अर्थशक्त्युद्‌भवेषु स्वतःसंभविन्यर्थे व्यञ्जके वस्तुना वस्तुनो व्यक्तिर्यथा—

**'सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं**
**यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।**
**आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना**
**नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥'**

अत्र तव सौकुमार्यमाश्चर्यम् येनाधुना क्लान्तासीति वस्तुना कृतपरपुरुषपरिचया स्नातासीति वस्तु अधुनापदप्राधान्येन व्यज्यते ।

## आदर्शः

स्वतःसम्भविवस्तुव्यङ्ग्यं वस्तु पदप्रकाश्यमाह—सायमिति । उपनायकेन पथ्युपभुक्तां स्नात्वाऽऽगतां सखीमुपहसन्त्याः सख्या उक्तिरियम् । तव सौकुमार्यमधुना आश्चर्यम्, येन सौकुमार्येण अभितः सर्वाङ्गे क्लान्ताऽसि । क्लमज्ञापकमाह—नेत्रद्वन्द्वमिति । यतस्तव नेत्रद्वन्द्वं मीलनस्य व्यतिकरं समूहं विना आसितुं स्थातुं न शक्नोति । सौकुमार्यातिरिक्तस्तव ईदृशक्लमहेतुस्तु नास्त्येवेत्याह—सायमिति । अनेन क्लमहेतुरातपो नास्ति प्रत्युत क्लमनिवृत्तिहेतू स्नान-मलयजाङ्गलेपावेव स्त इति दर्शितम् । अत्र च सायंपदस्य त्रिमुहूर्त्तात्मकसायाह्नपरत्वे तत्रातपसम्भावनां निरस्यति—यातोऽस्तेति । विश्रब्धं स्वैरम् । अत्रागतिः इहागमनम् । एतेन भयाद् द्रौत्याद्वा क्लमो नास्तीति दर्शितम् । विश्रब्धमन्देति क्वचित् पाठः । अत्रेति 'वस्तुना' वाक्यार्थेन स्वतःसम्भविना । अधुनापदेति । ईदृशक्लमस्य सौकुमार्यप्रयुक्तत्वे दिनान्तरेऽप्येवं स्यादतोऽधुनापदादाधुनिकक्लमहेतुलाभ इति भावः । अत्र च महावाक्यव्यङ्ग्य उपहासः व्यङ्ग्यमिदञ्च तत्प्रकर्षकं परपुरुषसम्बन्धेनाधिकोपहाससिद्धेः । अलसशिरोमणीत्यादौ तु एकविशेष्यकपदत्रयस्य वाक्यत्वेनैव व्यञ्जकत्वम् ।

## सुधासागरः

अथार्थशक्त्युद्‌भवेषु स्वतः सम्भविन्यर्थे व्यञ्जके वस्तुना वस्तुव्यक्तिं पदप्राधान्येनोदाहरति—सायमित्यादि । शार्दूलविक्रीडितं छन्दः । प्राक् श्रमालस्याद्यपनोदाय स्नानादिना संस्कृतां भर्तृशयनागारागतां ग्रीष्माभिसारिकां प्रति तदागमनं प्रतीक्षन्ती( ?) काचिद् विदग्धा सखी विदितरहस्याऽहमिति सूचयितुमाह । अयमर्थः । हे सखि । त्वया सायङ्काले स्नानं श्रमनाशकाङ्गप्रक्षालनमुपासितं यत्नतः कृतम्, मलयजेनोत्तमचन्दनेनाङ्गं समालेपितं समन्ताच्चार्चितम्, अम्बरमणिः सूर्योऽस्ताचलमौलिं यातः अस्तमित इत्यर्थः । एतेन नक्तमहत्वाभावः सूचितः । विस्रब्धं निर्भयं यथा स्यात्तथा, अत्र पतिसमागमस्थाने, आगतिरागमनम्, तव सौकुमार्यमाश्चर्यमत्युत्कृष्टम्, येन सौकुमार्येणाधुना ईदृशे समयेऽभितः बाह्यतोऽभ्यन्तरतश्च क्लान्तासि, तादृशक्लममेव प्रकटयति अमीलनव्यतिकरं न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः सम्बन्धो यत्र तथाभूतम्, एतेन निद्राभावः सूचितः, ते नेत्रद्वन्द्वमासितुं जाग्रद्रूपतयाऽवस्थातुं न शक्नोतीति ।

अत्र तव सौकुमार्यमाश्चर्यं येनाधुना क्लान्तासीति वस्तुना कृतपरपुरुषपरिचया गाढोन्मर्दनात् क्लान्तासीति वस्तु 'अधुना'-पदप्राधान्येन व्यज्यते । तदेतदवृत्तिकृतोक्तम्—अत्र वस्तुनेत्यादिना ।

### विवरणम्

अर्थशक्त्युद्भवेषु वस्तुव्यङ्ग्यं वस्तुपदप्रकाश्यमाह—सायमिति । त्रिमुहूर्त्तावशिष्टे दिने सायम्पदप्रयोगः स्मार्तः । तत्र ग्रीष्महेतुकः क्लमः सम्भवत्येव । सायं विशिनष्टि—यात इति । विस्रब्धमत्वरितम्, आगमिधात्वर्थान्वयि । अभितः सर्वेष्ववयवेषु । व्यतिकरः परम्परा ।

अत्र वस्तुनेति । न तावदत्र विभावना, क्लमकारणस्य सौकुमार्यस्याभिधानात् । नाप्युक्तनिमित्ता विशेषोक्तिः, सन्तापशान्तिस्वरूपकार्यव्यतिरेकस्यानभिधानात्, क्लमस्य तदविनाभावेऽप्यताद्रूप्यात् । क्लमेन सौकुमार्यानुमानरूपं काव्यलिङ्गं सदपि बाध्यकक्षारूढत्वान्नालङ्कारः । अधुनापदेन हि कालान्तरे क्लमाभावः प्रतीयते, स एव सौकुमार्यस्य क्लमकारणताबुद्धिं प्रतिरुणद्धि । अत एवाधुनापदस्य प्राधान्येन व्यञ्जकत्वाभिप्रायेण पदप्रकाश्यध्वनाविदमुदाहृतमिति ध्येयम् ।

परेति । अत्र परपुरुषपरिचयमात्रं पदप्रकाश्यम् । स्नाताऽसीति वाक्यानुवादः । सोऽपि परपुरुषपरिचयस्वरूपेण पदप्रकाश्येन महावाक्यस्य व्यङ्ग्यं वक्तृसखीकर्तृकपरिहासादिकमुपकुरुते, एकदेशस्थितेन भूषणेनेव कामिनीत्यादिप्रागभिधानादित्यभिप्रायेण महावाक्यव्यङ्ग्यस्योपलक्षकः । अत एव चाधुनापदद्योत्यं वस्तुना व्यज्यत इत्यभिहितम् । तत्र द्योत्यं द्योत्येन परपुरुषपरिचयेनोपकृतमित्यर्थः ।

अत्रेदं बोध्यम्—यत् पदं निर्दिश्यमानविरोधिनमर्थापत्त्यादिप्रमाणसहकारेणाप्युपस्थापयितुं शक्नोति तस्य पदस्यासाधारणी व्यञ्जकता । यथा—'निश्शेषच्युतचन्दनम्' इत्यादौ प्रियस्य दूतीरमणादावधमपदस्य । 'अलससिरोमणि' इत्यादौ तु न तादृशं किमपि पदमिति वाक्यार्थ एव व्यञ्जक इति ।

**तदप्राप्तिमहादुःखविलीनाशेषपातका।**

**तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥ ८० ॥**

**चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।**

**निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥ ८१ ॥ [७]**

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम्। एषं चाशेषचयपदद्योत्ये, अतिशयोक्ती।

---

**सङ्केतः**

तदप्राप्तीति। एतौ श्लोकौ विष्णुपुराणे। तस्य विष्णोः अप्राप्तिः। निरुच्छ्वासतयेति। एकत्र ध्यानेन, अन्यत्र तद्गतया चिन्तया। मुक्तिः प्राणवियोगोऽपि। अशेषचयशब्देत्यत्र शब्दशब्देन अनेकार्थत्वात् पदं उच्यते। अन्यथा शब्दद्योत्ये इत्युक्त्या शब्दमूलत्वप्राप्त्या, अर्थमूलध्वनिप्रस्तावः न सङ्गच्छेत। अतिशयोक्ती असम्बन्धे सम्बन्धरूपे।

**बालचित्तानुरञ्जनी**

एवंविधाधुनाशब्दार्थरूपेण स्वतःसंभविना वस्तुनाऽलङ्कारव्यङ्ग्यपदं पदप्रकाश्यमुदाहरति तदिति। विष्णुपुराणस्थं पद्यमिदम्। अन्या गोपकन्यका कृष्णाप्राप्तिजनितमहादुःखेन विनष्टसर्वपातका विष्णुचित्तया जनितशुद्धाभेदेन क्षीणपुण्यसमूहा तथा जगत्कारणं परब्रह्मस्वरूपिणं कृष्णं निरुच्ध्वासतया चिन्तयन्ती ध्यायन्तीव सती मुक्तिं प्राणवियोगं मोक्षञ्च। अत्र व्यङ्ग्यालङ्कारमाह अत्रेति। अत्राशेषचयशब्दयोरर्थरूपेण स्वतःसंभविनालङ्कारेण पदद्योत्यं व्यङ्ग्यम्।

**काव्यादर्शः**

एवं चेति। अशेषचयपदयोरर्थौ वस्तुमात्रस्वभावौ स्वशक्तिमाहात्म्याद् अतिशयोक्त्यलंकारं ध्वनतः।

**विवेकः**

स्वतःसम्भवित्वं चास्य प्राग्वदेव। तदप्राप्तीत्यादि तदित्यनेन कृष्णस्य परामर्शः। अत्र परमेश्वरवियोगजं दुःखं तदनुध्यानजं सुखञ्च जन्मसहस्रोपभोग्यदुष्कृतसुकृतफलत्वेन सहाभेदेनाध्यवसितमित्यशेषचयपदाभ्यां द्वे अतिशयोक्ती व्यज्येते।

## दीपिका

निरुच्छ्वासतया मुक्तिं गुरुजननियन्त्रणादुःखपरित्यागं, मोक्षदशायामपि निरुच्छ्वासता "नास्य प्राणा उत्क्रामन्ति" "तत्रैव समवलीयत" इति श्रुतितः प्रसिद्धा। अनया च वाच्यातिशयोक्त्या सहितेन वाक्यार्थेन 'शेष'—'चय'—पदार्थप्रधानसचिवेन जन्मसहस्रभोगदुष्कृतसुकृतफलराशितादात्म्याध्यवसितभगवद्विरह दुःखचिन्ताऽऽह्लादप्रत्यायनमित्यतिशयोक्तिद्वयध्वनिः। मुक्तिपदातिशयोक्तिस्तु स्पष्टतया ध्वन्यात्मनि [न] निवेशयितव्या। अत्र च व्यञ्जकस्य प्रौढोक्तिमन्तरेणापि सम्भवात् स्वतः सम्भविता।

## दर्पणः

तदप्राप्तीति। मुक्तिं तु त्राणाय मोक्षं "न तस्य प्राणा उत्क्रामन्ति। ब्रह्मैव सन् ब्रह्माप्येति इति शृतेः बृ. ४-४-६। निरुच्छवासतया मोक्षेऽपि संबन्धः। अत्र भगवद्वियोगजं दुःखं तदनुध्यानजं सुखं च जन्मसहस्रोपभोग्य सुकृतदुष्कृतफलराशितादात्म्येनाध्यवसितमिति अशेषचयपदाभ्यमतिशयोक्तिर्व्यज्यते।

## साहित्यचूडामणिः

तदप्राप्तीति। निरुच्छ्वासतया योगाभ्यासोचितया। अतिशयोक्ती इति। प्रकारभेदेन प्रतिपादिते उभे मिथो निरपेक्षे, न पुनरेका, तथात्वे वाक्योदाहरणत्वप्रसङ्गात्। तत्र प्राधान्यमशेषचयशब्दयोः यौ वियोगदुःखचिन्ता-ह्लादयोर्बाहुल्यप्रतिपादनेन पापपुण्ययोर्निरन्वयविनाशं व्यङ्क्तः।

## सम्प्रदायप्रकाशिनी

तदप्राप्तीति। तद्विरहलक्षणमहादुःखोपभोगेन क्षपितनिश्शेषपातका तच्चिन्तासुकृतेन क्षीणपुण्यराशिः मुक्तिं गता। मुक्तिः कैवल्यं विरहोपशमश्च।

एवञ्चाशेषचयेति वस्तुनालङ्कारव्यक्तिर्दर्शिता।

## मधुमती

अतिश्योक्ति इति। अत्र अतिश्योक्तिपदं समाख्याबलेन अलङ्कारसामान्यवाचकमपि अत्र विशेषालङ्कारविशेषपरम्। ग़यत्नविषये तदवतारात्। इह च तद्वियोगदुःखोपभोगजनकयत्नेन समस्तपातकजन्यदुःखोपभोगस्य तद्वियोगदुःखजनकपातकनाशेन समस्तपातकनाशप्रतीतेः अपरविशेषालङ्कारद्वयं अशेषपदद्योत्यम्। एवं च—तच्चिन्ताऽऽह्लादभोगजनकयत्नेन सकलपुण्यजन्यसुखोपभोगस्य तच्चिन्ताऽऽह्लादजनकपुण्यनाशेन समस्तपुण्य-नाशप्रतीतेः अपरविशेषालङ्कारद्वयं च चयपदद्योत्यम्। चयाशेषपदाभ्यां विना स्वस्वजनकपातकपुण्ययोरेव विलयप्रतीतौ व्यञ्जनैव न स्यात्। एवं च—अशेषचयपदयोः अतिश्योक्तिद्वयं प्रत्येकमेव द्योत्यमिति ज्ञेयम्। व्युत्पत्ति बलात् इति तात्पर्यम्।

## विस्तारिका

अर्थशक्तिमूलवस्तुव्यङ्ग्यालङ्कारमाह—तदप्राप्तीत्यादि।

अत्रेति । अशेषचयपदयोरपि वाचकत्वात्, न च विरहचिन्तयोर्दुष्कृतसुकृततादात्म्यावगमादेतदतिशयोक्तिद्वयस्यापि व्यङ्ग्यता । दुष्कृतसुकृतयोस्तापतन्त्राशकत्वाभावात् । तत्फलयोस्तु सुखदुःखयोः 'अशेष चय' पदाभ्यामुपादानादत्र च 'अशेष चय' पदार्थयोरन्वयव्यतिरेकानुविधानात् तन्मूलतैवेत्याह—अशेषचयपदेत्यादि ।

### सारबोधिनी

वस्तुव्यङ्ग्यालङ्कारमाह तदप्राप्तीति । अत्र जन्मसहस्रैरिति । अयमर्थः । अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसित भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमिति अतिशयोक्तिद्वयप्रतीतिरशेषचयपदहेतुका ।

### काव्यप्रदीपः

वस्तुनालंकृतेर्यथा—

**'तदप्राप्तिमहादुःखविलीनाशेषपातका ।**
**तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥**
**चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।**
**निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥'** युग्मम् ।

अत्र जन्मसहस्रैरुपभोग्यानि दुष्कृतसुकृतयोः फलानि वियोगदुःखचिन्ताह्लादाभ्यां कयाप्यनुभूतानीत्युक्तम् । एवं च दुष्कृतसुकृतराशिफलतादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषचयपदाभ्यां द्योत्यते ।

### आदर्शः

स्वतःसम्भविवस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह—तदप्राप्तीति । जगत्सूतिं जगज्जनकम् । परं सर्वोत्कृष्टम्, ब्रह्मस्वरूपिणम् चिन्तयन्ती पूर्वोक्तनायिकातोऽन्या गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणवायुतया मुक्तिं गता कृष्णवियोगान्मृता मुक्तेत्यर्थः । समस्तपापपुण्यक्षयादेव मुक्तिरित्यत आह—तदप्राप्तीति । भोगेन हि पापपुण्यक्षयः, अतस्तदप्राप्तिजन्यमहादुःखेन समस्तपापस्य तच्चिन्ताजन्यविपुलसुखभोगेन समस्तपुण्यस्य च क्षयवतीत्यर्थः । पापपुण्ययोः सामस्त्यलाभश्च अशेषचयपदाभ्याम् । अत्रेति । समस्तपापपुण्यक्षयादेव मुक्तिप्राप्तिरूपं स्वतःसम्भवि वस्तु प्रकृतवाक्यार्थः तद्व्यङ्ग्यौ च अतिशयोक्त्यलङ्कारावित्यर्थः । तथा हि मुक्तेरुपयोगितया प्रकृतानां समस्तपापफलानां पापविशेषफलेन तदप्राप्तिदुःखेनाप्राकृतेन मुक्त्युपयोगितया प्रकृतानां समस्तपुण्यफलानाञ्च पुण्यविशेषफलेन तच्चिन्ताविपुलसुखेनाप्राकृतेन स्वभेदेन निर्देशात्मकनिगरणरूपावेतौ अलङ्कारौ,

**"निगीर्याध्यवसानन्तु प्रकृतस्य परेण यत्"**

इति तल्लक्षणात् । निगरणं हि प्रकृतस्य स्वशब्देनानुक्तया उक्ताप्रकृताभेदेन व्यञ्जनया प्रतीतिः, कमलमनम्भसीत्यत्र अप्रकृतेन कमलेन प्रकृतस्यानुक्तस्य मुखस्येव । तौ चालङ्कारौ पापपुण्यसामस्त्यप्रापकाभ्यामशेषचयपदाभ्यां द्योत्येते कारणसामस्त्येन तत्फलसामस्त्यद्योतनात् । तदाह—अशेषचयपदेति । धन्याऽसि या

कथयसीत्यादौ तु ईदृशपदाभावान्महावाक्यमेव व्यञ्जकम्। तौ चालङ्कारौ गोपीविप्रलम्भव्यञ्जिकाया मुक्तेरुपपादकस्य समस्तपापपुण्यक्षयस्योपपादकत्वेन महावाक्यव्यङ्ग्यगोपी विप्रलम्भप्रकर्षकौ विप्रलम्भप्रकर्षकमुक्त्युपपादनद्वारत्वात्। न च अशेषचयपदयोर्व्यञ्जकयोरेकवाक्यस्थत्वेन कथं पदत्वमिति वाच्यम्, विभिन्नस्वस्वव्यङ्ग्यव्यञ्जकत्वेन पदत्वात्, एकव्यङ्ग्यव्यञ्जकत्वे सत्येव तादृशयोर्वाक्यत्वात्।

## सुधासागरः

वस्तुनाऽलङ्कृतेः पदप्राधान्येन व्यक्तिमुदाहरति—तदप्राप्तीत्यादि। पूर्वश्लोकोक्तविशेषणविशिष्टाऽन्या काचिद्गोपकन्यका निरुच्छ्वासतया प्राणायामेन, जगत्सूतिं सकललोकजनकं सगुणमिति यावत्, परब्रह्मस्वरूपिणं कर्तृकारणत्वाद्युपाधिरहितं कृष्णं सगुणनिर्गुणविलक्षणं नन्दतनयं चिन्तयन्ती मुक्तिङ्गतेत्यर्थः।

अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसितभगवद्विरहदुःख-स्मरणसुखयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदहेतुका द्रष्टव्या।

अत एवोक्तं प्रदीपकारैः—अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्तनाह्लादाभ्यां कयाप्यऽनुभूतानीत्युक्तम्। एवञ्च दुष्कृतसुकृतफलराशितादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषचयपदाभ्यां द्योत्यते इति।

यत्तु रविभट्टाचार्य्यैरुक्तम्—अत्रातिशयोक्तिपदं समाख्याबलेनालङ्कारसामान्यवाचकमप्यत्र विशेषालङ्कारविशेषपरम्, प्रयत्नविषये तदवतारात्। इह च तदवियोगदुःखोपभोगजनकयत्नेन समस्तपातकजन्यदुःखोपभोगस्य तद्वियोगदुःखजनकपातकनाशेन समस्तपातकनाशप्रतीतेविशेषालङ्कारद्वयमशेषपदद्योत्यम्। एवञ्च तच्चिन्ताह्लादभोगजनकयत्नेन सकलपुण्यजन्यसुखोपभोगस्य तच्चिन्ताह्लादजनकपुण्यनाशेन समस्तपुण्यनाशप्रतीतेरपरविशेषालङ्कारद्वयं च चयपदद्योत्यम्। चयाशेषपदाभ्यां विना स्वस्वजनकपातकपुण्ययोरेव विलयप्रतीतौ व्यञ्जनैव न स्यात्। एवञ्चाशेषचयपदयोरतिशयोक्तिद्वयं प्रत्येकमेव द्योत्यमिति ज्ञेयमिति। तन्न सम्यक्। योगरूढस्यातिशयोक्तिपदस्य समाख्याबलेन तादृशार्थकल्पने तत्रापि विशेषालङ्कारेपरत्वाङ्गीकारे बीजाभावात्। यच्चातिशयोक्तिचतुष्टयं प्रदर्शितम् तद् वृत्तिविरुद्धम्। वृत्तौ द्वयोर्द्योतकयोर्द्वयोर्द्योत्ययोश्च यथासंख्यनैवान्वयः स्वारसिकः, न तु द्वयारेकैकत्रान्वय इति सुधीभिर्ध्येयम्। तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्र जन्मसहस्रैरुपभोक्तव्यानीत्यादि।

## विवरणम्

वस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमुदाहरति—तदप्राप्तीत्यादि। अन्या गोपकन्यका निरुच्छ्वासतया मुक्तिं गता। निरुच्छ्वासता प्राणानामात्यन्तिको विलयः, "न तस्मात् प्राणा उत्क्रामन्ति, तत्रैव समवलीयन्ते" इति मोक्षप्रमाणेन प्राणानां विलयस्वीकारात्, मोक्षस्य पातकपुण्यसत्त्वेऽसम्भवात्, तयोरात्यन्तिकं ध्वंसमुपपादयन् गोपकन्यकां विशिनष्टि। प्रथमश्लोकार्द्धाभ्यां दुःखसुखयोस्तावद्धानोपादानप्रयोजकः फलभूमा। स च द्वेधा—क्वचिद् बाहुल्यम्, क्वचिदौत्कट्यस्वरूपा जातिः। तदुभयं महत्पदविपुलपदाभ्यामुपादाय पिण्डीभूतं दुःखाह्लादयोरनुगमकतयोपात्तं तादृशभूमविशेषिते दुःखाह्लादपदे प्रकृतमप्राप्तिदुःखं चिन्ताह्लादं चाभिधत्तः। तत्र

पुण्यक्षयपातकविलयसाधनत्वं सम्भवत्येव, तयोरपि दुःखाह्लादयोः पातकपुण्यफलत्वात्, तयोश्च फलनाश्यत्वात्। अशेषचयपदोपसन्दाने तु निश्शेषपापपुण्यक्षयसाधनत्वमन्यथाऽनुपपद्यमानं जन्मसहस्रभोग्यदुष्कृतसुकृतफलैः सह सर्वथैवाभेदमर्थापयति। तत्र चातिशयोक्तौ विपुलमहत्पदोपात्तं भूमाभेदेनाध्यवसितमौत्कट्यमेव साधारणधर्मतयोपतिष्ठत इत्यशेषचयपदयोर्मानान्तरसहकृतध्वननंस्वरूपमसाधारणमतिशयव्यञ्जकत्वम्, अतिशयोक्त्योर्भेदान्नैकत्र व्यङ्ग्ये पदयोरसाधारणं व्यञ्जकत्वमिति न वाक्यगतत्वम्।

न चात्र रूपकस्य सम्भवः भेदेऽप्यभेदावगमरूपस्य रूपकफलस्य भेदांशमादाय प्रकृतपरिपन्थित्वेनार्थापत्त्यविषयत्वात्। अत एव नोपमाऽपि, न तत्सादृश्येन तत्कार्यकारित्वमुपपाद्यत इत्याशयवानाह—जन्मेत्यादि। वियोगदुःखचिन्ताह्लादाभ्यां विषयाभ्यां तथाविधदुष्कृतसुकृतफलान्यनुभूतानि विषयितां प्रापितानीत्युक्तमभिव्यक्तम्।

यद्वाऽशेषपुण्यपापक्षयसाधनत्वेन जन्मसहस्रोपभोग्यसुकृतदुष्कृतफलभोगाभेदेन वियोगदुःखचिन्ताह्लादानुभवावध्यवसीयेते इत्येवम्परमिदं वेदितव्यम्।

अथवा जन्मसहस्रपदेन तत्कालो लक्ष्यते। तथा च तत्कालस्वरूपस्य कारणस्य, भोगस्वरूपस्य फलस्य च पौर्वापर्यविपर्ययस्वरूपातिशयोक्तिद्वयमत्र व्यञ्जकत्वेनोपादीयते। 'धन्याऽसि' इत्यादौ तु न क्वापि पदे मानान्तरसहकृता व्यञ्जनेति वाक्यार्थ एव तत्र व्यञ्जकः।

**क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम्।**
**बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥ ८२॥ [८]**

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन 'विधिरपि त्वामनुवर्तते' इति सर्वपदद्योत्यं वस्तु।

---

### सङ्केतः

क्षणदेति। यथा घृतकार्यत्वात् आयुरपि घृतम्, तथा क्षणकार्यत्वात् सुखमपि क्षणम्। वनं शून्योद्देशः। व्यसनं साप्ताङ्गानामन्यतमस्य परस्मादुपजातः, द्यूतादि वा। यदि—रात्रिः अरात्रिः, वनं अवनं इत्यादिरूपतया व्याख्या, तदा—रात्र्यभावो दिनम् इत्यादि लभ्यते। ततश्च पराङ्मुखत्वेन न द्विषां किञ्चिद्विरूपम्। ततः विरोधः एषां पदानां वैपरीत्येन व्याख्येयः। विरोधपरिहारस्तु—या हि अक्षणदा दिनं, सा क्षणदा। दिनेऽपि नष्टत्वात् तेषाम्। अवनं रक्षकं वनम्। अवीनां असनं खेटनं व्यसनम् इति। प्रथमव्याख्याने तु विरोधपरिहारौ सुगमौ। शब्देति। अत्र अर्थान्तरन्यासः शब्दोत्थविरोधाङ्गभूतः। तत्साहाय्यात् सर्वपदद्योत्यं वस्तु व्यनक्ति।

### बालचित्तानुरञ्जनी

वस्तुव्यङ्ग्यमुदाहरति क्षणदेति। असौ क्षणदा रात्रिः अक्षणदा अनुत्सवदा! वनमरण्यम्। अवनम् रक्षणहेतुः। व्यसनमव्यसनम्। अवीनाम् अनेडकानां असनं प्रेरणं, इत्थं हे देवि! त्वयि पराङ्मुखे सर्वपराङ्मुखवत्। अत्र व्यङ्ग्यं वस्त्वाह अत्रेति। या क्षणदा सा कथमक्षणदा इत्यादिः। शब्दशक्तिमूलो विरोधः। अयमुपायो यस्य तेनार्थान्तरन्यासाख्येन त्वयि पराङ्मुखे सति भवद्विषतां सर्वपराङ्मुखमित्येवंरूपेणालङ्कारेण तवानुकूलमिति वस्तु सर्वपदद्योत्यं व्यज्यत इत्यर्थः।

### काव्यादर्शः

क्षणदा रात्रिः। अक्षणोऽनुत्सवः। अवनं रक्षाहेतुः। अवीनां मेडकानाम् असनं प्रेरणम्। तदेव व्यसनम्। 'क्षणदा कथमक्षणदा'—इत्यादिशब्दा विरुद्धाः, ततः शब्दशक्तिमूलो विरोधः, तदङ्गेन च त्वयि पराङ्मुखे सर्वमेव पराङ्मुखम्' इत्यर्थान्तरन्यासेन दैवमपि तवानुकूलमिति वस्तु सर्वपदे व्यज्यते।

### विवेकः

क्षणदेत्यादि—क्षणदा रात्रिः, अक्षणोऽनुत्सवः। यदिवाऽक्षणदाऽनवकाशदा। अवनं रक्षणहेतुः। अवीनां मेषाणामसनं चारणमव्यसनम्। क्षणदा कथमक्षणदेति शब्दशक्तिमूलो विरोधालङ्कारः। अयञ्च पराङ्मुखे त्वयी त्यादिनोपपादितस्यार्थान्तरन्यासस्या[ङ्गम्]।

## दीपिका

अक्षणदा अनुत्सवदा अरात्रिश्च। अवनं रक्षणं, न वनञ्च। अव्यसनमवीनां मेषाणामसनम् इतस्ततो भ्रमणं, व्यसनं कौतुकं दुःखं [अव्यसनं] न व्यसनम्। पराङ्मुखं विपरीतम्। विरोधोऽङ्गमुत्थानहेतुर्यस्येति विग्रहः। गोसम्मि प्रातः। आसि आसीत्। दलो इति पुंसि, प्राकृते तादृग्लिङ्गनियमविरहात्। महीसम्मुखमवनतम्।

## दर्पणः

अक्षणोरन्वयः। [अक्षणोऽनुत्सवः ?] अव त्वं रक्षतु। अव्यसनं मेषाणां ज्ञानं यत्। अत्र क्षणदाकथमक्षणेदति विरोधालङ्कारः। सोऽङ्गमुत्थानहेतुर्यस्येति विग्रहः।

## साहित्यचूडामणिः

क्षणदा रात्रि अक्षणदा तद्विपरीता च। वनं कांननम् अवनं रक्षणं तद्विपरीतं च। व्यसनं तात्पर्यम् अव्यसनम् अजीवशेषाणां क्षेपणं पशुपालनादिराजीवः तद्विपरीतं च। क्षणदादिरूपाणां शक्तिरभिधारूपा तन्मूलो यो विरोधालंकारः तस्याङ्गेन समर्थनोपकरणभूतेनार्थान्तरन्यासेन।

**"सामान्यं वा विशेषो वा तदन्येन समर्थ्यत"**

इति वक्ष्यमाणेन विधिरपि त्वामनुवर्तते यतस्त्वयि पराङ्मुखे सर्वं पराङ्मुखं विपरीतस्वभावमिति वस्तु व्यज्यते। तत्र प्राधान्यं सर्वपदस्य।

## सम्प्रदायप्रकाशिनी

क्षणदासाविति। क्षणदा रात्रिः अक्षणदा क्षणदा न भवतीति विरोधाभासः, उत्सवदा न भवतीत्यर्थः। अवनं वनं न भवतीति विरोधः, रक्षणमित्यर्थः। अव्यसनं व्यसनं न भवतीति विरोधः, अवीनामसनं कालनमित्यर्थः।

शब्दशक्तिमूलेवि। विरोधालङ्काराङ्गेनेति बहुव्रीहिः। विरोधालङ्कारो हि समर्थकत्वेनार्थान्तरन्यासाङ्गम्।

## विस्तारिका

अर्थशक्तिमूलालङ्कारव्यङ्ग्यं वस्त्वाह—क्षणदेत्यादि। क्षणदा रात्रिः, तदितरा [अक्षणदा] नोत्सवं दत्ते च। वनमरण्यम्, अवनं नारण्यं रक्षकञ्च। व्यसनं द्यूतादि [अव्यसनम्] व्यसनभिन्नम्, व्यस्यति बहुलं भवतीति वसनम्, नञा समासात् संक्षिप्तञ्च। तवेति द्विषः। कर्मणि षष्ठी।

अत्रेति। अर्थान्तरन्यासस्य सर्वपदस्य व्यञ्जकस्य नानार्थताभावाद् वस्तुनोऽर्थशक्तिमूलालङ्कारव्यङ्ग्यता।

ननु क्षणदादीनां नानार्थत्वाच्छब्दशक्तिमूलत्वमेवेत्याह—शब्दशक्तीत्यादि। अङ्गमुत्थापकम्, विरोधऽर्थान्तरन्यासस्यैवोत्थापकः, न तु तस्य वस्तुव्यञ्जकता।

**सारबोधिनी**

अर्थशक्तिमूलालङ्कारव्यङ्ग्यवस्त्वाह क्षणदेति। क्षणदा रात्रिः, अक्षणदा तदितरा नोत्सवं दत्ते च। वनमवनं नारण्यं रक्षकञ्च। व्यसनं द्यूतादि। अव्यसनं व्यसनंभिन्नं व्यस्यति बहुलीभवतीति व्यसनं पश्चान्नञा समासात् संक्षिप्तञ्च यद्वा अवीनां मेषाणां असनं क्षेपणमिति। तवेति द्वेषकर्मणि षष्ठी।

**काव्यप्रदीपः**

अलंकारेण वस्तुनो यथा—

**'क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम्।**
**वत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥'**

अत्र पराङ्मुखं त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति वस्तु सर्वपदप्राधान्येन व्यञ्जते। ननु नायमर्थान्तरन्यासः। वनं रक्षकमित्यादेर्वाच्यस्यार्थस्यानुपपादकत्वादिति चेत्, न। शब्द्शक्त्या व्यङ्ग्यस्य क्षणदा क्षणदाभिन्नेति विरोधस्योपपादकत्वेन तथात्वात्।

**आदर्शः**

स्वतःसम्भव्यलङ्कारव्यङ्ग्यं वस्तु पदद्योत्यमाह—क्षणदाऽसाविति। अक्षणदा अनुत्सवदा। अवनं रक्षकम्, वनस्य पलायनस्थानत्वात्; नन्द्यादित्वात् कर्त्तरि युः। व्यसनं द्यूतादिकौतुकम्। अव्यसनम् अविस्तीर्णम्; यद्वा अविभिर्मेषैः असनं शिरःप्रहारेण क्षेपणम्; तादृशं व्यसनम् आपत्, त्वदादिष्टैर्मेषैः शिरसा प्रहृत्य त्वदरयो निःसार्यन्ते इत्यर्थः। तत्र च अक्षणदादिशब्दोपस्थाप्यः शब्दशक्तिमूलः क्षणदादेः क्षणदात्वादिपराङ्मुखत्वरूपो विरोध आपाततो भासते, स एवार्थान्तरन्यासेन समर्थ्यते पराङ्मुखे त्वयीति; त्वयि पराङ्मुखे सति तान् प्रति न केवलं क्षणदादेरेव स्वस्वधर्मत्यागेन पराङ्मुखत्वमपि तु सर्वेषामेव पराङ्मुखत्वमित्यर्थः। स चार्थान्तरन्यासो दृष्टचरत्वात् स्वतःसम्भवीति तद्व्यङ्ग्यमाह—अत्रेति। 'विरोधाङ्गेन' विरोधनिर्वाहीन। विधिरपीत्यादेः सर्वपदद्योत्यता च सर्वत्वेन विधेरपि लाभात् शत्रून् प्रति पराङ्मुखत्वस्यैव वाच्यत्वेन तदनुवर्त्तनस्य व्यङ्ग्यत्वम्, तच्च महावाक्यव्यङ्ग्यस्य राजविषयभावस्य प्रकर्षकमेव विधिनाऽप्यनुवर्त्तनीये भावप्रकर्षोदयात्। दर्पान्धेत्यादौ तु ईदृशपदाभावाद्वाक्यमेव व्यञ्जकम्।

**सुधासागरः**

अत्रैवालङ्कारेण वस्तुनः पदप्राधान्येन व्यक्तिमुदाहरति—क्षणदेत्यादि। हे वीर वत खेदे, भवद्द्विषतां तव शत्रुणामसौ सुरतादिभोगक्षमा, क्षणदा रात्रिरक्षणदा तदितरा क्षणमुत्सवं न ददातीत्यक्षणदा च, वनमरण्यमवनं नारण्यं रक्षकञ्च, व्यसनं द्यूतादि अव्यसनं व्यसनभिन्नम्, व्यस्यति बहुलीभवतीति व्यसनं पश्चान्नञ्समासात् संक्षिप्तं च। उक्तविरोधमुपपादयति युक्तोऽयमर्थः। त्वयि पराङ्मुखे सर्वं पराङ्मुखं जातमिति शेषः।

अत्र पराङ्मुखे त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तते इति वस्तु सर्वपदप्राधान्येन व्यज्यते।

ननु नायमर्थान्तरन्यासः वनं रक्षकमित्यादेर्वाच्यस्यार्थस्यानुपपादकत्वादिति चेन्न। शब्दशक्त्या व्यङ्ग्यस्य क्षणदा क्षणदाभिन्नेति विरोधस्योपपादकत्वेन तथात्वात्। तदेतदवृत्तिकृदाह—अत्र शब्दशक्तीत्यादि।

## विवरणम्

पदप्रकाश्यमलङ्कारव्यङ्ग्यं वस्तु दर्शयति—क्षणदेत्यादि। अक्षणदा अनुत्सवदा। अवनं रक्षकम्। व्यसनं द्यूतादि। अव्यसनम् अविस्तीर्णम्। पराङ्मुखे करुणास्वरूपस्वधर्मपरित्यागिनि। पराङ्मुखं विरोधिधर्माभिसंसृष्टम्।

शब्दशक्तीति। शब्दशक्तिमूलव्यञ्जनागम्ये क्षणदाऽन्योन्याभावादौ क्षणदात्वादिविरोधः प्रतिभासते। तस्याङ्गमर्थान्तरन्यासः। कथं क्षणदादेः स्वभावविरोधिसंसर्ग इत्याकाङ्क्षायां विशेषस्य सामान्येन सर्वस्य पराङ्मुखीभावेन समर्थनमित्यर्थः। तत्रापि कथन्ताकाङ्क्षायां तव पराङ्मुखीभावो हेतुविधया निर्दिष्टः। तस्य हेतुता त्वद्धर्मानुवर्तनमुद्रयैव सम्भवतीति प्रथमवाक्यार्थ एव सर्वस्य त्वदनुवर्तकत्वं विषयः। तत्र सर्वपदेन प्रक्रान्तमेवाभिधीयते, 'सर्वेभ्यः कामेभ्यो दर्शपौर्णमासौ' इत्यादिवत्। अप्रक्रान्तस्य विधेरनुवर्तकत्वं तु व्यङ्ग्यमेव। तत्र सर्वपदस्य मानान्तरसहकृतं व्यञ्जकत्वं स्थलान्तरे विधावपि तथाविधानुवर्तनबोधनानुकूलायाः शक्तेरपि सत्त्वात्, सर्वत्वावच्छेदेनानुवर्तकत्वबुद्ध्या विधित्वावच्छेदेनानुवर्तकत्वस्याक्षेपसम्भवाच्चेति भावः। विधेः पराङ्मुखीभावो वाच्य एव। तस्य त्वदनुवर्तकत्वं व्यङ्ग्यम्, तत्र विधौ सर्वशब्दस्य शक्तिस्वरूपं मानान्तरमपि वर्तत इति परे वदन्ति। 'दर्पान्धगन्धगज' इत्यादौ न तादृशं किमपि पदमिति वाक्यार्थ एव व्यञ्जकः।

**तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदल।**

**इअ णववहुआ सोऊण कुणइ वअणं महिसँमुहम् ॥८३ ॥ [९]**

अत्र रूपकेण त्वयास्य मुहुर्मुहुः परिचुम्बनं तथा कृतम् येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् ।एषु स्वतःसंभवी व्यञ्जकः ।

---

**सङ्केतः**

तुहेति । गोसम्मि प्रभाते । दळो इति पुंस्त्वं प्राकृतत्वात । मिलाणादीति । मिलाणकमळदळो इति रूपं यत् पदं तद्द्योत्यं इत्यर्थः ।अयं भावः—म्लानकमलदलं इति रूपकेण म्लानत्वान्यथानुपपत्तेः 'मुहुर्मुहुः चुम्बनं विहितवती' इत्यर्थः ।

**सङ्केतः (रुय्यकः)**

**तव वल्लभस्य गोसम्मि प्रभाते आसीदधरो म्लानकमलदलम्।**

**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम्॥**

महीसम्मुखमवनतं लज्जयेत्यर्थः ।

**बालचित्तानुरञ्जनी**

स्वतः संभविनालङ्कारेण पदद्योत्यमलङ्कारव्यङ्ग्यमुदाहरति तुहेति । सखीवचनम् । हे सखि ! गोसम्मि प्रभाते तुह वल्लहस्स तव वल्लभस्य, अहरो अधरः मिलाणकमलदलो म्लानकमलदलः, असि असीत्, इअ इति, सोउण श्रुत्वा, णवबहु नववधूः, वअणं वदनम्, महीसंमुहं महीसंमुखम्, कुणइ करोति ।

अत्र स्वभावमाह अधरेति । अधरो म्लानकमलदलमिति पदार्थरूपेण स्वतःसंभविना रूपकालङ्कारेण स्वभावशक्त्या हेतोः पदार्थलक्षणलक्षितः काव्यलिङ्गाख्यो मिलाणादिपदद्योत्यो व्यज्यत इत्यर्थः । म्लानत्वं प्रति परिचुम्बनादिरत्र हेतुः ।

उपसंहरति एष्विति ।

**काव्यादर्शः**

'गोसम्मो' ति प्रभाते । 'आसीदधरो म्लानकमलदलम्' इति पदार्थो रूपकरूपः स्वभावशक्त्या काव्यलिङ्गं ध्वनति । 'महीसंमुहं' अवनतं लज्जयेत्यर्थः । काव्यलिङ्गमित्यलंकारो हेतुश्च परिचुम्बनादिकौ, म्लानत्वस्यान्यथानुपपत्तेः ।

## विवेकः

तुहेत्यादि— तव वल्लभस्य गोसम्मि प्रभाते आसीदधरो म्लानकमलदलम् । इति नववधुः श्रुत्वा करोति वदनं महीसम्मुखम् । महीसम्मुखमवनतं लज्जयेत्यर्थः । अत्राधरस्य म्लानकमलदलत्वेन रूपणं, तेनानवरतपरिचुम्बनं प्रतीयते । तत्र मिलाणादिपदेति (पदद्योत्यं) काव्यलिङ्गं व्यञ्जकस्य हेतोरनेकपदार्थता ।

## दीपिका

मिलाणादिपदं मिलाणकमलदलो इति समस्तपदम् ।

## दर्पणः

**तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम् ।**
**इति नववधुः श्रुत्वा करोति वदनं महीसंमुखम् ॥**

महीसंमुखम् अवनतलज्जयेति भावः । मिलादिपदं म्लानकमल इति समस्तपदम् ।

## साहित्यचूडामणिः

तुहेति

**तव वल्लभस्य गोसर्गो आसीदधरो म्लानकमलदलम् ।**
**इति नववधुः श्रुत्वा करोति वदनं महीसम्मुखम् ॥** इति ।

रूपकेणाधरो म्लानकमलमिति व्यस्तपदेन । त्वयेति कर्तुनिर्देशः परिचुम्बनेनेति करणस्य । काव्यलिङ्गं व्यङ्ग्यं हेतोर्वाक्यपदार्थता ।

## सम्प्रदायप्रकाशिनी

तुह वल्लहेति ।

**तव वल्लभस्य प्रत्यूष आसीदधरो म्लानकमलदलम् ।**
**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥**

महीसम्मुखीकरणं लज्जयावनमति ।

मिलाणादिपदद्योत्यमिति मिलाणकमलदलमिति पदेन द्योत्यमित्यर्थः । स्वतस्सम्भविचतुष्कं निगमयति — एषु स्वत इति ।

## विस्तारिका

अर्थशक्तिमूलालङ्कारव्यङ्ग्यालङ्कारमाह — तुहेति ।

**तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम्।**
**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम्॥**

प्राकृते लिङ्गानियमाद् दलपदस्य पुंस्त्वम्।

अत्रेति। रूपकेणाधरस्य म्लानकमलदलत्वेन म्लानत्वे परिचुम्बनं हेतुरिति काव्यलिङ्गता। मिलाणादिपदं म्लानकमलदलमिति। एष्विति। पूर्वमनुसृत्य व्याख्येयम्।

### सारबोधिनी

अर्थशक्तिमूलालङ्कारव्यङ्ग्यमलङ्कारमाह तुहेति।

**तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम्।**
**इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम्॥**

प्राकृते लिङ्गानियमाद्दलपदस्य पुंस्त्वम्। अत्रेति। रूपकेणाधरस्य म्लानकमलदलत्वरूपेण म्लानत्वे परिचुम्बनं हेतुरिति काव्यलिङ्गता। "उपमैव तिरोभूतभेदा रूपकमुच्यत" इति रूपकस्य स्वतःसंभवित्वमिति बोध्यम्।

### काव्यप्रदीपः

अलंकारेणालंकारस्य यथा—

**'तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो।**
**इअ णववहुआ सोऊण कुणइ वअणं महीसँमुहम्॥'**

अत्राधरो म्लानकमलदलमिति रूपकेणालंकारेण त्वयास्य मुहुश्चुम्बनं कृतं तेन तस्य म्लानत्वमिति काव्यलिङ्गं मिलाणकमलदलपदप्राधान्येन द्योत्यते।

### आदर्शः

स्वतःसम्भव्यलङ्कारव्यङ्ग्यमलङ्कारं पदद्योत्यमाह—तुह वल्लहस्सेति।

**तव वल्लभस्य गोशे आसीदधरो म्लानकमलदलम्।**
**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम्॥** इति संस्कृतम्।

रात्रावत्यन्तचुम्बितपत्यधरां नवयौवनां वधूं प्रति कस्याश्चिदुक्तिरियम्। गौः शेतेऽस्मिन्निति गोशं प्रभातम्। नववधूः नवयौवना वधूः। अधरस्य म्लानकमलदलत्वेन रूपणाद् म्लानिहेतुपत्यधरात्यन्तचुम्बनप्रकाशनाद् मुखनमनम्। अत्र च रूप्यरूपकयोरभेदसंसर्गस्यालीकत्वेऽपि रूपकहेतुना शोणत्वरूपसाधर्म्येण अधरसदृशे कमलदल एवं म्लानकमलदलाभेददर्शनाद् अधरेऽप्यौचित्येन सम्भावितस्य म्लानकमलदलाभेदात्मनो रूपकालङ्कारस्य स्वतःसम्भवित्वमिति प्रागेव दर्शितम्। तद्व्यङ्ग्यश्च अधरम्लानिहेतुरत्यन्तचुम्बनमित्येवंरूपो हेत्वलङ्कारः। स च रूपकबोधकम्लानकमलदलप्रकाश्य इत्याह — अत्रेति। व्यङ्ग्यश्च म्लानिहेतुश्चुम्बनं परार्द्ध-

रूपमहावाक्यव्यङ्ग्यवधूलज्जायाः प्रकर्षकं स्वकर्तृकात्यन्तपत्यधरचुम्बनप्रकाशाल्लज्जधिक्यात्। गाढकान्ते-त्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम्।

### सुधासागरः

अत्रैवालङ्कारेणालङ्कारस्य प्राधान्येन व्यक्तिमुदाहरति—तुहेत्यादि। सर्वविपुलेयमार्या।

**तव वल्लभस्योषसि आसीदधरो म्लानकमलदलम्।**
**इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम्॥**

इति संस्कृतम्। कस्याश्चिन्नवोढां प्रति वचनमिदम्। स्पष्टम्। प्राकृते लिङ्गानियमाद्दलस्य पुंस्त्वं बोध्यम्।

अत्राधरो म्लानकमलदलमिति रूपकेणालङ्कारेण त्वया तथा मुहुर्मुहुश्चुम्बनं कृतं येन तस्य म्लानत्वमिति काव्यलिङ्गं मिलाणकमलदलपदप्राधान्येन द्योत्यते। तदेतदुक्तं वृत्तिकारैः— अत्र रूपकेणेत्यादि।

### विवरणम्

स्वतः सम्भविनाऽलङ्कारेणालङ्कारव्यञ्जनं पदप्रकाश्यमुदाहरति — तुहेत्यादि।

**"तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम्।**
**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम्॥"** इति च्छाया।

रूपकस्थले दलादिपदस्य स्वभावारुणत्वादिगुणवति लक्षणा, तस्य चाधराभेदो न बाधित इति वाच्यकक्षायां स्वतःसम्भवित्वमवसेयम्। मिलाणादीति। म्लानत्वेन हेतुना समं सम्बन्धात्मकं मानान्तरमस्तीति तस्यासाधारण्यं बोधयम्। वस्तुतो म्लानिः परिचुम्बनादिहेतुकेति काव्यलिङ्गावगमे म्लान्यंशे मिलाणपदस्य शक्तिस्वरूपं मानान्तरमस्तीति पदान्तरापेक्षया वैलक्षण्यम्। मिलाणादीत्यत्रादिपदेन गोसपदोपसङ्ग्रहः। प्रातःकाले हि म्लानिर्वर्ण्यमाना तदितरकाले तदभावमवगमयन्नैशमसाधरणं हेतुं गमयति।

न चैवमेकत्र व्यङ्ग्ये पदद्वयस्यासाधारणव्यञ्जकतया वाक्यगतत्वमाशङ्कनीयम्, गोसपदं विनापि मिलाणपदेन तद्धेतूपस्थितिसम्भवात्। तेन विना गोसादिपदशतेनापि तदुपस्थितेरसम्भवादित्याशयः।

मिलाणादीत्यनेन 'मिलाणकमलदलो' इति समासपदं गृह्यत इत्यपि वदन्ति।

**राईसु चंदधवलासु ललिअमप्फालिऊण जो चावम्।**

**एकच्छत्तं विअ कुणइ भुअणरज्जं विजंभंतो ॥८४॥ [१०]**

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेश-पराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशातिवाह्यते, इति भुअणरुज्जपदद्योत्यं वस्तु प्रकाश्यते ।

---

**सङ्केतः**

अत्र वस्तुनेति । गाथोक्तेनेत्यर्थः । तदादेशेति ।

'जाग्रद्भिर्भोगपरैः निशाऽतिवाह्या' । इति हि प्रसिद्धः स्मरादेशः ।

**सङ्केतः (रुय्यकः)**

**रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥**

अराले वक्रे तारुण्यरूपे । सेति दृक् । व्यतिकरं मिश्रीभावम् । अवस्था अभिलाष चिन्ताऽऽद्याः ।

**बालचिन्तानुरञ्जनी**

इदानीं कविप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यं वस्तुव्यङ्ग्यमुदाहरति राईस्विति । जो यः कामः चंदध-वलासु चन्द्रधवलासु, राईसु रात्रिषु, ललिअं ललितम् । चावं चायं, अप्फालिऊण आस्फाल्य, विजंभंतो विजृम्भ-माणः, एकच्छत्तमिव, [एकछत्रमिव] भुवनराज्यं, कुणइ करोति। अत्र वस्तुव्यङ्ग्यमाह अत्रेति। कवि-प्रौढोक्तिनिर्मितेन भुवनराज्यमिति पदार्थरूपेण वस्तुना कामस्य राज्ये कामिनो भृत्याः, भागनिष्ठत्वेन तदाज्ञापरा भुअणरज्ज पदद्योत्यं व्यज्यते इत्यर्थः ।

**काव्यादर्शः**

'राईसु' इति । रात्रिसमये कामः चित्तमाक्षिपतीत्येतावानयमर्थो वस्तुरूपः कवि प्रौढोक्त्या स्मरस्य राज्ये कामिनो भृत्याः, ते चोपभोगनिष्ठत्वात् स्मरादे शपरा इति वस्तु व्यनक्ति ।

**विवेकः**

कविप्रौढोक्तिनिष्पन्नशरीरो यथा राईस्वित्यादि — रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् । एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ।

तेभ्य इति 'पञ्चमी विभक्त' (पा. २ ।३ ।४२) इति निधारणे पञ्चमी तेषा मध्य इत्यर्थः । उपभोगपरैरेवेत्यवधारणेन रतश्रमशयनस्यापि प्रवास (७४) प्रायविश्लेषात्मकता । आज्ञाप्रधानं राज्ञः कर्म राज्यम्, तेन भुवनराज्यपदस्य द्योकता ।

## दीपिका

योऽसौ तस्य स्मरस्यादेशः, तत्पराङ्मुखो न कश्चिदिति योजना । तेभ्यः कामिभ्यः, निधारणे पञ्चमीपक्षस्तु नानुशासनिकः । उपभोगपरैर्जाग्रद्भिः सद्भिरिति योजना । आज्ञाप्रधानं राज्ञां कर्म राज्यं, भुवनराज्यपदस्येदृगर्थव्यञ्जकता ।

## दर्पणः

**रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।**
**एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ।।**

तेभ्यः कामिभ्यो योऽसौ स्मरस्यापदेशः कश्चित् पराङ्मुख इति । तेभ्य इत्यत्र निर्धारणे पञ्चमी । पक्षस्यानुमानविरुद्धत्वात् । आज्ञाराधानो राज्ञः कर्म राज्यम् । ते कुटिले सकलपुरुषहिंस्रत्वात् । वयसि यौवने अवस्थाविलम्बोऽद्य कार्यक्षमोऽपि पुनः सन्तापकदर्थितेन हृदयेन स्तनभरवश्येन विशुद्धजातिर्न च तमस्याहारः । विशुद्धाभिजला हे आश्रयार्थं पदाच्चलति सः ।

## साहित्यचूडामणिः

'राईसु' — इति ।

**रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।**
**एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणंः ।।** इति ।

तेभ्यो नेति । यः कश्चिदपि । तैः कामिभिः । भुवनेति । सार्वत्रिकीह सार्वभौमस्याज्ञा ।

## सम्प्रदायप्रकाशिनी

राईसु चन्देति ।

**रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।**
**एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ।।**

अत्र वस्तुनेति । मन्मथवृत्तरूपेण कविप्रौढोक्तिमात्रनिष्पादितेन ।

## विस्तारिका

कविप्रौढोक्तिनिष्पन्नार्थव्यञ्जकतामाह — राईस्विति ।

**रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ॥**

यःप्रकृतः कामः। चापास्फालनेन तु कामस्य भुवनराज्यकरणं कविप्रौढोक्तिप्रसिद्धम्।

अत्रेति। वस्तुनो भुवनराज्यपदार्थेन। तेभ्य इति पञ्चम्यपायार्थे तदपेतः सन्। कश्चिदपि न तदादेशपराङ्मुखः अपेतः पृथग्भूतः। निर्धारणपञ्चमीपक्षो न साधुः।

केचित्तु तेभ्यो न कश्चिदस्ति पराङ्मुखः। न कश्चिदिति चतुर्थ्यन्तं व्याख्यान्ति, तदसत्, सापेक्षत्वात् समासो न स्यात, तादर्थ्याच्चतुर्थ्याः कारकत्वाभावात्।

**सारबोधिनी**

राईस्विति।

**रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥**

यः प्रकृतः कामः। चापास्फालनेन भुवनराज्यस्यैकच्छत्रीकरणं कविप्रौढोक्त्यैव सिद्धम्। अत्रेति वस्तुना भुवनराज्यपदार्थेन। तेभ्य इति तेषु मध्ये इत्यर्थः। तेभ्योऽपेत इति वा।

**काव्यप्रदीपः**

अथ कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकार्थे वस्तुना वस्तुव्यक्तिर्यथा।

**राईसु चन्दधवलासु ललिअमप्फालिऊण जो चापम्।**
**एकच्छत्तं विअ (व) कुणइ तिहुअणरज्जं विजम्भन्तो ॥**

अत्र वस्तुना येषामसौ स्मरो राजा तेषु मध्ये न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैर्निशातिवाह्यत इति वस्तु त्रिभुवनराज्यपदेन प्राधान्येन व्यज्यते। अखण्डाज्ञाविषयो हि राज्यम्। इवार्थो न व्यञ्जनोपयोगी। प्रत्युत तत्परित्यागेऽतिशयो गम्यते।

**आदर्शः**

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्य वस्तु पदप्रकाश्यमाह राईसु इति।

**रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमेव करोति भुवनराज्यं विजृम्भमाणः ॥** इति संस्कृतम्।

अत्र य इत्यस्य प्रकरणलभ्यः कामो विशेष्यः। भुवनराज्यं भुवनराजत्वम्। अत्र अनङ्गस्य चापास्फालनपूर्वकभुवनाधिकारकरणस्यालीकत्वेन तद्रूपं वस्तु कविप्रौढोक्त्यैव सिद्धम्, तद्व्यङ्ग्यमाह अत्र येषामिति। तेभ्य इत्यत्राऽपाये पञ्चमी, तेभ्योऽपेतो बहिर्भूत इत्यर्थः, निर्द्धारणे तु पञ्चम्यनुपपत्तेः। पराङ्मुख इत्यन्तं जाग्रद्भिरित्या-

देर्हेतुप्रदर्शनरूपम्, ईदृशञ्च व्यङ्ग्यं प्रजानां सामस्त्यप्रापकभुवनराज्यपदादेव प्रकाशत इत्याह—भुवनेति। तच्च महावाक्यव्यङ्ग्यस्य समस्तजनशृङ्गारस्य प्रकर्षकं जाग्रद्भिरित्यादिना तत्प्रकर्षस्य स्पष्टत्वात्। कैलासस्येत्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम्। एकच्छत्तं विअ इत्यत्र एकच्छत्रमिवेति संस्कृतमाह चक्रवर्त्ती तन्न, तदा उत्प्रेक्षाया एव व्यञ्जकतापत्तेर्न तु वस्तुनः।

## सुधासागरः

अथ कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकार्थे भेदचतुष्टये वस्तुना वस्तुव्यक्तिं पदप्राधान्येनोदाहरति राईस्वित्यादि। सर्वविपुला छन्दः। यस्यामार्यायां प्रथमपादमुल्लङ्घ्य यतिः सा मुखविपुला, यस्यां तृतीयपादमुल्लङ्घ्य यतिः सा जघनविपुला, यस्यां तु पूर्वोत्तरार्द्धयोरपि तादृशी यतिः सा सर्वविपुलेति छन्दोविद्भि प्रतिपादनात्।

**रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः॥**

इति संस्कृतम्। यः प्रकृतः कामश्चन्द्रेण धवलासूज्वलासु रात्रीषु विजृम्भमाणो वर्द्धमानः सन्, ललितं कुसुममयं चापं धनुरास्फाल्य भुवनराज्यमेकच्छत्रमिव करोतीत्यर्थः।

अत्रेत्यादि। वस्तुना वाच्यरूपेणेत्यर्थ, येषां कामिनां कामिनश्च कामिन्यश्च कामिनस्तेषां कामिनामित्यर्थः 'पुमान्स्त्रिया' इत्येकशेषः, असौ प्रजापरिपालनपरो राजा स्मरस्तेभ्यस्तदर्थं कन्दर्पप्रजारूपकामुकमित्यर्थमिति यावत्, तादर्थ्ये चतुर्थी, कश्चिदपि स्त्रीपुरुषात्मको जनो, विरक्तोऽपि कश्चिदेक इति भावः, तदादेशपराङ्मुखः कामाज्ञाभञ्जकः सुरतविमुख इति यावत् नासीदिति, जाग्रद्भिरूपभोगपरैरेव तैः आसमुद्रक्षितिनिवासिभिः सकामनिष्कामैः सर्वैरपि निशाऽतिवाह्यते इति वस्तु भुवनराज्यपदप्राधान्येन द्योत्यते इति वृत्त्यर्थः।

अखण्डाऽऽज्ञाविषयो हि साम्राज्यम्। चापास्फालनेन भुवनराज्यस्यैकच्छत्रीकरणं कविप्रौढोक्त्यैव सिद्धमिति कविप्रौढोक्तिमात्रनिष्पन्नशरीरत्वं द्रष्टव्यम्। एवञ्च तेभ्य इत्यस्य तेषु मध्ये इति व्याख्यानं कुर्वतां श्रीवत्सलाञ्छनभट्टाचार्य- चण्डीदास- भट्टाचार्य- गोविन्दमहामहोपाध्यायप्रभृतीनां महतामपि महान प्रमादः।

## विवरणम्

कविप्रौढोक्तिनिष्पन्नशरीरेण वस्तुना व्यङ्ग्यं वस्तु पदप्रकाश्यमुदाहरति — राईस्विति।

**"रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमवकरोति त्रिभुवनराज्यं विजृम्भमाणः॥"** इति च्छाया।

'वकुणइ' इत्यस्य विवरणं वकरोतीति, अवाप्योरुपसर्गयोरित्यकारलोपात्। 'विअ'इति पाठस्तु निर्दोष एव। अवकरोति हेलया करोति। 'इव करोति' 'एव करोति' इत्यादिसंस्कृतविवरणं तु भ्रममूलकम् इवकारोपादाने उत्प्रेक्षाया एव सम्भवाद् वस्तुव्यञ्जकतोदाहरणानुपपत्तेः, एवकारस्थाने तु वकारादेशोऽसाधुः।

अत्रेत्यादि । कामिनामसो राजा स्मर इति प्राथमिकं व्यङ्ग्यम् । तत्र च त्रिभुवनराज्यपदस्याक्षेपकत्वस्व-रूपमानान्तरसंवलनादसाधारण्यम् । तेन च व्यङ्ग्येन ये स्मरराज्यगोचराः कामिनः, तेभ्यस्तानुद्दिश्य, तदादेशः स्मराज्ञा, तत्पराङ्मुखः कश्चिदपि कामी न भवतीति व्यज्यते तत्पराङ्मुख इतीत्यन्तस्यार्थः ।

तत्पराङ्मुखीभावाभावस्य व्यङ्ग्यस्य व्यङ्ग्यान्तरं महावाक्यव्यङ्ग्यशृङ्गारोपकारकतया पृथक्कृत्य निर्दि-शति — जाग्रद्भिरिति । तेभ्य इत्यत्र निर्धारणविभक्तिभ्रमो न कार्यः, चतुर्थ्याः पञ्चम्या वा तत्रासाधुत्वात् । 'कैलासस्य प्रथम' इत्यादौ तु न किमपि पदमसाधारणं व्यञ्जकमिति ध्येयम् ।

**निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले ।**

**दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्यसमुन्मिषन्त्यवस्थाः ॥८५ ॥**

**[११]**

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपद-द्योत्यो विरोधः ।

---

### सङ्केतः

निशितेति । अराले वक्रे वयसि तारुण्ये । व्यतिकरं मिश्रीभावम् । अवस्थाः अभिलाषचिन्तादयः । अयं भावः—अवस्थानां यौगपद्येनोत्पत्तौ मिथोविरोधः इति ।

### बालचिन्तानुरञ्जनी

कविप्रौढोक्तिनिर्मितेन वस्तुना अलङ्कारव्यङ्ग्यपदद्योत्यमुदाहरति निशितेति । कामः कृती, अराले वक्रे वयसि तारुण्ये निशितशरबुद्ध्याङ्गनाया दृशि स्वसामर्थ्यमर्पयति । सा च यत्र यत्र निपतति तत्र तत्र किमवस्थाः अभिलाषचिन्ताद्याः व्यतिकरं मिश्रीभावं प्राप्य समुन्मिषन्ति ।

अत्र व्यङ्ग्यमलङ्कारमाह अत्रेति । व्यतिकरपदार्थरूपेण वस्तुना कविप्रोढोक्तिनिर्मितेनाभिलाषचिन्तादीनामवस्थानां सुखदुःरूपाणां परस्परविरुद्धानां यौगपद्यमसंभाव्यमिति विरोधालङ्कारो व्यज्यत इत्यर्थः ।

### काव्यादर्शः

'अराले' वक्रे तारुण्यरूपे । 'सा' इति दृक् 'व्यतिकरं' मिश्रीभावम् । अवस्था अभिलाषाचिन्तनाद्या दश । तासां चान्योन्यविरुद्धानां यौगपद्यमसंभाव्यमिति विरोधालंकारो व्यङ्ग्यः ।

### विवेकः

निशितेत्यादि— अराले वक्रे वयसि तारुण्यरूपे । सेति दृक् । व्यतिकरं मिश्रीभावमेत्य । अवस्था अभिलाषचिन्तनाद्याः ।

### दीपिका

अराले विविधवैदग्धीगहने वयसि यौवने । व्यतिकरं मिश्रीभावम् । अवस्थाः क्षणनिर्वेदोन्मादचाटुकाक्ववहित्थाद्याः ।

### साहित्यचूडामणिः

युगपदिति। इतरथा व्यतिरेकानौचित्यात्।

### सम्प्रदायप्रकाशिनी

निशितशरेति। अराले वक्रे यौवन इत्यर्थः। निशितशरधिया दृशि स्वबलं विश्वविजयसामर्थ्यमर्पयति। अत्रोत्तरार्धार्थो हेतुः। व्यतिकरो विजातीयसम्भेदः।

अत्र वस्तुनेति। वस्तु स्वबलार्पणरूपम्।

### विस्तारिका

वस्तुमूलालङ्कारमाह— निशितेत्यादि। अराले कुटिले विदग्धयौवन इत्यर्थः, व्यतिकरः परस्परसम्बन्धः। एत्य प्राप्य। एतेन सम्बन्धस्यास्वाभाविकत्वम्। अवस्था हसितरुदितप्रलपितमूर्च्छितादयः। युवत्या दृशि कामस्य स्वबलार्पणं प्रौढोक्तमेव।

### सारबोधिनी

निशितेति। अराले कुटिले, सर्वकामिहिंस्रत्वात्। अवस्थाः हसितरुदितप्रलपितमूर्च्छितादयः।

### काव्यप्रदीपः

वस्तुनालंकृतेर्यथा—

**निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले।**
**दिशि निपतति सा च यत्र तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः॥**

अत्र व्यतिकरमेत्यावस्थाः समुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि निर्वेदोन्मादादयोऽवस्था भवन्तीति विरोधालंकारो व्यतिकरपदेन प्राधान्येन व्यज्यते।

### आदर्शः

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह निशितेति। अराले युवत्या वक्रभावहेतुत्वेन कुटिले वयसि यौवने सति सुदृशो दृशि अनङ्गो निशितस्वशरधिया स्वबलमर्पयति, सा चार्पितबला दृग् यत्र दिशि निपतति तत्र दिशि अवस्था अर्थाद् यूनां विरहकालीनाः क्रमिक्यो दश दशाः व्यतिकरं मिलनम् एत्य समुन्मिषन्ति जायन्ते। दशावस्थाश्च—

**अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः।**
**अधृतिश्चाप्यनालम्बस्तन्मयोनमादमूर्च्छनाः।**
**मृतिश्चेति क्रमाज् ज्ञेया दश स्मरदशा इह॥**

इति **वात्स्यायनोक्ताः** । तासाञ्च क्रमिकाणां युगपदुन्मेषरूपं वस्तु वाक्यार्थः स्वतोऽसम्भवात् **कविप्रौढोक्त्यैव सिद्धं**, तद्व्यङ्ग्यश्चात्र क्रमिकाणां युगपदुन्मेषो विरुद्ध इत्येवंरूपो विरोधालङ्कारः, स च युगपत्ताबोधकव्यतिकरपदप्रकाश्य इत्याह—अत्रेति । परस्परविरोधोऽत्र कालिकः तदलीकत्वादविरोधः । स च विरोधो महावाक्यव्यङ्ग्यस्य नायिकादृष्टयुवजनशृङ्गारस्य प्रकर्षकः युगपद्विरुद्धसर्वावस्थोदयेन तेषां शृङ्गाराधिक्यलाभात । **'केसेसु बलामोडिअ'** इत्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम् ।

## सुधासागरः

अत्रैव वस्तुनाऽलङ्कृतेः पदप्राधान्येन व्यक्तिमुदाहरति—निशितेत्यादि । पुष्पिताग्रा छन्दः । अनङ्गः कामदेवो निशितशरधिया तीक्ष्णबाणबुद्ध्या अराले कामिहिंस्रत्वात्कुटिले वयस्यभिनवतारुण्ये वर्त्तमानायाः सुदृशो मृगाक्ष्याः दृशि कटाक्षे, स्वबलं स्वकीयमोजोऽर्पयति ददाति, अत एव सा दृष्टिश्च यत्र दिशि यस्मिन् कामिशरीरात्मकप्रदेशे, दिशि स्थिते कामिजने वा निपतति, तत्र विषयेऽवस्थाः हसितरुदित-प्रलपित-मूर्च्छितादयो व्यतिकरमेत्य समुन्मिषन्ति युगपद् भवन्तीत्यर्थः ।

अत्र व्यतिकरमेत्यवस्थाः समुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि हसितरुदितनिर्वेदोन्मादादयोऽवस्था भवन्तीति विरोधालङ्कारो व्यतिकरपदप्राधान्येन व्यज्यते ।

तदेतद्वृत्तिकृदाह—अत्र वस्तुनेत्यादि ।

## विवरणम्

कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमुदाहरित— निशितेति । धीस्तात्त्विकी विवक्षिता, तेन नात्र भ्रान्तिमदादिरलङ्कारो न च वस्तुनः स्वतःसम्भवित्वम् । अबाले बाल्येतरत्र यौवने । 'अराले' इति पठित्वा 'कुटिले यौवने' इत्यपि व्याचक्षते । व्यतिकरः अन्योन्यसम्बन्धः । अवस्था दशाः,

**"अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः ।**
**अधृतिश्चाप्यनालम्बस्तन्मयोन्मादमूर्च्छनाः ॥** मृतिश्च"

इति गणिता दश दशाः ।

अत्रेति । युगपदवस्था इति प्राथमिकं व्यङ्ग्यम् । तत्रावस्थानां यौगपद्ये व्यतिकरपदस्य सम्बन्धत्वेन शक्तिरपि विद्यत इति मानान्तरसंवलनादसाधारणी व्यञ्जकता व्यतिकरपदस्येति ध्येयम् ।

तस्य व्यतिकरपदव्यङ्ग्यस्य समुच्चयालङ्कारस्य व्यङ्ग्यमलङ्कारान्तरमपि निर्दिशति — परस्परेति । यौगपद्यं व्यतिकरपदार्थ एव । विरोधमात्र व्यङ्ग्यमिति गौडमतं गर्हणीयम्, दशानां गुणक्रियारूपाणां यौगपद्यस्यालङ्कारतया वस्तुव्यञ्जकतोदाहरणानुपपत्तेः । 'केसेसु' इत्यादौ न तथा किमपि पद व्यञ्जकमतो वाक्यार्थ एव तथेति दिक् ।

**वारिज्जंतो वि पुणो संदावकदत्थिएण हिअएण।**
**थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो।८६ ।। [१२]**

अत्र विशुद्धजातित्वलक्षणहेत्वलंकारेण हारोऽनवरतं कम्पमान एवास्ते, इति ण चलइपदद्योत्यं वस्तु ।

---

### सङ्केतः

वारिज्जंतो इति। विरहे हारस्य असुखायमानत्वात् वार्यमाणत्वम्। स्तनभर एव वयस्यः यस्य सोऽपि विषमोन्नतत्वात् यतः चलयत्येनं अत एव मित्रीभूतः स्तनभरः। मित्रं हि स्वमित्रानिष्टं वारयतीति। परं हारः न चलति न त्रुट्यति, किन्तु कम्पमान एवास्ते। हृदयं संतप्तं सत् 'हार ! त्वं मां तापयसि' इति तं निवारयति। मम तु स्तनभर एव वयस्यः सन्तापभागित्वात् इति, स एव मया सार्धं तापं अनुभवतु, त्वमपि किमित्यत्र? इति वार्यमाणोऽपि विशुद्धजातित्वात् हेतोः न चलति, किं तु — किमत्र भावि? इति कम्पते।

### सङ्केतः (रुय्यकः)

**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।**
**स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥**

### बालचित्तानुरञ्जनी

कविप्रौढोक्तिनिर्मितेनालङ्कारेण पदद्योत्यं वस्तुव्यङ्ग्यमुदाहरति वारिज्जन्तो इति। संदावकदत्थिएण सन्तापकदर्थितेन, थणहरवअस्सएण स्तनभरवयस्येन हृदयेन वारिज्जन्तो विपुणो पुनः विसुद्धजाई विशुद्धजाति, तस्या हारः ण चलइ चलति। विरहावस्थायां सन्तप्तेन हृदयेन, मत्समदुःखभागित्वेन वयस्या स्तनभर एव सन्तापमनुभवितुं त्वं कथमनुभवसीति निवार्यमाण इत्यर्थः। व्यङ्ग्यं वस्त्वाह अत्रेति। विशुद्धजातिरिति पदार्थ-रूपेण कविप्रौढोक्तिनिर्मितेन काव्यलिङ्गाख्येनालङ्का रेण किमत्र वार्यमाण इत्यर्थः। व्यङ्ग्यं वस्त्वाह अत्रेति। विशुद्धजातिरिति पदार्थरूपेण कविप्रौढोक्तिनिर्मितेन रूपकालङ्कारेण किमत्र भवतीति कम्पमान एवास्ते। वस्तु व्यज्यत इत्यर्थः।

### काव्यादर्शः

'वार्यमाणोऽपि पुनः संतापकदर्थितेन हृदयेन स्तनभरवयस्येन'। स्तनभरो हि विषमोन्नतत्वाद्धारं (वारं) चलयन् मित्रीभूतः। विशुद्धजातिर्न चलत्यस्या हारः, किंतु कम्पमान एवास्ते, न त्रुट्यति। विशुद्धजातित्वलक्षणः पदार्थरूपो हेतुः। हेत्वलंकारेणेति। काव्यलिङ्गेन।

**विवेकः**

वारिज्जन्तो वीत्यादि — वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन । स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः । विशुद्धाभिजना हि परार्थे जीवितमपि त्यजन्ति न पुनः स्वधर्माच्चलन्तीति ।

**दीपिका**

सन्दाबो सन्तापः, वअस्सतए वयस्यतया । से तस्याः । अत्रेति—विशुद्धजातयो हि न स्वसन्निवेशाच्चलन्ति ।

**साहित्यचूडामणिः**

वारिज्जन्तो इति ।

**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।**
**स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥ इति ।**

विरहवेदनातुरायां हारादिशिशिरोपचारद्वेषिण्यां नायिकायां सख्या उक्तिः । विशुद्धा निर्मिला जातिरुत्पत्तिर्यस्येत्यभिधा । आश्रयपरित्यागादिदोषशून्यजातिरिति व्यञ्जनम् । कम्पमान एवेति । किं भविष्यतीति भीत्या । चलति मोक्तुं प्रभवति ।

**सम्प्रदायप्रकाशिनी**

वारिज्जन्तो वीति ।

**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।**
**स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥**

सन्तापकदर्थितेन हृदयेन वारितोऽपि कम्पान्न चलति कम्पमान एव वर्तत इत्यर्थः ।

**मधुमती**

तस्याः हारः न चलति नापसरति । कीदृशः हृदयेन वार्यमाणोऽपि । अर्थात् तस्याः उत्प्रेक्षागर्भं चेदं विशेषणम् । तेन 'हृदयेनेव' इति गम्यते । कीदृशेन हृदयेन ? सन्तापकदर्थितेन । हारस्य गाढालिङ्गनान्तरायतया यः सन्तापः तत्कदर्थितेन इत्यर्थः । गाढालिङ्गनान्तरायत्वे हेतुमुक्तं विशेषयति— स्तनभरेति । हारेण सहालिङ्गनेन स्तनयोः पीडा मा भूत् इत्यभिसन्धिः । एवं च— विपरीतरतावस्थेयं इति बोद्धव्यम् ।

**विस्तारिका**

अलङ्कारव्यङ्ग्यं वस्तवाह — वारिज्जन्तो इति ।

**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।**
**स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥**

हारभारवारकत्वेन हृदयस्य स्तनवयस्यता। चलनाभावे विशुद्धजातित्वं हेतुः, तदाह हेत्वलङ्कारेणेति।

### काव्यप्रदीपः

अलंकारेण वस्तुनो यथा —

**वारिज्जन्तो वि पुणो संदावकदत्थिएण हिअएण।**
**थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो॥**

अत्र स्तनभारवयस्येन विशुद्धजातित्वाद्धारो न चलतीति हेत्वलंकारेणानवरतं कम्पमान एव हारोऽस्तीति वस्तु न चलतीति पदेन व्यज्यते।

### आदर्शः

कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्तु पदप्रकाश्यमाह वारिज्जंतो वीति—

**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।**
**स्तनभरवयस्यतयां विशुद्धजातिर्न चलति तस्या हारः॥ इति संस्कृतम्।**

सन्तापकदथितेन हृदयेन पुनः पुनर्वार्यमाणोऽपि तस्या हारो विशुद्धमुक्ताजातीयघटितः, स एव च श्लेषाद् विशुद्धब्राह्मणादिजातीयत्वेन अध्यासितः स्तनभरस्य वयस्यतया न चलति नापगच्छति विशुद्धजातीयस्य वयस्यत्यागाभावादित्यर्थः। पुनरित्यत्र पुनः पुनरित्यर्थः। एवञ्च विशुद्धजातित्वमनपगमे हेतुरिति हेत्वलङ्कारो वाक्यार्थः कवि प्रौढोत्तयैव सिद्धः, तस्यानपगमहेतुत्वस्यारोप्यत्वेनावास्तवत्वात्। तद्व्यङ्ग्य वस्त्वाह— हारोऽनवरतमिति, वार्यमाणस्यानपगमे कम्प-नैयत्यात्, अत एव न चलतीति पदद्योत्यं तत्, नञर्थस्य कारकत्वाभावात् तदन्वयेन व्यञ्जकस्यापि न चलतीत्यस्य असमासेऽपि पदत्वमेवेति प्राग् दर्शितम्। व्यङ्ग्येन हारकम्पेन च महावाक्यव्यङ्ग्यस्य नायिकविप्रलम्भस्य प्रकर्षः हारकम्पकतापेन विप्रलम्भातिशयलाभात्। गाढालिङ्गनेत्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम्।

### सुधासागरः

अत्रैवालङ्कारेण वस्तुनो व्यक्ति पदप्राधान्येनोदाहरति — वारिज्जेत्यादि। गीतिश्छन्दः। लक्षणमुक्तं प्राक्।

**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।**
**स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः॥** इति संस्कृतम्।

नायिकाया विपरीतरताचरणसूचिकेयं कवेः प्रौढोक्तिः। अस्याः सुन्दर्याः, विशुद्धजातिर्निर्मलतरमुक्तामयो हारः हारस्य गाढालिङ्गनान्तरायतया यः सन्तापस्तेन कदर्थितेनातिखिन्नेन हृदयेन पुनर्वार्यमाणोऽपि मुहुरपसार्यमाणोऽपि सन् स्तनभरवयस्येन स्तनरूपवयस्यस्य पीडा माभूदित्यभिप्रायेण न चलति, विशुद्धजातित्वाद्धेतोः कुचभररूपमित्रादपादानान्नापसरतीत्यर्थः, कुलीनाः खलूत्कटक्लेशेऽपि मित्रं न त्यजन्तीति भावः, वयस्येनेति तृतीया

चलनाभावायोगे पञ्चम्यर्थसाधारणार्थिका, तथा च वयस्यतो न चलतीत्यर्थो नासङ्गतः, अत एव 'अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः' इति सूत्रेण तृतीयान्ताद्वा तसिर्विधीयते । अव्यथनं चाचलनमिति व्याख्यातं वैयाकरणैः । चारित्र्येण न चलति चारित्र्यतो न चलतीत्युदाहृतं चेति द्रष्टव्यम् ।

अत एव प्रदीपकारैरुक्तम् — अत्र स्तनभरवयस्येन विशुद्धजातित्वात् हारो न चलतीति हेत्वलङ्कारेणानवतरतं कम्पमान एव हारोऽस्तीति वस्तु चलतीति पदेन व्यज्यते इति ।

यत्तु रविभट्टाचार्यादिभिः स्तनभरवयस्येनेति हृदयविशेषणतया व्याख्यातम् । तद् विद्वद्भिर्नादरणीयम् । सर्वमेतदभिप्रेत्य वृत्तिकृदाह — अत्र विशुद्धजातित्वेत्यादि । अनवरतं कम्पमानः पुरुषायिते नायिकायाः पतनोत्पतनात् ।

## विवरणम्

कविप्रौढोक्तिसिद्धेनालङ्कारेण व्यञ्जनीयं वस्तुपदप्रकाश्यमुदाहरति — वारिज्जंतो इति ।

**"वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।**
**स्तनभरवायस्य केन विशुद्धजातिर्न चलत्यस्या हारः ॥"** इति च्छाया ।

वायस्यकं सौहृदम् तदपि स्ववृत्त्यसाधारणधर्मेण सुचिरसंवासेन प्रयुक्तम् । वयस्केनेत्येव प्राकृतस्य प्रकृतिः । हृदयेन स्तनभरेण च वार्यमाणोऽपीत्यर्थ इति प्राञ्चः । अत्र धमधमायमानहृदयाभिघातो हृदयकर्तृकवारणत्वेनाध्यवसीयते । तत्र वारणे शीतलद्रव्यसंयोगादधिकवर्धमाना सन्तापबाधा हेतुत्वेनोत्प्रेक्ष्यते । न चलतीति न दूरमपसरतीत्यर्थः । तत्र स्तनभरवायस्यकं विशुद्धजातित्वं च हेतुतया निर्दिश्यते । चस्त्वर्थः । वयस्येन तु वार्यमाण इत्यन्वये तु विशुद्धजातित्वमात्रमचलनहेतुर्मूलस्वरससिद्ध्यते । उपसर्गस्येव नञोऽपि शाब्दिकमते व्यञ्जकतामात्रत्वान्न चलतीत्यस्य द्विपदत्वेऽपि न वाक्यत्वमित्याशयेनाह — अत्रेति । अनवरतत्वलाभः पौनःपुन्यार्थकपुनःपदोपादानात् । कम्प ईषच्चलनम्, तत्र न चलतिपदस्य नञ ईषदर्थव्यञ्जकतया मुख्या वृत्तिरपि सम्भवतीति मानान्तरसहकारादसाधारणी व्यञ्जकताऽवसेया । 'गाढालिङ्गन' इत्यादौ न किमपि तादृशं पदमिति ध्येयम् ।

**सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो।**
**तीए खंधाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥८७॥ [१३]**

अत्र रूपकेण मुमुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः।

---

**सङ्केतः**

अत्र रूपकेणेति। धम्मिल्लः संयतः केशपाशः। स एव स्मरः इति रूपकम्। स्मरो हि किल अभिलाषं उत्पादयतीति।

**सङ्केतः (रुय्यकः)**

**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।**
**तस्याः स्कन्धेन बलं लहिअ (लब्ध्वा) स्मरः सुरतसंगरे जयति॥**

**बालचित्तानुरञ्जनी**

सोमुद्धेति। मुद्धसामलंगो मुग्धश्यामलाङ्गः। कलिअललिअणिअदेहो कलितललितनिजदेहः धम्मिल्लो धम्मिल्लः केशपाशः स एव सरो सरः, तीए तन्व्याः, खंधाइ स्कन्धाद्धेतो बलंलहिअ लब्ध्वा सुरअसंगरे सुरतसङ्गरे जअइ जयति।

अत्र व्यङ्ग्यमलङ्कारमाह अत्रेति। कविप्रोढोक्तिनिर्मितेन रूपकालङ्कारेण रतिलक्षणकारणाभावे च अभिलाषलक्षणकार्योत्पत्तिरूपो विभावनाख्योऽलङ्कारो व्यज्यत इत्यर्थः।

उपसंहरति एष्विति।

**काव्यादर्शः**

**'स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।**
**तस्याः स्कन्धेन बलं लब्ध्वा स्मरः सुरतसंगरे जयति॥'**

(छाया) स्मर इव स्मरः। स ह्यभिलाषमुत्पादयति। कविप्रौढोक्तीति। कवेरेव समयितव्यवस्त्वर्पणकुशलोक्तिः।

## विवेकः

सो मुद्धेत्यादि— स मुग्धश्यामलाङ्गो धम्मिल्लकलितललितनिजदेहः । तस्याः स्कन्धेन बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति । धम्मिल्लः संयतः केशपाशः, स एव स्मर इति रूपकम् ।

## दीपिका

सरो स्मर एवेति रूपकम् ।

## साहित्यचूडामणिः

सो इति ।

**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।**
**तस्याः स्कन्धाद् बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ।। इति ।**

रूपकेण धम्मिल्लः स्मरः कन्दर्पः इत्याकारेण रति विरतावपीति । 'तद् द्वितीयसुरतस्य बभूवेति' न्यायात् ।

## सम्प्रदायप्रकाशिनी

सो मुद्धेति ।

**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।**
**तस्याः स्कन्धाद् बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ।।**

इति धम्मिल्लस्य स्मरत्वेन रूपणम् । स्कन्धशब्दः धम्मिल्लावलम्बनभूतमंसं सेनासन्निवेशरूपं चाह ।

रतिविरतावपीति विभावनाबीजभूतोऽभिलाषकारणभाव उक्तः । अथ कविनिबद्धचतुष्कोपसंहारः — एषु कविप्रौढोक्तिमात्रेति ।

## विस्तारिका

अलङ्कारमूलालङ्कारमाह — सो मुद्धेति ।

**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।**
**तस्याः स्कन्धाभ्यां बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ।।**

स्कन्धोऽसः सेनानिवेशश्च । बलं सामर्थ्यं सैन्यञ्च । धम्मिल्लः स्मर इति रूपकम् । तीए नायिकायाः स्मरस्य च ।

## सारबोधिनी

सो मुद्ध इति ।

**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।**
**तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ।।**

कलितेत्यादि स्मरविशेषणम् । स्कन्धादिति स्कन्धशब्देन शोभातिशयो व्यज्यते । धम्मिल्ल एव स्मर इति रूपकम् । स्कन्धोंऽशः सेनानिवेशश्च । बलं सामर्थ्यं सैन्यञ्च ।

**काव्यप्रदीपः**

अलंकारेणालंकारस्य यथा —

**'सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो ।**
**तीए खन्धाहि बलं गहिअ सरो सुरअसंगरे जअइ ।।'**

अत्र सुरतसंगरे धम्मिल्लः स्मर इति रूपकालंकाराभ्यां तथा केशपाशः स्कन्धे पतितो यथा रतिविरतावप्यनिवृत्तेच्छः कामुकोऽभूदिति विभावनास्कन्धपदप्राधान्येन व्यज्यते ।

**आदर्शः**

कविप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह सो सुद्धेति ।

**स शुद्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः ।**
**तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ।** इति संस्कृतम् ।

रत्युत्तरं नायिकास्कन्धपतितश्लथबन्धकेशदर्शनात् पुनरुद्दीप्तमदनस्य नायकस्य पुनः सुरतवर्णनमिदम् । धम्मिल्लः संयतः केशपाशः । शुद्धश्यामलाङ्गः स एव, शुद्धः श्यामलाङ्गः स्मरः तस्या नायिकायाः स्कन्धाद् बलं गृहीत्वा सुरतसङ्गरे जयति पुनः सुरतयुद्धप्रवर्त्तकत्वादुत्कर्षवानित्यर्थः । मुग्धेति पाठे मुग्धश्यामलाङ्ग इति संस्कृतम् । कीदृशः ? कलितधम्मिल्लात्मकललितनिजदेहः । अत्रेति श्यामलाङ्गः स्मरस्य प्रसिद्धत्वमत्रारोप्यैवोक्तम्, स्मरस्य तथात्वाभावात् । तथाच तदभेदस्य धम्मिल्ले रूपकघटकोद्दीपकत्वधर्मेण तत्सदृशे उद्दीपकान्तरे स्मरे वाऽदर्शनाद् रूपकमिदं कविप्रौढोक्त्यैव सिद्धम्, तद्व्यङ्ग्यमलङ्कारमाह रतिविरतावपीति । अभिलाषहेतो रत्यनुत्तरकालस्याभावेऽपि अभिलाषरूपफलव्यक्त्यात्मिका विभावनेत्यर्थः,

'क्रियायाः प्रतिरोधेऽपि फलव्यक्तिर्विभावना' ।

इति तल्लक्षणे क्रियापदस्य कारणमात्रपरत्वेन रत्यनुत्तरकालस्यापि क्रियापदार्थत्वात् । तस्याः स्कन्धपदद्योत्यतामुपपादयति — मुहुराकर्षणेनेति, आकर्षणात् स्कन्धप्राप्तेः प्रायशो रत्युत्तरं सम्भवात् रत्यनुत्तरकालाभावप्रापकं स्कन्धपदं तद्द्योतकम् । तत्कालीनाभिलाषात्मिकया च विभावनया महावाक्यव्यङ्ग्यशृङ्गाररसोत्कर्षः स्फुट एव । जा ठेरं व हसन्तीत्यादो तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम् ।

**सुधासागरः**

अत्रैवालङ्कारेणालङ्कारव्यक्तिं पदप्राधान्येनोदाहरति — सुमुद्धेत्यादि । गीतिश्छन्दः । लक्षणमुक्तं प्राक् ।

**सुमुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिज देहः।**
**तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति॥**

इति संस्कृतम्। सुमुग्धः सुगन्धतैलादिसंस्कारेणातिमनोहरः श्यामलमङ्गं यस्य स तादृशो धम्मिल्लः केशपाश एव कलितो धृतो ललितः सुन्दरतमो निजदेहः स्वशरीरं येन तथाभूतः स्मरः कामस्तस्याः नायिकायाः स्कन्धादंसात् सेनानिवेशाच्च बलं सामर्थ्यं सैन्यं च गृहीत्वा सुरत एव सङ्गरे जयतीत्यर्थः। अत्र रूपकेणेत्यादिवृत्तिः। स्पष्टार्था।

## विवरणम्

कविप्रौढोक्तिसिद्धस्यालङ्कारस्य व्यङ्ग्यमलङ्कारं पदेन परम्परया प्रकाश्यमुदाहरति — सो मुद्धेति।

**"स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।**
**तस्याः स्कन्धाद् बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति॥"** इति च्छाया।

धम्मिल्लस्याचेतनस्य स्कन्धापादानकं बलग्रहणं न सम्भवतीति न स्वतः सम्भवित्वम्। स्कन्धाभ्यां बलं गृहीत्वा कलितो ललितो निजो देहो येनेति वाक्यार्थः। तेन स्वभावेन मुग्धश्यामलस्यापि स्कन्धवलग्रहेण विशेषलालित्यं बुध्यते। अत्रेत्यादिरूपकेण विभावना प्रकाश्यत इति पूर्वापराभ्यामन्वयः। रूपकेण धम्मिल्लः स्मर इति रूपकेण। विभावनाकारमाह— यथा रतीति। अभिलाषविरोधिन्या रतिनिवृत्तेः सत्त्वेऽप्यनिवृत्ताभिलाषस्वरूपफलव्यक्तिरिति तदर्थः।

ननु कथमत्रासाधरणी 'स्कन्धाभ्याम्' पदस्य द्योतकतेत्याकाङ्क्षायामाह— मुहुरित्यादि। अयं भावः— स्कन्धाभ्यामिति पञ्चम्या स्कन्धयोरपादानत्वं वर्ण्यमानं स्कन्धप्राप्तिं विनाऽनुपपन्नमिति मानान्तरसहकृतया व्यञ्जनया धम्मिल्लस्य स्कन्धप्राप्तिं गमयति। अत एवास्यासाधारणं व्यञ्जकत्वम्। धम्मिल्लस्य संयतकचानां स्कन्धप्राप्तिराकर्षणं हेतुतया गमयति। तत्रैव हेत्वलङ्कारेऽसाधारणं गमकत्वम्। स च हेत्वलङ्कारः स्मराभेदरूपकस्य जयतिपदोपात्ताया उत्कृष्टवृत्तेश्च सहकारेण कथितविभावनामभिव्यनक्तीति भावः। एवञ्च व्यञ्जकपरम्परापतिते कुत्राप्यसाधारणव्यञ्जकतया सम्पूर्णपरम्परायास्तथात्वम्। कस्यचिदर्थस्याभिधामूलव्यञ्जनागम्यत्वे तद्व्यङ्ग्यालङ्कारादिव्यञ्जनानामप्यभिधामूलत्वमिति ध्येयम्। 'जा ठेरं' इत्यादौ न तादृशं पदमिति वाक्यार्थ एव व्यञ्जकः।

**णवपुण्णिमामिअंकस्स सुहअ को त्तं सि भणसु मह सच्चम्।**

**का सोहग्गसमग्गा पओसरअणि व्व तुह अज्ज ॥८८॥ [१४]**

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादिपओसेत्यादि पदद्योत्यं वस्तु व्यज्यते।

---

### सङ्केतः

णवेति। पूर्णेन्दुरपि क्षणमेवानुरज्यते तथा प्रदोषरजन्यपि। को तं सि? केन सौजन्येन सबद्धो भवसीत्यर्थः।

### सङ्केतः (रुय्यकः)

**नवपूर्णिमा शशाङ्कस्य सुभगः कस्त्वमसि भण मन सत्यम्।**

**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य॥**

### बालचित्तानुरञ्जनी

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन तेन वस्तुना पदद्योत्यं व्यङ्ग्यमुदाहरति णवपुण्णिमेति। सुहअ हे सुभग, तं त्वं, णवपुण्णिमामिअंकस्स नवपूर्णिमामृगाङ्कस्य, को कः सि असि, मह मम, सच्चं सत्यं भणसु कथय, तह तव, अज्ज अद्य, सोहग्ग समग्गा सौभाग्यसमग्रा स्त्री पओसर अणिछ प्रदोषरजनीव।

अत्र व्यङ्ग्यं वस्त्वाह अत्रेति। कविना निबद्धा खण्डिता स्त्री वक्त्री तत्प्रौढोक्तिना वाच्यरूपेण यथा रजन्या चन्द्रोदयकाल एव रक्तस्तथा तस्यां त्वं प्रथममेव वानुरक्तः। ततः पश्चात् तत् इति वस्तु नवपदद्योत्या प्रदोषरजनी क्षणमात्रमेव सौभाग्यसमग्रा तथा सापीति यत्र समग्रा सेत्यादि पदद्योत्यं वस्तु चार्थशक्त्युद्भवतया व्यज्यत इत्यर्थः।

### काव्यादर्शः

'नवपूर्णिमामृगाङ्कस्य कस्त्वमसि' 'प्रदोषरजनीव का तवाद्य'। प्रदोषरजन्यां हि क्षणमात्रं प्रथममनुरक्तश्चन्द्रो भवति। अत्र कविना खण्डिता वक्त्री या निबद्धा तत्प्रौढोक्त्या निष्पन्नेन वाच्येन वस्तुरूपेण 'तस्यां त्वं प्रागेव रक्तः' इति वस्तु नवपूर्णिमामृगाङ्कस्यति 'प्रदोषरजनी वा' इति पदप्रकाश्यमर्थशक्तिमूलतया व्यज्यते।

## विवेकः

णवेत्यादि — नवपूर्णिमामृगाङ्कस्य सुभगः कस्त्वमसि भण मम सत्यम् । का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ नव पदेन तरलत्वं पूर्णिमापदेन नायिकाऽन्तरसंसर्गः मृगाङ्कपदेन ख्यातं धुत (धृत) कलङ्कत्वं, प्रदोषपदेन प्रकृष्टदोषत्वमपि, रजनीपदेन रागित्वमपि ।

## दीपिका

मात्रेति—बहिः सम्भवाभावात् । त्तं सि त्वमसि ।

## दर्पणः

**नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।**

**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥**

अत्र नवपदेन नवमत्वं पूर्णिमापदेन नायिकानामपि नायिकान्तरसंसर्गः मृगाङ्कपदेन ख्यातेः कलङ्कत्वम् । प्रदोषपदेन प्रकृष्टदोषत्वम् । रजनीपदेन रागित्वम् ।

## साहित्यचूडामणिः

णवेति ।

**नवपूर्णिमामृगाङ्कस्य सुभग ! कस्त्वमसि भण भम सत्यम् ।**

**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य** ॥ इति ।

नवपूर्णिमाचन्द्रस्य त्वं काऽसि किं कनिष्ठो ज्येष्ठो वेति भावः । न ततः पश्चान्नानुरक्तः, हरिद्रारागोऽसीति यावत् ।

## सम्प्रदायप्रकाशिनी

णवपुण्णिमेति ।

**नवपूर्णिमामृगाङ्कस्य भण कस्त्वमसि सुभग मम सत्यम् ।**

**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥**

नवेति रागाविलत्वम् । पूर्णिमामृगाङ्केति प्रदोषकालाभिगमः ।

वस्तुना कस्त्वमसीति सोपालम्भानुयोगरूपेण । अद्य का तवेति कथनात् पूर्वमप्यहमिवान्यास्तीति यत् प्रतीतं तदु (त्पा ? पपा) दयति— मयीवान्यस्यामिति न तत इति मदनन्तरं न भव (ती ?) ति, अपि तु मत्समकालमेवेत्यर्थः ।

## विस्तारिका

कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नव्यङ्ग्यमाह — णवेति ।

**नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥**

नवः प्रथमोदितो रजनीमुखं प्रदोषः अनयोः सम्बन्धः क्षणिक एवेत्याह — मयीवेत्यादि ।

## साबोधिनी

**नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ।**

अत्र नवपदेन तरलत्वं पूर्णिमापदेन नायिकान्तरसंसर्गः मृगाङ्कपदेन ख्यातकलङ्कत्वं प्रदोषपदेन प्रकृष्टदोषत्वं, रजनीपदेनानुरागित्वं व्यज्यते । नवः प्रथमोदितः प्रदोषो रजनीमुखम् । अनयोः संबन्धः क्षणिक एवेत्याह मयीत्यादि । ननु प्रदोषरजनीवेत्युपमानैरपेक्ष्येण कथं व्यञ्जकत्वमिति चेन्न, तदनुपादानेऽपि व्यञ्जनासिद्धेरिति ।

## काव्यप्रदीपः

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकार्थध्वनिभेदेषुं पदप्राधान्येन वस्तना वस्तुनो व्यक्तिर्यथा—

**णवपुण्णिमामिअङ्कस्स सुहअ को तं सि भणसु मह सच्चम् ।**
**का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥**

अत्र यथोक्तेन वस्तुनान्यस्यामपि प्रथममनुरक्तस्त्वमभूर्न तत इति वस्तु णवपुण्णिमामिअङ्कपओसरअणीपदप्राधान्येन द्योत्यते । अत्र पदे रजनीवेत्युपमानैरपेक्ष्येण कथं व्यञ्जकत्वमिति चिन्त्यम् ।

## आदर्शः

कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु पदद्योत्यमाह — णवपुण्णिमेति ।

**नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण भम सत्यम् ।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य** ॥ इति संस्कृतम् ।

उपनायिकागृहे जिगमिषुं स्वनायकमुपहसन्त्या नायिकाया उक्तिरियम् । हे सुभग नवीनपूर्णिमाचन्द्रस्य कस्त्वमसि किंसम्बन्ध्यसि पुत्रो भ्रात्रादिर्वा, तन्मम स्थाने सत्यं भणेत्यर्थः तादृशसम्बन्धित्व एव तद्धर्मक्षणिकानुरागित्वस्य त्वय्युपपत्तेरिति भावः । तथा तव सौभाग्यं समग्रं यस्यां तादृशी का अद्य चन्द्रस्य प्रदोषरजनीव, चन्द्रस्यापि प्रदोषरजन्यां क्षणिकरागात् । अत्र साधर्म्योपलम्भात् पुत्रत्वभ्रातृत्वादिरेव सम्बन्धःषष्ठ्यर्थः प्रश्नविषयः । स च अचेतनस्य चन्द्रबिम्बस्य पुत्राद्यभावादलीक इति तद्विषयप्रश्नोऽप्यलीकः कविनिबद्धाया नायिकायाः प्रौढोक्त्यैव

सिद्धः, एवं प्रदोषरजन्यां सौभाग्यस्यालीकत्वेन तदुपमितायां सौभाग्यप्रश्नोऽप्यलीकः। तत्र प्रथमप्रश्नव्यङ्ग्यं वस्त्वाह—मयीवेति। चन्द्रस्य नवत्वेन तदीयरक्तिमार्थके रक्तपदे स्मारिते श्लिष्टस्य तस्यार्थयो रक्तिमानुराग-योरेकत्वाध्यासात् (ध्यवसायात्?) प्रथममनुरक्तस्त्वमित्यन्तं वस्तु व्यङ्ग्यं तच्च णवेत्यादिपप्रकाश्यम्, न तत इति तु प्रदोषरजन्युपमितोपनायिकासौभाग्यप्रश्नव्यङ्ग्य तच्च महावाक्यव्यङ्ग्यस्योपहासस्य प्रकर्षकं क्षणिकानुरागित्वेन उपहासाधिक्यलाभात्। जे लङ्कागिरित्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम्।

## सुधासागरः

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकार्थध्वनि भेदचतुष्टये वस्तुना वस्तुनो व्यक्ति पदप्राधान्येनोदाहरति— णवेत्यादि। मुखविपुला छन्दः।

**नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भणतु मम सत्यम्।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य॥**

इति संस्कृतम्। काचिदनेकनारीरतलम्पटं चञ्चलचित्तमुपपतिमनङ्गीकुर्वाणा वदति —'हे सुभग नवपूर्णिमामृगाङ्कस्य त्वं कोऽसि, मम सत्यं भणतु, काऽद्य प्रदोषरजनीव तव सौभाग्यसमग्रेत्यन्वयः।

त्व सुन्दरतरीऽसि तव काचित् पुण्यकारिणी स्त्रीत्यापाततोऽर्थः, नवपदेन तरलत्वं पूर्णिमापदेन तिथ्यन्तरवन्नायिकान्तरसंसर्गः, मृगाङ्कपदेन ख्यातकलङ्कत्वम्, प्रदोषपदेन प्रकृष्टदोषत्वम्, रजनीपदेन मालिन्यं व्यज्यते, नवस्तत्कालोदितश्चन्द्रः प्रदोषो रजनीमूखमनयोः सम्बन्धः क्षणिक एवेति न त्वामङ्गीकरोमीत्यभिप्रेतोऽर्थः। तदेतदाह वृत्तिकारः— अत्र वस्तुनेत्यादि। अत्र कविनिबद्धा परकीया वक्त्री।

प्रदीपकारास्तु— अत्र पदे रजनीवेत्युपमानैरपेक्ष्येण कथं व्यञ्जकत्वमिति चिन्त्यमित्याहुः। तत्रेयं चिन्ता। इवपदानुपादाने रजनी तव केत्येतावाताऽपि व्यञ्जनासिद्धिरिति।

## विवरणम्

कविनिबद्ध (वक्तृ) प्रौढोक्तिसिद्धेषु वस्तुव्यङ्ग्यं वस्तुपदप्रकाश्य माह—णवेत्यादि।

**"नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम्।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य।"** इति च्छाया।

अत्र यद्यप्यप्राणिनश्चन्द्रस्य सम्बन्धः सोदरत्वादिर्वर्ण्यमानस्तत्सादृश्यस्य परिकल्पको भवतीति निदर्शनाऽलङ्कारस्यैव विषयो भवितुर्महति, तथापि —"अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः। निदर्शना" इतिः (तत्प्रश्नवस्तुभूत एव यत् सौभाग्यम्, अमर्त्यतया) समग्राऽद्येकेति योजना। प्रदोषरजनी प्रदोषोपलक्षिता रजनी। चन्द्रदस्य प्रदोषरजनीव तवाद्य का सौभाग्यसमग्रेति वाक्यार्थः। उत्तरार्धवाक्यस्योपमालङ्कारघटितत्वेऽपि पूर्वार्धस्यैव वस्तुव्यञ्जकतायांमिदमुदाहरण्। तदाह—प्रथममित्यादि। नवेत्यादिसमासेन च मृगाङ्केन तादात्म्यं पूर्णिमासम्बन्धश्चावगम्यते। तत्र नवतादात्म्येन प्रथममनुरागः, पूर्णिमासम्बन्धेनानन्तरमननुरागोऽवगन्तुं शक्यत इति समासस्य मानान्तरसहकृतव्यञ्जनासत्त्वादसाधारणव्यञ्जकत्वमवसेयम्। ततस्तन्मूलकः 'प्रथमं त्वमतिप्रीतः, ततो

विरक्तः' इति वैयञ्जनिको बोधः । व्यञ्जनयोपस्थितयोः प्रेमलौहित्ययोर्नाभेदाध्यवसायनियम इति न तन्मूलकोपमाध्वनिरत्रेति भावः ।

प्रसङ्गादुत्तरार्धव्यङ्ग्यमलङ्कारोत्थं वस्तु दर्शयति — अन्यस्यामपीति । अत्रापि 'प्रथममनुरक्तस्त्वं न ततः, इत्यन्वेति । प्रदोषरजनीवेति समासेन रजनौ प्रदोषोपलक्षितत्वस्याव्यावर्तकस्याभिधानाच्चन्द्रप्रयुक्तप्रथमानुरागविषयत्वतदनन्तरतदभावौ व्यञ्जनया गम्येते, अन्यथाऽपुष्टार्थतापत्तेः । तत्प्रयुक्तं च साधर्म्यमिवपदोपात्तोपमोपपादकमन्यस्यामवगम्यते । तच्च त्वत्पदार्थचन्द्रयोर्लौहित्यप्रेम्णोश्च बिम्बप्रतिबिम्बभावमूलकमित्यभिसन्धिः ।'

अद्यपदोपसन्दानस्य व्यङ्ग्यं निर्दिशति—मयीवेति । तथा च त्वत्कर्तृकास्थिरानुरागगोचरत्वरूपेणानुगामिना धर्मेणाद्यतनवल्लभाया वक्तृनायिकायाश्चोपमालङ्कारोऽप्यत्राभिव्यङ्ग्यः, तस्याः सौभाग्येऽद्यतनत्वोपादानेन दिनान्तरे स्वस्यामस्थिरानुरागभिव्यञ्जनादिति भावः । 'जे लंका' इत्यादौ तादृशमसाधारणं व्यञ्जकं पदं नास्तीत्यवसेयम् ।

**सहि णवणिहुवणसमरम्मि अंकवालीसहीए णिबिडाए।**

**हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअम्॥८९॥ [१५]**

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत् तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः।

---

**सङ्केतः**

सहीति। अङ्कपाली आश्लेषः। सैव सखी। निबिडा घना, अन्तरङ्गा च। अङ्कपालीसख्या हारः उच्चेरन्तः उच्चलन् द्वयोस्तृतीयतया। स्पर्शविघ्नहेतुतया वा अधिकीभवन् निवारित एव। घनालिङ्गनेन हारः त्रोटित एवेत्यर्थः। सखी च सुरते मानुषान्तरमुत्सारयति, अत एव हारच्छेदं यावत् मयापि आश्लेषादि दृष्टम्। तदनन्तरं किं जातमिति न जाने इत्यर्थः। ततः हारच्छेदानन्तरम्। व्यतिरेकः इति। उपमाभूतेभ्यः रतान्तरेभ्यः तस्य रतस्य अधिकत्वात् व्यतिरेकः इति भावः।

**सङ्केतः (रुय्यकः)**

**सखि निधुवनसमरे अंकपालीसख्या निबिडया।**
**हारो निवारित एवोच्छ्रीयमाणस्ततः कथं रमितम्॥**

अङ्कपाली आलिंगनं सैव सखी। निबिडा घनाऽनुरक्ता च। उच्छ्रीयमाणोऽधिकीभवन्।

**बालचित्तानुरञ्जनी**

कविनिबद्धवक्तृप्रौढोक्तिनिर्मितेन वस्तुना पदद्योत्यम्लङ्कारव्यङ्ग्यमुदाहरति सहीति। सहि हे सखि णवणिहुवणसमरम्मि नवनिधुवनसमरे, णिबिडाए निबिडायाः, अङ्कवाली सहीए अङ्कपाली सख्या अङ्कपाली-आलिङ्गनं सैव सखी तया उच्छेरन्तो उच्छ्रियमाणः द्वयोस्तृतीयतया स्पर्शविघ्नाहेतुत्वात् अधिकीभवन् हारो हारः निवारित एव। यथा सख्या रतिकाले अन्यो निवार्यते तथा। गाढालिङ्गनेन हारस्घोटित इत्यर्थः। एतावदेव मया दृष्टं, तदो ततः,कहं कथं, रमिअं रमितम्, कथयेति शेषः। अत्र व्यङ्ग्यमलङ्कारमाह अत्रेति।

**काव्यादर्शः**

अङ्कपाली आलिङ्गनम्। सैव सखी। तया निबिडयान्तरङ्गया च हारो निवारित एवोदीग्रयमाणोऽधिकी-भवन् स्पर्शविघ्नहेतुत्वात्। घनालिङ्गनेन हारस्त्रोटित इत्यर्थः। एतावत्तु मयापि दृष्टं, ततः कथं रमितम्।

## विवेकः

सहीत्यादि— सखि निधुवनसमरे अङ्कपालीसख्या निबिडया। हारी निवारित एवोच्छ्रीयमाणस्ततः कथं रमितम्। अङ्कपाली आलिङ्गनं सैव सखी। निबिडा घनाऽनुरक्ता च। उच्छ्रीयमाणोऽधिकीभवन्। यथाऽयं नवोढायाः सुरतसङ्गरस्तथा प्रौढयुवतिभिरस्माभिरप्यननुभूतपूर्व इति व्यतिरेकः।

## दीपिका

अङ्कपालिः आलिङ्गने सैव सखी। निबिडा दृढ़ा विश्वस्ता च। उच्छेरन्तो उच्छ्रियमाणः। कथमिति प्रश्नेन वैलक्षण्यसूचनाद्व्यतिरेकः।

## दर्पणः

**सखि नवनिधुवनसमयेऽङ्कपालीसख्या निबिडया।**
**हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम्॥**

अङ्कपालीति। आलिङ्गनविशेष एव सखी तदुच्छ्रियमाणोऽभिभवतु। अन्यो न्याङ्गत्वस्यात्र विघ्नदायित्वात् इति भावः। निबिडा दृढा विश्वासततिः। अत्र कथमिति प्रश्नेन पूर्वरततोऽधिकमनोहरत्वसूचनाद् व्यतिरेकः।

## साहित्यचूडामणिः

सहीति।

**सखि! नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया।**
**हारो निवारित एवोद्वर्तमानः ततः कथं रमितम्॥**

इति। अङ्कपाल्येव सखी।

अन्यदेव,

**"प्रवृत्ते रतिचक्रे तु नैव शास्त्रं न च क्रमः"**

इति क्रमेण साटोपं किञ्चित् सुरतमभूत्। व्यतिरेक इति। रतान्तरेभ्यो वैलक्षण्यात्। स च कथमित्यनेन पदेन व्यङ्ग्यः।

## सम्प्रदायप्रकाशिनी

सहि णवेति।

**सखि नवनिधुवनसमरे अङ्कपालीसख्या निबिडया।**
**हारो निवारित एवोद्ध्रियमाणस्ततः कथं रमितम्॥**

अङ्कपाली आलिङ्गनं तद्रूपया हारस्य वयस्यया हारो निबिडं निवारित एव। अतोऽसति हारे कथं रतमिति।

कीदृगित्यनेन यादृक् पूर्वं तादृङ् न भवतीति व्यतिरेकः।

## विस्तारिका

वस्तुमूलालङ्कारमाह —सहीति।

**सखि नवनिधुवनसमरे अङ्कपाल्या सख्या निबिडया।**
**हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितः॥**

तत् उद्वृण्वन् उक्तार्थतामापन्नः।

प्रसिद्धतरेभ्योऽधिकत्वेन व्यतिरेकः। 'कहम्' इति पदस्य विस्मयार्थत्वात्।

## सारबोधिनी

**सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया।**
**हारो निवारित एवोच्छ्रियमाणः ततः कथं रमितम्॥**

अङ्कपाली आलिङ्गमन। सैव सखी सुखहेतुत्वात्। "अङ्कपाली परीरम्भे कोटिधात्रिकयोरपी" ति मेदिनीकारः। निबिडा दृढ़ा विश्वस्तां च। अत्र प्रसिद्धरतेम्योऽधिकत्वेन व्यतिरेकः कहमितिपदगम्यः, तस्य विस्मयाथकत्वात्।

## काव्यप्रदीपः

अत्रैव वस्तुनालंकारस्य यथा —

**सहि णवणिहुवणसमरम्मि अङ्कवाली सहीएँ णिबिडाए।**
**हारो णिवारिओ व्विअ उच्चेरन्तो तदो कहं रमिअम्॥**

अत्र निधुवनसमर इति रूपकस्य व्यञ्जनायामप्रयोजकतया वाच्येन वस्तुमात्रेण हारच्छेदानन्तरं प्रौढ़ाङ्गनारताद्विलक्षणं नवोढायास्ते रतमभूत्तत्कथय कीदृगिति व्यतिरेकालंकारः कहंपदप्रकाश्यः।

## आदर्शः

कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारं पदद्योत्यमाह — सहि णवणिहुवणेति।

**सखि नवनिधुवनसमरेऽङ्कपालीसख्या निविडया।**
**हारो निवारितश्छित्वा उच्छ्रीयमाणस्ततः कथं रमितम्॥** इति संस्कृतम्।

स्वोद्देश्यनिधुवनप्रतिबन्धकहारनिवारकत्वेन अङ्कपाली आलिङ्गनमेव सखी अत्यन्तप्रत्यासन्नत्वेन निविडया तया छित्वा उच्छ्रीयमाणः गलितद्वित्रिमौक्तिको हारो निवारितः ततः कथं रमितमित्यर्थः। रमितमिति कारितान्तं परस्परेण परस्पररतिः कथं कारितेत्यर्थः। अत्रालिङ्गनरूपायाः सख्या हस्ताद्यभावाद् विवक्षितस्तादृशो हारच्छेदोऽलीकः, तथाच तज्जन्यरतौ प्रश्नोऽप्यलीकत्वात् कविनिबद्धायाः सख्याः प्रौढोक्त्यैव सिद्धः तद्व्यङ्ग्यमल-

ङ्कारमाह — अत्रेति । "वस्तुना" उक्तप्रश्नार्थरूपेण । 'व्यतिरेकः' उपमानाद् रत्यन्तराद् वैलक्षण्यरूपः । कहंपदेति, व्यञ्जकीभूतप्रश्नवाचकत्वात् कथंपदं व्यञ्जकम्, व्यङ्ग्यञ्च रतिवैलक्षण्यं महावाक्यव्यङ्ग्यतदुभय्शृङ्गारप्रकषक-मेव । सहि विरइउण इत्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम् ।

## सुधासागरः

अत्रैव वस्तुनाऽलङ्कारव्यक्ति पदप्रधान्येनोदाहरति — सहीत्यादि । मुखविपला छंदः ।

**सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।**
**हारो निवारित एव उद्वृण्वन् ततः कथं रमितम् ॥**

इति संस्कृतम् । काचिदत्यन्तविश्वस्ता रसज्ञा सखी नवोढामाह हे सखि नवनिधुवनसमरे नूतनसुरतसङ्ग्रामे, निबिडया प्रगल्भया, अङ्कपाली आलिङ्गनम्, 'अङ्कपाली परीरम्भे' — इति मेदिनीकारः । सैव सुखहेतुत्वात्सखी तया अङ्कपालीसख्या हारः उद्वृण्वन् सन् उक्तार्थतामागच्छन् सन् दृढालिङ्गनजनितनिजचिह्नपङ्क्तेरेव शोभाधायकत्वात्पुनरुक्ततामधिगच्छन्निति यावत् । निवारित एव निरर्थकत्वाद् व्यवधान्बुद्ध्या त्रोटित एव । ततोऽनन्तरं कथं रमितमित्यर्थः ।

अत्र वस्तुना हारच्छेदानन्तरमित्यादि । अन्यदेव रतं—प्रौढाङ्गनारताद् विलक्षणं नवोढायास्ते सुरतमित्यर्थः ।

## विवरणम्

कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य वस्तुनो व्यङ्ग्यमलङ्कारं पदप्रकाश्यमुदाहरति — सहि णवेति ।

**"सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।**
**हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम् ॥"** इति च्छाया ।

निधुवनस्य समरे परस्परकर्तृकव्यापारे । निधुवनसमरयो रूपकमेव, तस्य च व्यञ्जनायामनुपयोगाद् वस्तुमात्रस्य व्यञ्जनोदाहरणमिदमुक्तमिति प्रदीपः । अङ्कपाली आलिङ्गनम्, सैव सखी स्वचिकीर्षितवस्तुसहकारिणी । प्राकृते पूर्वनिपातानियमात् सखीपदस्योत्तरभावः । प्राणिभूतसखीरूपकं त्वत्र व्यङ्ग्यमेवेति वस्तुमात्रोदाहरणोपन्यासः । उच्छ्रियमाणो विच्छिद्यमानगुणः ।

अत्रेत्यादि । अत्र कीदृगिति कहम्पदार्थानुवादः । कथयेति प्रश्नवाक्योच्चारणप्रयोजकस्योत्तरवाक्यप्रयोगाशंसनस्य व्यङ्ग्यस्य प्रसङ्गतः कीर्त्तनम् । हारच्छेदादनन्तरमिति ततः पदार्थस्योपवर्णनम् । अन्यदेवेत्यादि अभूदित्यन्तं पदप्राकश्यं वस्तुव्यङ्ग्यम् । अन्यदित्यन्यरत्वाद् वैधर्म्यस्वरूपभेदवदित्यर्थः । स एव च रतान्तरापेक्षया हारच्छेदानन्तरितस्य व्यतिरेकः । स च कहंपदेन जिज्ञासितप्रकारावच्छिन्नवाचिना व्यज्यते । सा च जिज्ञासा सिद्धे रतत्वादिधर्मे न सम्भवतीत्यसिद्धे पर्यवस्यन्ती रतान्तव्यावृत्तत्वमर्थाद् गमयतीति मानान्तरसहकाराद् व्यञ्जनवृत्तेरसाधारण्यम् । कहंशब्दस्य जिज्ञासितत्वेन शक्तिरप्यस्तीति वा प्रमाणान्तरसहकृतत्वम् । 'सहि विरइऊण' इत्यादौ तु नासाधारणं व्यञ्जकपदमिति विवेकः ।

**प्रविसंती घरवारं विवलिअवअणा विलोइऊण पहम्।**
**खंधे घेत्तूण घंड हा हा णट्ठोत्ति रुअसि सहि किं ति ॥९० ॥**

अत्र हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदा, अपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यम्।

---

**सङ्केतः**

खंधे इति। स्कन्धान्निक्षप्य। अत्र रोदने नष्टत्वं हेतुः।

**बालचित्तानुरंञ्जनी**

कविनिबद्धवक्तृ प्रौढोक्तिनिर्मितेनालङ्कारेण पदद्योत्यवस्तुव्यङ्ग्यमुदाहरति पविसंतीति। सहि सखि! घरवारं गृहद्वारं, पविसंती प्रविशन्ती, पहं पन्थानं, विलोइऊण पुरो विलोक्य, विवलिअवअणा विवलितवदना सती, घंड घटं खन्धे स्कन्धे, धेत्तूण गृहीत्वा, हा हा णट्टोत्ति नष्ट इति किंति किमितं रुअसि रोदिषि।

अत्र वस्तुव्यङ्ग्यमाह अत्रेति। णट्टोत्तीतिपदार्थरूपेण रोदनविषयेण हेत्वलङ्कारेण अपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यं व्यज्यत इत्यर्थः।

**काव्यादर्शः**

अत्र कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरेण व्यञ्जकेन वस्तुरूपेण कथमिति पदद्योत्योऽर्थशक्तिमूलतया हारच्छेदनानन्तरभाविनो रतस्याधिक्यमिति व्यतिरेकालंकारो व्यज्यते।

**दीपिका**

घटो जलभाण्डभेदः।

**साहित्यचूडामणिः**

'पविसन्ती'-ति।

**प्रविशन्ती गृहद्वारं विवलितनयना विलोक्य पन्थानम्।**
**स्कन्धाद् गृहीत्वा कुटं हाहा नष्ट रोदिषि सखि! किमिति॥** इति

झटिति हारस्फोटने मार्गावलोकनं हेतुः काव्यलिङ्गम्। गच्छन्तं, न तु गतवन्तं गमिष्यन्तं वा ईषद्विलम्बितगमनं गृहप्रवेशवेलायामवलोकितम्।

### सम्प्रदायप्रकाशिनी

**प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि किमिति॥**

### मधुमति

उक्तोदाहरणे —गृहद्वारप्रवेशनादेः स्वतस्सम्भवित्वात् कविनिबद्धप्रौढोक्तिमात्रनिष्पन्नत्वं नास्तीति अस्वरसादाह – यथावेति ।

### विस्तारिका

अलङ्कारमलं वस्त्वाह – पविसंतीत्यादि ।

**प्रविसन्ती गृहद्वारं विचलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति॥**

घटध्वंसे स्कन्धग्रहणं हेतुरित्याह-हेत्वलङ्कारेणेति ।किन्तीत्यादि, हेत्वभावे रोदनस्याहार्यता। स्कन्धग्रहणेन घटभङ्गस्य हेत्वलङ्कारस्य कथं व्यञ्जकता ? कारणान्तरतोऽपि तदुपपत्तेः ।

### सारबोधिनी

**प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति॥**

नष्ट इति हेतु रोदनस्य । खेप्पूणेति पाठान्तरम् । तत्र स्कन्धाक्षेप एव घटनाशे हेतुरिति ।

### काव्यप्रदीपः

अलंकारेण वस्तुनो यथा –

**पविसन्ती घरवारं विवलिअवअणा पलोइऊण पहम्।**
**खन्धे घेत्तूण धडं हा हा णट्ठोत्ति रुअसि सहि किंति॥**

अत्र नष्ट इति रोदिषीति हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं कामुकं दृष्ट्वा यदि गन्तुमिच्छसि तदपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदप्राधान्येन प्रकाश्यते ।

### आदर्शः

कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्तु पदद्योत्यमाह पविसन्ती इति ।

**प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि किमिति॥**इति संस्कृतम् ।

नष्ट इत्यत्र घट इति शेषः। किमिति रोदिषि, बुद्धिपूर्वकघटभङ्गे रोदनवैयर्थ्यादिति भावः। अत्रेति, नायिकया बुद्धिपूर्वकं कृतो घटभङ्गः रोदनहेतुत्वेन दर्शितः, अत्र (अतः ?) हेत्वलङ्कारः, स च वस्तुतो हेतुत्वाभावात् कविनिबद्धसखीप्रौढोक्त्यैव सिद्धः। तद्व्यङ्ग्यं वस्त्वाह—सङ्केतेति। तच्च महावाक्यव्यङ्ग्यस्य सखीविषयवक्तृ-भावस्योपकारकं समीहितसाधनानुमत्या सखीविषयस्नेह भावाधिक्यलाभात्, तस्य किमिति पदद्योत्यता च रोदन-वैयर्थ्यबोधकेन तेन समीहितसाधनानुमतिलाभात्। ओल्लोलेत्यादौ तु ईदृशपदाभावाद् वाक्यमेव व्यञ्जकम्। ननु घटभङ्गस्य रोदनहेतुत्वमौचित्येन सम्भाव्यत एवेत्यतः स्वतःसम्भव्येवायं हेत्वलङ्कार इत्यत आह—यथा वेति।

## सुधासागरः

अत्रैवालङ्कारेण वस्तुनो व्यक्तिं पदप्राधान्येनोदाहरति—पविसन्तीत्यादि।

गीतिच्छन्दः।

**प्रविशन्ती गृहद्वारं विवलितनयना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि किमिति॥**

इति संस्कृतम्। अत्यन्तविदग्धायाः कस्याश्चिन्निगूढाशयोक्तिरयम्। हे सखि गृहद्वारं प्रविशन्ती त्वं पन्थानं विलोक्य निष्क्रान्तमपि मार्गं दृष्ट्वा। विवलितनयना सम्भ्रमाच्चञ्चलनेत्रा सती, घटं स्कन्धे गृहीत्वा दुर्वहमिव मस्तकादुत्तार्य कथञ्चिदंसे धृत्वा पातनबुद्ध्या हाहा नष्ट इति किमिति रोदिषीत्यर्थः। अत्र हेत्वलङ्कारेणेत्यादि नष्ट इति रोदिषति हेत्वलङ्कारः। गच्छन्तं कामुकन्। स्पष्टमन्यत्।

अत्र गृहद्वारप्रवेशनादेः स्वतः सम्भवित्वेऽपि एतादृशव्यवहारस्य दुर्घटत्वाद् दुरूहत्वाच्च प्रोढाक्तिमात्र-निष्पन्नत्वं भवतीति सूचितम्। एवञ्च प्रकृतार्थस्य स्वतः सम्भवित्वात्प्रौढोक्तिमात्रनिष्पन्नत्व नास्तीत्युदाहरणान्त-रमाहेति मधुमतीकारसारबोधिनीकारदिव्याख्यानमनादेयम्। न खलु श्रीवाग्देवतावतारः सर्वथा लोकबाधितं प्रौढोक्तिसिद्धे न जानातीति सम्भवति—किन्तु लोकाप्रसिद्धे ईदृशलोकोत्तरोक्तिप्रतिपदितेऽर्थेऽपि प्रौढोक्तिमात्र-निष्पन्नत्वं सम्भवतीति समाज्ञापयति। अत एव प्रमादशङ्कानुदयायोदाहरणान्तरमाह—यथावतीति सुधीभिर्ध्येयम्।

## विवरणम्

कविनिबद्धवक्तृ प्रौढोक्तिसिद्धेनालङ्कारेण व्यङ्ग्यं वस्तु पदप्रकाश्यमुदाहरति—पविसंतीति।

**"प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हा हा नष्ट इति रोदिषि सखि कथम्॥"**

इति च्छाया हेत्वलङ्कारेणेति। हा हा नष्ट इति रोदिषीति वाक्यादितिशब्देन नष्टो घट इति वाक्यप्रयोग जनकस्य बोधस्यैव रोदनहेतुताऽवगम्यत् इति भावः। अत्र रोदने घटनाशबुद्धिर्न हेतुः, अपि तूपनायकाभिसरणेच्छेति सखीप्रौढोक्तिसिद्धोऽयमर्थ इत्यभिमानः। अनेन हेत्वलङ्कारेण विवलिअवअणेत्यादि क्त्वाप्रत्ययोपात्ततथाविधमा-

र्गविलोकनानन्तर्यसहकृतेनोपनायकावलोकनप्रयोज्यतदभिसरणेच्छा तात्त्विकरोदनहेतुराक्षिप्यते। सैव हि विवलितवदनाया मार्गविलोकनेन रोदनजनने व्यापार इतीच्छसीत्यन्तस्यार्थः।

एवं शक्त्या घटनाशबुद्धेर्ध्वननेन च कामुकाभिसरणेच्छाया रोदनहेतुत्वेऽवगते, किंतीति पदोपात्तं निर्हेतुकत्वं द्वेधोपपद्यते — घटध्वंसबुद्ध्या रोदनजनने व्यापारभूतस्य जलाहरणासम्भवज्ञानस्य विषयबाधेन, कामुकाभिसरणेच्छाव्यापारभूतविषयानिष्पत्तिनिराकरणेन चेत्युभयं किन्तिपदेनासाधारण्येनाभिव्यज्यत इत्याह — 'तदाऽपरमित्यादि।'

यथा वा

**विहलंखलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम्।**

**वारप्फंसमिसेण आ अप्पा गुरुओत्ति पाडिअ विहिणो ॥९१ ॥ [१६]**

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्टवा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलतया त्वया घटः स्फोटित इति मया चिन्तितम् तत्किमिति नाश्वसिषि तत्समीहितसिद्धये व्रज, अहं ते श्वश्रू-निकटे सर्व समर्थयिष्ये, इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु ।

---

### सङ्केतः

विहलंखलमिति । विशृङ्खलां उच्छृङ्खलाम् । सात्त्विकभावात् । कुडेण घटेन । तरलतरदृष्टिम् अनुरागवशात् । अयं भावः—यो हि गुरुः स्यात् सः किञ्चिदुच्छृङ्खलप्रकृतिं चपलप्रकृतिं च दृष्ट्वा आत्मानं ततः पृथक्करोति येन केनापि मिषेण इति उक्तिलेशः । चेतितम् ज्ञातम् । समर्थयिष्ये इत्यन्तं वस्तु अपह्नुत्या व्यज्यते इति योगः ।

### सङ्केतः (रुय्यकः)

**विश्रृंखलां त्वा सखि दृष्टवा कुटेन तरलतरदृष्टिम्।**

**द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा भिन्नः।**

कुटो घटः

### बालचित्तानुरञ्जनी

अस्यैवोदाहरणान्तरमाह यथा वेति । सहि सखि ! क्षुद्रेण घटेनोपलक्षिता त्वं विहलं विह्वलं, खलं प्रियं, दट्ठूण दृष्ट्वा, तरलतरदिट्ठी तरलतरदृष्टिर्जातेति शेषः । वारप्फसामसेण द्वारस्पर्शमिषेण, अ अप्पा आत्मा, गुरुओत्ति गुरुरिति, पाडिअ विहिण्णो पतितविभिन्नः ।

अत्र वस्तुव्यङ्ग्यमाह अत्रेति । कविनिबिद्धा या सखी वक्त्री तत्प्रौढोक्तिनिर्मिते वारप्फंसमिसेण पदार्थेनापह्नुत्यलङ्कारेण ते श्वश्रूं बोधयिष्यामीति वस्तु ।

## काव्यादर्शः

'विशृङ्खला त्वां दृष्ट्वा घटेन द्वारस्पर्शमिषेणात्मा गुरुक इति पातयित्वा विभिन्नः ।' स्पर्शव्याजेनेत्यत्र व्याजपदेऽपह्नुतिः । कविना या निबद्धा वक्त्री सखी तत्प्रौढोक्त्या 'श्वश्रूं ते बोधयिष्ये' इति वस्तु ध्वनति ।

## विवेकः

विहलं इत्यादि — विशृङ्खला तां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम् । द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा भिन्नः । कुटो घटः, मिषशब्देन च्छलपर्यायेणासत्यत्वप्रतिपादनादपह्नवनिर्देश इत्यपह्नुतिरलङ्कारः ।

## सम्प्रदायप्रकाशिनी

विहलमिति ।

**विह्वलां क्षणं त्वां सखि दृष्ट्वा घटेन तरलतरदृष्टिम् ।**
**द्वारस्पर्शमिषेण आत्मा गुरुक इति पातितविभिन्नः ॥**

श्रान्तां भवतीं दृष्ट्वा गुरुकोऽस्मीति बुद्ध्या द्वारस्पर्शमिषेण घटः स्वात्मानं पातयित्वा विभिन्नः ।

## विस्तारिका

विवृत्य पथि विलोकनं सहकारीति चेत्, तस्यैव व्यञ्जकत्वमित्याह—यथा वेति ।

**विशृङ्खला त्वां सखि दृष्टव कुटेन तरलतरदृष्टिम् ।**
**द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभेदितः ॥**

[विभिन्नः] कुटो घटः विभिन्न इत्यन्तर्भूतण्यर्थः । व्याजेन घटस्फोटनं पुनर्नदीगमनायेत्याह—अपह्नुत्या वस्त्विति ।

## सारबोधिनी

नन्वेतस्य स्वतः संभवित्वमेवेत्यत उदाहरणान्तरमाह यता वेति । विहलमिति विह्वलां त्वां सखि दृष्ट्वा कूटेन तरलतरदृष्टिम् । द्वारस्पर्शमिषणात्मागुरुरिति पातयित्वा विभिन्नः । कूटो घटः ।

## काव्यप्रदीपः

यथा वा—

**विहलङ्खलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम् ।**
**वारप्फंसमिसेणि अ अप्पा गरुओत्ति पाडिअ विहिण्णो ॥**

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशसमये पश्चादागतं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन त्वया घटः स्फोटित इति मयावगतम् । तत्समाश्वासं विधाय समीहितसिद्धये व्रज । अहं तव श्वश्रूनिकटे सर्वं समर्थयिष्य इति वस्तु द्वारस्पर्शमिषेणेत्यपह्नुत्या वारप्फंसमिसेणेति पदेन द्योत्यते ।

## आदर्शः

**विश्रृङ्खलां त्वां सखि दृष्ट्वा घटेन तरलतरदृष्टिम् ।**
**द्वारस्पर्शमिषेण आत्मा गुरुक इति पातयित्वा विभिन्नः ।।**इति संस्कृतम् ।

विश्रृङ्खलां व्याकुलां त्वां दृष्ट्वा घटेन आत्मा गुरुक इत्यतो हेतोर्द्वारस्पर्शव्याजेन विभिन्नः भेदितः, अन्तर्भूतकारितार्थत्वात् । पतनहेतौ गुरुत्वे स्वनाशेनापि परोपकारित्वरूपं गुरुत्वमध्यासितम् । (अध्यवसितम् ?) श्लेषात् । अत्रेति, नायिकया कारितस्य द्वारस्पर्शस्य भेदहेतुत्वापह्नवेन स्वस्मिन्नेव तद्धेतुत्वारोपरूपया अपह्नुत्येत्यर्थः । घटस्याचेतनस्य तदसम्भवात् कविनिबद्धसखीप्रौढोक्त्यैव तत्सिद्धः । तद्व्यङ्ग्यं वस्त्वाह किमितीति । नदीगमनायेत्यादिकन्तु अपह्नुतिबीजप्रदर्शनं न त्वपह्नुतिशरीरम् । चिन्तितमित्यन्तं तु अपह्नुतिविषयस्वज्ञानकथनम् । तत् किमितीत्यादेः सखीपदद्योत्यता च सखीकृत्यत्वादेवेदृशोपदेशस्य । तादृशोपदेशरूपं व्यङ्ग्यञ्च महावाक्यव्यङ्ग्यसखीविषयवक्त्रीभावस्य प्रकर्षकं स्पष्टमेव ।

## सुधासागरः

विहलमित्यादि । गीतिश्छन्दः ।

**विह्वलां त्वं सखि दृष्ट्वा कुडेन तरलतरदृष्टिम् ।**
**द्वारस्पर्शमिषेण चात्मा गुरुरिति पातयित्वा विभिन्नः ।। इति संस्कृतम् ।**

कुडो घट इति भास्करादयः । श्रीवत्सलाञ्छनादयस्तु कुटो घट इत्याहुः । हे सखि कुडेन कर्त्रा तरलदृष्टिं त्वां विह्वलां वोढुमशक्तां दृष्ट्वा द्वारस्पर्शमिषेण आत्मा स्वस्वरूपं घटव्यपदेश्यः कम्बुग्रीवादिमान् मृण्मयो देह इति यावत् । गुरुः दुर्वह इति पातयित्वा विभिन्नः । अन्तर्भावितण्यर्थत्वात् स्फोटित इत्यर्थः.

अत्र नदीकूले इत्यादि । आगतमुपपतिम् । चेतितमवगतम् । आश्वसिषि समाधानं करोषि स्पष्टमन्यत् ।

## विवरणम्

नन्वेकपदार्थताऽवच्छेदकसामानाधिकरण्येनापि द्वितीयपदार्थसम्बन्धस्यासम्भव एवार्थस्य प्रौढोक्तिसिद्धत्वम् । रोदनत्वसामानाधिकरण्येन तु घटनाशबुद्धिहेतुकत्वं सम्भवतीति स्वतः सम्भव्येवायमर्थ इत्युदाहरणान्तरमाह यथा वेति ।

**"विशृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम् ।**
**द्वारस्पर्शमिषेणात्मा गुरुक इति पातयित्वा विभिन्नः ।।"** इति च्छाया ।

तरलतरदृष्टितया तव विशृङ्खलतां दृष्टवा तरलतरदृष्टित्वेन हेतुना तव शृङ्खलाराहित्यं स्वच्छन्दव्यवहारोद्यममुन्नीयेति यावत्। घटेन आत्मा पातयित्वा विभेदितः। तत्र सन्नपि हेतुर्द्वारस्पर्शोऽपह्नूयते। ममात्मा गुरुरित बुद्धिस्तु हेतुत्वेनारोप्यते। गुरुपदेन पतनासमवायिकारणगुणविशेषविशिष्टः शक्त्युपस्थाप्यो गुरुजनस्वरूपव्यंङ्ग्यार्थतादात्म्येनाध्यवसीयते। तेन स्वच्छन्दचारिण्यामस्यां गुरुणा मया न स्थातुमुचितमिति बुद्ध्या घटेन भृगुपातः कृत इति प्रतीयते। अत्र नदीत्यादि स्फोटित इत्यन्तं मिषपदव्यङ्ग्यं मिषपदोपात्तं छद्म तदभाववति तदारोपणस्वरूपमारोपयितारं तदीयफलाभिसन्धिं चाक्षिपति।

तत्रारोपयितारमुल्लिखति — व्याकुलया त्वयेति। फलाभिसन्धिमुल्लिखति— बुद्धिपूर्वमिति। पतित्वा स्फुटत्वित्यभिसन्धिपूर्वमित्यर्थः। घटस्फोटनस्य फलमभिसन्धेयान्तरं गमनायेत्यन्तेनोपात्तम्। द्वारेत्यादि व्यञ्जकपदार्थानुवादः। स्फोटित इतीत्यन्तस्यापह्नुत्येत्यनेनान्वयः। व्यज्यत इति शेषः। गुरुणा घटेनात्मा पातयित्वा भेदित इत्युक्त्या गुरुजनस्त्वदाचरितविज्ञानेऽसत्कल्प इति सूचितं भवति। तदुपपादयति — त्वमाश्वसिहि, यतो मया चेतितम्, अहं तव गुरूणामग्रे समर्थयिष्य इति सम्बन्धः। स्वाश्वासनस्य व्यङ्ग्यस्य ध्वननीयमाह—समीहितसिद्धय इति। समीहितेत्यादि, समर्थयिष्य इत्यन्तमसाधारणसखीपदव्यङ्ग्योत्त्कीर्तनम्। सख्यं हिताचारः। हितं च द्विविधम् — अभिलषितसम्पादनम्, प्रतिकूलनिराकरणं च। तदुभयं सामान्याकारेण सखीपदाभिधाविषयो विशेषरूपेण ध्वननगोचर इत्यसाधारण्यमवसेयम्।

**जोह्णाइ महुरसेण अ विइण्णतारुण्णउत्सुअमणा सा।**

**बुड्ढा वि णवोढव्विअ परहुआ अहह हरइ तुह हिअअम्॥९२॥ [१७]**

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहूपदप्रकाश्यः।

एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः।

---

**संङ्केतः**

जोह्णाइ इति। अत्र ज्योत्स्नामधुरसौ वाक्यार्थतया उपनिबद्धौ हेतू। वितीर्णतारुण्यादि साध्यम्। एकं तावत् परवधूः, अन्यच्च वृद्धा, साऽपि त्वया अभिलष्यते इति, अहो! कामान्धत्वेन अविवेकित्वमिति व्यङ्ग्यम्।

भेदाः इति। पूर्वष्टादशमेलने सप्तदशैते भेदाः पञ्चत्रिंशद्भेदाः (१८ + १७ = ३५) भवन्ति इति भावः।

अलं स्थित्वेति। अत्र उपयोगित्वात् अर्धद्वयेन एक एव श्लोकः उदाहृतः। भारते तु श्लोकद्वयम्। तत्र 'अल' मित्यस्योत्तरार्धम्—

'कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे।' इति।

**सङ्केतः (रुय्यकः)**

**ज्योत्स्नया मधुरसेनावतीर्ण (० वितीर्ण) तारुण्योत्सुकमनाः सा।**
**वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम्॥**

कालधर्मो मरणम्।

**बालचित्तानुरञ्जनी**

'ज्योत्स्नया मधुरसेन च वितीर्णतारुण्या उत्सुकमना वृद्धापि नवोढेव हरित' इत्युत्सुकयति। अत्र कविनिबद्धा या विदग्धा वक्त्री तत्प्रौढोक्तिनिष्पन्नेन काव्यलिङ्गेनार्थशक्तिमूलतया परवधूपदद्योत्य प्रतिषेध इवेष्टस्येति निषेधरूप आक्षेपालंकारों व्यङ्ग्यः।

## काव्यादर्शः

'ज्योत्स्नया मधुरसेन च वितीर्णतारुण्या उत्सुकमना वृद्धापि नवोढेव हरति' इत्युत्सुकयति। अत्र कविनिबद्धा या विदग्धा वक्त्री तत्प्रौढाक्तिनिष्पन्नेन काव्यलिङ्गेनार्थशक्तिमूलतया परवधूपदद्योत्यः प्रतिषेध इवेष्टस्येति निषेधरूप आक्षेपालङ्कारो व्यङ्ग्यः।

## विवेकः

जोह्नाइ इत्यादि — ज्योत्स्न्या मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा। वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम्। मधुरसो वसन्तानुरागो मदिरा वा, वृद्धत्वेनासम्भाव्यमानसम्भोगत्वादिकं, ततो वृद्धा नवोढायत इत्यत्र ज्योत्स्नाऽऽदिरूपो हेतुरिति काव्यलिङ्गं विवक्षितस्य चाशक्यत्ववचनीयख्यापनाय कथितसमागमविषयो निषेधः प्रतीयमान इत्याक्षेपः। तदित्थं पदप्रकाशिताः सप्तदश, वाक्यप्रकाशितास्त्वष्टादश दर्शिता एवेति पञ्चत्रिंशद्भेदाः।

## दीपिका

हृदयहरणहेतोः 'जोह्णाइ' इत्यादिना निर्देशात् काव्यलिङ्गता। वाक्याद्व्यङ्ग्यप्रतीतिर्वाक्यप्रकाशः। अत्र पूर्वमर्थान्तरसंक्रमितवाच्यादिसामान्यलक्षणतस्तावदुदाहृतम्। पञ्चत्रिंशदिति - वाक्यप्रकाशेऽष्टादश, पदप्रकाशे तु सप्तदश।

## साहित्यचूडामणिः

'जोह्णाए' इति।

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा।**
**वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम्॥** इति।

ज्योत्स्नामधुरसाभ्यां वितीर्णं दत्तं तारुण्यं यौवनं यस्यै वृद्धायै। ज्योत्स्नया सुधामय्या जरापलितनाशः मधुना माधुर्योत्पादनम्।

आपेक्ष इति। वक्तुमिष्टस्याप्यर्थस्य विशेषभिधित्सया निषेधरूपः। पञ्च त्रिंशदिति। वाक्यप्रकाशतायामष्टादश पदप्रकाशत्वे सप्तदशेति।

## सम्प्रदायप्रकाशिनी

जोह्णाए इति।

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा।**
**वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम्॥**

अत्र काव्यलिङ्गेनेति । अत्रोत्सुकमनस्त्वे ज्योत्स्नादि लिङ्गम् । चतुष्कमुपसंहरति— एषु कविनिबद्धेति । इत्थं सप्तदश भेदाः । तानिमान् पूर्वभेदैः सह राशीकर्तुमाह — पञ्चत्रिंशदिति । सप्तदशैते पदप्राकश्याः पूर्वं वाक्यप्रकाश्यतया दर्शिता इति चतुस्त्रिंशत् । उभयशक्तिमूलस्तु वाक्यैकप्रकाश्य इति पञ्चत्रिंशद्भेदता ।

## मधुमति

इत्येवमिति । वाक्यप्रकाश्याष्टादशभेद—पदप्रकाश्यसप्तदशभेदाभ्यां सह मिलित्वा पञ्चत्रिंशद्भेदत्वं सम्पद्यते इत्यर्थः ।

## विस्तारिका

अलङ्कारमूलालङ्कारमाह—जोह्णाई इत्यादि ।

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमना सा ।**
**वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥**

वृद्धाया हृदयहारित्वे ज्योत्स्नामधुरसाभ्यां दत्तं तारुण्यं हेतोरित्याह काव्यलिङ्गेनेति । नायककुचेष्टाया अशक्यवक्तव्यत्वेनाक्षेपः ।उदाहृतम् — "उल्लास्य कालकरवालमहाम्बुवाहम्" इत्यादि । पदप्रकाश्यो न भवतीति— एकस्यैव पदस्यान्वयव्यतिरेकत्वविधानानुविधानासम्भवान्नोभयशक्तिमूलतेत्यर्थः । पञ्चत्रिंशदिति — उक्ताष्टादशसु सप्तदशध्वनयः पदवाक्यमूलत्वद्वैविध्येन चतुस्त्रिंशत्, उभयशक्तिमूलस्तु वाक्यमात्रव्यङ्ग्यत्वेनैक इति मिलित्वा पञ्चत्रिंशत् ।

## सारबोधिनी

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्यौत्सुक्यमनाः सा ।**
**वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम् ॥**

अत्रेति । उत्सुकेत्यादिविशेषणविशिष्टं परवधूत्वमेव हृदयहरणे हेतुः । नायकचेष्टाया अशक्यवक्तव्यत्वेनाक्षेपः ।

## काव्यप्रदीपः

अलंकारेणालंकारस्य यथा —

**'जोह्णाएँ महुरसेण अ विइण्णतारुण्णउसुअमण्णा सा ।**
**वुड्ढा वि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥'**

अत्र परवधूत्वेन सा तव हृदयं हरतीति काव्यलिङ्गालंकारेणास्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदाचरितं वक्तुं न शक्यत इत्याक्षेपालंकारः प्राधान्येन परवधूपदद्योत्यः प्रकाश्यते ।

शब्दार्थोभयशक्तिमूलस्तु पदप्रकाश्यो न भतवि । तत्र वाक्यस्यैव प्राधान्यात् । एवं पञ्चत्रिंशद्भेदाः ।

### आदर्शः

कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारं पदद्योत्यमाह जोह्णाइ इति ।

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा।**
**वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम्॥ इति संस्कृतम्।**

गलितयौवनोपनायिकाप्रसक्तं स्वनायकमुपहसन्त्या नायिकाया उक्तिरियम्। वृद्धाऽपि सा नायिका ज्योत्स्नामधुरसाभ्यां दत्तेन तारुण्येन उत्सुकमनाः यतः परवधूः अतस्तव चित्तं हरति, न तु सौकुमार्येण तारुण्येन च। अत्रेति, काव्यलिङ्गं हेत्वलङ्कारः चित्तहरणहेतुपरवधूत्वरूपः, स च नायिकायाः प्रौढोक्त्यैव सिद्धः, विरूपया परवध्वा चित्तहरणाभावेन परवधूत्वे चित्तहरणस्य हेतुत्वावास्तवत्वात्। 'आक्षेपः' आक्षेपनामा अलङ्कारः

**निषेधो वक्तुमिष्टस्य यो विशेषविधित्सया।**
**वक्षयमाणोक्तविषयः स आक्षेपो द्विधा मतः॥**

इति तल्लक्षणात, वृद्धमित्यादिकन्तु तादृशनिषेधसम्पादकतयैवोक्तमिति बोध्यम्। परवध्वभिलाषादेव आक्षेपोपपत्तेः तस्य परवधूपदप्रकाश्यता, तस्य च महावाक्यव्यङ्ग्यपत्युपहासोपकारकत्वम् अयुक्तकारित्वेन अनिर्वचनीयचरितस्य उपहास्यत्वात् महिलासहस्रे त्यादौ तु ईदृशपदाभावात् वाक्यमेव व्यञ्जकम्।

पञ्चत्रिंशदिति द्व्यत्थो वाक्यप्रकाश्यत्वेनैकविध एव, अन्ये तु सप्तदश पदवाक्यप्रकाश्यत्वेन द्वैगुण्याच्चतुस्त्रिंशदिति पञ्चत्रिंशदित्यर्थः।

### सुधासागरः

अत्रैवालङ्कारेणालङ्कारव्यक्तिं पदप्राधान्येनोदाहरति जोह्णेत्यादि। गीतिश्छन्दः। लक्षणमुक्तम्।

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा।**
**वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम्॥**

इति संस्कृतम्। स्पष्टम्। कस्याश्चित्परासक्तपतिं प्रत्युक्तिरयम्। वृद्धत्वं प्रौढोक्तिसिद्धं बोध्यम्। अत्र काव्यलिङ्गेनेत्यादि। सा परवधूत्वेन तव हृदयं हरतीति काव्यलिङ्गालंकारः। तेनाक्षेपो व्यज्यते। स्पष्टमन्यत्।

इति पञ्चत्रिंशद्भेदा इति। वाक्यप्रकाश्याष्टादशपदप्रकाश्यसप्तदाशभेदाभ्यां मिलित्वा पञ्चत्रिंशद्भेदत्वमित्यर्थः।

### विवरणम्

कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्गरेण व्यङ्ग्यमलङ्कारं पदप्रकाश्यमुदाहरति— जोह्णाइ इति।

**'ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः।**
**वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम्॥'**

इति च्छाया। अत्रेति। तदीयौत्सुक्ये ज्योत्स्नामधुरसाभ्यामचेतनाभ्यां वितीर्णं तारुण्यं हेतुत्वेनाध्यवसीयत इति न स्वतःसम्भवित्वम्। त्वदीयाचरितं वक्तुं न शक्यमिति। त्वदीयाचरितवचनमकार्यमित्यर्थः।

वृद्धामित्यादि अभिलषसीत्यन्तमाचरिताकारस्यानुवादः। अत्र वचनस्य कार्यत्वनिषेधस्तद्विषये परवध्वभिलाषे सुतरामकृत्यत्वं द्योतयतीति विशेषाभिकार्यत्वनिषेधस्तद्विषये परवध्वभिलाषे सुतरामकृत्यत्वं द्योतयतीति विशेषाभि धित्सया वचनस्य वचने वा निषेध इत्याक्षेपलक्षणमुपपद्यते। परवहुपदेति। अकीर्त्तनीयाभिलाषविषयत्वं परवधूत्वेन हेतुना गमयितुं शक्यत इत्यसाधारणत्वं वेदितव्यम्। महिलासहस्सेत्यादौ तु तथाविधपदाभावाद वाक्यार्थ एव व्यञ्जकः।

शब्दार्थोभयेति। नृपभीमेत्यादौ भीषणवाचिना भीमपदेनानुगामिनो धर्मस्योपादनेऽपि शब्दशक्तिमूलव्यञ्जनां विना वृकोदरस्योपमानत्वविशिष्टस्य न प्रतीतिः सम्भवतीति न परस्परनैरपेक्ष्येणार्थ शब्दशक्त्योर्व्यञ्जकत्वमिति भावः।

**(सू. ६०.) प्रबन्धेऽप्यर्थशक्तिभूः ॥४२ ॥**

यथा गृध्रगोमायुसंवादादौ ।

**अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।**
**कङ्कालबहले घोरे सर्वप्राणिभयंकरे ॥९३ ॥**

**न चेह जीवितः कश्चित् कालधर्ममुपागतः ।**
**प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥९४ ॥**

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

**आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।**
**बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥९५ ॥**

**अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।**
**गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥९६ ॥**

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः स्वयं तु लक्षणतोऽनुसर्तव्याः । अपिशब्दात्पदवाक्ययोः ।

---

**सङ्केतः**

'न चे' त्यस्य तु —

**'प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी'** । इति ॥

स्थितः । नाद्याप्यस्तमितः इति भावः । कनकवर्णाभमिति । कनकवर्णवत् आभाति इत्यर्थः । यदि वा कनकवर्णयोः हेमकुङ्कुमयोरिव आभा यस्य तत् तथा इत्यर्थः । न पुनः कनकवर्णस्येव आभा यस्येति, अनुपपद्यमानत्वात् । बालाः मूर्खाः ! त्यक्ष्यध्वम् इति आत्मनेपदक्रियातिपत्ती आर्षत्वात् । निष्ठं चेति । [illegible] चनमिति योगः । प्रबन्ध

एवेति। भारतोक्तगृध्रगोमायुसंवाद नामकप्रबन्धप्रतिपाद्येनार्थेन गृध्रगोमाय्वोः भक्षणाभिप्रायः व्यज्यते। स च शान्तरसनिष्ठः।

## काव्यादर्शः

प्रबन्धेऽपीति। विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्यभेदे अर्थशक्तिमूला द्वादश भेदाः प्रबन्धेऽपि निमित्तभूते व्यञ्जके सति व्यङ्ग्यतया ज्ञेयाः। तत्रार्थः स्वतःसंभवी कविप्रौढोक्तिनिष्पन्नस्तन्निबद्धवक्तृ-प्रौढोक्तिकृतशरीरो वा वस्तु वालंकारो वासौ प्रत्येकं वस्त्वलंकार व्यञ्जक इति द्वादश भेदाः।

कालधर्मं मरणम्। प्रबन्ध एवेति। प्रबन्धप्रतिपाद्येन ह्यर्थेन गृध्रगोमाय्वोर्भक्षणाभिप्रायो व्यज्यते। स चाभिप्रायः शान्तरसनिष्ठ एव। यथा वा मधुमथनविजये पाञ्चजन्योक्तिषु। अन्ये त्विति। वस्तुनोऽलंकारव्यञ्ज-कत्वेऽलंकारस्य च प्रत्येकं वस्त्वलंकारव्यञ्जकत्वे इत्यादयः।

## विवेकः

अथार्थशक्तिमूला ये द्वादश ते महावाक्येऽपि विलोक्यन्त इत्याह प्रबन्धेऽपीति। प्रबन्धो रामायणमहा-भारतादिः। तत्र महाभारते यथा अलं स्थित्वेत्यादि। 'एतेन संसारमोहान्धतमसमग्रलोकसमुत्तरणवैराग्यबीजोत्पा-दनैकरसिकस्य कृष्णद्वैपायनमुनेरप्ययमर्थोऽनुमतो नतु ध्वनिकृतः स्वमतिविकल्पनमात्र (ध्व. आ. ३।१५ वृ:)- मत्र प्रमाणमिति दर्शयति। कालधर्मो मरणम्। 'गृध्रस्य शवशरीरभक्षणार्थिनः शङ्कितप्रत्युज्जीवितप्रत्याशया शवशरी-रानुरोधिपुरुषप्रतिमोचनपरमिदं वाक्यं जम्बुकस्यापि निशोदयावधि तिष्ठन्त्वेते ततोऽहं गृध्रादपहृत्य भक्षयिष्या-मीत्यभिप्रायवत्। आदित्योऽयमित्यादिना व्य [ञ्जकेन] स्वतः सम्भविना चास्य प्राग्वदेव। अयञ्चाभिप्रायोऽर्थशक्त्या व्यज्यमानः शान्तरस एव परिनिष्ठां प्राप्नोति।' (ध्व आ. लो. १५२ पृ.:) 'महाभारते हि शान्तस्यैवाङ्गित्वमितरेषां रसानामङ्गत्वमेव, यथा रामायणे करुणस्य प्राधान्यमन्येषान्तु गुणत्वम्।' (ध्व. आ. ४।५ वृ.:) अन्ये त्वितितद्यथा मालतीमाधवे पञ्चमेऽङ्केऽन्योन्यदर्शनानन्तरं मालतीमाधवयोरुक्तिप्रत्युक्तिचेष्टाप्रबन्धो मालत्याः पित्रोरसम्मत्या स्वदानस्यावश्यकरणीयतामभिव्यनक्ति। यथा तत्रैव तृतीयेऽङ्के लवङ्गिकां प्रति काम-न्दक्या उक्ता 'अयि सरले किमत्र भगवत्या शक्यम्? प्रभवति प्रायः कुमारीणां जनयिता दैवश्च। यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चक्रम इत्याख्यानविद आचक्षते वासवदत्ता च सृञ्जयाय पित्रा दत्तमप्यात्मानमुदयनाय प्रायच्छदित्यादि तदपि साहसाभासमित्यनुपदेष्टव्यकल्पमित्यनाशास्यम्' इति। अत्राप्यनु-पदेश्यताव्याजेनोपदेश्यत्वमेव 'कल्प' पदेन द्योत्यते। न चोपमा प्रतीयते। यथा च मधुमथनविजयाख्यायां खण्डकथायां सन्दानितकविशेषकादिषु। तत्र सन्दानितके यथा जाणंती सा विअडमङ्गिवेभ सिंदूरमल्लिआ होति। वलपीड़िअकुमुद्दंतरुहिरभरिअव्वसअम्बर हरं॥ किं अण्णं ताण विदाणराण णिच्चलबालवलआसु। बद्धं फलव्व दीसइ जस्स जसो समरसीमासु॥ अत्र 'बद्धफलव्व' इत्युत्प्रेक्षया रुक्मिणीहरण-(पाणि) लाभे निष्प्रतिबन्धता भगवतो द्योत्यते। एवं विशेषक-कलापक-कुलकादिष्वपि द्रष्टव्यम्। रघुकारकृतौ रघुराघवयोर्वर्णने (८।१६) 'समयुज्यत भूपतिर्युवा सचिवैर्नीतिविशारदैरजः। अनपायिपदोपलब्धये रघुराप्तैः समितो विनेतृभिः॥ (इत्यादिना) 'इति शत्रुषु चेन्द्रियेषु च प्रतिबद्धप्रसरेषु जाग्रतौ। प्रमितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः॥'(८।२३) इत्यन्तेन तुल्ययोगितया काव्यलिङ्गेन वा व्यतिरिक्तः (रेकः)' प्रकाश्यते। एवञ्च नाटकादिषु विष्कम्भ (क) प्रस्ताव-

नादिषूक्ति प्रत्युक्ति प्रबन्धेषून्नेयमिति । तदित्थमर्थशक्तिमूलध्वनेरितरप्रकारोदाहरणानि शिक्षितलक्षणानां लक्ष्यो-दीक्षणे नानाप्रबन्धेषु स्वयमेवाविर्भविष्यन्तीत्यतो ग्रन्थकृता न प्रपञ्चितानि ।

## दीपिका

प्रबन्धो महावाक्यम् । अर्थशक्तिभूः संलक्षक्रमव्यङ्ग्यो वस्तुमात्रलङ्कृतिरूपो द्वादशविधः । कालधर्मो मरणम् । दिवा प्रभवतो निशाऽऽगमनशङ्किनः । पुरुषविसर्जन पुरुषाणां शवपरित्यागः । एतच्च पदान्तरसाचिव्येनैव महावाक्यं भवतीति तान्यनुसर्त्तव्यानि । सम्प्रति स्पष्टार्थं महावाक्यान्तरं लिखति आदित्य इति । स्नेहं जीवनोपायानुष्ठानरूपम् । अयं मुहूर्तः सन्ध्यासमासन्नकालो वन्यदारुणतया बहुविघ्नः सम्भावितभूताद्यावेशः । ततस्तदपगमात्कालन्तरे जीवितसम्भावनाऽप्यस्ति । जनव्यावर्त्तनं गृध्रभक्षणविघ्नविधायि । प्रबन्ध एव- नतु पदस्य वाक्यस्य वा शक्त्यतिरेक इत्यर्थः । अत्र वस्तुना वस्तुमात्रं व्यज्यते । व्यञ्जकश्च स्वतःसम्भवी । लक्ष्यतो लक्ष्येषु ।

## काव्यप्रकाशदर्पणः

पूर्वमर्थान्तरसङ्क्रमितवाच्यादीनां सामर्थ्यलक्षणप्रस्तावे । प्रबन्धो महाकाव्यम् । अर्थशक्तिभूर्द्वादशप्रकारः । कालधर्मो मरणम् । अस्य च श्लोकस्य पद्यान्तरसचिवस्येव महाकाव्यतेति स्पष्टार्थं महाकाव्यान्तरमुदाहरति आदित्य इति । स्नेहो जीवनोपायस [क ?] रणबीजम् । मुहूर्तः सन्ध्याकालः बहुविघ्नभूताद्यावेशसंभाविसाधारणत्वात् । अत्र स्वतःसंभवि विरक्तभावरक्तत्वं व्यज्यते । लक्षणतो लक्ष्यात् । तद्यथा रघुवंशे "समपूजतयात्यन्त" इत्यादि । न तुल्ययोगितया काव्यलिङ्गेन वा । रघुराघवयोर्व्यतिरेकालङ्कारः प्रतीयते ।

किन्तु कुमारसंभवे हिमगिरिवर्णने प्रौढोक्तिसिद्धालङ्कारसंसृष्ट्या हिमगिरेरुत्कर्षः प्रतीयते । अर्थशक्तिभूरित्युंपलक्षण् । शब्दशक्त्युद्भवेऽपि क्वचित् प्रबन्धव्यङ्ग्यो दृश्यते । यथा माघकाव्ये शिशुपाल [दूत] भूतोक्तौ संध्यावाच्ये वर्णमात्ररूपो विग्रहः । उपमाध्वनिरपि तथाविधः संभाव्यते ।

## साहित्यचूडामणिः

प्रबन्धेऽपीति । यदाह—

**अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः ।**
**ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित् ।।** ध्व. ३.१५ इति ।

कालधर्मो मरण् । जीवितः प्रत्युज्जीवितः । दिवा प्रभवतः दिवसे बहिः सञ्चरसमर्थस्य । पुरुषाणां व्यावर्तने तात्पर्यवद् वचनम्, इष्टस्येवानिष्टस्यापि प्रत्यूहोऽस्तीति ।

प्रबन्ध एवेति । पद्यते गम्यतेऽनेनार्थ इति पदं सुप्तिङन्तम्, एकार्थपरः पदसमूहो वाक्यं, प्रबन्धान्तरवान्तरवाक्यं प्रकरणं, विधिनिषेधावगतिहेतुकं महावाक्यं प्रबन्धः, तत्रैव प्रकाशते इति । एतत् कविनिबद्धप्रौढोक्तिनिष्पन्ने वस्तुनि व्यङ्ग्यं वस्तु । अन्ये त्वेकादश भेदाः स्वयं लक्ष्यतः प्रेक्षणीयाः । तत्र वस्तुनालंकारो यथा —

**इअ अत्थिरसामत्थे अण्णस वि परिअणम्मि को आसंघो ।**
**तत्थ वि णाम दहमुहो तस्स ठिओ एस पडिभडो मज्झ भुओ ।।**

इतिसुग्रीववाक्यानन्तरं—

**किं अण्णणा परिअणो परस्स ओ परिअणेण दे पडिवक्खो।**
**सोहइ पत्थिज्जन्तो जिआहिमाणस्स किं जअसि वि ग्गहणं॥**

इत्यादि जाम्बवद्वाक्यरूपे प्रबन्धे वस्तुना यो यो विमृश्यकारी स स जितकाशी, यो यस्व नैवं स नैवमित्यनुमानालङ्कारो व्यङ्ग्यः। अलङ्कारेण वस्तु यथा—

**एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च।**
**अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्॥**

इति सिंहवाक्यानन्तरं,

**क्षतात्त किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः।**
**राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा॥**

इत्यादिदिलीपवाक्यरूपे प्रबन्धे गुरुवचनानुपालनन्याससंरक्षणादिवैलक्षण्येन महापुरुषत्वलाभ इति काव्यलिङ्गेन पुत्रोत्पत्त्यादिकमैश्वर्यं प्रासङ्गिक सिध्यतीति वस्तु प्रकाश्यते। अलंकारेणालङ्कारो यथा —

**धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः**
**सन्देशार्था क्व पटुकरणैः प्राणिभिः प्रापणीयाः।**
**इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे**
**कामार्ता हि प्रणयकृण्णाश्चेतनाचेतनेषु।**

इत्यादिवचनानन्तरं,

**शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ**
**मासानन्यान गमय चतुरो लोचने मीलयित्वा।**
**पश्चादावां विरहगुणितं तं तमात्माभिलाषं**
**निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥**

इत्यादौ विरोधालङ्कारेण महापुरुषाणां कोपेऽपि न तद्भृत्या विपद्येरन्निति विशेषोक्तिर्व्यज्यते। इत्थमन्यदुन्नेयम्।

**सम्प्रदायप्रकाशिनी**

अथार्थशक्तिमूलस्य द्वादशकस्य प्रकारान्तरेणापि सम्भवं दर्शयति—प्रबन्धेऽप्यर्थेति।

**अलं स्थित्वेति। गृध्रगोमायुसङ्कुलत्वं स्थितिनिवर्तने हेतुः।**
**पुरुषविसर्जनेति। मृतपुरुषविसर्जनपरत्वं ह्यत्र प्रतीयते।**

अथ गोमायोः— आदित्योऽयमिति। बहुविघ्न इति जीवितस्य प्रत्यागमशङ्कोत्थाप्यते।

निशीति। गोमायुर्हि निशि गृध्रमभिभवितुं क्षमते। अत्र युगविशेषस्य दिव्यानुभावशालित्वाद् गृध्रगोमायुसंवादः स्वतस्सम्भवी न तु प्रौढोक्तकल्पितः। प्रबन्धेऽपीत्यपिशब्द उक्तसमुच्चयपर इत्याह—अपिशब्दादिति।

## मधुमती

प्रबन्धेऽपीति। कियत्यपि वाक्ये इत्यर्थः।

## विस्तारिका

प्रबन्ध इत्यादि। प्रबन्धो महावाक्यम्, 'अपि' शब्दाद् वाक्ये पदे चेत्यर्थः। अर्थशक्तेर्भवत्याविर्भवतीत्यर्थशक्त्युद्भवो द्वादशविधः।

संवादादौ तत् प्रथमतः। कालधर्मो मरणम्, तमुपागतः। कश्चिन्न जीवित इति सम्बन्धः। दिवा प्रभवत इति रात्रावन्धत्वात्।

बहुविघ्न इत्यादि। अयं सन्ध्यासन्निहितः कालः, बहुविघ्नो राक्षसकालत्वात्। एतत कालापगमे जीवनं सम्भाव्यते। तदाह—जीवेदपीति।

कनकवर्णाभम्, न तु कनकाभम्, तदा कनकगतकाठिन्यस्यापि प्रसङ्गात्। अप्राप्तेत्यादि। यौवनप्राप्तौ परदाराभिगमनादिदोषेणायुः संक्षेपसम्भावना स्यात्। बालत्वेन तद्भावाद् भूताभिभव एवेत्यर्थः। बाला अविवेचकाः। बालत्वे हेतुमाह—अविशङ्किता इति।

व्यावर्तननिष्ठं तदुद्देश्यकम्। विजृम्भमाणस्य विश्रब्धं सञ्चरतः। प्रबन्ध एवेति। न तु यत्र कुत्रचिद् वाक्ये। प्रथते प्रकाशते। अन्य इत्यादिनोक्ता नोदाहृताः। महावाक्यस्यापि वाक्यत्वेन तद्दर्शनेनैव सुगमत्वादित्यर्थः। तदाह—लक्ष्यत इत्यादि। लक्ष्यते इति लक्ष्यं प्रेक्ष्यानुसर्तव्याः वाक्येष्विव ज्ञातव्याः।

## सारबोधिनी

कङ्काल इति। "स्याच्छरीरास्थि कङ्काल" इत्यमरः कालधर्मो मरणम्। दिवा प्रभवत इति। रात्रावन्धत्वात्। प्रबन्ध एव प्रथते, व्यञ्जकत्वेनेति शेषः। अथवा प्रबन्ध इति सप्तमी। उक्तरूपं वचनं प्रथत इत्यन्वयः।

## काव्यप्रदीपः

**प्रबन्धेऽप्यर्थशक्तिभूः ॥१९॥**

अर्थशक्तिमूलः पदवाक्ययोः प्रबन्धे च। प्रबन्धश्च संघटितनानावाक्यसमुदायः। स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्चेति। तत्र पदवाक्ययोरुदाहृतम्। प्रबन्धे यथा गृध्रगोमायुसंवादादौ। तथा हि—

**अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले।**
**कङ्कालवहले घोरे सर्वप्राणिभयंकरे॥**

न चेह जीवितः कश्चित्कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी।

इति दिवा प्रागल्भ्यवतो गृध्रस्य मृतावेक्षकपुरुषविसर्जनपरं वाक्यमेलकम्।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम्।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन॥

अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः॥

इति निशि प्रगल्भस्य गोमायोस्तघ्वावर्तनपरं श्लोकद्वयमिति प्रबन्ध एव व्यञ्जकः प्रथते। अत्र स्वतःसंभविना वस्तुना गमननिवर्तनरूपवस्तुव्यक्तिः। एवमन्येऽप्येकादश प्रमेदा द्रष्टव्याः।

## काव्यप्रकाशखण्डनम्

प्रबन्धेऽप्यर्थशक्तिभूः। (मू. का. ४२, च. पा.)

अलं स्थित्वा श्मशानेऽस्मिन् गृध्र-गोमायुसङ्कुले।
कङ्कालबहले घोरे सर्वप्राणिभयङ्करे॥

न चेह जीवितः कश्चित् प्राणिधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥इति।

रात्रावन्धस्य दिवा प्रभवतो गृध्रस्य पुरुषविवर्जनपरं वाक्यम्-

आदित्योऽयं दिवा मूढाः स्नेहं कुरुत सांप्रतम्।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥

अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः ॥इति।

निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठं चेति प्रबन्ध एव व्यञ्जकतया प्रथते। अन्येऽपि स्वयमूह्याः। अपिशब्दात् पद— वाक्ययोः पदैकदेशरचनावर्णेष्वपि रसादयः। पदं द्विविधं सुबन्तं तिङन्तं च। एकदेशो धातुनामरूपः प्रकृतिविभागः, तिङ् [प. १७.१]

## आदर्शः

प्रबन्धेऽपीति, द्वादशविधोऽर्थशक्तिभूः सः नैकरूपमहावाक्यात्मक (अनेकमंहावाक्यात्मक ?) प्रबन्धव्यङ्ग्योऽपीत्यर्थः। तथाच पदवाक्याभ्यामिव प्रबन्धेनाप्यर्थशक्त्युद्‌भवा द्वादश व्यङ्ग्या इत्यर्थः। यद्यपि तदप्राप्तिमहादुःखेत्यादिपद्यद्वयात्मकमहावाक्यमपि प्रबन्ध एव, तथाऽपि तत्र अशेषचयपदयोर्व्यञ्जकत्वात् पदप्रकाश्यता

तादृशपदाभाव एव प्रबन्धप्रकाश्यता । तत्र स्वतःसम्भविवस्तुव्यङ्ग्यं वस्तुप्रबन्धप्रकाश्यमाह — अलमित्यादिपद्यद्वयेन । श्मशाने मृतबालकं त्यजतस्तद्बन्धून् प्रति गृध्रस्य वाक्यमिदम् । 'कालधर्म' मरणम् । 'दिवा प्रभवतः' दिवा भक्षणप्रभोः । 'पुरुषविसर्जनं' पुरुषाणां श्मशानत्यजनम् । तथाच यूयं श्मशानादपगच्छतेत्येवं वस्तु स्वतःसम्भविनः प्रबन्धार्थरूपवस्तुनः प्रबन्धस्य च व्यङ्ग्यमित्यर्थः । गोमायूक्तिरूपप्रबन्धस्यापि तादृशमेव व्यङ्ग्यमाह— आदित्योऽयमिति । आदित्यसत्त्वाद् युष्माकं रात्रिञ्चरतोऽपि भीतिर्नास्तीति दर्शितम् । स्नेहकरणं स्थितरेव, तत्फलमाह जीवेदपीति । बहुविघ्न इत्यनेन विघ्नरहितमुहूर्त्तान्तरे जीवनसम्भावना दर्शिता । तत्सम्भावनायां हेतुमाह— अमुमिति । कनकवर्णाभत्वेन रूपविपर्ययाभावात् जीवनसम्भावना । बालत्वेन मृत्युकालाप्राप्त्या मृत्युहेतुयौवनाधीनापचाराभावेन च जीवनसम्भावना । मूढा इत्यत्र बाला इति पाठान्तरम्, शिशुबुद्धय इत्यर्थः । 'विजृम्भमाणस्य' भक्षणार्थं वर्त्तमानस्य । व्यावर्त्तनं श्मशानत्यागतः परावर्त्तनम्, तन्निष्ठं तत्पर्याप्तिकम् । अत्रापि जनव्यावर्त्तनरूपं वस्तु तादृशवस्तुव्यङ्ग्यम् । अन्ये त्वेकादशेति स्वतःसम्भविवस्तुव्यङ्ग्यालङ्कारादय इत्यर्थः । अपिशब्दादिति प्रबन्धेऽपीत्यपिशब्दात् उक्तसमुच्चयपराद्दित्यर्थः ।

## सुधासागरः

अर्थशक्तिमूलः पदवाक्ययोः प्रबन्धे च । प्रबन्धश्च सङ्घटितनानावाक्यसमुदायः । स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्च । तत्र पदवाक्ययोरुदाहृतं, प्रबन्धे तूदाहरति- अलमित्यादिना । कङ्कालः शरीरास्थि, कालधर्मो मरणम् । स्पष्टमन्यत् ।

इति दिवेत्यादि । दिवा प्रभवतो रात्राबन्धत्वान्मृतावेक्षकजनसमुदायपरावर्त्तनाभिप्रायं वाक्यमेलकमित्यर्थः ।

आदित्योऽयमित्यादि । स्पष्टम् । इति निशीत्यादि । प्रबन्ध एव प्रथते— व्यञ्जकत्वेनेति शेषः । अन्ये त्वित्यादिवृत्तिः स्पष्टार्था ।

## विवरणम्

प्रबन्धेऽपीति । प्रबन्धो नामैकवाक्यतापन्नानि वाक्यानि । तत्रार्थशक्त्युद्भवा नाम द्वादश ध्वनयो वर्तन्ते । तत्र स्वतः सम्भविना (वस्तुना) वस्तुव्यञ्जनमुदाहरति — यथेत्यादि । मृतं बालं परित्यज्य श्मशानाद् गन्तुमिच्छतस्तद्बन्धूंस्त्वरयितुं गृध्रस्य वचनमिदं पुरुषाणां तावद् गमनं कर्तव्यमिति व्यङ्ग्यं वस्तु ज्ञापयति । सहृदयसय तु पूर्ववाक्यार्थसहकारेण गृध्रवाक्यमिदमित्यवगत्य गृध्रेषु दिवाभक्षणसामर्थ्यम्, तेन च दिवैव पुरुषविसर्जनतात्पर्यावगमनमनेन वाक्येन जन्यत इत्यर्थः। तथाभूतं गोमायुसंवादं प्रपञ्चयितुमुदाहरति— आदित्योऽयमित्यादि । आदित्यावस्थानेन नास्तीदानीं युष्माकमिह भयमिति व्यज्यते । अस्य मुहूर्तस्य विघ्नबाहुल्येन निर्विघ्नमुहूर्ते जीवनसम्भावना दर्शिता । निशि विजृम्भमाणस्य पक्षिषु सुप्तेष्वपि जाग्रतः । अत्रापि पुरुषाणामवस्थानकर्तव्यतैव व्यङ्ग्या। सहृदयानां तु पूर्ववाक्यार्थसहकारेण गोमायोर्निशि विजृम्भणं पुरुषावस्थापनतात्पर्यनिष्ठा च प्रतीयते । प्रथते प्रथयति । अन्ये वस्तुनाऽलङ्कारव्यञ्जनादयः । लक्षणतो लक्ष्येषु लक्षणविवेचकेन । प्रबन्धेऽपीत्यत्रापिशब्द उक्तसमुच्चयार्थक इत्याह— अपिशब्दादिति ।

**(सू. ६१) पदैकदेशरचनावर्णेष्वपि रसादयः ॥**

तत्र प्रकृत्या यथा

**रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।**
**रुद्दस्स तइअणअणं पव्वईपरिचुंबिअं जअइ ॥ ९७ ॥**

अथ जयंतीति न तु शोभते, इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम् ।

---

### सङ्केतः

वर्णेष्वपीति । निमित्तसप्तमीयम् । तेन—रसादयः पदैकदेशादिनिमित्तेन व्यङ्ग्याः भवन्ति इत्यर्थः । यदा विशिष्टेन पदांशादिना केनाप्युपकृताः विभावादयः रसास्वादातिशयं कुर्वन्ति, तदा पदांशादेरेव हेतुत्वम्, रसास्वादमात्रे तु विभावादीनाम् । तथा वर्णा अपि मृदुपरुषात्मना श्रुतिकालोपलभ्यमानेन अर्थानपेक्षश्रोत्रग्राह्येण स्वभावेन रसास्वादे निमित्तमेव । विभावादिसंयोगाद्धि रसनिष्पत्तौ सत्यां तदास्वादे वर्णानां निमित्तमात्रत्वात् । एवं—'पदेऽप्यन्ये' इत्यत्र, 'प्रबन्धेऽप्यर्थ' इत्यत्र च निमित्तसप्तम्येव । पदैकदेशश्च वक्ष्यमाणप्रकृतिप्रत्ययाद्यंशभेदात् अनेकधा । रचना तु दीर्घादीर्घसमासभेदात् त्रिधा ।

रअकेळीति । रतिकेलौ हृतं निवसनं येन स चासौ करकिसलयरुद्धनयनयुगलश्च । यद्वा—रतकेलौ हृतं निवसनं यकाभ्यां कराभ्यां तौ तथा । तौ हि गौर्याः निवसनरक्षणाय यामिकौ कृतौ स्तः । ततः प्रहरके विनष्टे ताभ्यां रुद्धं नयनयुगलं यस्य । यदि वा—रतिकेलौ हृते वसने सति करकिसलयाभ्यां रुद्धं नयनयुगलं यस्येति । तदेवोत्कृष्टम् । इति व्यज्यते इति शेषः । तच्च जयति इत्यत्र जिधात्वंशेन ।

### सङ्केतः (रुय्यकः)

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥**

सशपथमित्यपाकृतः पादानतः इत्युभयसम्बद्धम् । पाणीति—करयुगलम् । धृतो मण्डलीकृतम् । नीव्यन्तरे कृत्वा बद्धः । प्रत्यहं—

### बालचित्तानुरञ्जनी

पदैकदेशादिष्वपि भवतीत्याह । पदैकदेशेन पदस्यैकदेशा अंशाः प्रकृतिप्रत्ययसंबन्धकालवचनपुरुषव्यत्ययपूर्वनिपातविशेषविभक्तितद्धितोपसर्गनिपातसर्वनामप्रातिपादिकाव्ययीभावकर्मधारयादिविशेषाः । रचना

संघटना, सा च त्रिधा, असमासा मध्यमसमासा अतिवर्णमृदुसूक्षात्मनाप्रसिद्धा । तेषु निमित्तसप्तमी । निमित्तेषु द्योतकेषु वसतीत्यर्थः । "रसादय" इत्यादिशब्देन तदाभासादयः यद्यपि विभावादीनां रसाभिव्यञ्जकत्वं तथापि विभावादीनामपि पदांशादिना प्रकाश्यमानत्वेन चमत्कारकारित्वात् । विभावाद्याश्रयं पदांशादीनामपि च द्योतकत्वमविरुद्धम् ।

तत्र प्रकृत्या रसव्यङ्ग्यमुदाहरति रइकेलीति । रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य, हृतनिवसनश्चासौ करकिसलयरुद्धनयनयुगलश्चेति समासः । रुद्दस्स रुद्रस्य, पव्वइपरिचुंबिअं पार्वतीपरिचुम्बितं, तइअणअणंकथने प्रयोजनमाह समान इति । पिधानमितरलोचनद्वयसाधारणोऽपि लोकोत्तरेणैव चुम्बनरूपेणास्य पिधानमिति तदेव तृतीयनयनमेव इतरनयनद्वयादुत्कृष्टमधिकम् । अयमर्थो जयतिप्रयोगात् नान्यस्मादतो भयप्रकृत्या संभोगो व्यज्यत इत्यर्थः ।

## काव्यादर्शः

यथा पदे वाक्ये चालक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिस्तथा पदांशादिष्वपीत्याह—पदैकदेशेति । पदांशाश्च प्रकृतिः स्यादित्यादि संबन्धकालवचनपुरुषव्यत्ययपूर्वनिपातविशेषविभक्तितद्धितोपसर्गनिपातसर्वनामप्रातिपदिकाव्ययीभावकर्मभूताधारादिविशेषाः । रचना शब्दार्थगता संघटनाऽसमासा मध्यमसमासा दीर्घसमासेति त्रिधा । यद्यपि विभावानुभावव्यभिचारिप्रतीतिरेव रसास्वादे निबन्धनं, तथापि ते विभावादयो यदा विशिष्टेन केनापि पदांशादिनार्प्यमाणा रसचमत्कारविधायिनो भवन्ति तदा पदांशादीनामसौ महिमा । तथा वर्णानामपि श्रुतिसमयोपलक्ष्यमाणोऽर्थानपेक्ष्यपि श्रोत्रैकग्राह्यो मृदुपरुषात्मा स्वभावो रसास्वादे सहकार्येव । अत एव वर्णेष्विति निमित्तसप्तमी । तेषु सत्स्वित्यर्थः । एवं पदेऽप्यन्य इत्यत्रापि सप्तमी । वर्णादीनां निमित्तत्वमात्रमेव विभावादिसंयोगाद्धि रसनिष्पात्तिरित्युक्तम् । वर्णाश्च स्वरूपमात्रमेवाभिदधतः श्रोत्रेन्द्रियपथप्राप्ता एव रसमभिव्यञ्जन्तीति अभिधात्र मूलमस्त्येव । रसादय इति । रसभावतदाभासभावशान्तिभावोदयभावसंध्यादयः । रतिकेलिहृतनिवसनश्चासौ करकिसलयरुद्धनयनयुगश्च तस्य समानेऽपि स्थगनप्रयोजने साध्ये तुल्ये च लोचनत्वे देव्या परिचुम्बनेन यस्य निरोधः संपाद्यते तद् भगवतस्तृतीयं नेत्रं जयति सर्वोत्कर्षेण वर्तत इत्याह—तदेवेति । तृतीयं नेत्रम् ।

## विवेकः

वाचकत्वं ध्वनिव्यवहारे न प्रयोजकं व्यञ्जकत्वेन व्यवस्थापनादिति पदैकदेशभूतैरपि विशिष्टविभावादिवाच्यार्थसामर्थ्यप्रकाश्यानां रसादीनां प्रकाशनमित्याह पदैकदेशेति । अयञ्च प्रकृतिप्रत्ययात्मकत्वेन द्विधा । तत्र धातुः प्रातिपदिकञ्चेति प्रकृतिरपि द्विधैव । तिङ्सुप्प्रभृतयश्च प्रत्ययभेदाः । तत्र तिङ्कृतं व्यञ्जकत्वं यथा रइ इत्यादि । रतिकेलिहृतनिवसनकरकिशलयरुद्धनयनयुगलस्य । रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥ अत्र शोभते राजत इत्यादिक्रियापदान्तरतिरस्कारेण जयतेरेव प्रयोगः पिधानान्तरातिशयादिना चुम्बनस्य लोकोत्तरप्रकर्षं शृङ्गारजीवितभूतं व्यनक्ति ।

### दीपिका

पदैकदेशो द्विधा, प्रकृतिः प्रत्ययश्च । प्रकृतिर्धातुप्रातिपदिकरूपा, प्रत्ययस्तु सुप्तिङाद्यनेकविधः । तत्र क्रमादुदाहरणानि—अत्र चावापोद्वापदृष्ट्या तस्य तस्यांशस्य वाचकस्यापि वाचकसमुदायप्रविष्टस्य—प्रसिद्ध-स्व-स्व-प्रतिपाद्य प्रतिपादनद्वारा रसादिकेषु कोऽप्यतिशय आधीयत इति तद्विद एवात्र प्रमाणम् ।

रतिकेलिहृतनिवसनायाः करकिसलयाभ्यां रुद्धं नयनयुगलं यस्येति समासः । समानेऽपि स्थगनव्यापारे हस्तादिकृते । तदेव चुम्बनपिधानमेवोत्कृष्टं चमत्कृतिविशेषानुगुणं, तस्य च तदानुगुण्यं नयनविषयेण 'जयति' पदेन ध्वन्यते । तद्विषयत्वादेव हि तत्र 'शोभते' 'भाती' त्यनादृत्य 'जयती' ति प्रयोगः ।

### दर्पणः

पदैकदेशः प्रकृत्यादि । तस्यापि केवलस्य न वाचकत्वम् । तथापि वाचकसमुदायप्रविष्टस्य रसादिषु तत्तदतिशयाधायकत्वम् ।

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥**

अत्रेति । शोभते भातीत्यादि ।प्रकृतिस्वरूपरुद्धादिधातुप्रयोज्यधातोः संनिवेशो हस्तादिति पिधानात्तृतीयनयनपिधानस्योत्कर्षं शृङ्गारजीवितभूतं व्यनक्तीत्याशयः ।

### साहित्यचूडामणिः

इतोऽप्यलक्ष्यक्रमभेदान् कांश्चित् प्रदर्शयति—पदेति ।

एकदेश अवयवाः, रचना संघटना, वर्णान्य (?) क्षराणि ।

**सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः ।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥** ध्व. ३.१६ ॥

इति ध्वनिदृशा बहुधा पदावयवाः । तत्र प्रत्ययात् पूर्वमुपादीयमाना प्रकृतिः, प्रकृतेः परं प्रयुज्यमानः प्रत्ययः । स्वादीनां प्रत्याहारः सुप्, तिबादीनां तिङ् । पूर्वत्र कारकाणि उत्तरत्र क्रिया । उक्तं हि—

'तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विते' ति [अमरे]

शक्तिसंख्याविभाकृत् प्रत्ययविशेषो विभक्तिः । स्वतन्त्रो हेतुः कर्ता । क्रिययावाप्यं कर्म । साधकतमं करणम् । सम्यगस्मै प्रदीयत इति सम्प्रदानम् । उक्तं च—

**अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।**
**प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम् ॥** [वा.प. ३.७.१२९] इति ।

अपायाबधिरपादानम् । आधारोऽधिकरणम् । व्यतिरिक्तः शेषः । कारकाणां प्रवृत्तिविशेषः क्रिया, यां धात्वर्थमामनन्ति । क्रियैव क्रियापरिच्छेदहेतुः कालः । वचनमेकत्वादि । प्रथममध्यमोत्तमाः पुरुषाः । पृथगर्थानामे-

कार्थीभावः समासः। प्रथमानिर्दिष्टं समास उपसर्जनं, यत् पूर्वं निपात्यते। भावकारकाभिधायिनो धातुप्रत्ययाः कृतः। भावकारकाभिसम्बन्धाभिधायित्वे सत्यधातुप्रत्ययास्तद्धिताः। अलिङ्गसंख्या-शक्तीन्यव्ययानि। जात्यादि-प्रवृत्तिनिमित्तानुपग्राहिणोऽसत्त्वभूतार्थाभिधायिनो लिङ्गसंख्याशक्तिशून्या उच्चावचार्थनिपातिनो निपाताः। समासयोग्या निपाता एव कतिपये गतयः। गतिविशेषा एव प्रादय उपसर्गाः। क्रियाजन्यसम्बनाधावच्छेदहेतवः कर्मप्रवचनीयाः।

**क्रियाविशेषजन्यानां सम्बन्धानां प्रकाशने।**
**कर्मप्रवचनीयाः स्युर्निमित्तमवधारिताः॥**

इत्युक्तत्वात्। अव्ययानि सुप्तिङन्तानुसारीणि विभक्तिप्रतिरूपकाणि। प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थविभागमुखेन भेदकं क्रियाविशेषणम्। शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्। चादिनिपातद्योत्यः समुच्चयादिर्विशेष इति पदावयवप्रपञ्चः। तत्र यथासम्भवमुदाहरति। प्रकृत्या यथा—

रईति।

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥ इति।**

रतिकेलौ सम्भोगलीलायां हृतं निराकृतं निवसनं पार्वतीसम्बन्धि येन, करकिसलयाभ्यां पार्वतीसम्बन्धिभ्यां रुद्धमाच्छादितं नयनयुगलं सामान्यसिद्धं यस्येति। गमकत्वात् समासः। जयतीति धातुरूपायाः प्रकृतेर्व्यञ्जकत्वम्।

प्रत्ययांशव्यतिरेकेण प्रकृत्यंशं परिवर्तयति नत्विति। शोभा हि नेत्रत्रयसाधारणी।

इदं हि सौभाग्यस्य सर्वस्वं यत् प्रेयस्या स्वयं प्रियतमस्य लोचनपरिचुम्बनमित्याह—लोकोत्तरेति।

**सम्प्रदायप्रकाशिनी**

अथ रसध्वनेः सम्भवान्तरमाह—पदैकदेशेति।

पदैकदेशो हि प्रकृतिप्रत्ययात्मकतया द्विरूपः। तत्र प्राथम्यात् प्रकृतिप्रकाश्यमुदाहरति—रइकेलीति।

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥**

अत्र प्रकृतेर्वैशिष्ट्यं दर्शयति—जयति, न तु शोभत इत्यादीति। तत्र को विशेष इत्यत आह—समानेऽपि हीत्यादि। लोकोत्तरेणैवेति। प्रस्तावोचितत्वाच्चुम्बनरूपस्य स्थगनस्य लोकोत्तरत्वम्। तिङ् प्रकृतेरुदाहरणमिदम्।

## मधुमती

आदिपदात् भावतदाभासादीनां परिग्रहः। वाक्यस्य पदघटितत्वात्, तयोश्च वर्णघटिततया, यत्र वाक्यस्य रसादिव्यञ्जकता तत्र सर्वेषामेषामपि व्यञ्जकता। एभिर्विनाकृतस्य वाक्यस्यैव अभावात्। तथाच— क्वचित् कस्यचित् प्राधान्यं विवक्षित्वा वाक्यादेः व्यञ्जकत्वव्यपदेशः इति तात्पर्यम्।

न त्विति। 'शोभते' इत्यादिपदैः प्रकर्षमात्रप्रतीतावपि सर्वोत्कर्षाप्रतीतेः, तदप्रतीतौ च—करस्पर्शापेक्षया चुम्बनस्य, करस्थगनापेक्षया चुम्बनस्थगनस्य च उत्कर्षो न प्रतीयेत इति भावः। लोकोत्तरेति। करादिना स्थगन-मात्रम्, चुम्बनेन तु स्थगनं क्रीडा चेति द्वयमुपपन्नमिति, अस्य लोकोत्तरत्वम्। अत्र उत्तमदेवताविषयसम्भोगवर्णनस्य अनौचित्यात् आभासत्वम्।

## विस्तारिका

पदैकदेश इत्यादि। पदैकदेशो नाम सुब्धात्वाख्यातभेदादिभन्नः। आदिपदादुपस्कारकः। स च त्रिविधः, अन्तरङ्गबहिरङ्गोभयरूपत्वात्। प्रथमस्त्वागम उपग्रहश्चेति द्विविधः। उपग्रहश्च—

**यत्रात्मनेपदाद् भेदः कश्चिदर्थस्य गम्यते।**
**परस्मैपदतो वापि मन्यन्ते तदुपग्रहम्॥**

इत्युक्तदिशाऽऽत्मनेपदपरस्मैपदगम्योऽर्थस्य विशेषः। द्वितीयो निपातोपसर्गकर्मप्रवचनीयादिभेदाद् बुहुविधः। तृतीयः सर्वनामपूर्वनिपाताव्ययीभावद्विर्वचनादिभेदाद् द्विविधः। स्वातन्त्र्येणार्थप्रत्यायनादेषां पदैकदेशता।

रइ इत्यादि।

**रतिकेलिहृतनिबसनकरकिसलयरुद्धनयनयुगलस्य।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥**

रतिकेल्या हृतं निवसनं येन, करकिशलयाभ्यां रुद्धं नयनयुगलं यस्य। 'निवसनान्त, युगलान्त' पदाभ्यां कर्मधारयः।

केचित्तु रतिकेलिहृतनिवसनायाः करकिशलयाभ्यां रुद्धं नयनयुगलं यस्येति विग्रहमाहुः तदसत्; कृतनि-वसनाकरकिशलयेत्यादिप्रयोगापत्तेः।

प्रकृत्यन्तरस्य न व्यञ्जकत्वमन्वयव्यतिरेकाभ्यां तदुपगमादित्याह—न त्विति। हेतुमाह—समानेऽपीत्यादि। स्थगनमाच्छादनम्। तत्तु हस्तादिना कृतम्, लौकिकं परिचुम्बनं तु पिधानोपकरणत्वेनाकृतत्वा-ल्लोकोत्तरमित्याह—लोकोत्तरेणेति। तदेव चुम्बनपिधानमेव, उत्कृष्टं चमत्कारविशेषानुगुणत्वात्। आनुगुण्यं रागातिशयहर्षलज्जादिसम्पत्तिद्वारा रसातिशयपोषणात्। तच्च नयनविशेषेण जयतिना [उत्कर्षः] गम्यत इति न शोभते प्रयोगः। तेन रागातिशयाद्यर्थं प्रत्येकव्यञ्जकत्वं नोत्कर्षं प्रति, अनुशासनेन तत्र शक्त्युपगमात्। एतेन

"समुदितमेव पदं वाचकम्, प्रकृतिप्रत्यौ तु स्वस्वार्थे व्यञ्जकावित्युत्कर्षो व्यङ्ग्यः" इति निरस्तम् । शक्त्योपपत्तौ व्यञ्जना न प्रसरेत् । एवं सर्वत्रानुसन्धेयम् ।

पदैकदेश इति । पदं द्विविधं सुबन्तं तिङ्न्तञ्च । एकदेशो नामधातु-स्वरूपः प्रकृतिभागः । सुप्तिङ्स्वरूपो विभक्तिभागः । वक्ष्यमाणोपसर्गादिरप्यत्रैवान्तर्भावः । इदमुपलक्षणम् । पुरुषव्यत्ययपूर्वनिपातादयोऽपि गृहीतव्या इति लक्ष्यप्रदर्शने वक्ष्यते ।

## सारबोधिनी

तत्र धातुरूपपदैकदेशमुदाहरति रइ इत्यादि ।

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥**

प्रकृत्यन्तरस्य न व्यञ्जकत्वमन्वयव्यतिरेकाभ्यां तदुपगमादित्याह न तु शोभत इति । समानेऽपीत्यादि । स्थगनमाच्छादनम् । तच्च हस्तादिना कृतं लौकिकम् । परिचुम्बनं तु पिधानोपकरणं केनाप्यदृष्टत्वाल्लोकोत्तरमित्याह लोकोत्तरेणेति । तदेव चुम्बनपिधानमेवोत्कृष्टं, चमत्कारविशेषानुगुणत्वात् । आनुगुण्यं च रागातिशयहर्षलज्जासंपत्तिद्वारकं, रसातिशयपोषणात् । तच्च नयनविषयेण जयतिना गम्यत इति न शोभतेः प्रयोगः । तेन रागातिशयार्थमेव व्यञ्जकत्वं, नोत्कर्षं प्रति । अनुशासनेन तत्र शक्त्युपगमात् ।

## काव्यप्रदीपः

**पदैकदेशरचनावर्णेष्वपि रसादयः**

रसादयो लक्ष्यक्रमाः पदैकदेशे रचनायां वर्णेषु । अपिशब्दात्प्रबन्धे । पदवाक्ययोस्तु 'पदेऽप्यन्ये' इत्यनेनैव प्रतिपादिताः । पदं तावद्द्विविधम्, सुबन्तं तिङन्तं च । तदेकदेशो नामधातुस्वरूपप्रकृतिभागः प्रकृत्येकदेशः सुप्तिङ्स्वरूपविभक्तिभागश्च उपसर्गादिरूपश्च । तत्र पदवाक्ययोरुदाहृतं प्राक् । पदैकदेशादिषूदाह्रियते । तत्र धातुरूपप्रकृत्यात्मकपदैकदेशे रसादिव्यक्तिर्यथा—

**'रइकेलिहिअणिअसणकरकिसलअरुद्धणजुअलस्स ।**
**इस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ ॥'**

अत्र रतिव्यक्तौ 'जि' धातुरूपप्रकृतेः प्राधान्यम् । यतः स्थगनव्यापारसाम्येऽप्यन्यनेत्रयोः कराभ्यां पिधानस्य तु लोकोत्तरेण कर्मणेति तदेवोत्कृष्टं धन्यजीवितमिति रत्युत्कर्षप्रयोजकमनया व्यज्यते । अतएव जयतीत्युक्तम्, नतु शोभत इत्यादि । एवमग्रेऽपि प्रकृत्यादे रसादिव्यञ्जने प्राधान्यं तत्तदर्थव्यञ्जकतयावगन्तव्यम् ।

## काव्यप्रकाशखण्डनम्

सुप्रूपः प्रत्ययविभागः । यथा—

**रइकेलिहिअनिवसनकरकिसलअरुद्धणअणजुअलस्स ।**
**रुद्दस्स तीअनअणं पव्वइपरिचुम्बिअं जअइ ॥**

**रतिकेलिहृतनिवसनकरकिशलयरुद्धनयनजु (यु) गलस्य ।**
**रुद्रस्य तृतीयनयनं पार्वत्याः परिचुम्बितं जयति ॥**

उत्कर्षाश्रयो भवति, स च लोकोत्तररूपेण पिधानवत्तया । लोकोत्तरता च चमत्कारानुगुणतया रागातिशयहर्ष—लज्जासंपत्तिद्वारकरसातिशयपोषणात् । तच्च जयतिना साध्यत इति प्रकृतेर्व्यञ्जकत्वम् ।

### आदर्शः

पदैकेति । रसादय इत्यनेन असंलक्ष्यक्रमा उक्ताः, ते च प्रकृतिप्रत्ययोपसर्गरूपैः पदैकदेशैः, दीर्घसमासादिरूपाभी रचनाभिर्वर्णविशेषैश्च व्यज्यन्त इत्यर्थः । प्रकृत्या इति धातुप्रकृतेरित्यर्थः । रइकेलि इति

**रतिकेलिहृतनिवसनाकरकिसलयरुद्धनयनयुगलस्य ।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥** इति संस्कृतम् ।

रतिनग्नीकृतया पार्वत्या करद्वयेन हरस्य नयनद्वये पिहिते चुम्बनपिहिततत्तृतीयनयनवर्णनमिदम् । रतिकेलौ हृतनिवसना अर्थात् पार्वती तस्याः करकिसलयेत्यर्थः, प्राकृते समासे निवसनेत्यत्र ह्रस्वः । यद्वा हृतम् अर्थात् पार्वत्या निवसनं येन स चासौ करकिसलयरुद्धनयनयुगलश्चेति कर्मधारयः तादृशस्येत्यर्थः । करश्च अर्थात् पार्वत्याः । 'जयति' उत्कृष्टम्; करद्वयपिहितनयनद्वयापेक्षया शृङ्गारानुभावचुम्बनपिहितत्वेन शृङ्गारोत्कर्षव्यञ्जकत्वात्; अतः शृङ्गारोत्कर्षो जिधातुरूपप्रकृतिव्यङ्ग्य इत्याह—अत्रेति । न त्विति, नयनोत्कर्षवाचको जिधातुरेव शृङ्गारोत्कर्षव्यञ्जने समर्थः न तु तत्कान्तिवाचकः शुभधातुरित्यर्थः, अतः शृङ्गारोत्कर्षव्यञ्जकचुम्बनपिहितत्वात् तृतीयनयनमेव उत्कृष्टमित्याह—समानेऽपि हीति, नयनद्वयपिधाने समानेऽपि हीत्यर्थः । लोकोत्तरेणेति लोकविलक्षणेनेत्यर्थः, शृङ्गारानुभावकत्वाच्चुम्बनस्य । तदेवेति तृतीयनयनमेवेत्यर्थः । चक्रवर्त्ती तु—तृतीयनयनपिधानमेवेत्यर्थ इत्याह, तन्न; वाच्यस्योत्कर्षस्य तत्रानन्वितत्वादेव व्यङ्ग्यस्य तु लोकोत्तरपदेनैव व्याख्याततत्वात्, अतः पिधानोत्कर्षव्याख्यानमसदेव ।

### सुधासागरः

रसादयोऽलक्ष्यक्रमाः पदैकदेशरचनायां वर्णेषु । अपिशब्दात् प्रबन्धे । पदवाक्ययोस्तु पदेऽप्यन्ये इत्यनेनैव प्रतिपादिताः । पदं तावद् द्विविधम् । सुबन्तं तिङन्तं च । तदेकदेशो नामधातुस्वरूपप्रकृतिभागः, सुप्तिङ्स्वरूपो विभक्तिभागश्च, उपसर्गादिरूपश्च । तत्र पदवाक्ययोरुदाहृतं प्राक् ।

पदैकदेशादिषूदाह्रियते । तत्र धातुरूपप्रकृत्यात्मकपदैकदेशे रसादिव्यक्तिर्यथा—रईति । गाथा छन्दः ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

इति संस्कृतम् । रतिकेलौ हृतं निवसनमर्थाद् गौरिसम्बन्धि येन, करकिसलयाभ्यां रुद्धमर्थात्तया नयन-युगलं यस्येति बहुव्रीहिद्वयान्तरं कर्मधारयो बोध्यः ।

चण्डीदासभट्टाचार्यास्तु—रतिकेलिहृतनिवसनया करकिसलयाभ्यां रुद्धं नयनयुगलं यस्येति विग्रह-माहुः । तत्र निवसनेत्याकारलोपश्चिन्त्यः । उत्तरार्द्धं स्पष्टार्थम् ।

अत्र रतिव्यक्तौ जिधातुरूपप्रकृतेः प्राधान्यम् । यतः स्थगनव्यापारसाम्येऽपि अन्यनेत्रयोः कराभ्यां पिधा-नमस्य तु लोकोत्तरेण कर्मणेति तदेवोत्कृष्टं धन्यजीवितमिति रत्युत्कर्षप्रयोजकमनया व्यज्यते । अत एव जयतीत्युक्तं न तु शोभत इत्यादि । तदेतद्वृत्तिकृदाह—अत्र जयतीत्यादि । हस्तादिना कृतमाच्छादनं लौकिकम् । परिचुम्बनं तु पिधानोपकरणं केनाऽप्यदृष्टत्वाद् रागतिशयहर्षलज्जादिसम्पद्द्वारा रतातिशयपोषणाच्च लोकोत्तरमिति बोध्यम् । मधुमतीकारास्तु-करादिना स्थगनमात्रं चुम्बनेन तु स्थगनं क्रीडा चेति द्वयमत्युपपन्नमिति लोकोत्तरत्वमित्याहुः ।

## विवरणम्

पदैकदेशेत्यादि । अत्रेदमवधेयम्—पूर्वपदस्यासाधारणव्यञ्जनागम्यमेव पदव्यङ्ग्यमित्युक्तम् । व्यञ्ज-नाया असाधारण्यं तु क्वचित् तदीयवृत्त्यन्तरमूलकत्वेन, यथाऽभिधामूलकलक्षणामूलकयोः । क्वचित् तदर्थमात्र-पर्याप्तव्यञ्जकताकत्वेन, यथा 'भीतानना' इत्यत्र पदार्थीभूताननकम्पस्येतरनैरपेक्ष्येणापि शङ्काव्यञ्जकत्वम् । क्वचित् पदवृत्त्यन्तरसहभावः, यथा 'पराङ्मुखे त्वयि पराङ्मुखं सर्वम्' इत्यत्राप्रक्रान्तत्वेनापाततोऽभिधया बोधयितुमश-क्यस्यापि विधेर्वास्तविकसर्वपदवाच्यत्वसहभावो व्यञ्जनायाः । क्वचित्तु धूमादिपदस्य वह्नाविव पदार्थवृत्तिना मानान्तरविधया ज्ञापकत्वेन सहभावः, यथा 'णवपुण्णिमामिअंकस्स' इत्यादौ मृगाङ्कादेः पूर्णिमासमबन्धस्य पदा-र्थस्य प्रथमानुरागित्वपुनरननुरागित्वादावाक्षेपकत्वसंवलिता व्यञ्जना । तत्र च सुप्तिङन्तस्यैव पदस्य कारकस-ङ्ख्याद्युपरक्तप्रत्यार्थं प्रति वाचकतावादिनां शाब्दिकविशेषाणां मते पदैकदेशे नाभिधामूला व्यञ्जना सम्भवति । अत एव न लक्षणामूलाऽपि । "धीराणां ववसाआ न विमुज्झन्ति" इत्यादावाख्यातान्तमेव लाक्षणिकम् । अधीर-व्यवसायेषु यस्य सम्भवो धीरव्यवसाये चाभावः, तादृशविमोहकर्तरि तस्य लक्षणास्वीकारात् । नहि तत्र धातुरेव लाक्षणिकः, तस्याशक्तत्वेन शक्यसम्बन्धासम्भवात् । अत एव तत्पदवृत्त्यन्तरसहभावादिरपि पदैकदेशव्यञ्जनायां न सम्भवति, किन्तु पदार्थैकदेशध्वननमूलकमिदं पदैकदेशे रसादिध्वननमिति । तच्च ध्वननमूलं ध्वननं तदैव शोभते, यद्यसंलक्ष्यक्रमे ध्वनौ विश्राम्यतीत्यन्तरा वस्त्वलङ्कारध्वनिः सन्नपि न गणित इत्याशयेनोक्तम्—रसादय इति । तत्र पदैकदेशानां तु मध्ये प्रकृत्या धातुरूपायाः प्रकृतिप्रत्ययोपसर्गनिपातादिभेदेन नानाविधा हि पदार्थाव-यवव्यञ्जकाः ।

रइकेलीति—

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।**

**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बतं जयति ।।** इति च्छाया ।

निवसनेत्यन्तस्तृतीयार्थबहुव्रीहिः । तस्य युगलान्तेन कर्मधारयः । अत्र जयतीति पदावयवेन जिधातुना । तदेव तृतीयलोचनमेव, उत्कृष्टमिति प्रत्याय्यते । नन्वाख्यातमेवात्रोत्कर्षध्वननसमर्थमस्तीत्यत आह—न तु शोभत इतीति । तुकारो ह्यर्थः । नहि शोभत इत्यत्राख्यातं सदपि तथा व्यञ्जयतीत्यर्थः । जिधातुस्त्वाख्यातनिरपेक्षोऽपि कृत्प्रत्ययसहकारेण तथा बोधयितुं प्रभवतीति भावः । तन्निष्ठोत्कर्षेण तत्रैव व्यतिरेको द्योत्यते । करकिसलयरुद्धयोश्चुम्बितस्य च साधारणं धर्ममपेक्षते । तमाह—समान इत्यादि । उपमेयोत्कर्षे हेतुमाह—लोकोत्तरेत्यादि । लोके पिधानसाधनत्वेनावगतात् करादिव्यापारादन्येन चुम्बनव्यापारेणेत्यर्थः । स च लोचनद्वयावधिकस्तृतीयलोचनस्य व्यतिरेकश्चुम्बनरूपानुभावसहकारेण पार्वतीसमवेतं शृङ्गारं स्वातन्त्र्येणैव कविसमवेतं रतिभावं च पुष्णातीति भावः ।

यथा वा

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृता
धावित्वेव कृतंप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥९८ ॥

अत्र पदानीति न तु द्वाराणीति ।

---

### संङ्केतः

प्रेयानिति । सशपथं इति अपाकृतः पादानतः इति द्वेयऽपि योज्यम् । पाणीति । करपुटधृतमण्डलीकृत-नीव्यन्तरे कृत्वा बद्धः । करसम्पुटे लसन् नीव्याः निबन्धः संरोधः यत्रेत्यर्थः । प्रत्युतेति । या किल अनुनीता न प्रसन्ना साऽपि प्रिये याति सति, सपत्नीसङ्गमाशङ्किनी स्वयमेव प्रार्थिका अभूत इति व्यज्यते । प्रेम्णः इति । यावत् पदत्रयमपि न याति, तावत् धृतः इति च स्नेहातिशयः व्यङ्ग्यः ।

### बालचित्तानुरञ्जनी

अत्रैवोदाहरणान्तरमाह— यथेति । कयाचिन्नायिकया सशपथं पादानतः प्रेयान् तिरस्कृतः । स उन्मनाः सन् द्वित्राण्यपि पदानि यावन्न याति तावत् धावित्वा प्रत्युत करयुगले गलन् नीवीनिबन्धो निरोधनं यस्मिन् कर्मणि कृतं प्रणामकञ्च यथा तथा धृतः । विचित्रता आश्चर्यं व्यङ्ग्यम् । तामाह अत्रेति । द्वित्राणि पदानीत्युक्तं न तु द्वाराणीति । द्वित्राणि द्वाराणीत्युच्यमाने रसाप्रतीतेः । अतो द्वित्रादिपदप्रकृत्या प्रेमातिशयो व्यज्यत इत्यर्थः ।

### काव्यादर्शः

'सशपथम्' इति, अप्राकृत इति, पादानत इत्युभयसंबद्धं क्रियाविशेषणम् । करयुगले लसन्ती या वल्लभबन्धनाय नीवी तया । निबन्धः संरोधनं यत्र, कृतः प्रणामः पादपतनं च यत्रेति च धरणक्रियाविशेषणे । 'प्रत्युत' इत्यनेन या किलं प्रार्थितासीत् सैवानङ्गीकृतप्रार्थनतया वैमनस्यभाजि प्रियेऽपसरति सति तस्य वनितान्तरसमागम-शङ्क्या प्रार्थिका जातेति व्यज्यते । एवं च प्रेम्णो विचित्रत्वम् । पदत्रयमेव यावन् न याति तावद् धृत इति प्रेमातिशयो ध्वन्यते । यथा वा 'तद् गेहं नतभित्ति मन्दिरमिदम्' इत्यादौ । अत्र दिवसार्थेनात्यन्तासंभाव्यमानतास्यार्थस्य ध्वन्यत । 'तद्' इति प्रकृत्यंशश्चात्र । 'नतभित्ति' इत्येतत् प्रकृत्यंशसहायसमस्तामङ्गलभूतां मूषकाद्याकीर्णतां ध्वनति । 'तद्' इति केवलमुच्यमाने ह्युत्कर्षोऽपि संभाव्येत ।

## विवेकः

प्रकृतेर्यथा प्रेयानितीयसुना प्रियत्वमात्रनिरासपरेण काऽपि प्रेमपात्रता द्योत्यते ।

## दीपिका

सशपथमिति मध्यगतं पदं पूर्वापरपदसम्बद्धं बोद्धव्यम् । पाणिसम्पुटेन गलन्त्यां स्खलन्त्यां नीव्यां निबन्धः प्रियस्य संश्लेषो तथा स्यात् [तथा ।] नतु द्वाराणीति — तावत्कालमप्यनुरागोद्रेकात् मानावष्टम्भः स्थातुं शक्त इति किमपि चमत्कारबीजसूत्रणम् । प्रेयानिति — ईषन्मात्रप्रियत्वेऽपि प्रकर्षः ?

## साहित्यचूडामणिः

प्रकृत्या एव प्रातिपदिकरूपाया उदाहरति — प्रेयानिति । आत्मनेति तस्य सौम्यदर्शनतया दुस्त्यजत्वं द्योत्यते प्रत्युतेति उक्तवैपरीत्येन तत एव कृतप्रणामकम् । पदानीति । द्वाराद्युपादाने कालाक्षमत्वलक्षणमौत्सुक्मय-मनुद्धुरीकृतं स्यात् । तिङ्सुपोरिति । द्वयोरेकत्रेति यावत् ।

## सम्प्रदायप्रकाशिनी

सुप्प्रकृतेरुदाहरति — प्रेयान् सोयमिति । पादानतोऽपि सशपथमापाकृतः सन् द्वित्राण्येव पदानि वासभ-वनाद् यावन्न निर्याति, तावन्न केवलमियमस्य प्रार्थनां विना प्रसन्ना प्रत्युततं प्रार्थनया प्रसादितवतीत्याविष्कर्तु-मुक्तं— प्रत्युत धृत इति ।

न तु द्वाराणीति । पदात् पदान्तरसंचलनमपि विरहासहिष्णुतया न सोढमित्युक्ते यदौत्सुक्यं न हि तद् द्वारमित्युक्ते ।

## मधुमती

न तु द्वारादीनीति । बुद्धिपूर्वक गमने हि तथा युज्यते । तथा च — पदानि इत्यनेन किङ्कर्तव्यताव्यामोह-प्रयुक्तत्वं गमनस्य युज्यते ।

यद्वा — द्वारपर्यन्तगमने सहिष्णुतया अनुरागशैथिल्यं स्यात् इति पदानीत्यनेन अनुरागधिक्यं प्रतीयते ।

## विस्तारिका

नाम्नो व्यञ्जकतामाह — यथा वेति ।

प्रेयानित्यादि । सोऽयं प्रकृष्टप्रियत्वने प्रसिद्धः । सशपथमित्युभयत्रान्वेति । सशपथं पादानतः सशपथ-मपाकृतश्चेति । प्रेयानिति कान्तयेति च परस्परविरहाक्षमत्वम् । उन्मनाः सोत्कण्ठः, प्रत्युत विरोधे । पाणिसम्पुटे प्रणामार्थं बद्धाञ्जलौ गलद् यद्रागौत्कट्यान्मुद्रणम् । इत्थं त्यजन्नीवीनिबन्धो यत्र धारणेन प्रणामाञ्जलिनैव स्खलतो नीवीबन्धस्यालम्बनम् ।

अत्रेति, द्वारादिव्यवच्छेदो व्यङ्ग्यः । स च सम्भोगसञ्चायौत्सुक्यत्वेन सम्भोगपरिपोषककृत् ।

### सारबोधिनी

अथ नाम्नो व्यञ्जकतामाह यथा वेति। न तु द्वाराणीति। तेन द्वारादिव्यवच्छेदो व्यङ्ग्यः। स च संभोगसञ्चार्यौत्सुक्योपोद्बलनद्वारा रसपरिपोषणकृत्।

### काव्यप्रदीपः

नामरूपतदेकदेश तव्द्यक्तिर्यथा —

**'प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया**
**द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः।**

**तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो**
**धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥'**

अत्र द्वारादिपदं परिहृत्य पदानीत्युक्तम्। तेन द्वारपर्यन्तगमनेऽप्यसहिष्णुतयोत्कण्ठातिशयो व्यज्यते।

### काव्यप्रकाशखण्डनम्

**प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया**
**द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः।**

**तावत् प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो**
**धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥**

अत्र पदानीति न तु द्वाराणि। तथा च द्वारादिव्यवच्छेदो व्यङ्ग्यः। स च संभोगसंचार्यौत्सुक्योपोद्बलनद्वारा रसपरिपोषकृत्।

### आदर्शः

नामप्रकृतेरपि व्यञ्जकत्वमुदाहरति — यथा वा प्रेयानिति। पादानतः सोऽयं प्रेयान् कान्तया सशपथमपाकृतः सन् उन्मनाश्च सन् वासभवनाद् यावद् द्वित्राण्येव पदानि न याति तावद् धावित्वैव कृतप्रणामकं यथा स्यात् तथा प्रत्युत कान्तया धृतः। प्रत्युतेत्यपाकरणवैपरीत्ये। पाणिसम्पुटेत्यादिकं धारणक्रियाविशेषणम्। गलदिति पाठे गलन्नीवीबन्धस्य पाणिसम्पुटवृत्तित्वमर्थः, न तु पाणिसम्पुटे गलनं गलत एव पाणिसम्पुटधृतत्वात्। लसदिति पाठे तु नीवीबन्धस्य गलत्वमूह्यम्। 'अहो' इति तादृशगतिवैचित्र्यविषयविस्मये। प्रेम्णो गतिः स्वभावः। कान्ताया औत्सुक्यरूपव्यभिचारिभावध्वनिरयम्। पत्युः स्वल्पपदगमने सति धरणे तदुत्कर्षधीरतो बहुवचनं विना पदरूपप्रकृतिभाग एव तस्य व्यञ्जत इत्याह — पदानीति। द्वाराणीत्यपेक्षया पदानीत्यस्यैव औत्सुक्यव्यञ्जकत्वमित्याह न त्विति।

## सुधासागरः

एवमग्रेऽपि प्रकृत्यादेः रसादिव्यञ्जने प्राधान्यं तत्तदर्थव्यञ्जकतयाऽवगन्तव्यम्। नामरूपतदेकदेशे तद्व्यक्तिमुदाहरति — यथा वेति— प्रेयानिति।

शार्दूलविक्रीडितं छन्दः। वाच्योऽर्थः स्पष्टः। अत्र द्वारादिपदं परिहृत्य पदानीत्युक्तं तेन द्वारपर्यन्तगमनेऽप्यसहिष्णुतयोत्कण्ठाऽतिशयो व्यज्यते। तदेतद्वृत्तिकृदाह— अत्र पदानीत्यादि।

## विवरणम्

प्रातिपदिकस्य व्यञ्जकत्वमुदाहरति – यथा वेति। अपाकरणवैपरीत्यं प्रत्युतेत्यस्यार्थः धावित्वा धरणेऽन्वेति। तद्वैपरीत्यमर्थान्तरेण सामान्येनोपपादयति— अहो प्रेम्ण इति। अत्र पदानीति। पदानीति पदैकदेशः प्रातिपदिकमेव मानशान्तेरौत्सुक्यस्य च त्वरारूपप्रकर्षं व्यञ्जयतीत्यर्थः। अत्र न प्रातिपदिकान्तरम्, न वा बहुवचनं व्यञ्जकमिति दर्शयति—न तु द्वाराणीति। बहुवचनमत्र प्रत्युतौत्सुक्यापकर्षकम्। तद्व्यङ्ग्यं बहुत्वं तु धावित्वा धरणे वाच्ये गुणीभूतमवसेयम्।

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥९९॥

अत्र किरतीति किरणस्य साध्यमानत्वम् निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते ।

---

**सङ्केतः**

पथीति । अत्र कार्यकारणपौर्वापर्य विपर्ययरूपा अतिशयोक्तिः ।

**बालचित्तानुरञ्जनी**

तिङ्सुब्भ्यां रसव्यङ्ग्यमुदाहरति तिङिति । पथि पथि दिशि दिशि शुकचुञ्चूवत् चारूणाम् अङ्कुराणां, लतानां च नर्त्तकः कामः प्रतिमनुष्य बाणान् विक्षिपति । व्यङ्ग्यमाह अत्रेति । किरतीति वर्तमानाभिधायिप्रत्ययोऽतीतानागतरहितस्य किरणस्य वर्त्तमानस्य विधीयमानत्वेनोत्कर्षं व्यनक्ति । प्रत्ययोऽपि तदेव व्यनक्तीत्यर्थः ।

**काव्यादर्शः**

'पथि' इति । प्रथमतरावतीर्णवर्षासमयसमुल्लसितसुन्दरपदार्थसार्थसमर्थितातुलशक्तिः स्मरः सरसहृदयविधुरताविधायी वर्तते । मानिनीमानदलनदुर्ललितशौर्यविभवे चास्मिन् कुसुमशरनिकरनिपातकातरितान्तःकरणानां मानचर्चापि नाभूत् । किरणस्येति । वर्तमानकालभिधायी 'ति' प्रत्ययोऽतीतानागतरहितकिरणस्य वर्ण्यमानस्य निष्पाद्यमानत्वेनोत्कर्षं व्यनक्ति । सिद्धत्वमिति । निवर्तनलक्षणधात्वर्थस्य निष्पाद्यमानतामनादृत्य निष्पन्नत्वेनाभिधानं चमत्कारकारि परिनिष्पत्तिं यावत्साध्यत्वेनोक्तौ प्रस्तुतस्यार्थस्य दुर्बलः परिपोषः, ततः सिद्धत्वेनाभिधानं निष्पन्नत्वाच्च प्रकृतार्थं पुष्णाति ।

**विवेकः**

प्रत्ययस्य यथा— पथि पथीत्यादि । पवमानो वातः, लासको नर्तकः । किरतीति कर्तरि प्रत्यय इति साध्यमानत्वं न वाच्यं किन्तु द्योत्यम् । एव प्रातिपदिकार्थमात्रविहित्या प्रथमया तद्भूतं सिद्धत्वं द्योत्यते । निष्ठाप्रत्ययस्य कर्त्रादिकं वाच्यमिति धात्वर्थगतमतीतत्वं व्यङ्ग्यम् ।

## दीपिका

पवमानः पवनः लासको नर्तकः । अत्र किरतीति वर्त्तमानविहितेन तिङाचेकिर्यमाणत्वं द्योत्यते । निवृत्तेति प्रातिपदिकार्थमात्रेण सुपा साध्यताविरहेण सिद्धत्वं, निष्ठया च तत्क्रियागतमतीतत्वं कार्यस्य पूर्वकालत्वलक्षणाऽतिशयोक्तिः— एतेषाञ्च व्यङ्ग्यानामास्वादानुगुणत्वं तद्विदामपरोक्षमेव ।

नन्वेवं वस्त्वलङ्कारव्यञ्जनाऽपि पदैकदेशस्यास्तीति रसादिमात्रव्यञ्जकतैव कुतो गण्यते । सत्यं, प्रकृतिप्रत्यययोः स्वीयस्वीयानुवाचकत्वमिलितयोस्तु मिलितार्थंवाचकत्वमिति व्याकरणशास्त्रव्यवहारविलोपो मा भूदिति परिगणनम् ।

## दर्पणः

प्रातिपदिकरूपप्रकृतेर्व्यञ्जकत्वे उदाहरति पथिपथीति । किरतीति किरणस्य वर्तमानविहितत्वात् साध्यत्वम् । निवृत्तेति कृदन्तप्रत्ययसिद्धम् । तेन कार्यस्य झटित्युत्पन्नत्वद्योतनेन तिङ्कृद्भ्यां रसोत्कर्षत्वम् । किं चैवमत्र कार्यकारणपौर्वापर्यव्यत्ययरूपातिशयोक्त्यलङ्कारस्य व्यङ्ग्यत्वम् । एवं च न केवलं रसध्वनेः पदातिशयव्यङ्ग्यत्वम् । किन्तु वस्त्वलङ्कारयोऽपीति ग्रन्थकृदभिप्रायः सूचितो भवति ।

## साहित्यचूडामणिः

नरि नरि पुंसि पुंसि, पुरि पुरि नगरे नगरे, मानिनीमानचर्चा मनस्विनीमानाभ्यासः । सुप्त्वेन सिद्धत्वे प्रतिपाद्यमानेऽपि भूयो भूय इत्यधिकारविहितेन क्तप्रत्ययेन मानिनीमानस्यातीत्वं द्योत्यते ।

## सम्प्रदायप्रकाशिनी

अथ तिङ् सुपोः प्रत्यययोरुदाहरति — पथि पथीति । आभा प्रभा ।

अत्र किरतीत्यादि । लटा तिङ् प्रत्ययेन किरणव्यापारापरिसमाप्तिः, निवृत्तेति क्तेन सुप्प्रत्ययेन तत्कार्यभूतमानिनीमाननिवृत्तेरतीत्वेन तदपेक्षया चिरसिद्धतेति शृङ्गारप्रकर्षः ।

## मधुमती

अत्रेति । किरति इति कर्तरिप्रत्ययविधानात् कर्ता लकारवाच्यः । साध्यमानत्वं व्यङ्ग्यम् । एवं निवृत्ता इत्यत्रापि प्रातिपदिकार्थादि सुपो वाच्यम् । सिद्धत्वं तु व्यङ्ग्यमेव । तथा क्तप्रत्ययस्यापि भावादिः अर्थः । अतीतत्वं तु व्यङ्ग्यम् ।

## विस्तारिका

यथेति । पथि पथीत्यादि । लासकोः नर्तकः । चर्चा प्रसङ्गः ।

अत्रेति । औणादि ल्युट्प्रत्ययेन किरणपदसिद्धिरिति मिश्रमतं नानुमतम्, किरति तमांसीति कर्तरि व्युत्पन्नस्य किरणपदेनाभिधानात् किरणपदं चिन्त्यम् । साध्यत्व सिद्धत्वे तिङ्सुपोरनभिधेयत्वेन व्यङ्ग्ये एवेत्याह — तिङा सुपा चेति । किरणनिवृत्त्योः सिद्धत्वसाध्यत्ववैपरीत्येन कारणकार्यपौर्वापर्यविपर्ययमूलातिशयोक्तिव्य-

ञ्जनद्वारा वसन्तकालस्योद्दीपकत्वप्रकर्षः प्रत्याय्यते। क्तप्रत्ययेनेति। ननु क्तप्रत्ययेन वाच्यस्यातीतत्वस्य कथं व्यङ्ग्यत्वमिति चेदुच्यते — तदुपस्थितेः शक्यत्वेऽप्यनुभवस्य व्यञ्जनैकसाध्यत्वात्। स्वाप्रकृतमानचर्चा गतेत्यतीतत्वानुभवने क्तप्रत्ययस्याक्षमत्वात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थानुभावकत्वव्युत्पत्तेः। न च प्रकृत्यर्थेनैवान्वयः, निवृत्तिप्रकृत्यर्थस्यातीतत्वबोधनायोग्यत्वात्। न च प्रकृतिप्रत्ययाभ्यामुभाभ्यामेव मानचर्चाया अतीतत्वबोधनादेकवैयर्थ्यम्, सम्भेदेनान्यतरस्य वैयर्थ्यात्। तस्मात् प्रकृत्यर्थान्वितस्वार्थानुभावकत्वं 'क्त' प्रत्ययस्य व्यञ्जनादेवेति। यद्वा। अतिशयेन ईतत्व गतत्वं प्रकृत्या। प्रत्यायितस्यातीतत्वस्य पुनः 'क्त' प्रत्ययेन प्रत्यायनमतिशयावगमाय। 'शुक्लः शुक्लः' इत्यत्र द्वितीयशुक्लपदाद् यथा शुक्लत्वातिशयावगतिः। मानचर्चान्तरासमानकालीनत्वमेव मानचर्चातीतत्वातिशयः इति।

## सारबोधिनी

पथि पथीति। लासको नर्तकः। चर्चाप्रसङ्गः। कृपृधृजिमन्दिनिधाञः क्नुः (२.८१) इति औणादिकक्नुप्रत्ययेन किरणपदसिद्धिः। साध्यत्वसिद्धत्वे व्यङ्ग्ये एवेत्याह तिङसुपा चेति। किरणनिवृत्योः सिद्धत्वसाध्यत्ववैपरीत्येन कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिगम्यमाननिवृत्तिशीघ्रभावित्वद्वारा वसन्तकालस्योद्दीपनातिशयो द्योत्यते। क्तप्रत्ययेनेति। ननु क्तप्रत्ययवाच्यस्यातीतत्वस्य कथं व्यङ्ग्यत्वमिति। अथ कस्य वा अतीतत्वं बोध्यताम्। न तावन्मानचर्चायाः तस्याः प्रकृतित्वाभावात्। प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्। न वा निवृत्तेः अतीतत्वरूपायास्तस्या अतीतत्वाभावादिति चेदुच्यते। प्रकृत्या प्रत्ययेन च मानचर्चाया एवातीतत्वं शक्तिव्यञ्जनाभ्यां बोध्यते। न चैकतरवैयर्थ्यम्। सभेदान्यतरवैयर्थ्यमिति न्यायात्। न तथाप्यप्रकृतर्थान्वितस्वार्थबोधकत्वं क्तप्रत्ययस्य कथमिति वाच्यम्। व्यञ्जनशक्तिमहिम्नेत्यवधेहि।

यद्वा—अतिशयेन इतत्वं गतत्वं अतीतत्वम्। तथा च प्रकृत्या प्रत्यायितस्याप्यतीतत्वस्य पुनः क्तप्रत्यनेन प्रत्यायनमतिशयावगमात्। भुक्तभुक्त इत्यत्र द्वितीयभुक्तपदाद्यथा भुक्तत्वातिशयावगतिः मानचर्चान्तरासमानकालीनत्वमेव मानचर्चातीतत्वातिशय इति।

## काव्यप्रदीपः

तिङ्सुपोर्यथा —

**'पथि पथि शुकचञ्चूचारुराभाङ्कुराणां**
**दिशि दिशि पवमानो वीरुधां लासकश्च।**

**नरि नरि किरति द्राक्सायकान्पुष्पधन्वा**
**पुरि पुरि विनिवृत्ता मानिनीमानचर्चा॥'**

अत्र किरतीति तिङा किरणस्य साध्यता तिङ्योगे साध्यतयैव धात्वर्थोपस्थितेः। निवृत्तेति सुप्प्रत्ययेन निवृत्तेः सिद्धता। सुप्प्रयोगे तथैव प्रकृत्यर्थप्रतीतेः। तत्रापि क्तप्रत्ययेनातीतता प्रकाश्यत इति किरणनिवृत्त्योः पौर्वापर्यविपर्ययरूपातिशयोक्तिप्रकाशो रसोत्कर्षे पर्यवस्यति। यत्तु 'लटा साध्यत्वम्, क्तप्रत्ययेन भूतत्वम्' इति

व्याख्यातम्, तदयुक्तम्। सुप्तिङ्भ्यां सिद्धत्वसाध्यत्वमभिधाय 'तत्रापि क्तप्रत्ययेनातीतत्वम्' इत्यनेन वृत्तिव्याख्यानेन विरोधात्।

## आदर्शः

प्रत्ययस्य व्यञ्जकत्वमुदाहरति — तिङ्सुपोरिति। पथि पथि अङ्कुराणामाभा शुकचञ्चूनामिव चारुः। अत्र शुकचञ्चुतुल्यत्वात् पत्राङ्कुरा एव अङ्कुरपदार्थाः त एव च उद्दीपकाः। 'वीरुधां' लतानां 'लासकः' नर्त्तकः। नरि नरीति नृशब्दस्य सप्तम्यां रूपम्। द्राक् झटिति। चर्च्चा प्रसङ्गः। किरणस्येति, न च कृ विक्षेपे इत्यस्य युटि करणमित्येव रूपं सम्भवति उणादौ साधितं किरणपदन्तु रश्मिवाचकमेव न विक्षेपवाचकमिति वाच्यम्, करणं कीरति भावक्विबन्तस्य नामकारितान्तत्वे युटि किरणरूपसिद्धेः। तिङा सुपा चेति, किरतीत्यत्र किरणस्य साध्यमानत्वं निवृत्तेत्यत्र निवृत्तेः सिद्धत्वं तिङ्सुब्विभक्तिलभ्यम्, एवमतीतत्वञ्च क्तप्रत्ययलभ्यम्। एवञ्च द्योत्यते इत्यत्र उच्यत इत्येवार्थः, एषामर्थानां तत्तद्वाच्यत्वात्, तथाच कारणे सायककिरणे साध्यत्वं कार्यायां माननिवृत्तौ च सिद्धत्वं बाधितमप्याहार्यं बोधयन्तस्तिङादयो माननिवृत्तेः शीघ्रोत्पन्नत्वमभिव्यज्य तद्वारा शृङ्गारोत्कर्षं व्यञ्जयन्तीत्यर्थः।

## सुधासागरः

मालिनी छन्दः। वसन्तवर्णनमिदम्। रम्भाङ्कुराः कदलीपुष्पोद्गमाः। लासको नर्त्तकः, चर्चा प्रसङ्गः। स्पष्टमन्यत्।

अत्र किरतीति तिङा किरणस्य साध्यत्वं तिङ्योगव्यञ्जनया साध्यतयैव धात्वर्थोपस्थितेः। निवृत्तेति सुप्रत्ययेन निवृत्तेः सिद्धत्वं सुब्योगव्यञ्जनया तथैव प्रकृत्यर्थप्रतीतेः। उक्तञ्च वैयाकरणभूषणे (वाक्यप० ३.८.४८)—

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।**

**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥**

इति। तथा च क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपवत्त्वं कारकान्वयितावच्थछेदकरूपवत्त्वं वा साध्यत्वम्। एतदेव चासत्त्वभूतत्वम्। क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकरूपवत्त्वं कारकानन्वयितावच्छेदकरूपवत्त्वं वा सिद्धत्वम्। एतदेव च सत्त्वभूतत्वम्। अत एव 'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते' इत्यादि वैयाकरणैरुक्तम्। तत्र सिद्धत्वेऽपि क्तप्रत्ययेनातीतत्वं व्यज्यते इति किरणनिवृत्त्योः पौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारप्रकाशो रसोत्कर्षे पर्यवस्यति।

यत्तु लटा साध्यत्वं क्तप्रत्ययेन भूतत्वमिति व्याख्यानम्, तदयुक्तम्। तिङ्सुब्भ्यां साध्यत्वसिद्धत्वमभिधाय तत्रापि क्तप्रत्ययेनातीतत्वमित्यनेन वृत्तिव्याख्यानेन विरोधात्। किरतीत्यत्र कर्त्तरि प्रत्ययविधानात् कर्त्ता फलव्यापारयोर्धातुलभ्यत्वाद् व्यापाराश्रयो वा तिङ्वाच्यः। साध्यत्वं तु व्यङ्ग्यमेव। एवं निवृत्तेत्यत्रापि प्रातिपदिकार्थादिसुपो वाच्यत्वम्। सिद्धत्वं तु व्यङ्ग्यमेव। तथा क्तप्रत्ययस्यापि भावादिरर्थः अतीतत्वं तु व्यङ्ग्यमेवेति सुधीभिर्न विस्मर्त्तव्यम्।

अत्र तार्किकाः—प्रयोगसमवायिनस्तिबादयो न वाचकाः, तेषां बहुत्वादनन्तशक्तिकल्पनापत्तेः। शक्यतावच्छेदकत्वकल्पनाऽप्यनेकेषु स्यादिति गौरवञ्च। किन्तु तैः स्मृता आदेशिनो लकारादयो वाचकाः, लत्वस्य जातिरूपतया तस्या एव शक्तावच्छेदकत्वौचित्यात्। न चैवं भूल इत्यतोऽपि बोधः स्यादिति वाच्यम्, तादृशबोधे पचतीत्यादिसमभिव्याहारस्यापि कारणत्वात्। अन्यथा भवतेत्यतोऽपि बोधापत्तेः, नचैवमपि तानजानतां बोधो न स्यादिति वाच्यम्, तेषां तिङ्क्ष्वेव शक्तिभ्रमाद् बोधात्, अपभ्रंशाद् बोधस्थले तथा कल्पनात्। अथैवं शत्रादिस्थले कर्तृकर्मणोर्वाच्यत्वं न स्यात्, स्याच्च कृतिमात्रं तथा, वाचकस्य स्थानिनो लकारस्य तिङादाविव तुल्यत्वादित चेत् न। तत्र लकारस्य कृतिमात्रमर्थः ,कर्ता च शानजर्थः 'कर्त्तरि कृत्' इत्यनुशासनात्। तथा च नोक्तदोषः, नामार्थयो-रभेदानुरोधादस्तु वा तत्र कर्तैवार्थः। तस्मान्न श्रूयमाणानां वाचकतेत्याहुः।

तत्र वदामः— स्मृतानां वाचकत्वेऽव्यवस्था। तथा हि राम इत्यत्र विसर्गेण किं सिः स्मर्त्तव्यः, किं वा सुः स्मर्त्तव्यः, आहोस्विद् रुः स्मर्त्तव्यः। अथ कालापिभिः सिः, पाणिनीयैः सुः, अपरैश्च रुः स्मर्त्तव्य इति वक्तव्यम्। तर्हि येनेदानीं सर्वमधीतं तस्य विनिगमनाविरहेण प्रतिबन्धः स्यादिति सम्प्रदायविदः।

वस्तुतस्तु तेषां लिपिवदननुगमेऽपि क्षत्यभावः। तस्माल्लकारस्य वाचकत्वे लकारमविदुषो बोधो न स्यात्, वाचकाज्ञानात्। न च तिङ्क्ष्वेव शक्तिभ्रमात्ततो बाधः, तस्य भ्रमत्वे मानाभावात्। बहूनामानुपूर्व्याः शक्ततावच्छेदकत्वादिकल्पनापत्तिर्मानमिति चेन्न। तवापि पूर्वोक्तक्रमेणादिशिनो नानात्वेन गौरवस्य तुल्यत्वात्। पदतदर्थघटितशक्तेर्भमस्य ब्रह्मणाऽप्यापादयितुमशक्यत्वाच्चेत्यनवस्था स्यात्।

किञ्च व्यवहारस्तावच्छक्तिग्राहकशिरोमणित्वेन सर्वैर्मन्यते, स च श्रूयमाणतिङादिष्वेवेति त एव शक्ता-स्तथा च गौरवं प्रामाणिकमिति वादिनां वाचकत्वे न दोषलेशावकाश इति दिक्। तदेतत्सर्वमभिप्रेत्य श्रीवाग्देव-तावतार आह — अत्रकिरतीत्यदि।

## विवरणम्

शुकचञ्चूचारुस्तत्प्रभाचारुः। लासको नर्तकः। द्राक् शीघ्रम्। करणस्येत्येव पाठः, किरतेधीतोर्हि मयू-खार्थ एव किरण इत्युणादिप्रत्ययेन सिध्यति न त्वन्यत्रेति ध्येयम्।

साध्यमानत्वं लिङ्गसङ्ख्याऽन्वयविरोधी धर्मः, तेन सायकविकरणानामसङ्ख्येयत्वं गम्यते। सिद्धत्वं लिङ्गसङ्ख्याऽन्वयसहिष्णुत्वम्, तच्च निवृत्तिविशिष्टे गम्यमानं निवृत्तावर्थाद् गम्यते। तेन निवृत्तेः सङ्ख्येयत्वेन सर्वमानिनीमाननिवृत्तीनां यौगपद्यं गम्यते।

प्रसङ्गादाह— क्तप्रत्ययेनेति। तेन कार्यकारण (पौर्वापर्य) विपर्ययरूपातिशयोक्तिः। तेन चौत्सुक्यभा-वातिशयो व्यज्यत इति भावः।

यथा वा

**लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः**
**निराहाराः सख्यः सततरुदितोच्छूननयनाः ।**
**परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः**
**तवावस्था चेयं विसृज कठिने मानमधुना ॥१०० ॥**

अत्र लिखिन्निति न तु लिखतीति तथा, आस्ते, इति न तु, आसित इति, अपि तु प्रसादपर्यन्तमास्ते, इति, भूमिमिति न तु भूमाविति न हि बुद्धिपूर्वकमपरं किंचिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् ।

---

### सङ्केतः

न तु लिखतीति । लिखतीत्युक्ते प्रसादपर्यन्तं इति न लभ्यते । तेन लिखन् इत्येव युक्तम् । सर्वत्र सुबादीनां आकूतविशेषव्यञ्जकत्वम् । स तु आकूतः व्यक्तः सन् यथायोगं विभावादिरूपताद्वारेण रसादिकं व्यनक्ति । आस्ते इति । न लिखित्वा गतः, किन्तु अद्यापि लिखन् वर्तते एवेत्यर्थः । न तु भूमाविति । आधारत्वे हि चित्रलिखनस्यैव प्राधान्यं स्यात्, न तु तस्याः प्रसादस्य । अतो भूमिं इत्युक्तमिति भावः ।

### बालचित्तानुरञ्जनी

अत्रैवोदाहरणान्तरमाह यथा वेति । प्राणदयितः प्राणवल्लभः बहिरवनतशिराः सन् भूमिं लिखन्नास्ते । तव सख्यः निराहाराः सत्यः निरन्तररोदनोच्छूननेत्राः पञ्जरस्थशुकैः पठनं हसनं च परित्यक्ते । तव चेयमवस्था । अतस्त्वमधुना मानं परित्यज ।

अत्र व्यङ्ग्यमाह लिखन्निति सुब्विभक्त्या । प्रसादपर्यन्तमास्त तदिति व्यज्यते लिखतीत्युक्तेऽस्वार्थस्याप्रतीतेः । आस्त इति तिङ्विभक्त्या तस्य चिन्ताकुलत्वं व्यज्यते । भूमावित्युच्यमाने पूर्वं चित्रलेखनस्यैव प्रतीयमानत्वात् अस्यार्थस्याप्रतीतेः । एवं सुबादयोपि प्रायः विशेषं व्यञ्जयन्ति । सोऽभिप्रायः स्वस्वविभावादिरूपणाद्वारेण रसादीन् व्यनक्तीत्यर्थः ।

### काव्यादर्शः

प्रसादपर्यन्तमास्त इत्यर्थो 'लिखन्' इत्यस्य भवति, न तु, 'लिखति' इत्यस्य । सर्वत्र सुबादीनामभिप्रायविशेषाभिव्यञ्जकत्वम् । स तु अभिव्यक्तोऽभिप्रायो यथास्वं विभावादिरूपताद्वारेण रसादीन् व्यनक्ति ।

## विवेकः

लिखन्नित्यादि — अरुणं दग्धपक्ष्म घोरवटिकाविकाश (निकाशम् ?) उच्छूननयनाः कठिनकठोरहृदयतया निरस्तान्यानुरोधा इत्यर्थः। — लिखन्नास्त इति लिखनस्योपलक्षणीभावादवस्थिता (तया) क (कस्या) न्यपारतन्त्र्य प्रतीयते। सुस्थावस्थे चेतसि बुद्धयः समुन्मिषन्तीति तन्मयीभावेन विगलितसकलकरणपाटवस्य सतताभ्यस्तविद्याऽननुस्मरणमनुरागोद्रेकसूचकम्।

## दीपिका

वस्तुतस्तु प्रकृतिप्रत्ययमेलकस्य कर्मत्वादिविशिष्ठार्थवाचकत्वं वर्त्तमानत्वादिव्यङ्ग्यमेवेत्युदाहरणादौ वस्त्वलङ्कृत्योरप्येकदेशव्यङ्ग्यत्वमस्तीति परितुष्यतु भवान्। इतच्चातीतत्वं द्योत्यत इति वदता वृत्तिकृता स्फोरितमेव। द्योतनं व्यञ्जनमिति ध्वनिभाषा। आस्त इति - लिखनस्यानवोपायता शतृ-वाच्या।

## साहित्यचूडामणिः

लिखन्निति। बहिर्वेदिकादौ। हसितं 'शुक ! पादमरेर्दश' इति न्यायात्। पठितं प्रसिद्धम्। इयमिति कण्ठगतप्राणा। अधुनालमतीतचिन्तया अद्यापि त्यज्यतामयं मानपिशाचः। न लिखतीति। लेखनमनूद्य प्रधानभूतमासनं विधत्त इति। शत्रा प्रकाश्यते, यत्र लटो न पाटवम्। आस्त इति लटि निर्बन्धमाह— नन्विति। तत्त्वे गतो न वेति सन्देहः स्यात्। भूमिमिति द्वितीयातात्पर्यमाह— न त्विति। द्वितीयासप्तम्योः प्रतीतिभेदमाह — नहीति। भूमौ लिखन्नित्युक्तौ भूमेरधिकरणतयोपलक्षिताया लेखनक्रियायाः कर्मावश्यमंभावाच्च वृक्षं लिखन्नित्यादिवद् बुद्धिपूर्वकमाकारविशेषं लिखन्नित्यर्थः स्यात्। स चानुचितः नैश्चिन्त्यद्योतकत्वात्। भूमिं लिखन्निति चिन्ताकुलतया यत्किञ्चिन रेखामात्रमालिखन्नास्ते इत्यभिव्यनक्ति।

## सम्प्रदायप्रकाशिनी

लिखन्निति। एतत् तिङ् सुप्प्रत्ययान्तरोदाहरणम्।

तद् विवृणोति — अत्र न लिखतीत्यादिना।

## विस्तारिका

लक्ष्यान्तरमाह— यथा वेति। लिखन्नित्यादि। प्राणा इव दयित इति समासः।

अत्रेति। न लिखति लिखनस्य न साध्यत्वमित्यर्थः। प्रसादपर्यन्तस्थितेरेव तत्त्वम्। तदाह—अपि त्वित्यादि। तथेत्यादि। स्थितेर्वर्तमानत्वम्। वर्तमानतायाः प्रत्ययवाच्यत्वेन व्यङ्ग्यमाह— न त्विति। स्थित्यतीतंताव्यवच्छेदो व्यङ्ग्यः। भूमिमितीति। अधिकरणताभिधाने त्वाकाङ्क्षितस्य कर्मण उद्देश्यत्वं प्रतीयेत, न च तथेत्यर्थः। तदाह — न हीति।

## सारबोधिनी

लक्ष्यान्तरमाह यथा वेति। न तु लिखतीति। तथा च लिखनस्य न साध्यत्वं किन्त्वप्राधान्यमबुद्धिपूर्वकत्वं व्यज्यते इति प्रसादपर्यन्तायाः स्थितेरेवे साध्यत्वम्। तदाह अपि त्विति। तथेति। स्थितेर्वर्तमानत्वस्य वर्तमानता-

वाचितेति प्रत्ययवाच्यतया व्यङ्ग्यमाह न त्विति। तेनात्र स्थित्या प्रतीताविच्छेदोव्यङ्ग्यः। भूमिमिति। भूमावित्यधिकरणताभिधानत्वाकांक्षितस्य कर्मणि उद्देश्यत्वं प्रतीयेत, न चात्र तथेत्यर्थः। तदाह नहीति।

**काव्यप्रदीपः**

अथ सुप्तिङ्विशेषु यथा —

**'लिखन्नास्ते भूमिं वहिरवनतः प्राणदयितो**
**निराहाराः सख्यः सततरुदितोच्छूननयनाः।**
**परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै—**
**स्तवावस्था चेयं विसृज कठिने मानमधुना॥'**

अत्र लिखिन्नित्युक्तम्, न तु लिखितीति। तेन शत्रा लिखनस्याप्राधान्यमबुद्धिपूर्वकत्वरूपम्। आस्त इत्युक्तम्, न त्वासीदिति। तेन तथावस्थानस्य प्रसादपर्यन्तता तिङ्विभक्त्या व्यज्यते। यद्यपि शतृप्रत्ययः सुपः प्रकृतिरेव तथापि तिङादेशिलङ्विकृतितया तिङ्त्वेनैवोदाहृतः। भूमिमित्युक्तम्, न तु भूमाविति। तेन बुद्धिपूर्वकं भूमौ न किंचिल्लिख्यत इति सुब्विभक्त्या व्यज्यते।

**काव्यप्रकाशखण्डनम्**

तिङसुपो यथा —

**लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो**
**निराहाराः सख्यः सततरुदितोच्छूननयनाः।**
**परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-**
**स्तवावस्था चेयं विसृज कठिने मानमधुना॥**

अत्र लिखन्निति न लिखतीति अपि तु प्रसादपर्यन्तं आस्ते। तथा च लिखनस्य न साध्यत्वम्। अप्राधान्यं अबुद्धिपूर्वकत्वं व्यज्यते किन्तु प्रसादपर्यन्तायाः स्थितेरेव साध्यत्वम्। तथा आस्त इति न त्वासित इति। तेन स्थित्यतीतताविच्छेदो व्यङ्ग्यः। एवं भूमिमिति न तु भूमाविति। न हि बुद्धिपूर्वं किञ्चिल्लि [ख] ति। अधिकरणताऽभिधाने आकाङ्क्षस्य कर्मण उद्देश्यत्वं प्रतीयते, न च तथेति।

**आदर्शः**

प्रपञ्चयति — यथा वा लिखन्निति। बहुदिनव्यापकमानवर्ती प्रति सख्या उक्तिरियम्। हे कठिने, तव प्राणतुल्यो दयितः अवनतः सन् भूमिं लिखन् बहिरास्ते, एवं तव सख्यश्च निराहाराः सततरुदितैः उच्छूननयनाश्च, तव चेयमवस्था कृशतरेत्यर्थः, वहुदिनव्यापकान्मानात कार्श्यम्, तस्मादधुना मानं विसृज। अत्र सकलक्रियाकारस्थतिङ्सुपां नायकस्य मोहरूपव्यभिचारिभाव एव व्यङ्ग्य इत्याह अत्रेति। 'लिखन्' इत्यत्र शन्तृङुक्तलिखन—कृतेः कृत्यन्तरसाकाङ्क्षतया विधेयत्वाप्रतीत्या उपेक्षात्मकज्ञानाधीनत्वमेव प्रतीयते अतोऽत्र अनुपेक्षात्मकज्ञानस्य

विरोधी मोहः सुबन्तशनृतृङा प्रतीयते । लिखतीति करणे तु आख्यातोक्तकृतेर्निराकाङ्क्षत्वेन विधेयतयैव प्रतीत्या तन्निदानमनुपेक्षात्मकज्ञानमपि प्रतीयते न तु मोह इत्याह— न तु लिखतीति । मुग्धावस्थयैवाधुनाऽपि स्थितिर्वर्त्तमानालभ्येत्याह—अपि त्विति । एवञ्च आस्ते इत्यत्र तिङा व्यङ्ग्ये दर्शितेऽपि 'तथा आस्त इती' ति यत् क्वचित् पुनर्लिखनं तत् 'न त्वासित' इति दर्शयितुमनुवाद एव कृत इति बोध्यम् । आसित इति निर्देशे तु मोहानुवृत्तिर्न प्रतीयते इति भावः । भूमिमितीति । भूमिमिति करणे उन्मीलितचक्षुःसाध्यं भूमिविषयज्ञानमेव प्रतीयते न तु मननसाध्यं लेख्यविषयज्ञानम् अतो लेख्यविषयो मोह एव प्रतीयते, भूमाविति करणे तु सकर्मकलिखधातोः कर्मीभूतलेख्यविषयज्ञानमपि प्रतीयते न तु लेख्यविषयो मोह इत्याह— न तु भूमावितीति । तथाच लेख्यविषयो मोहः प्रतीयत एवेत्याह— न हि बुद्धिपूर्वकमति ।

## सुधासागरः

अथ सुप्तिङ्विशेषेषूदाहरति — यथा व लिखन्नेति ।

स्पष्टम् । शिखरिणी छन्दः । लक्षणमुक्तम् । अत्र लिखन्नित्युक्तं न तु लिखतीति । तेन शत्रा लिखनस्याप्राधान्यमबुद्धिपूर्वकत्वरूपम् । आस्ते इत्युक्तं न त्वासीदिति । तेन तथाऽवस्थानस्य प्रसादपर्यन्तता तिङ्विभक्त्या व्यज्यते । यद्यपि शतृप्रत्ययः सुपः प्रकृतिरेव तथापि तिङादेशिलङ्विकृतितया तिङ्त्वेनैवोदाहृतः । भूमिमित्युक्तं न तु भूमाविति । तेन बुद्धिपूर्वकं भूमौ न किञ्चिल्लिख्यते इति सुब्विभक्त्या व्यज्यते । तदाह श्रीवृत्तिकारः अत्र लिखन्नित्यादि ।

## विवरणम्

सिद्धत्वसाध्यत्वाभ्यामेव कार्यकारणपौर्वापर्यविपर्ययावगम् इत्यपि वदन्ति । तिङादेर्व्यञ्जकत्वं प्रपञ्चयितुमुदाहरति— यथा वेति । अत्रेत्यादि । न लिखतीति, अपि त्वास्त इति प्रसादपर्यन्तमित्यभिसम्बन्धः । प्रसादपर्यन्तं प्रसादाभिप्रायकभावनाबोधनक्षमम् ।

अयं भावः— लिखतीत्युच्यमाने लेखनभावना प्रधानतयाऽवगम्येत । सा च लेखने कर्तव्यताबुद्धिं व्यञ्जयन्ती मोहमपकर्षयेत् । लिखन्नित्यत्र पुनरासने कर्तरि च गुणीभूता भावना तत्र बुद्धिपूर्वकत्वाभावमवगमयन्ती मोहमुत्तम्भयति ।

आसनभावना तु गतिनिवृत्तिस्वरूपा प्रभवति मोहस्य प्रकर्ष (वगमना) य । नन्वास्त इत्यत्र कर्तृवाचकत्वाविशेषेऽपि क्तप्रत्ययवैचित्र्येणाख्यातप्रयोगस्य वर्तमानताऽभिव्यञ्जनद्वारा प्रसादैकाग्रताऽभिव्यञ्जकत्वमित्याह—आस्त इति । न त्वासित इतीति । भूमिमित्यत्र सप्तमीवैचित्र्येण द्वितीयाया व्यञ्जकत्वमाह — भूमिमितीति । भूमावित्युच्यमानेऽक्षरादीनां कर्मत्वमाक्षिप्येत, तेन च लिपिसंस्थाभप्रतिसन्धानलाभान्न वैचित्यस्वरूपो मोहो लभ्येत । भूमिकमेकलिखनं तु भूम्यवयवविभागानुकूलक्रियास्वरूपमचेतनसाधरणं वैचित्यं गमयतीत्याह — नहीति । व्यङ्ग्यमिति । भूमिं लिखन्नित्यनेन विधेयाप्रतिपत्तिरूपो मोहः आस्त इत्यनेन प्रसादाभिलाषधारास्वरूपो भावो व्यज्यत इति ।

संबन्धस्य यथा

गामारुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१०१ ॥

अत्र नागरिकाणामिति षष्ठ्याः।

'रमणीयः क्षत्रियकुमार आसीत्' इति कालस्य।

एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः।

---

**सङ्केतः**

ग्रामेति। ग्रामरुहा ग्रामीणा। नागरिकाः विदग्धाः। षष्ठ्याः इति। व्यंञ्जकत्वमिति योगः। समासे हि सम्बन्धमूढत्वे सति नागरि काणां अभावो लभ्यते। असमासे तु साक्षात् षष्ठीत्वात् नागरिकाणां सद्भाव लभ्यते। तदयमर्थः—याः नागरिकाः सौभाग्यादिना सत्त्वेन च जीवन्त्यः, तासु प्रसक्तानपि पतीन् अपहरामि — इति।

आसीत् इति अतीतनिर्देशात् कथाशेषत्वं व्यज्यते।

**सङ्केतः (रुय्यकः)**

**ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि॥**

ग्रामरुहाऽत्यन्तग्रामजाता।

**बालचित्तानुरञ्जनी**

संबन्धेन व्यङ्ग्यमुदाहरति संबन्धस्येति। गामारुहम्मि ग्रामरुहास्मि, अन्यत्र जातास्मीति वा गामे वसामि ग्रामे वसामि, णअरट्ठिइं नगरस्थितिं, ण जाणामि न जानामि, णाअरिआणं नागरिकाणां, पइणो पतीन् हरेमि हरामि। जा होमि या भवामि सा होमि सा भवामि।

अत्र व्यङ्ग्यमाह नागरिकाणामिति। नागरिकाणां पतीनित्यत्र संबन्धार्था पष्ठी। नागरिकाभिर्हृतचित्ता मयि शक्तिरतिशयेनेति वैदग्ध्यातिशयं व्यनक्ति। नागरिका युवतीरिति समासे संबन्धस्य गूढतया उक्तस्य व्यङ्ग्यस्याप्रतीतेरित्यर्थः।

कालेन व्यङ्ग्यमाह रमणीय इति। अत्र वर्तमानं श्रीरामं प्रति परशुरामप्रयुक्तः भूतकाले विहितश्चासीदिति लिङ्प्रयोगः तद्धननसुकरत्वकथनेन परशुरामस्य जयस्ववचनेन वीररसोत्कर्षं व्यनक्ति। कालस्य काले विहितस्य

लटः व्यञ्जकत्वम्, उपचारात्। अन्यथा पदैकदेशद्योत्यो रसोऽत्र न प्रतीयते तादृशपदाप्रयोगात् इत्याह यथेति। कुपितस्येत्यनेन राज्ञि रसोऽत्रास्तीत्युक्तम्।

## काव्यादर्शः

'ग्रामरुहा' प्रत्यन्तग्रामजाता ॥ षष्ठ्या इति। यदि हि 'नायरिअपइणो' इत्युच्यते तदा संबन्धमात्रं स्यात्। यदा तु साक्षात् षष्ठी तदा 'नागरिकाणां दक्षस्त्रीणां ये पतयो रागभरतरलितास्तानपि हरामि' इति व्यज्यते। आसीदित्यनेनातीतकालनिर्देशाद् दाशरथेः कथाशेषत्वं व्यज्यते।

## विवेकः

गामरुहम्मीत्यादि — ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि। नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥ ग्रामरुहाऽत्यन्तग्रामजाता। या भवामि सा भवामीत्यभिजनादावनादरेण सौभाग्यगर्वाभिमानादिकम्। षष्ठ्याऽनादरो द्योत्यते, ता अनादृत्य हरामीत्यर्थः। हरणञ्च नादानमात्रं किन्तु आह्लादप्रवणाकिङ्करतापरम्।

रमणीय — इत्यादि अत्र वर्तमान एव क्षत्रियकुमारः आसीदित्यस्मिन् पदे लङ्प्रत्ययप्रकाशितो भूतकालस्तस्मिन्नमर्षं प्रकाशयति।

## दीपिका

ग्रामरुहा ग्रामजाता। षष्ठ्या अनादरव्यञ्जकतेति शेषः ! आसीदिति— सम्प्रति अस्मदमर्षकवलितः क्षणं न भविष्यतीति भावः।

## दर्पणः

**ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि॥**

ग्रामरुहा ग्रामजाता यस्यानादरव्यञ्जकत्वं इत्यर्थः। आसीदिति। वर्तमान एव क्षत्रियकुमारोऽतीतकालस्यामर्षप्रकर्षद्योतकता।

## साहित्यचूडामणिः

'गामारुहे' ति

**ग्रामार्हास्मि ग्रामे वसामि नगरस्थितिं न जानामि।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि॥** इति।

या या नगरसम्बन्धिनी सा सा ग्रामवर्तिन्यापि मया हृतभर्तृका क्रियते। षडर्थास्तिङन्तेन प्रकाश्यन्ते— क्रिया कालः उपग्रहः साधनं संख्या पुरुषश्चेति। तत्रादिमं त्रियं प्रकृतिरभिधत्ते, अपरं प्रत्यय इति विवेकः। तत्र

कालमुदाहरति रमणीय इति । प्रकरणं शोधयति—एषा हीति । आसीदिति लङा मत्क्रोधगोचरस्य क्षत्रियवटोरित उपरि सद्भावस्याश्रद्धेयत्वमिति ध्वन्यते ।

## सम्प्रदायप्रकाशिनी

गामारुहेति ।

**ग्रामीणास्मि ग्रामे वसामि नगरस्थितिं न जानामि ।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥**

कयाचिद् मत्सरिलया ग्राम्यासीत्यधिक्षिप्तायाः प्रतिनायिकाया उक्तिरेषा ।

षष्ठ्या इति । प्राधान्यं निराकर्तव्यत्वेन व्यङ्ग्यमित्यर्थः । व्यासे प्राधान्यं प्रतीयत इति भविष्यति ।

रमणीय इति कालस्य, आसीदिति लङ्वाच्यस्य । तस्यानद्यतनतालक्षणं विशेषमाविष्कर्तुमाह — एषा हि भग्नेत्यादिना । भार्गवो हि नाद्य क्षत्रियाः क्षितौ सन्तीत्यवर्तिष्ट ।

## मधुमती

षष्ठ्याः इति । ननु—'षष्ठी चानादरे' इति अनादरः षष्ठीवाच्य एव । तत् कथं व्यङ्ग्यः ? इति चेत् —न । शेषे षष्ठी, इति शैषिकषष्ठ्या एव वक्तृादिवैशिष्ट्यसहकारेण अनादरव्यञ्जकत्वात् इति ।

कालस्येति । अतीतकाले विहितस्य लङ्प्रत्ययस्येत्यर्थः । अन्यथा पदैकदेशव्यञ्जकत्वप्रस्तावे कालस्य व्यञ्जकत्वोपदर्शनं असङ्गतं स्यात् । स्वकरहननीयत्वं चात्र व्यङ्ग्यम् । एषेति । तथा च रौद्रो रसः इति भावः ।

## विस्तारिका

गामेत्यादि ।

**ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥**

नगरस्थितिर्नगरमर्यादावैदग्धीत्यर्थः ।

अत्रेति । षष्ठ्या अनादरो व्यङ्ग्य इत्यर्थः ।

अत्र प्राञ्चः—'षष्ठी चानादरे' इत्यनादरविहितायाः षष्ठ्याः अनादरस्य व्यञ्जकत्वम्, न वाचकत्वम्, गौरवात् । अत एवानादरे गम्यमान इत्युक्तम् । गम्यमानत्वं व्यङ्ग्यत्वमित्याहुः, तन्न, अनुशासनस्य बाधकं विना शक्तेर्नियामकत्वात् । गौरवस्य बाधकत्वे संख्यादिष्वपि प्रसङ्गात् । 'षष्ठी चानादरे' इत्यनादरस्यानुशिष्टत्वात्, प्रकरणापेक्षणेनैव गम्यमानतोक्तेः । वस्तुतस्तु नागरिकानित्यपहाय तत्पतीनित्युक्तौ तेष्वनादरः प्रतीयत एव । तत्र व्यञ्जनेनैवेत्यर्थः ।

रमणीय इत्यादि । अतीतकालोपदेशाद् वर्तमानभविष्यत्त्वव्यवच्छेदोऽवगम्यते । मत्क्रोधकलितस्यास्य स्थितेर्न वर्तमानत्वम् ।

## सारबोधिनी

गामेत्यादि ।

**ग्रामीणास्मि ग्रामे वसामि नगरस्थितिं न जानामि।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि॥**

नगरस्थितिर्नगरमर्यादा वैदग्धी । अत्रेति । षष्ठ्या अनादरो व्यङ्ग्य इत्यर्थः ।

ननु 'षष्ठी चानादर' इत्यनुशासनात् कथमनादरस्य व्यङ्ग्यत्वमिति चेदुच्यते । ताः पश्यन्तीरनादृत्येति व्यज्यते इति केचित् ।

अन्ये तु—'नागरिकाणाम्' इत्यपहाय "तत्पतीन्" इत्युक्तौ तेष्वनादरः प्रतीयत एव । तत्र व्यञ्जनैवेत्यर्थ इत्याहुः । वस्तुवस्तु अनादरो व्यङ्ग्यो वाच्यो वा स्यादित्यत्र नाग्रहः कर्तव्यः । किन्तु षष्ठ्या अनादरं प्रत्याय्य रसस्यैव व्यङ्ग्यत्वम् । अतएव ग्रन्थकृता "पदैकदेश" इत्यादिना रसादेरेव व्यंग्यत्वं प्रतिज्ञातम् । एवं सर्वत्र बोध्यम् । रमणीय इति । कालस्यातीतकालविहितलुङ्प्रत्ययबोधितस्यातीतकालो पदेशाद्वर्तमानत्वभविष्यत्वव्यवच्छेदोऽवगम्यते । मत्क्रोधकवलितस्यास्य स्थितेर्न वर्तमानत्व न वा भविष्यत्वमित्यर्थः । ताणेति ।

## काव्यप्रदीपः

**गामारि अम्हि गामे वसामि ण अरिट्ठिइं ण आणामि।**
**णाअरिआणं पइणो हरेमि जा होमि सा होमि॥**

अत्र नागरिकाणामिति षष्ठ्या पतिपदार्थे तादृशकलाभिज्ञतादिरूप उत्कर्षः प्रकाश्यते । 'रमणीयः क्षत्रियकुमार आसीत्' इत्यत्र लुङातीतकालविहितेनार्चितं तदीयहिंसायाः सुकरत्वं व्यञ्जयता प्राधान्येन धूर्जटिधनुर्भङ्गजन्मा भार्गवक्रोधः प्रकृष्यते ।

## काव्यप्रकाशखण्डनम्

**'रमणीयः क्षत्रियकुमार आसीत्'**

इत्यतीतकालोपदेशात् स्थितेर्वर्तमानत्व—भविष्यत्वव्यवच्छेदो गम्यते । ऐषा हि दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः ।

## आदर्शः

सम्बन्धस्येति सम्बन्धार्थकविभक्तेरित्यर्थः, तस्या एव पदैकदेशत्वात् । गामारुहम्मीति ।—

**ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि।**इति संस्कृतम् ।

कलहे नागरस्त्रियं प्रति ग्राम्यस्त्रिया उक्तिरियम् । ग्रामरुहा ग्रामभवा । नागरिकाणामित्यनादरे षष्ठी । तस्या अनादरः सम्बन्धश्चार्थः । तथा च नागरिका अनादृत्य तासां पतीन् हरामीत्यर्थः । अनादरश्च पतिकर्तृको ऽपि परम्परया तद्वक्तृकर्तृको बोध्यस्तन्मूलकत्वात्तदनादरस्य । अत्रेति, अनादरबोधनद्वारा वक्त्र्या गर्वरूपव्यभिचारिभावो व्यङ्ग्य इत्यर्थः । चक्रवर्त्ती तु—अनादरमेव व्यङ्ग्यं व्याचष्टे, तन्न, अनुशासनानुशिष्टस्यार्थस्य वाच्यत्वादेव अनादरस्य वस्तुरूपत्वेन तद्व्यञ्जनया रसादिव्यञ्जकत्वोदाहरणत्वानुपपत्तेश्च । रमणीय इति । आसीदिति सम्प्रति त्वमर्षकवलितः क्षणान्न भविष्यतीति भावः । कालस्येति कालार्थकविभक्तेरित्यर्थः । अत्रापि गर्वो व्यङ्ग्यः ।

## सुधासागरः

सम्बन्धस्य व्यञ्जकत्वमुदाहरति — 'गामारुहे'ति ।

गाथा छन्दः ।

**ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥**

इति संस्कृतम् । वृषभारूढा नागरीभिः ग्रामीणेत्युपहसिता काचित्कुलटा ताः प्रत्याह । नगरस्थितिर्नगरमर्यादा वैदग्धी । स्पष्टमन्यत् ।

अत्रेत्यादि । नागरिकाणामिति षष्ठी पतिपदार्थे तादृशकलाभिज्ञतादिरूपमुत्कर्षं प्रकाशयतीत्यर्थः ।

एवञ्च यत्तावत् रविभट्टाचार्यप्रभृतिभिर्व्याख्यातम्— नन्वनादरः षष्ठीवाच्य एव, तत्कथं व्यङ्ग्य इति चेन्न । शैषिकषष्ठ्या एव वक्त्रादिवैशिष्ट्यसहकारेणानादरव्यञ्जकत्वादिति ।

यच्च भास्करभट्टाचार्यप्रमुखैर्व्याख्यातम्—षष्ठ्या अनादरो व्यङ्ग्य इत्यर्थः । ननु 'षष्ठी चानादरे' इत्यनुशासनात्कथमनादरस्य व्यङ्ग्यत्वमिति चेत् उच्यते । ताः पश्यन्तीरनादृत्येति व्यज्यते इतीति ।

यच्च चण्डीदासभट्टाचार्यादिभिर्व्याख्यातम्—नागरिकानित्यपहाय तत्पतीनित्युक्तौ तेष्वनादरः प्रतीयत एव तत्र व्यञ्जनैवेत्यर्थ इति ।

श्रीवत्सलाञ्छनभट्टाचार्यादिभिर्व्याख्यातम्— अनादरो व्यङ्ग्यो वाच्यो वा स्यादित्यत्र नाग्रहः कर्तव्यः, किन्तु षष्ठ्याऽनादरं प्रत्याय्य रसस्यैव व्यङ्ग्यत्वम् । अत एव ग्रन्थकृता पदैकदेशेत्यादिना रसादेरेव व्यङ्ग्यत्वं प्रतिज्ञातमिति । तत्सर्वं सहृदयैर्नादरणीयम् ।

रमणीयः क्षत्रियकुमार आसीदिति कालस्येत्यादि । कालस्य —अतीतकाले विहितस्य लङ्प्रत्ययस्येति भावः । अन्यथा पदैकदेशव्यञ्जकप्रस्तावे कालव्यञ्जकत्वोपदर्शनमसङ्गतं स्यात् ।

अत एव प्रदीपकारैरुक्तम् 'रमणीयः क्षत्रियकुमारः आसीदि'— त्यत्र लङाऽतीतकालविहितेनाचिरं तदीयहिंसायाः सुकरत्वं व्यञ्जयता प्राधान्येन धूर्जटिधनुर्भङ्गजन्मा भार्गवक्रोधः प्रकृष्यत इति

नन्वेवं लङ् इत्येव किं नोक्तमिति चेत् न, । प्रत्ययान्तरस्याऽप्यतीतकाले विधानात् । तर्हि प्रत्ययस्येत्येवोच्यतामिति चेत् न । तथापि प्रकृतप्रत्ययस्यैव व्यञ्जकत्वं सम्भाव्येत, कालस्येत्युक्तौ तु सर्वस्याप्यतीतकालविहितप्रत्ययरस्यैतादृशविषये व्यञ्जकत्वं समायातीति वाग्देवतावतारोक्तं रमणीयमेविति सुधीभिर्ध्येयम् । अत्र रौद्रौ रसः ।

## विवरणम्

सम्बन्धस्य सम्बन्धबोधकपदस्य ।

गामेति ।

**"ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थिति न जानामि ।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि ।।"** इति च्छाया ।

ग्रामरुहा ग्राम्या । ग्रामे जाता अपि तदनन्तरनगरवासाद् विदग्धा भवन्तीति तद्व्यावर्तनार्थं ग्रामे वसामीति । ग्रामवासिन्योऽपि नगरं गत्वा वैदग्धीं शिक्षन्त इति तद्व्यावर्तनाय नगरेत्यादि । सा भवामीत्यत्र भवतिः स्वाभाविक वैदग्ध्यं लक्ष्यति । षष्ठ्या इति । नागरिका अनादृत्य तत्पतिहरणं षष्ठ्या प्रत्याय्यते । पतिकर्तृकानादरे च स्वकर्तृकत्वाध्यवसायः । स षष्ठ्यभिव्यक्तो नागरिकाणामनादरो ग्राम्याया गर्वातिशयं व्यञ्जयतीत्यर्थः ।

"नागरिकासम्बन्धदेन तत्पतिषु कलाऽभिज्ञानद्योतनद्वारा गर्वभावातिशयनम्" इति प्रदीपः । कालस्य अतीतकालवाचिनो लङः ।

अत्र क्षत्रियकुमारस्य भवनेऽतीतत्वनिर्देशेन प्रकरणसहकारेण रामस्यामर्षः प्रकृष्यत इति प्रकरणमुद्दिशतिभग्नेति । प्रकर्षणीयं भावमुल्लिखति— कुपितस्येति । अयं भावः— प्रकरणाभिव्यङ्ग्यो भार्गवस्य कोपो यद्यपि क्षत्रियकुमारस्य वैदेहीवल्लभस्य रामणीयकवर्णनेन तन्निधनगोचरशोचनाभिव्यञ्जनमुखेन शिथिलतामिवापाद्यते, तथाप्यासीदिति तदीयभवनाभावस्याधुनातनत्वद्योतनेनाद्यैव खण्डपरशुपरशुप्रतिमल्लकठोरकुठार धारानिकृत्तकण्ठस्य महाबाहोः सुबाहुविद्विषो भगवद्भार्गवप्रधनाधीननिधनानलेन्धनीभावस्यावश्यम्भावप्रत्यायनपरम्परया सम्परायपराभूतराजन्यजनस्य जामदग्न्यस्य जनकजाजानिजनितधूर्जटिधनुर्ध्वंसनजन्मा ज्वलन्निवामर्षजातवेदाः सामाजिकाय महावीरचरिते स्वदते ।

वचनस्य यथा

**ताणँ गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स ।**
**ताणाँ भणिआणं सुंदर एरिसिअँ जाअमवसाणम् ।।१०२ ।।**

अत्र गुणग्रहणादीनां बहुत्वम् प्रेम्णश्चैकत्वं द्योत्यते ।

---

**सङ्केतः**

बहुत्वमिति । अनेकशः गुणग्रहणादि कृतवान् इत्यर्थः । स्मर्यमाणं हि वस्तु रतिं उद्दीपयतीति भावः । एकत्वं अद्वितीयत्वम् । एरिसअं इत्यत्र कप्रत्ययः अतीव निन्द्यं वैराग्यं व्यनक्ति ।

**सङ्केतः (रुय्यकः)**

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।**
**तेषां भणितानां सुन्दर ईदृशं जातमवसानम् ।।**

**बालचित्तानुरञ्जनी**

वचनव्यञ्जकत्वमुदाहरति वचनस्येति । हे सुन्दर ! ताण तेषां गुणग्गहणाणं गुणग्रहणानां ताणुक्कुंठाणं तासामुत्कण्ठानां, तस्स तस्य, पेम्मस्स प्रेम्णः, ताणं तेषां, भणिआण भणितीनां, एरिसिअं जाअमवसाणम् । व्यङ्ग्यमाह अत्रेति । तेषां गुणग्रहणानामित्यत्र बहुवचनेन हृदयाकर्षि वैदग्ध्यबहुत्वं ध्वन्यते । तद्द्वारा विप्रलम्भोऽपि द्योत्यत इत्यर्थः । तस्य प्रम्ण इत्येकवचनेन प्रेमैकत्वमखण्डत्वं ध्वन्यते । तद्द्वारा विप्रलम्भोऽपि द्योत्यते । तादृशेनैव प्रकर्षप्रतीतेः । तद्द्वारा सातिशयोऽपि द्योत्यत इत्यर्थः । न च सुपां वाचकत्वेन द्योतकत्वं न संभवभीति, वाच्यस्यार्थ—द्रव्यलिङ्गसंख्याकारकप्रातिपदिकार्थ इति मतमाश्रित्य भाष्यकारेण सुपां द्योतकत्वाङ्गीकारात् ।

**काव्यादर्शः**

बहुत्वमित्यनेकभङ्गिवैदग्ध्यं ध्वनद्विप्रलम्भोद्दीपकतामिति । अयं हि वाक्यार्थः । प्रवासविप्रलम्भशृङ्गारविभावनया विभाव्यमानो रसवान् ।

**विवेकः**

ताणमित्यादि तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः । तेषां भणितानां सुन्दर ईदृशमीर्षितं वा ज्ञातं (जात) मवसानम् । बहुवचनेन गुणग्रहणादीनामनवधिकत्वं, प्रेम्ण इत्येकवचनेनोभयचित्तवृत्तेरेकीभावः ।

## दीपिका

एरिसअं ईदृशम् । 'इरिसिअ' मिति पाठे ईर्षितम् । [एरित्तणमिति] पाठे नानाविधानसन्निकृतम् । एकत्वं सततमविच्छेदेन प्रकर्षनिकर्षराहित्यं निर्विकारात्यन्तप्रकर्षलक्षणम् । अतएवात्र वचःप्रक्रमभङ्गस्यादूषकता ।

## दर्पणः

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।**
**तेषा भणितानां सुन्दर ईदृशं जातमवसानम् ॥**

एकत्वमनेकैरपि हेतुभिरन्यथाभावमप्राप्तवादिति भावः ।

## साहित्यचूडामणिः

'ताणे' ति ।

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।**
**तेषां भणितानां सुन्दरेदृशं जातमवसानम् ॥** इति ।

बहुत्वमिति । गृह्यमाणानां गुणानां बाहुल्यादेकस्यापि बहुधा गृह्यमाणत्वाच्च । एकत्वमिति । प्रेम्णः सर्वकालमैकरूप्यात् ।

## सम्प्रदायप्रकाशिनी

ताणँ गुणेति ।

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।**
**तेषां भणितानां सुन्दर ईदृशं जातमवसानम् ॥**

अत्र गुणेति । द्योत्यं वच्नस्येत्यन्वयः । पुरुषस्तु व्यत्ययेनावस्थितः क्वचिद् व्यञ्जक इत्याह— पुरुषव्यत्ययस्य यथेति ।

## मधुमती

अत्र गुणेति । यद्यपि 'प्रातिपदिकार्थलिङ्गे' त्यादिस्वरसात् वचनमपि सुपा वाच्यमेव । तथापि "प्रातिपादिकार्थलिङ्गे एव वाच्ये, न तु वचनमपि" । इति महाभाष्यकारवचनमाश्रित्य एवं अभिधानम् ।

## विस्तारिका

ताँणमित्यादि ।

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।**
**तेषां भणितानां सुन्दरमीदृशं जातमवसानम् ॥**

बहुत्वं नानाप्रकारता। एकत्वमैकरूप्यम्, उत्कर्षकाष्ठाऽऽपन्नत्वात्। संख्याविशेषस्तुं वाच्य एवेति ईरिसिमिति पाठे ईर्षितमित्यर्थः।

### सारबोधिनी

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।**
**तेषां भणितानां सुन्दर! ईदृशं जातमवसानम्॥**

बहुत्वं नानाप्रकारत्वम्। एकत्वमैकरूप्यम्। तस्यैव प्रेमप्रकर्षकाष्ठानुरूपत्वात् बहुत्वादिसंख्याविशेषस्तु वाच्य एव।

### काव्यप्रदीपः

वचनविशेषो यथा—

**'ताणँ गुणग्गहणाणं ताणुक्कण्ठाणँ तस्स पेम्मस्स।**
**ताणँ भणिआणँ सुन्दर एरिसिअँ जाअँ अवसाणम्॥'**

अत्र गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारत्वेऽपि कार्यं प्रेम एकजातीयमेव न कदाचिदन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते।

### आदर्शः

वचनस्येति एकद्व्यादिवचनस्येत्यर्थः।

ताणं इति—

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।**
**तेषां भणितानां सुन्दर ईदृशं जातमवसानम्॥** इति संस्कृतम्।

कृतावज्ञं नायकं प्रति तत्पत्न्याः प्रीतिभर्त्सनमिदम्। अत्रेति, बहुवचनैर्गुणादिबाहुल्यम्, एकवचनेन च अन्तराऽविच्छेदेने प्रेमैकत्वं द्योत्यते उच्यते इत्यर्थः। तद्वारा नायिकाविप्रलम्भोत्कर्षो व्यङ्ग्यः पूर्वानुभूततत्तत्स्मरणाद् दुःखाधिक्यात्।

### सुधासागरः

वचनविशेषप्राधान्येन विप्रलम्भव्यञ्जकत्वमुदाहरति— 'ताणमि'-ति।

जघनविपुला छन्दः।

**तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।**
**तेषां भणितानां सुन्दर ईदृशं जातमवसानम्॥**

इति संस्कृतम्। स्पष्टम्। अत्र गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारकत्वेऽपि कार्यं प्रेमैकजातीयमेव न कदाचिदन्यथाभावं प्राप्तिमिति बहुवचनैकवचनाभ्यां व्यज्यते। तदेतदाह वृत्तिकारः— अत्र गुणत्यादि।

## विवरणम्

वचनस्येति। सुबादेरेव सङ्ख्याऽवगमद्वारा व्यङ्ग्यं यथेत्यर्थः। ताणँ इति।

**"तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।**
**तेषां भणितानां सुन्दर ईदृशं जातमवसानम्॥"** इति च्छाया।

अत्रालम्बनगुणग्रहणादेरुद्दीपनस्य, उत्कण्ठादेर्व्यभिचारिणः, भणितादेरनुभावस्य नानाविधत्वम्। तत्सद्भावेऽपि प्रेम्णो वैचित्र्य विरह इति विशेषोक्तिः। तादृशस्याविकारिणः प्रेम्णो विकृतः परिणाम इति विभावना च विद्यमानविप्रयोगोत्कर्षकमलङ्कारद्वयं वचनाभ्यां बहुत्वैकत्वबोधनद्वाराऽवगम्यत इत्याह — अत्रेति।

पुरुषव्यत्ययस्य यथा

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर–
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि।
किं मन्ये विहरिष्यसे बत हत मुञ्चान्तराशामिमाम्।
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥१०३ ॥

अत्र प्रहासः ।

---

**सङ्केतः**

रे रे इति । अत्र चञ्चलयोः लोचनयोः अञ्चिता अपचिता रुचिः अभिलाषः यस्य । यद्वा — चञ्चले लोचने अञ्चिता—गमिता रुचिः येन चेतसा, तस्य आमन्त्रणम् । किं मन्ये इति । त्वं एवं मन्यसे—यत्—'अहं तया सह क्रीडिष्यामि' इति अन्तः मध्ये या आशा तां मुञ्च । अत्र मन्ये इत्यत्र मधामपुरुषप्राप्तौ उत्तमस्य विधानात् व्यत्ययः । तेन प्रहासः व्यज्यते ।

**सङ्केतः (रुय्यकः)**

प्रहासं इति । "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्चे" ति मन्योपपदे मध्यमः पुरुषो मन्यतेश्चोत्तमः । किं मन्यसे विहरिष्यामीत्यर्थः ।

**बालचित्तानुरञ्जनी**

पुरुषव्यत्ययव्यञ्जकत्वमुदाहरति पुरुषव्यत्ययेति । कश्चिद्वैराग्यवान् चित्तं प्रत्याह । त्वं चपललोचना स्त्री तस्यामञ्चिता रुचिर्यस्य । एवंविध रे रे चेतः स्थिरप्रेमाणं महिमानं हित्वा, अबलां विलोक्य किं नृत्यसि ? विहरिष्यामीति किं मन्यसे ? बत खेदे । हतामिमां मुञ्च । संसारसमुद्रे एषा स्त्री कण्ठतले शिलीकृता खलु ।

व्यंङ्ग्यमाह अत्रेति । हासः सपरिहासः । "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च" [पा १-४-१०६] इत्यनेन मन्योपपदे मध्यमः मन्यतेश्चोत्तमोऽभिधीयेत । अतः असमये विहरिष्यस इति पुरुषव्यत्ययेन प्रहासो द्योत्यत इत्यर्थः ।

**काव्यादर्शः**

चञ्चललोचनायामञ्चिता रुचिर्येन तत्तथेति चेतोविशेषणम् । कश्चिद् निर्वेदवांश्चित्तं प्रत्याह । महिमानं मुक्त्वाबलां विलोक्य प्रहास इति । प्रहासे च मन्योपपदे [ ?मन्ये इत्युपपदे] मध्यमः पुरुषो मन्यतेश्चोत्तमः । 'किं त्वमेवं मन्यसे यथाहमनया सह विहरिष्यामि' इति ह्यत्रार्थः ।

## विवेकः

रेरे चञ्चलेत्यादि । अत्र प्रहास इति —प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवचनमिति (पा. १-४-१०६) मन्योपपदे मध्यमः पुरुषो मन्यतेश्चोत्तमः । किं मन्यसे विहरिष्यामीत्यर्थः ।

## दीपिका

चञ्चलाभ्यां लोचनाभ्यामञ्चिता प्रादुष्कृता रुचिरभिलाषो यस्य । किं मन्ये विहरिष्यसे किं मन्यसे विहरिष्यामीत्यर्थः । तथा चानुशासनं प्रहासे च मन्योपपदे मन्यतेरुत्तम इति । प्रहास सोपहासोत्प्रासः ।

## दर्पणः

अचिन्त्या प्रादुष्कृता किं मन्यसे ? विहरिष्यामीत्यर्थे । किं मन्ये विहरिष्यस'इति प्रहासार्थे पुरुषव्यत्ययः । "प्रहासे च मन्योपपदे मन्यतेरुत्तम्" [पा. १-४-१०६] इत्यनुशासनात् । प्रहासः सोपहासो तत्प्रासः ।

## साहित्यचूडामणिः

व्यत्ययरूपवैचित्र्यशालिनः प्रथममध्यमादेः पुरुषस्य यथा — रे रे इति । चेत इति संबुद्धिः । स्थिरप्रेमाणम् अक्षयानुग्रहं महिमानं सर्वभावस्वभावतया महत्त्वभूतं परमेश्वरं प्रमुच्य । किं नृत्यसि चापलमाविष्करोषि, विहरिष्यांमीति किं मन्यसे । अयमत्र पुरुषव्यत्ययः यदुत्तमे मध्यमो मध्यमे चोत्तम इति ।

व्यङ्ग्यार्थमाह — प्रहास इति । 'प्रहासे च' [१.४.१०६] त्यादिसूत्रात् ।

## सम्प्रदायप्रकाशिनी

रे रे चञ्चलेत्यादि । चञ्चललोचनाञ्चितरुचे ! कान्तासक्त ! स्थिरप्रेमाणं स्थिरप्रेम्णा रक्षितं महिमानं विमुच्येत्यर्थः । किं मन्ये विहरिष्यस इति । विहरिष्य इति मन्यसे किं, न तथा विहरिष्यस इत्यर्थः । 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च (१.४.१०६) इति पुरुषव्यत्ययः । तत्र हेतुः — एषा कण्ठत (टे ? ट इ) इत्यादि ।

अत्र प्रहास इति । पुरुषव्यत्ययस्य द्योत्य इत्यनुषङ्गः । एषूदाहरणेषु वचनादिस्वार्थमुखात् प्रत्ययस्य व्यञ्जकता दर्शिता ।

## मधुमती

अत्र प्रहासः इति । 'प्रहासे च मन्योपपदे' इति व्यत्ययप्राप्त मध्यमोत्तमपुरुषरूपपदैकदेशव्यङ्ग्यः इति शेषः ।

## विस्तारिका

पुरुषेत्यादि । प्रथममध्यमोत्तमरूपः ।

रे रे इत्यादि साक्षेपसम्बोधने, स्थिरं प्रेम यत्र । महिमानं प्रमुच्येत्यन्वयः । हतां निन्दितामनन्यप्रकाश्यामित्यर्थः । किं मन्यसे विहरिष्यामीति मध्यमोत्तमयोरुत्तममध्यमव्यत्ययः । तथा चानुशासनम्— "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च" (पा. १-४-१०६) इति ।

अत्र प्रहासे नोत्तमपुरुषस्य शक्तिः, ततस्तदप्रतीतेः । न त्वसौ वाक्यार्थः, पदार्थसंसर्गताविरहात् । किन्तु प्रहासे विवक्षितेऽनुशिष्टेन पुरुषव्यत्ययेन स व्यज्यत इत्यर्थः ।

## काव्यप्रदीपः

पुरुषव्यत्ययस्य व्यञ्जकत्वं यथा —

**रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-**
**प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।**
**किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा**
**मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥'**

अत्र त्वं मन्ये अहं विहरिष्यसे इति प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च इतिसूत्रेण युष्मदस्मदोर्योगे उत्तममध्यमयोर्विपर्ययेण विधानं प्रहासमभिव्यनक्ति ।

## आदर्शः

पुरुषव्यत्ययस्येति व्यत्ययितमध्यमोत्तमपुरुषयोरित्यर्थः । रे रे इति । रे रे इति शान्तपुरुषस्य स्वचित्तं प्रति साक्षेपसम्बोधनम् । चञ्चललोचनायाम अञ्चिता गमिता रुचिर्येन, रे रे तादृश चेतः, एणनयनां हरिणाक्षीमालोक्य किं नृत्यसि नर्त्तकवत् लोलं भवसि । महिमानं वैराग्यरूपम् । नृत्यहेतुं तदभिमानं पृच्छति किं मन्ये किं मन्यसे इत्यर्थः । विहरिष्यसे विहरिष्यामि ! विहारार्थनृत्याभ्युपगमे ततो निवर्त्तयति — वत हतामिति, हतां निन्द्याम इमाम् अन्तराशां मुञ्च । अमोचने दोषमाह एषेति, वत खेदे; एषा आशा । अनयैवाशया कण्ठबद्धशिलारूपया संसाराब्धौ मङ्क्ष्यसीत्यर्थः । अत्र प्रहासो व्यत्ययितपुरुषद्वयव्यङ्ग्य एव पुरुषद्वयान्तपदयोर्वाक्यत्वनियमेन तत्र शक्त्यभावादिति केचित् । उत्तमपुरुषस्यैव प्रहासे शक्तिर्मध्यमपुरुषस्तु तद्ग्राहक एवेत्यन्ये । तद्द्वारा व शान्तरसोत्कर्षो व्यङ्ग्य ।

## सुधासागरः

पुरुषव्यत्ययस्य हास्यरसव्यञ्जकत्वमुदाहरति — 'रे रे' इति ।

शार्दूलविक्रीडितं छन्दः । कश्चिद् विरक्तः सुन्दरीदर्शनेन क्षुभितं स्वस्वान्तमुपहसति — रे रे चञ्चलाभ्यां लोचनाभ्यामञ्चिताऽऽविष्कृता रुचिरङ्गनाभिलाषो येन स तादृशेति सम्बोधनविशेषणम्, एवंविधं चेतः, स्थिरं प्रेम यत्र तादृशं महिमानमात्मावलोकनप्रतिष्ठां प्रमुच्य प्रकर्षेण त्यक्त्वा, एणनयनां मृगाक्षीमालोक्य किं नृत्यसि किमर्थं नानाचेष्टां करोषि । त्वं मन्ये संसारवारांनिधौ जगदम्बुधौ मृगाक्ष्याऽहं विहरिष्यसे, हतामनर्थदायिनीमिमामन्तराशां गूढसुखलिप्सां मुञ्च त्यज । खलु निश्चयेन एषा हरिणाक्षी संसारवारांनिधौ रिरंसया स्थितस्येति शेषः, सरागस्येति

यावत्, कण्ठदेशे गलप्रदेशे, कृता संसारप्रवर्त्तकदैवेनाधःपतनाय निबद्धा, शिला विपुलपाषाणः। अपमृत्युहेतुरेवेयमेणनयनेति भावः।

अत्र 'त्वम्' इति युष्मद्युपपदे 'मन्यसे' इति मध्यमपुरुषस्य योग्यत्वेऽपि 'मन्ये' इत्युत्तमपुरुषः 'अहम्' इत्यस्मद्युपपदे सति 'विहरिष्ये' इत्युत्तमपुरुषस्य योग्यत्वेऽपि 'विहरिष्यसे' इति मध्यमपुरुषः। एवं मध्यमोत्तमयोर्विपर्ययः प्रहासमभिव्यनक्ति।

ननु 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति सत्रेण पुरुषव्यत्ययविधानात् प्रहासो वाच्य एवेति चेत्। उच्यते। अभिधा हि पदशक्तिरिति निर्विवादम्। तत्र प्रहासे तावन्नोत्तमपुरुषस्याभिधा ततस्तदप्रतीतेः। न चोत्तमपुरुषमात्रं पदम्। न वा नैयायिकरीत्या प्रहासो वाक्यार्थ इति शङ्क्यम्, पदार्थ संसर्गरूपताविरहात्। किन्तु प्रहासे विवक्षितेऽनुशिष्टेन पुरुषव्यत्ययेन स प्रतीयते इति दिक्। पदैकदेशत्वं च तद्धर्मवत्त्वात्। एवं च पूर्वनिपातादयोऽपि पदैकदेशधर्मत्वात् पदैकदेशा एव गण्यन्ते।

## विवरणम्

पुरुषव्यत्ययस्येति। मध्यमोत्तमयोः पुरुषयोर्व्यत्ययस्येत्यर्थः। चञ्चलेन लोचनेनाञ्चिता रुचिरभिलाषो यस्य, तादृश रे चेतः! यदेव लोचनमभिलषति, तदेव त्वमपीति भावः। महिमपदेनात्र तदाधारो भगवानध्यवसीयते। तदीयप्रेम्ण एव स्थैर्याति २सम्भवात्। स्थिरप्रेमाणं प्रेमस्थैर्योचितं मीमांसकमतसिद्धं स्वस्य महत्त्वं वैभवं त्यक्त्वेत्यर्थ इत्यपि स्यात्। मन्ये मन्यसे। विहरिष्यसे विहरिष्य इति। एषा एणनयना आशा वा।

अत्रेति। मन्यतिसमभिव्याहृतेनोत्तमेन मतौ भ्रमत्वम्, विहरतिसन्दर्भितेन मध्यमेन पुरुषेण विहारस्यासत्त्वं व्यङ्ग्यं शब्दविद्यासिद्धम्। स एव प्रहासः। तदभिव्यङ्ग्या वा सम्बोध्यस्य गर्हणीयताबुद्धिः। सा शमरसमुत्तम्भयतीति भावः।

पूर्वनिपातस्य यथा

**येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि**
**प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।**
**ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-**
**स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ।।१०४ ।।**

अत्र पराक्रमस्य प्राधान्यमवगम्यते ।

---

### सङ्केतः

दोर्बलमेवेति । न तु नीतिबलम् । अत्रेति । अल्पस्वरतरत्वात् नयशब्दस्य पूर्वनिपाते प्राप्तेऽपि, विक्रमस्य अर्चितत्वेन पूर्व निपातः । स चास्य अर्चितत्वं व्यनक्ति ।

### बालचित्तानुरञ्जनी

पूर्वनिपातस्य व्यञ्जकत्वमाह । येषां राज्ञां दोर्बलमेव ते राज्ञः नो दुर्बलतया संमताः प्रायः केवल-नीतिरीतिशरणैः राजभिस्तैः किं कार्यम् पराक्रमस्वीकारेण मनोहरगतास्ते नैव स्युः । लोकत्रये भवादृशास्त्वादृशाः द्वित्राः अपरे सन्ति ।

अत्र व्यङ्ग्यमाह अत्रेति । पराक्रमनयेत्यत्र नयशब्दस्याल्पाच्तरमिति पूर्वनिपातेऽपि पराक्रमशब्दस्यास्याभ्यर्हितत्वात् पूर्वनिपातः कृतः । तेन तस्य प्राधान्यं व्यज्यत इत्यर्थः । न चात्र पूर्वनिपातस्य पदैकदेशत्वं नास्तीति वाच्यम् पदधर्मस्य पूर्वनिपातस्य पदैकदेशत्वोपचारात् ।

### काव्यादर्शः

'येषां दोर्बलमेव केवलं, न नीतिमार्गो, दुर्बलास्ते येऽपि पराक्रमरहिता स्तैरपि किं कार्यम् । 'पराक्रमनये' ति द्वन्द्वसमासे नयशब्दस्य अल्पस्वरत्वेऽपि पराक्रमस्य प्राधान्येनार्च्यत्वात् पूर्वनिपातः ।

### विवेकः

येषामित्यादि— अल्पाक्षरत्वान्नयस्य पूर्वनिपाते प्राप्ते पराक्रमस्य पूर्वनिपातोऽभ्यर्हितताहेतुक इति तस्य प्राधान्यम् ।

## दीपिका

नीतिराङ्गिरसादिशास्त्रं प्रसिद्धवृत्तिप्रकारो रीतिः । अत्रेति — नयस्याल्पस्वरतया पूर्वनिपाते प्राप्ते यत्पराक्रमस्य पूर्वनिपातनं तदर्चितत्वं बोधयतीति ।

## दर्पणः

दुर्बलतया विशिष्टा संमता इत्यर्थः । नीतिशास्त्रेषु दण्डस्य चतुर्थोपायत्वेन गणितत्वात् । रीतिः प्रकारः सा यस्य अल्पाच्तरत्वात् पूर्वनिपाते प्राप्तेऽप्युचितद्योतनाय पराक्रमस्य पूर्वनिपातः ।

## साहित्यचूडामणिः

येषामिति । दोर्बलमेव न तु नीतिबलम् । केवलेति । दोर्बलशून्यनीतिशरणैः । क्ष्माशक्रः ! भूपुरन्दर ! भवादृशा न सन्त्येव । नियोगे लिङ् । यदि सन्ति द्वौ त्रयो वा । नयस्य पूर्वनिपातौचित्यम् । अल्पाच्तरत्वात्, तथापि पराक्रमस्य क्षत्रियविषये प्राधान्याद् 'अभ्यर्हितं पूर्वमि' ति पूर्वनिपातः । विशेषलक्षणयोगाद् व्यत्यस्तसामान्यलक्षणत्वं विभक्तेर्विशेषः ।

## सम्प्रदायप्रकाशिनी

येषां दोर्बलमिति । येषां दोर्बलमेवेति इयदेव वाक्यम् । केवलमस्तीति शेषः । ये केवलबलिनः, ये च केवलनीतिशरणाः, उभयेऽपि हि ते दुर्बला एव । येषां पुनस्ते बलनीति समस्ते सम्भवतः ते भवादृशा दुर्लभा इत्यर्थः । अत्र पराक्रमस्येति । इतरथा अल्पतराच्कत्वाद् नयस्य पूर्वनिपातः स्यात् ।

## मधुमती

अत्र पराक्रमस्येति । परक्रमनयेत्यादि सामासिक पदम् । तदेकदेशः पराक्रमशब्दः । स च प्राक् प्रयुज्यमानः व्यञ्जकः इत्यर्थः ।

## विस्तारिका

येषामित्यादिं । एवेन नीतिबलव्यवच्छेदः । दुर्बलतया ते सम्मता दुर्बलत्वेन ज्ञातव्याः । तैः दोर्बलमात्रशरणैः, केवलनीतिरीतिशरणैस्तैरप्युर्वीश्वरैः किमित्यन्वयः भवादृशा भवत्तुल्याः । पराक्रमनयेत्यत्र पराक्रमस्य पूर्वनिपातेन प्राधान्यरूपमर्चितत्वं लभ्यते । न च 'यच्चार्चितं द्वयोः' इत्यनेनानुशिष्टस्यार्थस्य कथं व्यङ्ग्यतेति वाच्यम्, अर्चायामननुशासनात् वस्तुतोऽर्चितस्य पूर्वनिपातनात् ।

## सारबोधिनी

पुरुषेति । पुरुषः प्रथममध्यमोत्तमरूपः पूर्वनिपातस्य व्यञ्जकत्वमाह येषामित्यादि । दोर्बलमेवेति । एवकारेण नीतिव्यवच्छेदः । भवादृशा इति । भवत्तुल्या इत्यर्थः । पराक्रमनयेति पराक्रमस्य पूर्वनिपातेन प्राधान्येनार्चि-

तत्वमवगम्यते। न च यच्चार्चितं द्वयोरित्यनेनानुशिष्टार्थस्य कथं व्यङ्ग्यतेति वाच्यम् अर्चायामननुशासनात् वस्तुतोऽर्चितस्य पूर्वनिपातविधानात्।

## काव्यप्रदीपः

पूर्वनिपातादयः पदैकदेशधर्मत्वात्पदैकदेशा एव गण्यन्ते। पूर्वनिपातस्य यथा—

**येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि।**
**प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः।**
**ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-**
**स्तेस्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥**

अत्र चाटुके पराक्रमनयेत्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपातमभिधाय पराक्रमस्य तथा भावोऽभ्यर्हितत्वं द्योतयति।

## आदर्शः

पूर्वनिपातस्येति पूर्वनिपतितपदरूपसमासैकदेशस्येत्यर्थः। येषामिति। दोर्बलमेव न तु नीतिवलम्, सम्मताः ज्ञाताः; नीतिबलमात्रमपि न बलमित्याह—तैरपीति। तैः बुद्धिस्थैः किं कार्यं किमपि कर्त्तुं न शक्यमित्यर्थः। हे क्ष्माशक्र हे पृथिवीन्द्र ये पुनरित्यन्वयः। नयः नीतिः। कान्तक्रमाः कमनीयव्यवसायाः। ते भवादृशाः परं केवलम्। पवित्राः त्रिजगति द्वित्रा नैव स्युः एकस्तु कदाचिद् यदि स्यादित्यर्थः। अत्रेति द्वन्द्वे पूर्वनिपतितपदार्थेऽर्च्चितत्वरूपप्राधान्यावगमात्। तथाच पराक्रमिराजविषयभावोऽत्र व्यङ्ग्यः।

## सुधासागरः

तत्र पूर्वनिपातस्य व्यञ्जकत्वमुदाहरति—'येषामि-ति।

शार्दूलविक्रीडितं छन्दः। बल-नयोभयविशिष्टा एव राजानः समर्था इत्यभिप्रेत्याह — येषां दोर्बलमेव, एवकारेणान्यव्यवच्छेदः, ते राजानः प्रायो दुर्बलतयाऽसम्मताः अप्रयोजकाः, इतरांशभागिनोऽप्यप्रयोजका एवेत्याह ये तदितरपक्षाङ्गीकारिणस्तैरपि केवलनीतिरीतिशरणैरुर्वीश्वरैः किं कार्यम्, न किमपीत्यर्थः, हे क्ष्माशक्र पृथ्वीन्द्र ये पुनः पराक्रमनययोः स्वीकारेण कान्तक्रमाः शोभनाचारास्ते भवादृशाः पवित्राः प्रशस्तास्त्रिजगति लोकत्रये द्वित्राः द्वौ वा त्रयो वा नैव स्युः। भूलोके द्वितीयोऽसम्भावित एवेति भावः।

नन्वत्र पूर्वनिपातस्य कथमलक्ष्यक्रमव्यञ्जकतेति चेत्। उच्यते। पराक्रमनयेत्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपाते प्राप्ते पराक्रमस्य तथाभावोऽभ्यर्हितत्वं द्योतयति। तथा च पराक्रमप्राधान्येन नयस्वीकारो नृपोत्कर्षद्वारा तद्विषयकरतिं पुष्णातीति भावव्यञ्जकत्वं निर्बाधम्। एतत्सर्वमभिप्रेत्य वृत्तिकृतोक्तम्—अत्र पराक्रमस्येत्यादि।

## विवरणम्

पूर्वेति। आनुपूर्व्यवच्छिन्नानां पदत्वेन पूर्वनिपातस्वरूपानुपूर्वीपदैकदेश इति भावः.। क्ष्माशक्रेत्युपादानात् क्ष्मायां भवादृशानां बहूनामसम्भवो भवादृशा इत्यन्तस्यार्थः। त्रिजगति परं द्वित्राः स्युरित्यस्य परत्राभिसम्बन्धः।

विभक्तिविशेषस्य यथा

**प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।**
**दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम्॥१०५॥**

अत्र दिवसेनेत्यपवर्गतृतीया फलप्राप्तिं द्योतयति।

---

### सङ्केतः

प्रधनेति। प्रधनं युद्धम्। दिवसमिति। 'कालाध्वनोरत्यन्तसंयोगे इति आधारे द्वितीया। दिनान्तं क्षणमपि युद्धशून्यं न तैः स्थितम्। फलप्राप्तिस्तु तवैवाभूत्— इत्याशयः। अत्रेति। अपवर्गः फलप्राप्तौ सत्यां क्रियानिष्पत्तिः। तथाच युद्धफलं जयरूपं तवैव जातमिति भावः। अत एव साधुवादपदं इत्युक्तम्।

### सङ्केतः (रुय्यकः)

प्रधानं संग्रामः। अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः।

### बालचित्तानुरञ्जनी

विभक्तिवशेषस्य व्यञ्जकत्वमुदाहरति विभक्तीति। हे धीर तव विधुरैः शत्रुभिः प्रधनशब्दधारिणि युद्धप्रदेशे दिवसमयोधि। हे नृप भवांस्तु दिवसेन विधिना अनुष्ठानेन सिद्धः साधुवादः कीर्त्तनतः स्तुतिमात्रेण तस्य पदं यथा तथा। अत्र व्यङ्ग्यमाह अत्रेति। "अपवर्गे तृतीया" [पा २-३-६] इति फलप्राप्तौ तृतीयाविधानात् तृतीया फलप्राप्तिद्योतिका। अत एव शत्रूणां जयाभावः।

### काव्यादर्शः

'अपवर्गः' फलप्राप्तौ क्रियासमाप्तिः, तत्र तृतीयोक्तेति त्वया जितिमिति ध्वन्यते। 'विधुरैः' शत्रुभिः।

### विवेकः

प्रधनेत्यादि— प्रधनं संग्रामः। फलप्राप्तौ सत्यां क्रियापरिसमाप्तिरपवर्गः।

### दीपिका

प्रधनाध्वनि संग्राममार्गे तव विधुरैरयोधीति सम्बन्धः। नरप! नृपते। विधिसिद्धिस्य न्याय्यस्य साधुवादस्य पदं यथा तथेति क्रियाविशेषणम्। अपवर्ग इति क्रियासमाप्तौ।

## साहित्यचूडामणिः

दिवसेनायुद्धेति तृतीयया अपवर्गः फलप्राप्तिरित्यर्थः । एवं दिवसमयोधीति 'कालध्वनोरत्यन्तसंयोग' इति द्वितीयया विधुराणां क्लेशबाहुल्यमुन्मील्यते ।

## सम्प्रदायप्रकाशिनी

प्रथनाध्वनीति । प्रथनं संग्रामः ।

अपवर्गेतृतीयेति । न पुनर्दिवसमित्यत्यन्तसंयोगद्वितीयावन्नैष्फल्यमिति भावः ।

## मधुमती

अत्र दिवसेनेति । क्रियापरिसमाप्तिमात्रं तृतीयार्थः । फलप्राप्तिस्तु व्यङ्ग्या इति द्रष्टव्यम् । इदमुपलक्षणम् — दिवसं इति द्वितीययाऽपि फलप्राप्तिः व्यज्यते । अत्यन्तसंयोगस्य तावत्येव पर्याप्तेः । फललाभे क्रियाऽनाचरणात् ।

## विस्तारिका

प्रधनेत्यादि । प्रधनं युद्धमेवाध्वा, प्रवेशनिःसरणहेतुत्वात् । विधुरैः शत्रुभिः दिवसं व्याप्य विधिसिद्धमनाहार्यम् । पदं स्थानम्, क्रियाविशेषणम् ।

अत्रेति । क्रियासमाप्तिरपवर्गः सा च विजयलाभ एव भवति; फलसिद्धावेवेच्छाविच्छेदात् ।

## सारबोधिनी

प्रधनेत्यादि । प्रधनं युद्धमेवाध्वा प्रवेशनिःसरणहेतुत्वात् विधुरैः शत्रुभिः दिवसं व्याप्य विधिसिद्धमनाहार्यपदं स्थानम् । अपवर्गः फलप्राप्तौ क्रियासमाप्तिः । अयुद्धेति क्रियापदम् । तेन समानायामपि युद्धक्रियायां तव जयरूपफलप्राप्तिरभूदिति भावः । फललाभ एव क्रियासमाप्तेरिति ।

## काव्यप्रदीपः

उपपदविभक्तिविशेषस्य यथा—

**प्रधनाध्वनि वीर धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।**
**दिवसेन तु नरप भवानयुद्धविधिसिद्धसाधुवादपदम् ॥**

अत्र वीररसात्मनि भवान्दिवसेनायुद्धेति अपवर्गे तृतीया अपवर्गश्च फलप्राप्तौ क्रियापरित्यागः । अतो भवत्पदार्थस्य युद्धरूपक्रियाया यत्फलं विजयस्तत्प्राप्तिस्तृतीयया द्योत्यते । यस्तु 'युद्धविधीत्यादि क्रियाविशेषणम्' इति व्याख्यातवान्स च्छन्दोभङ्गमपि नाज्ञासीदिति ।

## आदर्शः

विभक्तिविशेषस्येति, अपवर्गे विहितायास्तृतीयाया इत्यर्थः । प्रधनेति, हे वीर टङ्काररूपधनुर्ध्वनिभृति युद्धपथे तव विधुरैः शत्रुभिः दिवसं व्याप्य अयोधि; हे नरप, भवांस्तु युद्धविधिसिद्धसाधुवादपदं यथा स्यात् तथा दिवसेन अयुद्ध साधुवादपदयुद्धफलसिद्धौ दिवसवृत्तियुद्धसमाप्तिमानित्यर्थः । अत्रेति, फलसिद्धौ क्रियायाः समाप्तिरपवर्ग इत्यपवर्गलक्षणम्, तस्मिन्नर्थे च अपवर्गे तृतीया(२ ।३ ।९) इति पाणिनिसूत्रेण विहिता तृतीया युद्धसमाप्तिपूर्वभूतां फलप्राप्तिं द्योतयति वक्तीत्यर्थः अनुशासनानुशिष्टस्यार्थस्य वाच्यत्वात्, राजविषयभावातिशयश्च तद्व्यङ्ग्य इत्यर्थः ।

## सुधासागरः

उपपदविभक्तिविशेषस्य व्यञ्जकत्वमुदाहरित —'प्रधने' ति । गीतिश्छन्दः । हे नृप धीराणां धनुषां ध्वनि बिभर्त्तीति तथाभूते । प्रधनाध्वनि प्रधनं युद्धमेवाध्वा प्रवेशनिस्सरणहेतुत्वात्, तस्मिन् । तव विधुरैर्भवद्वैरिभिर्दिवस-मभिव्याप्याऽयोधि निरन्तर प्रहतम् । भवांस्तु दिवसेन विधिसिद्धमनाहार्यम्, जयज्जातमिति यावत्, साधुवादपदम् साधु साध्विति वादस्य पदं स्थानं यथा स्यात्तथा अयुद्ध युद्धं कृतवान् इत्यर्थः ।

अत्र भवान् दिवसेनायुद्धेत्यपवर्गे तृतीया । अपवर्गश्च फलप्राप्तौ सत्यां क्रियापरित्यागः । अतो भवत्पदार्थस्य युद्धरूपक्रियायाः यत्फलं विजयस्तत्प्राप्तिस्तृतीया द्योत्यते । यस्तु युद्धविधीत्यादिक्रियाविशेषणमिति व्याख्यातवान्, स छन्दोभङ्गमपि नाज्ञासीत् ।

## विवरणम्

अत्रेति । स्वल्पाचो नयस्य पूर्वनिपातोत्सर्गः पराक्रमस्य प्राधान्यादभ्यर्हितत्वबोधने तात्पर्येणापोद्यते । स च प्राधान्यबोधः प्रधानपराक्रमवति राजनि रतिभावं पुष्णातीति भावः । विशेषस्य विशेषानुशासनविषयस्य । प्रधनाध्वनि रणपथे । दिवसमित्यत्र 'मासमधीतो नायातः' इत्यादाविवात्यन्तसंयोगेऽपि फलानिष्पत्तिरभिव्यज्यते । दिवसेनेत्यत्र तृतीयया न केवलमाधाराधेयभाव एव प्रत्याय्यते, यावदपवर्गोऽपि । स च विजयफलोपधानस्वरूपः । अयुद्धेति लुङ् । विधीत्यादि युध्यतेरर्थे विशेषणम्, विधिरागमस्तेन सिद्धं साधुवादस्थानं यस्य तदित्यर्थः । क्षत्रियकर्तृकन्याययुद्धस्य वेदोक्तं प्राशस्त्यमिति भावः । 'अपवर्गे तृतीया' इति सूत्रानुवादेन विशेषानुशासनविषयत्वं द्योत्यते ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्टवा दृष्टवा भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ।।१०६ ।।

अत्रानुकम्पावृत्तेः करूपतद्धितस्य ।

---

### सङ्केतः

भूयः इति । सविधे समीपे या नगरीरथ्या तया । नवमिव पुनर्जीवितमिव । ललितललितैः वीप्सया अतीव रम्यैः । यदि वा ललितानि चारूणि, ललिताः विलासाः येषां इति । क्वचिच्च 'लुलिते' ति पाठः । तदा लुलितानि — तन्मयीभूतानि, ललितानि — विलासाः येषाम् । न कदाचित् निर्विलासानीत्यर्थः । इतिः अनुभवप्रकारे । तद्धितस्येति । अभिलाषरसस्य सौकुमार्यस्य च अत्र व्यञ्जकः तद्धित 'क' प्रत्ययः ।

### बालचित्तानुरञ्जनी

तद्धितस्य व्यञ्जकत्वमुदाहरित भूयो भूय इति । अभिनवकाममिव गृहवलभीतुङ्गवाक्षस्था मालती भूयोभूयः समीपस्थनगरीवेश्मान्यटते । माधवः पुनः पुनरवलोक्य दृढौत्सुक्येन ललितं यथा स्यात् तथा लुलितैरङ्कैस्ताम्यति इति कथितम् । न त्ववन्तिकया इति । अत्र व्यङ्ग्यमाह अत्रेति "अनुकम्पायाम्"[पा. ५-३-६७] इत्यनेन अनुकम्पायाः कप्रत्ययविधानात् । अङ्गकैरिति । तद्धितेन कप्रत्ययेनानुकम्पा व्यज्यते । तयाऽनुकम्पया दौर्बल्याद्यवस्थादिवचनात् विप्रलंभरसप्रकर्षो ध्वन्यत इत्यर्थः ।

### काव्यादर्शः

'अङ्गकैः' इत्यनुकम्प्यैरङ्गाणां सौकुमार्यादि व्यङ्ग्यम् ।

### विवेकः

भूयो भूय इत्यादि — सविधनगरीरथ्या भूरिरसुमन्दिरासन्नमार्गः । साक्षादित्यनङ्गरूपपरिहारेण, नवमिति पार्वतीसमाराधितपरमेश्वरप्रसादाद्दाहानन्तरमेव समुत्पन्नम् । गद्योपक्रमत्वादस्य शोकस्य (श्लोकस्य) गद्यशेषस्थ (स्थेन) यदि ति पदं सम्बध्यते, तेन ललितैः सुन्दरैर्लुलितैः साहजिकमवष्टम्भमपहाय म्लानकान्तिकैरेभिरङ्गकैरुपलक्षिता सत्यभिस्विद्यत इति यल्लवङ्गिकयैव निवेदितमिति तत्र योजना । अङ्कैरित्यनुकम्पावृत्तिना तद्धित 'क प्रत्ययेनाभिलाषविप्रलम्भप्रभवमङ्गानां रामणीयकानुबन्धि किमपि शोच्यत्वं द्योत्यते ।'

### दीपिका

सविधयाऽर्थत् लुलितैर्ग्लानिप्रायैः सद्भिर्ललितैर्मनोहरैः । इति कथितं लवङ्गिकयेति प्रकरणसङ्गतिः । अत्र 'क' प्रत्ययेनानुकम्पां द्योतयता किमप्यङ्गनां तानवं सूच्यत ।

### साहित्यचूडामणिः

अनुकम्पायां वृत्तिर्विधानं यस्य करूपस्य तद्धितस्य, मालत्यवस्थाद्योतकत्वात् ।

### सम्प्रदायप्रकाशिनी

भूयो भूय इति । दृष्ट्वा दृष्टवेति क्त्वाप्रत्ययस्योत्कण्ठापेक्षया पूर्वकालता ।

अत्रानुकम्पेति । अनुकम्पावृतेः अनुकम्पार्थस्य कप्रत्ययात्मनस्तद्धितस्येत्यर्थः ।

### मधुमती

करूपेति । अत्रापि अल्पार्थे कन्, न तु अनुकम्पायाम् । व्यङ्ग्यत्वाभिधानविरोधात् ।

### विस्तारिका

भूयो भूय इत्यादि । सविधेति रथ्याविशेषणम् । वलभी प्रासादोपरिमण्डपः । सैव भवनमक्षुद्रत्वात् । तुङ्गमुच्चदेशस्थम्, वातायनं तत्र स्थिता पश्यति, न तु तेन । अनेन वर्त्मना कदाचिदयं पश्येदित्यभिप्रेत्य तत्र शरीरमर्पयन्तीत्यर्थः साक्षाद् दृष्टेत्यन्वयः । तेनेन्द्रजालादिव्युदास । तदुक्तम्—

**"इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम्" इति**

तेन साक्षाद् दर्शने रागोत्कटता । ललितललितैरतिमनोहरैः । ताम्यति ग्लायतीति 'कथितम्' इति चूर्णकेन सहान्वयः । कथितञ्च मे मालतीधात्रेय्या लवङ्गिकयेत्युपक्रम्य मालतीमाधवे कामन्दक्युक्तिरियम् ।

अनुकम्पेत्यादि । तदुक्तम् ।—'अज्ञाने कुत्सिते चैव दयायामनुकम्पने [के]' इति । अनुकम्पाव्यङ्ग्येनाङ्गसौकुमार्येण दुःखक्षमत्वानधिकारित्वद्वारा विप्रलम्भः प्रकृष्यते ।

### सारबोधिनी

भूयो भूय इति । लुलितलुलितैरिति इतस्ततः परिवर्तनशीलैः । ललितलुलितैरिति वा पाठः । अनुकम्पावृत्तेः अनुकम्पार्थकस्यानुकम्पव्यङ्ग्येन सौकुमार्येण दुःखक्षमत्वानधिकारित्व व्यञ्जनद्वारा विप्रलम्भः पुष्यते । परिच्छेदेति ।

### काव्यप्रदीपः

प्रत्ययरूपस्य प्रकृत्यैकदेशष्य यथा—

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।
साक्षात्कामं नवमिव रतिर्मालती माधवं य
द्गाढोत्कण्ठालुलितललितैरङ्गकैस्ताम्यतीति ॥

अत्राङ्गकैरिति कस्वरूपतद्धितेनाल्पार्थकेनानुकम्पातिशयो व्यज्यते ।

## आदर्शः

भूयो भूय इति । मालतीमाधवनाटके "लवङ्गिकया इति निवेदितम्"इति चूर्णकेनान्वयः । भवनवलभी भवनोपरि भवनम् । तुङ्गवातायनम् उच्चगवाक्षः । तत्रस्था मालती तन्निकटस्थया नगरीरथ्यया राजमार्गेण पर्यटन्तं माधव भूयो भूयो दृष्ट्वा दृष्ट्वा लुलितलुलितैः अत्यन्तकोमलैः अङ्गकैस्ताम्यतीत्यर्थः । अङ्गकैरिति तान्तिज्ञापकत्वे विशेषणे वा तृतीया । साक्षादित्यव्ययम्, कामरत्योर्द्वयोरपि विशेषणम् । नवं नवयौवनम् । अत्रेति, अनुकम्पार्थक "क" रूपतद्धितेन मालत्या विप्रलम्भातिशयो व्यज्यते इत्यर्थः, विप्रलम्भातिशयादेव अनुकम्पनीयावस्थाप्राप्तेः । कप्रत्ययस्य तद्धितत्वञ्च पाणिनिमते बोध्यम् ।

## सुधासागरः

प्रत्ययरूपस्य प्रकृत्येकदेशस्य व्यञ्जकत्वमुदाहरति — 'भूयो भूय' इति । मन्दाक्रान्ता छन्दः । लक्षणमुक्तम् । गाढोत्कण्ठया ललितेभ्योऽपि ललितैः सुन्दरतरैः, ललितलुलितैरिति पाठे ललितं सुन्दरं लुलितं परिवर्तनं येषां तथा भूतैरङ्गकैरित्यर्थः स्पष्टमन्यत् । अत्रानुकम्पार्थक-कस्वरूपतद्धितव्यङ्ग्येन दुःखक्षमत्वानधिकारिणा सौकुमार्येण विप्रलम्भः परिपोष्यते ।

यत्तु मधुमतीकारैर्व्याख्यातम् —अत्राल्पार्थे कन्, नत्वनुकम्पायां व्यङ्ग्यत्वाभिधानविरोधादिति, यच्चैतदनुसृत्य प्रदीपकारैर्व्याख्यातम्—अत्राङ्गकैरिति कस्वरूपतद्धितेनाल्पार्थकेनानुकम्पातिशयो व्यज्यते इति, तदत्रानुकम्पावृत्तेः करूपतद्धितस्येति वृत्तिस्वरसभङ्गादुपेक्ष्यम् ।

## विवरणम्

भूय इत्यादि । साक्षादिति निपातो दृष्ट्वेत्यत्रान्वेति । साक्षादिति मूर्तिमन्तमित्यर्थः । स च कामेऽन्वेतीत्यन्ते । इतीति । "कथितमेव मे लवङ्गिकया" इति पूर्ववाक्यसापेक्षम् । अत्रेति । इयं च कप्रत्ययाभिव्यङ्ग्यानुकम्पा कामन्दकीसमवेतं मालतीविषयकं वत्सलरसमभिध्वनयतीति ध्येयम् ।

**परिच्छेदातीतः सकलवचनानामविषयः**
**पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।**
**विवेकप्रध्वंसादुपचितमहामोहगहनो**
**विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१०७॥**

अत्र प्रशब्दस्योपसर्गस्य ।

---

**सङ्केतः**

पुनर्जन्मनि इत्यत्र द्वितीयवारमात्रे पुनश्शब्दः । प्रशब्दस्येति । प्रकर्षेण ध्वंसात् 'निर्मूलकाषं कषितो विवेकः' इति ध्वन्यते ।

**सङ्केतः (रुय्यकः)**

पुनर्जन्मनीति । द्वितीयमात्रे पुनःशब्दो न तु तेन त्वनागमिनि द्वितीयवारे ।

**बालचित्तानुरञ्जनी**

उपसर्गस्य व्यञ्जकत्वमुदाहरति परिच्छेदेति । इयत्तारहितः सकलशब्दगोचरः अस्मिन् जन्मनि पुनर्द्वितीयवारम् अनुभवपथं न गतवान् । विवेकस्य प्रकर्षेण नाशादुपचितः महामोहगहनः एवंविधः कोऽपि विकारः अन्तर्जडयति तापं च कुरुते ।

व्यङ्ग्यमाह अत्रेति । प्रध्वंसादित्यत्र प्रशब्दः प्रकर्ष द्योतयन् आत्यन्तिकविवेकाभावं व्यनक्तीत्यर्थः ।

**काव्यादर्शः**

'पुनर्जन्मनि' इति द्वितीयमात्रे पुनःशब्दः । 'प्रध्वंसाद्' इत्यत्र प्रशब्दः प्रकर्ष द्योतयन् निर्विवेकत्वातिशयं ध्वनति । द्वित्राणामप्युपसर्गाणामेकत्र प्रयोगो रसव्यक्त्यापेक्षयेव, यथा 'प्रभ्रस्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्' इत्यादौ ॥ तथा —

**मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृतानुमानाः ।**
**योगीश्वरैरप्यसुबोधमीशं त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः' ॥**

अत्र सम्यग्भूतमुपांशु कृत्वा आ समन्तात् चरन्तमित्यनेन लोकानुजिघृक्षातिशयस्तत्तदाचरतः परमेश्वरस्य ध्वन्यते ।

## विवेकः

यद्यपि प्रागप्रयोगात् स्वतन्त्रप्रयोगाभावात् षष्ठ्या अश्रुतेर्लिङ्गसंख्याविरहाच्च वाचकवैलक्षण्येन द्योतका निपाता इति प्रादिनिपातानां द्योतकत्वं वैयाकरणादिमते व्यवस्थितमेव तथापीह व्यङ्ग्यरसापेक्षया तेषां व्यञ्जकत्वं दर्शयन्नुदाहरति परिच्छेदातीत इत्यादि— मनसेयत्तया परिच्छेत्तुमशक्यः। सकलेत्यादिनाऽभिव्यक्तुमशक्यतोक्ता। तेन 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे' ति (तै. उ. २व:. ४,९) दर्शितमिति मिश्राः। एवं पुनःशब्दोऽत्र (शब्देनात्र) द्वितीयवारमात्रं नत्वनागामिनि द्वितीयवारे। गहनो गम्भीरः। जडयति सुखयति तापयति च — यो हि जाड्यमापादयति स कथं तापयतीति विरोधोसस्तु (धाभासस्तु) सौन्दर्येणाप्राप्तिपर्यवसानेन परिह्रियत इति विरोधालङ्कारः। तदिह 'प्र' शब्देन प्रध्वंसादिकियाप्रसक्तत्वेन माधवस्य मनसि विवेकलेशस्यापि समूलमुच्छेदान्महामोहार्णवमग्नस्य कोऽप्याभिलाषिकः शृङ्गारो व्यज्यते।'

## दीपिका

परीति— 'पुनः' शब्दोऽत्र कालान्तरमात्रे न तु पश्चात्काले। गहनो दुर्निरूपः। जडयति स्तम्भयति। 'प्र' शब्दस्य ध्वंसप्रकर्ष समूलोन्मूलनलक्षणं द्योतयतो महामोहप्रकर्षसूचनद्वारा रागदाढर्यव्यञ्जकत्वम्। उपसर्गनिपातादीनाञ्च प्राक् ( ?) स्वातन्त्र्य (स्वतन्त्र) प्रयोगलिङ्गसंख्याविभक्तिकृतविशेषविरहेण वाचकवैपरीत्याद्द्योतकत्वमेव यद्यपि महाभाष्यकारादिसम्मतं तथापि रसादिव्यञ्जकत्वमपूर्वमित्यादरणम्। आधुनिकाः पुनरमीषां वाचकत्वमेवाहुः।

## साहित्यचूडामणिः

प्रशब्दस्येति। संस्कारपर्यन्तं विवेकप्रणाशस्य विवक्षितत्वात्।

## सम्प्रदायप्रकाशिनी

परिच्छेदेत्यादि। महामोहोपचये प्रकर्षेण विवेकध्वंसो हेतुः।

## विस्तारिका

परिच्छेदेति। परिच्छेदो विरतिः। सकलानि शक्तलक्षकव्यञ्जकानि। वचनानां विवेको दोषगुणविभागः, महामोहो वस्त्ववस्तुनोर्विपरीतबुद्धिः। अन्तर्मनः जडयति, विषग्राहकतां तिरोधत्ते। तापं विरहज्वालाम्। अथ च जडकत्वतापकत्वयोर्विरोधः।

प्रशब्दस्येति। ध्वंसप्रकर्षेण समूलोन्मूलकत्वव्यक्तिः।

## सारबोधिनी

परिच्छेदों विरतिः। सकलानि शक्तिलक्षकव्यञ्जकानि प्रशब्देति। प्रशब्दस्य ध्वंसप्रकर्षेण समूलोन्मूलकत्वव्यक्तिः।

## काव्यप्रदीपः

उपसर्गरूपस्य तदेकदेशस्य यथा —

**परिच्छेदातीतः सकलवचनानामविषयः।**
**पुनर्जन्मन्यस्मिन्ननुभवपदं यो न गतवान्।**
**विवेकप्रध्वंसादुपचितमहामोहगहनो**
**विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥**

अत्र प्रध्वंसादिति प्रशब्दः प्रकृत्येकदेशः प्रकर्षद्योतकः। उपसर्गाणामवाचकत्वात्।

## आदर्शः

उपसर्गस्यापि स्वतःप्रयोगाभावात् पदैकदेशत्वम्, अतस्तद्व्यङ्ग्यमाह — परिच्छेदेति। मकरन्दं प्रति माधवस्योक्तिरियम्। मम कोऽपि विकारः अन्तर्मानसं जडयति तत्र तापञ्च कुरुते इत्यर्थः। परिच्छेदेत्यादीनि विकारविशेषणानि। परिच्छेदः इयत्ताज्ञानम्।

पुनःशब्दोऽत्र त्वर्थे। अस्मिन् जन्मनि त्वनुभवपथं यो न गतवान्, जन्मान्तरे तु तदनुभवोऽस्तु मा वेत्यर्थः। केचिद् आवृत्तिबोधकमेवात्र पुनःशब्दं व्याचक्षते, तन्न, तदा पुनर्जन्मनीति वा पुनरनुभवपथमिति वा अन्वयः स्यात्, तदुभयमपि न सम्भवति प्राग्जन्मप्रागनुभवयोरावृत्तिरूपत्वाभावात्, चरमस्यैवावृत्तिरूपत्वात्। विवेकस्य इतरभेदविचारस्य प्रध्वंसात् निःशेषाभावात् उपचितेन महामोहेन विवेकविपरीतज्ञानेन गहनः व्याप्तः। अत्रेति, निःशेषतारूपध्वंसप्रकर्षबोधनाद् विप्रलम्भातिशयो व्यङ्ग्य इत्यर्थः।

## सुधासागरः

उपसर्गरूपस्य तदेकदेशस्य व्यञ्जकत्वमुदाहरति — परिच्छेदे' ति।

शिखरिणीछन्दः। सकलानि शक्तलक्षकव्यञ्जकानि। पुनरन्यदा। स्पष्टमन्यत्।

अत्र प्रध्वंसादिति प्रशब्दः प्रकृत्येकदेशो विवेकसमूलोन्मूलनत्वरूपं ध्वंसप्रकर्षं द्योतयति, उपसर्गाणामवाचकत्वात्। तदेतद् वृत्तिकृदाह—अत्र प्रशब्दस्येत्यादि।

## विवरणम्

पदप्रयोगं विना यस्य प्रयोगो न सम्भवति, स एव पदैकदेशः। तेनोपसर्गनिपातावप्युपगृहीतावित्याशयेनोपसर्गद्योतकतामुदाहरति — परिच्छेदेति। परिच्छेदो गणना, तेन सङ्ख्याबाहुल्यवचनाविषयत्वेनौत्कट्यवाचिपदालाभः सूचितः। एतेन सङ्ख्याबाहुल्यौत्कट्यातिशयस्वरूपौ भूमानौ निर्दिष्टौ भवतः। पुनः पदेन सजातीयध्वंसाधिकरणकालवृत्तिविजातीयान्तरितत्वमिव सजातीयप्रागभावाधिकरणकालोत्पन्नविजातीयप्रागभावाधिकरणकालवृत्तित्वाधिकरणमप्यभिधीयत इति प्रकृतविकारानुभवप्राचीनो विजातीयान्तरितोऽनुभवः पुनरित्यनेनाभिधातुं शक्यत इति ध्येयम्।

अत्रेति। प्रशब्देन ध्वंसस्य भाविविवेकासमकालिकत्वम्, तेन च तस्य विषादः, तेन च पूर्वरागातिशयो ध्वन्यत इति भावः।

**कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः ।**
**तमांसि तिष्ठन्ति हि तावदंशुमान् न यावदायात्युदयाद्रिमौलिताम् ॥१०८ ॥**

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

---

### सङ्केतः

च इतीति । अत्र चकारः तुल्ययोगितां जल्पन् वीररसं विश्रान्तिप्रधानतया व्यनक्ति । पदसम्बद्धाः एव चादयः स्युः:—इति एषां पदैकदेशता ।

### बालचित्तानुरञ्जनी

निपातव्यञ्जकत्वमुदाहरति कृतमिति । हे राजन् ! त्वया मनाक् गर्वाभिमुखं मनः कृतं च । अन्यत् किं तव शत्रव एवं निहताश्च । तमांसि तावत् तिष्ठन्ति यावत् सूर्य उदयपर्वतं न प्राप्नोति ।

अत्र व्यङ्ग्यमाह अत्रेति । चेतिनिपातः । वीररसनिष्ठतुल्ययोगितालङ्कारः वीररसप्रकर्षं व्यनक्तीत्यर्थः । यद्यपि 'च' पदमेव न, पदैकदेशः तथापि पदैकदेशस्यैव च स्वातन्त्र्येणाप्रयोगात् पदैकदेशस्यैवोपचारः ।

### काव्यादर्शः

तुल्योगितेति । तुल्यागितालंकारस्य वीररसनिष्ठत्वादिति । सैव द्योत्या । 'च' इति निपातस्येति । जाता-वेकवचनम् । निपातानां च द्योतकत्वं प्रसिद्धमपीह रसापेक्षयोक्तम् । यदाहुः—'स्वातन्त्र्यप्रयोगाभावात् षष्ठ्यादि-लिङ्गसंख्याविरहाच्च वाचकवैलक्षण्येन द्योतका निपाताः' इति । तेषां च द्वित्राणां रसव्यक्त्यर्थं प्रयोगो यथा—'अहो बतासि स्पृहणीयवीर्यः' । अत्र 'अहो, बत' इत्यनेन श्लाघातिशयो ध्वन्यते ।

### विवेकः

अथ निपातानां व्यञ्जकत्वं दर्शयति—कृतञ्चेत्यादि । कृतमित्यादिना पारतन्त्र्यनिरासात् स्वेच्छासंसारित्वं (सञ्चारित्वं), किमन्यदिति लोकोक्त्या शत्रुनिराकरणे सामग्र्यन्तरनैरपेक्ष्यं बलवदापादकविरहश्च कथितः । अस्मा-कमित्यत्र 'न' इति शत्रुशून्यस्यापि परदुःखदुःखितस्य भगवतो जगत्कण्टकोद्धारणप्रवृत्त्या कारुण्यमुचितविषयमिव प्रतीयते । तमांसीत्यादि निहतत्वादेः स्थानादिवैधर्म्येण प्रतिबिम्बनमिति दृष्टान्तोऽलङ्कारः, तस्य साधर्म्यवैधर्म्याभ्यां द्विधा प्रतिपादनात् । तदिह 'कृतं' 'निहता' इति शब्दद्वयनिरन्तरस्थितिना 'च' शब्देन तुल्यकालक्रियायोगात्तुल्य-योगिताद्योतकेन वीररसः प्रकृष्यते । एवञ्च यद्यपि द्वाभ्यां 'च' शब्दाभ्यामत्र तुल्ययोगिता द्योत्यते तथापि द्वितीयस्यान्वाचयपरत्वेनाप्युपपत्तेः प्रथमस्यात्र प्राधान्यमित्याह 'च' इति निपातस्येति । यदि वा जातावेकवचनं, द्वाभ्यामेव 'च' शब्दाभ्यां तत् प्रकाशनात् । 'च' शब्दस्तु सुबन्ततया पदं, तथापि निपातस्य विभक्तेरश्रुतेः पदावयवत्वं, यदि वा प्रकृतिप्रत्ययवत् केवलस्याप्रयोग इति ।

## दीपिका

कृतमिति—अत्र चकाराभ्यां तुल्यकालत्वसूचकाभ्यां वीर्यप्रकर्षः सूच्यते । चादीनाञ्च स्वातन्त्र्येणार्थबोधनविरहात् पदावयवमध्ये गणनम् ।

## साहित्यचूडामणिः

कृतं चेति । यत्रैव च क्षणे वर्णनीयमनसो गर्वाभिमुख्यं तत्रैव सर्वशत्रुविनाश इत्येवमर्थद्योतकस्य च इति निपातस्य । निपातानां वाचकत्वाभावेन द्योतकत्वात् पदैकदेशप्रायत्वमिति यावत् । तत्र च द्वित्राणामुपसर्गाणां निपातनां च प्रयोगो न्याय्यः नाधिकानाम् । तत्रोपसर्गाणां यथा—प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्रागिति सम्यगुच्चैविशेषेणेक्षणमिति विवक्षणात् । यथा वा मनुष्यवृत्त्या समुपाचरन्तम्' इति । सम्यगुपांश्वासमन्ताच्चरन्तमिति विवक्षणात् । निपातानां यथा—'**हा धिक्कष्टमहो क्व यामि शरणमिति ।**

## सम्प्रदायप्रकाशिनी

कृतं चेति । त्वया गर्वाभिमुखं मनः कृतं च द्विषो निहताश्चेति चकाराभ्यां कार्यकारणसमकालत्वलक्षणोऽतिशयो व्यज्यते ।

## मधुमती

निपातस्येति । निपातत्वेन अनर्थकत्वं ब्रुवता 'समुच्चयो नाभिधेयः, किन्तु व्यङ्ग्यः' इति प्रतिपाद्यते । यद्यपि—उपसर्गाः निपाताश्च पदान्येव, न तु पदैकदेशाः, तथापि प्रकृते स्वतन्त्रप्रयोगाविषयत्वेन पदैकदेशत्वव्यपदेशः । तेन च नात्र पदस्य पदैकदेशव्यञ्जकत्वप्रस्तावाभिधानविरोधः इति ध्येयम् ।

## विस्तारिका

कृतञ्चेत्यादि । गर्वाभिमुखम्, न तु गर्वितम् । एवं शस्त्रप्रयोगादिकं विना निहताः, न तु निहनिष्यन्ते ।

निपातस्येति । चकारद्वयव्यङ्ग्यतुल्यकालतया वीरप्रकर्षः ।

## सारबोधिनी

कृतं चेति । निपातस्येति । चकारद्वयगम्यमानैककालतया वीररसप्रकर्षः प्रतीयते ।

## काव्यप्रदीपः

निपातरूपपदैकदेशस्य यथा—

**'कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः ।**
**तमांसि तिष्ठन्ति हि तावदंशुमात्र यावदायात्युदयाद्रिमौलिताम् ॥'**

अत्र चद्वयेन मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपः समुच्चयो द्योत्यते । यद्यपि चेति भिन्नमेव पदम्, न त्वन्यस्यैकदेशस्तथापि केवलस्य तस्यासाधुत्वात्पदैकदेशत्वोपचारेणोदाहरणम् । अत एवोक्तं भोजराजे-

नोपमाप्रकरणे—'नहीवादेः सार्थकत्वेऽपि पृथक्पदतामनुशास्ति' इति। एतेन तिङन्तसमभिव्याहृता उपसर्गा अपि व्याख्याताः।

## आदर्शः

कृतञ्चेति। नृपं प्रति मन्त्रिवाक्यमिदम्। गर्वोऽत्र क्रोधफलको बोध्यः। किमन्यद्वक्तव्यमित्यर्थः। एवं सत्येव नः अस्माकं द्विषः निहता अमोघक्रोधत्वादिति भावः। अत्र दृष्टान्तालङ्कारमाह—तमांसीति। मौलितां मौलिस्थताम्। अत्रेति। 'तुल्ययोगिता' तुल्यमेककालं योगिता समुच्चयालङ्कार इत्यर्थः। प्राकरणिकत्वेनाप्राकरणिकत्वेन वा नियतानां क्रियागुणद्येकधर्मान्वयरूपायास्तुल्ययोगिताया अत्रासम्भवात्। द्योतकता चात्र वाचकतैव, चकारद्वयस्यैककालवाचकत्वात् तद्द्वारा च राजविषयभावप्रकर्षो व्यङ्ग्यः। चकारयोः पदैकदेशत्वञ्च पदान्तरोत्तरवर्त्तित्वनियमात्, अत एव निपातत्वमपि। वाचकता चानयोः परस्परोपसन्धानादेव।

## सुधासागरः

निपातरूपपदैकदेशस्य व्यञ्जकत्वमुदाहरति—'कृतं चे' ति।

स्पष्टम्। वंशस्थं वृत्तम्। लक्षणमुक्तं प्राक्।

अत्र चद्वयेन मनोगर्धाभिमुखीकरणशंत्रुहननयोरेककालतारूपः समुच्चयो द्योत्यते। यद्यपि चेति भिन्नमेव पदं न त्वन्यस्यैकदेशस्तथापि केवलस्य तस्यासाधुत्वात्पदैकदेशत्वोपचारेणोदाहरणम्। अत एवोक्तं भोजराजेनोपमाप्रकरणे—'नहीवादेः सार्थकत्वेऽपि पृथक्पदतामनुशास्तीति। एतेन तिङ्समभिव्याहृता उपसर्गा अपि व्याख्याताः।

## विवरणम्

कृतं चेति। गर्वो रणोत्साहः। अत्रेति। अत्रैकेन चकारेण करणस्य निहननस्य च समुच्चयः। स चैककर्तृसम्बन्धस्वरूपो बोध्यते। कृतनिहतपदयोरेकेन त्वयापदेन सहाकाङ्क्षैव चकारार्थः। स च वाक्यार्थबुद्ध्यननुप्रविष्टोऽपि शब्दधर्मग्राहकतयैवान्वयबुद्धावुपयुज्यते। शब्दधर्मस्य पुंस्त्वादेः सुबभिधेयस्य 'मित्रो भाति' इत्यादौ सूर्यशक्तिग्रहमात्रोपक्षीणत्वदर्शनादित्यपि सम्भवति। द्वितीयस्तु चकारः प्रयुज्यमानः 'अभ्युद्गतश्च तमसा कवलीकृतश्च" इत्यादाविव क्रिययोर्यौगपद्यस्वरूपं समुच्चयमभिव्यनक्ति। स समुच्चयः कार्यकारणपौर्वापर्यविपर्ययस्वरूपमतिशयं मरणकर्मणः क्षिप्रकारिताम्, सा च राजरतिमनुभावयतीति भावः।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिंपरा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ १०९ ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदिति, अपि, अस्मदित्यस्य सर्वाक्षेपिणः भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेन न त्वभावमुखेनाभिधानस्य।

---

**सङ्केतः**

रामोऽसाविति। राघवानन्दे कुम्भकर्णोक्तिः। अत्र प्रस्तावात् देवः त्वमित्यर्थः। एकबाणाहत्या श्रेणीभूतविशालतालानां यत् विवरं तेन उद्गीर्णैः। सर्वनामेति। सामान्येन यत् नाम तत् प्रातिपदिकम्। यत्तु विशिष्टं सर्वादिगणोक्तं तत् सर्वनाम्। वचनानां एकद्वित्र्यादिरूपाणाम्। व्यञ्जकत्वमिति योगः। तेन च असौ प्रसिद्धः अद्वितीयः इति, भुवनेषु न तु एकस्मिन् भुवने इति, गुणैः अनेकैः न त्वेकेन इति च ध्वन्यते। न त्वदित्यादि। त्वत् इत्युक्ते हि रावणस्यैव, मत् इत्युक्ते वक्तुरेव भाग्यव्यत्ययः ध्वन्यते। अस्मत् इति बहुवचनान्ततया उक्ते तु 'तव च मम कुलस्य च' इति सर्वेषां आक्षेपः इत्यर्थः। अन्यथेति। भाग्यानां अभावात् इति नोक्तम्, किन्तु विपर्ययात् इति। यान्येव भाग्यानि अस्माकं प्रभुत्वाय अभूवन्, तान्येव अन्यथासम्पन्नानि सन्ति, क्षयहेतुत्वात् व्यत्ययरूपाणि जातानि। पुण्याभावे हि प्रभुत्वमेव न स्यात्, न पुनः प्रत्युत क्षयः स्यात्। अयं भावः—पुण्यान्येव अपुण्यतया परिणतानि अस्मत्कुलं क्षयं नेष्यन्तीति व्यज्यते इति।

**बालचित्तानुरञ्जनी**

सर्वनामवचनप्रातिपदिकवचनानां व्यञ्जकत्वमुदाहरति रामोऽसाविति। राघवानन्दे रावणमुद्दिश्य कुम्भकर्णस्य [?] वचनम्। असौ रामः भुवनेषु विक्रमगुणैः संधिविग्रहादिभिः परां प्रसिद्धिं प्राप्तः। अस्माकं भाग्यानां नाशात् यदि दैवतं रामं न जानाति। एष वायुः बन्दीव यस्य रामस्य एकबाणात् कृतानि श्रेणीभूतविशालतालानां विवराणि तेभ्य उद्गीर्णैः सप्तभिः स्वरैः यशांसि गायति।

अत्र व्यङ्ग्यमाह अत्रेति। असाविति सर्वनामैकवचनं चासावेव रामो नान्यो रामोऽस्तीति व्यनक्ति। भुवनेष्विति। बहुवचनं सर्वेषु भुवनेषु न त्वेकस्मिन्निति प्रसिद्धेः सार्वत्रिकत्वं व्यनक्ति। अत्रैव बहुवचनं गुणानां बहुत्वं व्यनक्ति। अस्मदिति सर्वेषां नाशं व्यनक्ति। त्वन्मदित्युक्ते सर्वनाशाप्रतीतेः भाग्यविपर्ययादिति पर्यायात्

वैपरीत्यात् यानि भाग्यानि आसन् तानीदानीमन्यथा संपन्नानीत्यभिधानं भाग्याभासं व्यनक्ति। अभावमुखेनाभिधानं न व्यनक्तीत्यर्थः। अत्र सर्वत्र रामविषयाभावः।

## काव्यादर्शः

राघवानन्दे रावणमुद्दिश्य कुम्भकर्णोक्तौ—'राम' इति। रामशब्दार्थो दाशरथिरूपो जामदग्न्यावजयवालिवधादिधर्मान्तरपरिणतः। 'असौ' इति उत्कर्षातिशयशाली। 'भुवनेषु' इति सर्वेष्वेव, न त्वेकस्मिन्। गुणाः षट् सन्ध्यादयः। 'गुणैः' इति बहुवचनमनेकभङ्गिवैदग्ध्यं ध्वनति। तेन सर्वनामादिभिरलक्ष्यक्रमव्यङ्ग्यो वीररसः प्रकाशितः। न त्वभावमुखेनेति। भाग्याभावादिति नोक्तं, किं तु विपर्ययादिति। ततः सन्त्यस्माकं भाग्यानि, परं तेषामन्यथाभाव इति ध्वन्यते।

## विवेकः

रामोऽसावित्यादि—स्वरैः षड्जादिभिः सप्तभिः। असाविति सर्वनाम्ना साक्षात्क्रियमाणतदीयलोकोत्तरस्थिरत्वरम्यत्वसत्यत्वशास्त्रदृष्टित्वोचितकारित्वादिरूपप्रसिद्धः प्रकर्षो व्यज्यते। भुवनेष्विति बहुवचनेन त्रिभुवनव्यापित्वं, गुणैरिति प्रातिपदिकमात्रेण जन्मनस्तदेकप्रवणत्वं, तत्रापि बहुवचनेन धीरोदात्तत्वनिःसामान्यसाहसत्वादिविक्रमोचितगुणगणनिधानत्वम्, अस्मदिति बहुवचनेन सर्वाक्षेपिणा न केवलं तव, समरावतीर्णराक्षसकुलस्य सकलस्य, अभाग्यादिति भाग्याभावे वाच्ये यदन्यथासम्पत्तिमुखेनाभिधानं तेन येषामप्यस्मत्पक्षपातिनां जीवनादृष्टमवशिष्टं तेषामपि विपर्यस्तमिति ध्वन्यते। तेनैतत्प्रतियोगिभयात्त्रैलोक्यविजयोपजातशौर्याभिमानिनोऽस्मद्भर्तुर्व्यर्थतेति प्रकृतपोषकः।

## दीपिका

अत्रेति—असाविति सर्वनाम्ना प्रत्यक्षदृश्यमान-नयप्रधानत्व-महानुभावत्वादिकं व्यज्यते। 'भुवने'ष्विति बहुत्वेन निखिलव्याप्तिः, 'गुणै' रिति प्रातिपदिकेन समुदितत्वं बहुवचनेन निःशेषता, 'अस्म'दिति सकल-स्वकुल-परिग्रहः। अन्यथासम्पत्तिमुखेन-अभाग्यपदप्रयोगं विना भाग्यासम्भवप्रतिपादनेन भाग्यानुकूल्यदशायां त्वापि नेदृशी दुर्विधाऽऽसीदिति।

## दर्पणः

रामोऽसाविति। सप्तभिः षड्जादिभिः। असाविति। सर्वनाम्ना साक्षात् क्रियमाणतदीयलोकोत्तरप्रसिद्धिर्व्यज्यते। वचनं बहुवचनम्। गुणैरित्येकत्र प्रातिपदिकं बहुवचनं चोत्कर्षव्यञ्जकम् न त्वदिति। त्वद्भाग्यविपर्ययादिति। मदिति। मदभाग्यविपर्ययादिति। अस्मदिति। सकलस्वकुलपरिग्रहः। अथेत्यादि। अत्र 'भाग्यात्' इत्यनुक्तावपि भाग्यविपर्ययादिति वचनेनास्माकं भाग्येन पूर्वमभावः।

## साहित्यचूडामणिः

राम इति। असाविति रामस्य प्रसिद्धत्वमद्वितीयत्वं च ध्वन्यते। भुवनेष्विति सार्वलौकिकप्रसिद्धत्वम्। गुणैरिति न पुनः कृत्रिमवैतालिकसंकेतेन। गुणानां बहुमुखत्वं प्रथमानत्वं बहुवचनेन ध्वन्यते।

असाविति सर्वनाम्नस्तद्वचनस्यैकत्वस्य च। भुवनेषु गुणैरिति प्रातिपदिकयोस्तद्वचनयोबहुवचनयोश्च। सम्भूय सर्वेषां बहुवचनम्। सर्वाक्षेपिणः एकैकव्यतिरेकात् सर्वराक्षसक्रोडीकरणक्षमस्य। भाग्यविपर्ययादिति। नखल्वत्र भाग्यस्य प्रागभावः, अपितु बुद्धिपूर्वकमागृहातैरस्माभिः प्रध्वंसः प्रस्तूयते। यदि मैथिली प्रत्यर्पणादाग्रहमत्यक्ष्याम सुखिनस्तदभविष्यामेत्याह—अन्यथेति। मुखमुपायः। अभिधानस्यवंविधस्य निर्दशस्य व्यञ्जकत्वम्।

## सम्प्रदायप्रकाशिनी

रामोऽसाविति। को राम इति दशग्रीवेण पृष्टस्य चारस्योक्तिरेषा। रामोऽसाविति सर्वनाम्ना लोकातिशायिनी प्रसिद्धिः। भुवनेष्विति प्रसिद्धेः सार्वत्रिकता। गुणैरिति प्रसिद्धिहेतोः श्लाघ्यता। परामिति, अत एव परमत्वम्। अस्मदिति राक्षसकुलस्यैव। यदि परं देव इति परमप्रवृत्तता। तस्यास्य प्रसिद्धिं परमोद्वेगजननपूर्वकमनुस्मारयितुं वन्दीवेत्युत्तरार्धम्। विवरसप्तकसद्भावात् स्वरसप्तकाविर्भावः।

## मधुमती

अत्र—असौ इति। असौ इति सर्वनाम्ना रामान्तरापेक्षया वैलक्षण्यम्, भुवनेषु इति बहुवचनेन प्रसिद्धेः अनपह्नवनीयत्वम्, गुणैः इति प्रातिपदिकेन न गुणेन नाप्यगुणैः इति च व्यज्यते। न त्वदिति। तव भाग्यविपर्ययः—त्वद्भाग्यविपर्ययः, मम भाग्यविपर्ययः मद्भाग्यविपर्ययः, अस्माकं भाग्यविपर्ययः अस्मद्भाग्यविपर्ययः—इति समासेषु आद्ययोः एकवचनान्तस्य समस्यमानतया नियतविषयत्वम्, अन्त्ये तु बहुवचनान्तस्य समस्यमानतया सर्वाक्षेपित्वं—इत्यर्थः। रामोऽसौ इत्यत्र नानापदैकदेशे सर्वनामादीनां व्यञ्जकत्वं उक्तम्। अत्र तु एकस्मिन्नेव अस्मद्भाग्यविपर्ययात् इति सामासिकपदे तेषां व्यञ्जकत्वं उक्तमिति ततो भेदः। अत्र अस्मच्छब्देन ये रामाय न द्रुह्यन्त्यपि तेषामप्यविनाशः प्रतीयते। वचनप्रातिपादिकयोः व्यञ्जकता मूले एव स्फुटा।

## विस्तारिका

रामोऽसाविति। यदि परमित्यखण्डोऽवधारणे।

अत्रेति। महिमातिशयेन प्रत्यक्षायमाणत्वम्। असावित्यस्य [भुवनेष्विति], न तु यत्र कुत्रचिदिति। बहुवचनस्य दोषव्यवच्छेदो गुणैरित्यस्य व्यङ्ग्यम्। तदाह 'सर्वनामेत्यादि। [अस्मदिति] आत्मगतबहुत्वाभिधायकास्मदुत्तरबहुवचनस्य कुलाक्षेपकत्वं व्यञ्जनैरित्याह—सर्वाक्षेपिण इति। भाग्यपरिवृत्तौ सम्पत्तिविपर्ययः। अभाग्याभिधाने भाग्यसामान्याभावात् सम्पत्तिसामान्याभावः प्रतीयते, न तु ध्वंसः।

## काव्यप्रदीपः

अथ बहूनां यथा—

**'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-**
**मस्मद्भाग्यविपर्ययाद्यदिपरं देवो न जानाति तम्।**

वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥'

अत्रासाविति सर्वनाम्नः। भुवनेष्विति न तु देशेष्विति। भुवनेवे (ष्वि) ति भुवनरूपप्रातिपदिकस्य बहुवचनस्य च विक्रमगुणैरिति न तु गुणेन दोषैर्वेति प्रातिपदिकवचनयोर्व्यञ्जकत्वम्। किंचास्मद्भाग्येत्यत्र न त्वद्भाग्येति न वा मद्भाग्येति कृतम्। तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वाक्षेपकत्वम्। तथा भाग्यविपर्यया-दित्यन्यथा संपत्तिमुखेनोक्तम्, न त्वभाग्यादित्यभावमुखेन। अतस्तथाविधानेनाभाग्यविरहेऽपि भाग्यान्येव तादृ-शत्वेन परिणतानीति व्यज्यते।

## काव्यप्रकाशखण्डनम्

रामोऽसौ भुवनेषु विक्रमगुणैः [प. १७.२] प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद् यदि परं देवो न जानाति तम्।
बन्दीवैष यशांसि गायति मरुद् यस्यैकबाणाहति-
श्रेणीभूतविशालशालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥

अत्रासावित्यनेन निरन्तरभावनावशेन प्रत्यक्षायमाणत्वम्, भुवनेषु इति बहुवचनेन न यत्र क्वचिदिति, गुणैरित्यनेन दोषव्यवच्छेदो व्यज्यते। तथा न त्वदिति न मदिति अपि तु अस्मदिति सर्वाक्षेपकत्वम्। एवं अभाग्यादिति वक्तव्ये भाग्यविपर्ययादित्युक्तम्। तेन अभाग्याभावेऽपि भाग्यान्येव तत्त्वेन परिणतानीति प्रती-यते। तैस्तु निर्वेदशङ्कादैन्यविषादातिशयः पोष्यते।

## आदर्शः

एकत्रैव बहूनां पदैकदेशानां व्यञ्जकत्वमाह—रामोऽसाविति। रावणं प्रति मन्त्रिवाक्यमिदम्। भुवनेषु विक्रमगुणैः प्राप्तप्रसिद्धिमपि तं देवः भवान् यदि पुनर्न जानाति, तदा अस्मद्भाग्यविपर्ययादेव तदित्यर्थः। प्रसिद्धि-प्राप्तिं दर्शयति—वन्दी वेति। वन्दी स्तुतिपाठकः। एकवाणस्याहतिर्यत्र तादृशा ये श्रेणीभूतविशालतालाः तेषां विवराणि वाणकृतानि तदुद्गीर्णैः सप्तभिः निषादर्षभगान्धारादिभिः स्वरैर्यस्य यशांसि मरुद् गायति, सप्तविवरोत्थि-तसप्तशब्देषु निषादर्षभादिसप्तस्वरत्वाध्यासादिदमुक्तम्। अत्र पदैकदेशानां स्वस्वार्थबोधनद्वारा रावणत्रासरूप-व्यभिचारिभावव्यञ्जकत्वं दर्शयति—अत्रेति। असावित्यत्र प्रकृतिमात्रेण पुरःप्रायत्वव्यञ्जनात् सर्वनाम्नः, भुवनेष्वित्यत्र भुवनपदेन त्रैलोक्यबोधनात् गुणैरित्यत्र गुणपदेन दोषव्यावृत्तिबोधनाच्च प्रातिपदिकयोरुभयत्रैव बहुवचनेन तदनेकत्वबोधनात् वचनस्य च त्रासव्यञ्जकत्वमित्याह—सर्वनामेति। बहुवचनसमासनियतास्मत्पद-स्यापि त्रासव्यञ्जकत्वमित्याह—न त्वदितीति। एकवचनसमास एव त्वन्मदी नियते, तथा अकृत्वा कृतस्य सर्वगोष्ठ्याक्षेपकस्य अस्मदिति निर्देशस्येत्यर्थः। विपर्ययपदस्यापि तद्व्यञ्जकत्वमाह—भाग्येति। 'अन्यथा सम्पत्तिः' दुर्भाग्यत्वेन निष्पत्तिः। न त्वभावेति भाग्याभावात् सत्फलाभाव एव न त्वसत्फलम्, दुर्भाग्यत्वे त्वसत्फलमिति भावः।

## सुधासागरः

अथ बहूनां व्यञ्जकत्वमुदाहरति—'रामोऽसा'—विति।

शार्दूलविक्रीडितं छन्दः रावणामात्यस्येयमुक्तिः। वाच्यार्थः स्पष्टः।

अत्रासाविति-निरन्तरभावनावशेन प्रत्यक्षायमाण इति सर्वनाम्नः, भुवनेष्विति न तु देशोष्विति भुवने वेति भुवनरूपप्रातिपदिकस्य बहुवचनस्य च, विक्रमगुणैरिति न तु गुणेन दाषेवेति प्रातिपादकवचनयोर्व्यञ्जकत्वम्।

किञ्च अस्मद्भाग्येत्यत्र न त्वद्भाग्योत् न वा मद्भाग्येति कृतम्, तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वापेक्षकत्वम्। तथा भाग्यविपर्ययादित्यन्यथासम्पत्तिमुखेनोक्तं न त्वभाग्यादित्यभाग्यमुखेन, अतस्तथाभिधा-नेनाभाग्याविरहेऽपि भाग्यान्येव तादृशत्वेन परिणतानीति व्यज्यते। तदेतद्वृत्तिकारैरत्रासावित्यादिनोक्तम्।

नृसिंहठक्कुरास्तु—भाग्यपरिवृत्तौ सम्पद्विपर्ययः, अत एवोक्तम्—अन्यथासम्पत्तिमुखेनेति। सम्पत्तेर-न्यथात्वमुखेनेत्यर्थः। अभाग्यविधाने सम्पत्तिसामान्याभावः प्रतीयेत न तु ध्वंसः, न चात्र सामान्याभावो विवक्षितः, तस्यासंम्भवादित्याहुः।

## विवरणम्

प्रपञ्चयितुमुदाहरति—रामोऽसाविति। 'यदि परं' 'यदि स्यात्' इत्यादिक एक एव निपातः, 'यदि परमसह्यस्तु विरहः' इत्युत्तरचरिते, सुभगाभिक्षुन्यायेन यदि स्यात्' इत्यात्मतत्त्वविवेके च प्रयोगदर्शनात्। बन्दी स्तुतिपाठकः। श्रेणीभावस्तालेषु विवरेषु चान्वेति। श्रेणी ऋजुपङ्क्तिः। स्वभावेनानृजूनां तालानामार्जवे बाणाहतेः कारणत्वम्। प्रकरणवशात् स्वरपदेनोपात्ताः सप्त ध्वनयः सप्तानां हि निषादादीनां स्वराणामभेदेनाध्यवसीयमाना बन्दिसाधर्म्यमुपपादयन्ति।

अत्रेत्यादि। असाविति सर्वनाम्नः, भुवनेष्वित्यत्र प्रातिपदिकबहुवचनयोः, गुणैरित्यत्र (बहु) वचनप्रातिप-दिकयोर्यथायोगमन्वयः। वचनानामित्यत्र रसादयो व्यङ्ग्या इति सम्बन्धः। अदसः शाश्वतिकप्रत्यक्षबुद्धिविष-यताऽर्थः। तच्च प्रत्यक्षं द्विषो मित्राणि च कर्तृ त्वेनाक्षिपति। तेन शाश्वतिकदर्शनेन मित्राणां रामे प्रेम, द्विषतां ततो भयमभिव्यज्यते। (भुवनेष्वित्यत्र देशादिपरिहारेण) भुवनप्रातिपदिकस्य बहुवचनस्य च प्रयोगेण न भाषादिवदेक-देशप्रसिद्धः, न देवमनुष्यादिवदेकलोकप्रसिद्धो राम इति तेन सकललोकप्रसिद्धस्य तस्य रवेरिवाज्ञानमन्धस्येव ज्ञातुरेव मदान्ध्यमवगमयति। विक्रमैः प्रसिद्ध एतावन्मात्रम्, अन्याय्यविक्रमस्वरूपदोषहेतुकामपि प्रसिद्धिं गमये-दिति गुणपदोपादानम्। एकदा पराक्रम्य निवृत्तस्त्रिविक्रम इव न द्विषां भीषण इत्यतः पराक्रमगुणेषु बहुत्वोपादानम्। तेन ताडकावध मारीचक्षेपधूर्जटिधनुर्भङ्गदनुकबन्धापासनवालिवधादिपराक्रमाणां बाहुल्येन न योग्यमेनमज्ञात्वा स्थातुमिति व्यज्यते। न त्वदितीति। तथाभिधाने सम्बोध्यप्रकोप एव स्यात्। नमदितीति। तथाभिधाने लेशतोऽपि न सम्बोध्यस्याभाग्यं प्रतीयेत। अपि त्विति। युस्मदस्मदोरस्मद एवैकशेषादस्य सर्वाक्षेपकत्वमवसेयम्। आक्षे-पिण इति। अभिधानस्येत्यनेन समानाधिकरणम्। सर्वेषां रक्षसां भाग्यविपर्ययेण रामकर्तृकस्तेषां क्षय आक्षिप्यते। यदि तु निसर्गादभाग्या राक्षसजातिः स्यात्, तदा पूर्वमिवेदानीमपि न क्षीयेतेत्यभाग्यादिति प्रहाय भाग्यविपर्यया-दित्यभिहितम्। तेन च पूर्वविद्यमानस्य भाग्यस्य ध्वंसादिरूपेण परिणाम उच्यत इत्याह—भाग्येत्यादि।

**तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।**

**अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ।।११० ।।**

अत्र, इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्वे, इति धनुषः संमीपे, इति मौलौ बसतीति त्वादिभिस्तुल्ये, एषां वाचकत्वे, अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति ।

---

### सङ्केतः

तरुणिमनीति । मदनश्च, प्रस्तावात् तस्य धनुश्च ते तथा, तयोः समीपे । अयं भावः—यत् तारुण्यं कलां कलयति तत् तस्य स्पर्धयेव भ्रुवोरग्रं अग्रभागः कलां पठति । एतेन उपाध्यायस्यैव वक्रत्वे तच्छिष्यस्य ततोऽप्यतीव वक्रतैवेति ध्वन्यते । यस्याः भ्रूतारुण्यात्मकानि अङ्गान्यपि परस्परस्पर्धया सविभ्रमाणि, सा तदाधारः सकलानां चतुराणां समस्तानां वा ललनानां कथं न मौलिं अधिवसति ? चकितेति विशेषणपदम् । एतेन नेत्रविभ्रमः उक्तः । स एव विशेषः । व्यञ्जकत्वं इमनिजादीनां स्वरूपस्य, विभावादिद्वारतया पारम्पर्येणेत्यर्थः । अन्येषामपीति । पदैकदेशानामित्यर्थः ।

### सङ्केतः (रुय्यकः)

अनुमदनधनुरितिमदनधनुष उपाध्यायस्य समीप इति "अनुर्युत्समये" ति समासः । भ्रुवोरग्रं शिष्यः (शिष्यम्) ।

### बालचित्तानुरञ्जनी

पदैकदेशबोध्यः इमनिजव्ययीभावानां कर्मभूताधाराणां व्यञ्जकत्वमुदाहरति तरुणिमनीति । तरुणिमनि तारुण्ये कलयति सति भ्रुवोरग्रे शिष्यभूतो कामधनुषः उपाध्यायस्य समीपे पठति सति चकितचलनयना इयं स्त्री सर्वस्त्रीणां मौलिमधिवसति ।

अत्र व्यङ्ग्यमाह अत्रेति । इमनिजव्ययीभावकर्मधाराणां स्वरूपव्यञ्जकत्वमिति संबन्धत्वादिभिः स्त्रीप्रत्ययाद्यैः इमनिजव्ययीभावकर्मभूताधाराद्यैः स एव विशेषो व्यङ्ग्य इति शेषः । प्राप्नोतीति यो विशेषो व्यङ्ग्यः स्वसाधकव्यञ्जकास्तित्वं प्राप्नोतीत्यर्थः । श्रुतिकटुवादिहीनो माधुर्यादियुक्तः शब्दगोचरः स्वसंबन्धो विशेषः ।

### काव्यादर्शः

'तरुणिमनि' इति । भ्रुवोः संबन्धिन्यग्रभागे मदनधनुषः समीपे पठति सतीत्यर्थः । भ्रुवोरग्रं शिष्य इव, मदनधनुश्चोपाध्यायः । तच्च वक्रमिति शिष्यस्यातिवक्रत्वं ध्वन्यते । आधारस्य कर्मतापत्तेर्मौलिमिति । एषामिति इमनिजादीनाम् । स एव व्यञ्जकत्वमिति स एव व्यञ्जकभावः । विभावादिव्यञ्जनद्वारतया पारंपर्येणेत्यर्थः ।

## विवेकः

तरुणिमनीत्यादि—अनुमदनधनुरिति मदनधनुष उपाध्यायस्य समीप इति 'अनुर्यत्समये' ति (पा. २ ।१ ।१५) समासः । भ्रुवोरग्रे शिष्यत्व [भूते] प्रत्ययादिभिः समानार्थत्वेऽपीमनिजादीनां स्वरूपस्य व्यञ्जकत्वं सहृदयग्राह्यं स्फुटमेव । तथाहीमनिचा सौकुमार्यपरेण त्यक्तबाल्यमुद्भिद्यमानरणरणकञ्च वयो ध्वन्यते, 'त्व'प्रत्ययेन तु कठोरता । एवमव्ययार्थस्य विशेष्यत्वेऽव्ययीभावस्तेन समासे मदनधनुषो न्यग्भावः प्रतीयते, ततश्च ततोऽप्यधिकं भ्रूलता (लतया) जगद्वशीकारसाम्राज्यमिति व्यज्यते, वाक्ये तु मदनधनुषः प्राधान्यमिति । उपान्वध्याङ्वस (पा. १ ।४ ।१८) इति कर्मभूताधारेण सकलरचना (ललना)—मौलिन्यग्भावनमभिव्याप्यत्वञ्च प्रतीयते, सप्तम्या त्वाधेयस्यैकदेशवृत्तितेति । तदेतदाह—अस्ति कश्चिद्विशेष इति । तथा च 'अप्रहतपदारब्धचमत्कारित्वं नाम कान्ति 'रिति वामनः' (का.अ. सू.वृ. ३ ।१ ।२५)

## दीपिका

कला उपचयः । भ्रुवोरग्रेऽनुमदनधनुः पठति मदनधनुषो नैपुणं शिक्षति सति । स्वरूपस्य व्यञ्जकत्वं, नत्वेषामर्थस्यैव व्यञ्जकत्वम् । स्वरूपस्य तु त्वादिसाधारण्यमेवेत्याह-त्वादिभिरिति । कश्चिदिति—इमनिचा तावत् श्रुतिकटुतापरिहारेण सौकुमार्यमारोपयता सहृदयहृदयङ्गमं किमप्यानुकूल्यं धीयते । अव्ययीभावसमासेनापि मदनधनुषो गुणीभावेन ततोऽप्यधिकं जगद्वशीकारविज्ञानं भ्रूलताऽग्रस्य प्रत्याय्यते । मौलिमिति कर्मतया व्याप्तिसूचनेन मौलावित्याधारत्वप्रतिपाद्याधेयैकदेशवृत्तित्वपरिहारेण कोऽप्यतिशय आत्मादरपोषकः । तदिदमुक्तम्—'यश्चमत्कारकारी'ति । स एव व्यञ्जको व्यञ्जकभावनियामकः । यद्वा विशिष्यत इति विशेषः स्वरूपमेव । षष्ठी त्वाहार्यभेदा । स एव व्यञ्जको व्यञ्जनाव्यापाराश्रयः । व्यञ्जकत्वमिति पाठे स्वरूपस्य विशेषः स्वरूपं येन विशिष्यते स एव व्यञ्जकत्वं, तदबलेनैव स्वरूपं व्यनक्तीत्यर्थः ।

## दर्पणः

तरुणिमनीति । मदनधनुषः [समीपे] पुनः शिक्षां कुर्वतीत्यर्थः । स्वरूपस्य विशेषप्रत्ययादिमनिच् प्रत्ययस्य श्रुतिकटुत्वपरिहारेण सहृदयसङ्गतित्वम् । अव्ययीभावसमासस्य च मदनधनुषो गुणीभावेन भ्रूलताग्रस्य जगद्वशीकरणसाम्राज्यं कर्मभूताधारस्य चाधारैकदेशवृत्तित्वपरिहारेण सकलाधारव्यावृत्तमप्यास्वादप्रकर्ष द्योतयति । स एवेति । व्यञ्जकव्यंग्यतावनियामकः ।

## साहित्यचूडामणिः

अथ विप्रतिपत्तिविषयमुदाहरति—तरुणिमनीति । एतेषां स्वरूपश्रवणमेव शुष्कशास्त्रशब्दविलक्षणं रसाभिव्यञ्जकम् । तरुणत्व इति त्वान्तादिमनिजन्तस्य, मदनधनुषः समीप इति वाक्यादव्ययीभावस्य, मौलौ वसतीत्यधिकरणप्रयोगान्मौलिमिति कर्मप्रयोगस्य च चमत्कारकारित्वम् । अत्र महिमा विप्रतिपद्यते । तेन हि विधेयाविमर्शे निर्णीतम्—'अव्ययीभावे यथा—'सा दयितस्य समीपे नावस्थातुं न चलितुमुत्सहते' इत्यत्र दयितस्येति संबन्धितया यत् समीपस्य विशेषणं तत् तस्य सुकृतशतलभ्यतालक्षणमुत्कर्षमादधदुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नोपदयितमिति समीपार्थेनाव्ययेन सह समासेऽवसादं गमितमि'-ति । तदिदमाग्रहाधिक्य-

मित्याकूतवानाह—अस्तीति। अस्मादव्ययीभावबन्धच्छाया सहृदयैरुपलाल्यते। एवमिति। तत्रोपग्रहस्य यथा ममैव—

**अभुञ्जत भुवं प्राञ्चो देव! बाहुर्भुनक्ति ते।**
**राजवत्यो यतस्तेषां राजन्वत्यस्तु ते प्रजाः॥** इति।

अन्ये राजानो भुवं करादानादभ्यवहरन्ति वर्णनीयस्तु पालयति 'भुजोऽनवन' इत्यात्मनेपदविधानात्। एवं राजवत्योऽन्येषां प्रजाः वर्णनीयस्य तु राजन्वत्यः। 'राजन्वान् सौराज्ये' इति सूत्रितत्वात्। इत्थं च—

**यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु।**
**वाक्ये संघटनायां च प्रबन्धेऽपि स दीप्यते॥** ध्व. ३.२॥

## सम्प्रदायप्रकाशिनी

तरुणिमनीति। कलाम् एकदेशम्। किञ्चित् तरुणीभवतीत्यर्थः। अग्र इति। पाठक्रियायामग्रे क(र्मणि ? र्तरि) मदनधनुस्सकाशाद् भ्रूप्रान्तयोर्वक्रिमाणमभ्यस्यतीत्यर्थः।

कर्मभूताधारस्येति। 'उपान्वध्याङ्'—(१.४.४८) इत्यादिना कर्मतां नीतस्याधिकरणस्येत्यर्थः। नन्वेषां त्वादिभ्यः को विशेष इत्यत आह—तरुणत्व इतीत्यादि। कश्चिदिति। निर्वक्तुमशक्यः सहृदयैकसंवेद्यः स एवातिशयो व्यञ्जकत्वं (प्राप्नोतीत्यर्थः) अथावसरप्राप्तोऽप्यर्थः प्रस्तावान्तर उपयोक्ष्यत इत्याह।

## मधुमती

तरुणिमनीति। अत्र भ्रुवोः अग्रे पठति सतीत्यर्थः। कलां इति एकमेव पदं कलयति पठति इत्युभयत्रापि आवृत्त्या अन्वेति। अत्रेति। 'रचनावर्णेष्वपि' इति श्रवणात् अत्रापि इमनिचा बन्धसौकुमार्यपरेण नवोद्भिद्यमानं वयः प्रतीयते। त्वप्रत्ययेन तु बन्धस्य गाढतया प्रौढम्। अव्ययीभावेन तु धनुषः नित्योपसर्जनताप्रतीत्या तद्वैलक्षण्यं भ्रुवोः व्यज्यते। मदनधनुषः समीपद्रव्याभिधाने तु धनुषः इति पञ्चमीभ्रमे 'धनुषः एव पठती' त्यर्थप्राप्तौ धनुषो गुरुत्वस्य शाब्दत्वत्। एवं च अभिधानेन व्यञ्जनागम्यमिति चमत्कारः। एवं 'मौलौ वसति' इति ।आधारतामात्रं प्रतीयते। मौलिं अधिवसति इति कर्मभूताधारनिर्देशे तु सर्वव्यापित्वं व्यज्यते। यद्यपि—'मौलौ वसति' इत्यत्रापि अभिव्यापकाधाराश्रयणे प्रकृतार्थलाभः भवत्येव। तथापि औपश्लेषिकाधारसम्भवेन द्राक् न तथा प्रतीयेत। कर्मभूताधाराभिधाने तु झटित्येव तथा प्रतीतिरिति। अतएव चमत्कारकारी इत्युक्तम्।

## विस्तारिका

तरुणिमनीत्यादि। कलामुपचयम्। भ्रूवोरग्रे पठति सति।

अत्रेति। स्वरूपस्य त्वादिभिस्तुल्यत्व इत्यन्वयः। तुल्यत्वं भावानुविधायित्वाविशेषात्। क्व विशेष इत्याह—एषां वाचकत्व इति। एषामिमनिजादीनां त्वादीनाञ्च वाचकत्वं प्रत्यायनम्। तत्र [यत्र] स्वरूपस्य विशेषोऽस्ति, तत्र साक्षिणमाद्रियते। यश्चमत्कारेत्यादि। चमत्कार एव तत्र मानमित्यर्थः। इमनिचा प्रत्याय्यमाने यौवने सौकुमार्यं प्रतीयते, न त श्रुतिकटुना त्वप्रत्ययेनेत्यनुभवसाक्षिकप्रतीत्योर्भेदः। एवं पूर्वपदार्थप्रधानेनाव्ययी-

भावेन मदनधनुष उपलक्षणभावं प्रकाशयता भ्रूलताऽग्रस्य जगद्वशीकरणं प्रकाश्यते। **मौलिमिति कर्मत्वेन** व्याप्तिसूचनम्। आधारत्वे ह्येकदेशवृत्तिता स्यादित्याह—विशेष इति।

नन्वेवमिमनिजादीनां माधुर्यादिव्यञ्जकत्वमुक्तं स्यात्। ततश्च वर्णादिव्यञ्जकत्वा**विशेषापत्तिरित्याह**— वर्णरचनानामित्यादि। गुणस्वरूपेत्यादि। माधुर्यादयः साक्षात्सम्बन्धेन रसेषु, व्यङ्ग्यव्यञ्जकभावे, **न तु वर्णादाविति** वक्ष्यमाणवचनेन वर्णादेर्गुणेषु व्यञ्जकत्वम्, अत्र तु प्रत्ययादिजन्यप्रतीतिस्वरूपाणां **स्वस्वविषयनिष्ठमपि दर्शितम्**। तत्तद्विशेषेष्विति परस्परभेद इति भावः। तदाह—उदाहरिष्यत इति। गुणव्यञ्जकत्वज्ञानस्य **गुणज्ञानाधीनत्वादि**त्यर्थः। 'तुल्य' इति पाठो न समीचीनः, वर्णादिव्यञ्जकत्वाविशेषापत्तेरिति। अपीत्यादि। **कविविवक्षितेति** वृत्तप्रत्यायकं वाक्यं प्रबन्धः। पञ्चसन्धिसमन्वितं पञ्चादिदशपर्यन्ताङ्कं ख्यातवृत्तकं काव्यं नाटकम्। आदिपदान् प्रकरणादिपरिग्रहः। तेषां रसं प्रति व्यञ्जकता। तदुक्तम्—

**एक एव भवेदङ्गी शृङ्गारो वीर एव वा।**
**अङ्गमन्ये रसाः सर्वे कार्यनिर्वहणोऽद्भुत्तम्॥** इति।

निर्वहणं समापनम्।

### काव्यप्रदीपः

**'तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।**
**अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना॥'**

अत्र तरुणिमनीति इमनिचस्तरुणत्वपदेन, अनुमदनधनुरित्यव्ययीभावस्य धनुःसमीप इत्यनेन, मौलिमधिवसतीति कर्मभूताधारस्य मौलौ वसतीत्यनेन तुल्यत्वेऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकः। तत्र त्वशब्देन प्रकृत्यर्थस्य प्रौढत्वं व्यज्यते। इमनिचा तु तद्व्यतिरेको नवत्वम्। धनुषः समीप इत्यत्र धनुषोऽत्यन्तं गुणीभावः। अव्ययीभावे तु पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थस्य किंचिदेवाप्राधान्यम्। कर्मभूताधारस्थले तु व्याप्तिरवगम्यत इत्यवसेयम्।

### आदर्शः

विदग्धप्रयोज्यस्वरूपविशेषरूपपदैकदेशस्यापि व्यञ्जकत्वमाह—तरुणिमनीति। तरुणिमनि तारुण्ये कलां चातुरीं कलयति प्रकाशयति सति तथा भ्रुवोरग्रे कर्त्तरि अनुमदनधनुः मदनधनुषः समीपे स्वयमेव कलां पठति सति सकलललनामौलिमियमधिवसति सकलनारीमूर्द्धन्या भवतीत्यर्थः। अत्रेति। तरुणिमनीत्यत्र इमनिच्, अनुमदनेत्यत्राव्ययीभावः, मौलिमधिवसतीत्यत्र कर्मभूताधारस्य मौलेः तद्बोधकशब्दस्येत्यर्थः। एषां स्वरूपस्येत्यर्थः। एषां स्वरूपस्य विदग्धविशेषप्रयोज्यगाढसंस्कृतरूपत्वात् तदपि रसोत्कर्षव्यञ्जकमित्यर्थः। अत्र च अव्ययीभावस्य रचनारूपत्वमन्यद्द्वयस्य पदैकदेशत्वम्, तत्समानार्थकमगाढसंस्कृतस्वरूपन्तु न तद्व्यञ्जकमित्याह—तरुणत्व इतीति। 'त्वादिभिः' त्वप्रत्ययादिभिः। अस्ति कश्चिदिति अनुभवैकगम्यो न विशिष्य वक्तुं शक्य इत्यर्थः।

**चक्रवर्ती** तु:—अत्र कोमलवर्णस्वरूपमेव स्वरूपविशेष इति व्याचष्टे, तन्न; तदा वर्णानामेव व्यञ्जकतापत्तेः, तस्य चानुपदमेव वक्ष्यमाणत्वात्।

## सुधासागरः

बहुव्यञ्जकत्वमन्यत्रापि दर्शयति—'तरुणिमनी' ति।

गीतिश्छन्दः। लक्षणमुक्तं प्राक्। चकितहरिणचलनयना त्रस्तभृगचञ्चलनेत्रा। इयं किशोरी तरुणिमनि अभिनवयौवने कलामुपचयं कलयत्युपगच्छति सति भ्रुवोरग्रे भ्रूलताग्रे शिष्यभूते अनुमदनधनुः 'मदनधनुषः कामचापस्य गुरुभूतस्य समीपे पठति सति सकलललनामौलिमधिवसति। 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम्। सर्वसुन्दरीशिरसि तिष्ठति, स्त्रीमात्रचूडामणित्वं प्राप्नोतीत्यर्थः।

अत्र तरुणिमनीति इमनिचस्तरुणत्वपदेन, अनुमदनधनुरित्यव्ययीभावस्य धनुःसमीप इत्यनेन, मौलिमधिवसतीति कर्मीभूताधारस्य च मौलौ वसतीत्यनेन तौल्येऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकः। तत्र त्वशब्देन प्रकृत्यर्थस्य प्रौढत्वं व्यज्यते। इमनिचा तु तद्व्यतिरेकान्नवत्वम्, धनुःसमीप इत्यत्र धनुषोऽत्यन्तं गुणीभावः, अव्ययीभावे तु पूर्वपदार्थस्य प्राधान्येऽप्युत्तरपदार्थस्य किञ्चिदेवाप्राधान्यम्, कर्मभूताधारस्थले तु व्याप्तिरवगम्यते। आधारत्वं तु एकदेशवृत्तितयाऽपि सम्भवतीत्यवसेयम्।

## विवरणम्

चित्रप्रबन्धादिरिव कुत्रचित् प्रत्ययादिस्वरूप एकदेशः कवयितुर्व्युत्पत्तिप्रकर्षमभिव्यज्य तद्विषयिणीं रतिमभिव्यञ्जयतीत्याशयेनोदाहरति—तरुणिमनीत्यादि। तरुणिमनि कलां कलयति जनयति सति, भ्रुवोरग्रे अनुमदनधनुस्तत्समीपे पठति, भ्रुवोरग्रे मदनधनुरन्तेवासिनीति यावत्। अत्रेति। इमनिच् प्रत्ययः, अव्ययीभावस्यैकदेशः समीपार्थोऽनुशब्दः, कर्मभूताधार आधारबोधकः कर्मप्रत्ययः, एषां स्वरूपस्य कविविषयकरतिभावो व्यङ्ग्य इति शेषः।

तत्र वाक्यार्थवैलक्षण्यस्य व्यञ्जकत्वमसम्भवीति शब्दनिष्ठो विशेष एवं व्यञ्जक इत्याह—तरुणत्व इत्यादि। विशेषो लोकप्रसिद्धात् तलादिप्रत्ययाच्छास्त्रपरिशीलनैक समधिगम्यत्वस्वरूपः।

**एवमन्येषामपि बोद्धव्यम्।**

वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते। अपिशब्दात् प्रबन्धेषु नाटकादिषु।

एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः।

**(सू. ६२) भेदास्तदेकपञ्चाशत्**

व्याख्याताः॥

**(सू. ६३) तेषां चान्योन्ययोजने॥ ४३॥**

**संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया।**

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन संकरेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने।

**(सू. ६४) वेदखाब्धिवियच्चन्द्राः (१०४०४)**

शुद्धभेदैः सह

**(सू. ६५) शरेषुयुगखेन्दवः (१०४५५) ॥ ४४॥**

तत्र दिङ्मात्रमुदाह्रियते।

**खणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ।**

**रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई॥ १११॥**

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोगे, एव व्यङ्ग्ये व्यञ्जकः, इति संदेहः।

## सङ्केतः

वर्णेति । आसां साक्षात् माधुर्यादिगुणव्यञ्जकत्वमेव, तद्द्वारेण तु रसेषु उपयोगः ।

भेदाभ्यामिति । पूर्वोक्ताभ्यां वाक्यपदप्रकाश्याभ्यामित्यर्थः ।

तेषामिति । प्रत्येकमिति शेषः । स्वप्रभेदैरिति । स्वस्य प्रभेदैः इति, स्वेन च प्रभेदैः इति वा अर्थः । अयं भावः—शुद्धभेदानां मध्यात् केनापि इष्टभेदस्य शेषैः पञ्चाशद्भेदैः स्वेन च यदा योगः, तदा मौलिक्यभेदात् भिन्नाः एकपञ्चाशद्भेदाः स्युः । परं एकयोगे कल्पनेयम् । न द्विकादियोगे । क्वचिद्व्यभिचारात् । एवं अन्यभेदेष्वपि ज्ञेयम् । तत् सिद्धमेतत्—एकपञ्चाशन्मूलभेदानां प्रत्येकं स्वव्यतिरिक्ताः एकपञ्चाशद्भेदाः स्युः इति ।

छणेति । पडोहरं पश्चादोकस्तटम्, तत्र यत् वलभीयुक्तं गृहं, तत्र । 'पलहीहरम्मि' इति पाठे, पलही—कार्पासः, तस्य भरः । तथा च कार्पासतरुवने इत्यर्थः । यद्वा वलहीशब्दोऽपि कार्पासार्थः । 'पुरोहर' इति वा पाठः । तत्र पुरोहरं—पच्छोकडं इति सातवाहनः । विषमं इत्यन्ये । इतरे तु 'पलहियं' इति यस्य प्रसिद्धिः तं तदर्थमाहुः ।

अत्रेति । अत्र विदितप्राघुणिकासक्तपतिवृत्तान्तपत्नीगिरा रोदनात् प्रस्तावादेव अनुनये लब्धे, अनुनीयतां इति अनुपयुज्यमानत्वात् बाधितार्थं, असत्यनुनयस्य अनौचित्याद्वा बाधितार्थं, स्वविषयभूतार्थविषयत्वे योगे सति उपभोगरूपं अर्थान्तरं लक्षयत् ईर्ष्योत्पादनादिकं ध्वनयति । इयं शुद्धा साध्यवसाना लक्षणा । किमनुरणनेति । किं अनुनयः स्ववाच्यं वदन्नेव सुभगशब्दात् लब्धावकाशं उपभोगं व्यनक्ति इत्यर्थः । अयं पदप्रकाश्यः अर्थशक्तिमूलः ध्वनिः । अत्र द्वयोरपि व्यङ्ग्यभेदयोः सम्भवात्, एकस्य कस्यापि अनिश्चितत्वे संशयास्पदत्वेन सङ्करः ।

## सङ्केतः (रुय्यकः)

**क्षणप्राघुणिका देवरजायया सुभग किमपि ते भणिता ।**
**रोदिति शून्यवलभीगृहे अनुनीयतां वराकी ॥**

क्षण उत्सवः । प्राहूता उत्सवे निमन्त्र्याहूता ।

## इति चतुर्थ उल्लासः

## बालचित्तानुरञ्जनी

इमनिजादीनां स्वरूपेण विभावादिद्वारा तथा पारम्पर्येण व्यज्यत इत्यर्थः उक्तप्रकारेणान्येषामपि पदैकदेशादीनां व्यञ्जकत्वमुदाहार्यमित्याह एवमिति । पूर्वगणितेषु भेदेषु पदवाक्यप्रकाश्यौ, ताभ्यां पदैकदेशद्योत्यः रचनाद्योत्यः वर्णद्योत्यः प्रबनदद्योत्य पदद्योत्यो वाक्यद्योत्यश्चेति षड्भेदा इत्यर्थः ।

मिलित्वा कियन्तो भवन्तीत्यत आह भेदा इति । वाक्ये अर्थान्तरसंक्रमितवाच्यादयोऽष्टादश । पदे च सप्तदश, प्रबन्धे चार्थशक्तिभूः द्वादश रसादीनाञ्च पदैकदेशरचनावर्णप्रकाश्यत्वेन चत्वार इति सर्वं सङ्कलने एकपञ्चाशद् भेदाः इत्यर्थः । वाक्यं पूरयति व्याख्याता इति । ध्वनेर्मिश्रभेदमाह तेषामिति । तेषाम् एकपञ्चाशत्—संख्याकानां शुद्धानां स्वभेदैरेकपञ्चाशद्भेदैरेकपञ्चाशता गुणने एकाधिकषड्विंशतिशतानि भेदा भवन्ति । तत्र योजनं प्रकारः । अर्थान्तरसङ्क्रमितवाच्येनेतरेषां भेदानां योजनेऽर्थान्तरसङ्क्रमितवाच्यस्यैकपञ्चाशद्भेदाः । एवं

शुद्धभेदानत्रोक्त्वाऽपरानपि भेदान् संकरसंसृष्टिभ्यामाह संकरेणेति । सूत्रं व्याकरोति न केवलमिति । त्रिरूपेणेत्येतद्व्याकरोति संशयेति । को मुख्यः को वा गौण इति संशयः । अनुग्राह्यानुग्राहकता अङ्गाङ्गिभावः । अङ्गी प्रधानम् । अङ्गमप्रधानम् । व्यञ्जकः शब्दः । तत्र एकव्यञ्जकानुप्रवेशः । एकेनैव पदादिना युगपत् द्वयं प्रतिपत्तिः । एकरूपयेत्येतद्व्यकरोति परस्परेति । सङ्करस्त्रिरूपः । संसृष्टिरेकरूपः एवमेकाधिकषट्त्रिंशत् शतानि चतुर्भिर्गुणने परस्परयोजनेऽपि अन्ये भेदा भवन्तीत्यर्थः । एतेषां संख्यानां भेदानाह वेदेति । वेदाश्चत्वारः खं शून्यं बिन्दुः, अब्धयश्चत्वारः, वियत् शून्यं बिन्दुः, चन्द्र एकः एवमङ्कः कर्तव्यः (१०४०४)

एकमयुतं चतुरधिकचतुःशती चेति । एतेषामेव शुद्धभेदैः सह मेलने संख्यामाह शुद्धेति । शराः पञ्च, इषवः पञ्च, युगानि चत्वारि, खं शून्यं इन्दुरेकः एवमङ्कः कर्तव्यः (१०४५५) एकमयुतपञ्चपञ्चाशदधिका चतुःशतीति भावः । सङ्करादाह तत्रेति । संशयास्पदत्वेन ध्वनिद्वयसङ्कीर्णस्योदाहरणमाह खणेति । सुहअ शुभे, देअर हे देवर ! जाआए जायायाः, किंपि किमपि भणिअ भणिता सती, खणपाहुणिआ खणे उत्सवे, पाहुणिका निमन्त्र्याहूता पडोहरवलहीधरम्मि गृहपश्चाद्भागी रुअइ रोदिति । वराई वराकी, साअणुणिज्जहु अनुनीता । संशयमत्र दर्शयति अत्रेति । स्वभार्यावचनेन रोदनानुनयकरणे सिद्धेऽपि अनुनीयतामित्येतत् मुख्यार्थस्य बाधे सति स्वविपर्ययीभूतार्थविषये संबन्धे सति उपभोगलक्षणमर्थान्तरं लक्षयन् सन्तोषेत्यादिनाभिव्यनक्ति । किं वा स्वार्थमभिधत्ते । 'देव' 'सुभग' शब्देन दत्तावकाशमुपभोगं व्यनक्ति इत्यर्थान्तरसङ्क्रमितवाच्यविवक्षितान्य पर वाच्ययोरन्यतरनिर्णायकाभावात् सन्देहास्पदत्वेन सङ्कर इत्यर्थः ।

### काव्यादर्शः

एवमिति । यथा 'न्यक्कारो ह्ययमेव मे यदरयः' इति बहुवचनं शत्रुशत्रुमद्भावो ममानुचित इति संबन्धानौचित्यं क्रोधविभावं व्यनक्ति । तपो विद्यते यस्येति पौरुषकथाहीनत्वं तद्धितेन मत्वर्थीये नाभिव्यक्तम् । तत्र अपि—शब्देन निपातसमुदायेन तापसस्य सतः शत्रुताया अत्यन्तासंभाव्यमानत्वं व्यज्यत इत्यादि । सर्व एवांशो व्यञ्जकः । अशब्दात्मकनेत्रत्रिभागादीनामपि व्यञ्जकत्वम् । यथा—

**'व्रीडायोगान्नतवदनया संनिदाने गुरूणां**
**बद्धोत्कम्पस्तनकलशयोर्मन्युमन्तर्नियम्य ।**
**तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्प-**
**मव्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥'**

अत्र प्रवासविप्रलम्भोद्दीपनं त्रिभागादिशब्दसंनिधौ स्फुटं भातीति । वर्णरचनानामिति । तत्र संघटनाप्रकाशासंलक्ष्यव्यङ्ग्यो यथा 'चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य' इति । अत्र दीर्घसमासा संघटना कर्णसरणिमागतैव दीप्तं रसं रौद्रं व्यनक्ति । यद्यप्यत्र वर्णवाक्यादेरपि रौद्रव्यञ्जकता तथापि संघटनापि भवत्येव व्यञ्जिकेति कार्योदाहरणमेतद्, न नियमोदाहरणम् । साक्षाद् माधुर्यादयो रसधर्मा ये गुणास्तदव्यञ्जकत्वमेव । तद्द्वारेण तु रसस्योत्कर्ष इति वक्ष्यते । प्रबन्धेष्विति । यथायथं प्रतिपिपादयिषितरसभावाद्यपेक्षया विभावानुभावव्यभिचार्यौचित्यचारुणः कथाशरीरस्थ विधिः प्रबन्धेरसादिव्यञ्जकत्वेन निबन्धनम् ।

शृङ्गारवर्णनेप्सुना हि तादृशी कथा संश्रयणीया यस्यां ऋतुमाल्यादेर्विभावस्य लीलादेरनुभावस्य हर्षधृत्यादेः संचारिणः स्फुट एव सद्भावः। तत्रेति वृत्ते। यदि रसाननुगुणां स्थितिं पश्येत् तदा तां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेद्, न हीतिहासवशादेव निबद्धव्यं, तत एव तत्सिद्धेः। यदुक्तम्—

**कथाशरीरमुत्पाद्य वस्तु कार्यं तथा तथा।**
**यथा रसमयं सर्वमेव तत् प्रतिभाष [स] ते॥**

संधीनां च मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्यानां तदङ्गानां चोपक्षेपपरिकरन्यासावलोकनादीनां घटनं रसादिव्यक्त्यपेक्षया, यथा रत्नावल्यां धीरललितनायकस्य धर्माद्यविरुद्धसंभोगसेवायामनौचित्याभावाद् राज्यफलानुबन्धिकन्यालाभफलोद्देशेन प्रस्तावनोपक्रमे पञ्चापि संधयोऽवस्थापञ्चकसहिताः समुचितसंध्यङ्गपरिपूर्णा अर्थप्रकृतियुक्ता दर्शिता एव, न तु केवलया शास्त्रस्थितिसंपादनेच्छया। यथा वेणीसंहारे 'समीहा रतिभोगार्थं विलासः परिकीर्तितः' इति विलासाख्यस्य प्रतिमुखसंध्यङ्गस्य प्रकृतवीररसबन्धाननुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम्। उद्दीपनप्रशमने च प्रबन्धे व्यञ्चके, यथावसरमन्तरा रसस्य। उद्दीपनं विभावादिपूरणया, यथा 'अयं सो राया उदयनो' इति सागरिकायाः। प्रशमनं वासवदत्तातः पलायने। पुनरुद्दीपनं चित्रफलकोल्लेखे। प्रशमनं सुसंगताप्रवेश इत्यादि। अनवसरपरिमृदितो हि रसः कुसुमवत् झगिति म्लानिमेति, विशेषतस्तु शृङ्गारः। एवं रसादीनामिति। रसभावतदाभासभावशान्त्यादीनां पदैकदेशरचनावर्णप्रबन्धेषु व्यङ्ग्यत्वाच्चत्वारो भेदाः। पूर्वगणिताभ्यां तु वाक्यपदप्रकाशलक्षणाभ्यां षड् वाक्ये पदे च रसादय इत्युक्तम्।

एकपञ्चाशदिति। वाक्येऽर्थान्तरसंक्रमितवाच्यादयो अष्टादश, पदे सप्तदश, प्रबन्धे चार्थशक्तिमूला द्वादश। रसादीनां तु पदांशरचनावर्णप्रबन्धप्रकाश्यत्वाच्चत्वारः। सर्वमीलने शुद्धा एकपञ्चाशद् ध्वनिभेदाः। तत्र लक्ष्ये ध्वनिर्भवन्ने काकी वा भवति स्वप्रभेदैः संसृष्टो वा स्वप्रभेदैः संकीर्णो वेत्याह—तेषां चेति। स्वप्रभेदैरिति। एकपञ्चाशतां शुद्धानां स्वप्रभेदैरेकपञ्चाशता गुणने जातानि षड्विंशतिशतान्येकाधिकानि २६०१। तेषां पुनरपि ससंदेहत्वेनाङ्गाङ्गिभावेनैकवाचकानुप्रवेशेनेति त्रिधा संकरेण संसृष्टया चैकविधयेति चतुर्भिर्गुणनम्। शुद्धा भेदैरित्येकपञ्चाशता। तत्र स्वप्रभेदद्वयसंकीर्णः संशयास्पदत्वेन। यथा 'छणपाहुणिय' इति। क्षण इत्युत्सवः। तत्र निमन्त्र्याहूता। 'हे देवर, एषा ते जायया किमपि भणिता रोदिति शून्यवलभीगृहे। अनुनीयतां वराकी। सा तावद्देवरानुरक्ता तज्जायया विदितवृत्तान्तया किमप्युक्तेति उभयतः कलहयितुं भ्रातृजायाया एषा उक्तिः॥ अनुनय इति। 'एकान्तोचितेन संभोगेन परितोष्यताम्' इत्येवंरूपेऽर्थान्तरे वाच्यस्य संक्रमणम्। असाध्व्यां चानुनयस्यानुपयोगाद् मुख्यार्थबाधः। यदि वा 'त्वं तावदस्यामेवानुरक्तः' इतीर्ष्याकोपतात्पर्याद् अनुनयनमन्यपरं विवक्षितम्। अनुनयशब्दार्थो हि घण्टाघातायते। उपभोगश्चानुरणनायते। उभयथा च स्वाभिप्रायप्रकाशनादेकतरनिश्चये साधकबाधकप्रमाण [णा] भावाद् अर्थान्तरसंक्रमितवाच्यविवक्षितान्यपरवाच्ययोः संदेहेन संकरः। विवक्षितस्य हि स्वरूपस्थस्यैवान्यपरत्वम्। संक्रान्तिस्तु तस्यैव तद्रूपतापत्तिः।

## विवेकः

अभिक्षिप्ततया ग्रन्थगौरवं स्यादित्यभिप्रेत्य संक्षिपति एवमित्युपदर्शितदिगनुसारेण। तथाहि 'तटी तारं ताम्यती' त्यत्र (व.जी. १६७ पृः, ध्व. आ. लो. १६२ पृः) तटशब्दे पुंस्त्वनपुंसकत्वे अनादृत्य स्त्रीत्वमेव सहृदयाः

समाश्रयन्ते 'स्त्री[ति] नामापि मधुर' मिति (व.जी. १६७ पृ:) कृत्वा, कमलमिवेत्यादौ वक्तव्ये कमलायत इत्यादिकञ्च प्रयुज्यते।

इदानीमुद्देशानुसारेण वर्णरचनानां व्यञ्जकत्वमुदाहर्तुमर्हतीत्यत आह वर्णेति। नाटकादिषु नाटकनाटिकाऽऽदिभिरभिज्ञानशाकुन्तलरत्नावलीवासवदत्ता– प्रभृतिः [परामृष्टः]। अत्र ह्यसंलक्ष्यक्रमो रसादिध्वनिः स्पष्ट एव, साक्षाद्वर्णनिवेदितत्वेन विभावानुभावौचित्यचारुणः कथाशरीरस्योपनिबध्यमानत्वात्। यत्तु ध्वनिकृता 'यत्र साक्षाद्वर्णनिवेदितेभ्यो विभावनुभावव्यभिचारिभ्यः स्वतो रसादिप्रतीतिरव्यवधानेन सोऽलक्ष्यक्रमस्य ध्वनेर्विषय' (ध्व.आ वृ.) इत्युक्तं तन्मुनेर्मतस्याननुगुणं, यतो विभाववन्नैव व्यभिचारिणः साक्षाच्छब्दप्रतिपाद्याः किन्तु रसवत् स्थायिवच्च विभावादिसंयोगेनैव प्रकाश्या भावत्वात्, तदिदमासृष्टेः सहृदयैरनुन्मीलितपूर्वैरनर्घ्यनिर्माणे व्यग्रचेतसो ग्रन्थकर्तुर्विस्मृतं ग्रन्थान्तरैकदेशत्वादनवधानवशाच्चास्योद्घोषणमात्मन एव दूषणमित्युपेक्षणीयमेव। प्रबन्धस्य च रसादिव्यञ्जकत्वे पञ्च प्रकाराः समाम्नाताः।(ध्व.आ. ३ ।७ वृ.) प्रथमं कथापरीक्षा। तत्रापि कथाऽऽवापः, सन्धिसन्ध्यङ्गघटनासौष्ठवेन फलपर्यन्तताऽऽनयनं रसं प्रति जागरणं, तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति [च]। तत्र कथापरीक्षा विभावाद्यौचित्यचारुणः कथाशरीरस्योपनिबन्धः। तथाहि शृङ्गारवर्णनेप्सुना तादृशी कथाऽऽश्रयणीया यस्यामृतुमाल्यादेर्विभावस्य हर्षप्रीत्यादेः सञ्चारिणः स्फुट एव सद्भावः। तथेतिहासादिष्वपि कविना प्रबन्धं निबध्नता रसमयेन भवितव्यमिति स्वयं वोत्प्रेक्ष्य रसानुगुण्येन कथोन्नयनं विधेयम्। तद्यथा कालिदासेन रघुवंशेऽजादीनां राज्ञां विवाहवर्णनं नेतिहासनिरूपितम्, यथा वाऽभिज्ञानशाकुन्तले दुष्यन्तेनाश्रमे शकुन्तलया सह गान्धर्वविवाहे कृते तस्यामेव सगर्भायां गृहागतायां न मयेयं विवाहितेत्यपह्नवः कृत इत्यार्षे तथाविधस्य शृङ्गारस्य परं भङ्गकारणमिति स्वयमुत्प्रेक्ष्यात्रेयं शापविस्मृततद्विवाहादिका रसानुकूल्येन कथा योजिता। यथा वा उर्वशी पुत्रजन्मान्तरं पश्य त्वं, केनापि कार्यवशेन मम त्वया सह सङ्गमोऽभवदिति पुरूरवसा सह संवादं कृत्वा प्रयातेत्यार्षे, कालिदासेन तु विप्रलम्भशृङ्गारस्य परं विरागकारणमित्युत्प्रेक्ष्य विक्रमोर्वश्यामन्यथा कृतेति। एवमन्येष्वपि विरुद्धयोगाद्रसानुकूल्येन कविभिः कथायोजनं कृतमिति द्रष्टव्यम्। 'नहि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित् प्रयोजनम्। इतिहासादेव तत् सिद्धेः' (ध्व. आ. ३ ।१४ वृः)। हर-(हरि) विजये तु कान्ताऽनुनयाङ्गत्वेन पारिजातहरणादिनिरूपितमेवेति (ध्व. आ. लो. १४८ पृ:) कथाऽऽवापः। तथा नाटकादावाख्यायिकाऽऽदौ सर्गबन्धादौ च मुखप्रतिमुखगर्भविमर्षनिवर्हणाख्या अन्वर्थनामानः पञ्च सन्धयः प्रारम्भयत्नप्राप्त्याशानियताप्तिफलयोगरूपावस्थापञ्चकसहिता यथायोगमुपक्षेपपरिन्यासादिसन्ध्यङ्गपरिपूर्णबीजबिन्दुपताकाप्रकरीकार्यलक्षणार्थप्रकृतियुक्ता ये मुनिनोक्तास्तेषां यथावद्घटनमिति फलपर्यन्तनयनम्। तत्राधिकारिकस्येतिवृत्तस्य पञ्चसन्धित्वं परिपूर्णमेव कर्तव्यमिति नियमः। यथा रत्नावल्यां सचिवायत्तसिद्धेर्धीरललितस्य वत्सराजस्य चक्रवर्तित्वादिफलान्तरानुबन्धिकन्यालाभफलोद्देशेन प्रस्तावनोपक्रमो(मौ)। एवं सुभद्राहरणजानकीहरणादिषु तत्र तत्र द्रष्टव्यम्। प्रासङ्गिके त्वितिवृत्ते नायं नियमः। तदाह मुनिः—प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेदिति (ना.श. १९ ।१९) तथा यथाऽवसरमन्तराऽन्तरा रसस्योद्दीपनप्रशमने इति रसं प्रति जागरणम्। यथाऽत्रैवोद्दीपनम्, "अअं सो राआ उदअणो" इति (रत्ना. १ अ:)-सागरिकायाः प्रशमनं, वासवदत्तायाः पलायने पुनरुद्दीपनं, चित्रफलकोल्लेखने प्रशमनं, सुसङ्गताप्रवेश उद्दीपनमित्यादि। तथा रससमवधानेन विभावादिघटनामेव कुर्वन्नान्तरीयकतया यमासादयति कविः स एव रसमार्गेऽलङ्कारो मत इति रूपकादेरलङ्कारस्य निबन्धोऽलङ्कारौचित्यम् (ध्व. आ. २ ।१९-२० द्रः) यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ (अभि. श. १ ।२०) इयं हि शकुन्तलां प्रति प्रवृद्धाभिलाषस्य दुष्यन्तस्योक्तिः । 'हे मधुकर किंजातीयेयं शकुन्तलेत्येतत्तत्त्वमन्विष्यमाणा एव वयं हता आयासमात्रपात्रीभूताः । त्वमेव कृती यतः कदाऽस्याः कटाक्षेक्षणहेवाकिनीं तत्समयोचितवेपथुमतीं दृष्टिं चुम्बेयं, हठादनिच्छन्त्या अपि रतिसर्वस्वं वाऽधरं पिबेयं, कथमेषाऽस्मदभिप्रायव्यञ्जकं रहोवचनमाकर्णयेदिति यदस्माकं मनोराज्यपदवीमधिशेते तत्तवायत्रसिद्धम् । त्वं हि त्वत् सम्पर्कत्रासाच्चपलापाङ्गां । तदनुभाववेपथुमतीं दृष्टिमुत्पलधिया पुनः पुनः स्पृशसि, श्रवणावकाशपर्यन्तत्वाच्च नेत्रयोरुत्पलशङ्काऽनपगमात् कर्णान्तिकगतो मृदु रणसि, त्वद्दशनभयात् करं व्याधुन्वत्या वदनानिलसौरभाकृष्टो रतिसर्वस्वमधरमपि पिबसीति दृक्स्पर्शनाधरस्पर्शनकर्णोपान्तरणरणायितरूपभ्रमरस्वभाववर्णनात् स्वभावोक्तिरलङ्कारः प्रकृतस्याभिलाषशृङ्गारस्याङ्गत्त्वेनानुगुणतां भजमानः स्वयमेवापतित' (व.ज. १३पृ:; ध्व. आ. लो. ८९ पृ:) । इति । यमकदुष्करशब्दभङ्गश्लेषादयस्तु सम (रस) धाराऽतिरिक्तशब्दविशेषान्वेषणरूपप्रयत्नान्तरसाध्या इति रसाक्षिप्तस्य कवेर्मूलक्षतिकारिणां तेषां निवेशनमनौचित्यम् । 'यत्तु रसवन्ति कानिचित् कालिदासकृतानि रघुवंशे ऋतुवर्णने यमकानि दृश्यन्ते तत्रापि रसस्याङ्गता यमकादीनां स्वङ्गितैवेति' (ध्व. आ. लो. २ ।१६, २ ।१) ।

एवमिति पूर्वगणितभेदौ पदवाक्यप्रकाशरूपौ । भेदाभ्यां सहेति—यतश्च पूर्वपरिसंख्याताः पञ्चत्रिंशदर्थशक्लिमूलाः प्रबन्धमप्यनुवध्नन्तीति ते प्रबन्धप्रकाशकतया साक्षादलक्ष्यक्रमव्यङ्ग्या अपि पूर्वगणितानुप्रविष्टपदवाक्यप्रकाशरूपावपहाय भेदचतुष्टयपरिपुष्टाः । तदित्थं ध्वनेः प्रकाराः प्रथममेकपञ्चाशत् प्रकाशन्ते । तेषाञ्चान्योन्ययोजने "विन्यस्याधो गुण्य"— मित्युपक्रम्य "प्रत्युत्पन्नविधाने करणान्येतानि चत्वारी" ति दृशा एकपञ्चाशता गुणने षड्विंश [श] त्येकाधिका (२६०१) जायते । अस्याश्च संशयास्पदत्वादिमयसङ्करत्रयैकप्रकारसंसृष्टिरूपैः संयोगभेदैश्चतुर्भिर्गुणन एतावती संख्येत्याह वेदेत्यादि । वेदाश्चत्वारः, खं शून्यम्, अब्धिश्चत्वारः, वियत् शून्यं, चन्द्र एक इति । अङ्केष्वभ्यस्तकल्पनाया वैपरीत्यमिति तथा विन्यासः । अत्रापि शुद्धभेदैः पञ्चाशता [भेदैरेकपञ्चाशतो] योजने शराः पञ्च, इषवः पञ्च, युगानि चत्वारि, खं शून्यमिन्दुरेक इत्येवञ्च प्रमेयभेदः । [अयं] सर्वथा न प्रतिपादितो भवतीति चिन्त्यमेतत् । सजातीयभेदैः साकं सङ्कलितोदृङ्कनक्रमेण त्वमी ध्वनिप्रकारा रसदस्त्रशिखिक्ष्माः स्युः (१३२६) । तथाहि सङ्कलितस्य लक्षणं "सैकपदाहतपददलमेकादिचयेन भवति सङ्कलितम् ।" सैकं पदं ५२, तेनाहतं पदं २६५२, तस्य दलम् १३२६ । अथवा 'पदयुतपदवर्गदलं सङ्कलितम्' । तत्र 'सदृशद्विराशी घात' इत्यादि [ना] पदस्य वर्गः २६०१ समपदेन युतः २६५२, तस्य दलं १३२६ इत्याचार्यश्रीधरदर्शिन सङ्कलितम् । अन्यैरप्युक्तं यथा 'एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु । तयोरर्धेन संगुण्य ( ?समार्धेन समं गुण्य) मेतत् सङ्कलितं लघु ॥ एको राशिर्द्विधा ५१, ५१ एक एकाधिकः समः ५२, अस्यार्द्धम् २६, एकपञ्चाशत् षड्विंशत्या हता १३२६ ततः प्रागुदृङ्किते सङ्करसंसृष्टिभेदचतुष्टयेन गुणने वेदस्वानलसायकाः ५३०५ (५३०४) । अत्र शुद्धप्रकाराक्षेपे वाणेषुगुणपत्रिणः (५३५५) ।

स्वणेत्यादि । अत्र काचिदुत्सवागता कस्यचित् सानुरागा स्वसख्यास्तद् भ्रातृजायाया मुखेन वलभीगृहे दत्त सङ्केता । सा तु सखी तत्समागमार्थं भङ्ग्या देवरस्येदमाह—क्षणप्राधुणिका देवर जायया सुभग किमपि ते भणिता । रोदिति पडोहरे [पश्चात्स्थिते] शून्यवलभीगृहे अनुनीयतां वराकी । क्षण उत्सवे क्षिप्रञ्च प्राहूता

निमन्त्र्यानीता। अत्रानुनीयतामिति पदमनुनयलक्षणं स्वार्थमत्यजत् किं सम्भोगेनैकान्तोचितेन तोष्यतामित्यर्थान्तरे संक्रमितम्, अथवाऽनुनयलक्षणेत्यादि (अनुरणनन्यायेनेत्यादि)।

## दीपिका

एवमस्मदुक्तरीत्या [ऽन्येषा-] मुक्तव्यतिरिक्तानां प्रकृत्यादिरूपाणां कर्मप्रवचनीयानाञ्च व्यञ्जकत्वमाकरेषु स्वयं दृष्ट्वा बोद्धव्यमवधारणीयम्। वर्णरचनानां वर्णानां रचनानाञ्च। नाटकादिष्विति—वस्तुमात्रालङ्कृतिध्वनिषु न केवलमवान्तरमहावाक्यव्यङ्ग्यो रसादिः, किन्तु सर्वेष्वेव काव्यप्रबन्धेष्वयमेकोऽङ्गीकर्त्तव्यः, अन्यथा काव्यत्वस्यैव हानेरित्यर्थः।

पूर्वगणितभेदाभ्यां वाक्यपदप्रकाशरूपाभ्यां सह पदैकपदेश-रचनावर्णप्रकाशानाञ्चतुर्णां सङ्कलने भेदक्रमाः।

ननु माघे शिशुपालदूतोक्तौ सन्धौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते। उपमादिध्वनिरपि शब्दशक्तिमूलस्तथा सम्भाव्यते। तत्कथमेकपञ्चाशदेव भेदा इत्याह-व्याख्याता इति। विशेषेणोदाहृतिप्रदर्शनमुखेनाख्याता दर्शिताः। नत्वेतावन्त एवेति नियमिता इत्यर्थः, एकापञ्चशत्ता च पूर्वगणितपञ्चत्रिंशद्भेदेषु प्रबन्धव्यङ्ग्यद्वादशविधार्थशक्तिमूलस्य पदैकदेश-वर्ण-रचना-प्रबन्धव्यङ्ग्यत्वेन रसादिचातुर्विध्यस्य प्रवेशात्।

तेषां व्यङ्ग्यभेदानाम्। शुद्धा एवैकपञ्चाशत् केवलभेदा न भवन्तीति वृत्तियोजना। स्वस्वप्रभेदैर्ध्वनितया सजातीयभेदैः। परस्परनिरपेक्षेति भावप्रधाननिर्देशः। तद्रूपत्वादेकप्रकारतया। चतुरिति वारार्थे सुच्।

वेदेति—तथाहि 'विन्यस्याधो गुणन' मिति रीन्या एकपञ्चशतस्तावतैव गुणन एकाधिकषडविंशतिशती (२६०१)। संसृष्टौ तथैव। ततस्त्रिगुणसङ्करयोजने सत्येतावती संख्या—वेदाश्चत्वारः, खं शून्यम्, अब्धयश्चत्वारः वियत् शून्यं, चन्द्र एकः-अङ्कविन्यासे च वैलोम्यं संख्याशास्त्रप्रसिद्धम्। शुद्धभेदैरेकपञ्चाशता। शराः पञ्च, इषवोऽपि पञ्च, युगानि चत्वारि, खं शून्यम्, इन्दुरेकः। अयञ्च ग्रन्थो गुणीभूतव्यङ्ग्यादिसंयोगमाश्रित्य कथञ्चिन्नेयः। संसृष्टिसन्देहादौ पूर्वपूर्वसंयोगस्य उत्तरोत्तरभेदगणनाऽनुप्रवेशात् वक्ष्यमाणविरोधालङ्कारे भेदगणनावत्क्रमेणैकैकहान्या तावत्संख्यत्वविरहात्। वस्तुगत्या पुनरीदृशी पिण्डना—'सैकपदाहतपददलं सङ्कलित' मिति रीत्या सैकपदं द्वापञ्चशत्, तेनाहतं पदमेकपञ्चशत् तद्गुणने द्वन्द्वेषुरसद्वन्द्वा (२६५२) तस्य दलं रसद्वन्द्ववह्निचन्द्राः (१३२६)। संसृष्टिसङ्करयोजने चाब्धिगगनशिखिशराः (५३०४) शुद्धयोगे नु शरबाणग्निबाणाः (५३५५)।

यद्वा 'पदयुतपदवर्गदलं सङ्कलितम्'। पदवर्गश्चन्द्रव्योमर्तुद्वन्द्वाः (२६०१) समपदेन युता योऽश्विबाणर्तुद्वन्द्वाः (२६५२), तस्य दलं रसद्विगुणचन्द्राः (१३२६) संसृष्टौ।

**एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु।**
**अस्यैवार्द्धेन सङ्कल्यमेतत्सङ्कलितं लघु॥**

इति दिशा वा सम्पिण्डनम्। तथाहि चन्द्रबाणराशिं (५१) द्विधा स्थापयित्वा एकमेकाधिकं द्वन्द्वबाणं (५२) कृत्वा तस्यैवार्धेन रसद्वन्द्व(२६) संख्येन एकपञ्चाशतो गुणेन रसद्विगुणरजनिकराः (१३२६) संसृष्टौ अनयोश्च

पिण्डनयोः सङ्करयोगे प्राचीनैव संख्या। (?) तस्मा-(?) दत्र प्रकरणे श्रीधरसान्धिविग्रहिको गणनाऽऽदिकं निखिलमेव तत्त्वतो जानातीति तदुक्तिरेव लिख्यते।

दिश्यतेऽनयेति दिक्। दिगेव दिङ्मात्रं सजातीयप्रकाशकं स्वरूपमित्यर्थः।

छणपाहुणिआ क्षणायोत्सवाय निमन्त्र्यानीता। पडोहरवलहीघरम्मि पश्चात्प्रकोष्ठोपरिकुट्टमगर्भगृहे। अत्रानुनयमात्रेण विश्रामाभावाद् वक्त्रादिवैशिष्ट्यस्य झटिति प्रतीतौ स्वार्थमपरित्यजदेवानुनीयतामिति पदं तदुपपत्तय उपभोगलक्षणमर्थान्तरमालम्बत इति लक्षणामूलत्वम्। वक्त्रादिवैशिष्ट्यांननुसन्धाने तु प्रतीत्यपर्यवसानविरहान्न लक्षणाऽनुप्रवेश इत्यभिधामूलतेति केनचिदुच्येत। एवञ्च सन्देहः। वक्त्रादिविशेषस्य कदाचिदननुसन्धानं सर्वत्रैव (?) सुलभमित्यतिप्रसङ्गः। अत्रानुनीयतामित्यनोपभुज्यतामिति वक्तुर्विवक्षितं किंवा कोपनिवर्त्तनमात्रं चाटुकरणादीति सन्देहः। न चैकतरत्वे साधकं बाधकं वा प्रमाणमस्तीति रजनिराजोपरिभागे कुरङ्गकसद्भाववदनुच्छेद्य एवायं महान् सन्देहः।

## दर्पणः

एवमिति। उक्तप्रकारेणान्येषां प्रकृत्यादीनां कर्मप्रवचनीयादीनां च नायिकादिष्ववान्तरमहावाक्यव्यङ्ग्योऽसौ रसादिरपि तु सर्वेष्वेव दृश्यश्रव्यादिप्रबन्धेषु मुख्यतया व्यङ्ग्यो यः अन्यथा काव्यहानेरिति भावः।

पूर्वगणिताभ्यां पदवाक्यवृत्तित्वेन द्वाभ्यां पदाभ्याम्। तत् तस्माद्धेतोः। एकपञ्चाशिति। पूर्वगणिताष्टादशभेदानां मध्य उभयशक्त्युद्भवो वा वाक्यमात्रे अन्ये सप्तदश वाक्यपदेति पञ्चत्रिंशत्। अर्थशक्त्युद्भवा द्वादश प्रबन्धेऽपि। इति सप्तचत्वारिंशत्। असंलक्ष्यक्रमव्यङ्ग्यस्य च पदांशवृत्तित्वेनापि चातुर्विध्यमिति। व्याख्याता दर्शिताः। न त्वभावत एवेति नियमः। शब्दशक्त्युद्भवस्यापि दर्शितत्वात्। तेषामिति। अयमर्थः प्रथमभेदस्य। सजातीयविजातीयेन सह संकरसंसृष्टिभ्यां संमिश्रणे चत्वारो भेदाः। द्वितीयभेदेन सहैवं चत्वार इत्यष्टौ। तृतीयेन सह द्वादश। एवं प्रत्येकं चत्वार्यन्तिमभेदपर्यन्तमिश्रणे एकस्य भेदस्य चतुरधिकं भेदशतद्वयमिति। एकपञ्चाशतो भेदानां संभूय। वेदाश्चत्वारः। वियत् शून्यम्। एवं चाङ्कविन्यासवैलोम्यं संख्याशास्त्रप्रसिद्धत्वात् अयुतमेकशतचतुष्टयचत्वारो ध्वनिभेदा इत्यर्थः। शुद्धभेदैरेकपञ्चाशता सह च। शराः पञ्च, इषवः पञ्च। युगं चतुष्टयम्। खं शून्यम्। इन्दुरेकः। द्वितीयभेदस्य तु शतद्वयमेव। प्रथमभेदेन सहास्य भेदस्य योग्यता न संभवति। तथाहि। योऽसौ प्रथमभेदस्य संकरसंसृष्टिभ्यां द्वितीयभेदेन सहेति व्यवस्था। एवं हि द्वितीयतृतीयादिष्वन्तिमभेदस्य। एवं क्रमेण चत्वारश्चत्वारश्चत्वारतया भावनीयाः इति संभूयैषां व्यङ्ग्यानां एकपञ्चाशत् सिन्धु गगनसखिशरसंख्या भेदाः। सिंधुश्चत्वारः। गगनं शून्यम्। सखी त्रयः। शराः पञ्च एवं पञ्चसहस्राणि शतत्रयश्चत्वारश्च भेदाः शुद्धभेदैः सह पञ्चाशदधिका इति।

अस्य ग्रन्थकारस्यायमाशयः। एष्वेकपञ्चाशत् भेदेषु मध्ये प्रथमस्य द्वितीयस्य अन्तिमस्य वा यस्य प्रथमबुद्धिविषयत्वं तस्य प्रथमगणनीयत्वमिति सर्वेषां चतुरधिकशतपरिमिता भेदाः किमर्थं क्रमेण चत्वारश्चत्वारः पातनीया इति।

**इति महापात्रश्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे ध्वनिनिरूपणोनाम चतुर्थउल्लासः।**

## साहित्यचूडामणिः

इति ध्वनिदृशा पदैकदेशव्यञ्जकत्वमुक्तम् ।

रचनावर्णयोस्तु कथमित्यत्राह—वर्णेति । गुणनिरूपणस्य वर्णरचनाविचारव्यतिरेकेण कर्तुमशक्तयत्वादष्टम उल्लासे तत्प्रपञ्चनौचित्यम् । अथासाधारणानलक्ष्यक्रमभेदान् परिगणयति—एवमिति । पूर्वेति । पदवाक्यविषयाभ्याम् । षडिति । वर्णपदैकदेशपदवाक्यप्रबन्धसंघटनासु विद्यमानत्वात् ।

अथोक्तान् ध्वनिभेदानुपसंहरति—भेदा इति । पञ्चत्रिंशदनन्तरं प्रबन्धविषयस्य वाच्यशक्तिमूलस्य द्वादश पदैकदेशरचनावर्णप्रबन्धविषयतया रसादेर्भूयोऽपि चत्वार इति षोडश, आहत्यैकपञ्चाशत् ।

अथ सङ्करसंसृष्टि स्पष्टयति—तेषां चेति ।

सङ्करस्य त्रैरूप्यमाह—संशयेति । एकतरनिर्धारणे प्रमाणाभावात् सन्देहविषयतया, उपजीवकोपजीव्यत्वमनुग्राह्यानुग्राहकभावः, एकस्मिन्नसहाये व्यञ्जके कचिदुभयोर्ध्वन्योरनुप्रवेश इति त्रिविधः सङ्करः । ससृष्टिं व्याचष्टे—परस्परेति ।

सङ्करे हि सर्वत्र मिथः सापेक्षत्वं संसृष्टौ पुनरेवन्नास्ति, तस्मादेकप्रकारतेति चतुर्गुणने सति फलितां संख्या सङ्केतभाषयाह—वेदेति ।

एते हि सर्वे मिश्रभेदाः शुद्धभेदैः सह कियन्त इत्यत्राह—शरेति ।

दिङ्मात्रमिति । ग्रन्थगौरवप्रसङ्गात् ।

**उत्सवप्राभृतिका देवर ! जायया सुभग ! किमपि ते भाणितां ।**
**रोदिति निष्कुटवलभीगृहेऽनुनीयतां वराकी ॥**

इति उत्सवव्याजेन गृहानीतविपक्षपक्ष्मलाक्षीकं देवरमुद्दिश्य प्रजावत्याः परिहासोक्तिः । अनुनीयतामिति यो ध्वनिः स किमविवक्षितवाच्यभेदयोरर्थान्तरसंक्रमितवाच्यः, उत विवक्षितान्यपरवाच्यभेदेषु संलक्ष्यक्रमे वाच्यशक्तिमूले वस्तुना वस्तु ध्वन्यते, इतिः प्रकारे, इति संशयः । तत्र जायया किमपि भणितेति भणनस्योपालम्भरूपस्य, प्रजावतो कल्पनामात्रप्रवर्तितत्वे योग्यताभावेन मुख्यार्थभङ्गात् सामान्यविशेषभावात् सम्बन्धाद् रहस्यसंरक्षणलक्षणाच्च प्रयोजनादुपभोगरूपार्थान्तरसंक्रमणमनुनयस्य, अथानुरणरूपत्वमिति संशयः ।

## सम्प्रदायप्रकाशिनी

वर्णरचनानामित्यादि । अपिशब्देनोक्तसमुच्चयं दर्शयति—अपिशब्दादिति । रत्नावल्यादिना हि शृङ्गार एव । वेणीसंहरादिना वीर एव । पूर्वगणितभेदाभ्यामिति । पदवाक्यप्रकाश्यौ पूर्वभेदौ ।

अथ शुद्धभेदान् निगमयति—भेदास्तदिति । तथाहि—अविवक्षितवाच्यस्तावद् द्विरूपः अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति । विवक्षितान्यपरवाच्येषु असंलक्ष्यक्रम एकः, संलक्ष्यक्रमः शब्दशक्तिमूलो वस्तुरूपोऽलङ्काररूपश्चेति द्विधा, अर्थशक्तिमूलो द्वादशात्मकः, उभयशक्तिमूल एक इति वाक्यप्रकाश्या अष्टा-

दश। उभयशक्तिमूलमन्तरेणान्ये पदप्रकाश्याश्चेति पञ्चत्रिंशत्। अर्थशक्तिमूलः प्रबन्धप्रकाश्योऽपीति सप्तचत्वारिंशत्। रसादयस्तु पदैकदेशेन रचनया वर्णैः प्रबन्धेन च प्रकाश्यन्त इत्येकपञ्चाशच्छुद्धा भेदाः।

अथ मिश्रभेदविवेचनं—तेषां चान्योन्येत्यादि। त्रिरूपेण द्वयोर्ध्वन्योः सन्देहास्पदत्वमनुग्राह्यानुग्राहकभावः एकव्यञ्जकानुप्रवेशश्चेत्येवमात्मना सापेक्षत्वलक्षणेन सङ्करेण, परस्परनिरपेक्षत्वलक्षणयैकरूपया च संसृष्ट्या तेषां शुद्धभेदानामन्योन्ययोजनम्। कर्तव्यमिति शेषः।

तथा तु योजने कृते इयन्तो भेदा भवन्तीत्याह—वेदखाब्धीति। वेदाश्चत्वारः, खं शून्यम्, अब्धयश्चत्वारः, वियच्छून्यं, चन्द्र एक इति वैलोम्येन प्रस्तारक्रमः। अत्रायं योजनासंप्रदायः—अत्रार्थान्तरसंक्रमितवाच्योऽर्थान्तरसंक्रमितवाच्यान्तरेण त्रिधा संकीर्यते संसृज्यते चैकधा। एवमत्यन्ततिरस्कृतवाच्यादिभिः सर्वैरेव समं प्रत्येकं संकीर्यते संसृज्यते चेति चतुरुत्तरद्विशतभावमापद्यते। अनेनैव प्रकारेणात्यन्ततिरस्कृतवाच्यादिषु प्रत्येकमेकपञ्चाशता भेदैः सह सङ्करसंसृष्टिभ्यां चतुरुत्तरद्विशतभावमापद्यमानेषु वेदखाब्धिवियच्चन्द्राः चतुरुत्तरचतुश्शताधिका दशसाहस्रिका मिश्रभेदानां भवति।

शुद्धभेदैरेकपञ्चाशता सह।

शरेषुयुगखेन्दवः। शराः पञ्च, इषवश्च पञ्च, युगाश्चत्वारः, खं शून्यम्, इन्दुरेकः पञ्चपञ्चाशदुत्तरचतुश्शताधिका दशसहस्री।

मिश्रभेदानिमान् शुद्धभेदज्ञानेनैव सुज्ञातत्वादतिविततत्वाच्च दिङ्मात्रेणोदाहरति—खणपाहुणिएति।

**क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।**
**रोदिति गृहपश्चाद्भा (गे ?ग) वलभीगृहेऽनुनीयतां वराकी॥**

क्षण उत्सवः। प्राधुणिका उत्सवार्थमाहूता बन्धुः। क्षणप्राधुणिका तव जायया किमप्यनुचितमुक्ता गृहपश्चाद्भागे कार्पासनीरुजके (?) रोदिति तामिमामनुनयेत्यत्रानुनयो वक्तृबोद्धव्यपर्यालोचनयानुपयुज्यमानः सन् किमुपभोगे ऽर्थान्तिरे संक्रामति आहोस्विदनुरणनन्यायोदञ्चितेन व्यञ्जनव्यापारेणोपभोगमेव व्यनक्तीति साधकबाधकाभावात् सन्देहः। न च सन्देहो दोष इति मन्तव्यम्। शोभातिशयप्रतिपत्तये प्रतिभोत्थापितत्वात्। स्वरसा एव हि सन्देहभ्रान्त्यादयो दोषाः।

## मधुमती

अलक्षित क्रममधिकृत्याह—एवमिती।

पूर्वगणितभेदाभ्यां वाक्यपदरूपाभ्याम्। तथा च—वाक्य-पद-प्रबन्ध-पदैकदेश-रचना-वर्णात्मकव्यञ्जकभेदात् व्यङ्ग्यत्वेन षट्त्वं इत्यर्थः। एवं च वक्ष्यमाणैकपञ्चाशद्ध्वनिषु—षड् भेदाः वाच्यत्वासहस्य, पञ्चचत्वारिंशद्भेदाः वाच्यत्वसहस्य—इत्युक्तं भवति। न च—'भेद एको हि गण्यते' इत्यनेन विरोधः। व्यङ्ग्यभेदनिबन्धनभेदस्य विवक्षितत्वेन, व्यञ्जकभेदनिबन्धनभेदस्य तथात्वात, अविरोधात्। अत एव—शब्दव्यङ्ग्यत्वेन सर्वेषां ऐक्यात् भेदानुपपत्तिर्वा, रसत्वभावत्वाद्युपाधिभेदमादाय आधिक्यं वा स्यात्—इत्यनुयोगोऽपि स्वतन्त्रेच्छे शास्त्रकर्तरि निरवकाशः। अन्यथा पति भावोच्छेदापत्तेः इति दिक्।

उपसंहरति—भेदाः इति। पूर्वगणितपञ्चत्रिंशत्सङ्ख्याकेषु ध्वनिषु कतिपयकाव्यात्मकप्रबन्धगतार्थ-शक्त्युद्‌भवद्वादशविधध्वनि—पदैकदेश-रचना-वर्ण-नाटकादिगतरसादिध्वनिचतुष्टयमिलनात् एकपञ्चाशत्त्वं इत्यर्थः। यद्यपि—पदैकदेश-रचना-वर्ण-प्रबन्धव्यङ्ग्यानामपि पूर्वन्यायेन अनेकत्वात् नेदमुपपद्यते। तथापि पदैकदेशसमुत्थत्वादिना एकीकृत्य तथा अभिधानात् न दोषः। न च अर्थसमुत्थत्वादिनाऽपि एकीकरणे न्यूनताऽपत्तिः। स्वतन्त्रेच्छायाः नियोगपर्यनुयोगाविषयत्वात्।

तेषामिति। अर्थान्तरसङ्क्रमितवाच्यस्य, अस्यैव अत्यन्ततिरस्कृतवाच्येन, इत्येवं अग्रिमेणापीति एकपञ्चाशद्‌भेदाः। एवं प्रत्येकं तावन्त एव भेदाः। एतावता च द्वे सहस्रे एकोत्तरषट्छती (२६०१) भवति। अस्य चतुर्धा गुणनेन यत् समुत्पद्यते तदाह—वेदेति। वेदाः चत्वारः, खं शून्यम्, अब्धयः चत्वारः, वियत् शून्यम्, चन्द्रः एकः। प्रस्तारश्चास्य वैलोम्येनेति १०४०४ संख्याः। यद्यपि—अर्थान्तरसङ्क्रमितवाच्यस्य अत्यन्ततिरस्कृतवाच्येन सह योजनादेव अत्यन्ततिरस्कृतवाच्यस्य अर्थान्तरसङ्क्रमितवाच्येन योजनं गतार्थम्। एवं यथोत्तरं एकद्व्यादिहान्या एकसहस्रं षड्विंशत्यधिका च अष्टशती (१८२६) भवति। अस्य चतुर्धा गुणने वेदखाग्न्यर्क वाजिनः (७३०४) एव भवन्तीति नेयं गणना साध्वी। तथापि—विनिगमकाभावेन गुणप्रधानभावस्य नियन्तुमशक्यतया, उभयप्राधान्यमाश्रित्य गणनायाः साधुत्वमिति। स्वतन्त्रेच्छायाः नियन्तुं अशक्यत्वात्। अत एव—

"जातिः चतुर्भिः जात्याद्यैः विरुद्धः स्यात् गुणादिभिः।"

इति विरोधालङ्कारपरिगणनाऽविरोधः। एतन्न्यायेन तत्र षोडशत्वापत्तेः।

तेन च—तन्न्यायेन अत्र गणितन्यूनत्वापत्तिरित्यपि निरस्तम्। शराः—पञ्च, इषवः पञ्च, युगानि चत्वारि, खं बिन्दुः, इन्दुः एकः। तथा च १०४५५ संख्याः।

## विस्तारिका

एवमित्यादि। पूर्वगणिताभ्यां पदवाक्यप्रकाशाभ्याम्। षडिति पदवाक्यपदैकदेशवर्णरचनाप्रबन्धव्यङ्ग्यताभेदात्। 'अपि' शब्दस्यानुक्तसमुच्चितावुक्तविस्मृत्यापत्तिभयेन पूर्वगणिताभ्यामित्युक्तम्।

एकपञ्चाशदिति। पूर्वं गणिताः पञ्चत्रिंशत् प्रबन्धव्यङ्ग्याः। अर्थशक्त्युत्थत्वाद् अलक्ष्यक्रमस्य पदैकदेशरचनावर्णप्रबन्धव्यङ्ग्यत्वेन परे चत्वारो भेदा इति संवलनेनैकपञ्चाशत्। तदाह—व्याख्याता इति। पूर्वगणनोट्टङ्कनेनेत्यर्थः।

इमे शुद्धभेदाः। सङ्कीर्णभेदानाह—सङ्करेणेत्यादि। स्वप्रभेदैरेकपञ्चाशत्। सङ्करेण संसृष्ट्या चेत्यन्वयः। साधकबाधकप्रमाणाभावेन संशयास्पदत्वेन एकव्यञ्जकव्यङ्ग्यत्वेनैकव्यञ्जकानुप्रवेशः। उपकार्योपकारकत्वम [नु] ग्राह्यानुग्राहकता। परम्परापेक्षत्वं सङ्करः। तच्चोक्तरूपत्रये सुव्यक्तमेव। एकं विना परस्य तत्तद्रूपताविरहात् साधकप्रमाणैर्निश्चितानां पृथग् व्यञ्जकानुप्रविष्टानां स्वातन्त्र्येण विश्रान्तानामैकपद्याभिनिवेशः संसृष्टिः। तत्र नान्योन्यापेक्षणमित्याह—निरपेक्षयेति।

वेदेत्यादि। एकपञ्चाशतो ह्येकपञ्चाशद्गुणनेन विधिबिन्दुरसलोचनाः, तैर्वेदगुणितैर्मताः। वेदाश्चत्वारः, खबिन्दुरब्धयोऽपि चत्वारः। वियदपि बिन्दुःचन्द्र एकः। अङ्कशास्त्रे तथैव सङ्केतनात्। अङ्कानां व्युत्क्रमेण स्थाप-

नमित्यङ्कशास्त्रपरिभाषया चतुरधिकचतुःशत्युत्तरं दशसहस्रं भवति (१०४०४)। वस्तुतः पुनरियती न संख्या। तथा च पूर्वपूर्वमिश्रणेन गतार्थतया परपरमिश्राणामेकादिसंख्याह्रासाद् वेदखाग्निशराः। अत एव विरोधालङ्कारे जातिर्विरुद्धा जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः। क्रिया द्वाभ्याम्, अथ द्रव्यं द्रव्येणैवेति जातिगुणक्रियाद्रव्याणां विरोधे दशत्वस्याभिधानस्य मानता, अन्यथा प्रत्येकं चतुष्ट्वे षोडशत्वमेव स्यात्, गुणजात्योर्विरोधस्य जातिगुणविरोधानन्यत्वेन गुणविरोधानां त्रित्वात्। एवं क्रियाद्रव्यविरोधयोर्द्वित्वैकत्वे। एवञ्च प्रकृतेऽर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोः परेण सह पूर्वस्य यन् मिश्रणं पूर्वण सह परस्यापि तदेवेति दिशा व्यक्त एवोत्तरेषु संख्याक्रमः।

**क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।**
**रोदिति पश्चाद् भागवलभीगृहेऽनुनीयतां वराकी॥**

क्षणप्राघुणिका उत्सवातिथिः। पडोहरो गृहपश्चाद्भागः।

अत्रेति। अनुनीयतामुपभुज्यताम्, सा रोदनान्निवर्त्यतां वेति साधकबाधकप्रमाणविरहेण तात्पर्यसन्देहात् सन्देहः। एकस्यैवोपभोगस्योद्देश्यत्वेन सन्देहस्य न दोषता। रोदननिवर्तनेऽप्युपभोग एव तात्पर्यम्, किन्तु बाधविरहान्न लक्षणेत्याह—उपभोग एव व्यङ्ग्य इति।

## सारबोधिनी

एवमिति। पूर्वगणितभेदाभ्यां वाक्यपदप्रकाश्याभ्याम्। षडिति। वाक्यपदपदैकदेशवर्णरचनाप्रबन्धव्यङ्ग्यभेदात्।

एकपञ्चाशदिति पूर्वगणिताः। पंचत्रिंशत्। प्रबन्धव्यङ्ग्या अर्थशक्त्युद्भवा द्वादश। अलक्ष्यक्रमस्य पदैकदेशरचनावर्णप्रबन्धव्यङ्ग्यत्वेनापरे चत्वारो भेदास्तदेकतया एकपंचाशत्तदाह व्याख्याता इति। पूर्वगणनोट्टंकनेनेत्यर्थः। इमे शुद्धभेदाः। संकीर्णभेदानाह तेषामिति। वेदेत्यादि। एकपंचाशता ह्येकपंचाशद्गुणनात् विपु [दु ?] र्व्योमरसाः पक्षौ। तैर्वेदगुणितैर्मताः। वेदाश्चत्वारः। खं बिन्दुः। चन्द्र एकः। अंकशास्त्रे तथैव संकेतकरणात्। तेन चतुरधिकचतुःशत्युत्तरदशसहस्री भवति (१०४०४)। वस्तुतः पुनरियती संख्या न भवति। पूर्वपूर्वमिश्रणेन गतार्थतया परपरमिश्रणानामेकादिसंख्याह्रासात् वेदखाब्धि शराः स्युः (५४०४) अत एव विरोधालङ्कारे—

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणैस्त्रिभिः।**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश॥**

इति जातिगुणक्रियाद्रव्याणां विरोधे दशत्वस्याभिधास्यमानता। अन्यथा प्रत्येकं चतुष्टये षोडशैव स्युः। गुणजात्योर्विरोधस्य जातिगुणविरोधानन्यत्वेन गुणविरोधानां त्रित्वात्। एवं क्रियाद्रव्ययोर्विरोधयोर्द्वित्वैकत्वे एवं च प्रकृतेऽपि। अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्ययोः परेण सह पूर्वस्य यन्मिश्रणं, पूर्वेण सह परस्यापि तदेवेति दिशा व्यक्त एवोत्तरोत्तरेषु संख्याह्रासः।

खणेति।

**क्षणप्राधुणिका देवर जायया सुभग किमपि ते भणिता।**
**रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ॥**

क्षणप्राधुणिकी उत्सवातिथि: पडोहरशब्दो देशभाषायां गृहपश्चाद्भागवाची । सन्देह इति । अविवक्षितवाच्यविवक्षितान्यपरवाच्योरिति शेष: ।

**काव्यप्रदीपः**

एवमन्येषामपि बोद्धव्यम् ।

वर्णरचनयोर्व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते । प्रबन्धे तु नाटकादौ रसादिव्यञ्जकत्वं द्रष्टव्यम् ।

यत्तु—'पूर्वं प्रबन्धशब्देन संघटितावान्तरवाक्यसमूहोऽभिहित: । इदानीं तु संघटितमहावाक्यमित्यपौनरुक्त्यम् ।' इति कश्चिदाह । तदज्ञानात् । पूर्वं ह्यर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वम्, अत्र त्वसंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्याभावात् ।

**भेदास्तदेकपञ्चाशत्**

तथाहि—अविवक्षितवाच्यस्य द्वौ भेदौ । तौ च प्रत्येकं पदवाक्ययोरिति चत्वार: । विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्य: पदवाक्यतदेकदेशघटनावर्णप्रबन्धभेदेन षड्विध: । लक्ष्यक्रमेषु शब्दशक्तिमूलस्य द्वौ भेदौ । तौ च प्रत्येकं पदवाक्ययोरिति तस्य चत्वारो भेदा: । अर्थशक्तिमूलस्य द्वादश भेदा: । ते च प्रत्येकं पदवाक्यप्रबन्धेष्विति षट्त्रिंशदस्य भेदा: । उभयशक्तिमूलस्तु वाक्य एवेति ।

**तेषां चान्योन्ययोजनम् ॥ २० ॥**

**संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ।**

**वेदखाब्धिवियच्चन्द्राः**

संशयेनाङ्गिभावेनैकव्यञ्जकानुप्रवेशेन चेति त्रिविध: संकर: । उक्तप्रकारत्रयं विना संयोग: संसृष्टि: । एवमेकपञ्चाशतो भेदानामेकपञ्चाशता भेदैर्योजनमिति तावतां तावद्गुणनेन सहस्रद्वयमेकाधिका षट्शती च । संयोजनं च संसृष्टयादिचतु:प्रकारैरिति तावतां चतुर्भिर्गुणने दशसहस्राणि चतुरधिकानि चत्वारि शतानि च संपद्यन्ते ।

न चानुग्राह्यानुग्राहकभावेन संकरस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसंकरत्वमिति वाच्यम् । तत्र हि स्वतश्चमत्कारिण एव तस्य किंचित्परोपकारतामात्रम् । न तु शेषशेषिभाव एवेति । नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनम्, स्वस्य तु स्वेन कथं योजनेति चेत् । न । व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि संकरादिति सूत्रकर्तुराशय: ।

अत्रार्वाचीना:—"गणनेयमयुक्ता । अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात् । तथा हि—अर्थान्तरसंक्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेद: स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसंक्रमितवाच्येन योजनायाम् । एवमन्यत्रापि । तस्मात्

**'एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु।**
**समार्धेनासमो गुण्य एतत्संकलितं लघु ॥'**

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्। तथा च 'रसदस्राग्निमेदिन्यः' इति त्रयोदशशतानि षड्विंशत्यधिकानि जायन्ते। योगश्चतुःप्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' इति पञ्चसहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदा इत्येव ज्यायः" इति वदन्ति।

अत्र ब्रूमः—अनुभवसिद्धौ तावत्पुण्ड्रकादीक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानुशयौ। तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम्। यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः। एवमन्यत्राप्यूह्यम्। एतदेव प्राधान्यमादाय गणना सौत्री। नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति मैवम्। अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात् तत्रोभयभेदसंकरस्वीकारात्। एतादृशे चास्थाने पदालम्बनमात्रमेव महत्पौरुषमिति सहृदयभावमास्थायालोचनीयमिति।

शुद्धभेदैः सह

**शरेषुयुगखेन्दवः ॥ २१ ॥**

तेषु दिङ्मात्रमुदाह्रियते—

**'छणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिदा।**
**रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥'**

अत्रानुनयतेर्वाच्योऽनुनयः किमुपभोगत्वलक्षणे लक्ष्ये संक्रमितः, आहोस्विद्विवक्षित एवोपभोगस्य व्यञ्जक इत्यविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः संदेहः संकरः।

## काव्यप्रकाशखण्डनम्

एवं रचना-वर्णयोर्व्यञ्जकत्वं वक्ष्यते। एते शुद्धभेदाः। एवं एतेषां ध्वनीनां संशयास्पदत्वेन, अनुग्राह्यानुग्राहकतया, एकव्यञ्जकानुप्रवेशेन चेति त्रिरूपेण संकरेण, परस्परनिरपेक्षया चैकप्रकारया संसृष्ट्या एकत्र काव्ये संसर्गरूपया अन्योऽन्ययोजनम्। यथा—

**खणपाहुणिआ देअर जाआए (सुहअ) किं पि दे भणिआ।**

**रुअइ पलोहरवलहीघरम्मि अणुणिज्जइ वराई ॥**

**[ क्षणप्राघुणिका देवर जायया (सुभग) किमपि ते भणिता।**
**रोदिति पश्चाद्भागवलभीगृहे अनुनीयतां वराकी ॥]**

क्षणप्राघुणिका उत्सवातिथिः। पलोहरशब्दो देशभाषया गृहपश्चाद्वाची। अत्रानुनयः किं उपभोगलक्षणे अर्थान्तरे सङ्क्रमितः, किं अनुरणनन्यायेन उपभोग एव व्यङ्ग्ये व्यञ्जक इति संदेहः।

## आदर्शः

अपि-शब्दादिति वर्णेष्वपीत्यपि-शब्दादित्यर्थः। कुल्करूपमहावाक्यात्मकप्रबन्धव्यावर्त्तनाय—नाटकादिष्वति। आदिशब्दात् नाटिकापरिग्रहः। नाटकादिषु अन्तरा रसान्तरसम्भवेऽपि प्रबन्धव्यङ्ग्य एको रसः। एवं रसादीनामिति असंलक्ष्यक्रमत्वेन एकविधतया गणितानामित्यर्थः। पूर्वगणितेति पदवाक्यप्रकाश्यतया पञ्चत्रिंशन्मध्ये गणिताभ्यामित्यर्थः। षडिति पदैकदेशरचनावर्णप्रबन्धव्यङ्ग्यतया गणितचतुर्भेदमिलनेन षडित्यर्थः। एवञ्च पदवाक्यप्रकाश्यौ द्वौ पूर्वगणितौ विहायात्र गणिताः पदैकदेशादिव्यङ्ग्याश्चत्वार एव इति सिध्यति। तथा च पूर्वगणिताः पञ्चत्रिंशत्, कुलकरूपप्रबन्धव्यङ्ग्या अर्थशक्त्युद्भवा द्वादश पदैकदेशादिव्यङ्ग्याश्चत्वार इत्येकपञ्चाशत् ध्वनयो भवन्तीत्याह—भेदास्तदेकेति।

इत्थं शुद्धानेकपञ्चाशद्ध्वनीनुक्त्वा एतेषामन्योन्ययोजनमाह—तेषाञ्चान्योन्येति। योजनस्यैव प्रकारमाह—सङ्करेणेति। व्याचष्टे—न केवलमिति। अपि तु इत्यर्थे यावदिति। त्रिरूपं सङ्करं व्याचष्टे—संशयास्पदत्वेनेति। अयं ध्वनिरयं ध्वनिर्वेति संशयविषयत्वं तत्त्वम्; प्रकृष्यमाणत्वप्रकर्षकत्वम् अनुग्राह्यानुग्राहकभावः, एकेन व्यञ्जकेन उभयव्यञ्जनम् एकव्यञ्जकानुप्रवेशः, इति त्रिविधेन सङ्करेण एतत्त्रितय भिन्नरूपया परस्परनिरपेक्षत्वात्मिकया एकप्रकारया संसृष्ट्या चेत्यर्थः।

वेदखाब्धीति। अङ्कानां वामतः क्रम इति नियमेन वेदाश्चत्वारः (४) तद्वामे खं शून्यं (०४) तद्वामे अब्धयश्चत्वारः (४०४) तद्वामे वियत् शून्यं (०४०४) तद्वामे चन्द्र एकः (१०४०४) इत्यङ्काः। एवं चतुरधिकचतुःशतात्तरमेकमयुतं ध्वनय इत्युक्तम्। ननु एकपञ्चाशतश्चतुर्गुणनेन चतुरधिकद्विशतमेव भवति, तत् कथं वेदखेत्याद्यङ्का इति चेन्न, प्रथमस्य स्वजातीयेनकेन स्वविजातीयैः पञ्चाशता च सह चतुर्गुणने एकस्यैव चतुरधिकद्विशतत्वम्, एवञ्च ए पञ्चाशतस्तावदङ्केन पूरणे भवन्त्येव वेदखेत्यादयोऽङ्काः। परन्तु औत्सर्गिकीं रीतिं दृष्ट्वा ग्रन्थकृता अप्रणिधानादिदं लिखितम्। प्रणिधानतस्त्विदं श्लथमेव। तथाहि—प्रथमस्यैकपञ्चाशता सह चातुर्विध्ये गणिते द्वितीयस्य प्रथमेन सह चातुर्विध्यं पूर्वगणनायामेव गणितमिति द्वितीयस्य पञ्चाशतैव सह चातुर्विध्यं गणनीयम्, एवं तृतीयादेरपि पूर्वपूर्वेण सह चातुर्विध्यस्य पूर्वगणितत्वात् तदपहायैव गणनीयत्वे चरमस्य सजातीयेनैव सह चातुर्विध्यं गणनीयमेवं रीत्या एकशताधिकपञ्चसहस्राह्रसे चतुरधिकत्रिंशतोत्तरपञ्चसहस्राण्येव भवन्ति। दर्शिता चेयं रीतिर्विरोधालङ्कारे। तत्र हि—

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणस्त्रिभिः।**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश॥** (१०म उल्लासः)

इति वदता जात्यादिचतुर्णां जात्यादिचतुर्भिः सह विरोधे षोडशत्वप्रसक्तौ पूर्वपूर्वेण सह परपरस्य विरोधं पूर्वगणनाप्रविष्टमपहायैव दशविधत्वमुक्तमिति। किञ्च पदैकदेश-पद-वाक्य महावाक्यानामेकव्यङ्ग्यस्यान्यतरेणाव्यञ्जनात् कथं तेषामेकव्यञ्जकानुप्रवेश इत्येतावताऽपि बहुतरह्रासे वेदखाब्धीत्याद्युक्तमविचारसुभगमेव।

वेदखेत्यादौ शुद्धभेदानपि प्रवेश्य गणने संख्याधिक्यमाह—शुद्धभेदैरिति। शराः पञ्च, इषवः, पञ्च, युगानि चत्वारि, खं शून्यम्, इन्दुरेकः, एवम् १०४५५। तत्र संशयास्पदत्वरूपं सङ्करमुदाहरति—खणपाहुणिआ इति—

**क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।**
**रोदिति पश्चादवलभीगृहे अनुनीयतां वराकी।** इति संस्कृतम्।

देवरं प्रति प्रसक्तामुत्सवे तद्गृहागतां तत्पत्न्या निर्भर्त्सिता मनुनेतुं ज्येष्ठभ्रातृपत्न्या उक्तिरियम्। क्षणः उत्सवः, तत्र प्राघुणिका अभ्यागता। पडोहरः पश्चादर्थे देशी, वराकी दुःखिता। अत्रेति। 'अनुनयः' प्रीतिजननम्, प्रीतिविशेषजननस्तूपभोगः, तत्त्वेन संक्रमितवाच्योऽनुनय इत्यर्थः तथाच तादृशलक्षणया उपभुज्यतामित्यर्थः। तद्व्यङ्ग्यञ्च दुःखापनयनम्। किमनुरणनन्यायेनेति। अनुनयो वाच्यो विवक्षित एव किमुपभोगस्य व्यङ्ग्यस्य व्यञ्जक इत्यर्थः। न चैवमुपभोगस्य लक्षणीयत्वव्यङ्ग्यत्वसंशय एवानेन दर्शितो न तु व्यङ्ग्यद्वयस्य संशयास्पदत्वं दर्शितमिति वाच्यं व्यङ्ग्ययोदुःखापनयनोपभोगयोस्तत्संशयाधीनसंशयविषयत्वात्। तथाच उपभोगेन दुःखमपनीयतामिति वा उपभुज्यतामिति वा अनयोक्तमिति सामाजिकसंशयास्पदत्वं लक्षणामूलव्यङ्ग्यस्वतःसम्भविवस्तुव्यङ्ग्यवस्तुनोरिति संशयास्पदत्वम्।

## सुधासागरः

वर्णरचनयोर्व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते। प्रबन्धे तु नाटकादौ रसादिव्यञ्जकत्वं द्रष्टव्यम्। एतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्रेमनिजव्ययीभावेत्यादि।

यत्तु पूर्वं प्रबन्धशब्देन सङ्घटितावान्तरवाक्यसमूहोऽभिहितः, इदानीं तु सङ्घटितमहावाक्यमित्यपौनरुक्त्यमिति कश्चिदाह—तदज्ञानात्। पूर्वं ह्यर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वमुक्तम्, अत्र त्वसंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्याभावात्।

एवं रसादीनामित्यादि। पूर्वगणितभेदाभ्यां वाक्यपदप्रकाश्याभ्याम्। षडितिवाक्य-पद-पदैकदेश-वचन-रचना-प्रबन्धव्यङ्ग्यभेदाद् रसादीनामलक्ष्यक्रमाणां षड्भेदा भवन्तीत्यर्थः।

व्याख्याता इति। अविवक्षितवाच्यस्य द्वौ भेदौ, तौ च प्रत्येकं पदवाक्योरिति चत्वारः। विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्यः पद-वाक्य-पदैकदेश-वचनरचना-वर्ण-प्रबन्ध-भेदेन षड्विधः। लक्ष्यक्रमेषु शब्दशक्तिमूलस्य द्वौ भेदौ, तौ च प्रत्येकं पदवाक्ययोरिति तस्य चत्वारो भेदाः। अर्थशक्तिमूलस्य द्वादश भेदाः, ते च प्रत्येकं पदवाक्यप्रबन्धेष्विति षट्त्रिंशदस्य भेदाः। उभयशक्तिमूलस्तु वाक्य एवेति एकपञ्चाशद् भेदाः प्रदर्शिता इत्यर्थः।

संशयेनाङ्गाङ्गिभावेनैकव्यञ्जकानुप्रवेशेन चेति त्रिविधः सङ्करः, उक्तप्रकारत्रयं विना संयोगः संसृष्टिः। एवमेकपञ्चाशतो भेदानामेकपञ्चाशद्भेदयोजनमिति। तावता तावद्गुणनेन सहस्रद्वयमेकाधिका षट्शती च। संयोजनं च संसृष्ट्यादिचतुष्प्रकारैरिति तावता चतुर्भिर्गुणने दश सहस्राणि चतुरधिकानि चत्वारि शतानि च सम्पद्यन्ते तदाह—'वेदखाब्धी'ति।

न चानुग्राह्यानुग्राहकभावेन सङ्करस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसङ्करत्वमिति वाच्यम्। तत्र हि स्वतश्चमत्कारिण एव तस्य किञ्चित्परोपकारकतामात्रं न तु शेषशेषिभाव एवेति।

नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनं, स्वस्य तु स्वेन कथं योजनेति चेन्न। **व्यक्तिभेदमादाय** विजातीयवत्सजातीयेनापि सङ्कर इति सूत्राशयात्।

अत्राऽर्वाचीनाः—गणनेयमयुक्ता अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात्। तथा हि—अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योजनायाम्। एवमन्यत्रापि। तस्मात्—

**एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु।**
**समार्द्धेनाऽसमो गुण्य एतत् सङ्कलितं लघु॥**

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत्। तथा च 'रसदस्राग्निमेदिन्यः' इति त्रयोदश शतानि षड्विंशत्यधिकानि (१३२६) जायन्ते। योगश्चतुःप्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' (५३०४) पञ्च सहस्राणि चतुरधिकं शतत्रयं सङ्कीर्णभेदा इत्येव ज्याय इति वदन्ति।

अत्र ब्रूमः—अनुभवसिद्धौ तावत् पुण्ड्रककान्ताधरादिषु रसेष्विव ध्वनिष्वपि हृदयतातिशयानतिशयौ। तथा चार्थान्तरसङ्क्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तदयोजनम्, यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः। एवमन्यत्राप्यूह्यम्। एतदेव प्राधान्यमादाय गणना सौत्री। नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तस्य भेदान्तरत्वं स्यादिति। मैवम्। अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात्, तत्रोभयभेदसङ्करस्वीकारात्। एतादृशे चावस्थाने पदालम्बनमात्रमेव महत् पौरुषमिति संहृदयभावमास्थायालोचनीयमिति।

मधुमतीकारास्तु—विनिगमनाभावेन गुणप्रधानभावस्य नियन्तुमशक्यतयोभयप्राधान्यमाश्रित्य गणनायाः साधुत्वम्, स्वतन्त्रेच्छाया नियन्तुमशक्यत्वात्। अत एव 'जातिश्चतुर्भिः' इत्यादिपरिगणनं न विरुद्ध्यते। एतन्न्यायेन तत्र षोडशत्वापत्तेः। तन्नन्यायेन वाऽत्र गणितन्यूनतापत्तिरित्यपि निरस्तमित्याहुः। तदेतत्सर्वमभिप्रेत्य श्रीवृत्तिकृदाह—न केवलं शुद्धा एवैकपञ्चाशद् भेदा भवन्तीत्यादि।

शुद्धभेदैरेकपञ्चाशद्भिः (ता) सह। गाथा छन्दः।

**क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।**
**रोदिति पश्चाद्भागवलभीगृहेऽनुनीयतां वराकी॥**

इति संस्कृतम्। हे सुभग, हे देवर! ते जायया स्त्रिया, किमपि भणिता किञ्चित्कथिता, क्षणप्राघुणिका, उत्सवातिथिः, काचित्सरलहृदया पश्चाद्भागवलभीगृहे रोदिति अनुनीयतां वराकीत्यर्थः।

अत्रानुनयतेर्वाच्योऽनुनयः किमुपभोगलक्षणे लक्ष्ये सङ्क्रमितः आहोस्विदविवक्षित एवोपभोगस्य व्यञ्जक इत्यविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः सन्देहः सङ्करः।

## विवरणम्

महाभारतादिप्रबन्धस्य नैकतरसपरिच्छेदकत्वमस्तीति विशिष्य निर्दिशति—नाटकादिष्विति।

पूर्वेति । वाक्यपदव्यङ्ग्याभ्यां भेदाभ्यां सह पदैकदेशरचनावर्णप्रबन्धव्यङ्ग्याश्चत्वारः षड्विधा भवन्तीत्यर्थः ।

तत्र वाक्यपदव्यङ्ग्यौ रसादेर्भेदौ पञ्चत्रिंशत्येवान्तर्भूतौ, चत्वारः पदैकदेशादिव्यङ्ग्याः, प्रबन्धव्यङ्ग्या अर्थशक्त्युद्भवा द्वादशेति सङ्कलने सत्याह—भेदा इति ।

तेषामिति । एकपञ्चाशतो भेदानामित्यर्थः । योजने सति वेदखाब्धीत्यादयो भेदा भवन्तीति सम्बन्धः ।

भेदास्तदेकपञ्चाशदिति न निर्धारणार्थमित्याह—न केवलमिति । कैवल्यव्यतिरेकोपपादकं समुच्च्यमाह—यावदित्यादिना । यावदिति वृत्तेः वेदखाब्धिवियच्चन्द्रा इति सूत्रेण सम्बन्धः । अन्योऽन्ययोजनपदार्थमाह—तेषामित्यादि । त्रिरूपेणेत्यस्य । व्याख्यानं त्रिविधेनेति । तासां तिसृणां विधानामुल्लेखः—संशयास्पदत्वेनेत्यादिपदे गौणत्वमुखत्वयोर्विरोधात् तदुभयमूलव्यञ्जनयोरपि विरोधादुभयसमुच्चयासम्भवेन संशयविधया सहृदयैर्व्यञ्जकव्यापारस्य ग्राह्यत्व इत्यर्थ । अनुग्राह्येत्यादि । परस्परोपश्लिष्टतया भासमानत्वेनेत्यर्थः । एकेति । व्यञ्जकमिहासाधारणं विवक्षितम् । परस्परनिरपेक्षत्वं सङ्करत्रयशून्यत्वम् ।

एकपञ्चाशत एकपञ्चाशता गुणने षड्विंशतिशतमेकाधिकम् (२६०१) चतुर्भिर्गुण्यमानं चतुरधिकचतुश्शताधिकमयुतम् (१०४०४) भवतीत्याह—चतुर्भिर्गुणन इत्यादि । अब्धयश्चत्वारः । चन्द्रा इत्यस्य भेदा इत्यनेनान्वयः । अत्र—'तेषां चान्योऽन्ययोजने' इति पादः सूत्रे पुनरावर्त्य योजनीयः । तत्र तच्छब्देन सङ्कीर्णभेदाः शुद्धभेदाश्चोपादेयाः । योजनं सहभावमात्रमित्याशयेन पूर्वोक्तसूत्रपादं व्याचष्टे—शुद्धेति । युगानि चत्वारि ।

ननु स्वेन स्वस्यैव कथं सङ्करः संसृष्टिर्वा सम्भवतु, अथैकस्या व्यक्तेस्तदसम्भवेऽपि, समानजातीययोस्तथात्वं स्यादेव । तथा हि मदीयामृतोदयनाटके नान्दी—

**ब्रह्माण्डबिन्दुगणवर्षणवारिवाह**
**वज्रं च मुञ्चसि निषिञ्चसि जीवनं च ।**

**सृष्टं त्वया स्वपरदृष्टिविलोपकष्टं**
**निर्मार्ष्टुमर्हति तवैव विवेकविद्युत् ।।** इति ।

अत्र ब्रह्माण्डानां बिन्दुरूपकेण परिमाणापकर्षश्च जातविलीनत्वं च द्योत्यते । ताभ्यां च 'परमविभु व्यापकं ब्रह्म' 'नित्यं ब्रह्म' इति विवेकद्वयमिति तयोरेकव्यञ्जकानुप्रवेशः । गणत्वोत्कीर्त्तनेन च सहभूतानां समुच्चयः पूर्वापरपरम्परा च प्रतिपाद्यते । वर्षणपदेन च गर्भितस्य बहिः प्रकाशनमुच्यते । तेन ब्रह्माण्डगणवर्षणेन—"यतो वा इमानि भूतानि जायन्ते" इति श्रुतिस्वरससिद्धं नानादेशकालसंसृष्टनानाब्रह्माण्डनिदानमिदमनादिनिधनमनन्तं ब्रह्मेति मतिरभिव्यज्यते । सा च गणपदद्योत्यं कालदेशापरिच्छेद्य विवेकमुत्तम्भयतीति सम्भवति मतिविवेकयोरलक्ष्यक्रमयोरनुग्राह्यानुग्राहकभावः ।

एवं वज्रपदस्य निधनसाधने जीवनपदस्य प्राणधारणकारणे चोपादानलक्षणाद्वयेन परिबृंहिताभ्यां मोचनत्वेन नियोगस्य, निषेचनत्वेन निर्माणस्याध्यवसानाभ्यां बोधितं भगवतो निधनसाधननियोगप्राणनोपायनिर्माणोभयम्—"येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति" इति श्रुतिसिद्धं स्थितिसंहारकर्तृत्वमवगमयद्

नतिस्तुतिभक्तीरभिव्यनक्तोत्यासामेकव्यञ्जकानुप्रवेशः। तदेव च व्यञ्जकमभिधामूलव्यञ्जनया गम्येनाशनिविमोक्षजलक्षरणवृत्तान्तेनाभेदाध्यवसितं वाच्यस्य वारिवाहरूपकस्योपकरोतीति ध्वनिगुणीभूतव्यङ्ग्ययोरेकव्यञ्जकानुप्रवेशः।

एवं त्वया सृष्टं त्वदीयसत्ताधीनसत्ताकम्, अनादेरपि भावस्य सत्ताया व्यावहारिकमात्रत्वात् स्वस्य परस्य चात्मनः साक्षात्कारविरहकष्टमविद्यालक्षणं ध्वंसयितुं त्वद्विषयको विद्योतको विवेकः प्रभवतीति वाक्यार्थः, तेन "तमेव विदित्वाऽतिमृत्युमेति" इति श्रुतिसिद्धमपवर्गसाधनत्वं बोध्यते, औपनिषदैरविद्यानिवृत्तेरेव निर्वाण (साधन) त्वोपगमात्। तच्च भगवद्विषयिणीं भक्तिमभिव्यनक्ति।

अपि चाभिधामूलव्यञ्जनव्यापारगम्येन मेघावरणसृष्टस्य स्वपरदर्शनविरोधिनः कष्टस्यान्धकारस्य मेघाङ्कवर्तिविद्युदुत्सारणीयतावृत्तान्तेनाभेदाध्यवसितं तदेव व्यञ्जकं वाच्यस्य रूपकस्योपकरोतीत्यत्रापि ध्वनिगुणीभूतव्यङ्ग्योः सङ्करोऽवसेयः।

एवं चकारद्वयाभिव्यङ्ग्यः परस्परविरोधिक्रिययोः समुच्चयो विरोधिधर्मसंसर्गेऽप्यभिन्न इत्याश्चर्याभिव्यञ्जनद्वारा समर्थनीय इत्यर्थान्तरन्यासे विश्राम्यतीति स्वतःसम्भवताऽलङ्कारेणालङ्कारध्वनिरयम्, किं वा स एव समुच्चयो विस्मयभावमविर्भावयतीति सन्देहः, समर्थनापक्षे न विस्मयो विस्मयपक्षे न समर्थनेति विरोधादित्यतस्तुल्यजातीयानां योजनानि सम्भवन्त्येवेति चेद्, हन्तैवमप्यर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्लक्षणामूलाभिधामूलयोर्ध्वन्योरेकव्यञ्जकानुप्रवेशो दुर्घट इति।

नन्वमृतोदय एव पुरुषपुरुषोत्तमसंवादे—

**अलमबगलितेन्द्रियप्रवृत्तेस्तव जरतः पुरुषस्य जागरेण।**
**प्रभवति दमनाय दोषदस्योः सपदि मनागपि मादृशां प्रबोधः।**

इत्यत्र जरतपदस्याज्ञानस्वरूपाविद्याविरहे लक्षणा, कालदेशापरिच्छेद्यत्वं निसर्गमुक्तत्वं च व्यङ्ग्यमिति लक्षणामूलाया वृद्धस्य पुंसो निद्राच्छेदस्य च रूपकमुपमानोपमेयभावो वा व्यङ्ग्य इत्यभिधामूलायाश्च व्यञ्जनाया एकानुप्रवेशो दुर्घटः। तच्च जागरपदाभिव्यङ्ग्यं स्वाभाविकबन्धशून्यत्वम्, अलम्पदेन वैयर्थ्याभिधानद्वारा व्यञ्जितस्य स्वाभीष्टदोषदस्युदमनफलानुपधानस्योपकरोति। तव हि सदपि विज्ञानं न त्वद्दोषप्रशमाय, तव नित्यनिर्दोषत्वात्, नाप्यस्मदीयदोषोपशमाय, प्रबुद्धेऽपि त्वयि जीवदोषाणां रागादीनामनुपशमात्, तयोरनुग्राह्यानुग्राहकभावः।

एवं प्रबोधपदस्य तत्त्वसाक्षात्कारः प्रकरणवशादर्थान्तरसङ्क्रमितवाच्यः, निद्राच्छेदस्त्वभिधामूलव्यञ्जनागम्यः। अत एव जागराभेदाध्यवसिताद् भगवत्प्रबोधादस्य व्यतिरेकोऽपि ध्वननपथमवतरतीति ध्येयम्।

यथा च लाक्षणिकमपि तत्रैव—

**अपरिमितविभागभूमिरेकस्त्वमसि ततो जगदण्डबिन्दुरासीत्।**
**तदिति दशविधा दिशामधीश त्वदवतरा गणितक्रमेण सिद्धाः॥**

इत्यत्रैकपदस्य गुणवाचिनोऽद्वितीयेऽर्थे सङ्क्रमितमेकलिपौ चात्यन्ततिरस्कृतवाच्यमित्युभयोरेकव्यञ्जकानुप्रवेशः सम्भवत्येव। एवं बिन्दुपदस्य गोलाकारेऽजहत्स्वार्था, शून्यलिपौ च जहत्स्वार्था लक्षणा। न चैकपदं

गुणिनं बोधयित्वा व्यञ्जनयैव वा द्वितीयमार्थव्यञ्जनयैव च लिपिं बोधयेदिति वाच्यम्, किमनयोरर्थयौरार्थी व्यञ्जना, किमुत लक्षणेति सन्देहरूपसङ्करेऽप्येकव्यञ्जकानुप्रवेशस्याबाधादिति चेत्, मैवम्, एवमप्यग्रिमाग्रिमभेदयोजने एकैकभेदह्रासेन सङ्ख्याया न्यूनत्वात्। य एव ह्यर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्योगः, स एव वैलोम्येन तोयरिति—"सैकपदद्विपदार्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्या" इति लीलावतीसूत्रोक्तसङ्कलितगणितस्यैवायं विषय इति षड्विंशत्या एकपञ्चाशतो गुणने रसदस्राग्निमेदिन्यः १३२६, तेषां चतुर्भिर्गुणने वेदाभ्रदहनेषवः ५३०४ एव सङ्कीर्णभेदा जायन्त इति

अत्र प्रदीपः—"अनुभवसिद्धौ तावद् ध्वनिहृद्यत्वातिशयानतिशयौ। तथा च यत्रार्थान्तरसङ्क्रमितवाच्यस्यातिशयः, तत्रात्यन्ततिरस्कृतवाच्येन तस्य योजनम्। यत्र तु वैपरीत्यम्, तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमित्येवंविधप्राधान्यमादाय सौत्री गणना। ननु यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति। मैवम्, अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात्, तत्रोभयोरेव सङ्करयोः स्वीकारात" इति पदमारोपयाम्बभूव। सम्भवति चैतत्, तथा ह्यमृतोदये—

**सकलमपि मया स्वकर्मबीजं**

**त्वयि वृषवाह! समर्पयाम्बभूवे**

**तव मम च न चेत् फलं प्रसूते**

**कथमधुनाऽप्यहमेव दोषभूमिः॥ इति।**

अत्र वृषवाहो नाम धर्माधिष्ठाता भगवान् महोक्षवाहनो विरूपाक्षः प्रकरणादिवशादभिधेयः, स व्यङ्ग्यस्य वलीबर्दवाहनवृत्तेरर्धसीरिणस्तादात्म्येनाध्यवसीयते। तेनार्धसीरिणे बीजादिस्वामिनो बीजानर्पणे चेत् सस्यप्रसवविपर्यासः, तदा बीजादिस्वामी दोषभाजनं भवति। न चेद् अर्धसीरिण एवापराध इति लोके स्थितिः। मया तु त्वयि वृषवाहे भगवति भूतभावने कर्मबेजान्यर्पितानि, तानि च त्वयि निसर्गनिर्लेपे, मयि च निष्कामे न फलन्ति चेत्, तदा त्वय्येव दोषकारणं विद्यते, न च त्वयि दोषा इति विशेषोक्तिरहमेवेत्येवकारसन्दर्भसिद्धा। त्वयि विद्यते दोषकारणम्, मयि तु क्षेत्रस्वामिनि क्षेत्रज्ञे दोषाणामुद्भव इत्यसङ्गतिरित्यलङ्कारयोः सङ्करो वृषवाहेति, अधुनाऽपीति, अहमेवेत्यादिपदैः प्राधान्येन व्यज्यते। भगवति कर्मफलार्पणं नामेश्वरप्रणिधानस्वरूपो नियमो योगाङ्गं वस्तुन च प्रतीयते। मुमुक्षालक्षणफलाभिलाषमूलकर्मामूलदोषक्षयौत्सुक्यभावश्चानुभाव्यते। तथा चात्र वस्तु अलङ्कारातिशायि, नहि वस्तुत्वेनैव न्यूनत्वम्, अलङ्कारत्वेनैव चाधिक्यमित्यभिवास्यते।

एतेन वस्त्वलङ्कारयोर्योगे वस्तुनो नास्त्यतिशय इति तयोः सङ्करे द्वैविध्यं कथं स्यादिति समाहितम्, प्रबन्धोपकारिपुरुषार्थभूतस्य वस्तुन एवातिशयसम्भवात्। कर्मार्पणाच्च दोषक्षयौत्सुक्यं शमरसोपकरणतया प्रधानं भवितुमर्हतीति दिक्।

यत्तु शब्दशक्तिमूलार्थशक्तिमूलयोरेकव्यञ्जकानुप्रवेशो न सम्भवतीति, तदसत्, अत्रैव वृषवाहपदेन यतस्त्वं कर्माधिष्ठाता, ततस्त्वयि कर्माण्यर्पितानीत्यर्थशक्त्या गम्य एको यस्त्वमुक्षवाहनक्षमस्ततो बीजान्यर्पितानीत्यभिधामूलव्यञ्जनागम्यो द्वितीयहेत्वलङ्कारो व्यज्यत इत्येतयोरेकव्यञ्जकानुप्रवेशदर्शनात्।

यदपि पदैकदेशप्रकाश्यस्य रसादेरुभयशक्त्युत्थस्य चैकव्यञ्जकानुप्रवेशो न सम्भवतीति, तदपि स्थवीयः। तथा ह्यमृतोदये—

**व्यवधिरुपरराम भूर्विविक्ता**
**भवसि पुरेव न मां क्षणः प्रहर्तुम्।**

**तदिह भवतु तावदेकशेषा**
**परविलयावधिरावयोर्विमर्दः ॥** इति।

अत्र विमर्दशब्दः परस्परोपश्लेषमेव स्वार्थमवगमय्यार्थशक्त्या द्वयोरेकतरविलयफलकत्वरूपानुगामिधर्मसंवलनेन प्रधनकर्म ध्वनयितुमर्हतीति तदेव व्यञ्जनीयं विमर्दपदस्याभिधामूलव्यञ्जनयाऽपि गम्यमित्युभयशक्तिसमुत्थस्यापि प्रधनकर्मभवनाशंसनस्य रणोत्साहरूपभावस्य चावश्यम्भावाभिव्यञ्जकताऽवच्छेदकसमभिव्याहृते लोट्प्रत्यये प्रवेशः। लोट्प्रत्ययोपात्तमौत्सुक्यमुत्साहं षुष्णात्येतावत्येव पदादे रसादिव्यञ्जकतेति प्राक् प्रतिपादितम्। सङ्गरभवनाशंसनरूपव्यङ्ग्यस्यापि सङ्गरांशे विमर्दपदेनेवाशंसनांशे लोटाऽप्यसाधारणं व्यङ्ग्यत्वमवसेयम्।

अत चैतस्मिन् व्यङ्ग्ये रणोत्साहे भूर्विविक्तेत्यनेनोपात्तमुद्दीपनं तत्रोपात्तो व्यवधिरुपररामेति हेतुः। तेनेदानीं कूटयुद्धाबाध्यत्वमात्मनो बोध्यते। तेन च 'भवसि पुरेव न मां क्षमः प्रहर्तुम्' इति पादेनोपात्तं वस्तूपक्रियते। पुरेवेत्यनेन पदेन चासाधारण्येन पूर्वाकारस्मरणमवगम्यते। तेन चोभयशक्त्युत्थं रणाशंसनं तदुत्साहश्चोपक्रियत इति भवति द्वयोरेकव्यञ्जकानुप्रवेश इति किमधिकेन।

तत्र द्वयोः संशयास्पदत्वमुदाहरति—छणेति।

**"क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।**
**रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ॥"** इतिच्छाया।

क्षणप्राघुणिका उत्सवातिथिः। तस्या एव देवर मम प्रजावत्याः, तव जायया किमप्यसमञ्जसं भणिता, तदसमञ्जसभाषणे निमित्तं यद्यपि तव जायायास्त्वद्विषयकतदीयविकृताभिप्रायज्ञानमेव, तथापि तथाविधमपमानं विषहमाणा प्राघुणिका त्वज्जायाविहारस्याविषयमेकान्तस्थलं त्वदभिप्रायेणाधितिष्ठतीति वराकीपदद्योत्यम्।

अनुपूर्वको नयतिः प्रसादसाधनं कर्माभिधत्ते, शक्नोति च तेन सामान्येनोपभोगमुपस्थापयितुम्। विशेषरूपेणोपस्थितये तत्रोपादानलक्षणा स्वीकार्या। व्यङ्ग्यं तु त्वदीयजायाकर्तृकासमञ्जसभाषणवैरस्यनिभृतमिदं निर्यातनं तस्याः सर्वेभ्यः प्रसादसाधनेभ्योऽतिरिच्यत इति।

अथवाऽनुनयतिना प्रसादसाधनं कर्म चाटुकारादिकमेवोच्यते। ततोऽर्थशक्त्योपभोग एवं व्यञ्जनाविश्राम इत्युपभोगस्य व्यङ्ग्यत्वाव्यङ्ग्यत्वकोटिक एवात्र संशयो विवक्षितः। व्यङ्ग्यस्वरूपयोस्त्वविरोधान्न संशयास्पदत्वम्।

स्वरूपविरोधो यथा—

**नित्ये विभौ मयि निसर्गशुचौ शरीर-**
**तादात्म्यबन्धमवरोपितवांस्त्वमासीः ।**
**द्वैतोज्झिते त्वयि परावरवस्तुभेद-**
**मारोप्य निर्वृतिमुपैमि चिरादिदानीम् ॥** इत्यमृतोदये ।

त्वयाऽतात्त्विकं शरीरमात्रस्य तादात्म्यमारोपितम्, मया तु तात्त्विकद्वितीयरहितसर्ववस्त्वभेदस्त्वयि पारमार्थिको निवेशित इत्यारोपयतिना बद्धमूलत्वस्यापि लाभसम्भवादित्यौपनिषदसिद्धो व्यङ्ग्यः ।

अथवा भ्रमवाचिनाऽऽरोपयतिना शरीरमात्रस्य मय्यारोपमूलं त्वमभूः, मया तु समस्तवस्त्वभेदस्त्वय्यारोपित इति कृते प्रतिकृतं मयेति व्यतिरेकेणाभेदभ्रम एवापवर्गसाधनमित्यन्वीक्षारक्षितो व्यङ्ग्य इत्यनयोर्विरोधः । यथा वा ममैव—

**"अरे निसर्गसुन्दर निरवसानसौभग श्लाघनीयोऽसि" इति । "प्रसरति विषयेषु येषु रागः, परिणमते"** इत्यादौ आत्मैव नित्यो नान्यत्' इत्यौपनिषददर्शनसिद्धो विवेको व्यङ्ग्यः । सकलविशेषगुणोच्छेद एव फलेष्वविनाशी, आनन्दस्तु सर्वो विनाश्येवेति न्यायनयसिद्धेन विवेकेन विरुध्यते ।

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः।**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव॥ ११२॥**

अत्र लिप्तेति पयोदसुहृदामिति च, अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः। एवमन्यदप्युदाहार्यम्॥

**इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ उल्लासः॥४॥**

---

**सङ्केतः**

स्निग्धेति। स्निग्धा जलसम्बन्धात् सरसा। कान्तिः चाकचक्यम्। घनाः इति भणनात् निबिडत्वमपि व्यङ्ग्यम्। वेल्लन्त्यः कामापरभागवशात् प्रहर्षाच्च। एतेन—घनैः आकाशस्य दुष्प्रेक्ष्यत्वं सम्भोगस्मारकत्वं च उक्तम्। वाताः इति बहुवचनेन तेषां सर्वगत्वं अप्रतीकार्यत्वं च उक्तम्। शीकरिणः इति तेषामेव मन्दमन्दत्वं मद स्मारकत्वं चोक्तम्। तर्हि गुहासु प्रविश्य आस्यताम् इत्याह—पयोदेति। पयोदानां सुहृदः तेषाम्। मेघभावे हि तेषां शोभनचित्तता स्यात् इति भावः। केकाभिः गुहामध्येऽपि वर्षाकालस्मरणात् इति। ताश्च कलाः इति भणनात् षड्जसंवादात् स्वयमपि दुःसहाः इति, सर्वत्र विभावानां विद्यमानत्वम्। एवं उद्दीपनविभावबोधितविप्रलम्भः अन्योन्याश्रयत्वात् रतेः विभावानां साम्यं मन्वानः, इत एव प्रभृति प्रियां हृदि न्यस्यैव स्वं वृत्तान्तं रामस्तावदाह—काममिति। कामं विभावाः सन्तु, अहं तु कठोरहृदयः रामः अस्मि। रामशब्दार्थव्यङ्ग्यविशेषावकाशदानाय कठोरहृदयपदम्। अन्यथा—रामपदं दशरथकुलोत्पत्ति-कौसल्यास्नेहपात्रत्व—बाल्यचरित—ताटकाबधादितत्तद्धर्मान्तरपरिणमितं अर्थं कथं नु ध्वनयेत्? अस्मि स एवाहं भवामि इति सर्वं सहे। न तु सर्वसहः। कृद्वृत्तौ हि सहने कर्त्रंशस्यैव च मुख्यता स्यात्, न सर्वार्थस्य कर्मणः। ततश्च अविमृष्टविधेयांशदोषः स्यात्। सर्वं सहे इत्युक्ते तु—यद्यत् निपतति तत्तत् सहे इति लभ्यते। भविष्यति इति क्रियासामान्यम्। तेन किं करिष्यतीत्यर्थः। अथवा—भवनमेव असम्भाव्यमित्यर्थः। उक्तप्रकारेण चित्तन्यस्तां प्रियां विभावानां साधारण्यादिना स्मरणेन, वैदेही इति शब्देन, कथं भविष्यति इति विकल्पपङ्क्त्या च प्रत्यक्षीकृतां हृदयस्फोटोन्मुखीं ससम्भ्रममाह—ह हा हेति। देवीति। तव युक्तं धैर्यम्, देव्या हि कृताभिषेकत्वेन राजतुल्यत्वात् इति भावः।

अत्रेति। लिप्तशब्दः—कुङ्कुमादिवत् लेपहेतुत्वाभावात् बाधितार्थः सन्, ईषत्तिरोधीयमानत्वादिसादृश्यात् कान्तियुक्तत्वं अर्थं लक्षयन्, कुङ्कुमादिलिप्तवक्त्रादिसारूप्यप्रतीतिद्वारेण चारुत्व—मारोद्दीपकत्वादि व्यनक्ति। अत्र—लिप्तत्वं आरोप्यम्, आरोपविषयश्च नभः, इति द्वयोः उक्तत्वात् गौणी सारोपलक्षणा, तथा सुहृच्छब्दोऽपि—घनानां अचेतनत्वेन मैत्रीयोगाभावात् बाधितस्वार्थः सुहृद्गतसांमुख्यादिधर्मसादृश्यात् पयोदाभिमुखान् मयूरान् लक्षयन्, मित्ररूपताप्रतिपत्तिद्वारेण तद्दर्शनानन्यसामान्यप्रमोदमेदुरत्वादि ध्वनयति। पयोदसुहृच्छब्देन अरोप्येण आरोपविषयाणां शिखिनां निगीर्णत्वात् इयं साध्यवसाना। उभयत्रापि स्वार्थोपमितवस्तुपरत्वेन अत्यन्ततिरस्कृतवाच्ययोः लिप्तसुहृच्छब्दयोः सक्तस्य व्यङ्ग्यद्वयस्य मिथः निरपेक्षत्वात् स्वपदप्रधानयोः संसृष्टिः। रामोऽस्मीत्यत्र प्रस्तावात् अभिधेयप्रतिपत्तौ रामशब्द अनुपयुज्यमानत्वात् बाधितार्थः, स्वाभिधेयभूतार्थगामित्वरूपात् सम्बन्धात् राज्यभ्रंश-प्रवास-पितृवियोग—सीतापहरणादिदारुणदुःखपात्रत्वं लक्षयन्, अनन्यसाधारणनिर्वेदादि व्यनक्ति। इयं च सादृश्यव्यतिरिक्तसम्बन्धान्तरनिमित्तत्वात् शुद्धा सारोपा। आरोप्यस्य रामशब्दस्य, आरोपविषयस्य अस्मिशब्दाभिधेयस्य च उक्तत्वात्। अत्र—वाच्यं दाशरथिरूपं व्यङ्ग्यधर्मान्तरपरिणतत्वात् स्वपरत्वेन नोपपन्नं इति, अविवक्षितमेव; न पुनः अत्यन्ततिरस्कृतम्। व्यङ्ग्यधर्माधारद्वारेण तस्यापि परिणतत्वात्। अत्र च—लिप्तपयोदसुहृच्छब्दव्यङ्ग्यौ अर्थौ अनुग्राहकौ। रामशब्दव्यङ्ग्यस्त्वनुग्राह्यः। उद्दीपनवशेनैव असाधारण निर्वेदादीनां परिस्फुरणात् इति—अनुग्राह्यानुग्राहकत्वेन सङ्करः। रामपदेति। यथा रामशब्दः निर्वेदादीन् व्यनक्ति, तथा विप्रलम्भमपि इति, उभयसाधारणरामशब्दरूपव्यञ्जकव्यङ्ग्यत्वेन द्वयोः व्यङ्ग्ययोः एकव्यञ्जकानुप्रवेशेन सङ्करः इति ध्येयम्।

अन्यदपि ध्वनिभेदजातम्।

**इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते चतुर्थः उल्लासः**

## बालचित्तानुरञ्जनी

स्निग्धेति। विरहिणो रामास्योक्तिरियम्। स्निग्धा श्लक्षणा श्यामला अत्यन्तकृष्णा या कान्तिस्तया लिप्तं वियदाकाशं यैस्तथाभूताः। वेल्लन्त्यः शोभन्त्यः बलाकाः बकपंक्तयो येषु तथाभूता घनाः मेघाः। कामं यथेच्छम्। अत्र रामपदेन दुःखपात्रतालक्षणया व्यज्यमानस्य राजत्यागारण्यगमनवल्कलधारणपितृशोकाद्यधिगतदुःखसहनातिशयोऽवगम्यते। तेन च परिपुष्टः सन् विप्रलम्भो रसः प्रकाश्यते।

**इति श्रीनरहरिसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां चतुर्थ उल्लासः।**

## काव्यादर्शः

'स्निग्धश्यामले' ति। स्निग्धया जलसंबन्धसरसया श्यामलकान्त्या लिप्तमाच्छुरितं नभो यैः। वेल्लन्त्यो जृम्भमाणाः प्रहर्षदर्शाद् बलाकाः सितपक्षिविशेषा येषु सत्सु। एवंविधा मेघाः, अतो नभस्तावद् दुरालोकं वर्तते। दिशोऽपि दुःसहाः, यतः सूक्ष्मजलोद्गारिणो वाता इति मन्दमन्दत्वमेषामनियतदिगागमनं च बहुवचनेन सूचितम्। तर्हि गुहासु क्वचित् प्रविश्यास्यतामित्याह। पयोदानां ये सुहृदस्तेषु सत्सु शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कलाः षड्जसंवादिन्यो मधुराः केकाः शब्दविशेषाः, ताश्च सर्वं पयोदवृत्तान्तं स्मरयन्ति, स्वयं च दुःसंहा इति भावः।

एवमुद्दीपनविभावोद्बोधितविप्रलम्भः परस्पराधिष्ठानत्वाद् रतेर्विभावानां साधारण्यमभिमन्यमान इत एव प्रभृति हृदये प्रियां निधायैव स्वात्मवृत्तान्तं तावदाह 'कामं सन्तु' इति। 'दृढम्' इति सातिशयम्। 'कठोरहृदयः' इति। रामशंब्दार्थध्वनिविशेषावकाशदानाय कठोरहृदय-पदम्। यथा 'तदगेहम्' इत्युक्तेऽपि 'नतभित्ति' इति। अन्यथा राम-पदं दशरथकुलोद्भवत्वकौशल्यास्नेहपात्रत्वबाल्यचरितादिधर्मान्तरपरिणतमर्थं कथं न ध्वनेत्। 'अस्मि' इति स एवाहं भवामीत्यर्थः। 'सर्वं सहे' इति। सर्वार्थस्य सहने कर्मभावने विशेषणतयोपात्तस्योत्कर्षाधायितया प्राधान्येन विवक्षितत्वाद् न तेन सह कृद्वृत्तौ न्यग्भावः कृतः, वनवासादेरपि सर्वार्थान्तःपातित्वात्। प्रत्ययोत्पत्तौ तु न्यग्भूतकर्मभावः सहने कर्त्रंश एव स्फुटीभवेद्, न कर्मांशः, तत्रैव प्रत्ययोत्पत्तेस्ततो विमृष्टविधेयांशत्वं दोषः स्यात्। वाक्ये तु यद्यपि शाब्दं क्रियायाः प्राधान्यं, तथापि विवक्षाकृतसाधनानामपि तत् प्रतीयत एव। 'वैदेहि' इति। सहजसौकुमार्यसमर्थकं मेघकालोचितसुन्दरपदार्थदर्शनासहत्वेन तस्याः कातरत्वं सूचयति। एतदेव पूर्वस्माद् विशेषाभिधायिनः तु—शब्दस्य जीवितम्। 'भविष्यति' इति क्रियासामान्यम्। तेन 'किं करिष्यति' इत्यर्थः। अथ च भवनमेवास्या असंभाव्यमिति उक्तप्रकारेण हृदयनिहितां प्रियां सकलजलधरादीनां उद्दीपनविभावानां साधारणत्वावधारणादिना स्मरणेन 'वैदेहि' इति शब्देन कथं भविष्यतीति विकल्पपरं परया च प्रत्यक्षीभावितां हृदयस्फुटनोन्मुखीं संसभ्रममाह 'हहाहे' ति। 'देवि' इति। कृताभिषेका हि देवी। तस्याश्च राजवत् युक्तं धैर्यमित्यर्थः।

संसृष्टिरिति। लिप्तशब्देन कान्तेः कुङ्कुमादिवल्लेपसाधनत्वाभावाद् बाधितमुख्यार्थेन स्वार्थगतेषत्तिरोधीयमानत्वादिर्यो धर्मस्तत्सदृशेषत्तिरोधीयमानत्वादिधर्मयोगात् कान्तिसंपृक्तोऽर्थो लक्ष्यते। एवं सुहृच्छब्देनापि पयोदानामचेतनत्वेन मैत्रीसंबन्धाभावाद् बाधितमुख्यार्थेन सुहृद्गता ये सौमुख्यादयो धर्मास्तत्सदृशसांमुख्यादिधर्मयोगिनः पयोदाभिमुखा मयूरा लक्ष्यन्ते। ततो वाच्यस्यानुपपद्यमानत्वाद् अत्यन्ततिरस्कृतवाच्यध्वन्योर्द्वयोरपि स्वप्रधानत्वात् परस्परनिरपेक्षा तिलतण्डुलन्यायेन संसृष्टिः।

ताभ्यां सहेति। अत्यन्ततिरस्कृतवाच्याभ्यां रामशब्दस्यापि प्रतिपन्नत्वात्....संज्ञिनो वाच्यमनुपयुक्तमिति मुख्यार्थबाधे। तद्धर्मसमवाये च रामशब्दो धर्मान्तरपरिणतमर्थं लक्षयति। व्यङ्ग्यं तु धर्मान्तरं प्रयोजनरूपं राज्यनिर्वासनवनवाससीतापनयनाद्यसंख्येयं, तच्चासंख्यत्वादभिधाव्यापारेण अशक्यसमर्पणम्। यदुक्तम्—

**उक्त्यन्तरेणाशक्यं यत् तच्चारुत्वं प्रकाशयन्।**

**शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयीभवेत्॥**

एष एव सर्वत्र प्रयोजनस्य प्रतीयमानत्वेनोत्कर्षहेतुर्मन्तव्यः। ततो रामशब्दस्य वाच्यं दाशरथिरूपं व्यङ्ग्यधर्मान्तरपरिणतमिति स्वपरत्वेनानुपात्तत्वाद् अविवक्षितवाच्यस्यार्थान्तरसंक्रमितवाच्यस्य पदप्रकाशस्य ध्वनेरनुग्राह्यस्यात्यन्ततिरस्कृतवाच्याभ्यामनुग्राहकाभ्यां सह संकरस्तथाभूतदुःसहविभावसहनं ह्यनुग्राहकमर्थान्तरसंक्रमणस्य। तथा एकस्मिन्नेव राम-पदे व्यञ्जकेऽर्थान्तरसंक्रमितवाच्यो ध्वनिः आलम्बनोद्दीपनविभावो दैन्याद्यनुभाव आवेगादिव्यभिचारी विप्रलम्भरसध्वनिश्च। न च रामशब्दाभिव्यक्तार्थसहायकेन विना संरम्भोल्लास इति तयोरेकव्यञ्जकानुप्रवेशेन क्षीरनीरन्यायेन संकरः। एवं शुद्धस्य ध्वनेः स्वप्रभेदं प्रति चत्वारो भेदा दर्शिताः ॥४३॥

**इति भट्टसोमेश्वरविरचिते काव्यादर्शे काव्यप्रकाशसंकेते चतुर्थ उल्लासः॥**

## विवेकः

स्निग्धश्यामलेत्यादि । 'पयोदसुहृदो मयूराः केकाः षड्जसंवादिनो मधुराः शब्दविशेषाः । एवमेते सौन्दर्यातिशयभाजौ वर्षासमयोचिता घना वियोगिदुःखावस्थामु (या उ) द्दीपकाः कामं सन्तु, रामोऽहं सर्वं सहे, दृढं सातिशयं कठोरहृदयतया । कठोरहृदयत्वञ्च मेघाद्युद्दीपितसाम्प्रतिकावस्थासहनापेक्षया, न तु सीतावियोगदुःखसहनापेक्षया । अतस्तद्वियोगदुःखसहने गुणीभूतव्यङ्ग्यता नैव । तथाभूतैर्मेघादिभिरेव सौकुमार्यातिशयात् । सीतां प्रति निश्चितः क्लेशातिशय इत्याह वैदेहि तु कथं भविष्यतीति । अतएव भवनमेवास्था असम्भाव्यमिति हृदयनिहितां स्मरणशतविकल्पपरम्परया प्रत्यक्षभावितां हृदयविदलनोन्मुखीं सनिर्वेदसम्भ्रमं तत् समाश्वासनायाह ह हा हा देवि धीरा भवेति (लो. द्र. ६१-६२ पृ.) । देवीति युक्तं तव धैर्यमित्यर्थः । तदिह लिप्तशब्दः स्वार्थतिरस्कारेण व्यापित्वप्रकाशनादत्यन्ततिरस्कृतवाच्यः । एवं पयोदसुहृच्छब्दः स्वार्थतिरस्कृतेः प्रमादोन्मदिष्णुताऽऽदिप्रकाशनात् स एव । अनयोश्च परस्परनैरपेक्ष्यात् संसृष्टिः । यदि वा 'स्निग्धं' शब्दो घृतादिकृतस्नेहरूपार्थतिरस्कारेण नेत्राभिरामत्वाद्यत्यन्ततिरस्कृतवाच्य इति स्निग्धलिप्तयोः संसृष्टिः । रामोऽस्मीति रामपदं शिथिलितस्वार्थोपयोगि-(ग)तया 'कठोरहृदय' पदसाचिव्येन राज्यभ्रंशवनवाससीताऽपहारादिभिः सामान्यापमानसहत्वशत्रु[त्व] निराकरणात्तुभ्यमित्या (जाड्यत्या)द्यर्थान्तरसंक्रमितवाच्यम् । पूर्वाभ्यामत्यन्ततिरस्कृतवाच्याभ्यामनुग्राह्यानुग्राहकरूपतया सङ्करः । यो त्रिकेण (योऽत्रैकेन) व्यञ्जकेनानेको ध्वनिः स तृतीयः सङ्करो यथाऽत्रैव 'राम' शब्द एवार्थान्तरसंक्रमितवाच्यः समुद्दीपनविरोधो—(विभावो)—द्वोधितस्य विप्रलम्भस्य व्यञ्जकः । सर्वस्मिन्नेव रसाद्यात्मनि काव्येऽलक्ष्यक्रमव्यङ्ग्यरूपस्य रसभावलक्षणस्य प्रभेदप्रतीत्यपेक्षयैकव्यञ्जकवाक्यद्वारेण व्यञ्जकत्वं सम्भवत्येव यथाऽत्रैव रसध्वनेर्भावध्वनेश्चैकेन व्यञ्जकेन व्यञ्जनाद्विप्रलम्भस्य तद्व्यभिचारिणश्च निर्वेदशोकावेगात्मनश्चर्वणीयत्वात् । तदेवं ध्वनेः प्रभेदं प्रति सङ्करसंसृष्टिभ्यां चत्वारो भेदा उदाहृताः ।

एवमन्यदिति—'यथा 'न्यक्कारो ह्ययमेव मे यदरयः' (म उः) इत्यत्र 'मे' इति षष्ठ्या प्रकाशितः शत्रुशत्रुमद्भावलक्षणः सम्बन्धो रावणस्य सर्वकालं निःसपत्नतया शत्रुणामप्यसहमानस्य त्रैलोक्यविजयोचितशौर्याभिमानव्यञ्जकः । 'हि' शब्दो 'न्यक्कार' शब्दश्चाश्रुतपूर्वत्वमतिशयञ्च व्यनक्ति । 'यदि' त्यनेन शत्रूणामसम्भाव्यमानत्वं व्यज्यते । 'अरय' इति बहुवचनं जगति कोऽपि रिपुर्नास्ति न भविष्यति किमुत बहव इति व्यनक्ति । 'तापस' इति तद्धितेन तपश्चर्यामात्रप्रवणतया पौरुषहीनत्वं व्यज्यते । 'तत्रापि' शब्देन निपातसमुदायेनात्यन्तासम्भाव्यमानत्वम् । 'असा' विति तापसोऽपि न कदाचित् भार्गवप्रायः शत्रुत्वसम्भावनामात्रपात्रं स्यात् किमयं वराक इति रामस्य लाघवातिशयं व्यनक्ति । मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता, तस्यां स च कर्तेति श्रीमदाचार्याः । 'अपि' शब्देन मनुष्यमात्रकः ।' (ध्व. आ. लो. ३ ।१६ वृ:) 'अत्रैवे' ति लङ्कायां मदधिष्ठितायामासृष्टेरदृष्टपूर्वराक्षसवधत्वं प्रकाशयति । 'निहन्ती' ति वर्तमानकालतया निःशेषेण राक्षसवधस्य पुनः पुनः सम्पादनमभिव्यज्यते । 'राक्षसबल' मिति कर्मशक्तिरेकस्याप्यत्यन्तमसम्भाव्यमानो मानुषमात्रकृतो वधः किमुत मद्बलस्येति द्योतयति । अन्ये तु 'जीवती' ति तिङप्रकाशितया रामस्य कर्तृशक्त्या येनाधन्येन स्वपौरुषाध्मातेन राक्षसानां किञ्चिदपराद्धं स तत्कालमेव स्वसैन्यं कृतान्तदन्ताशनिपूर्त्ततायाः पात्रतां नीतोऽस्माभिः, तत्रापि वर्तमानकालतयैवमपकारिणो रामस्य तत्कालमेव क्षणमात्रमपि जीवितमसम्भाव्यं मयि स्थिते किं पुनरद्यापीति द्योत्यत इत्याहुः । 'अहो' इत्यश्रुतपूर्वशत्रुसम्भवाद्व्यभिचारिविस्मयद्योतकः । 'रावण' इति पदं स्वशिरश्छेदपरितोषितशशिशेखरत्व-

कैलासोन्मूलनक्षमत्वस्वपराक्रमोत्कर्षाधरीकृतलोकपालत्वादीनि व्यनक्ति। स्वमर्थमवज्ञारूपमपरित्यज्य 'धिक् धिगि'ति निपातेन शत्रुं जितवानित्याख्यायिकेयमित्युपपदसमासेन सक्विपा शक्रोऽपि येन तथा निर्जितः स तापसमात्रेऽप्यकिञ्चित्करः सम्पन्न इति व्यज्यते। प्रशब्देन [प्रकर्षेण] बोधितं विद्यते यस्येति मतुपा क्तवतुच्छद्मना च किमस्माकं मध्ये कश्चित्तापसमात्रपराजययोग्यो नैव सम्भावितो युष्माभिर्यदयमविद्यमानविरोधोऽकाण्ड एव महता प्रत्यनेन कृतविरोधः कुम्भकर्ण इति प्रकाश्यते। 'स्वर्गे' त्यादि समासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वं 'ग्रामटिके' ति स्वार्थिकेन टिकनाम्ना प्रत्ययेन चाबहुमानास्पदत्वं द्योत्यते। 'विं शब्दो लुण्ठनसाकल्यव्यञ्जकः। 'वृथे' ति स्वात्मपौरुषनिन्दाव्यञ्जकः। 'भुजै' रिति बहुवचनेन प्रत्युत भारमात्रमेत इति व्यज्यते।' (ध्व. आ. लो. १५३-५४ पृ:) तदित्थमेभिः शब्दैरेव गुणीभूतव्यङ्ग्यविशिष्टैः पदार्थैर्विभावादिरूपतयाऽलक्ष्यक्रमव्यङ्ग्यो रौद्ररस एवानुगृह्यत इत्यनुग्राह्यानुग्राहकभावेन गुणीभूतव्यङ्ग्यसंकीर्णोऽत्र ध्वनिः। न च तापसादीनां पदानां स्वार्थपरित्यागेनार्थान्तरप्रकाशनादर्थान्तरसंक्रमितवाच्यत्वमिति ध्वनिसंसृष्टिर्न तु गुणीभूतव्यङ्ग्यत्वमित्याशङ्कनीयम्, एषां पदानां विवक्षितवाच्यत्वात्। अर्थान्तरसंक्रमितवाच्यो हि ध्वनिरविवक्षितवाच्य इति प्रागुक्तम्, तापसादिषु पदेषुं व्यङ्ग्यविशिष्टं वाच्यं प्रतीयते, न तु व्यङ्ग्यधर्मान्तरपरिणतम्, अंशेनापि स्वार्थस्यापरित्यागात्। तस्माद्वाक्येऽत्र ध्वनिः, पदानि तु गुणीभूतव्यङ्ग्यानि। अतएव यथा ध्वनेः प्रभेदोत्तराणि (प्रभेदान्तराणि) पदार्थवाक्यार्थाश्रयत्वेनाविरोधीनि परस्परसंकीर्णत्वात्तथाऽत्रापि पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य वाक्यार्थाश्रयहेतुध्वनेः सङ्कीर्णतायामविरोधः। किञ्चैकस्य व्यङ्ग्यस्य गुणप्रधानभावो विरुद्धो न तु व्यङ्ग्यभेदापेक्षयाऽस्ति विरोध इति। 'रावण' पदे तु यो ध्वनिस्तेन रौद्रसप्राधान्यात् संसृष्टत्वम्। एकव्यञ्जकानुप्रवेशस्तु तैरेव पदैर्गुणीभूतव्यङ्ग्यस्य प्रधानभूतस्य च रसस्य विभावादिद्वारतयाऽभिव्यञ्जनात्।

यथा वा—कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः। राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः (वे. सं. ४।२६)॥ अत्र 'कर्ते' त्यादीना छद्मना परिगृहीतस्यापि धर्मराजराज्यस्याधुनाऽपगमे तावन्मात्रकालिकनृशंसता द्योत्यते। 'जतुमये' त्यादिना तथा विश्रब्धभ्रातृदाहलक्षणमहापातकनिबन्धनमाततायित्वं व्यज्यते। 'कृष्णे' त्यादिना तादृशपापकारिणोऽस्य न किञ्चिदप्यपकृतमस्माभिरिति द्योत्यते। 'सोऽभिमानी' [ति] क्व सम्प्रत्यभिमानित्वं गतं यत् पलाय्य स्थितमिति प्रकाशयति। 'पाण्डवा यस्य दासा' इति तदीयोद्घोषणानुकारोऽयममर्षातिशयव्यञ्जकः। 'राजे' ति सम्प्रति तथाविधभ्रातृमित्रसैन्यपरिक्षयेऽपि जीव [न] मात्ररक्षापरायणः शब्दमात्रावशिष्टः संवृत्त इति व्यनक्ति। 'दुःशासनादे' रित्यादिना सर्वे ते हता अस्माभिरिति व्यज्यते। 'अङ्गराजस्य मित्र' मित्यनेन लोकोत्तरशौर्यबलौचित्यनिधानभूतो विश्वासैकस्थानं जयाशाक्षेत्रं योऽङ्गाधिपतिः सोऽपि हत इति द्योत्येते। 'दुर्योधन' इति दुःखेन योधयितुं शक्य इति तथा पलायनेन स्वर्थपरित्यागादुपहसनीयतां द्योतयति। 'न रुषे' त्यर्जुनापेक्षया तं प्रत्यसंरम्भव्यक्तिर्भीमापेक्षया काकुवशात् क्रोधातिशयप्रकाशनम्। तदमीभिर्व्यञ्जकैर्व्यभिचारी गर्वः प्रकाश्यते। तेन चार्जुनाश्रयत्वेन वीरो भीमाश्रयत्वेन रौद्रः प्रकृष्यत इति। एवञ्च 'कर्ते' त्यादिभिर्व्यङ्ग्यविशिष्टैः पदार्थैर्विभावादिरूपस्तथा वाक्यार्थीभूतो रसोऽनुगृह्यत इत्यनुग्राह्यानुग्राहकत्वभावेन सङ्कीर्णत्वम्। गुणीभूतव्यङ्ग्यता च सुगमैव, वाक्य(च्य) स्यैव क्रोधोद्दीपकत्वात्। एकव्यञ्जकानुप्रवेशस्तु पूर्ववदेव। 'पाण्डवा

यस्य दासा' इत्यत्र दासैश्च कृतकृत्यैः स्वाम्यवश्यं द्रष्टव्य इत्यर्थशक्तिमूलाऽनुरणनरूपताऽपि। उभयतोऽपि च चारुत्वादेकपक्षपरिग्रहे प्रमाणाभाव इति सन्देहयोगेन सङ्कीर्णत्वम्।

ध्वनिगुणीभूतव्यङ्ग्यसंसृष्टिर्यथा—तेषां गोपवधूविलाससुहृदां राधारहः साक्षिणां क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम्। विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना ते जाने जरठीभवन्ति विगलन्नीलत्त्विषः पल्लवाः॥ (ध्व. आ. वृ. २।६ पृ:) 'तेषा' मिति येष्वस्माभिः क्रीडितमिति भावः। 'गोपवधूविलाससुहृदा' मित्यादिना न केवलमस्माकं तानि रहःस्थानानि शृङ्गारैकरसस्य हरेरपीति लतागृहस्य सौन्दर्यातिशयप्रकाशाद्वर्णोत्कर्षशोभाऽतिशयव्यञ्जकता। 'जान' इति तदुपयोगस्मरणव्यञ्जकः। 'विच्छिन्न' इत्याद्य'धुनेत्यन्तं तथा, शृङ्गारैकरसानस्मान् विहाय सम्प्रत्यन्यो न कश्चित्तत्र तथाविध इत्यभिप्रायात्। एतदेव 'जरठीभवन्ती'त्यनेन व्यज्यते, पल्लवानामन्यस्य तथाऽनुपयोगात् गोपवध्वन्तर्भावेऽपि राधाया पृथगुपादानं तां प्रति हरेः प्रेमातिशयप्रकाशनार्थम्, अतएव 'सुहृत्' 'साक्षि' शब्दाभ्यां वेश्मनां चैतन्याध्यारोपेऽपि गोपवधूविलासे सौहार्दं चरन्ति राधाया विलासे साक्षित्वमात्रे पात्रीभवन्ति तानि, तदीयरहस्यदर्शने चमत्कारातिशयेन व्यापारशून्यत्वात्। तदिह 'सुह्व'च्छब्दे 'साक्षि' शब्दे चाविवक्षितवाच्यो ध्वनिः। 'त' इति पदेनासाधारणगुणगणाभिव्यक्तावपि न चारूत्वमवलक्ष्यते, वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात्। एवं 'जान' इत्युत्प्रेक्ष्यमाणानन्तधर्मव्यञ्जकेनापि वाच्यमेवोत् प्रेक्षणरूपं प्रधानीक्रियत' (ध्व. आ. लो. २२६ पृ:) इति पदद्वयेऽत्र गुणीभूतव्यङ्ग्यता। तदनयोः परस्परनैरपेक्ष्यात् संसृष्टत्वम्।

**इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके चतुर्थ उल्लासः॥४॥**

## दीपिका

स्निग्धया भास्वर्या श्यामलया द्राविडदेशीयप्रभासदृशया कान्त्या लिप्तं व्याप्तं नभो यैः। वल्लनं विलासखेलनम्। पयोदसुहृदो मयूराः। आनन्दकेका मदमेदुरध्वनयः। कला मधुरगम्भीराः। कामं सन्त्विति धैर्योक्तिः। दृढं सातिशयम्। कठोरहृदय एवंविधोद्दीपनसम्भेदेऽप्यविक्रियमाणचित्त इति रामपदप्रत्याय्यनिरुद्धबोधत्वदुःखैकपात्रत्वादिभ्योऽवकाशदानम्, अन्यथा रामशब्दो महानुभवत्वं कथं न ध्वनेत्। वैदेही त्विति स्मृतेरेवंविधसभयसातङ्कसरभसकण्ठग्रहणपूर्वकालकृताङ्कपालिनयनादितद्विलासस्योक्तिः। कथं भविष्यति-स्मृतेरेवंविधविशेषायास्तस्या भवनमात्रप्यसम्भाव्यमित्यर्थः।

इतः प्रभृति स्मृति-भावना-विकल्पपरम्परोपपरीतां चिरदुर्बलतया झटिति हृदयास्फोटनाभिमुखीं प्रियां ससम्भ्रमोन्मादवशंवदः साक्षादिवाह-ह हा हेति। सुहृदामिति अत्रेति. . . ? मित्रार्थासम्भवात् परितोषकारित्वं लक्ष्यते। स्निग्धपदेन घृतादिस्नेहतिरस्कारेण नयनाभिरामतां लक्षयता तिरस्कृतवाच्यत्वेन संसृष्टिर्द्रष्टव्या। संसृष्टिश्च भिन्नाश्रययोरङ्गाङ्गिभावहीनयोरेकवाक्यगतत्वात्। अनुग्राह्यानुग्राहकभावेनेति—रामपदद्योत्ये हि ईदृश्यामप्यवस्थायां जीवितं धारयन्तं मां धिगित्यादौ स्निग्धलिप्तादिपदानां साचिव्यं विद्यते। एकव्यञ्जकेति—अङ्गाङ्गिभावस्य रसं प्रति सार्वत्रिकतया तदनपेक्षयोक्तम्।

यत्तु श्रीधरसान्धिविग्रहिकेणोक्तम् 'अत्र—व्यभिचारिरसध्वन्योरेकवाक्यव्यङ्ग्यत्वं, विप्रलम्भस्य तद्व्यभिचारिणश्च निर्वेदशोकावेगात्मनश्चर्वणीयत्वा' दिति, तन्न समीचीनम्। 'अखण्डः काव्यार्थ' इति नीत्या ह्येक एवात्र धैर्यनिर्वेद-स्मृति-शङ्का-शोकावेगोल्लोस-परिपुष्ट-रतिप्रकृतिकविप्रलम्भास्वादः समूहालम्बनरूपः। आस्वा-

दात्पूर्वं व्यभिचारिव्यञ्जनमात्रेण तु न, व्यभिचारिध्वनित्वम्। वाच्यतः प्राधान्यमात्रेण ध्वनिमात्रत्वमिति चेत् न। स्फुटत्वात् वाच्यसिद्ध्यङ्गाच्च। अस्तु वाच्यतः प्राधान्यं, तथापि वस्तुध्वनिरेव। तेन रूपेण तस्य सञ्चारित्वाभावात् स्थायिध्वनिरप्येवं स्यादिति च दोषान्तरम्। अन्यदिति—सजातीयमाश्रितं रसाद्यालङ्कारवस्तुरूपं प्रधानभूतं व्यङ्ग्यान्तरमिति।

**॥ इति चतुर्थ उल्लासः ॥**

## साहित्यचूडामणिः

अथान्यत् सङ्करद्वयं संसृष्टिं चोदाहरति—स्निग्धेति। रामशब्दे ध्वनिविशेषावकाशप्रदानाय कठोरहृदयपदम्, यथा—'तद् गेहं नतभित्ती' त्यादौ तदित्युक्तेऽपि नतमित्तीत्यादि। यतो न गुणीभूतव्यङ्ग्यत्वशङ्का। उद्दीपनविभावोपोद्बलितो विप्रलम्भः परस्पराधिष्ठानतया रतेर्विभावानां साधारण्यमभिमन्यमानस्ततः प्रभृति प्रियतमां हृदये निधाय व्यवहरन् स्मरणसरणिधारावाहिकया प्रत्यक्षीभावितां हृदयस्फोटनोन्मुखीं सुमुखीं संसभ्रममाह—हहाहेति।

उदाहरणानुरोधेन पूर्वं संसृष्टिमुपदर्शयति—लिप्तेति। लेपो मूर्तधर्मः, तत्रापि चित्रफलकादौ, न कदाचिद् गगनस्येति मुख्यार्थभङ्गः। उपरञ्जनातिशयो लक्ष्य;। कार्यकारणभावः सम्बन्धः। लिप्तं हि वस्तु गाढमुपरज्यते। वियतश्छायाधिक्यं व्यङ्ग्यम्। सुहृत्त्वं च कस्यचिन्महापुरुषस्य न सर्वस्येति मुख्यार्थभङ्गः। स्वभावसंवादो लक्ष्यः। सामान्यविशेषभावः सम्बन्धः, तद्विशेषत्वात् सौहार्दस्य। केकानां विरहपीडावहत्वं व्यङ्ग्यम्। एवमत्यन्ततिरस्कृतवाच्ययोरन्योन्यनिरपेक्षयोरैकाधिककरण्येन संसृष्टिः। अथ संकरयोस्तावदनुग्राह्यानुग्राहकभावमुद्भावयति—आभ्यामिति। लिप्तपयोदसुहल्लक्षणाभ्यां सह रामोऽस्मीत्यस्यानुग्राह्यत्वमुपजीवकता। तयोः पुनरनुग्राहत्वमुपजीव्यता। तथाहि उद्दीपनविभावसंरम्भानुद्भवे सहिष्णुतातिशयलक्षणस्य हृदयकाठिन्यस्य वक्तुमशक्यत्वं, प्रावृषेण्यं विशेषमलम्भ्य विप्रलम्भवर्णनौचित्यं चेति। अथ तृतीयं संकरमुल्लिङ्गयति—रामेति। रामोऽस्मीति स्ववचनेन बाधितमुख्यार्थो रामशब्दः कलत्रभ्रंशादिदुःखसहिष्णुत्वं लक्षयति। आधाराधेयभावः सम्बन्धः। जीवितस्य न कदाचिद् अत्याहितशङ्केति व्यङ्ग्यम्। एवं रामपदलक्षणमेकं व्यञ्जकमनुप्रविश्य तदीयस्यार्थान्तरसंक्रमितवाच्यस्य महावाक्यार्थरूपस्य रसध्वनेश्च संकरः। एकस्मिन् शब्दार्थयुगलात्मनि व्यञ्जकेऽनुप्रबिष्टत्वादन्योन्यसापेक्षतेति संकरस्यास्य संसृष्टेर्वैलक्षण्यम्। एवमिति। तथाह्यत्रैव यतोक्तविशेषणाघटनादयः। कामं सन्त्विति समुच्चयेन तथापि कठोरहृदयोऽस्मीति विशेषोक्तिर्व्यज्यते, मरणसामग्र्यामपि मरणाभावस्वभावस्य कठोरहृदयत्वस्य भावात्। तया च वैदेही तु कथं भविष्यतीति वस्तुव्यङ्ग्यो व्यतिरेकालंकारः संकीर्यते। यत्रानुग्राह्यानुग्राहकभावः रामोऽस्मि सर्वं सह इति काव्यलिङ्गव्यङ्ग्यस्य सीताप्रत्यक्षायमाणत्वनिबन्धनस्य भाविकस्य पर्यायोक्तस्य च संशयगोचरः संकरः। अनुग्राह्यानुग्रहकभावशालिनः संशयविषयस्य च ध्वन्योरन्योन्यसंसृष्टिः। कथं भविष्यतीति धीरा भवेति पदैकदेशलक्षणयोर्लृङ्लोटोरुपजीव्योपजीवकभावेन संकर इति। यथावा ममैव—

**सौभाग्याय नमस्तवास्तु यदयं त्वत्कल्पमन्यं जनं**
**धत्ते वक्षसि वल्लभो घटयति भ्रातैव ते कौस्तुभः।**

**इत्यालीपरिहाससंभृतरुषं संलक्ष्य लक्ष्मीं प्रिया-**
**माकल्पानवधीरयन्नवतु वो देवः पुराणः पुमान्॥** इति।

अत्र सौभाग्याय नमः इति वस्तुनोपालम्भो व्यज्यते यत्र नमः पदस्यौल्बण्यम्। तस्य चानुग्राह्यस्य कौस्तुभो घटयतीति वस्तुव्यङ्ग्येन लक्ष्मीप्रतिबिम्बनध्वनिनानुग्राहकेण संकरः। भ्रातैवेति शब्दशक्तिसमुद्भवस्य नायिकाहंकारभङ्गस्य व्यङ्ग्यस्य प्रतिबिम्बलाभादालीपरिहास इत्यर्थशक्तिसमुत्थितस्य काव्यलिङ्गस्य च पूर्ववत् संकरः। क्वचित् संशयविषयतया च पार्यते निर्वोढुम्। सर्वैश्चामीभिर्भावस्य भगवद्गोचरायाः कविसम्बन्धिन्या रतेः संकरः। अवधीरयन्नत्यत्र तेषामेव व्यञ्जकतान्तं निमज्जनमिति सिद्धम्।

**इयमवहितचेतश्चातुरीचर्वणीया प्रसरतु सरसा वः श्रेयसी काव्यरेखा।**
**प्रचुरसुकृतचर्याशालिनो यां लभन्ते प्रभवति भुवनेऽस्मिन् पञ्चषाः प्राञ्च एव॥**

**इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाश-विमर्शिन्यां चतुर्थ-उल्लासः॥४॥**

**सम्प्रदायप्रकाशिनी**

एवमर्थान्तरसंक्रमितवाच्यशब्दशक्तिमूलानुरणनरूपवस्तुध्वनी सङ्करत्वेनोदाहृत्यात्यन्ततिरस्कृतवाच्ययोः संसृष्टिमुदाहरति—स्निग्धश्यामलेति। वैदेही तु कथमिति। कान्ताभिनिवेशदार्ढ्यात् पुरोवस्थितामिवैनां मत्त्वाह—हहा हा देवीति।

अत्र संसृष्टिं दर्शयति—अत्र लिप्तेति पयोदसुहृदामिति चेति। लेपनसुहृत्त्वयोरनुपपत्त्यात्यन्ततिरस्कार इत्यनयोः संसृष्टिः। इत्थं संकीर्णतया संसृष्टतया वा मिश्रस्यापि पुनर्भेदान्तरैः सह सङ्करादिरूपं वैचित्र्यं सम्भवति। तदप्युन्नेयमित्यभिप्रेत्याह—ताभ्यां सह राम इत्यादि। रामोऽस्मीत्ययं हि दुःखैकायतनत्वाद्यर्थान्तरसंक्रमितवाच्यः। स हि लेपनसुहृत्त्वादिरूपेणोद्दीपनेनानुगृह्यत इति अनुग्राह्यानुग्राहकभावसङ्करोऽयम्। अथ राम इति योऽयमर्थान्तरसंक्रमितवाच्यः यश्च रामोऽस्मीति द्योतितो विप्रलम्भशृङ्गाररस्तयोरेकव्यञ्जकानुप्रवेशः सङ्करः, उभयोरपि रामपदव्यङ्ग्यत्वादित्याह—रामपदलक्षणैकव्यञ्जकत्वादिना। एवमन्यदिति। यथेह त्रिविधः सङ्करः संसृष्टिश्चार्थान्तरसंक्रमितवाच्यादिध्वनिविषयतयोदाह्रियते, तथास्य ध्वन्यन्तरविषतया सर्वमुदाहरणतोऽवधार्यमित्यर्थः।

**अलौकिकं गभीरं च प्रमेयमतिविस्तृतम्।**
**यच्चतुर्थे तदस्माभिर्हस्तमुक्तामणीकृतम्॥**

**प्रासङ्गिकमिहावोचत् सान्धिविग्रहिको बहु।**
**व्याख्येयवस्तुनिष्कर्षः श्रीविद्याचक्रवर्तिनि॥**

**इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वजपैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यकाव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम योगीश्वर श्रीमत्त्रिभुवनविद्याचक्रवर्त्तिवंशावतंसमहाकविश्रीविद्याचक्रवर्त्तिकृतौ सम्प्रदायप्रकाशिन्यां काव्यप्रकाशबृहट्टीकायां चतुर्थ उल्लासः।**

## मधुमती

ताभ्यां सहेति। लिप्तपदेन निबिडत्व सम्बन्धेन सम्पर्कातिशयं लक्षयता दुःसहत्वम्, सुहृच्छब्देन च कार्यकारणभावसम्बन्धेन साधुक्रियां लक्षयता विरहिवेदनाकारित्वं चोक्तमिति, लक्षणामूलाविक्षितवाच्यान्तर्गतात्यन्ततिरस्कृतवाच्यव्यङ्ग्ययोः नैरपैक्ष्येणावस्थानात् अनयोः संसृष्टिः। रामपदं च सर्वंसहत्वानुपयुक्तशक्यार्थतया पितृवियोगादिसकलदुःखभाजनत्वं लक्षयत्, सीतां विनाऽपि जीविष्यामीति व्यञ्जयत् विप्रलम्भं व्यनक्ति। अस्य च अर्थान्तरसङ्क्रमितवाच्यस्य पूर्वोक्ताभ्यां सह अनुग्राह्यानुग्राहकभावेन सङ्करः इत्यर्थः। यद्यपि—रामपदस्य अर्थान्तरसङ्क्रमं विनाऽपि कठोरहृदयत्वविशेषणबलादेव प्रकृतार्थसिद्धिः। तथापि कठोरहृदयत्वमात्रेण पयोदादिजनितपीडातिशयसहनसमर्थनस्य चमत्कारकारित्वाभावात्, कठोरहृदयेनापि रामपदवाच्येन रामान्तरेण उक्तवेदनातिशयस्य सोढुमशक्यत्वाच्च उक्तरूपेण रामपदस्य दाशरथिपरत्वमेव वाच्यम्। तच्च नार्थान्तरसङ्क्रमं विना प्रकृतोपयोगीति एवं प्रकृतोदाहरणत्वं उक्तमिति ध्येयम्। अत्र सीताविरहजीवनविप्रलम्भशृङ्गारयोः एकमेव रामपदं व्यञ्जकमिति भावः।

**इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां मधुमत्यां चतुर्थः उल्लासः।**

## विस्तारिका

परसङ्करद्वयसंसृष्ट्योरुदाहरति — तथेति। लेपकस्य स्निग्धत्वेन श्यामत्वमुपैति। घना मेघा एव घना निविडाः। वियदिति विस्तीर्ण पत्रत्वेन स्फुटपुण्डरीकस्मरणया स्वतः परतोऽप्युद्दीपकता। शीकरिण इति नित्ययोगे इनिः। शीकरवाहित्वेन मन्दता, अत एव घनस्य निविडता मन्दवातेनाप्यनुत्सार्यमाणत्वात्। पयोदसुहृदां मयूराणां पयो ददति। दातृणां सुहृदामुन्नतिदर्शनेनानन्दो भवत्येव। तत्प्रभवाः केकाः, केकाशब्दसान्निध्यात् सुहृत्पदेन मयूराभिधानम्। आनन्दजन्यत्वे हेतुमाह— कला इति। मधुरत्वे सत्यस्फुटा आनन्देन कण्ठजाड्यादस्फुटता माधुर्येणोद्दीपकत्वाशयोद्भावनम्। कामं प्रभूतम्। दृढं बलवत्। अर्थान्तरसंक्रमितवाच्यलक्षणया रामो दुःखसहिष्णुः।

ननु दर्शनस्पर्शनश्रवणविरोधे घनादयोऽकला [बाध्य] न्तामित्याह —सर्वमित्यादि। नैते मम द्वेष्याः। तत्र हेतुमाह— कठोरहृदयो रामोऽस्मीत्यादि। कठोरहृदयस्य किमपि न दुःसहमित्यर्थः। वैदेही विदेहराजपुत्री स्त्रीत्वेन राजापत्यत्वेन च सुकुमारतया दुःखाक्षमा। कथं भविष्यति जीविष्यति? तस्या जीवनं न सम्भाव्यत इत्यर्थः। खेदातिशये ह हा हेति त्रयो निपाताः।

स्मृतिसङ्कल्पोपनीतां सीतां सम्बोध्याह— देवीति। मनुष्येषु तद्रूपस्यादृष्टत्वाद् देवीत्वेन सम्बोधनम्। अथ च देवत्वेन धैर्यमुचितम्।

अत्रेति [द्रव] द्रव्यकरणकपिधानस्य लेपस्य हितैषित्वस्य च सुहृत्त्वस्य रुचिरेष्वचेतनेषु घनेष्वसम्भवाद् व्यापनम्, परितोषहेतुत्वञ्च लक्ष्यते। तदतिशयौ च व्यङ्ग्यौ। लेपनसुहृत्तवयोः सर्वथान्वयानुप्रवेशाद् वाच्ययोरत्यन्ततिरस्कारः। संसृष्टिरिति। संदेहादनुग्राह्यनुग्राहकत्वैकव्यञ्जकानुप्रवेशविरहादिति भावः।

अर्थान्तरेति। दुःखसहिष्णुत्वेन वाच्यस्य रामस्यैवान्वयादस्य च व्यतिकरसहस्रसम्पातेऽपि प्राणधारणादात्मन्यक्कारो व्यङ्ग्यः। तत्र घनकेकाचिरस्थायित्वयोर्लिप्तसुहृत्पदव्यङ्ग्ययोरनुग्राहकत्वं सुव्यक्तमेव। ताभ्यां सहार्थान्तरसंक्रमितवाच्यस्य सङ्कर इत्यन्वयः। रामपदेत्यादि। दुःखसहिष्णुत्वलक्षणया व्यज्यमानस्य राज्यत्याग— वनवासजटावल्कलधारणफलमूलाहारस्त्रीवियोगपितृशोकादिपात्रतया दुःखसहनातिशयस्यावगमेऽवगतैः शोकावेगधैर्यनिर्वेदादिभिः परिपुष्टो विप्रलम्भः प्रकाशत इति दुःखसहनातिशयवस्तुरसध्वन्योरेकत्र रामपदेऽनुप्रवेश इत्येकव्यञ्जकानुप्रवेशः सङ्कर इति भावः।

ननु विप्रलम्भास्वादे वस्तुनोऽपि गुणीभावे कथं तस्य ध्वनित्वमिति चेत्, सत्यम्, वाच्यतः प्राधान्येनैव ध्वनित्वात्, आस्वादेतु सर्वेषां गुणीभावाव्यभिचार एवेत्युक्तमेव।

अन्यदिति। सजातीयमिश्रितं लक्ष्यक्रमालक्ष्यक्रमरूपं ध्वन्यन्तरम्।

**इति श्रीपरमानन्दचक्रवर्तिकृतौ काव्यप्रकाशविस्तारिकायां ध्वनिविस्तारो नाम चतुर्थ उल्लासः ।।४ ।।**

## सारबोधिनी

अपरसङ्करद्वयं संसृष्टया सहोदाहरति स्निग्धेति। वेल्लनं सविलासखेलनम्। पयोदसुहृदां मयूराणां कामं प्रभूतम्। दृढं बलवत्। सहे इत्युत्तमपुरुषैकवचनम्। भविष्यति जीविष्यतीत्यर्थः। खेदातिशये ह ह हेति त्रयो निपाताः। स्मृतिसङ्कल्पोपनीतां सीता संबोध्याह वैदेहीति। अत्रेति। वियतो निःस्पर्शनस्य लेपनासंभवात्। लिप्तेतिपदेन व्यापनम्। सुहृदामित्यत्राचेतनस्य मित्रत्वाभावात् सुहृदामित्यनेन परितोषकारित्वं च लक्ष्यते। तदतिशयौ च व्यङ्ग्यौ। लेपसुहृत्त्वयोः सर्वथान्वयाप्रवेशात् वाच्ययोरत्यन्ततिरस्कारः। संसृष्टिरिति। सङ्कराभावादिति भावः। अर्थान्तरेति। दुःखसहिष्णुत्वेन वाच्यस्य रामस्यैवान्वयात्। अस्य च एतादृशव्यतिकरसहस्रसंपातेऽपि प्राणधारणादात्मनि न्यक्कारो व्यङ्ग्यः। तत्र घन [व्यापन ?] केकाचिरस्थायित्वयोर्लिप्तसुहृत्पदव्यङ्ग्ययोनुग्राहकत्वं सुव्यक्तमेव। ताभ्यां सहार्थान्तरसंक्रमितवाच्यस्य सङ्कर इत्यन्वयः। रामपदेति। दुःखसहिष्णुत्वलक्षणया व्यज्यमानस्य राज्यत्यागवनवासजटाधारणफलमूलाहारस्त्रीवियोग— पितृशोकपात्रतायाः परदुःखासहनत्वातिशयस्यावगमेऽवगतैः शोकधैर्यनिर्वेदादिभिः परिपुष्टो विप्रलम्भः प्रकाश्यत इति दुःखसहनातिशयवस्तुध्वनिरसध्वन्योरेकरामपदेऽनुप्रवेशः सङ्कर इति भावः।

ननु विप्रलम्भास्वादे वस्तुनो गुणीभावे कथं तस्य ध्वनित्वमिति चेत् सत्यम्। वाच्यतः प्राधान्यमात्रेण तस्य ध्वनित्वम्। आस्वादे तु सर्वेषां गुणीभावव्यभिचार एवेत्युक्तेमेव।

**इति सारबोधिन्यां चतुर्थः उल्लासः।**

## काव्यप्रदीपः

स्निग्धश्यामलकान्तिलिप्तवियता वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥**

अत्र मुख्यार्थबाधाल्लिप्तपदं संपर्कं लक्षयदतिशयं व्यनक्ति। पयोदे चाचेतने सौहृदाभावात्सुहृत्पदमुपकारित्वं लक्षयत्तदतिशयं प्रतिपादयति। पयोदानां मयूरनिष्ठकेकाद्युपकारशीलत्वात्। रामपदं च सर्वसहत्वानुपयुक्तशक्यार्थतया सकलदुःखभाजनत्वं लक्षयत्सीतां विनापि जीविष्यामीति व्यञ्जयदेव विप्रलम्भं व्यनक्ति। तत्र लिप्तेति पयोदसुहृदामित्यनयोरत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह राम इत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन संकरः। तयोरुद्दीपकत्वात्। रामपदेन चैकव्यञ्जकानुप्रवेशेनार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः। रामोऽस्मीत्यनेनैव लक्षणामूलस्य विप्रलम्भस्य च व्यञ्जनाद्विप्रलम्भे वाक्यव्यङ्ग्येऽप्यस्य प्राधान्यात्। एवमन्यदप्युदाहार्यम्।

**इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे ध्वनिप्रभेदविभागश्चतुर्थ उल्लासः।**

**काव्यप्रकाशखण्डनम्**

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु तथा (दृढं ?) कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥**

वेल्लनं विलासखेलनम्, पयोदसुहृदां मयूराणाम्, कामं प्रभूतम्, दृढं बलवत्, सहे इत्युत्तमपुरुषैकवचनम् भविष्यति जीविष्यतीत्यर्थः। खेदातिशये ह ह हे [प. १८.१] ति त्रयो निपाताः। स्मृतिसंकल्पोपनीतां सीता संबोध्याह — देवीति। अत्र वियतो निःस्पर्शस्य लेपनासंभवात् लिप्तेत्ति पदे व्यापने लक्षणा, सुहृदामित्यत्राचेतनस्य मित्रत्वाभावात् सुहृदामित्यनेन परितोषकारित्वं लक्ष्यते। तदतिशयौ च व्यङ्ग्यौ लेपन-सुहृत्त्वयोः सर्वथान्वयाप्रवेशात् वाच्ययोरत्यन्ततिरस्कारः। एवं चात्र अत्यन्ततिरस्कृतवाच्ययोर्व्यापनातिशयपरितोषकारित्वातिशयध्वन्योः संसृष्टिः। आभ्यां सह रामोऽस्मीति अर्थान्तरे कष्टजीवित्वरूपे सङ्क्रमितवाच्यस्य, एतादृशि वैयग्र्यहेतुसंपातेऽपि जीवित्वरूपदुःखसहनातिशयध्वन्योः, अनुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन वा अर्थान्तरसङ्क्रमितवाच्यस्य दुःखसहनातिशयध्वनेः रसध्वनेश्च सङ्करः। एवमन्यदप्युदाहार्यम्।

**इति पादशाहश्रीअकब्बरसूर्यसहस्रनामाध्यापक—श्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधापक-महोपाध्याय- श्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाहश्रीअकब्बर प्रदत्त -षु (खु) स्फहमापराभिधानमहोपाध्याय- श्रीसिद्धिचन्द्रगणिविरचिते काव्यप्रकाशष (ख) ण्डने चतुर्थ उल्लासः॥**

**आदर्शः**

**उक्त्यन्तरेणाशक्यं यत् तच्चारुत्वं प्रकाशयन्।**
**शब्दो व्यञ्जकतां बिभ्रद् ध्वन्येक्तुर्विषयीभवेत्॥**

अनुग्राह्यानुग्राहकतासङ्करस्य एकव्यञ्जकानुप्रवेशसङ्करस्य संसृष्टेश्चएकमुदाहरण माह— स्निग्धेति । रामस्येयमुक्तिः । घनाः स्निग्धश्यामलकान्तिव्याप्ताकाशाः चलद्बलाकाश्च, तथा पयादसुहृदां मयूराणाम् आनन्दजन्याः केकाः कला गभीराः; एते उद्दीपकाः कामं यथेष्टं सन्तु, मम किञ्चित् कर्त्तुं न क्षमा इति भावः । यतः दृढम् अतिशयं कठोरहृदयः रामोऽस्मि दुःखसहिष्णुरस्मि, अतः सर्वमेव अहं सहे । हहा खेदे । वैदेही त्वनीदृशी कथं भविष्यति कथं सत्तावती स्यात्, तस्मात् हा देवि धीरा भवेत्यर्थः । अत्रेति द्रवद्रव्यस्य व्यापनमेव लेपः कान्तेस्तु द्रव्द्रव्यत्वाभावेन तद्बाधात् लिप्तपदं व्याप्ते अत्यन्ततिरस्कृतवाच्यलाक्षणिकम्, विरहोद्दीपकत्वं तद्व्यङ्ग्यम् । तथा पयोदसुहृदामित्यत्र अचेतनस्य पयोदस्य हृदयाभावेन पयोदसुहृत्पदं पयोददर्शननर्त्तितत्वेन रूपेण अत्यन्ततिरस्कृतवाच्यलाक्षणिकम्, तत्केकानां विरहोद्दीपकत्वश्च तद्व्यङ्ग्यम्, अनयोर्व्यङ्ग्ययोरुक्तत्रिविधसङ्कराभावेन संसृष्टिमात्रम् । ताभ्यां सहेति, ताभ्यां विरहोद्दीपकत्वाभ्यां सहेत्यर्थः । रामोऽस्मीत्यर्थान्तरसंक्रमितेति, दुःखसहिष्णुत्वरूपेण रामस्यैव उपस्थापनादर्थान्तरसंक्रमितवाच्यलक्षणा, तद्व्यङ्ग्यस्येत्यर्थः । तच्च प्रियाविरहेऽप्यम्रियमाणत्वेन स्वावधीरणोद्दीप्तेः । अनुग्राह्येति रामस्य स्वावधीरणम् अनुग्राह्यं विरहोद्दीपकत्वद्वयश्च तदनुग्राहकम्, घनकेकयोर्विरहोद्दीपकत्वज्ञानात् तदानीमम्रियमाणत्वेन स्वावधीरणोद्दीप्तेः । रामपदलक्षणेति, रामपदेन स्वावधीरणस्येव तत्कारणविप्रलम्भस्यापि व्यञ्जनात् । ध्वन्योरित्यत्र ध्वनिपदं व्यङ्ग्यपरमेव ।

**इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृत-काव्यप्रकाशादर्शे ध्वनिनिर्णयस्य चतुर्थः प्रतिबिम्बः ।**

### सुधासागरः

अपरसङ्करद्वयं संसृष्ट्या सहोदाहरति — 'स्निग्धे' - ति ।

शार्दूलविक्रीडितं छन्दः । स्निग्धा नीरनिर्भरेण मसृणा अत एव श्यामलाऽत्यन्तकृष्णा या कान्तिस्तया लिप्तं सम्यगाच्छादितं वियदम्बरं यैस्ते तथाभूताः, वेल्लन्ती विलासात् खेलन्ती बलाका बकपङ्क्तिर्येषु ते तथाविधा घनाः मेघाः सीकरिणोऽम्बुकणधारिणो वाताः वायवः, पयोदसुहृदां मेघमित्राणां मयूराणां कलाः मधुराव्यक्ताः, आनन्दकेकाः प्रमोदोत्पन्नगिरः, कामं सन्तु सुतरां भवन्तु, नाऽहं विरहिमारकेभ्यो बिभेमीति भावः, हेतुमाह दृढ़ं बलवत् कठोरं कर्कशं हृदयमन्तःकरणं यस्य तादृशोऽहं रामोस्मि, सर्वं सहे पितृमरणमातृवियोगवनवासजटाधारणफलमूलाहारादिवज्जानकीविरहमपि सोढुं शक्नोमि । सर्वंसहेति भूमिसम्बोधनमिति केचित् । वैदेही आजन्मसुखसंवर्द्धिताऽतिसुकुमारी राजकुमारी तु कथं भविष्यति केन प्रकारेण जीविष्यति, हहाहेति त्रयो निपाताः खेदातिशये । स्मृतिसङ्कल्पोपनीतां सीतां सम्बोध्याह— देवि धीरा भव । देवत्वेन परमसौकुमारयेऽपि धैर्यौचित्यं व्यज्यते ।

अत्र लिप्तेत्यादि । अयमाशयः — वियतो निःस्पर्शस्य लेपनासम्भवेन मुख्यार्थबाधाल्लिप्तपदं सम्पर्कं लक्षयत् दतिशयं व्यनक्ति । पयोदे चाचेतने सौहृदाभावात् सुहृत्पदं परस्परोपकारित्वं लक्षयत् परस्परातिशयं प्रकाशयति । पयोदानां मयूरनिष्ठ केकाद्युपकारशीलत्वात्, मयूराणां च पयोदशोभाधायकत्वात् । एवं च लेपसुहृत्त्वयोः सर्वथाऽन्वयाप्रवेशाद् वाच्यार्थयोरत्यन्ततिरस्कार इति लक्षणामूलाविवक्षितवाऽच्यान्तर्गतात्यन्ततिरस्कृतवाच्यव्यङ्ग्ययोर्ध्वनिभेदयोः परस्परनैरपेक्ष्येणाऽवस्थानात् संसृष्टिः । रामपदं च सर्वसहत्वानुपयुक्तशक्यार्थतया सकलदुःखभाजनत्वं लक्षयत् सीतां विनाऽपि जीविष्यामीति व्यञ्जयदेव विप्रलम्भं व्यनक्ति । तथा च लक्षणामू-

लाविवक्षितवाच्यान्तर्गतद्वितीयध्वनिभेदस्य रामोऽस्मीत्यर्थान्तरसङ्क्रमितवाच्यस्य ताभ्यां संसृष्टिरूपतापन्नोक्त-भेदाभ्यां सहाऽनुग्राह्यानुग्राहकभावेन सङ्करः। अर्थान्तरसङ्क्रमितवाच्यबोधं विनाऽत्यन्ततिरस्कृतवाच्ययोश्चारुत्वालाभात्, एताभ्यां विना चार्थान्तरसङ्क्रमितवाच्यस्य रूपासिद्धेः, तयोरुद्दीपकत्वात्। अनुग्राह्यस्य चारुत्वार्थमनुग्राहकापेक्षा, अनुग्राहकस्य स्वरूपनिष्पत्तयेऽनुग्राह्यापेक्षेति दशमोल्लासे सङ्करव्याख्याऽवसरे प्रतिपादयिष्यामः। एवं रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसङ्क्रमितवाच्यरसध्वन्योः सङ्करः सङ्करस्यान्यो भेदः। रामपदेनैव लक्षणामूलाविवक्षितवाच्यान्तर्गतार्थान्तरसङ्क्रमितवाच्यस्य अभिधामूलविवक्षितान्यपरवाच्यान्तर्गतालक्ष्यक्रमभेदविप्रलम्भस्य च व्यञ्जनात्। विप्रलम्भे वाक्यव्यङ्ग्येऽप्यस्य प्राधान्यादिति। एवमन्यदप्युदाहार्यमिति।

संसृष्टिरुदाहृता। सङ्करस्य द्वौ भेदावुदाहृतौ अवशिष्टो निश्चयात्मकरतृतीयः सङ्करभेदः स्वयमुक्तरीत्योदाहरणीय इत्याशयः।

**इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षित—**

**भीमसेन-कृते काव्यप्रकाशविवरणे सुधासागरे ध्वनिभेदप्रभेदनिर्णयश्चतुर्थ उल्लासः ॥४॥**

## विवरणम्

संसृष्टेरनुग्राह्यनुग्राहकभावस्यैकव्यञ्जकानुप्रवेशस्य चोदाहरणमेकमेवाह— स्निग्धेति। पयोदसुहृदां केकापदार्थैकदेशैर्मयूरैः सहाभेदेनान्वयः आपणीयानां सक्तूनामाढकमित्यर्थे —"सक्त्वाढकमापणीयानाम्" इति भाष्यप्रयोगात् केकापदं ध्वनित्वेनैव मयूरवाणीमभिधत्ते। तत्राध्याहृतस्य श्रूयमाणस्य वा मयूरादिपदस्य नित्यं सम्बन्धः, उत्तमपुरुषादावस्मदादेरिवेत्यपरे।

काममित्यनुज्ञायाम्। दृढमिति सत्ताविशेषणम्। कथं भविष्यति केनोपायेन जीविष्यतीति चिन्तायामुत्प्रेक्ष्य जीवनहेतुमाशास्ते— धीरा भवेति। नहि धैर्यादृते किमपि जीवनसाधनमिति भावः।

लिप्तेति सुहृदामिति द्वयं षष्ठ्यन्तम्। एतयोः पदयोरभिव्यङ्ग्यौ यौ ध्वनी, तयोः संसृष्टिरिति सम्बन्धः। लिम्पतिना कान्तेरालेपो लक्ष्यते। तेन स्वाभाविकप्रसादगुणपरित्यागो गगनस्यावगम्यते। सुहृत्पदेन पयोदोद्गमे हृष्यमाणत्वं लक्ष्यते, नृत्यं च व्यज्यते। अप्रसन्ने गगने नास्ति कश्चिदुद्यमावकाश इति दैन्यम्। मयूरनृत्यादेरुद्दीपनस्य दर्शनेन बाधातिशयो द्योत्यते। तयोर्दैन्यबाधयोः संसृष्टिरित्यर्थः।

रामोऽस्मीति रामपदेन हि — अनभूतवनवास - पितृमरण— सीताहरणादिदुःखोऽर्थान्तरसङ्क्रमितवाच्यविधया लक्ष्यते। तेनात्मन्युपेक्षानामा निर्वेदो ध्वन्यते। स च निर्वेदः पूर्वोक्तदैन्यवियोगबाधयोर्वस्तुतो जन्यः, न तु दैन्यबाधयोर्निर्वेदे, वा निर्वेदस्य दैन्यबाधयोर्गुणीभूयान्वय इत्यनुग्राह्यानुग्राहकभावसत्त्वेऽपि न गुणीभूतव्यङ्ग्यत्वमिति भावः।

रामपदेत्यादि। रामपदस्य तावदेक आत्मन्युपेक्षालक्षणो (निर्वेदो) लक्षणामूलध्वननीयः। स च निर्वेदो न शृङ्गाराङ्गम्, अतः स्वतन्त्र एव भावः। द्वितीयस्तु सर्वसहत्वोपपादको धीरोदात्तत्वादिरुपादानलक्षणागम्योऽर्थः। स च पुटपाकवदन्तर्विपरिवर्तमानं विप्रयोगरसमुपोद्बलयतीत्यनयोर्भावरसयोरेकत्र रामपदेऽनुप्रवेश इत्यर्थः।

अत्रेदं विचारणीयम्—'त्वामस्मि वच्मि' इत्यादौ वस्तुरूप एव लक्षणामूलव्यञ्जनागम्योऽर्थः। 'मुखं विकसितस्मितम्' इत्यत्र मुखे कुसुमोपमा विदग्धैकवेद्या व्यञ्जनीयेत्यलङ्कारोऽपि। तथा 'रामोऽस्मि' इत्यत्रोपादानलक्षणया भावो रसश्चाभिव्यज्यत इति वस्त्वलङ्काररसादिस्वरूपतया त्रिविधौ लक्षणामूलध्वनिभेदौ कथं नोक्तौ। एष च 'कोऽप्यलक्ष्यक्रमः' इत्यादावपिकारार्थकत्वेन चकारस्य तयो रसादिभेदा उक्ता एवेति चेत्, एवं सति कथमेकपञ्चाशदेव भेदाः, आधिक्यादिति।

अत्रोच्यते—लाक्षणिकपदप्रयोगप्रयोजनीभूतार्थ एव लक्षणामूलगूढव्यङ्ग्यः। स च लाक्षणिकपदार्थबोधाव्यवहितबुद्धिविषय एवेति नालङ्काररसयोर्लक्षणामूलव्यञ्जनागम्यत्वम्। 'मुखं विकसितस्मितम्' इत्यत्र विकासेन प्रकटता लक्ष्या, तया च प्रथमतः स्फीतं स्मितमित्येव व्यज्यते। तदेव स्फीतत्वं वस्तु लक्षणामूलव्यञ्जना गम्यम्। कुसुमसाधर्म्यं त्वर्थशक्तिगम्यमेव। 'रामोऽस्मि' इत्यत्रापि रामपदस्य दुःखशतेनाप्यम्रियमाणे धीरोदात्ते च लक्षणा। आद्या निर्वेदध्वननानुकूलमश्लाघ्यजीवितत्वम्, द्वितीया तु स्वमात्रसाक्षिव्यथापरिपाकं वस्त्वेव व्यनक्ति। तयोरेकधैव व्यञ्जकानुप्रवेशादिति। आर्थी व्यञ्जना द्विविधा—काचिदभिधामूलव्यञ्जनां विना नाभिमतार्थव्यञ्जने क्षमा, तत्राभिधामूलत्वव्यपदेशः। द्वितीया त्वभिधामूलव्यञ्जनां विनाऽप्यभिमतार्थबोधनक्षमा। साऽपि द्विविधा—अनपेक्षणीयाभिधामूलव्यञ्जनावृत्त्यसहकृता, तत्सहकृता च। तत्राद्या शब्दशक्त्युत्थेति, द्वितीया त्वर्थशक्त्युत्थेति, तृतीया चोभयशक्त्युत्थेति भण्यते। रसालङ्कारयोः प्राथमिकवैयञ्जनिकप्रतीतौ क्वापि न भानमिति लक्षणामूलध्वनिभेदयोर्नैतत्कृतो भेद इति दिक्।

**निगमाङ्गणे धन्वन्यनूपे चाध्वनि ध्वनेः।**
**समं प्रचरतः कृष्णपाथोद त्वयि निर्भरः ॥८॥**

**इति मैथिलमहामहोपाध्यायगोकुलनाथशर्मनिर्मिते काव्यप्रकाशविवरणे चतुर्थ उल्लासः ॥**